



कवितार्किकचक्रचूडामणिश्रीश्रीहर्षप्रणीतं

# खण्डनखण्डखाद्यम्

नाम

## अनिर्वचनीयतासर्वस्वम्

श्रीशङ्करचैतन्यभारतीयतिना विरचितया

शारदाख्यटीकया

तन्निर्मितदर्शनसर्वस्वाभिधनिबन्धेन च

विभूषितम् ।

तेनैव च सम्पादितम् ।

द्वितीयो भागः ।

स च

वाराणस्यां

"अपारनाथमठसन्न्यासिसंस्कृतकालेज" इत्यतः

श्रीबालानन्दस्वामिना प्रकाशितम् ।

तत एव च

विश्वनाथमुद्रणालये श्रीमोहनानन्दस्वामिना सम्मुद्रितम् ।

[ संवत् १९९६ ] [ सन् १९४० ]

पुस्तकप्राप्तिस्थानम्

सन्न्यासिसंस्कृत कालेज मन्त्री, ढुण्ढीराजगणेश

अपारनाथ मठ बनारस सिटी ।

काशी की प्रसिद्ध दुकानों पर भी मिल सकता है ।

PRINTER
*Dhannu lal Khatry.*
KASHI VISWANATH PRESS
*DHUNDHIRAJ GANESH*
**BENARES CITY.**



॥ ॐ ॥

## किमपि वृत्तम् ।

अथ खण्डनखण्डखाद्यस्य द्वितीयोऽयं शारदासमुद्भासितो भागो विदुषां सानन्दं नायनेन तेजसाऽपि सम्पर्कमवाप्नोत्विति प्रकाश्यते । अद्यत्वे प्रचलितां प्रणालीमवलम्ब्य भूमिकोपबन्धमपीह निरचैषम्, परन्तु नव्यपरिपाटीजुषां मनांसि रञ्जयितुं प्राचीनपथ-प्रवृत्तस्य प्रयत्नः कथमिव कल्पेत । तै र्हि भूमिकायाः 'ग्रन्थममुं कः ? किंवृत्तः ? कदा ? किमर्थं च प्रणिनाय ? ग्रन्थस्य च कः संक्षिप्तो विषयः ? कैश्च ग्रन्थान्तरैः प्रस्थानैश्च संलग्नः' ? इत्यादयो बहवोऽशा निरणायिषत । तेषु कियन्तश्चिदंशा दर्शनसर्वस्वेऽनिर्वचनीयतावादे शैवशाक्तसौगताद्वैताद्यालोचनपरेऽस्माभिरभिहितप्राया इति स्वतन्त्रनिबन्धभावमर्हतोऽप्यस्य खण्डनशारदाभूमिकापदेऽप्यभिषेको नानौचितीं चुम्बति । परिशिष्टांशास्तु निर्णीता अप्यन्यत्र केचित्केषाञ्चिदनुरोधादिहैतत्पुस्तकाङ्कितकराणां कृते संक्षिप्योपक्षिप्यन्ते ।

श्रीश्रीहर्षः किल प्राग्भवोपार्जिततपसां प्रसूतिर्मामल्लदेवीश्रीहीरयोरङ्कालङ्कर्ता कान्यकुब्जेश्वरसदसि[1] विचारे स्वपितुरवमन्तारं कञ्चित्पण्डितं[2] पितृनिदेशेन पराजेतुं तीव्रसंवेगेन संविद्देवतोपासनया सद्यः समुद्यद्विश्वविद्यस्तं पराजित्य निर्दिष्टेश्वरेणोपाहृतसमर्हणामर्हयन्ननन्यसामान्यासनासीनतां स्वात्मसात्कुर्वन् कवितातर्करसिकताभगवद्भावुकतातत्त्वानुभवितृतात्यागिताभोगिताप्रभृतीनां प्रायोऽसमाविष्टानामपि समावेशभूमिभूय-

---

(१) कान्यकुब्जेश्वरोऽयं जयन्तचन्द्र इति बहवः, यदि तु-

"गोविन्दनन्दनतया च वपुःश्रिया च
मास्मिन्नृपे कुरुत कामधियं तरुण्यः ।
अस्त्रीकरोति जगतां विजये स्मरः स्त्री-
रस्त्री जनः पुनरनेन विधीयते स्त्री ॥"

इति श्लोकः श्रीहर्षस्यैव, तदा जयन्तचन्द्रजनको गोविन्दनन्दनो विजयचन्द्र एवासावित्यन्ये । उभयथापि श्रीहर्षस्य द्वादशशताब्दीवर्तिताया वक्तव्यरीत्या आवश्यकत्वेन दानपत्रानुसारेण तद्वर्तित्वेन निश्चितजयन्तचन्द्रसमकालिकत्वं निरुपप्लवमेव । आयुराधिक्यं परं श्रीहर्षस्य कल्पनीयमित्यन्यत् ।

(२) पण्डितोऽसावुदयनाचार्य इत्येके । तस्य स्वीयलक्षणावलीग्रन्थस्थपद्यानुसारेण [ 984 A D ] दशमशताब्दीगततया द्वादशशताब्दीसंस्पर्शिश्रीहर्षसमकालिकत्वासम्भवेन पण्डितोऽसावुदयनाचार्यान्य एवेत्यन्ये । लक्षणावलीग्रन्थस्य [ 984 A D ] दशमशताब्दीशेषे प्रथमे वयसि श्रीमदुदयनाचार्यैर्निर्माणसम्भवेनैकादशशताब्द्युत्तरभागे श्रीहर्षेणाल्पवयस्केन साकं विचारोपपत्तेः प्रथम एव पक्षो युक्त इत्यपरे ।

मनुभवन् चिद्विलासमुल्लासयन्[३] खिष्टद्वादशशताब्दीं चिरमालिङ्गन् दमयन्तीकाव्येतिपदं दीपयन्तीं कामाद्वयमिवावेदयन्तीममृतमिव स्यन्दयन्तीमितरापरिशीलितकल्पना-कलापमयीं वाणीं वाणीपतेरपि मनोहारिणीमाविष्कृत्य[४] निर्विशेषचिदद्वयवादमिममुद-पीपदत् । येन हि निरसनीयतयाऽपि द्वैतसम्पर्कप्रसक्तपापदलनो दीक्षा खण्डनात्मक-मेव ह्यानवद्यं खण्डखाद्यं[५] स्वाध्येतृभ्यो यावद्दिनेन्दु वितरीतुं गृहीता स्वजनकादेव । यस्य च तिरस्करणाय प्रवृत्ता अपि तार्किकाश्चिन्तामणिप्रणेतृप्रभृतयो न तदीयं सुम-नोमानसावर्जिमहिमानं कणतोऽपि निवारयितुमपारयन् । यस्य च परिष्कारप्रक्रियां

---

(३) चिद्विलासः कश्चित्पुरुषधौरेयो बाल्य एव समस्तशास्त्रपारदृश्वा श्रीकाञ्चीका-मकोटिपीठे सप्तदशहायनस्तुर्याश्रमं प्रविश्याद्वैतानन्दबोधाचार्यतया प्रतीतो ब्रह्मविद्याभरणं नाम निबन्धं जुगुम्फ. [ ११६८ A D ] अष्टषष्ट्युत्तरैकादशशतीतश्च [ ११९९ A D ] एको-नद्वादशशतीं यावदाचार्यपदमलञ्चकारेति पुण्यश्लोकमञ्जर्यां प्रतिपादितम् । गुप्ताभिधश्च बुधो-वाक्स्तम्भनमन्त्रादिभिः प्रतिपण्डितपरिपीडनपरो गलितगर्वतां नीतश्चिद्विलासैः । कदाचित्त्वेतैः समं विचारप्रसङ्गे श्रीहर्षस्तेषामगाधवैदुष्ये महतीं श्रद्धां दधे, स्थैर्यविचारणप्रकरणादौ च—

"तन्त्रैर्दुर्यन्त्रमन्त्रैरपि बुधजनतागाधबोधापमृत्योः
कृत्योद्यत्क्रूरधारापरुषतरमतेर्गुप्तनाम्नः शरारोः ।
चेष्टाविष्टम्भकानां प्रतिविबुधसभोत्खातजैत्रध्वजाना-
माजानज्ञानभाजां विभवमभिदधे चिद्विलासाख्यभूम्नाम् ॥
क्षोणीक्षोमणिरत्नकाञ्चिविकचत्काञ्चीपदोद्यत्स्मश्री-
श्रीकामासनवासवासितमहासत्त्वोऽव्ययस्त्वव्ययः ।
प्रस्फूर्जद्विदचिद्विलासवदुमासोमार्द्धचूडालयो-
रैक्योक्ताविह भारतीं मदयतां श्रीचिद्विलासो मम ॥"

इत्येवं तान् समचीकृतदिति वेदान्तविशारदश्रीराजेन्द्रनाथघोषसम्पादिते वेदा-न्तदर्शनेतिहासेऽभिव्यक्तम् । गुप्तनामा चात्राभिनवगुप्त एव काश्मीरिकशैवसम्प्रदायाचार्य इत्याहुः ।

(४) नलीयचरिते स्वप्रशस्तिश्लोकेषु प्रायः सर्वेषामपि स्वप्रणीतग्रन्थानां निर्देश-दर्शनेन काश्मीरैर्महितत्वस्यापि निष्टङ्कनेन च सर्वेषामपि प्रशस्तिश्लोकानां स्वयमेव ग्रन्थकृता पश्चान्निक्षिप्ततायां अंशविशेषपरिवर्तनस्य वाऽवश्यं वक्तव्यत्वेन तेषु खण्डननामग्रहणस्य खण्डन-ग्रन्थस्य पूर्वनिर्माणेऽप्रमाणत्वेन खण्डने च मुमुक्षूपदेशे चेतश्चापलविलोप्युपायस्यानुक्तौ न्यून-त्वप्रसङ्गेन तन्निरासाय नैषधचरिते तदुक्तेरुक्तेरन्यथयितुमशक्यत्वेन नैषधचरितं प्रागेव रचित-मित्यभिप्रेत्येत्थमुक्तम् । स्वकाव्यस्य काश्मीरैर्बुधैर्महितत्वलाभप्रकारस्तु नैषधभूमिकायां नि-बद्धोऽवधेयः ।

(५) शतावरी छिन्नरुहा वृषो मुण्डितिका बला ।
तालमूली च गायत्री त्रिफलायास्त्वचस्तथा ॥

कन्दलयतो निखिलमपि तद्व्यन्यायशास्त्रमद्य यावदुच्छलदब्धिभावं गतमप्यधमर्णायमानमेव । किं बहुना, यस्यातिजरतोऽप्यद्वैतव्योमाध्वसञ्चारिणः पदानीङ्गितानि च विशदाशया शारदेव विदुषो दर्शयन्ती सौभाग्यं भजत इति ।

एवमर्णववर्णनशिवशक्तिसिद्धिसाहसाङ्कचम्पूछन्दःप्रशस्तीश्वराभिसन्धिस्थैर्यविचारणप्रकरणादिकानपि कानपि निबन्धान् न्यभान्त्सीत् । परन्त्वद्यत्वे एतेऽस्मदीयानुपलब्ध्यैव लब्धा इति दुर्दैवदेवनमेवेदम् ।

खण्डनग्रन्थे चायं "नेह नानास्ती" त्यादिश्रुत्यर्थविचारे ब्रह्मसिद्धिविधातृमण्डनमिश्रानुसारिवाचस्पतिमतमनुमनुत इति दर्शितं दर्शनसर्वस्वान्तर्गतविवर्तवादे शारदायाञ्च । शब्दस्य परोक्षज्ञानजनकत्वं निदिध्यासनात्मकोपासनया च तत्त्वसाक्षात्कार इत्यपि स्वरसतः [ ११७ पृ० ] मुमुक्षूपदेशप्रकरणाकर्णनेनानुमाननिरसनप्रस्तावे [ ३०४ पृ० ] "ध्यानात्प्रत्यक्षेण चे" त्युक्त्यालोचनेन चास्य मतमिति मीयते, एकदेशानुमतिद्वारा त्वज्ञानाश्रयत्वविषयत्वाद्यंशेऽप्यस्य भामतीप्रस्थानानुगामित्वमिति सम्भावनैव । प्रस्थानस्यास्य विवरणप्रस्थानापेक्षया युक्तायुक्तत्वविचारस्य तु निष्प्रयोजनप्रायतामाकलय्य तत्र न प्रावर्ति, फलतोऽविशेषस्यान्यत्र व्युत्पादितत्वात् ।

निष्कृष्टं श्लोकषट्कात्मकं तु खण्डनं [ पृ० २५३ ] नास्त्यापत्त्या प्रमामात्रात्... ........इत्यादि पादसेवागतिस्तयोरित्यन्तं सुविदितमेव, तदभिप्रायस्तु तत्रैव शारदायामनुसन्धेयः ।

---

भार्ङ्गी पुष्करमूलं च पृथक् पञ्चपलानि च ।
जलद्रोणे विपक्तव्यमष्टभागावशेषितम् ॥ इत्यादिना
रक्तपित्तं क्षयं कासं पक्तिशूलं विशेषतः ।
वातरक्तं प्रमेहं च शीतपित्तं वमिं कृमिम् ॥
श्वयथुं पाण्डुरोगं च कुष्ठं प्लीहोदरं तथा ।
अनाहं मूत्रसंस्रावमम्लपित्तं निहन्ति च ॥
चक्षुष्यं बृंहणं वृष्यं माङ्गल्यं प्रीतिवर्धनम् ।
श्रीकरं लाघवकरं खण्डखाद्यं प्रकीर्तितम् ॥ इत्यन्तेन

हारीते वितानितं खण्डखाद्यमाहुः । मोदकादिमिष्टभोज्यमात्रग्रहणेऽपि तु न दोषः ।

( ६ ) गृहस्थावस्थायां कुमारिलभट्टपादशिष्यमण्डनमिश्रत्वेन प्रसिद्धश्रीसुरेश्वराचार्यभिन्नो नवाऽयं मण्डनमिश्र इत्यत्र विवदन्ते । आद्यैव तु कोटिरुचिता प्रतिभाति, ब्रह्मसिद्धिविधिविवेकयोरवलोकनेन गृहस्थावस्थायामेवायमद्वैतवादीति प्रतीतेर्भगवत्पादानामेतेन सह विचारस्यानवसरपराहतत्वात् । न चानेन शब्दस्य साक्षात्कारजनकताया अनभ्युपगमेन भर्तृहर्यादिवद्ब्रह्मणो वाग्रूपतोपगमेन च तदंशे विचारसम्भव इति वाच्यम्, अद्वैतसम्प्रदायप्रतिष्ठापनवेलासु सगोत्रकलहस्याचार्याणां नीतिविरुद्धत्वात्, वाग्रूपतावादस्यापि फलतोऽविशेष एवेति विवर्तवादे दर्शितत्वाच्च । अस्मिन्नंशे विचारोऽभूदित्यत्र प्रमाणाभावाच्च । भवत्पक्षाधारभूते शङ्करदिग्विजये वेदान्तानां सिद्धार्थप्रामाण्याप्रामाण्यादिकोटिकविचारस्य वर्णितत्वात् ।

शारदां प्रस्तुत्य तु प्रथमभागप्रकाशनकाले किञ्चिन्न्यवेदयम्। अधिकं त्वन्यैरेवोदारहृदयैर्यत्कुसुचितमिति "धियाऽऽत्मनस्तावदचारु नाचरं परस्तु तद्वेद स यद्धदिष्यति। जनार्चनायोद्यमिनं जनार्दनं तु ये जगज्जीवपिनं शिवं यद" इति नैषधपद्यमेवानुस्मरन्नुदासे।

अनिर्वचनीयताचिन्तायां सुमनोमनोमौनमुद्रोन्मुद्रणं स्विदमीयं मुद्रणमितिमत्या वाराणसीनिवासरसज्ञानां वेदान्तोदन्तोद्धुरीकरणधुरीणानां शान्तिसरिन्मकरन्दपादारविन्दानां मोक्षमार्गैरनिशमिष्यमाणपरापरायणताऽनुप्राणकानां यतिकुलोत्तंसपरमहंसपरिव्राजकाचार्यश्रीमज्जयेन्द्रपुरीस्वामिपादानां प्रेरणैव तेनात्मना विवर्तामवाप्तेति तेऽवर्णनीयैरेव भावैर्भावनीया इत्युपरमामि।

शङ्करचैतन्यभारती।

ललिताघट्टस्थराजराजेश्वरीमन्दिरे वाराणस्याम् — माघशुक्लपञ्चमी १९९६
१३—२—१९४० ई०

---

तेषां सिद्धार्थं प्रामाण्यादेश्च ब्रह्मसिद्ध्यादौ तेन स्वीकृतत्वात्। नचाचार्यैं विचारानन्तरमेव सन्न्यासग्रहणात्पूर्वं कियत्स्वेव दिनेषु ब्रह्मसिद्ध्यादिनिबन्धनमिति पराजयपरिखिन्नचेतसोऽस्वस्थस्य शक्यं कल्पयितुम्। न च ब्रह्मसिद्धिगतानां बहूनां वाक्यानां शब्दतोऽर्थतश्च बृहदारण्यकवार्तिके दर्शनेनाभेदसिद्धिरितिवाच्यम्, अप्रयोजकत्वात्, भामत्यामपि तादृशवाक्यानां तथा दर्शनेन वाचस्पतिमिश्रेष्वपि मण्डनमिश्रैक्यकल्पनापत्तेश्च। तस्मात् "तत्त्वस्यान्यस्य सद्भावे पूर्वस्थित्यनुयाय्यपि। वस्तु भातितरां तन्व्याः शशिच्छायमिवानन" मिति ध्वन्यालोकोक्तरीत्यैव समाधेयमत्र। सति चैवं ब्रह्मसिद्धिप्रणेतारमुद्दिश्य "केचित्तु पण्डितम्मन्याः सम्प्रदायानुसारतः" इति श्रीसुरेश्वराचार्योक्तेरपि साधीयसी गतिरिति।



श्रीमत्परमहंसपरिव्राजकाचार्यमहामण्डलेश्वर-

श्रीजयेन्द्रपुरीस्वामिपादाः



प्रकटितपरिमलचर्यः, परमहंसपरिव्राजकाचार्यः।
यतिकुलकैरवचन्द्रो, जयतितरांश्रीजयेन्द्रयोगीन्द्रः॥



ॐ

# दर्शनसर्वस्वेऽनिर्वचनीयतावादे

## विषयानुक्रमः ।



# शारदासमेतस्यानुमानखण्डनादिद्वितीयभागस्य

## संक्षिप्तो विषयानुक्रमः ।



इति प्रथमपरिच्छेदः ।

इति चतुर्थपरिच्छेदः ।





श्री शारदायै नमः

# दर्शनसर्वस्वम्

## अनिर्वचनीयतावादः ।

प्राञ्चिता गुणगणेशने रताः, सञ्चिता निजपदाम्बुजे पुनः ।
मञ्चिता मदनदृष्टि येन तत्, त्रैपुरं किमपि मन्महे महः ॥

अथ ज्ञेयस्य ज्ञानानात्मकत्वेनेव तदात्मकत्वेनापि निरूपणानर्हतया मिथ्यात्वेन ज्ञानमेवैकं परमार्थसदिति वेदान्तमते मतेरुज्ज्वलीकरणाय ज्ञेयस्य क्षणिकज्ञानात्मकत्वं क्षणिकज्ञानसहितस्यैव वा मिथ्यात्वं नित्यज्ञानात्मकत्वं वेति मतत्रयमवलम्ब्य क्रमेण प्रत्यवस्थीयते । तथाहि—

## विज्ञानवादः ।

अस्ति तावत्समस्तसंसारसर्वस्वायितं कलसः स्फुरति सुखं स्फुरतीत्यादिप्रतीत्या समर्पितं विप्रतिपत्त्या न दूरतोऽप्यालोकितं स्फुरणतत्त्वम्, शून्यवादिनोऽपि न तत्स्वरूपे विप्रतिपत्तिरपि तु पारमार्थिकत्वे एव । आहुश्च—

प्रकाशो नाम यश्चायं सर्वत्रैव प्रकाशते ।
अनपह्नवनीयत्वात्किं तस्मिन् मानकल्पनैरिति ॥

तच्च स्वप्रकाशवादे शारदोक्तरीत्या स्वप्रकाशम् । एवं च तेनैव निर्वाहसम्भवे तदतिरिक्ताभ्युपगमो गौरवेणावहेलनीयः । तदतिरिक्तोपनायकानि प्रमाणान्येवं विमतीभावं भजेरन्निति तु न सुमनसामोजोजृम्भणम्, को जानाति स्फुरणनाशकोऽपि कोऽप्यस्तीति, तथासति नासौ स्फुरेत्, न च विषयविषयिभावो नियामकः, भेदनियततन्निरासस्य शारदायां तुरीये उपवर्णितत्वात । कलसो यदि स्फुरणानात्मकः स्यात् स्फुरणविषयो न स्यादित्यापादने विषयविषयिभावेन प्रत्यवस्थितेन तर्ककौशलोन्मीलनाय, आपाद्यव्यतिरेकादिनिश्चयस्यापत्तिप्रसवितुर्ममापि सद्भावात्, आपादकविधूननायैव यतनीयत्वात् । अथ भवानपि मादृश एव, सर्वस्य स्फुरणात्मकत्वे आपादकाप्रसिद्धेः आपाद्यापादकयोस्तत्स्फुरणोपादाने तत्स्फुरणानात्मकत्वस्य पटादौ स्फुरणान्तरात्मके प्रसिद्धावपि विपर्ययपर्यवसानासम्भवात्, तथाहि— तत्स्फुरणविषयत्वं तत्स्फुरणाभिन्नत्वं न सम्भवति, साध्याविशेषात्, नाप्यभेदनियतमन्यत् किञ्चित्, अभेदसिद्धिं विनाऽसिद्धेः, नापि भेदनियतम्, विरुद्धत्वापत्तेः, नापि भेदसाधारणम्, अप्रयोजकतया दुर्वारत्वात् । एतेन प्रकाशमानत्वं हेतुरपास्तः, प्रकाशाभिन्नत्वप्रकाशविषयत्वाद्यर्थकत्वे उक्तदोषात्, प्रकाशाश्रयत्वार्थकत्वे स्वरूपासिद्धेः, अप्रसिद्धेश्च, भवता प्रका-

शस्य निराधारत्वाभ्युपगमादिति चेन्न, तत्स्फुरणविषयतात्वेनैव हेतुताया वक्तव्यत्वात्, अभेदनियतत्वस्य प्रागसिद्धावपि क्षत्यभावात्, भेदनियतत्वस्याप्यसिद्धेः, सर्वं प्रमेयमित्यादिज्ञानानां स्वविषयकत्वस्य भवतोऽप्यनुमतत्वात्। यदि हि विषयविषयिभावस्याभेदे विरोधः स्यात्तदा रूपभेदेनापि तत्परिहारस्य 'नहि दण्ड्यपि देवदत्तः कुण्डलिनं स्वमारोहती'ति न्यायेनासम्भवात्। विषयतात्वं च वस्तुगत्या स्वविषयकज्ञानात्मकमेवेति न तन्निर्वचनानुयोगः, अभेदासिद्धिदशायाञ्च प्रतीतिविशेषसाक्षिकत्वेन तन्निवेशः सुकरः।

न च व्याप्तिग्रहस्थलाभावः; स्वप्ने भासमानानां स्फूर्त्यात्मकताया एव वक्तव्यत्वात्, अविद्ययापि भवन्मते विलक्षणस्य ज्ञानस्यैवोत्पादनौचित्यात्, विषयोत्पत्तौ गौरवान्निष्प्रयोजनत्वात्। एवं सति बाह्यप्रपञ्चापलापः स्यादित्यस्य बाह्यनिराकरणे सन्नद्धान् प्रति वक्तुमशक्यत्वात्। न चैवं जाग्रति चक्षुरादिव्यापारवैयर्थ्यम्; दृष्टिसृष्टिवादे भवतामपि समानत्वात्, स्वप्नदृष्टान्तेन नियोगपर्यनुयोगानर्हत्वोक्त्या फलबलेन कार्यकारणभावविशेषकल्पनया वा समाधानस्यापि समानत्वात्। अन्यथाख्यातिवादेऽपि ज्ञानप्रत्यासत्ते गंजं पश्यामीत्यादिप्रतीतिसाक्षिकविषयताविशेषनियामकत्वाभावेन दोषस्यैव च तथात्वेन तदायत्तविलक्षणविषयतयैव निर्वाहौचित्यात्। दोषत्वस्य चानुगतस्य क्वचिन्नियन्त्रितस्याभावेन फलबलेन पूर्ववर्तिज्ञाने एव तस्य वक्तुं शक्यत्वात्, बहिष्ठादिविषयकतया प्रायो ज्ञानमात्रस्यैव भ्रमत्वात्। घटो द्रव्यमित्यादौ तादात्म्यसम्बन्धस्य क्लृप्तत्वात् सर्वं प्रमेयमित्यादिव्यवहारे च तेन सम्बन्धेन ज्ञानस्य प्रयोजकताया अपि क्लृप्तत्वाचान्यत्रापि तथैवोचितयात्। घटः स्फुरतीत्यादावपि तादात्म्याध्यवसाय एवेति तु न मन्यामहे, यौक्तिको ह्ययमर्थो नत्वानुभविकः, नचेदेवं घटः स्फुरणमित्यपि कुतो नानुभूयेत, भेदग्रहस्य प्रतिबन्धकत्वं तु समानम्। इदन्तु स्यात्—यदि घटः स्फुरतीत्यादौ तादात्म्यातिरिक्तसम्बन्धभानं तदा तादात्म्यसिद्धौ सत्यां तस्याः प्रतीतेरप्रमात्वमेव वक्तव्यम्, यदि तु तादात्म्यभानं तदा तत्प्रमात्वमेवेति।

अथ तादात्म्यं भेदाभेदरूपमेव क्लृप्तम्, नत्वत्यन्ताभेदरूपम्, तस्य सम्बन्धताया अप्रामाणिकत्वात्, घटो द्रव्यमित्यादौ भेदाभेदयोरेवानुभवात्, तथाच ज्ञानज्ञेययो र्भेदाभेदवाद एवापतितः, प्राचीनग्रन्थेषु च सौगतनये आकाराकारिणोरभेद एव सिद्धान्ततया प्रसिद्धः, "चित्तमात्रं भो जिनपुत्रा" इति सौगतसूत्रञ्चेदमेवाचष्ट इति चेत्का क्षतिः? भवतु नव्यविज्ञानवाद एवायम्। युक्तिबलादागतो ह्यर्थो न केनानुरुध्येत, अपसिद्धान्तस्याकिञ्चित्करतायाः 'रिक्तस्य जन्तो' रित्यादिवदद्भिः सौगतैः स्वीकारात्, भेदस्यापि ज्ञानात्मकत्वेन वस्तु ज्ञानात्मकमेवेति सिद्धान्तस्य तथाप्यभङ्गाच्च। लघुचन्द्रिकाकृतस्तु—"घटादिकं विषयितास्थानीयो ज्ञानधर्मो ज्ञानाद्भिन्नाभिन्नतया बौद्धैरुच्यते" इत्येवाचचक्षिरे। किञ्च "आकारसहिता बुद्धिर्योगाचारस्य सम्मते"ति सौगतोक्तिराकारस्य भिन्नाभिन्नत्वे एव स्वरसतः सङ्गच्छते, अत्यन्ताभेदे साहित्यानुपपत्तेः अत्यन्तभेदे च बाह्यस्य स्वीकारप्रसङ्गेन तेन तस्यानुपपादनीयत्वात्। न च विरुद्धयोर्भेदाभेदयोरेकज्ञानात्मकत्वासम्भवः, अनाहार्यग्रहे एकत्र तयोरवगाहनस्याप्यसम्भवेन समानत्वात्। समाधानस्यापि कथञ्चित्समानत्वाच्च। चित्राकारस्य वक्ष्यमाणत्वाच्च। वस्तुतस्तु घटमहं जानामीतिप्रतीतेरेवाकारविषयकत्वेन तद्विषये तद्भेदव्याप्तेश्च दृढत्वेनात्यन्ताभेदपक्ष एवोचितः, साहित्यव्यवहारस्य विकल्पात्मकत्वात्, एवञ्च साहित्यमपि विकल्पात्मकमित्यन्यत्।

एतेन: बहिष्ट्वं तावज्ज्ञानभिन्नत्वेदन्त्वाद्यपरपर्यायम्, तच्चालीकं वाऽनलीकं वा, आद्ये अयं घट इत्यादिज्ञानविषयस्यापि तस्य ज्ञानात्मकत्वासम्भवेन तत्र व्यभिचारो दुर्वारः, द्वितीयेऽपि ज्ञानभिन्नस्य कस्यचित्रावश्यकत्वेन व्यभिचार एव, नहि ज्ञानान्तरमेवोक्तज्ञानविषयः, तद्विषयो वा कथं तदन्य इति नाशङ्कनीयम्, ज्ञानभिन्नत्वस्यापि स्वविषयकज्ञानात्मकत्वात्, क्वचित्तस्यालीकत्वोक्तिस्तु यादृशं ज्ञानभिन्नत्वं तार्किकप्रसिद्धं तदनङ्गीकारमात्राभिप्रायेण। हन्त तदपीदृशज्ञानविषयतां नातिवर्तते इति चेत्किमेतावता? अलीकं न किञ्चित्स्यादिति चेत्, तत्किमलीकरक्षणायैव धृतव्रतोऽसि। शशशृङ्गमस्तीत्यादेरपीदृश्येव गतिः। अतएव विज्ञानवादानुसारिभिः स्वातन्त्र्यवादिभिरपि—

"कः सद्भावविशेषः कुसुमाद्भवति गगनकुसुमस्य।
यत्स्फुरणानुप्राणो लोकः स्फुरणञ्च सर्वसामान्यम्॥"

इति "महासत्ता हि खपुष्पादिकमपि व्याप्नोति" ति चोक्तम्। वेदान्तिना तु तस्यानिर्वाच्यविषयकत्वोपगमेनेदं रजतमित्यनेन समानयोगक्षेमत्वात्। विकल्पवृत्तिस्तु 'अत्यन्तासत्यपी' ति न्यायविषयीभूताऽसत्यादिपदाघटितेनासच्छशशृङ्गमित्यादिवाक्येनैव तन्मते जन्यते, मन्मते तु तद्विषयीभूतस्यापि ज्ञानात्मकत्वेनासत्त्वस्यार्थक्रियाकारित्वाभावरूपत्वेन ज्ञानात्मनि चान्ततः स्वध्वंसादिजनकत्वेनैव तदसम्भवेन तदवगाहितयेदं रजतमित्येतत्तौल्यमेव। तार्किकनये त्वनन्वयनिश्चयदशायां, व्यधिकरणप्रकारकप्रत्ययजनकत्वोपगमेन तादृशप्रत्ययस्य च सन्मात्रविषयकत्वस्य सदुपरक्तासद्विषयकत्वस्य वा हेत्वाभाससामान्यलक्षणाक्षेपशेषादौ शारदायां निरस्तत्वेन ज्ञाने विलक्षणाकारस्यैव वक्तव्यत्वेन सिद्धं नः समीहितम्, क्लृप्तत्वेनान्यत्रापि तथैवोचित्यात्। नचैवं ज्ञानात्मकस्य शशशृंगादेः सत्यत्वेनार्थक्रियाकारित्वापातः; ज्ञानत्वेन तस्य तथात्वेष्टेः, अर्थक्रियाविशेषापादनस्य स्वाकारवैचित्र्येणैव परिहरणीयत्वात्, आकारवैचित्र्यप्रयोजकत्वं तु स्वभावविशेषस्येति वक्ष्यते। एवञ्चायं घट इत्यादेः शुक्तौ इदं रजतमित्यादेश्च प्रत्ययस्यापि साम्यमेव, बहिष्ट्वस्योक्तरीत्या ज्ञानात्मकस्य ज्ञानानात्मकतया व्यवहृतस्योभयत्र स्फुरणात्। स्वप्नजाग्रत्प्रतीतिसाम्यं तु वर्णितं 'आशामोदकतृप्ता ये' इत्यादिकारिकाव्याख्यायां व्यक्तश्चान्यत्राकरेषु। नचैवं त्वयाऽबाधिततया स्वीकृतवस्तुविषयकजाग्रत्प्रत्ययस्यापि भ्रमत्वं स्यात्; न स्यात्, विषयाबाधस्यैव तत्र विशेषात्।

एवं भ्रमत्युत्क्षिपतीत्यादिव्यवहारप्रयोजिकानां क्रियाणां यौगपद्याभावेन बौद्धक्रियासमुदायस्य च बुद्ध्यात्मकतायामेव पर्यवसानेन बुद्धेरेवाकारविशेषेण निर्वाह्योऽसौ व्यवहारः, स्थिराणामपि समुदायस्य वक्तव्यरीत्या बुद्ध्याकारत्वे क्रमजन्मनां क्रियाणां समुदायस्य तथात्वे किमु वाच्यम्, अतएव—'क्षणतत्क्रमयो र्नास्ति वस्तुसमाहार इति बुद्धिसमाहारो मुहूर्ताहोरात्रादय' इति योगभाष्येऽप्युक्तम्। एतेनालातचक्रादिप्रत्ययो व्याख्यातः। एवं वनादिविषयकप्रत्ययस्यापि साकारत्वं क्लृप्तप्रायमेव। तथाहि—समुदायस्य न समुदायिपार्थक्यम्, अनभ्युपगमात्, अनुपलम्भबाधाच्च, वृक्षा न वनमिति प्रत्ययापाताच्च। नाप्यभेदः, एकस्मिन्नपि वृक्षे वनप्रत्ययापातात्। समुदिता वृक्षा वनमिति चेन्न, समुदायस्यैव निरूप्यमाणत्वात्। न च वृक्षा वनमिति समानाधिकरणप्रत्ययबलाद्भेदाभेदोऽस्तु, विरोधात्, अवच्छेदकभेदस्य दुर्निरूपत्वात्, अवच्छेदकस्याप्यवच्छिन्नवृत्तिकत्वे आत्माश्रयाद्यापाताच्च, अनवच्छिन्नवृत्तिकत्वे तु न विरोधशङ्काशमकत्वम्। समुदायत्वस्याभेदप्रयोजकत्वे तस्य धीविशेषविषयत्वरूप-

वया विषयबुद्ध्योर्विशेषे परस्पराश्रितत्वापत्त्योभयोरप्यसिद्धि र्मा प्रसाङ्क्षीदिति ज्ञाने एव विलक्षणाकारस्य मन्तुमौचित्याच्च । एतेन विषयस्येव ज्ञानस्यापि विचित्राकारता विरुद्धैवेत्यप्यनवकाशीकृतम् । वक्ष्यते चाधिकम् । न चावच्छेदकभेदानपेक्षावेव भेदाभेदौ; तथासति वृक्षा वृक्षा इत्यादेरप्यापत्तेः, रूपभेदापेक्षणे च वाचोभङ्गयन्तरेणावच्छेदकभेदापेक्षाऽनुमतैव । न च भेदस्याविद्यकत्वेन न विरोधः; अविद्ययापि ज्ञानमात्रस्यैवोत्पादनौचित्यादित्युक्तत्वात् । नच 'विरुद्धमिति नः क प्रत्ययो यत्प्रमाणविपर्ययेण वर्तते' इतिन्यायावतारः; भेदाभेदयोरन्यत्र विरोधस्य दृष्टत्वेनात्र तदुभयावगाहिन्या मतेः प्रमात्वस्यैवाविश्वसनीयत्वात् । ज्ञानात्मकतयैवाविरोधस्योपपत्तेश्च । न च शब्दतत्त्वमेव तथा तथाऽवभासते इति वाच्यम्, तस्य ज्ञानात्मकत्वेऽविवादात्, ज्ञानभिन्नत्वे तु शब्दाश्रवणदशायामनुपपत्तेः । न च तत्राप्यन्तःसञ्जल्पः; तस्यापि ज्ञानविशेषातिरिक्तस्य दुर्निरूपत्वात्, स्पन्दनस्य प्राणधर्मस्य सम्मेलनेन ज्ञानविशेषे एवान्तःसञ्जल्पशब्दप्रयोगात् । स्पन्दनमपि च मन्मते ज्ञानात्मकमेवेत्यन्यत् । अत एव कैश्चिदुक्तम्—

> अन्तः सञ्जल्पो वर्ण्यते मध्यमावाक् ।
> सेयं बुद्ध्यात्मा नैष वाचः प्रभेदः ॥
> बुद्धिर्वाच्यं वा वाचकं वोल्लिखन्ती ।
> रूपं नात्मीयं बोधभावं जहाति ॥
> पश्यन्तीति तु निर्विकल्पकमते र्नामान्तरं कल्पितम् ।
> विज्ञानस्य हि न प्रकाशवपुषो वाग्रूपता शाश्वती ॥इति॥

तदित्थं व्याप्तिग्रहस्थलानां न दौर्भिक्ष्यम् । ननु योऽयं ग्राह्यग्राहकभेदो ग्राह्यनीलपीतादिभेदो वा चकास्ति, स किं सत्यो वाऽसत्यो वा, आद्ये बाधः, द्वितीये तु नायमात्मा सत्यविज्ञानस्येति व्यभिचार इति चेन्न, भेदस्य स्वविषयकज्ञानात्मकतया सत्यत्वेऽपि बहिष्ट्वरूपेणासत्यत्वकाल्पनिकत्वाद्यभिधानात् । अनुमितिपरामर्शयोः पक्षसाध्यविषयकत्वसाम्येनैक्यापत्त्या हेतुहेतुमद्भावासम्भव इति तु कुचोद्यम्, परामर्शस्यानुमितिविषयव्याप्त्यादिविषयकतयाऽऽकारवैचित्र्यात् । अतएव स्थाणुरयमित्येतदपेक्षया स्थाणु र्वा पुरुषो वाऽयमिति प्रत्ययवैचित्र्यम् । ननु स्थाणुत्वपुरुषत्वयोर्विरुद्धत्वेनैकज्ञानात्मकताया असम्भवः, तादृशाकारविशेषस्यालीकत्वे तु तदात्मकज्ञानस्यापि तथात्वापत्त्योत्पत्तिविनाशाननुभवापत्तिरिति चेदत्रोच्यते, तादृशज्ञानस्य युगपदुत्पन्ननानाज्ञानात्मकत्वेऽविरलक्रमोत्पन्ननानाज्ञानात्मकत्वे वा क्षत्यभावात् । ज्ञानयौगपद्यस्यानुभवबलात्, यज्जगदे तथागतैः—"तद्यथा विशालमते ! महत उदकौघस्य वहतः स चेदेकस्य तरङ्गस्योत्पत्तिप्रत्ययः प्रत्युपस्थितो भवत्येकमेव तरङ्गं प्रवर्तते, सचेद् द्वयोस्त्रयाणां सम्बहुलानां तरङ्गाणामुत्पत्तिप्रत्ययः प्रत्युपस्थितो भवति, यावत्संबहुलानि तरङ्गाणि प्रवर्तन्ते, न च तस्योदकौघस्य स्रोतसा वहतः समुच्छित्तिर्भवति; एवमेव विशालमते । तदोघस्थानीयमालयविज्ञानं सन्निश्रित्य प्रतिष्ठाय सचेदेकस्य विज्ञानस्योत्पत्तिप्रत्ययः प्रत्युपस्थितो भवति, चक्षुर्विज्ञानं प्रवर्तते, सचेन्द्वयोस्त्रयाणां स चेत्पञ्चानां विज्ञानानामुत्पत्तिप्रत्ययः प्रत्युपस्थितो भवति, सकृद्यावत्पञ्चानां प्रवृत्तिर्भवती"ति । प्रत्ययशब्दोऽत्र कारणपरः । किञ्च तार्किकनयेऽपि मनसोऽणुत्वेन नयनघ्राणादिनानेन्द्रियकरणकज्ञानानां यौगपद्यासम्भवेऽपि एकस्येन्द्रियस्य युगपद्घटपटादिभिः सम्बन्धे ज्ञानयौगपद्यमौचि-

त्यप्राप्तम्, तत्र नानाज्ञानोपगमे गौरवात् समूहालम्बनमेवैकं लाघवात्स्वीक्रियत इति तु न मानसावर्जिसमाधानम्, सामग्रीभेदेन कार्यभेद इत्युत्सर्गस्य लाघवमात्रापेक्षया दौर्बल्ये प्रमाणानाकलनात्। ज्ञानकरणमेकद्वैकमेव ज्ञानमर्जयतीत्यस्य परिभाषामात्रत्वात्। समूहालम्बनोच्छेदे द्वित्वादिप्रत्यक्षता न स्यादिति तु न, घटश्च पटश्चेत्यादिद्वित्वाविषयकसमूहालम्बनस्यैव त्वविनिगम्यत्वे तात्पर्यात्, घटपटावित्यादेरपि ज्ञानस्य सम्मते गतेर्वक्ष्यमाणत्वाच्च। यथा च प्राभाकरैः पूर्वोक्तस्थले ज्ञानद्वयीयविषयतयोर्निरूप्यनिरूपकभावमभ्युपेत्य विशेषदर्शनप्रतिबध्यतावच्छेदकाक्रान्तत्वं स्वसमवायिसमवेतत्वकालिकसम्बन्धाभ्यां कोटिद्वयस्मृतिविशिष्टधर्म्यनुभवात्मके संशयपदार्थे स्वीक्रियते इत्युक्तं चतुर्थे शारदायाम्, तथाऽस्माभिरपि स्वीकरिष्यते इति को विरोधः। आद्यसम्बन्धस्थाने स्वघटितसन्तानघटकत्वं निवेश्यमिति तु विशेषः. समवायस्य समवायिनो वाऽनङ्गीकारात्।

अस्तु वैकज्ञानात्मकत्वमेव संशयस्य, कोटिताख्यविलक्षणविषयतानिरूपकत्वमन्यत्रादृष्टमपि यथा तार्किकादिभिरत्र स्वीक्रियते तथाऽन्यत्रादृष्टमपि विलक्षणाकारत्वमीदृशमनुभवबलादेवास्माभिः स्वीकरिष्यते, विरुद्धप्रवृत्त्यादिप्रसङ्गवारणस्यापि भवद्भिरिवास्माभिरपि सुकरत्वात्, इयांस्तु विशेषः—यद्भवद्भिः कार्यकारणभावे प्रतिबध्यप्रतिबन्धकभावे च विलक्षणविषयता प्रवेश्या, अस्माभिस्तु विषयस्थानीयो ज्ञानस्य विलक्षणाकारविशेष इति। वस्तुतस्तु विषयतायां बाह्यविषयसंस्पर्शिनः वैलक्षण्यस्य प्रकारान्तराणां वा संशये दुर्निरूपतायाः शारदायामावेदितत्वेन ज्ञानस्य विचित्राकारता भवतामपि स्वीकर्तुमुचितेति समाधिसाम्यमेव। एतेन समूहालम्बनादिस्थले नीलाकारस्य ज्ञानस्य पीताकारत्वेन पीताकारस्य च नीलाकारत्वेनानुपलम्भो नीलपीताकारयोरभेदे बाधकः, अन्यथैकैकाकारस्यापि ज्ञानस्योभयाकारत्वेनोपलम्भप्रसङ्ग इति निरस्तम्, नरसिंहवत्स्वकारणसामर्थ्याज्ज्ञाने वैजात्यस्य स्वीकर्तुं शक्यत्वात्। नचैवं प्रत्येकोचितव्यवहारस्य इदं नीलमिदं पीतमित्यादिकस्यापलापापत्तिः; भवदभ्युपगतनीलादिविलक्षणचित्ररूपेण समानयोगक्षेमत्वात्, वैजात्येऽपि भागोऽयं नरस्य भागोऽयं सिंहस्येति व्यवहारवत्सम्भवाच्च। ननु चित्ररूपस्यातिरिक्ततायां तावद्विवदन्ते तार्किकाः, नीलादेर्नीलाद्यतिरिक्तरूपाजनकत्वनियमात्, समानाधिकरणविजातीयरूपसमुदायादेव चित्रव्यवहारोपपादनात्, तादृशनियमस्याप्रयोजकत्वेऽपि चित्रं रूपमिति प्रतीतावविवाद एव, एवं नरसिंहेऽपि नरत्वसिंहत्वयोरनभ्युपगमेन वैजात्यप्रतीतेश्चानुभविकत्वेनादोषः। इमौ नीलपीतौ घटावित्यादौ तु चित्रत्वप्रकारकप्रतीत्यनुदयेन कथं निर्वाहः, तथाच नीलपीतादिप्रत्येकातिरिक्ताकारस्वीकारासम्भवः; एकस्यापि नीलपीताद्यनेकाकारत्वं त्वेकस्याप्यनेकात्मतापर्यवसन्नं व्याहतमेवेति चेन्न, भवतानवबोधात्, तथाहि 'इमौ नीलपीतौ' इत्यत्र ज्ञाने वैजात्यमनुभूयते न वा, आद्ये तदेवास्माभिश्चित्रशब्देनोच्यते इति चित्रत्वप्रकारकप्रतीतेः कः प्रसङ्गः? ज्ञाने वैजात्यस्य भवतोऽप्यनुमतत्वात्, अन्यथा बाह्यसिद्धिरपि कुतः? घट इति ज्ञानात्पटस्यापि वा सिद्धिर्न कुतः? अतएव न विषय एव वैजात्यम्, असंसृष्टस्य विषयत्वे विषयान्तरसाधारण्यात्। एतेन द्वितीयोऽपि परास्तः। तस्माद्विषयाधीनं ज्ञाने वैजात्यं भवता वाच्यम्, बाह्यस्य विषयस्य दुर्निरूपत्वात्तु ज्ञानस्य तत्स्वकारणसामर्थ्यायातं मयाभ्युपगन्तव्यमिति काऽसङ्गतिः? किञ्च नीलत्वपीतत्वादे र्विरोध इत्येव ज्ञानात्मकताविप्रतिपत्तिदशायां कथमवधारितमायुष्मता? ज्ञानात्मकतासिद्धौ विरोधस्यैवामन्तव्यत्वात्। अन्यथा तु विरोधस्य सन्देहात्। पांसुलपादा-

दयोऽपि नीलमितिबुद्ध्वा पीते न प्रवर्तन्ते इति सिद्ध एव विरोध इति चेन्नूनं स्वाभीष्टसाधने देहात्मवादिनः पांसुलपादादय एव तव साहाय्यं रचयन्ति नतु विद्वांसः, तथा च स्वीकुरु देहात्मवादमपि। युक्तिविरोधेन प्रत्यवस्थानं तु समानमेव, विरोधभानमेव विरोधो नत्वन्यत्, सच न सर्वपुरुषादिसाधारणः। तत्रापि किन्नियामकमिति तु प्रतिविधास्यते। अन्यथाख्यातिनिरासेन स्वप्ने चैकत्रैव नीलत्वपीतत्वादिप्रत्ययस्यानुभविकत्वेन कार्यकारणभावप्रतिबध्यप्रतिबन्धकभावमात्रस्य तत्र व्यभिचारित्वात्। यदाह खण्डनकारः 'स्वप्नदशः सर्वविशेषोपलम्भा दिति। जाग्रद्वैधर्म्यं तु स्वप्ने बाह्यसिद्धिं विना तत्प्रतीतेः प्रमात्वनिरूपणञ्च विना न शक्यं निरूपयितुम्। एवञ्च नरसिंहे पूर्वोक्तनरत्वसिंहत्वव्यवहारानुरोधेन तादृशान्वर्थसञ्ज्ञानुरोधेन च तत्र तयोरावश्यकत्वेन हेत्वन्तरविशेषाच्च तत्र तयोरभावस्यापि यौगपद्येनावच्छेदकपक्षे चानवस्थानादिप्रसङ्गेन तत्रापि विरोधो भञ्जनीयः; एवं चित्ररूपस्थलेऽपीति ज्ञानाकारतैव युक्तेति।

किञ्चैकस्यापि नीलस्यानेकाकारत्वे का क्षतिः? व्याघातइति चेन्न, अनेकत्वस्य नीलादौ विषयतासम्बन्धेन बुद्धिविशेषस्यैवोपगमात्, तस्य च व्याघाताप्रयोजकत्वात्। एतेन— घटपटाविति धीः किङ्गतं द्वित्वमवगाहते, न स्वगतम्, तस्या एकत्वात्, नापि विषयगतम्, ज्ञानातिरिक्तस्याभावात्, एवं परचित्तविषयकं योगिज्ञानमपि किङ्गतं परत्वमवगाहत इत्यपि— नाशङ्कनीयम्, द्वित्वस्य परत्वस्य च स्वज्ञानाकारमात्रत्वे एतादृशविकल्पानवकाशात्। यथाहि भवन्मते रूपादावपेक्षाबुद्धिरेव विषयतासम्बन्धेन द्वित्वादि नत्वन्यत्, तथा मन्मते सर्वत्रैव। वसुबन्धुस्त्वभ्यधात्, न केवलं परचित्तविषयकमेवापि तु स्वविषयकमपि चित्तमयथार्थमेव ग्राह्यग्राहकविकल्पस्याप्रहीणत्वादिति। नतु ऋजुतयापेक्षितम्। उत्पलदेवोऽप्यवादीत्—"योगिनामपि भासन्ते न दृशो दर्शनान्तरे। स्वसंविदेकमानास्ता भान्ति"..... इति।

ननु भवदुक्तमपि प्रलापमात्रम्, एकस्मिन् भेदनियतापेक्षामतेरेवासम्भवात्, एवमन्यत्रापि तत्तद्विचित्राकारस्य किन्नियामकम्, कादाचित्कः क्वचित्कश्चाकारः कादाचित्कं क्वचित्कं च कारणमाक्षिपेत्, तथाच स्वीकार्यं बाह्यम्, समनन्तरप्रत्ययस्य साधारण्यात्, न च वासनाप्रबोधो नियामकः; वासनानां मात्रयापि ज्ञानातिरेकेऽसिद्धान्तात्, प्रबोधार्थं च नियामकस्य गवेषणीयत्वात्, स्वविषयकज्ञानात्मकत्वे तदभावेऽभावप्रसङ्गेन नियामकत्वासम्भवात्, नहि वासनाविषयिण्यपि धीधारा समुन्मिषति, समनन्तरप्रत्ययविधयैव चैवं कारणतापर्यवसानेनान्यवासनात्मकघटप्रत्ययतः कथमपरवासनात्मकपटप्रत्ययसमुद्भवः, अयमेव हि वासनासंक्रमो भवतां यन्नाम तादृशवासनात्मकज्ञानात्तादृशवासनात्मकज्ञानोत्पत्तिरिति अन्यथा ज्ञानातिरिक्तस्थिरवासनास्वीकारप्रसङ्गात्, तथापि वा प्रबोधकस्यापेक्षणीयत्वादिति चेदत्रोच्यते—बाह्यार्थाभ्युपगमेऽपि चक्षुरादिना तत्सन्निकर्षमात्रेण न तत्प्रत्यक्षम्, तत्सद्भावेऽपि मनोऽनवधाने प्रत्यक्षानुत्पादात्, मनोऽवधाने च निमित्तं मृग्यमाणमदृष्टविशेषो वा विषयविशेषबुभुत्सा वा स्यात्, नाद्यः तथासत्यदृष्टविशेषादेव तत्तदाकारज्ञानकादाचित्कत्वस्य निर्वाहसम्भवेन घटादेरकिञ्चित्करत्वात्। नचादृष्टविशेषोऽपि ज्ञानातिरिक्त एवेति न ज्ञानातिरिक्तमात्रस्य प्रतिक्षेप इति वाच्यम्, अदृष्टविशेषो यदि प्रागप्यासीत् तदा तदापि कुतो नेदानीन्तनं प्रत्ययमजीजनत्? सन्नपि न सहकारिसमवहित आसीदिति चेत्सहकारिणो दुर्निरूपत्वात्, बुभुत्साविशेषस्य सहकारित्वे द्वितीयकल्पेऽन्तर्भावात्, घटादेस्तत्सन्निकर्षस्य

वा तथात्वे तु तस्य प्रागपि सत्त्वेनातिप्रसङ्गतादवस्थ्यात्। यदि चादृष्टविशेष इदानीमेवोत्पन्नः, तदा तस्यापि पूर्वमनुत्पत्तिसिद्धये कारणविशेषो वक्तव्यः। यदि ह्यदृष्टविशेषस्य कारणमदृष्टविशेषान्तरमेव, तस्यापि चादृष्टविशेषान्तरमेवेति प्रवाहः, तदा ज्ञानप्रवाहेण किमपराद्धम्, अन्ततः स्वभावविशेषस्य सर्वत्र शरणीकरणीयत्वेन यादृशज्ञानानन्तरं यादृशज्ञानं दृश्यते तादृशज्ञानं प्रति समनन्तरप्रत्ययविधया तादृशज्ञानस्य जननस्वभावतोक्तेर्निर्बाधत्वात्. विषयविषयिभावस्य च भेदे दुर्निरूपत्वेऽदृष्टविशेषस्यापि ज्ञानात्मकताया एव वक्तव्यत्वात्, अन्यथाऽलीकतापत्तेः। इत्थमेव विज्ञानवाद्यभ्युपगतो वासनापरिपाको निर्वचनीयः। एतेन—आत्मनः स्थायिनोऽभावे घटमहमद्राक्षमिति अनुभवो नोपपादयितुं शक्यः, पूर्वकालीनज्ञानस्यैतत्कालीनज्ञानभिन्नत्वेन तद्विषयत्वासम्भवादिति तादृशानुभवाधीनलोकव्यवहारमर्दनमिति—नाशङ्कनीयम्, स्थाय्यात्मोपगमेऽप्युक्तरीत्या स्वभावविशेषलम्बनध्रौव्येण स्थायित्वे वक्ष्यमाणबाधकेन च पूर्वप्रत्ययरूपस्वकारणसामर्थ्यकल्पनयैव तादृशाकारस्योपपादनीयत्वात्। नापि द्वितीयः, विषयविशेषबुभुत्साया विषयविशेषज्ञानाधीनतया तत्सिद्धौ बुभुत्साऽनुपपत्तेः, बुभुत्साविषयतावच्छेदकरूपेण ज्ञानासिद्धौ च तदनवच्छिन्नज्ञानोत्पत्तौ बीजजिज्ञासायां निरस्तकल्पे एव पर्यवसानम्। तस्मात् सूक्ष्मसंसारापर्यालोचननिबन्धन एव बाह्याभ्युपगम इति युक्तमुत्पश्यामः।

किञ्च ज्ञानं तावद्विषयनिरूप्यमिति भवतोऽप्यनुमतम्, विषयोऽपि च यदि ज्ञानादतिरिच्यते तदा विषयनिरूपणमपि ज्ञाननिरूपणायत्तमेव, न च विषयज्ञानमेव विषयनिरूपणम्; विषयनिरूपणं हीह न विषयप्रकाशनमात्रं विवक्षितम्, अपि तु विषयस्य सत्यत्वनिरूपणम्, तच्च प्रमात्वेन ज्ञाननिरूपणे आयतत इत्यन्योन्याश्रयः। बाह्यानां लक्षणान्तरखण्डने च सति तल्लक्षणमपि प्रतीतिविशेषसाक्षिकतयैव निरूप्यमित्येवमप्यन्योन्याश्रय इत्युभयोरपि मा भूद् सिद्धिरिति "सर्वनाशे समुत्पन्ने" इति न्यायेन ज्ञानस्यैव स्वविषयकस्य परिशेषः समुचितः, तस्य बाह्याभ्युपगमेऽपि ध्रौव्यात्। नह्येवं सति 'जानामी'त्येवानुभवो भवेदिति शक्यमापादयितुम्, विलक्षणाकारस्यैव ज्ञानस्याभ्युपगमात्।

किञ्च बाह्यं घटादि मायिकं वाऽमायिकं वा,नाद्यः, मायिकवादे दृष्टिसृष्टिवादस्यैव मुख्यत्वेन तत्र बाह्याभ्युपगमस्य निष्प्रयोजनतादेरुक्तत्वात्। द्वितीये तु परमाणुसमुदायो वा, तदतिरिक्तावयवी वा मृदाद्यवस्थाविशेषो वा, न तृतीयः—अवस्थायां विशेषस्य दुर्निरूपत्वात्, सदसत्कार्यवादयोश्चतुर्थे शारदायां निरस्तत्वाच्च, अत एव न द्वितीयः, किञ्च,अव्यासज्यवृत्तित्वे प्रत्यवयवमवयविकार्यकारित्वं स्यात्, व्यासज्यवृत्तित्वे तु यावदवयवप्रत्यक्षं विना प्रत्यक्षासम्भवः, व्यासज्यवृत्तिप्रत्यक्षे यावदाश्रयप्रत्यक्षस्य हेतुत्वात्। अर्थाप्रयोजकत्वेन द्वित्वादिवैलक्षण्यमित्यत्र तु भवान् नियामकम्। प्रत्यक्षात्मकं फलमन्यथानुपपन्नमिति चेन्न; ज्ञानात्मकतायामप्युपपत्तेरन्यथानुपपत्तेरप्रसरात्, अन्यथाऽवयवभिन्नत्वाविशेषेऽप्यवयवी तत्रैव वर्तते नत्वन्यत्रेत्यत्र किन्नियामकम्। समवायस्यायुतसिद्धत्वस्य च चतुर्थे निरस्तत्वात्। अत एव घटादौ गुरुत्वादेर्द्विगुणत्वप्रसङ्गोऽपि युक्त एव। किञ्च—तत्कपालवृत्तित्वविशिष्टोऽवयवी एतत्कपालवृत्तित्वविशिष्ट इति भवताऽपि न स्वीकार्यं विरोधात्, उपलक्षणत्वञ्च तत्तत्कपालवृत्तित्वयोर्विद्यमानत्वगर्भं जीवत्यवयविति न सम्भवदुक्तिकम्, उपाधित्वं तु स्यात्, तथाच यत्र घटत्वं सत्येतत्कपालवृत्तित्वं

तत्र तत्कपालवृत्तित्वमित्येवोक्तं स्यात्, एवञ्चैतत्कपालवृत्तिर्घटः कथं तत्कपालवृत्तिरिति जिज्ञासाया नेदमभिधानं निवारकमित्यनुत्तरम्। तथाच कथमनेकावयवसमवेतोऽवयवी। किञ्च तद्देशवृत्तित्वविशिष्टस्यैतद्देशवृत्तित्वविशिष्टेन भेदाभेद एव स्यात्स च ज्ञानाकारतां विना न निर्वहतीत्यावेदितमधस्तात्। एतेनावयविन्यावृतत्वानावृतत्वग्रहणाग्रहणसकम्पत्वनिष्कम्पत्वादिविरुद्धधर्माध्यासप्रसङ्गोऽपि बौद्धैरुक्तः समर्थनीयः, स हि कतिपयावयवावरणेऽप्यवयविनोऽनावरणमेवेत्यादिरीत्या कैश्चित्समाधीयते, परन्तु तदावयविनोऽनावरणे प्रागुक्तपरिमाणविशेषोपलम्भप्रसङ्गः, न चावयविनि परिमाणविशेषस्य समवायो नत्वभेद इति नावयव्युपलम्भेऽपि परिमाणविशेषोपलम्भप्रसङ्ग इति वाच्यम्, समवायनिरासात्। किञ्च य एव घटोऽंशेनावृतः, स एवांशेनानावृतः, य एव घटोऽंशेन सकम्पः स एवांशेन निष्कम्पः, य एव घटोऽंशेन गृहीतः स एवांशेनागृहीत इत्यनुभवो दुरपन्हवः, तस्य प्राप्ताप्राप्तविवेकन्यायेनांशयोरेवावृतत्वानावृतत्वाद्यवगाहितात्वौ तु संयोगतदभावावपि नैकत्र सिद्धयेताम्, अवयवयोरेव तयोर्वक्तुं शक्यत्वात्, अनुभवानुरोधेनोत्तरं तु समानम्। अवयवधर्मैरेवावयविनि तत्तत्प्रकारकप्रतीतिनिर्वाहे चावयविनो निर्धर्मकत्वापत्तिः, परमाणुरेव त्रसरेणुरेव वा तत्तद्धर्मकः स्यात्, एकाकारधर्मप्रकारकप्रतीतेः क्वचित्साक्षात्सम्बन्धावगाहित्वं क्वचिच्च परम्परासम्बन्धावगाहित्वमिति दौःस्थ्याच्च। बाधकसद्भावासद्भावाभ्यामावृतत्वादिधियो भ्रमत्वमेकत्र संयोगतदभावादिबुद्धेश्च प्रमात्वमिति चेन्न, भेदापत्तिरूपबाधकभियैवेत्थं परिकल्पने संयोगस्थलेऽपि तत्तौल्यात्। न चैवमस्त्ववच्छेदकभेदेनैवाविरोधः; अवच्छेदकस्य सर्वथैव घटादिभिन्नत्वे तद्भेदेन विरोधसमाधानासम्भवेन सर्वथैवाभेदस्य चानुभवविरोधेनासम्भवेन समवायेन प्रत्यवस्थानस्य च निराकृतत्वेन भेदाभेदापगमस्य च दत्तोत्तरत्वेनावच्छेदकस्य चानवच्छिन्नवृत्तिकत्वे विरोधतादवस्थ्येनावच्छिन्नवृत्तिकत्वे चात्माश्रयान्योन्याश्रयचक्रकानवस्थान्यतमप्रसङ्गेनावयविविलोपस्य दुर्वारत्वात्।

न च परमाणुरेवान्तिमोऽवच्छेदकः; तत्रापि युगपदनेकमूर्तसंयोगित्वस्यानेकदिगवच्छेदेनाभ्युपगतत्वेन पूर्वदिगवस्थितस्य परमाणोः परदिगवस्थितेन परमाणुना परदिगवच्छेदेनावृतत्वस्यावश्यकत्वेन च परमाणुनिष्ठसंयोगस्यावच्छेदकेऽप्यवच्छेदकान्तरस्य वक्तव्यत्वेनानवस्थाया दुर्वारत्वात्। एतेन दिग्दशकसंयोगनिबन्धनो दशावयवकत्वप्रसङ्गः परमाणौ, एवं तदवयवेष्वपीतिशून्यतैवेति समर्थितम्। तत्तद्दिक्सम्बन्धस्य परमाणौ व्याप्यवृत्तित्वेऽवच्छेदकताऽनुपपत्तेः। एतेन धर्मिग्राहकमानेन परमाणोर्निरवयवत्वसिद्धौ तत्र तत्तत्सम्बन्धस्य व्याप्यवृत्तित्वमेवोपेयमिति नाशङ्कनीयम्, एतादृशरीत्या धर्मिग्राहकमानस्यानुपपन्नताया एव प्रदर्श्यमानत्वाच्च। न च परमाणोः सावयवत्वेऽनवस्थाऽन्यथानुपपत्तिर्वा; बाह्यानुपगमेनैव सर्वानुपपत्तिशान्तेः। निरवयवद्वये च तद्विलक्षणपरिमाणकं द्व्यणुकं वेदान्तिगोष्ठीसिद्धा माया परमुत्पादयेन्नत्वन्यः कश्चिदिति मन्दधीबन्धकोऽयं परमाणुवादः। संख्यायाः स्थौल्यप्रयोजकत्वमित्यपि तार्किकाणां स्वगोष्ठीसमय एवेति त्रसरेणोः स्थौल्यानुपपत्तावन्त्यावयविपर्यन्तं तदनुपपत्तिरेव। एतेन परमाणुसमुदायपक्षोऽपि परास्तः। परमाणोरेव निराकृतत्वात्। अतीन्द्रियत्वप्रसङ्गश्च घटादौ तार्किकैरप्यत्र पक्षे समर्थितः। एतादृशरीत्या परमाणुनिराकरणे तत्सिद्धयसिद्धिपराहतमिति तु कुशकाशावलम्बनमेवानन्यशरणस्य। भवदभ्युप-

गतत्वेनैव निराकार्यत्वात्, वक्ष्यते च विकल्पबलाद्व्यवहारोपपत्तिः शून्यवादे।

ज्ञानाकारतायामनुभवविरोध इति चेत्, बाह्येऽपि युक्तिविरोधं किन्न पश्यसि? एवं सत्यनिर्वाच्यवादिन एव विजयेरन्निति चेन्नात्रातीव खेदः, ते ह्यस्माकं सतीर्थ्याः, बाह्याभिनिवेशिनो भवतस्तु पराजय एव। प्रबलयुक्तिविरोधे च बाह्यप्रतीतिर्ज्ञानाकारमेव भेदमुल्लिखन्ती समर्थ्यमाना न कामपि क्षतिमावहति, चिन्तितञ्च बहिष्ट्वम्, बुद्धिधर्मत्वमूर्ता भवतोऽपि सम्मतेति न तस्याः परमाणुवत्खण्डनभागिता।

एवं विमतं ज्ञानाभिन्नं ज्ञानाविषयकप्रतीत्यविषयत्वादित्यपि 'सहोपलम्भनियमादभेदो नीलतद्धियो' रिति बौद्धोक्तेर्विनिःसृतं समर्थनीयम्, तदविषयकप्रतीत्यविषयस्य तदात्मकतादर्शनात्, न च रूपप्रभयोर्भेदेन व्यभिचारः, प्रभाया रूपाविषयकप्रत्यक्षाविषयत्वेऽपि रूपाविषयकशाब्दादिविषयत्वदर्शनेन तदविषयकप्रतीतिविषयतासामान्याभावस्याभावात्। नन्वाधाराधेयत्वायोस्तुल्यवित्तिवेद्यत्वेन तत्र व्यभिचारः, यदि चाधारादिपदजन्योपस्थितिविषयत्वस्याधेयत्वादावदर्शनेन न परस्पराविषयकप्रतीतिविषयत्वसामान्याभाव इत्युच्यते, तदा ज्ञानपदार्थानोपस्थितेर्ज्ञानसामान्यविषयिकाया अपि घटादिविषयकत्वाभावेन घटादावपि स्वविषयकज्ञानाभेदो न सिद्ध्येत्, प्रतीतिशब्देनानुभवमात्रविवक्षणेऽपि ज्ञानमस्तीत्यादिवाक्यजानुभवस्यापलापासम्भवेनोक्तदोष एव, नच ज्ञानमस्तीति बोधस्य स्वमात्रावगाहित्वम्, नतु सामान्यतोऽपि 'अयं घट' इत्यादिज्ञानान्तरावगाहित्वमिति वाच्यम्, ज्ञानैक्यसिद्धिं विनैनं वक्तुमशक्यत्वात्, ज्ञानविषयत्वेनैव ज्ञानाभेदसाधने चास्यानुमानस्य निष्फलत्वात्, तस्मात्प्रतीतिः प्रत्यक्षरूपैव विवक्षणीया, तत्र च तमसो रूपवद्द्रव्यत्वपक्षस्यैव यौक्तिकत्वेन प्रभाऽविषयकप्रत्यक्षविषयत्वस्य रूपे दर्शनेऽपि रूपाविषयकप्रत्यक्षविषयत्वस्य प्रभायामभावेन व्यभिचारो दुर्वारः, रूपं च तत्प्रभाया वाऽन्यस्य चेत्यन्यत्, एवं यस्य यूकादेः शरीरविशेषप्रत्यक्षविषयत्वं नियतं तत्रापि व्यभिचार इति चेन्न, विशिष्य तज्ज्ञानाविषयकप्रतीत्यविषयत्वे तज्ज्ञानाभेदनिरूपितायास्तज्ज्ञानेऽवगताया व्याप्तेर्विवक्षायामदोषात्, अनुकूलतर्कोक्त्याऽप्रयोजकतायाः परिहृतत्वात्। तज्ज्ञानत्वं तु न तज्ज्ञानातिरिक्तमिति न व्यभिचारः।

अथवा तद्विषयकज्ञानविषयतायोग्यत्वाभावे तदभेदव्याप्यत्वमिति सामान्यत एव वक्तव्यम्, योग्यतावच्छेदकं तु तद्वृत्तित्वविशिष्टधर्मवत्त्वम्, यूकविशेषादौ चैतदक्षतमिति न व्यभिचारः। भूतले घट इत्यादिप्रतीतिविषयस्याधाराधेयभावस्य तु विषयविषयिभाववदखण्डत्वमेवोचितमित्यपि ध्येयम्। नचैवं पक्षे हेतमत्तासन्देहः; बाह्यस्य निरस्ततया स्थौल्यादेर्विकल्पात्मकत्वायैव वक्तव्यतया पक्षधर्मतानिश्चयादिति। न चायं घट इतिव्यवहारापलापः, घटमहं जानामीतिज्ञानावगाहिन एव भवता व्यवहारस्य वाच्यत्वादितिवाच्यम्, घटं जानामीत्येवानुभवेऽपि घटोऽयमिति व्यवहारे बाधकाभावात्। घटोऽयमित्यनुभवस्यापि शपथेन निर्णये तु श्रीरामानुजानुयायिनामिवास्माकमपि तत्र स्वरूपतो ज्ञानभानाभ्युपगमसम्भवात्; जात्यखण्डोपाध्यतिरिक्तस्य न स्वरूपतो भानमित्यस्य परिभाषामात्रत्वात्।

ननु तत्तदाकारविशेषितरूपेण ज्ञानस्योत्पत्त्याद्यनुभवाल्लाघवाच्च ज्ञानस्यैकत्वं नित्यत्वं व्यापकत्वञ्चास्थाय वेदान्तिना सन्धीयताम्, विषयस्यानिर्वाच्यतया एव शक्य-

वचनत्वादिति चेन्न, निराकारज्ञानस्यानुभवबाधितत्वेन लाघवादेरकिञ्चित्करत्वात्। किञ्च तादृशं ज्ञानं कालासम्बन्धि वा तत्सम्बन्धि वा, आद्येऽलीकत्वप्रसङ्गः, द्वितीये तु पूर्वक्षणवृत्तित्ववैशिष्ट्यस्योत्तरक्षणवृत्तित्ववैशिष्ट्येन विरोधोऽस्ति न वा, आद्ये यत्पूर्वक्षणवृत्तित्वविशिष्टं तन्नोत्तरक्षणवृत्तित्वविशिष्टमिति कथं नित्यत्वादिकम्। द्वितीये तु पूर्वक्षणवृत्तित्वविशिष्टं ज्ञानमेतत्क्षणवृत्तित्वविशिष्टमितिज्ञानस्य प्रमात्वापत्तिः, न चैतत्पूर्वक्षणस्यैतत्क्षणदशायामविद्यमानत्वे शक्यमुररीकर्तुम्। अवच्छेदकभेदेनाविरोध इतिचेन्नूनमस्वस्थोऽसि, येन भूयः प्रावितमप्यनवस्थादिकं न स्मरसि। पूर्वक्षणवृत्तित्वोपलक्षितमेतत्क्षणवृत्तित्वविशिष्टमिति स्वीकारे न विरोध इति चेदेतत्क्षणवृत्तित्वविशिष्टं यत् तदेव पूर्वक्षणवृत्तित्वोपलक्षितमिति कथं ज्ञेयम्, उपलक्ष्यतावच्छेदकाज्ञानात्, स्वरूपस्य क्षणान्तरसाधारण्यात्। अहो सिद्धमेतावतैव समीहितमिति चेदनवसरे प्रमोदोऽयं ते, यतः स्वरूपस्यैकस्य नानाक्षणमेलनासम्भवस्यैवेत्थमभिधित्सितत्वात्। एकदा मा भूत्कालभेदेन तु तत्कुतो न स्यादिति चेदुक्तोत्तरत्वात्, पूर्वादिक्षणस्य पूर्वादिक्षणावच्छेदेन मेलनोपगमे आत्माश्रयादिप्रसङ्गात्, अन्यथाऽनवस्थानात्, तत्तत्क्षणसम्बन्धानां कालानवच्छिन्नत्वे सर्वेषां सर्वदा प्रतीतेः प्रमात्वस्य दुष्परिहरत्वात्। एवमेव सहकारिभिराधीयमानातिशयविशिष्टस्यापूर्वत्वेन क्षणभङ्गोज्जीवनम्। न च सहकारिसमवधानमेवातिशयः, तद्विशिष्टस्यैवोक्तरीत्या भेदाभेदादिना च विकल्पोपहतत्वात्। एतेन व्यापकत्वमपि निराकृतप्रायम्, तद्देशसम्बन्धानुयोगित्वविशिष्टस्यैतद्देशसम्बन्धानुयोगित्वविशिष्टत्वमस्ति नवेत्यादिविकल्पकवलितत्वात्। उक्तञ्चैतदनुपदमत्रयविनिरासे। एवं कालाकाशादीनामपि नित्यत्वव्यापकत्वे प्रत्याख्येये। विषयस्यानिर्वाच्यत्वं यदुक्तं तदपि न; तस्य ज्ञानभिन्नत्वे ज्ञानविषयत्वासम्भवात्। तदभिन्नत्वे तु न मिथ्यात्वम्, ज्ञानस्य क्षणिकत्वेऽपि परमार्थसत्त्वाभ्युपगमात्। न च पारमार्थिकत्वं यद्यर्थक्रियाकारित्वं तदा न तन्मिथ्यात्वं विरुध्यतीति वाच्यम्, भ्रमस्थले ज्ञानमात्रोत्पत्तिसमर्थनं तस्यैवार्थक्रियाकारितया तद्भिन्नस्य सांवृतस्य काप्यर्थक्रियाकारितयाऽक्लृप्तत्वादिति।

अथ ज्ञानस्य पारमार्थिकत्वे सर्वशून्यतादेशनाविरोध इति चेदत्राह त्रिंशिकाप्रकरणे वसुबन्धुः—"यो बालै धर्माणां स्वभावो ग्राह्यग्राहकादिः परिकल्पितस्तेन कल्पितेनात्मना तेषां नैरात्म्यं न त्वनभिलाप्येनात्मने"ति। अयमत्राशयः—ज्ञानभिन्नस्य प्रागुपदर्शितरीत्या विकल्पमात्रजीवितत्वेन ज्ञानभिन्नत्वावच्छिन्ना ग्राह्यता तन्निरूपिता च ग्राहकता विकल्पमात्रशरणैव, अनभिलाप्यं तु ज्ञानवपुः स्वलक्षणम्, अननुगतमिति यावत्, अनुगमश्च देशतो वा कालतो वा, आद्यो विभुषु घटते, द्वितीयस्तु नित्यमात्रेषु, तदुभयमपि यत्र नास्ति तदेव पारमार्थिकम्, अन्यथोक्तरीत्या विरुद्धधर्माध्यासस्य दुर्वारत्वात्। तथाच 'ज्ञानवज्ज्ञेयमपि पारमार्थिकम्' 'ज्ञेयवद्वा ज्ञानमपि सांवृत' मिति मतद्वयनिराकरणं विज्ञानवादप्राणायितं निर्व्यूढम्। एवञ्च क्षणिकत्वादिकमपि न्यायानीतम्। अतएव सर्वं क्षणिकमिति भगवतो बुद्धस्य देशना। एतेनैवाशयेन तत्त्वसंग्रहे वेदान्तिमतमनूद्य विज्ञानस्य नित्यताभिधानं वेदान्तिनामपराध एवेति "तेषामल्पापराधं तु दर्शनं नित्यतोक्तितः" इत्यनेनोक्तम्, अल्पेत्यनेन ज्ञानस्य वेदान्ते पारमार्थिकतोपगमेनांशे यौक्तिकत्वं सूचितम्। सौगतैकदेशिभिर्वात्सीपुत्रीयैरपि स्कन्धेभ्यो भिन्नाभिन्नत्वाभ्यामात्मनोऽनिर्वाच्यतैवोपगतेति न वेदान्तिसाम्यम्। अतएव—

"स्कन्धेभ्यः पुद्गलो नान्यस्तीर्थदृष्टिप्रसङ्गतः।"

नानन्योऽनेकताप्राप्तेः साध्वी तस्मादवाच्यते" इत्येवं तन्मतमनूद्य—

"ते वाच्याः पुद्गलो नैव विद्यते पारमार्थिकः।

तत्त्वान्यत्वाद्यवाच्यत्वान्नभःकोकनदादिवद्"इत्यादिना

तत्त्वसंग्रहे निराकृतम्। त्रिंशिकाप्रकरणेऽपि—

"आत्मधर्मोपचारो हि विविधो यः प्रवर्तते। विज्ञानपरिणामेऽसौ"......।

इति प्रघट्टके आत्मा जीवो जन्तुरित्यादिक आत्मोपचारःस्कन्धा धातव आयतनानि रूपं वेदनादिकश्च विज्ञानपरिणामे एव न मुख्ये आत्मनि धर्मेषु च। कुतएतत्? धर्माणामात्मनश्च विज्ञानपरिणामाद्बहिरभावादिति निरूपितम्, एतेन मुख्यः कश्चिदात्मा धर्मा वाऽपरिणामात्मकं विज्ञानं वा किञ्चित्स्यादिति भ्रमो निराकृतः। परिणामि विज्ञानमपि स्वपूर्ववर्तिविज्ञानपरिणाम एव, न तु नित्यमिति च "कारणक्षणनिरोधसमकालः कारणक्षणविलक्षणः कार्यस्यात्मलाभः परिणाम" इत्यनेन स्फोरितम्। तत्र कालान्तेन दर्शनान्तरप्रसिद्धपरिणामवैलक्षण्यं दर्शितम्। बौद्धसिद्धान्ते वस्तुस्वरूपस्यैव क्षणात्मकतायास्तत्त्वसंग्रहादौ निर्णीतत्वेन कारणक्षणनिरोधसमकालत्वोक्तेःकारणनिरोधसमकालत्वे एव पर्यवसानात्। एतादृशार्थानभ्युपगमे एतद्दलवैयर्थ्यप्रसङ्गात्। अतएव सांख्ययोगादिसम्मतो नेह निरोधोऽनुरोध्यः, अपि तु तार्किकादिसम्मत एव। अन्यथा क्षणपदस्यापि वैयर्थ्यप्रसङ्गाच्च। अग्रे विज्ञानमात्रस्य प्रतीत्यसमुत्पन्नत्वाद्युक्त्या चायमभिप्रायो दृढीकृतः।

"विज्ञानपरिणामोऽयं विकल्पो यद्विकल्प्यते।
तेन तन्नास्ति तेनेदं सर्वं विज्ञप्तिमात्रक' मिति॥

कारिकाव्याख्यायाञ्च 'पूर्वकान्निरुद्धात्तज्जातीयविज्ञानात् विज्ञानमुत्पद्यते' इति कण्ठरवेणोक्तम्। आस्तिकदर्शनेषु तु निखिलेष्वपि सौगतनये क्षणिकज्ञानाभ्युपगमाभिधानं सुप्रसिद्धमेव। क्षणिकतया स्रोतोवदविच्छेदेन प्रवर्तमानं चालयविज्ञानमनोविज्ञानप्रवृत्तिविज्ञानं साकारमेव न तु वेदान्तिवरिकमपि विज्ञानं निराकारम्। यदाह वसुबन्धुः—"नहि निरालम्बनं निराकारं वा विज्ञानं युज्यते, नैव तन्निरालम्बनं निराकारं वेध्यते किंतर्ह्यपरिच्छिन्नालम्बनाकार"मिति। विशुद्धमपि ज्ञानसन्तानमुपेक्षात्मकमेव न तु वेदान्तिवदानन्दात्मकम्, अलौकिकानन्दानभ्युपगमाल्लौकिकस्य च रागात्मकक्लेशानुविद्धत्वादिति द्रष्टव्यम्। तस्मात् क्षणिकं ज्ञानमेवानुच्छिन्नसन्तति विजातीयस्वगतभेदशून्यतयाऽद्वैतं परमार्थसदिति शिवम्। इति दर्शनसर्वस्वेऽनिर्वचनीयतावादे विज्ञानवादपरिष्कारप्रकारः।





## शून्यवादः ।

अथ परस्मिन्निव स्वस्मिन्नपि विषयविषयिभावस्य निरूपणासम्भवे स्वस्यापि रक्षणं नाचितमिति निष्पक्षपाताः शून्यवादिनः । नचोक्तरीत्या ज्ञानज्ञेयाभेदसिद्धौ शारदायां चतुर्थपरिच्छेदोक्तदिशा ग्राह्यस्य लक्षणान्तरासम्भवेऽपि ज्ञानाभिन्नत्वं वा ज्ञानसामग्रीजन्यत्वं वा तल्लक्षणमस्तु, सर्वस्य ज्ञानात्मकत्वव्यवस्थितौ देवदत्तो ग्रामं गच्छतीति ज्ञानस्यैव क्रियाकर्मकर्तृतया भानेन तद्विरोधोद्भावनासम्भवादिति वाच्यम्, भेदस्य प्रथमे चतुर्थे चोक्तरीत्या दुर्निरूपत्वे तत्प्रतियोगिकतया तदायत्तसिद्धिकत्वेनाभेदस्यापि दुर्निरूपत्वात् । न च भेदप्रतियोगिकत्वोपलक्षितं तथापि सत्यं स्यात्; भेदप्रतियोगिकतासद्भावदशायां तस्या उपलक्षणत्वासम्भवात्, तदसद्भावदशायां त्वभेदस्यापि स्वरूपत्यागप्रसङ्गात्, उपलक्षितत्वस्य विशेषणत्वोपलक्षणत्वाभ्यां दोषाच्च । एतेन ज्ञानभिन्नाभिन्नत्वमपि पराकार्यम् । द्वितीये तु जन्यतावच्छेदकं निरूपणीयम् । न च ज्ञानत्वं तत्; आकारस्य ज्ञानभिन्नाभिन्नतायां पर्यवसानस्योक्तत्वेन ज्ञानत्वस्य तत्रासम्भवात्, अतएव तत्र ज्ञानसामग्रीजन्यत्वमपि कथम् । ननु भेदस्यापि स्वविषयकज्ञानात्मकत्वमुक्तमेव, किञ्च त्यक्त एव भेदाभेदपक्षः, अतएव घटमहं जानामीत्यत्र भेदाभेदस्फुरणमपि नापाद्यमिति चेन्न, साकारं सर्वं ज्ञानमितिमितिः प्रमिति र्वा भ्रान्तिर्वा विकल्पो वा, आद्ये आकारसाहित्यं नालीकं नवाऽऽकारात्मकं नवा ज्ञानात्मकम्, तथासति ज्ञानं ज्ञानमित्याद्यपि तादृशमिति ज्ञननाय प्रयुज्येत, अतएव सर्वं प्रमेयमिति ज्ञानं स्वविषयकमित्यर्थस्य सर्वं प्रमेयमिति ज्ञानं स्वाभिन्नं स्वसामग्रीजन्यं वेति व्यवहारगोचरतया विषयत्वस्य ज्ञानाभिन्नत्वाद्यात्मकताऽशक्यशङ्कैव । द्वितीये तु ज्ञानस्य निराकारत्वप्रसङ्गः । तृतीये तु ज्ञानानां सर्वेषां तादृशविकल्पविषयतया विकल्पात्मकत्वेन न किमपि ज्ञानं प्रमात्मकं स्यात् । अथ विकल्पो व्योमकुसुममित्यादिकः प्रमित्यनात्मकः, अयं तु विकल्पोऽपि प्रमित्यात्मक एवेति कथञ्चिद्रूपे, तदा प्रथमकल्पोक्तदोषः । अथ मा भूत्किञ्चिज्ज्ञानं प्रमा, संवृत्यैव तु व्यवहारः, न चास्यैव ज्ञानस्य प्रमात्वाप्रमात्वाभ्यां व्याघातः; यक्षानुरूपो बलिरिति न्यायेन संवृत्यैव संवृतेर्व्यवस्थापने बाधकाभावात्, न हि संवृतिरपि पारमार्थिकीति वक्ष्यते येन तद्व्यवस्थापनाय पर्यनुयुज्येत, न च व्यवस्थापनापक्षाश्रयणमिदानीं मे कुलधर्मोऽपि तु खण्डनपक्षाश्रयणमेवेति न व्याघातशङ्कापि, द्रष्टव्यं च व्याघातखण्डनमनुमानखण्डने द्वितीयपरिच्छेदे च शारदायामिति मन्यसे, तदाऽस्मदीयशून्योद्यानरिरंसोस्ते स्वागतमादराद्विदध्महे । वस्तुतस्तु सर्वज्ञानाप्रामाण्याभ्युपगमोऽनुचित एव, व्यवहारदशा ज्ञानानां प्रामाण्यस्य यौक्तिकदशा चाप्रामाण्यस्यौत्सर्गिकत्वं हि नापवादस्थलं विना निर्वहति, शून्यत्वाशून्यत्वाद्योः सांवृतत्वाविशेषेऽपि शून्यत्वादिग्रहे उत्कर्षस्य कथञ्चिदवश्योपेयत्वादिति हि वक्ष्यते ।

किञ्च ज्ञानत्वमपोहात्मकं वाऽन्यादृशं वा, उभयथाऽपि प्रतिव्यक्तिविश्रान्तं वाऽनुगतं वा, आद्येऽननुगमः, द्वितीये त्वपसिद्धान्तः, देशकालानुगमयोर्भवतैव विज्ञानवादशेषे निरस्तत्वात् । किञ्चानुगतत्वं व्यापकत्वमिह वाच्यम्, तच्च देशानवच्छिन्नत्वं वा तद्भिन्नेष्टभेदप्रतियोगितानवच्छेदकत्वं वाऽभावरूपम्, अभावभावयोरलीक; तथा च व्यापकत्वे व्यापकत्वमस्ति, न वा, आद्ये आत्माश्रयोऽनवस्था वा, न चेष्टापत्तिः, व्यवहारानुगमदर्शनात् । सर्वस्य

सर्वव्यापकत्वप्रसङ्गश्च, जातेःसर्वव्यापकत्वात्। सम्बन्धभेदमादाय प्रत्यवस्थानं तु निराकृतमन्यत्र। द्वितीये तु देशानवच्छिन्नस्य देशावच्छिन्नत्वं व्याहतम्, अनलीकाभाववादिमतेऽपि देशत्वकालत्वव्यापकत्वस्य जातिमात्रनिष्ठत्वेन तद्वर्जितदेशाभावेनोक्तव्याघातो दुर्वार एव। व्यापकताखण्डनशारदा चेहानुसन्धेया। नित्यसमजात्यापत्तिस्तु न, दूषणक्षमत्वात्, अस्माकं व्यवस्थापनीयाभावाच्च, शून्यतायाः सर्वासिद्ध्यैव सिद्धेः। एवं क्षणिकत्वस्य क्षणिकत्वाक्षणिकत्वाभ्यामपि क्षणिकज्ञानस्य दुर्निरूपत्वमेव, द्वितीये निर्धर्मिकधर्मासम्भवेन स्थायिस्वीकारप्रसङ्गात्, आद्ये चात्माश्रयाद्यापत्त्या नानुगमः, तद्वत्तायैव चापसिद्धान्तमवधीर्य क्षणस्यातिरिक्तपदार्थतां शिरोमणिरप्यनुमेने। एवं ज्ञाने स्वनिरूपितविषयिताविशेषे सत्यतोपगमो न तद्विधः प्रमात्वसिद्धिं विना, सा च न तत्सत्यतासिद्धिं विनेति स्वविषयत्वाविषयत्वाभ्यामपि दुर्निरूपत्वमेव ज्ञानस्येति द्रष्टव्यं "सोऽपि वा धीविशेषः किं स्वीकार्यस्तद्वियं विने"ति प्रघट्टके। एवं प्रमात्वखण्डनशेषे शारदोदितप्रमात्वस्वतस्त्वपरतस्त्वनिरासप्रणाल्यापि ज्ञानज्ञेयसत्यतावधीरणीया. तस्मात्स्वविषयत्वं ज्ञाने सांवृतमेव वक्तव्यमिति परविषयत्वमपि तथैव, स्ववच्च परोऽपि सांवृत एव नत्वलीक इति. न व्यवहारविरोधः। तदुक्तं लङ्कावतारे—

केशाण्डुकं यथा मिथ्या गृह्यते तैमिरैर्जनैः।
तथा भावविकल्पोऽयं मिथ्या बालैर्विकल्प्यते ॥इति॥

अतएव शून्यत्वं कालसम्बन्धित्वनियतं वेदान्त्यभिमतं मिथ्यात्वमेवेति शारदायां तत्र तत्रोपापीपदाम। अतएव आत्मतत्त्वविवेके प्रपञ्चस्य विचारासहत्वसाधकप्रमाणादेर्विचारासहत्वं न वेति विकल्प्य द्वितीये तत्रैव विचारासहत्वसाधकत्वेनाभिमतानां युक्तीनां व्यभिचारः, आद्ये तु भवदीयविचारस्य भीतविचारकल्पत्वप्रसङ्गः, तथाहि—केन चिद्भीतेन राजद्वारि द्विरदमवलोक्य विकल्पितम्, किमयमन्धकारो मूलकमत्ति, आहोस्विज्जलवाहो बलाकावान् वर्षति गर्जति च, यद्वा बान्धवोऽयम् 'राजद्वारे श्मशाने च यस्तिष्ठति स बान्धव' इति परमाचार्यवचनात्, अथवा येऽयं भूमौ दृश्यते तस्य च्छायेति, दूषितं च, नाद्यः, तस्य शूर्पयुगलप्रस्फोटनाभावात्, न द्वितीयः, तस्य स्तम्भचतुष्टयाभावात्, न तृतीयः, तस्य लगुडभ्रामणाभावात्, न चतुर्थः, तस्य नरशिरःशतोद्गिरणाभावात्, ततो न किञ्चिदेतदिति। किमेतावता द्विपस्वरूपं निवर्तत इत्युपहसतामुदयनाचार्याणामनिर्वाच्यवादहृदयानभिज्ञतां ज्ञापयितुं तदभिज्ञानामपि वा तेषां द्वैताभिनिवेशमात्रं द्योतयितुं द्वैताभिनिवेशशून्यानामपि वा तेषां द्वैतवादपरिष्करणस्यादृष्टवशात्प्राप्तौ स्वकर्तव्यनिर्वाहमात्रपरतां सूचयितुं खण्डनोपक्रमे एव शून्यवादे सांवृतसतोऽपि तत्तदाभासलक्षणानाक्रान्तस्य प्रमाणादेः साधकता समर्थिता।

ननु शून्यत्वं शून्यं न वा, आद्ये प्रपञ्चस्याशून्यत्वप्रसङ्गः, आत्माश्रयश्च, द्वितीये तु सर्वं शून्यमिति सिद्धान्तव्याकोपः, तदनादरेऽपि संविदोऽपि मिथ्यात्वे कथमशून्यसिद्धिः, विषयविषयिभावस्य मिथ्यात्वे संविदशून्ययोरपि तथात्वस्यौचित्यावर्जितत्वादिति चेन्न, शून्यताया अपि शून्यत्वात्, आत्माश्रयस्यानिर्वाच्यत्वपोषकत्वात्। अतएव शरीरगतदोषापनयसार्यौषधस्यापि यथापसारणं सुखावहमन्यथा ग्लान्यापत्तेः. एवं शून्यताया अपि भवान्वरवारिकायाः वारणमावश्यकमेवेति दृष्टान्ताभिधानपुरस्सरं

यद्यशून्यं भवेत्किञ्चिदस्याच्छून्यमिति किञ्चन।
न किंचिदस्त्यशून्यं च कुतः शून्यं भविष्यति ॥

इत्यत्र माध्यमिकवृत्तावुक्तम्। न चैवं प्रपञ्चस्याशून्यत्वप्रसङ्गः; निषेध्यतावच्छेदकस्य विषयत्वस्य प्रपञ्चशून्यतोभयसाधारण्येन तथा प्रसङ्गासम्भवादिति वेदान्तिवदेव समाधेयत्वात्, प्रक्रियादशायां सर्वत्रैव सांवृतसत्त्वोपगमेन समसत्ताकयोरपि स्वाप्नभावाभावयोरिव सांवृतसत्यत्वशून्यत्वयोरविरोधस्य तद्वदेव मथापि सुवचत्वाच्च। तर्हि शून्यतायाः सांवृतत्वमेव, तथा च मूले कुठाराघातः, उक्तं हि सौगतैः—

"द्वे सत्ये समुपाश्रित्य बुद्धानां धर्मदेशना।
लोके संवृतिसत्यञ्च सत्यञ्च परमार्थतः" ॥इति॥

"परमार्थमजरममरमप्रपञ्चं निर्वाणं शून्यतास्वभाव" मिति च, उक्तञ्च भामत्यां "शून्यवादिनामपि शून्यताया एव पारमार्थिकत्वा"दिति चेन्नूनं सुकुमारमतिरसि, येन शून्यतायाः शून्यतोक्तिं मृषित्वापि सांवृतत्वोक्तिं न मृष्यसे, यैर्हि सौगतैर्निर्वाणस्यापि पारमार्थिकत्वाय दत्तो जलाञ्जलिः, तैः शून्यतायाः पारमार्थिकत्वं रक्षणीयमिति साहसम्. अतएव भावत्वे ध्वंसप्रतियोगितादेरभावत्वे च क्लेशाद्यात्मकप्रतियोगिदुर्निरूपताप्रयुक्तायाः स्वरूपतश्च दुर्निरूपताया आपत्तिमभिसन्धाय

"न चाभावोऽपि निर्वाणं कुत एवास्य भावना।
भावाभावपरामर्शक्षयो निर्वाणमुच्यते ॥" इति ॥

"निर्वाणमप्यायुष्मन् सुभूते! मायोपमं स्वप्नोपम"मिति च माध्यमिकग्रन्थेऽभिहितम्। हन्तैवं कथं वचसां विरोधं धुनीमहीति चेदित्थम्—यथा

"न निरोधो नचोत्पत्तिर्न बद्धो न च साधकः।
न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता ॥"

इति वदतां वेदान्तिनां वस्तुतो बन्धमोक्षव्यवस्थाविरहेऽपि—

"अविद्यास्तमयो मोक्षः सा च बन्ध उदाहृतः।
निवृत्तिरात्मा मोहस्य ज्ञातत्वेनोपलक्षितः ॥"

इत्यादिना मोक्षस्यात्मरूपतया पारमार्थिकत्वोक्तिः, तथा प्रतियोगिनोऽभावेन परमार्थतः शून्यताया अनिर्वचनीतामभिप्रेत्य सांवृतत्वेनासत्त्वेन वोक्ताया एव तस्याःसिद्धान्तान्तरनिरासनिरूपणदशायां तदपेक्षया कथञ्चिदादरणीयतामनुसृत्य शिष्यप्रवृत्तये पारमार्थिकत्वोक्तिः विनेयमत्यनुरोधेन नानाप्रकारैः देशनाशैली त्वनादिकालप्रचलिता न गर्हामर्हति। अयं तु विशेषः—यद्वेदान्तिमते कस्यचित्परमार्थतत्त्वस्य स्वीकृतत्वेन तस्य परिशेषावश्यम्भावेन तदात्मकतया मुक्तेः पारमार्थिकत्वोक्तिसम्भव एव। बन्धस्याताविकतया तु तत्प्रतियोगित्वेन रूपेण मुक्तेरप्यतात्त्विकताभिप्रायेण निषेधसम्भवोऽपि। सर्वथापि मुक्तित्वेन रूपेण मुक्तिं नास्त्येव। शून्यवादिमते तु कस्यचित्तत्त्वस्यापरिशेषितत्वेन न केनाप्यात्मना कस्यापि तात्त्विकत्वसम्भव इति शून्यताया यौक्तिकत्वरूपोत्कर्षमात्रविवक्षयैव पारमार्थिकत्वोक्तिः। तथाचाविचारत्वाविशेषेऽपि यथा वेदान्तिमते प्रातिभासिकत्वव्यावहारिकत्वविभागः, तथाऽत्र सांवृतसत्यत्वाविशेषेऽपि लौकिकालौकिकसांवृतसत्यत्वविभागः। इयांस्तु विशेषः—यद्वेदान्तिमते व्यवहारसिद्धस्य प्रातिभासिकापेक्षयोत्कर्षः, अत्र तु व्यवहारासिद्धस्यापि शून्यत्वस्य युक्तिमात्रसिद्धतयोत्कर्ष इति। एतेन "संवृतिसत्यव्यपेक्षया लोकस्येदंसत्याभिनिवेशस्य प्रतिपक्षभावेन मृषार्थता भावानां प्रतिपाद्यतेऽस्माभिः, नैव त्वार्याः कृतकार्याः किञ्चिदुपल-

भन्ते यन्मृषा वाऽमृषा वा स्या'दिति माध्यमिकवृत्त्युक्तं निर्व्यूढम्। एवञ्च नैरात्म्याभिनिवेशोऽप्यनुत्तमानामेव बौद्धानाम्, वस्तुतस्तु—

"बुद्धैर्नात्मा न चानात्मा कश्चिदित्यपि देशितः"

इत्येव मुख्यः सिद्धान्तः। अतएव शून्यता मध्यमेत्यप्युच्यते, यदाहुः—"आत्मेति काश्यप! अयमेकोऽन्तः, नैरात्म्यमित्ययं द्वितीयोऽन्तः। यदेतदनयोरन्तयोर्मध्यं तदरूप्यमनिदर्शनमप्रतिष्ठमनाभासमविज्ञप्तिकमनिकेतमित्युच्यते। काश्यप! मध्यमा प्रतिपद्धर्माणां भूतप्रत्यवेक्षे"ति। तथाच त्रिकालाबाध्यतत्त्वपर्यन्तमगत्यैव बौद्धानां चित्तसन्तोष इति शून्यतापि शून्यैवेति सर्वं शून्यमित्येव सिद्धान्तनिष्कर्षः। एवं स्थिते—

"अस्तित्वं ये तु पश्यन्ति नास्तित्वं चाल्पबुद्धयः।
भावानां ते न पश्यन्ति द्रष्टव्योपशमं शिवम्" ॥

इतिमाध्यमिकग्रन्थे शिवशब्दो दुःखाभावपर एवावगन्तव्यः, अतएवोत्तमसमाधौ दुःखाभाव एव नतु सुखमित्युक्तमभिधर्मकोषे। उपशमशब्दस्तूपेक्षासंविदतिरिक्तसंविदभावाभिप्रायेणेति न पौनरुक्त्यम्। शिवमित्यस्य शिवस्य लक्षणमित्यर्थकत्वे तु न पौनरुक्त्यशङ्कापि. ज्ञानज्ञेयनिवृत्तिस्वभावं सर्वकल्पनाजालरहितं द्रष्टव्योपशमं शिवलक्षणमिति तद्वृत्तावुक्तत्वात्। भामत्यां शून्यतायाः पारमार्थिकत्वोक्तिस्तु शून्यतायाः शून्यत्वेऽपि निषेधस्य परिशेषो ध्रौव्येणापततीति कस्यचित्परमार्थतत्त्वस्य शून्यवादिनोऽप्यभ्युपगम आवश्यक इति कृत्वाचिन्तया।

इदन्त्ववधेयम्—शून्यता शून्या नवेति विकल्प्य निरासो नित्यसमजातिलक्षणाक्रान्त इति तार्किकादिभिर्नेत्थं प्रत्यवस्थेयम्, अस्माकं तु किञ्चिदव्यवस्थापयतां श्रीगौतमेन गुरुणोद्गीर्णायां वितण्डायामुत्तमाधिकारितया तादृशरीत्या तत्र तत्र खण्डनेऽपि न दोषः, यदा तु कथाविशेषे तार्किकादिरपि वैतण्डिकतामालम्बते तदा तस्याप्यनिर्वाच्यवादिकार्यकारित्वेन तदनुचरत्वमेवापद्यते इति।

तदित्थं—

"आकारसहिता बुद्धिर्योगाचारस्य सम्मता।
केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः" ॥

इत्यपि निरूपितप्रायाभिप्रायं मन्तव्यम्। तथाहि—आकारसहिता = पारमार्थिकाकारसहिता केवलां = सांवृताकारसद्भावेऽपि परमार्थत आकाररहिताम्, विषयविषयिभावस्यैकत्रापि विचारासहत्वस्योक्तत्वात्। स्वस्थां = वस्तुगत्या स्वविषयत्वाभावेऽपि सांवृतस्वविषयत्ववतीम्, एतेनैवाभिप्रायेणास्माभिः शारदायां स्वप्रकाशवादे शून्यवादिमतेऽपि ज्ञानस्य स्वप्रकाशत्वमवादि। परमार्थतस्तदभावाभिप्रायेण तु क्रियाकर्मविरोधादिना तन्मते कचिद्ग्रन्थे तन्निरासोऽपि नासङ्गतः। बाह्यार्थानङ्गीकारमात्राभिप्रायेण तु क्वचित् ज्ञानपारमार्थिकत्ववादियोगाचारस्यापि शून्यवादित्वोल्लेख इति विवेक्तव्यम्। उक्तश्लोके ईदृशसंविदभिधानमपि शून्यवादिमते संसारदशायामेव न तु मोक्षदशायाम्, प्रदीपनिर्वाणवदात्महानरूपमोक्षस्य तन्मते तदीयनिबन्धेषु सुप्रतीतत्वात्। उक्तञ्च लङ्कावतारे भगवता—

"यथा न भावो नाभावो गगनं कथ्यते मया।
आलयं हि तथा काये भावाभावविवर्जितम् ॥

लोकायतमिदं सर्वं यत्तीर्थ्यैर्देश्यते मृषा ।
कार्यकारणसद्दृष्ट्या स्वसिद्धान्तो न विद्यते ॥
अहमेकः स्वसिद्धान्तं कार्यकारणवर्जितम् ।
दिशामि शिष्यवर्गस्य लोकायतविवर्जितम् ॥
चित्तमात्रं न दृश्योऽस्ति द्विधा चित्तं हि दृश्यते ।
ग्राह्यग्राहकभावेन शाश्वतोच्छेदवर्जितम् ।
यावत्प्रवर्तते चित्तं तावल्लोकायतं भवेत् ॥" इति ।

आलयं=आलयविज्ञानम् । कार्यकारणवर्जितमित्यनेन निर्वक्ष्यमाणोऽज्ञातवादापरपर्यायः प्रतीत्यसमुत्पाद आसूत्रितः । चित्तमात्रमिति । वस्तुतो न परविषयकं नापि स्वविषयकमिति मात्रपदस्वरसः । एतेन निरुक्तकैवल्यस्वस्थतयोरासूत्रणम् । तदाह न दृश्यइत्यादिना । द्विधेत्यस्य व्याख्यानं ग्राह्यग्राहकभावेनेति । दृश्यतेइति । यत एव केवलं दृश्यते, न तु विचारेणाप्येवं व्यवस्थापयितुं शक्यते, अत एव शाश्वतोच्छेदवर्जितम् । न नित्यं नाप्यनित्यमित्यनिर्वाच्यम्, अतएव क्षणिकत्वाक्षणिकत्वाभ्यामनिर्वाच्यत्वं प्रागावेदितम् । एवञ्च मोक्षदशायां संविदनवस्थानं दृश्यत्वलिङ्गेनैव ज्ञानेऽपि शून्यत्वस्य साधनं च सूचितम् । नचात्मनो वेदान्त्यभिमतस्यादृश्यत्वेन तत्र मिथ्यात्वासिद्धिरिति वाच्यम्, अदृश्यस्य तस्याप्रामाणिकताया निष्प्रयोजनतायाश्च वक्ष्यमाणत्वात् । विषयत्वमात्रं च लिङ्गं दृङ्निवेशे प्रयोजनाभावात् । एवञ्च सत्त्वेन प्रतीत्यर्हं न परमार्थसत् विषयत्वात्, बाधयोग्यत्वाच्च, नाप्यसत्, कालसम्बन्धात् . तुच्छस्य पक्षतावच्छेदकानालिङ्गितत्वान्न प्रथमे सिद्धसाधनम्, बाधयोग्यत्वस्य च नासिद्धिः, असत्त्वाभावसाध्येऽपि च न बाधासिद्धी, विषयो न सदसन् विरोधात्, निषेधश्चासत्त्वख्यात्युपनीतस्येति द्रष्टव्यम्, विषयस्तातिरिक्तत्वेन सदसद्भेदयोरभाववान् सदसद्भेदाभ्यां निरूपणनर्हत्वादिति शून्यत्वसिद्धिः । पूर्वेष्वपि साध्येषु परमार्थसत्त्वादिनाऽनिर्वाच्यत्वस्य यथासम्भवं हेतुता द्रष्टव्या ।एतेन च कोटिचतुष्टयविनिर्मुक्तत्वमपि दर्शितम्, यथा च ज्ञयांशे फलत्वे वेदान्तिनामप्यत्र सम्प्रतिपत्तिस्तथाऽनिर्वाच्यत्वनिरुक्तौ शारदायां दर्शितम् । अत्र च स्वरूपासिद्धिशङ्कानिरासाय शारदासमेतं खण्डनमेवाखिलमवलोकनीयम् । वस्तुतस्तु परमतनिरासमुखेनैव शून्यतासाधनौचित्यं न तु तत्र लिङ्गोपन्यासोऽप्यमन्दप्रयोजनक इत्युक्तप्रायम् । तावल्लोकायतं भवेदिति । अस्मद्दृष्ट्या तार्किकादयोऽपि लोकायतप्राया एव, स्थूलदर्शित्वसाम्यात्, लोके विस्तृतत्वाच्च, सूक्ष्मदर्शिनां हि विरलतैव स्यात्, प्रमाणविचारे निपुणा अपि तार्किका न प्रमेयविचारणाचणा इति निश्चप्रचमिदं विद्वदपश्चिमानाम्, नव्यन्यायतत्त्वं तु गौरवलाघवकार्यकारणभावप्रतिबध्यप्रतिबन्धकभावप्रकारमुद्रासंसर्गमुद्रानिवेशेष्वेव समाप्तम् । विशिष्य चाखण्डोपाधिनिधिरेव कथमपि नव्यैरर्जितः, परन्तु वेधसाऽसावप्यनिर्वचनीयताऽवशिसात्कृतः कर्मविपाके आजन्मदरिद्रतया परिक्लृप्तेषु तार्किकेषु तत्स्वामित्वमनुचितमितिमत्या । अथवा प्रमाणानामपि स्वभावतोऽनिर्वाच्यतैवेति तत्पोषणायैवैतेऽवतीर्णा इति नोपालम्भो युक्तः प्रमोदाधायिनि जने, एतावता प्रयत्नेन निर्वचनेऽपि तदुक्तरीतिभिरेव दोषाणां जागरूकत्वात् । अद्य यावच्च न कोऽपि निर्वक्तुं शशाकेत्यग्रेऽपि कः शक्ष्यति । वस्तुस्वभावोल्लंघनस्याशक्यत्वात् । एतेनानिर्वचनीयवादिनमुद्दिश्य वदीयनिर्वचनाशक्त्यभिप्रायेण 'सोऽयं पवनतनयवार्तामुपश्रुत्य तत्स्पर्धया वानरानरः कियदपि दूरमुत्प्लुत्य महा-

णेव एव पतितः प्राह, अपार एवायमकूपारो मिथ्या रामायण'मिति तार्किकैः स्वोपहास एव कृत इति द्रष्टव्यम्, भवान् निर्वचनानि भङ्क्तुमप्रभुरित्यन्योऽपि न प्रभविष्यतीत्यस्य वक्तुमनौचित्यादित्यलमतिप्रपञ्चेन ।

कालसम्बन्धित्वे सति सर्वदेशकालवृत्त्यभावप्रतियोगित्वादिवच्छून्यत्वस्य लक्षणान्तरमपि द्रष्टव्यम् । यदाहुर्माध्यमिककारिकासु—

यः प्रतीत्यसमुत्पादः शून्यतां तां प्रचक्ष्महे ।
सा प्रज्ञप्तिरुपादाय प्रतिपत्सैव मध्यमा ॥ इति ॥

प्रतीत्यसमुत्पादः = स्वभावेनानुत्पादः, कारणसापेक्षत्वात्, उपादाय कारणानि प्रज्ञप्तिः = कारणापेक्षतयोत्पन्नत्वप्रतीतिः । मध्यमा प्रतिपदिति । यस्य हि स्वभावेनानुत्पत्तिस्तस्यास्तित्वाभावः, स्वभावेन चानुत्पन्नस्य विगमाभावान्नास्तित्वाभावः, अतो भावाभावान्तद्वयरहितत्वात्सर्वस्वभावानुत्पत्तिलक्षणा शून्यता मध्यमा प्रतिपत् = मध्यमामार्ग इति तद्व्याख्यातारः ।

अत्र कालसम्बन्धित्वे सत्युत्पन्नस्वभावत्वाभावो लक्षणम्, अन्यथाऽलीकेऽतिव्याप्तेः, नित्येऽपि न सा, तस्यालीकताया वक्ष्यमाणत्वाच्च । ननु विशेष्यदलेन किं विवक्षितम्, न तावज्जन्यतावच्छेदकधर्मराहित्यम्, घटत्वादेस्तादृशधर्मस्यापोहात्मकस्यान्यादृशस्य वा घटादौ सद्भावात । नापि निरपेक्षोत्पत्तिकत्वाभावः, प्रतियोग्यप्रसिद्धेः, सिद्धसाधनाच्च, अत एव न सापेक्षोत्पत्तिकत्वम्, नवोत्पत्तितादात्म्यानापन्नत्वम्, उत्पत्तेरपि कार्यत्वेन लक्ष्यतया तत्राव्याप्तेश्च, नापि यावत्सत्त्वमुत्पत्तिमत्त्वस्याभावः, मन्मते क्षणिकानभ्युपगमेन प्रतियोग्यप्रसिद्धेः, स्थिरत्वमादायार्थान्तराच्च, सिद्धसाधनाच्च, नाप्युत्पत्तिधर्मकत्वाभावः, उत्पादस्य भवताऽपि स्वीकारात्, अन्यथा प्रतीत्यसमुत्पादशब्दप्रयोगासङ्गतेरिति; मैवम्, पारमार्थिकत्वावच्छिन्नप्रतियोगिताककार्यत्वाभावस्य विवक्षितत्वात्, कार्यकारणतयैव प्रायो नित्यस्य साधनेन कार्यासिद्धौ न तत्सिद्धिसम्भवः, पारमार्थिकत्वञ्च मन्मतेऽप्रसिद्धमप्यसत्ख्यात्युपनीतं भासिष्यत इत्यदोषः । कार्यत्वसामान्याभाव एव वा विवक्षणीयः, स्वाप्नभावाभावादिन्यायेनोक्तेन कार्यत्वेन सांवृतेन स्वीकृतेनापि विरोधाभावात । प्रतीत्येति ल्यबन्तेन तु कारणसापेक्षत्वोक्तिः सांवृतत्वव्यक्तीकरणाय, उत्पत्तौ ज्ञप्तौ वा सापेक्षमात्रस्य सांवृतत्वात् । एवञ्च सांवृतोत्पत्तिकत्वमपि लक्षणान्तरं सम्भवति ।

अथ कथमेतदवधार्यमिति चेदत्र गीतं सौगतैः—

"अन्यत्प्रतीत्य यदि नाम परोऽभविष्य-
ज्जायेत तर्हि बहुलः शिखिनोऽन्धकारः ।
सर्वस्य जन्म च भवेत्खलु सर्वतश्च
तुल्यं परत्वमखिले जनकेऽपि यस्मात् ॥"इति

अयम्भावः—घटः स्वस्माद्वोत्पद्यते परस्माद्वा, आद्ये स्वस्य पूर्वं सत्त्वासत्त्वाभ्यां व्याघातः । द्वितीये तु परत्वस्य तन्त्वादिसाधारण्येन ततोऽपि घटोत्पत्त्यापत्तिः । न च यत उत्पत्तिरनुभूयते तत एवोत्पद्यते; यत्तत्पदार्थस्यैव पृच्छ्यमानत्वात् । तत्किमन्धोऽसि ? हन्त यद्यहमन्धस्तदा भवतोऽन्धतमत्वमेवापद्यते, बाह्यदृष्टिवैधुर्यापेक्षयाऽन्तर्दृष्टिवैधुर्यस्याधिकदोषत्वात् । तथाहि—यस्य यत्कारणं ततस्तदुत्पद्यत इति भवतोऽभिप्रायः; यदा च कार्यकारणभाव एवाक्षिप्यते तदा स कथं सिद्धवदुद्देश्यकोटौ निवेशयितुं शक्यते । न च यद्यन्निरूपितकारणतया लोक-

सिद्ध इत्युद्देश्याशयः; तस्य सांवृतसाधारण्यात्। प्रमितत्वान्तर्भावे च कारणत्वस्यैव निरूपणीयत्वात्, अन्यथा कथं तदीयं प्रमात्वमवधारणीयम्। तत्र च नैयत्यादिघटितलक्षणानां चतुर्थे दुर्निरूपतायाः उक्तत्वेन नव्यतार्किकैरपि च तस्याः स्वीकृतत्वेन स्वरूपसम्बन्धविशेषरूपतायाश्चाननुगमापादकत्वेन स्वं न स्वीयमित्यनुभवबाधितत्वेन चासम्भवेन पदार्थान्तरत्ववाचोयुक्तेश्च लक्षणाभिधानविकलायाः कार्याक्षमत्वेन प्रतीतिविशेषसाक्षिकतया निरूपणस्य च प्रतीतौ विशेषस्यैव बुभुत्स्यमानतयाऽन्योन्याश्रयप्रसञ्जकत्वेन विशेषसत्त्वसमर्थनमन्तरेण प्रतीतेः प्रमात्वेनानिर्णीतायाः कूटसाक्षित्वेन चानिर्वाचनीयत्वाचरणचुम्बनातिरिक्तगतेरभावात्। अधिकं तु चतुर्थे सम्बन्धखण्डने कारणताखण्डने च शारदायां दर्शनीयम्। चेतनमनपेक्ष्यैव प्रतिक्षणं तत्तत्कुर्वद्रूपत्वविशिष्टकारणकूटाधीनोत्पत्तिस्वभावत्वं प्रतीत्यसमुत्पाद इति तु "इदं प्रत्ययफल" मिति बुद्धोक्तेरुत्थितं सौत्रान्तिकप्रस्थानीयं न तु शून्यताप्रस्थानीयमित्युक्तमविसंवादित्वखण्डनशारदायाम्।

अथैवं सर्वशून्यत्वे आत्महानमेव मोक्षः स्यात्, पुरुषार्थत्वाभावात्तु तन्न सङ्गच्छत इति चेन्न, दुःखं तावत्सर्वोऽपि जिहासति येन केनचिदुपायेन, अतएवाप्रतिसमाधेयव्याधिभिर्देहात्माभिमानिभिर्जलादिप्रवेशेन प्राणत्यागोऽर्थ्यते, परन्तु जन्मान्तरेऽपि क्लेशोपनिपातावश्यम्भावेन प्राणत्यागो नात्यन्तिक उपायोऽपि त्वात्मनाश एव, यदाह—

> सत्यात्मनि परसञ्ज्ञा स्वपरविभागात्परिग्रहद्वेषौ।
> अनयोः सम्प्रतिबद्धाः सर्वे दोषाः प्रजायन्ते ॥ इति ॥

दोषाणां क्लेशमूलत्वं तु सुविदितमेव। एवञ्च दुःखोपप्लुतात्मसद्भावापेक्षयाऽऽत्मनाश एव श्रेयानिति कथं न पुरुषार्थः। तार्किकैरपि सुखविरहेऽपि दुःखहानेः पुरुषार्थत्वं समर्थ्यत एव, परन्तु प्रागभावासहवृत्तेर्युगपदशेषविशेषगुणनिवृत्तेर्धर्मिनिवृत्तिनान्तरीयकत्वदर्शनेन तेषामप्यात्महानमापद्यत इति साम्यमेवेत्यद्वैतवादिनो वदन्ति, तदनापत्तावपि वाऽस्फुरद्रूपस्तदाऽऽत्मा सन्नप्यसत्सम एवेति नात्मसद्भावो मुक्तेः पुरुषार्थतायामुपयुज्यते। एवं च सत्येव धर्मिणि बन्धविश्लेषो मोक्षपदवाच्य इत्यप्यगत्या त्याज्यम्, अप्रयोजकश्च।

अथ भवत्वेवम्, तथापि संविदः क्षणिकत्वेन स्वभावत एव नाशसम्भवेन मोक्षार्थं प्रयत्नवैयर्थ्यमेव, न च सन्तानस्य विनाशाय प्रयत्यते, तस्यातिरिक्तत्वाभावात्, अन्यथा सन्तानिनाशेन तन्नाशोऽपि कुत इति तन्नित्यत्वमपि स्यात्, नित्यत्वं च स्ववृत्त्यवृत्तिभ्यां भवद्भिरपलप्यते, आद्ये आत्माश्रयात्, द्वितीये च ध्वंसप्रतियोगित्वाभावरूपनित्यत्वे कालानवच्छिन्ने कालावच्छिन्नत्वरूपानित्यत्वप्रसक्तौ व्याघातादिति चेत्, सत्यम्, सन्तानस्य सन्तानिभिन्नाभिन्नत्वाभ्यां दुर्वचतया सांवृतस्यैव विनाशो मोक्ष इति स्वीकारात्, उक्तविकल्पपराहतिस्तु सांवृतत्वं पुष्णातीति न दोषः। बन्धस्य दुर्निरूपत्वादेव तु बन्धमोक्षव्यवस्था नास्तीयत इत्यवादिष्म।

यत्तु निरसाक्षिकबाधसिद्ध्यसम्भवेन नित्यस्य साक्षिणोऽभ्युपगम आवश्यकः, अन्यथा तस्यापि बाध्यत्वे तद्बाधसिद्धये साक्ष्यन्तरस्वीकारेऽनवस्थाप्रसक्तिरितिवेदान्तिनोच्यते, तत्रेत्थं समाधेयम्, आनिर्वाणं ज्ञानधारा तावदभ्युपेयत एव, निर्वाणकाले तु यद्यपि नास्ति ज्ञानमिति नान्तिमज्ञाननाशप्रत्यक्षसम्भवः, तथापि न वयं योगजधर्मप्रभावानभ्युपगन्तारो येन भाविप्रत्यक्षं न भवेत्। नवा चार्वाका इव प्रत्यक्षमात्रोपजीविनोऽपि तु संवृतिदशायामनुमानोपजीविनो

ऽपि, अनुमानञ्चेदानीमपि सन्ततित्वलिङ्गकमुच्छेदसाध्यकं शून्यत्वसाध्यकं वा विचारासहत्वादिलिङ्गकं सम्भवत्येव, अनुमितेश्च स्वविषयकत्वं सांवृतमनुमन्यत एवेति न तदनुमानायापि साक्ष्यपेक्षा, मुक्तिकाले च बाधभानं किं किञ्चित्फलं प्रसूते येन तदा तदर्थं साक्ष्यपेक्ष्येतेति भवानेव प्रब्रूताम्। एतेन विशुद्धज्ञानसन्तानोदयो मोक्ष इत्यप्यपास्तप्रायम्।

यदपि निरधिष्ठानकभ्रमो न दृष्टचर इति सदधिष्ठानमवश्यमङ्गीकार्यमिति वेदान्तिन आहुस्तत्रापीत्थं नः प्रतिभाति, अधिष्ठानं हि स्थूलदृशां तावद्रजतादेः शुक्त्यादिकम्, वेदान्तवासनावासितमतीनां तु परमार्थसच्चैतन्यम्, तत्राद्यं सांवृतं न ममापि दण्डवारितम्, अधिकसत्ताकत्वं तु रजतापेक्षया तस्य दृष्टिसृष्टिवादे भवतां निष्कृष्टमतेऽपि नास्ति येन शुक्तेरप्यधिष्ठानं तदपेक्षयाऽधिकसत्ताकं सिद्ध्यत् त्रिकालाबाध्यत्वे पर्यवस्येत्। किञ्च सांवृतत्वेऽपि व्यवहारानुरोधाच्छुक्तेर्यदि रजतापेक्षयाऽधिकसत्ताकत्वं स्वीक्रियेत, तावतापि शून्यत्वाभङ्गात्, अन्यथा भवतोऽप्यनिष्टप्रसङ्गात्, शून्यत्वमिथ्यात्वयोरैक्यात्, तदापि दृष्टत्वादेव शुक्तेरधिकसत्ताकत्वं न तु तस्याधिष्ठानतायामप्युपयोगः, उपयोगे वा द्वितीयकल्प एवान्तर्भावः। द्वितीयस्य तु किमर्थमपेक्षेति चर्च्यताम्। तदभावे सत्तानुवेधो न स्यादिति चेत्स्यादेवं यद्यस्माभिर्याचितमण्डनन्यायेन रजतादौ शुक्त्यादौ च सत्ताऽनुमन्येत, यदा तु तेषां सांवृतमेव सत्त्वं स्वकीयं स्वीकुर्मस्तदा काऽपेक्षाऽधिष्ठानस्य भगवतः। हन्त यदि स्वकीयं सत्त्वं तदा कथं सांवृतम्, तद्वति तत्प्रकारकज्ञानस्य संवृतिरूपत्वाभावात्, यदि तु सांवृतं तदा कथं स्वकीयमिति चेदुस्स्वापमिवैतत्, तथाहि—भवतां मिथ्यात्वं यदि प्रपञ्चस्य स्वकीयम्, तदा कथं प्रपञ्चे तदमिथ्या, यदि तु मिथ्या तदा कथं स्वकीयमिति साम्यात्, तस्मात्स्वकीयमपि सत्त्वं बाध्यत्वात्सांवृतमिति नासुन्दरम्, अतएव भवतां मते शुक्तौ रजतस्योत्पत्तावपि बाध्यत्वेनैव तस्य मिथ्यात्वम्, अन्यथा रजतवति रजतप्रकारकत्वेन तज्ज्ञानस्य भ्रमत्वमपि दुर्लभं भवेदिति रजतस्य मिथ्यात्वं दूरोत्सारितं स्यात्, तस्माद्बाध्यविषयकत्वेन भ्रमत्वं भवतोऽनुमतमेवेति नेयमपूर्वा सृतिः।

अथास्तामेतदपि, तथाप्यबाध्यस्य कस्यचिदभावे बाध्यत्वव्यवहारोऽपि कथम्? प्रमितेरभावे च संवृतिरपि किमपेक्ष्येति चेत्प्रत्युक्तमेतत्, अशून्यस्याभावेन शून्यत्वमपि न वस्तुतः किञ्चित्, एवं संवृतिरपि। बाध्यत्वं च निरुक्तं शून्यत्वमेव, न त्वधिष्ठानतत्त्वज्ञानबोध्याभावप्रतियोगित्वम्। व्यवहारस्त्वसत्ख्यात्यापि सम्भवति। तथाह्यसत्ख्यातिर्द्वेधा, मिथ्यार्थविवक्षयाऽस्वच्छन्दप्रयोगेऽयं घट इत्यादावाद्या, अलीकविवक्षया तत्प्रयोगे तु भवदभ्युपगतविकल्पवृत्तिस्थानीया द्वितीया, प्रकृते त्वबाध्यांशे द्वितीया बाध्यांशे प्रथमेति विवेकः। ननु मिथ्याभूतस्यापि कालसम्बन्धित्वोपगमेन व्यवहार्यत्वसम्भवेन स्यादाद्या, द्वितीया तु कथङ्कारम्, अलीकस्याव्यवहार्यत्वेन तत्र सङ्केतग्रहासम्भवाच्छब्दविषयत्वानुपपत्तेः, यदाह 'समयसीमनिक्रमत्वाच्छब्दस्ये'ति, समयसीमोल्लङ्घने तु शशविषाणादिशब्दात्कूर्मरोमादिविकल्पस्याप्युदयप्रसङ्गात्, शब्दस्वाभाव्यात्त्वतिप्रसङ्गवारणे व्युत्पन्नवदव्युत्पन्नस्यापि तथाविधविकल्पोदयापातादिति चेन्न, यथा भवन्नये पदेषु शक्तिग्रह एव विशिष्टवाक्यार्थबोधमाधत्ते, न तु वाक्यस्यापि विशिष्टार्थे पृथक् शक्तिग्रहः, तथा प्रत्येकं शशादिशब्दानामेव शक्तिग्रहोऽसदलीकबोधमाधत्ताम्, अन्यथा 'शशविषाणात्कूर्मरोम भिन्नम्' 'गवि शशविषाणं नास्ती'त्यादिप्रतीतेरनुभवसिद्धाया भवताऽपलपनीयत्वप्रसङ्गात्, अलीके न व्यवहार्यत्वमिति वदतापि भवताऽली-

के व्यवहार्यत्वनिषेधस्याशक्यत्वेनान्यथाऽलीके व्यवहार्यत्वोपगमप्रसङ्गेनानलीके एव तन्निषेधे स्वसिद्धान्ताक्षेपकत्वप्रसङ्गाच्च, तथा च यथा यथाऽलीके व्यवहार्यत्वनिषेधस्तथैव तथैव तस्य व्यवहार्यत्वप्रसङ्ग इति चित्रम्। व्यवहार्यत्वव्यापकं रूपत्वमित्यभिधानेनापि फलतोऽलीके व्यवहार्यत्वनिषेधबुद्धेरवश्योपेयत्वात्। ईदृशस्थलेष्वनुभवापलापं कुसृष्टिकल्पनाञ्चापेक्ष्याखण्डालीकभानोपगमेऽनुभवानुरोधिव्यवहारसौकर्यस्यैव विनिगमकत्वात्। एवञ्चालीकेतिशब्दस्यापि शक्तिग्रहोपपादनमावयोः समानमेव। बौद्धार्थे च शक्तिग्रहोऽन्यत्र सुप्रतीत एवेति नेह वितन्यते। प्रमाणेनासदंशानुल्लेखेऽसत्ख्यातित्वासिद्धेस्तदुल्लेखे तु प्रमाणस्याप्रमाणताया असतो वा सत्त्वस्यापत्तेरिति तु न सत्, संसर्गांशेऽसत्ख्यातेःप्राचीनतार्किकैरपि स्वीकृतत्वेन तद्विषयकप्रमाणेऽप्युक्तपर्यनुयोगसाम्यात्, ज्ञानपारतन्त्र्येणासद्भानं प्रमाणेऽपीति समाधानं तु समानम्, संसर्गस्य सत्त्वेऽपि व्यधिकरणप्रकारकत्वेनैव भ्रमत्वमिति नव्यमतं तु बहुशः क्षुण्णं शारदायाम्। वस्तुतस्तु मन्मतेऽसत्ख्यातेरपि सांवृतत्वेन तत्र प्रमाणानुयोगोऽनाकलितपरसिद्धान्तस्यैवेति भवत्स्वेव ;तादृशपर्यनुयोगनिराकरणभर इति। केचित्तु–निरुपाख्यादिपदानामलीकेऽनुभावकत्वाख्यशक्तिविरहेऽप्यनुभवरूपमलीकविषयकं विकल्पं प्रति योगेन लक्षणया सङ्केतविशेषेण वाऽलीकोपस्थितिद्वारा जनकत्वमावश्यकम्, तादृशविकल्पस्य साक्षिसिद्धत्वात्, साक्षी च भ्रमप्रमाबहिर्भूत इति नासत्ख्यातित्वासिद्धिर्नवा प्रमाणस्याप्रमाणत्वप्रसङ्गः, नच निर्धर्मकत्वादलीके निरुपाख्यादिपदानां योगादिवृत्त्यसम्भव इति वाच्यम्, तस्येतरधर्मशून्यत्वेऽप्यभावस्य विकल्पविषयत्वादेश्च धर्मस्य तत्र स्वीकारेण 'उपाख्याया अभावो निरुपाख्य'मित्यादियोगेन वाचकशब्दरूपोपाख्याविरहादेरलीके साक्षिणा प्रसिद्धयोक्तविरहाश्रयालीकोपस्थितिसम्भवेन लक्षणासम्भवात्, 'अनेन पदेनालीकं बोध्य' मिति सङ्केतसम्भवाच्चेति–वदन्ति। अस्या रीतेरादर्तव्यत्वे शून्यवादे परमतसिद्धसाक्ष्यनभ्युपगमेऽप्यनुभववैषम्यायोगेन भ्रमप्रमाबहिर्भूतक्षणिकज्ञानपरिकल्पनयैव निर्वहणीयम्, युगपन्नानाज्ञानसम्भवस्य विज्ञानवादे उदीरितत्वादिति। तस्माच्छून्यतैवाद्वया विजयत इति शिवम्। इति दर्शनसर्वस्वेऽनिर्वचनीयतावादे शून्यवादपरिष्कारप्रकारः।



## स्वातन्त्र्यवादः।

अथोक्तवादद्वये ज्ञानज्ञेयाभेदातिरिक्तांशं निराकर्तुं नित्यं स्फुरणतत्त्वं च वेदान्तिसाधारण्येन व्यवस्थापयितुं काश्मीरिकशैवाद्वैतिमतमनुसृत्य स्वातन्त्र्यवादः प्रस्तूयते।

विज्ञानवादोक्तरीत्या ज्ञानस्य स्वातिरिक्ताविषयकत्वव्यवस्थितौ यदि तस्य क्षणिकत्वं तदा घटमहमज्ञासिषमित्यादिरनुभवो नानुरुध्येत, नह्ययं भ्रमो बाधकाभावात्, न च पूर्वकालीनस्य ज्ञानस्यैतत्कालीनज्ञानभिन्नत्वे तद्विषयत्वसम्भवः। यत्तु—स्थाय्यात्मोपगमेऽपि पूर्वोपदर्शितरीत्या स्वभावविशेषालम्बनध्रौव्येण स्वकारणसामर्थ्यविशेषकल्पनयैव तादृशाकार उपपादनीय इति; तत्सत्यम्, स्वभावविशेषस्य सर्वसाधारणस्य स्वातन्त्र्यनाम्नाऽस्माभिरपि समर्थयिष्यमाणत्वात्, परन्त्वसौ स्वभावविशेषः क्षणिकस्य ज्ञानस्य वा स्थायिनो वेति विमर्शे द्वितीय एव कल्पो युक्तः, तत्र स्वभावविशेषस्याप्येकस्यैव कल्पनीयत्वेन लाघवात्, अन्यथा क्षणिकज्ञानस्यानुत्पत्तिदशायां तादृशस्वभावविशेषाणामनन्तानां कल्पनम्, पूर्वपूर्वज्ञानेषु च तदीयानन्तसम्बन्धकल्पनम्, तादृशस्वभावानां पूर्वपूर्वज्ञानेषु सत्त्वेऽपि घटमहमज्ञासिषमित्यादिरनुभवः कुतो नाजनिष्टेति पर्यनुयोगवारणाय तदुत्पादविरोधिस्वभावानामनन्तानां कल्पनम्, परस्परविरुद्धस्वभावानाञ्च सामानाधिकरण्यकल्पनम्, सामानाधिकरण्ये च सति विरोध एव नेति पुनरप्युक्तपर्यनुयोगवारणायानन्तस्वभावान्तरकल्पनम्, पुनश्चैवम्, उक्तज्ञानोत्पादविरोधिस्वभावविशेषधारोच्छेदिस्वभावविशेषस्य चोक्तज्ञानजनकज्ञाने कल्पनम्, पुनश्च तस्यामेव धारायां कालान्तरे उत्पत्स्यमानोक्तज्ञानजातीयज्ञाननिर्वाहाय तदुत्पादानुकूलतद्विरोधिस्वभावधाराकल्पनं चेत्यादि ब्रूहि मध्यस्थतामास्थाय कस्य प्रमाणस्य गोचरो येन नित्यामेकामनुभूतिं नातिष्ठसे। नित्ये ह्येस्मिन् स्वभावे सर्वदैकाकारभानप्रसङ्गभङ्गायापर्यनुयोज्यत्वमपि कल्प्येत, अनित्यानां तु जीवनमपि यदा परोपजीवकम्, तदा प्रथमपर्यनुयोज्यत्वम्। एतावता च तत्तत्स्वभावविशेषस्य तत्तज्ज्ञानात्मकत्वेऽपि बाधकमुक्तप्रायम्, पूर्वज्ञानेनेदानीमेवेदृशं ज्ञानं कुतो जनितमित्यत्र स्वभावविशेषेणोत्तरस्य पूर्वज्ञानत्वे एव पर्यवसानेनानुत्तरत्वाच्च। तदित्थम्—

> "एवमन्योन्यभिन्नानामपरस्परवेदिनाम्।
> ज्ञानानामनुसन्धानजन्मा नश्येज्जनस्थितिः॥
> नचेदन्तः कृतानन्तविश्वरूपो महेश्वरः।
> स्यादेकश्चिद्वपुर्ज्ञानस्मृत्यपोहनशक्तिमान्॥"

इति यदुक्तमुत्पलदेवैस्तदुपपादितम्। अयं घट इत्यादिर्ज्ञानशक्तिः, घटमहमज्ञासिषमित्यादिः स्मृतिशक्तिः, व्यावृत्तेर्वस्तुतोऽभावेन तदवगाहिनी विकल्पात्मिकाऽपोहनशक्तिरिति द्रष्टव्यम्।

अथ नित्यत्वे प्रागुक्तस्य बाधकस्य का गतिरिति चेत्, दुर्गतिरेव, तादृशचिदसिद्धौ बाधकस्यैवोक्तरीत्याऽसिद्धेः, तत्सिद्धौ तु बाधकं तस्याः किं करिष्यति, प्रत्युत तदधीनसिद्धिकतया तदनुकूलतयैव वर्त्स्यति। न च बाधकज्ञानं सामग्र्यभावादेव पूर्वमनुत्पन्नमिति समाधानसम्भव इति वाच्यम्। सामग्र्या अपि ज्ञानात्मकतया पूर्वमपाद्यत्वात्। एवं शून्यवादेऽपि शक्यं पर्यनुयोक्तुम्, तेन शून्यतायाः असाधनीयत्वेऽपि परमतनिरासमुखेनार्थिकसिद्धेरवश्योपेयत्वेन तत्र पर्यनुयोगस्य दुर्वारत्वात्। तेन सांवृतसामग्रीसद्भावोऽनुमन्तव्य इति चेदेवदेव

कुतः ? व्यवहारानुरोधादिति चेन्नन्वस्माभिरपि पूर्वज्ञानानुसन्धानाधीनव्यवहारानुरोधादेव नित्यं स्फुरणमास्थितमिति किन्न पश्यसि । न च तथाप्यविनिगम्यत्वम्; लाघवस्य विनिगमकत्वात्. न च क्षणिकैरपि निर्वाहसम्भवः, क्षणिकत्वस्यैवोक्तरीत्या निर्वहणासम्भवे क्षणिकैर्निर्वाहसम्भवोक्तेरुन्मत्तप्रलापत्वात् । नित्यत्वस्यापि निर्वहणासम्भवे नित्येनापि निर्वाहसम्भवाभिधानमुन्मत्तकृत्यमेवेति चेत्, निर्धर्मकतायामेव तात्पर्यात् । तत्किमस्थिरवृत्तिज्ञानानुपगम एव ? तदुपगमस्य प्रक्रियामात्रत्वात् । निर्वाहकत्वमपि धर्मः प्रक्रियापतित एव, कथं च निर्धर्मकेऽत्राविति चेद्वस्तुतो निर्वाहकत्वस्याप्यनिर्वाह्यत्वात् ।

एवञ्च क्षणिकं वा कतिपयकालावस्थायिनं वा कालत्रयावच्छिन्नं वा भवदुक्तं बाधकं बाधताम्, को वारयति, कालानवच्छिन्नं तु कथं बाधताम् । हन्तैवमलीकत्वं प्रसक्तमिति चेदद्धा यदि कालानवच्छिन्नमलीकं तदा कालोऽप्यात्माश्रयभिया कालानवच्छिन्नो मन्तव्य इति सोऽप्यलीक इत्यलीकानवच्छिन्नमलीकमलीकावच्छिन्नं तु परमार्थसदित्यर्थकं वाक्यं प्रवाणः श्लाघनीयप्रज्ञो भवान् । तस्मात्सूर्यादिसञ्चारात्मककालस्तावच्चिदात्मकमहाकालेनानुमाणितत्वेनावच्छिन्नः. तादृशमहाकालस्तु न केनापि कालेनावच्छिन्न इति धर्मिग्राहकमानबाधेन नोक्तकल्पनोन्मेषोऽपि । तदिदमभिप्रेत्योक्तं खण्डने "कालानवच्छेदमादाय च नित्यतोपचार" इति ।

किञ्च भवदीयवाक्यघटकीभूतकालपदार्थश्चिद्वाऽचिद्वा, न द्वितीयोऽपसिद्धान्तात् । नाद्यः, तथासति चिदनवच्छिन्नत्वस्य चिदतादात्म्ये पर्यवसन्नत्वेन तस्य च चिति मयाऽप्यनभ्युपगतत्वेन कथमलीकत्वशङ्कापि । तदेतेन—

"इह कालो नामेदम्भावविशिष्टस्य विशेषणतामवलम्बमानस्तं विशिष्टीकुर्वन् तत्सङ्कोचादनित्यं सम्पादयति, आत्मनश्च चित्स्वभावत्वादिदमिति प्रथनाभावेन विशेष्यत्वं नास्ति, विशेषणविशेष्यभावो हि योजकायत्तः, न च स्वप्रकाशे योजकान्तरमस्ति" इत्यभिनवगुप्तपादोक्तमप्युपपादनीयम् । अयमात्मेतिव्यवहारस्तु न विश्वोत्तीर्णावगाहने क्षमोऽपि तु नरशक्त्यात्मताविशिष्टावगाहन इति परतो व्यक्तीभविष्यति । इदन्त्वमेव हि जडत्वम्, क्रियात्मककालोऽपि च तादृशः, न च निर्धर्मकस्य चैतन्यस्य जडविशिष्टत्वसम्भवः, विरोधात्. तदधीनसिद्धिकस्य च तत्परिच्छेदकत्वानुपपत्तेरिति ।

किञ्चालीकं स्फुरति न वा, नचेत् कथमलीकत्वप्रसङ्गः; स्फुरति चेत्, तत्स्फुरणात्मकमेव गत्यन्तराभावादिति कथमलीकत्वप्रसङ्गः, नहि स्फुरणभिन्नं सत्स्वरूपं किञ्चिदलीकम्, बुद्धिरेव हि तत्र तादृशी । तदाह शिवदृष्टिटीकाकृत् 'असत्त्वपि प्रकाशमानं चिद्रूपमेवे'ति । खपुष्पकूर्मरोमादिशब्देभ्य एकाकारधीस्तु न, मायाशक्तिवशाद्भिन्नतया प्रथितशब्दस्यापि विपर्यीकरणात्, इदं च व्युत्पन्नाव्युत्पन्नसाधारणम्. व्युत्पत्तिश्च शून्यवादोक्तरीत्या । एतेन कालानवच्छिन्नत्वस्य परमार्थत्वे खपुष्पादेरपि तथात्वप्रसङ्ग इति-नाशङ्कनीयम् । प्रतीतेः कालावच्छिन्नत्वे च प्रतीतिरूपतया खपुष्पादेरपि तथात्वमौचित्यप्राप्तमित्यन्यत् । प्रक्रियादशायामन्तःकरणतत्त्वस्वीकारेण क्षणिकविपर्ययादिज्ञानाभ्युपगमात्, यदाहुरभिनवगुप्तपादाः "नवनवाभासाः प्रतिक्षणमुदयव्ययभाजः" इति ।

"सौक्ष्म्यस्य चावविज्ञानं यावत्तिष्ठति स क्षणः ।
अन्यथा न स निर्वक्तुं निपुणैरपि पार्यते ॥"

इति च तन्त्रालोके। प्रकारान्तरेण क्षणनिर्वचनभङ्गस्तु नेह प्रस्तूयते, मन्दप्रयोजनत्वात्। न चैवं घटादेरपि तत्तत्क्षणिकज्ञानात्मकत्वमेव स्यान्न तु परमार्थचिद्रूपत्वमिति शङ्क्यम्, क्षणिकज्ञानानामपि चिद्विषयत्वेन तथात्व तु, तेषां भेदप्रतीतेराविर्भावतिरोभावप्रतीतेश्च भगवतश्चिद्वपुषः स्वातन्त्र्यचमत्कारमात्रसारत्वादिति वक्ष्यते। आह च—

मायाशक्त्या विभोः सैव भिन्नसंवेद्यगोचरा।

कथिता ज्ञानसङ्कल्पाध्यवसायादिनामभिः" ॥ इति ॥

सैवेति। चितिशक्तिरेवेत्यर्थः। प्रासङ्गिकमिदम्। प्रकृतमनुसरामः—

अथास्त्वेवम्, तथापि नित्यत्वे नित्यत्वमस्ति नवेत्यादिविकल्पस्य निरसनस्य कि मुत्तरम्, एवं प्रकाशस्य व्यापकताया अप्यवश्योपेयत्वेन तस्याप्युदीरितरीत्या दोषभाजनत्वमेवेतिचेन्न, नित्यत्वव्यापकत्वादिकं धर्मजातं तद्विशिष्टञ्च चिन्मात्रातिरिक्तमेवमपलप्यते चिन्मात्रं वा। नाद्यः, तदपलापेऽस्माकं क्षत्यभावात्, नहि घटे निषिद्धे पटो निषिद्धो भवति। नित्यत्ववैशिष्ट्यं फलतोऽपलप्यते इति चेत्तस्यापि चिदतिरेको वा तदनतिरेको वेति विकल्प्यत्वात्। न द्वितीयः, चिद्रूपापलापस्य भवतोऽप्यनिष्टत्वात्। क्षणिकत्वविशिष्टं मदिष्टमितिचेत् क्षणिकत्वस्याप्युक्तरीत्या दौःस्थ्यात्, तस्मात्सर्वधर्मविवर्जितं सर्वकल्पनाविकलं किमपि लोकोत्तरं तत्त्वमवश्योपेयम्, एवं च विरुद्धधर्माध्यासस्य तद्भेदकत्वशङ्कैव नावतरति, सर्वधर्मराहित्याभिप्रायेण तु तस्य शून्यत्वमप्युच्यमानं न कामपि क्षतिमातनोति, निस्स्वरूपत्वं तु कुतः? एवं च स्वतःसिद्धिरपि स्वेतरानपेक्षतया निर्धर्मकस्यैव सम्भविनी न तु क्षणिकज्ञानस्य। तदेतत्सर्वमभिप्रेत्याह खण्डनकारः—"प्रकाशात्मतामात्रस्यैव स्वतःसिद्धिसम्भवेन जडात्मनां धर्माणां केषामपि तदन्तर्भावानुपपत्ते" रिति। उक्तञ्च वेदान्तिभिरेव—

"अन्तर्भावे तु बाह्यानां चित्स्वभावो निरञ्जनः।

बहिर्भावे तु बाह्यत्वाच्चित्स्वभावो निरञ्जनः" ॥ इति ॥

एवञ्च दिव्यलोचनमुन्मील्यैवालोचितं वेदान्तिभिः 'साक्षिणो बाधासम्भव' इति। तद्विकलस्तु शून्यवादी सधर्मकमेव सर्वं बाधमानो भ्रान्तो मोदत इति। धर्मिणो भिन्नस्य भिन्नाभिन्नस्य वा तत्समसत्ताकस्यैव धर्मपदमुख्यार्थत्वम्, अत्यन्ताभिन्ने तु धर्मत्वं परिभाषामात्रमेव, एवञ्च स्वीकृतमिदन्निर्धर्मकत्वमभिनवगुप्तपादैरपि, यदाहुस्तन्त्रालोके—

"नचास्य विभुताद्योऽयं धर्मोऽन्योन्यं विभिद्यते।

एक एवास्य धर्मोऽसौ सर्वाक्षेपेण वर्तते ॥

तेन स्वातन्त्र्यशक्त्यैव युक्त इत्याञ्जसो विधिः"। इति।

विभुतादेः प्रकाशात्मकत्वेन परस्परमप्यैक्यमेवेत्यहम्प्रत्यवमर्शाख्यस्वातन्त्र्यशक्तिरेव मात्रयापि ततोऽनतिरिक्तापि धर्मशब्देन व्यवह्रियत इति तत्सम्प्रदायानुसारिणी व्याख्या। अधिकञ्चाग्रे वक्ष्यामः। एतेन विषयविषयिभावस्य निरस्ततया सांवृतत्वेन सम्बन्धिनोरपि तथात्वमित्यपि प्रत्यादिष्टम्। उक्तरीत्या चित्सिद्धौ विषयविषयिभावस्य तदनतिरेके तत्सिद्धिरेव तत्सिद्धिः, अतिरेके तु तद्बाधेन चिद्बाधश्चौरापराधेन माण्डव्यनिग्रहमनुहरति। नवा चितोऽसिद्धौ किञ्चिन्निरसनमपि सिद्ध्यतीत्युक्तम्। एवंच लक्षणप्रमाणाभ्यां वस्तुसिद्धिरिति मर्यादा निर्धर्मकविषयेव व्यभिचरिता। तदाह खण्डनकृत्—"वस्तुतस्तु स्वात्मसिद्धमेव चिद्रूप" मिति। आह च तन्त्रालोककारोऽपि—

प्रमाणान्यपि वस्तूनां जीवितं यानि तन्वते ।
तेषामपि परो जीवः स एव परमेश्वरः ॥ इति ॥

तदित्थं निरूपितं स्फुरणतत्त्वम्, अनौपाधिकप्रेमास्पदतया तु वेदान्तदर्शन इव तदानन्दात्मकमपि । यो वै भूमा तत्सुखम्" "आनन्दं ब्रह्मणो रूप" मित्यादिश्रुतेश्च,

आत्माऽऽनन्दमयः सर्वप्रियहेतुत्वतः शिवे !
भारादित्यागसुत्यक्तसुखात्मत्वाच्च शङ्करि ! ॥"

इति परमानन्दतन्त्राच्च । स्वरूपभूतसुखस्यापि पुरुषार्थत्वोपपत्तेरात्मसद्भावेऽपि क्लेशानुपपत्तेश्च प्रकारस्तु शारदायां दर्शितः । इदानीन्तु वेदान्तसिद्धान्तात्स्वातन्त्र्यवादवैषम्यं निरूप्यते ।

तथाहि—यथा लौकिकः प्रतिभासो न विमर्शात्मकः, नचैवं विमर्शत्वस्य स्मृतिजननयोग्यतानियततया तद्विकलमुपेक्षात्मकं ज्ञानं न स्यात्; न स्यादेव, मनोऽवधाने मया तृणं स्पृष्टमित्यादौ प्रमातृविश्रान्त्यपरपर्यायस्याहमर्थलग्नतया भानस्यौचित्यावर्जितत्वेन विमर्शात्मकतापत्तौ स्मृतिजननयोग्यताया आवश्यकत्वात्, मनोऽवधानाभावे च ज्ञानोत्पत्तेरेवासम्भवात्, नचाजिज्ञासितविषयकज्ञानानामुपेक्षात्वं सर्वानुभवसिद्धमेव, तैश्च संस्काराजननेन स्मृतिजननयोग्यताऽपि तत्र नास्तीति वाच्यम्, अजिज्ञासितविषयकज्ञानं हि दृढतरत्वादिरूपवैजात्यविशेषविशिष्टं संस्कारं नाधत्ताम्, संस्कारमात्राधानं तु कथं वार्यताम्, एतेन संस्काराजनकत्वमुपेक्षात्वमिति परास्तम् । एवञ्च विशिष्य मनोऽवधानं विना ज्ञानदर्शनेऽपि सामान्यतोऽपि मनोऽवधानं विना ज्ञानोत्पत्तौ न मानम् । अहमर्थालग्नतया तु भानाभावे भानमपि जडप्रायमेव ।

तथा विश्वोत्तीर्णोऽपि प्रकाशो विमर्शात्मक एव । विमर्शश्चासौ चैतन्यस्फुरत्तास्पन्दसत्तैश्वर्यादिशब्दितोऽपि । चैतन्यञ्च वेदान्तिनामिव न स्वव्यवहारे संविदन्तरानपेक्षत्वपर्यवसन्नं स्वप्रकाशत्वमात्रम्, अपि तु केवलस्वात्मभाने स्वात्मकविश्वाकारतया च भाने इतरानपेक्षत्वम्, अत एव स्वात्मकवेद्यांशप्राधान्यविवक्षायां विमर्शशब्देन वेदकांशप्राधान्यविवक्षायां तु तदेव प्रकाशशब्देनोच्यत इत्यपि कचिद्व्यवहारः । उक्तचैतन्यमेव स्वातन्त्र्यम्, इयमेवास्य शक्तिदशाप्युच्यते स्पन्दत्वमपि किञ्चिच्चलनात्मकत्वमुक्तार्थे एव पर्यवस्यति, अन्यथाऽनित्यत्वप्रसङ्गात्, अतएवोक्तम्-

किञ्चिच्चलनमेतावदनन्यस्फुरणं हि यत् ।
ऊर्मिरेषा विबोधाब्धेर्न संविदनया विना ॥ इति ।

अनन्यस्फुरणं स्वयमेव तथा तथा प्रकाशमानत्वमिति तत्सम्प्रदायः । एवञ्च विश्वस्यैव दृश्यमानस्य स्वातन्त्र्यगर्भीभावे तस्य चिदात्मकत्वमेव ।

एतेन दृग्दृश्ययोर्दर्पणप्रतिबिम्बभावोऽप्यादर्शितः, प्रतिबिम्बस्य दर्पणपार्थक्ये मानाभावेन दर्पणात्मकत्वेन दृग्दृश्ययोरभेदस्यैव विज्ञानवादे निरूपितस्य तेन विवक्षितत्वात् । विस्तरं तु विवर्तवादे वक्ष्यामः । बिम्बस्थानीयतायाः प्रकाशे विमर्शात्मके दर्पणात्मकेऽपि व्यवहारस्तु भेदमौपचारिकमादायैवेत्यत्र नातीवाभिनिवेष्टव्यम् । उक्तविवक्षितार्थस्यैवादरणीयत्वात् । प्रतिबिम्बस्य मिथ्यात्ववादस्तु न युक्तः, कापि न मिथ्यात्वमित्यस्य वक्ष्यमाणत्वात् । एवञ्च जडभापाऽपभापैव चिद्भिन्नतया प्रथनमूला, तादृशप्रथनेऽपि मूलमुक्तस्वातन्त्र्यमेव । भेदस्यापि तद्घटका-

कारघटकत्वात्। एवञ्चात्र दर्शने वैपम्यनैघृ् ण्यप्रसङ्गोऽपि नावतारणीयः, वैपम्याद्यात्मना दुःखित्वाद्यात्मना पुण्यापुण्याद्यात्मना च स्वयमेव स्फुरणात्। न चैवमितरापेक्षत्वमप्रसिद्धं कथं निषिध्यते ? खपुष्पमित्यादिविकल्पालोचनेन दत्तोत्तरत्वात्। न च सुखित्वादिरूपेणैव कुतो न भाति ? नियतात्मना भाने किमिदं स्वातन्त्र्यमपि तु परिच्छित्तिरेव। दुःखस्वरूपाननुभवे च सुखस्वरूपस्यैव विवेक्तुमशक्यत्वेनोक्तपर्यनुयोगस्यैवासम्भवात्। तस्माद् द्वन्द्वात्मना भानमपि फलतः सुखप्रतीतय एव। आहुश्च-'हिंसाप्यनुग्रहः स्याद्व्रणादिनां शस्त्रवैद्यकृत' दिति। सर्वथाऽपि स्वातन्त्र्यमपर्यनुयोज्यमेव। एतेन विश्वाकारत्वे सततमेव सर्वैराकारैः कुतो न भातीति परास्तम्।

प्रक्रियादशायान्तूक्तस्वातन्त्र्यशक्तिरेवेच्छाज्ञानक्रियाशक्तिरूपेण विभक्ततया वर्ण्यते, सर्वस्यापि व्यवहारस्य त्रितयनान्तरीयकत्वात्. ज्ञानशक्तिरप्यनुभवस्मृत्याद्यनेकशक्त्यात्मिका, 'स तपोऽतप्यते'ति श्रुतिसिद्धमालोचनमपि ज्ञानशक्तिरूपमेव। सर्वं च सर्वात्मकमे', तदभिन्नाभिन्नस्य तदभिन्नत्वध्रौव्यात्। तथापि तु तत्तद्रूपस्य प्राधान्याप्राधान्यविवक्षायामुक्तत्रिकव्यवहारः। एवं तदेव परपरापरापरात्मकं क्रमेणाभेद-भेदाभेद-भेदभानप्रयोजकमनुत्तरेच्छोन्मेषात्मकं 'अ इ उ' इति मातृकाक्रमव्यङ्ग्यं 'सदेव सोम्येदमग्र आसीद्' 'एकोऽहं बहु स्याम्' 'सच्च त्यच्चाभवत्' इतिश्रुतिभिः क्रमेणावगाहितं शिवशक्तिनरात्मकं 'अहं भवामि, त्वं भवसि, इदं भवति' इत्युत्तममध्यमप्रथमपुरुषैः समीक्षितमीक्ष्यते, परमेश्वरो हि प्रथमं तटस्थ इवेति प्रथमपुरुषः, उपासनादशायां तु त्वमित्यवभासते इति मध्यमपुरुषः, तत्संवेदनवेलायां त्वहमिति चकास्तीत्युत्तमपुरुषः। एवं च पूर्णाहन्तोल्लेखिपरामर्शमादायैव परत्वम्। तदाह—

'यस्मात्क्षरमतीतोऽहमक्षरादपि चोत्तमः।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः
उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इति॥

शक्तितत्त्वमेवाक्षरमित्युक्तम्, नरतत्त्व तु क्षरमिति, अत्रैव घटादेरन्तर्भावः। इदन्तास्पदतयैव तेषु चित्त्वे सत्यपि जडत्वव्यवहारः। जडेष्वपि क्वचित्परतत्त्वात्मकताध्यवसानेन तु 'मेरुः शिखरिणामहम्' इत्युत्तमपुरुषप्रयोगः। यदाह तन्त्रालोके—

तस्यैव तु स्वतन्त्रत्वाद्द्विगुणं जडचिद्वपुरिति,

शक्तिरूपताध्यवसानेन तु 'शृणुत ग्रावाण' इतिमध्यमपुरुषप्रयोगः। एवमन्यत्रापि साङ्कर्यं द्रष्टव्यम्। सम्प्रदायस्वस्य सिद्धान्तोपासनाचारत्रितयपर्याप्तत्वेऽपि सिद्धान्तमात्रसंशोधनाय प्रवृत्तस्य मे इहोपासनादिसौधमनारुह्यैव किञ्चिदभिधाने विज्ञैर्न्यूनता न देशनीया। एतावता च त्रिकदर्शनत्वमपि व्याख्यातम्। अयं च सामान्यविभागः।

अथावगतमेतत्, प्रपञ्चस्तु सोपादानो वा निरुपादानो वा, नाद्यः. शिवस्यातिरिक्तोपादानापेक्षित्वेऽद्वैतभङ्गात्, यत्तु दाक्षिणात्यविशिष्टाद्वैतिशैवैः श्रीकण्ठभाष्यादौ—नामरूपविभागानर्हसूक्ष्मचिदचित्प्रपञ्चशक्तिविशिष्टतया केवलः शिवः सर्गकाले स्वसङ्कल्पमात्रेणोपादानकारणमनपेक्ष्यैव तत्तन्नामविशिष्टं सकलं चिदचिदर्थजातं प्रकाशयतीत्युक्तौ 'मायां तु प्रकृतिं विद्यात्' 'तस्माद्विराडजायत' इत्यादिश्रुत्या मायापुरुषयोरुपादानत्वसिद्धौ कथं निरुपादानत्वमित्याशङ्क्य यथा घटनिष्पत्तौ कुलालस्य स्वशरीरपृथक्त्वेन मृत्पिण्ड उपादानं दृश्यते तथा न परमेश्वरात्पृथक्सिद्धं मायाद्युपादानमपि त्वपृथक्सिद्धिसम्बन्धेन परमेश्वरविशिष्टमेवे-

त्येव निरुपादानत्वमित्युक्तम्, तदतिरिक्तोपादानापेक्षायामेव पर्यवस्यतीति तत्रापि नाद्वैतोपपत्तिः, विशिष्टाद्वैतवादस्य निराकरिष्यमाणत्वात्। स्वयमेवोपादानत्वे तु विकारित्वप्रसङ्गात्। न द्वितीयः, भावकार्यस्य सोपादानत्वव्याप्तिभङ्गात्, प्रकृत्यादितत्त्वस्वीकारवैयर्थ्यप्रसङ्गाच्चेति चेन्न, कार्यकारणभावस्तावद्द्विधा, पारमार्थिकः कल्पितश्च, तत्र परमेश्वर एव तथातथा भातीत्याद्यः। बीजादङ्कुर इत्यादिलौकिकदृष्ट्या तु द्वितीयः, तमादायैव च प्रकृत्यादितत्त्वोपवर्णनम्। तत्रापि तु बीजात्मना भावः सन् परमेश्वर एवाङ्कुरात्मना भातीति पारमार्थिकः कार्यकारणभावोऽनुगत एव, कुलालस्यापि शिवानतिरेकात्तु घटेऽपि शिवस्य कर्तृत्वम्। नन्वेवं फलतो निरुपादानत्वमेवापतितमित्युक्तव्याप्तिभङ्ग एवेति चेत्सत्यम्, योगीच्छानिर्मितघटादौ निरुपादाने व्यभिचारात्, न च तत्रापि योगीच्छया घटाकारेण परमाणुसंघट्टनम्; साक्षात्तस्य लोकेऽक्लृप्तत्वात्, द्व्यणुकादिक्रमेण तथ्योपगमे च झगित्येव योगीच्छया कार्यसिद्ध्यनुपपत्तेः। अतएव विद्युल्लेखायामारम्भवादभङ्गो वेदान्तिभिरपि दर्श्यते, चेतनस्यैव चेतनानुरोधिताया लोके दर्शनाच्च, योगिसामर्थ्यस्यावश्यादरणीयत्वे परमाणुदुरामहस्य निष्प्रयोजनत्वात्। एतेनाद्यकार्येऽपि निरुपादानत्वं समर्थनीयम्। किञ्चान्यथाख्यातेः शारदायां निरस्तत्वेनात्मख्यातेश्च विज्ञानवादे दर्शितत्वेन स्वप्नादावपि तादृशव्याप्तिभंग्ना। व्याप्तिज्ञानोपायखण्डने शारदायाञ्च दीपितमेतत्। आहुश्चोत्पलदेवाः—

"चिदात्मैव हि देवोऽन्तःस्थितमिच्छावशाद्बहिः।
योगीव निरुपादानमर्थजातं प्रकाशयेत् ॥" इति॥
"विश्वामित्रादयः सर्वे परिपक्वसमाधयः।
उपादानोपकरणप्रयोजनविवर्जिताः ॥
स्वेच्छया ससृजुः स्वर्गं सर्वभोगोपबृंहितम्।
ईश्वरोऽनन्तशक्तित्वात्स्वतन्त्रोऽन्यानपेक्षकः ॥
स्वेच्छामात्रेण सकलं सृजत्यवति हन्ति च।" इति च मानसोल्लासस्रष्टारः।

अथ भवतु वेदान्तिसम्मतानाद्यविद्यैवोपादानम्, तस्याश्च मिथ्याभूततया न विद्यारूपे ब्रह्मण्यसम्भवः, समसत्ताकयोरेव विरोधादिति चेदत्रोच्यते—साक्षात्कृतात्मतत्त्वेनापि योगिना घटादिनिर्माणात्तस्य चाविद्याया असम्भवात्। तत्र द्रष्टुरेवाविद्येति चेत्तस्यापि साक्षात्कृतात्मत्वे का गतिः?। तयोरावरणांशनाशेऽपि विक्षेपांशसद्भाव एव गतिः, एवञ्च न तत्र भ्रमोऽपि स्वाहार्यारोपः, अनुभवानुसाराच्च स लौकिकप्रत्यक्षात्मक इति चेद्धन्तैवं योगीच्छानुरोधात्तत्र विक्षेपांशः परिणत इत्युक्तं स्यात्, तत्र चावाचि नाचेतनस्य चेतनेच्छानुरोधित्वमिति। योगमाहात्म्यादरे चोपादानव्यसनेन कृतम्। एतेन प्रकृतिपरिणामपक्षोऽपि विक्षिप्तः। किञ्चाविद्या तावदेकजातीया, नचैकजातीयस्य वस्तुनो गगनादिकं सूक्ष्मं पृथिव्यादिकं च स्थूलं प्रति दृष्टचरमुपादानत्वम्, लोकप्रसिद्धोपादानाभावानभ्युपगमे चानुपादानत्वं गलेपादुकान्यायेन दुर्निवारम्, नहि पारिभाषिकपदार्थैर्लोकव्यवहारनिर्वाहः। किञ्च मिथ्याभूताया अपि तस्या अनादित्वमित्यत्र वस्तुस्वभावातिरिक्तस्योपोद्बलकस्यासम्भवेन ब्रह्मस्वभाव एव स्वात्मकविश्वात्मना भासनक्षम आस्ताम्, स एव ह्यस्माभिः स्वातन्त्र्यशक्तिशब्देनोच्यते इति कृतमतिरिक्तपदार्थकल्पनया।

न वा तस्यां प्रमाणमपि, परिपूर्णानन्दाप्रथनस्य स्वरूपगोपनकारिण्या क्रियाशक्त्यैवोपपत्तेस्तदन्यथानुपपत्तेरप्रसरात्, भ्रमस्य प्रपञ्चस्य वा सोपादानत्वान्यथानुपपत्तेरुक्तरीत्यैव वक्तुमशक्यत्वात्, "तमः आसीत्" "नीहारेण प्रावृताः" "अविद्यायामन्तरे वर्तमानाः" "भूयश्चान्ते विश्वमायानिवृत्तिः" "अजामेकाम्" इत्यादिश्रुतीनां च यथासम्भवं तादृशक्रियाशक्तिपरतयाऽपूर्णम्मन्यतारूपाज्ञानपरतया वक्ष्यमाणतत्त्वान्तर्गतप्रकृतिपरतया च योजयितुं शक्यत्वात्, परिपूर्णम्मन्यतारूपत्वविरोधितयाऽनृतशब्देनोक्तक्रियाशक्तेरुक्ताज्ञानस्य वा व्यपदेशसम्भवेन "अनृतेन प्रत्यूढा" इति श्रुतेरपि सामञ्जस्यात्। स्वरूपावारकत्वस्य वस्त्रादिविलक्षणस्य भवताऽपि वक्तव्यत्वात्। विवादपदं प्रमाणज्ञानं स्वप्रागभावव्यतिरिक्तेत्याद्यनुमानानाञ्चानुकूलतर्कशून्यत्वात्। 'त्वदुक्तमर्थं न जानामी'त्यादिप्रत्यक्षान्यथानुपपत्तेस्तु न प्रसरः, तथाहि—प्रतियोगिसिद्ध्यसिद्धिभ्यां तादृशज्ञानस्य व्याहतत्वेन भावरूपाज्ञानस्य तद्विषयता कल्प्यते, तथा सति तस्य साक्षिभास्यतया तदवच्छेदकतया विषयावगाहनेऽपि क्षत्यभावात्। परन्त्वज्ञानस्य ज्ञानाभावव्याप्यतया ज्ञानाभावस्यापि भवताऽनुमन्तव्यतयाऽक्लृप्ताज्ञानकल्पनापेक्षया क्लृप्तज्ञानाभावस्यैव साक्षिभास्यताकल्पने लाघवात्, साक्षिरूपाभावज्ञानं च प्रति प्रतियोगितावच्छेदकधर्मप्रकारकज्ञानस्य कारणताया अकल्पनीयत्वात्, कल्पनायाः फलबलमूलत्वात्, अतएवाभावविशेषणज्ञानविशेषणतया त्वदुक्तार्थादेरपि साक्षिभास्यत्वेऽपि न क्षतिः। अनुपलब्धिगम्य एवाभावो न तु साक्षिभास्य इति तु न परमेश्वरानुशासनम्। पटेऽपि घटज्ञानाभावसद्भावेन स्वात्मनि घटाज्ञानं साक्षात्करोमीतिवत् पटे घटाज्ञानं साक्षात्करोमीति व्यवहारापत्तेरहमर्थ एव घटज्ञानाभावस्य साक्षिभास्यत्वकल्पनया वारणसम्भवात्, अतएव सुषुप्तावपि निर्विकल्पकसाक्षिभास्यत्वेन जागरायां 'न किञ्चिदवेदिष'मिति स्मरणोपपत्तिः, भाव एव निर्विकल्पकत्वेच्य इत्यस्यातिरिक्तधर्मिकल्पनापरतयाऽवधीरणीयत्वात्, विषयविशेषविशेषितरूपेण तु न सुषुप्तौ साक्षिवेद्यत्वम्। न वा ज्ञानाभावे ज्ञानवत्त्वेनास्मर्यमाणत्वस्य लिङ्गताऽपि न सम्भवति, उपेक्षात्मकज्ञानस्य निराकृतत्वेन व्यभिचाराभावात्, तत्स्वीकारपक्षेऽपि वा न व्यभिचाराप्रतिसन्धानदशायामनुमितेरनुपपत्तिः, नहि वस्तुगत्या साध्यवति व्यभिचारिलिङ्गेनापि नानुमितिः प्रमात्मोपपद्यते। भवतु च मत्वा शीर्त्वा वा कथमपि भावरूपाज्ञानपक्षेऽप्रामाण्यज्ञानानास्कन्दितबाधनिश्चयाभावत्वादिना तत्र तत्र कारणताकल्पनामपेक्ष्य भावरूपाखण्डाज्ञानत्वेन कारणताकल्पने लाघवम्, तथापि तादृशाज्ञानत्वमस्मदुक्तशक्तिविशेष एवास्ताम्, मिथ्यात्वं तु तस्य कुतोऽनुरोधात्, प्रकाशविषयत्वे विज्ञानवादोक्तरीत्या प्रकाशात्मकतया सत्यत्वावश्यम्भावात्, तदविषयत्वे तु तन्नैव स्यादिति कृतं विस्तरेण। तदुक्तं शैवैः—

"प्रकाशमानं न पृथक् प्रकाशात्
स च प्रकाशो न पृथग् विमर्शात्।
नान्यो विमर्शोऽहमिति स्वरूपा—
दहं स्वरूपोऽस्मि चिदेकरूपः ॥" इति।

पूर्वोक्तं कल्पितमेव कार्यकारणभावमादाय तु विशिष्य तत्त्वविभागोऽपि, तत्र पञ्चविंशतिः पुरुषान्तानि तत्त्वानि साङ्ख्यवत्, पुरुषस्तु पशुरेव, तत्त्वञ्चापूर्णम्मन्यत्वरूपाणवमलविशिष्टत्वं नियतिकालरागविद्याकलात्मककञ्चुकपञ्चकविशिष्टत्वं वा, एतेषां च क्रमेण व्यापकत्वनित्यत्वपूर्णत्वसर्वज्ञत्वसर्वकर्तृत्वविरुद्धस्वरूपमवसेयम्, निर्वर्णितस्वतन्त्रप्रकाश-

एव च स्वरूपतिरोधित्सया पशुतां गतः। अनादित्वञ्च दर्शनान्तरवत्संसरणस्येष्टमेवेति स्वीकृतं त्रयोदशाह्निके श्रीतन्त्रालोके। स्वरूपतिरोधित्सात्मकमायाशक्तेरनादित्वेऽपि संसारः सादिरित्यस्य वक्तुमशक्यत्वात्। "यथाऽनादिप्रवृत्तोऽयं घोरः संसारसागरः। शिवोऽपि हि तथानादिः संसारान्मोचकः स्मृतः" इत्युक्तेः। मोक्षश्चास्य पशोस्तादृशस्वातन्त्र्यशक्त्यभिन्नप्रकाशात्मक एव, "मोक्षस्य नैव किञ्चिद्धामास्ति न चापि गमनमन्यत्र। अज्ञानग्रन्थिभिदा स्वशक्त्यभिव्यक्तता मोक्षः" इतिपरमार्थसारेऽभिनवगुप्तपादोक्तेरप्यत्रैव तात्पर्यम्। जीवन्मुक्तिदशा तु वेदान्तिवदेवेति तत्रैवाभिव्यक्तम्। विवर्तवादे भाविशक्तिस्वरूपालोचनप्रणाल्या तु विदेहमुक्तावपि शब्दभेद एव। यन्धस्य वस्तुतोऽभावेन तु तत्प्रतियोगिकत्वेन रूपेण मोक्षोऽपि नास्तीति वेदान्तिवदेव व्यवह्रियते। यत्स्वीकृतं तन्त्रालोकटीकायाम्—

"संसारोऽस्ति न तत्त्वतस्तनुभृतां बन्धस्य वार्तैव का।
बन्धो यस्य न जातु तस्य वितथा मुक्तस्य मुक्तिक्रिया॥
मिथ्यामोहकृदेष रज्जुभुजगच्छायापिशाचभ्रमो
मा किञ्चित्त्यज मा गृहाण विरम स्वस्थो यथाऽवस्थितः॥" इति॥

प्रकाशात्मना सत्यत्वेऽपि बहिष्ट्वेनाभावमभिप्रेत्य मिथ्यात्वोक्तिरेतन्मतेऽपि सम्भवति। अधिकं तु विवर्तवादे वक्ष्यामः। तादृशपशुत्वप्रयोजकं तु भेदप्रतीत्यात्मकं मायातत्त्वम्, तदुपरि अहमिदमिति परामर्शात्मकं क्रियाशक्तिप्रधानं शुद्धविद्यातत्त्वम्। अत्राहन्तेदन्तयोः समीकरणावभासनम्, तत्रैवेदमंशप्राधान्ये ईश्वरतत्त्वं ज्ञानशक्तिप्रधानम्, अहमंशप्राधान्ये तु सदाशिवतत्त्वमिच्छाशक्तिप्रधानम्, अहमित्येतावन्मात्रपरामर्शस्त्वानन्दशक्तिप्रधानं चैतन्यं शक्तितत्त्वम्, लोकेऽपि कचित्प्रवर्तिष्यमाणस्य स्वात्मानमनुसन्धायैव चिकीर्षितस्य बुद्ध्यारोहणदर्शनान्नायं दुरूहः पन्थाः। सर्वमेतत्तत्त्वव्यूहं गर्भीकृत्य वर्तमानं परिपूर्णानन्दमयं चिद्रूपं शिवतत्त्वम्। अतएव चिदानन्देच्छाज्ञानक्रियेतिशक्तिपञ्चकस्यापि कचिदुल्लेखः। अथ चैतन्यज्ञानयोः को भेदः? चैतन्यं तावदात्मस्वरूपमनुस्यूतमेव, तदेव स्वोत्कर्षेण बाह्याभासात्मकतापन्नं ज्ञानशक्तिरित्यवस्थाभेदात, बाह्यस्त्विदमंशः। एवं षट्त्रिंशत्तत्त्वानि। अयं च प्रसिद्धो विभागः, शिवाद्वैतप्रतिपत्तावेव सन्नाहेन तु प्रक्रियामनादृत्य प्रकारान्तरेणापि तत्त्वोपवर्णनमागमेषु दृश्यते, अत एवैतन्मतोपवर्णनपरेऽपि मानसोल्लासे तत्त्ववर्णनायां क्रमान्तरमकारि। तन्त्रालोके तु—

"यत्तु सर्वाविभागात्म स्वतन्त्रं बोधसुन्दरम्।
सप्तत्रिंशं तु तत्प्राहुस्तत्त्वं परशिवाभिधम्॥"
"एवं सृष्टिप्रलयाः प्रायो एकत्र निष्ठिताः।
सोऽपि संविदि संविच्च चिन्मात्रे ज्ञेयवर्जिते॥
चिन्मात्रमेव देवी च सा परा परमेश्वरी।
अष्टात्रिंशं च तत् तत्त्वं हृदयं तत्परात्परम्॥"

इत्यप्युक्तम्। केचित्तु "पञ्चविंश आत्मा भवती"ति तैत्तरीयश्रुत्यनुगृहीतानि पञ्चविंशतिरेव तत्त्वानि, तानि च पञ्चभूतानि तन्मात्रपञ्चकं पञ्चज्ञानेन्द्रियाणि पञ्चकर्मेन्द्रियाणि मनस्तत्त्वं मायाविशुद्धविद्यामहेश्वरसदाशिवात्मकानि चत्वारीति, परिशिष्टानां त्वेतेष्वेवान्तर्भावः, सर्वतत्त्वातीतं तु षड्विंशं शिवशक्तिसम्मेलनमिति प्राहुः। सर्वश्चायं तत्त्वनिवहः प्रागुदीरित-

त्रिकात्मक एव, त्रिकं च स्वातन्त्र्यरूपविमर्शात्मकमेव, विमर्शश्च प्रकाशात्मक एव। एतच्च श्रीविद्योपासकैः शाक्तैरप्यनुमन्यत एवेति शाक्तदर्शने त्रिपुरारहस्यज्ञानखण्डेऽभिव्यक्तम्। अत एव 'शक्तिविशिष्टमेव परं ब्रह्म'ति तान्त्रिकसिद्धान्तेऽपि शक्तिशक्तिमतोरभेदान्न ब्रह्मणो निर्धर्मकत्वभङ्ग'इतियोगिनीहृदयसेतुबन्धे भास्कररायोऽप्युररीचकार। पारिभाषिको भावनोपनीतो वा शक्तिशक्तिमदादिव्यवहारो नाद्वैतवादिनं दुनोति। अधिकं तु शाक्तदर्शनीयं दर्शनीयं विवर्तवादे। शक्तिप्राधान्यं तु वैवक्षिकं न भेदप्रसाधनस्य प्रभवति।

एतेन—स्वातन्त्र्यादिशक्तिनिवहस्ततो भिन्नो वाऽभिन्नो वा, आद्ये तद्विशिष्टस्याद्वैते द्वैतमेव पर्यवस्येत्, विशिष्टस्य विशेषणादिव्यतिरिक्तत्वे विशेषणादेर्विशिष्टस्य चावशिष्टत्वात्, विशेषणाद्यव्यतिरिक्तत्वेऽपि विशेषणादीनामेव बहूनामवशेषान्नाद्वैतसिद्धिः। अतएव 'शक्तिस्तु शक्तिमद्रूपाद्व्यतिरेकं न गच्छती' त्यभियुक्तवचनं शक्तिशक्तिमतोराश्रयाश्रयिभावध्रौव्येऽप्यपृथक्सिद्धिसम्बन्धभिप्रायेण, तयोर्घटपटन्यायेन स्वतन्त्रपृथगवस्थानरूपभेदस्यैवासम्भवात्, सामरस्यापरपर्यायविशिष्टरूपतयैव च तयोरद्वैतब्रह्मादिपदार्थतोपगमादिति दाक्षिणात्यविशिष्टाद्वैतवादिशैवमतमनुपादेयम्, अधिकं तु विवर्तवादे वक्ष्यामः। भेदाभेदे तु विरोधानवस्थादिकमुक्तंप्राक्। द्वितीये तु प्रकाशतत्त्वमेकमपि कथं नानात्मना भासत इति शङ्कायां स्वातन्त्र्यशक्तिमाहात्म्यादित्युत्तरस्य स्वयमेव नानात्मना भासते इत्यर्थे पर्यवसानेन स्वयमेकमपि कथं तथा भासते इत्युक्तशङ्कायाः पुनरुज्जीवकत्वेनानुत्तरत्वादिति— नाशङ्कनीयम्, शक्तिशक्तिमतोः सर्वथैक्यात्, भेदस्य विकल्परूपप्रतिभासमात्रत्वात्, स्वातन्त्र्यशरीरे च नानावेद्यतया भानेऽपि स्वेतरानपेक्षतायाः प्रविष्टत्वान्न द्वितीयकल्पोक्तदोषः। उक्तञ्चाभिनवगुप्तपादैः—

"पारमेश्वरशास्त्रे हि न च काणाददृष्टिवत्।
शक्तीनां धर्मरूपाणामाश्रयः कोऽपि कथ्यते॥
ततश्च दृक्क्रियेच्छाद्या भिन्नाश्चेच्छक्तयस्तथा।
एकः शिव इतीयं वाग् वस्तुशून्यैव जायते" इति।

तस्मान्निरर्गलमेव चिदद्वैतं विजृम्भत इति शिवम्। इति दर्शनसर्वस्वेऽनिर्वचनीयतावादे स्वातन्त्र्यवादः।



## विवर्तवादः ।

### स्वातन्त्र्यवादनिष्पीडनम् ।

तदेवं निरूपितमौपनिषदाद्वैतवादसन्निहितं मतत्रयम् । तेषां च परस्परमपि प्रतिद्वन्द्वित्वेऽपि विशिष्य बाह्यदृष्टिप्रधानं तार्किकं प्रति प्रतिरोधिता, तेष्वपि केवलान्तरदृष्टिप्रधानो विज्ञानवादी, आन्तरप्रपञ्चानुरोधेन बाह्यप्रपञ्चनयनात्, उभयदृष्टिप्रधानस्तु शून्यवादी, उभयोरप्यान्तरबाह्ययोः सांवृततया समीकृत्य व्यवस्थापनात्, दिव्यलोचनमात्रप्रधानस्तु स्वातन्त्र्यवादी, यथावद्व्यवहारमव्यवस्थाप्यैव कालाकलितचिदानन्दाद्वैतनिमग्नत्वात्, विस्फारितलोचनत्रयास्तु वेदान्तिनः, आन्तरबाह्यप्रपञ्चमनवधीर्यैव तादृशाद्वैतसरसि निमज्जनात् । एवञ्च तन्मतानुसारेण द्वैतमिथ्यात्वसिद्धये स्वल्पमेवेदानीं वक्तुमवशिष्यते ।

ननु किमेतेनापि, यदि हि द्वैतमिथ्यात्वमस्ति तर्ह्यस्त्येव, यदि नास्ति, तर्हि नास्त्येव, नहि केषाञ्चित्खण्डनेन तन्निवर्तेत, भवदीयमण्डनेन वा प्रवर्तेत, न च तज्ज्ञापनमद्वैतप्रत्ययफलकम्, स्वातन्त्र्यवाद्यङ्गीकरोत्यैवोपपत्तेः, नापि वैराग्योत्पत्तिफलकम्, अचिरस्थिरत्वग्रहादेव तत्सम्भवात्, अथोपायस्योपायान्तरादूषकत्वम्, तथापि विशिष्य प्रयासो मन्दप्रयोजन एव, अचिरस्थिरत्वं निश्चिन्वतामपि विषयेषु प्रवृत्तिदर्शनं तु समानमेव, नहि प्रपञ्चमिथ्यात्वं निश्चिन्वाना अपि सर्वे विरज्यन्ति, प्रत्युत बहवो विषयभोगस्यापि मिथ्यात्वेन तेन किमस्माकं हीयत इत्यनुशयाना अन्येभ्योऽप्यधिकं भुञ्जन इत्यत्रत्ये बहुलं विलोक्यते, तस्माद्भक्तिविशेषावर्जितेश्वरानुग्रह एव वैराग्यहेतुरिति युक्तम्, यदि च सोऽपि विषयदोषदर्शनमुत्पाद्यैव वैराग्यमर्जयति तदाप्युक्तमेव । न च मिथ्यात्वं विना क्षयिष्णुत्वादिकमपि कथम्; मा भूत्, तज्ज्ञानं तु केन वार्यते, अन्यथा दर्शनान्तरवेदिनां तदनुत्पत्त्यापत्तेरितिचेन्न, दृढतरमिथ्यात्वभावनाया ईश्वरानुकम्पासहकृतमिथ्यात्वनिश्चयस्यैव वा वैराग्योत्पादकत्वात्, व्यभिचारस्त्वव्यवहितोत्तरत्वनिवेशेनैव वारणीय इति क्वचिदचिरस्थायित्वनिश्चयेनैव वैराग्योत्पत्तावपि न क्षतिः, मुख्यं प्रयोजनं तु मुक्तिप्रदाद्वैतसाक्षात्कारविशेषौपयिकाद्वैतप्रतिपत्तिरेव मिथ्यात्वोपपादनस्येति न प्रयासवैफल्यम्, द्वैतसत्यत्वेऽद्वैतानुपपत्तेः ।

तथाहि—स्वातन्त्र्यवादी प्रष्टव्यः, विश्वस्य सत्यत्वं शिवोक्तागमानुरोधाद्वोच्यते, युक्त्युपष्टम्भाद्वा, नाद्यः, भवद्भिरपि प्रमाणतयाऽनुमते विज्ञानभैरवादौ—

> यत्किञ्चित्सकलं रूपं भैरवस्य प्रकीर्तितम् ।
> तदसारतया देवि ! विज्ञेयं शक्रजालवत् ॥
> मायास्वप्नोपमं चैव गन्धर्वनगरभ्रमम् ।
> अतत्त्वमिन्द्रजालाभमिदं सर्वमवस्थितम् ॥
> किं तत्त्वमिन्द्रजालस्य इति दार्ढ्याच्छमं व्रजेत् ।"

इत्यादिपरमेश्वरवचनानां जागरूकत्वात्, भवन्नये प्रकाशात्मतया शक्रजालादेरपि सत्यत्वेन तन्न्यायेनासारत्वायुक्त्यसम्भवात् । यत्तु शिवदृष्टौ सोमानन्दनाथैः—

> "विश्वास्यासत्यरूपत्वं यैर्वाक्यैर्वर्णितं क्वचित् ।
> शिवोक्तैस्तैर्विरोधः स्यात्सर्वसत्यत्ववादिनः ॥"

इत्याशङ्क्य विश्वासत्यत्वबोधकवाक्यानामर्थवादत्वाभिप्रायेण

'विध्यतुच्छत्ववाक्यानां वैराग्याद्यर्थवादिनाम् ।
तात्पर्येण न दोषोऽस्ति"........

इत्युक्तम्, तत्तु तत्रैव ग्रन्थेऽर्थवादबलादपि शिवतत्त्वसमर्थनवेलायाम्-

"सोऽरोदीदिति वेदेऽस्ति नार्थवादो निरर्थकः ।
विध्यङ्गत्वेन चेत्सत्ता नासत्यस्याङ्गता स्थिता ॥
अर्थवादादपि फलं रात्रिक्रतुषु दर्शितम् ॥"

इति स्ववचनैरेव सर्वथा व्याहन्यते । अतएव 'गुणवादस्तु' इति सूत्रे निरालम्बो नार्थवाद इत्यभिप्रायेण 'प्रजापतिरात्मनो वपामुदखिदत्' इति कथमिदं निरालम्बनमन्वाख्यायत इत्याक्षेपे "मन्त्रार्थवादेतिहासप्रामाण्यात् सृष्टिप्रलयाविष्येते, तत्र सृष्ट्यादौ प्रजापतिरेव योगी तस्मिन् काले पुण्यकर्मोद्भवाभ्युपगमेन पशूनामभावात्स्वमाहात्म्येनात्मन एव पशुरूपमभिनिर्माय वपोत्खननादि कृतवान्, ततोऽसमाप्त एव कर्मणि तूपरःपशुरुत्थित इतीदृशमिदं कर्म प्रत्यासन्नफलम्, एवञ्च महता यत्नेन प्रजापतिना चरितमिति सर्वं सत्यमेव । प्रति सृष्टि चर्तुलिङ्गन्यायेन तुल्यनामप्रभावव्यापारवस्तूत्पत्ते र्नानित्यताप्रसङ्ग" इत्यभिधाय कुमारिलभट्टपादा अप्युत्तरमीमांसागतदेवताधिकरणन्यायमेवागत्याऽनुसस्रुः । एवञ्चोपनिषदामर्थवादत्वेऽपि तत्प्रतिपादितसर्वज्ञादिस्वीकारावश्यकतया तन्निराकरणं भट्टपादानां वेदेषु स्वतः प्रामाण्यप्रतिपत्त्यादिफलकमेवेति नेह वितन्यते ग्रन्थगौरवात् । अत एव खण्डनकारोऽप्युपनिषदामर्थवादत्वमुपेत्याप्यद्वैतप्रामाणिकत्वप्रकरणेऽद्वैतसिद्धिमनुमेने । प्राञ्चो हि वेदान्तिनो वेदान्तेष्वात्मोपासनविध्यनुप्रवेशमुपेत्यैवाद्वैतं ब्रह्मोररीचक्रुः । अत एवाद्वैतवादिभिरपि भर्तृहरिपादैर्वेदमुपक्रम्य वाक्यपदीये

तस्यार्थवादरूपाणि निश्रित्य स्वविकल्पजाः ।
एकत्विनां द्वैतिनाञ्च प्रवादा बहुधा मताः ॥

इत्युपनिषदामर्थवादत्वमवादि । वेदस्य विधिमन्त्रादिपञ्चात्मकतायाः स्थितावुपनिषदां भूतार्थवादे एवान्तर्भावनीयत्वादिति कृतमनुप्रसक्तेन । एवं च प्रकृते द्वैतमिथ्यात्वे आगमोऽनुकूल एव ननु प्रतिकूल इति ।

अथास्त्वेवं युक्त्युपष्टम्भादिति द्वितीयः पक्षः, नच तथाप्युक्तविरोधस्तदवस्थ एव; युक्तिविरोधे आगमस्य भूतार्थताया वक्तुमशक्यत्वात्, अन्यथा तत्सिद्धिपेटिकाऽसङ्गतेः, अत एव-

युक्त्यानुपेतामसतीं प्रकल्प्य यद्वासनामर्थनिराक्रियेयम् ।
आस्थानिवृत्त्यर्थमगादि बौद्धै र्माहं गतास्तत्र कथञ्चिदन्ये ॥

इति तर्कपादस्था भट्टपादा बुद्धमाहात्म्यमिव मत्वाऽपि युक्तिविरोधेन क्षणिकत्वादिविषयकतदुक्तेर्वैराग्योत्पादनफलकतयाऽर्थवादत्वं वदन्तः सङ्गच्छन्ते अन्यथोक्तरीत्या तस्याः सालम्बनत्वे भट्टाभिधानमत्यसङ्गतं स्यात्, अत एव युक्त्यानुपेतामिति विशेषितमितिचेन्न; भवत्पक्षे प्रकाशाभिन्नतया शुक्तौ रजतादेरपि सत्यत्वे उक्तागमवचनानां गौणार्थतयाऽप्युपपादनासम्भवात्, अन्यथा प्रकाशस्यापि निस्सारत्वप्रसङ्गेन शून्यत्वस्यैवापत्तेः । अथ प्रकाशमानस्य चिद्रूपत्वेऽपि विरोधिपरामर्शान्तरोदयाद् रजतादेर्बाध्यत्वव्यवहारस्तावदस्त्येव, व्यवहारप्रयोजनश्च सम्यग्ज्ञानमिथ्याज्ञानभेदः स्वीकार्य इत्याह स्म शिवदृष्टिव्याख्यायामुत्पलदेवः 'घटज्ञानरजतज्ञानयोर्द्वयोरपि सत्यत्वे सम्यग्मिथ्यात्वभेदस्तर्हि कथ" मित्याशङ्क्योत्तरमिति चेत्सत्यं तादृशज्ञानयो र्विशेषः स्वीकार्यस्तथापि यावत्पर्यन्तं 'नाप्रकाशः प्रकाशते इति चिद्रूपत्वात्सत्यं सर्व' मिति योगाचारशिक्षितानां भवतां जयदुन्दुभिर्नोपरमति तावदसौ न स्वी

कर्तुं शक्यः ।न च वाच्यम्-दृष्टिसृष्टिवादे भवतां यथा 'इदं रजतं नेदं रजतमित्येतयोःप्रतिभासमात्रशरीरत्वाविशेषेऽपि बाध्यबाधकभावः कथञ्चित्, तथा सत्यत्वाविशेषेऽपि कथन्न स्यादिति; यतो मिथ्यात्ववादेऽनुपपन्नो बाध्यबाधकभावो मिथ्यात्वमेवोपोद्बलयेत्, अनुपपन्नत्वमेव हि मिथ्यात्वम्. तदीयपरिष्कारान्तराणामप्यनुपपन्नत्वादनुपपन्नत्वव्याप्यत्वाच्च. मिथ्याभूतस्य च यन्मिथ्यात्वमपि न शक्यं निरूपयितुं तदिदमस्य गण्डोपरि स्फोट इव महामिथ्यात्वम्, एवञ्च वेदान्तिनं प्रति यःकोऽपि यस्य कस्यापि महनीयमतेः पर्यनुयोगोऽभूद्भवति भविष्यति वा, स तत्सिद्धान्तानवबोधविलास एव, चितेर्निधर्मकत्वेनैव पर्यनुयोगाविषयत्वात्, तदन्यस्य च मायिकस्य वा मायाया वाऽनुपपन्नत्वादेव; रक्तबीजासुरवच्च वेदान्तिनाऽन्येन वा येन केनचिदुक्तस्य चिदतिरिक्तस्य निर्वाहकस्य निर्वाह्यस्य वा पदार्थस्य भेदनं द्वैतविभेदाय तर्कासुरशतानि प्रसूते । अधिकं तु शून्यवादे एवोक्तप्रायम् । सत्यत्ववादे तु नैवं शक्यं वक्तुम्, तत्र हि स्तोकतोऽप्यनुपपत्तिः सत्यत्वं न मृष्यते, उपपन्नत्वमेव तद्व्याप्यमेव वा हि सत्यत्वम् ।

एतेन—यत् ''व्यवहारस्तु न कदाचिद्वास्तवोऽपि तु भ्रम एव" इतिशिवदृष्टिवृत्तावुत्पलदेवोदितम्, सम्बन्धसिद्धौ च सम्बन्धबुद्धेर्भ्रमत्वमाशङ्क्य ''विश्वमपीदं चिदभेदाख्यातिमयभ्रान्तिपदमेव, भ्रान्तावपि चास्यां पुनः स्वप्नद्विचन्द्रादिवद्भ्रान्तता नास्ति संवादा'दिति तेनैवोक्तम्. यच्च ''रजतैकविमर्शोऽपी" ति प्रत्यभिज्ञाकारिकावृत्तौ "अपूर्णख्यातिरूपाऽख्यातिरेव भ्रान्तितत्त्वम्, तद्वशेनासद्विपरीतानिर्वाच्यादिख्यातयोऽप्युच्यन्ताम् । ननु सत्यरूप्यज्ञानमप्यपूर्णख्यातिः । ततः किम् ? इदम्, अतः सर्वं भ्रान्तिरित्यागच्छेत् । दिष्ट्या दृष्टिरुन्मिमीलिषति आयुष्मतः, मायापदं हि सर्वं भ्रान्तिः, तत्रापि तु स्वप्ने स्वप्न इव गण्डे स्फोट इवापरेवं भ्रान्तिरुच्यते, अनुवृत्युचितस्यापि विमर्शस्यास्थैर्या"दित्यभिनवगुप्तपादैराकलितम्, यच्चैतैरेव शैवदर्शनानुसारिपरमार्थसारे ''विज्ञानान्तर्यामिप्राणविराड्देहजातिपिण्डान्ताः । व्यवहारमात्रमेतत्परमार्थेन तु न सन्त्येव" "रज्ज्वां नास्ति भुजङ्गस्त्रासं कुरुते च मृत्युपर्यन्तम् । तद्वद्धर्माधर्मस्वर्निरयोत्पत्तिमरणसुखदुःखम् । वर्णाश्रमादि चात्मन्यसदपि विभ्रमबलाद्भवति" इति भाषितम्, तत्सर्वं तेषामेव प्रपञ्चस्य सत्यत्वप्रतिपादकवाक्यै र्व्याहतमिति—हन्तव्यम् ।

किञ्चैतादृशवचोभिः सत्ताद्वैविध्यं भवद्भिर्हृदयङ्गमीकृतमिति व्यज्यते । अथास्त्वेवमेव, प्रातिभासिकव्यावहारिकपारमार्थिकभेदेन सत्तानानात्वोपगमे क्षत्यभावात् । इयांस्तु विशेषः, यद्भवन्मते प्रातिभासिकव्यावहारिकसतोर्मिथ्यात्वम्, मन्मते तु प्रकाशमानतया सत्यत्वम् , सत्येऽपि चोत्कर्षापकर्षप्रथा स्वातन्त्र्यमूला, आहुश्चाभिनवगुप्तपादाः—चेतन एव तु तथा तथा भवति भगवान् भूरिभर्गो महादेवो नियत्यनुवर्तनोल्लङ्घनघनतरस्वातन्त्र्य" इति । असारमिदम्, उत्कर्षापकर्षौ वास्तवौ वाऽवास्तवौ वा, आद्ये स्याद्योऽद्वैताभिनिवेशः, नचोत्कर्षापकर्षयोश्चिदात्मकत्वेऽपि चितो न तदात्मकत्वमिति नाद्वैतक्षतिः; अस्य पक्षस्य द्वैतमिथ्यात्वे पर्यवसानस्य वक्ष्यमाणत्वात् । द्वितीयस्तु विवर्तवादस्यैवोद्गार इति स्वागतं विधीयतां तस्य । न च प्रकाशात्मना वास्तवत्वेऽपि बाह्यरूपेणावास्तवत्वमिति वाच्यम्, बाह्यत्वं नाम प्रकाशभिन्नत्वम्, अन्यस्यासम्भवात्, तथा च तदपि वास्तवं वाऽवास्तवं वेति विकल्पकवलितमेव ।

एतेन—शैवग्रन्थेषु 'विश्वमनतिरिक्तमप्यतिरिक्तमिव भासते' ज्ञानं न भवतो भिन्नं ज्ञेयं ज्ञानात्पृथङ्नहि । अतो न स्वितरत्किञ्चित्तस्मान्नेदो न वास्तवः'इत्यादिव्यवहाराणां विवर्तवादं विनाऽसाङ्गत्यमवगन्तव्यम् ।

यदपि बाह्याभाससम्भिन्नं चैतन्यमेव ज्ञानशक्तिरित्यादिरीत्या ज्ञानेच्छाक्रियाशक्तीनां निरूपणम्, तदप्येतेन निरस्तम्, बाह्यत्वस्य बाह्याभाससम्भेदस्य च चेतने उक्तरीत्यैव विकल्प्यत्वात् । एव-

न्चोक्तशक्तित्रयस्य विवर्तान्तःपातित्वमेवायाति । चिच्छब्दस्तु ब्रह्मपर्याय इति चिच्छक्तेः सत्यत्वमेव, यदाहुः श्रीविद्यारत्नसूत्रविधातारः "आत्मैवाखण्डाकारः" "चैतन्यस्वरूपा चिच्छक्तिः" इति । "सत्यं ज्ञान" मिति श्रुतौ तु चैतन्याभिप्रायेणैव ज्ञानशब्दप्रयोगो नतु बाह्याभाससम्भिन्नाभिप्रायेणेति न तद्विरोधः । वस्तुतस्तु यद्ग्राह्यं तत्वं प्रागुपवर्णितं सैवौपनिषदी चितिः, अन्यत्तु सर्वं शबलान्तःपाति । उक्तञ्च शाक्तदर्शने त्रिपुरारहस्यज्ञानखण्डे—

त्रिपुराऽनन्तशक्त्यैक्यरूपिणी सर्वसाक्षिणी ।
सा चितिः सर्वतः पूर्णा परिच्छेदविवर्जनात्॥ इति

त्रिपुरा हरिहरादित्रिकादपि पूर्वं सद्भावात् । "त्रिमूर्तिसर्गाच्च पुराभवत्वात्त्रयीमयत्वाच्च पुरैव देव्याः । लये त्रिलोक्या अपि पूरणत्वात्प्रायोऽम्बिकायास्त्रिपुरेति नाम" ति प्रपञ्चसारे श्रीभगवत्पादोक्तेः । शक्तिशब्दस्तु तत्वपर्यायः 'स्वरूपप्रतिष्ठा वा चितिशक्तिः कैवल्यम्" "चितिशक्तिरप्रतिसङ्क्रमे" ति योगनिबन्धेषु तथा दर्शनात् । "शक्तयोऽस्य जगत्कृत्स्नम्" इत्यभिप्रायेण त्वनन्तेत्युक्तम्; यथा च शक्त्यान्तराणां विवर्तत्वेऽपि "अनन्तशक्त्यैक्यरूपिणी" त्यनेन "एवं जगच्चिदात्मैकरूपं सत्यमुदीरित" मित्युक्तज्ञानखण्डवाक्यान्तरेण च न विरोधस्तथाऽनुपदं वक्ष्यामः । चितिरिति शक्तिरिति स्त्रीलिङ्गशब्दप्रयोगस्तु भावनाविशेषायत्तः । वस्तुतस्तु निर्विशेषतैव । तदुक्तं तत्रैव—

"न स्त्री न षण्ढो न पुमांस्त्रिपुरा चिच्छरीरिणी ।
अवाङ्मनसगम्या सा चेत्यनिर्मुक्तचिन्मयी" ।।इति

चेत्यनिर्मुक्तेत्यनेन चिद्भास्यस्य मिथ्यात्वं सूचितम् । अतएव पदार्थानां स्वभावस्य दुर्विवेकत्वेन विचारासहत्वमालोच्य तत्र—

"अत एव हि भावानां विचारासहरूपता ।
तथाहि सूर्यालोको हि वस्तूनामवभासकः ॥
उलूकादिदिवान्धानां विपरीतोऽन्धकारवान् ।
प्रकाशत्वान्धकारत्वे न विविक्तेऽनयोः स्फुटे ॥
एवं विषं कस्यचित्स्यादविषं कस्यचिद्भवेत् ।
मनुष्यादेः प्रतिघातकरी भित्तिर्हि लक्ष्यते ॥
योगिनां गुह्यकादीनामप्रतिघातलक्षणा ।
कालो देशश्च दीर्घो यो मनुष्यादिप्रभाविनः ।।
स एव विपरीतो वै देवानां योगिनामपि ।
दर्पणे भासमानस्य दूरादे दूरता यथा ॥
तथैवास्य स्वभावोऽपि विचारे न स्थिरीभवेत् ।
अत आश्रयरूपेण विना नास्ति हि किञ्चन ॥
यदस्तीति भाति तत्तु चितिरेव महेश्वरी।" इति
संवेदनं सत्यमेकं संवेद्यं तत्र कल्पितम् ।
आदर्शनगरप्रख्यं मृषैव प्रभावितम् । इति चोक्तम् ।

अतएवेति । चेत्यस्य व्यभिचारित्वेन चितेश्चानुस्यूतत्वेनेत्यर्थः । यदस्तीत्यादिनाऽधिष्ठानानुवेधोऽभिहितः । संवेद्यं तत्र कल्पितमित्यनेन प्रकाश्यत्वस्य मिथ्यात्वव्याप्यत्वं न तु सत्यत्वव्याप्यत्वमिति सूचितम् । एतच्च परत उपपादयिष्यते । अतएव रहस्यनामसहस्रेऽपि 'मिथ्याजगदधिष्ठाने'त्युक्तम्,

तत्राधिष्ठानपदस्य कर्मव्युत्पत्त्या मत्वर्थीयाच्प्रत्ययेन वाऽध्यस्तार्थकतया बहुव्रीहिः, आपो वा लिङ्गव्यत्ययः। अत्र भास्कररायरत्नान्यशाब्द्याख्यानं त्वविद्याविलसितमेवेति वक्ष्यते। परमानन्दतन्त्रेऽपि—

"यद्यत्रानेकरूपेण भाति तत्तत्र कल्पितम्,
अनेकेष्वेकरूपेण भाति यत्तदकल्पितम् ।
देहोऽनेकः कल्पितःस्याज्ज्ञानं त्वेकमकल्पितम् ॥ इत्युक्तम्।

एवञ्च समानप्रक्रियाऽवलम्बितया शैवसयूथ्यानामपि शाक्तानां प्रपञ्चमिथ्यात्वे न विवादः। तथाच शाक्तयद्वैतशिवाद्वैतयोः समीकरणायैव वेदान्तदर्शने ब्रह्मेति नपुंसकलिङ्गशब्दप्रयोगः। अतएव "नपुंसकमनपुंसकेनैकवच्चे" ति सूत्रयन् पाणिनिःसङ्गच्छते, स्त्रीत्वपुंस्त्वयोस्तदभावयो र्वा ब्रह्मणि समीभावात्। एवञ्च ब्रह्मशब्दः स्वरसतो निर्विशेषमेव तत्त्वं वेदयते इति तत्रैवोत्तरमीमांसायास्तात्पर्यमिति प्रसङ्गादवगन्तव्यम्। सति चैवं भगवत्पादैं र्न परमुपनिषद एव शब्दतोऽपि त्वर्थत आगमानां सिद्धान्तांशा अप्युत्तरमीमांसायां परिमार्जिताः। शङ्करोपज्ञागमविरुद्धार्थवर्णनं च न शङ्करस्यैव युज्यते। शुभाशुभत्वेन कैश्चित्परिभाषितागमेषु समयकौलाद्याचारभेदप्रतिपादनं त्वधिकारिभेदेन सर्वानुकम्पकस्य नासतां व्याहन्तुमीष्टे। भेदभेदाभेदयोः प्राधान्येन केषुचिदागमेषु निरूपणं तु स्थूलारुन्धतीन्यायेनैव।

"प्रकृतिः पुरुषश्चैव नित्यौ कालश्च सत्तम"

इति प्रपञ्चसारोक्तेस्तु न विरोधः, एकस्यैव परमार्थतत्त्वस्य परप्रकृतित्वेन परपुरुषत्वेन परकालत्वेन च भेदविवक्षया तथाऽभिधानात्, उत्तरग्रन्थे प्रकृतेः "स्वसंवेद्यस्वरूपा से"ति पूर्वोक्तचितिरूपतया तस्या एव च "साऽहम्" इत्यात्मरूपपरपुरुषरूपतया सा तु कालात्मना सत्य" गिति प्रपञ्चकलनात्मकतया स्वयमेवोक्तत्वात्। अपरप्रकृत्यादेरपि चितिरूपत्वं वक्तव्यरीत्या सम्भवदुक्तिकमेव। किञ्च प्रकृतिपुरुषकाला अकारोकारमकाराः, ते नित्याः = नियमेन प्रयोज्याः, सन्ध्योपासनादिकं नित्यं कर्मेत्यादौ तथादर्शनादित्यादिना प्रणवादिपरतयोक्तग्रघट्टकस्य पद्मपादाचार्यैर्व्याख्यातत्वाच्च तद्विरोधशङ्काऽपीति दिक्।

## विवर्तवादस्वातन्त्र्यवादयोरेकीकरणप्रकारः।

यदि तु—स्फुरणतत्त्वस्य प्राणुक्तरीत्या व्यापकत्वेन तद्बहिर्भूतस्तावन्न प्रपञ्चः, तदन्तरपि च न नारिकेलफले इव जलम्, तदङ्गन्यदेशस्यैवाभावात्, तदविषयकप्रतीत्यविषयत्वात्, अयं घटः सन्नित्यादावपि स्वरूपतः स्फुरणभानाभ्युपगमात्, कालादिवदन्यत्रोपदर्शितदिशा नीरूपत्वेऽपि चाक्षुषत्वादेरपि सम्भवाच्च, सत्तास्फुरणयोरैक्याच्च, एतेन प्रपञ्चे स्फुरणभेदपक्षः परास्तः, भेदलक्षणप्रमाणानां खण्डने शारदायां निरासाच्च नाप्रयोजकता। नापि समुद्रे इव तरङ्गादिः, सविशेषतापत्त्याऽद्वैतवादानुपपत्तेः, यथा च विशिष्टाद्वैतवादोऽपि नात्र परिघूर्णितुं प्रभुस्तथोक्तं स्वातन्त्र्यवादशेषे, वक्ष्यते च। परिणामवादस्तु बालानामेवालाप इति किं तच्चर्चया। अपि तु दर्पणे प्रतिबिम्ब इव, योगवासिष्ठे आगमेषु च तथाविधस्य बहुलमुपलम्भात्, उक्तं च भगवत्पादैरपि "विश्वं दर्पणदृश्यमाननगरीतुल्यं निजान्तर्गत"मिति। अथ किमेतत्प्रतिबिम्बत्वम्? न तावद्यद्भेदेन भासितुमशक्तमन्यव्यामिश्रत्वेनैव भाति तत्प्रतिबिम्बमिति तन्त्रसारादावभिनवगुप्तपादोक्तं युक्तम्, प्रसिद्धप्रतिबिम्बस्य दर्पणातिरिक्ततया भासनस्यानपलपनीयत्वात्। ननु तद्विभागानर्हत्वे सति तत्पारतन्त्र्यं तस्मिन् प्रतिबिम्बत्वमिति वक्तव्यम्, तद्घटविभागानर्हत्वस्य तद्घटेऽपि सत्त्वेनातिव्याप्तिवारणाय विशेष्यदलम्। नैवम्, घटीयरूपादेर्घटादौ प्रतिबिम्बत्वव्यवहारापत्तेः। तदन्तर्गतत्वं सत्यन्तार्थ इति चेत्, तर्हि तत्तादात्म्यम्, तदा साधनीयमेव, विशेष्यदलविरुद्धञ्च, तत्यागे चोक्तो दोषः। यदि तु तद्विषयकप्रतीतिविषयत्वं वा तत्प्र-

तियोगिकभेदप्रतियोगितावच्छेदकत्वं वा तदन्तर्गतत्वं तदा घटीयरूपादेर्घटादौ प्रतिबिम्बत्वव्यवहारापत्तिस्तदवस्थैव यदि तु तद्विषयकप्रतीत्यविषयत्वम्, तदा प्रतिबिम्बादिशब्दाधीनप्रतीतेर्दर्पणाविषयिकाया अपि सम्भवेनासम्भवोऽव्याप्तिर्वा, यदि तु तद्विषयकप्रत्यक्षाविषयत्वम्, तदापि चिद्विषयकप्रतीतिमात्राप्रसिद्धिरेव, शरीरादावेवोत्पन्नविनष्टयूकादावतिप्रसङ्गश्चेत्यादिकमूहनीयम्। यदि तु रूपादिव्यावृत्तं प्रतीतिसाक्षिकमेव किञ्चित्तदन्तर्गतत्वमुच्यते, तदापि घटाद्यन्तर्गतजलेऽतिव्याप्तिः, तस्य घटनिष्ठतया घटतन्त्रताया अपि सम्भवात्। नन्वेवमारोपितमेवान्तर्गतत्वं वक्तव्यम्, उक्तजले तु न तत्तादृशम्, एवञ्च घटोपहिताकाशेऽतिव्याप्तिवारणायौपाधिकपरिच्छेदशून्यत्वं विशेष्यदलस्थानीयमस्तु, घटोपहिताकाशस्य घटसमानपरिमाणतया तथात्वाभावात्। मैवम्, रिक्तघटादौ जलवत्ताभ्रममादायातिव्याप्तेः, नचौपाधिकपरिच्छेदोऽपि तत्रारोपितः, तत्सामान्याभावश्च विवक्षित इति वाच्यम्, प्रतिबिम्बमात्रे औपाधिकपरिच्छेदारोपेणासम्भवप्रसङ्गात्। ननूपाधिसमानपरिमाणशून्यत्वविवक्षायां नैष दोषः, प्रतिबिम्बस्याव्याप्यवृत्तित्वेन तथात्वात्, अतएव – स्फटिके लौहित्यस्य धर्मस्यैव व्याप्यवृत्तिःप्रतिबिम्बः, धर्मारोपस्य धर्म्यारोपव्याप्यत्वेऽपि धर्मप्रतिबिम्बस्य धर्मिप्रतिबिम्बव्याप्यत्वानङ्गीकारादिति भामतीकृन्मतमसङ्गतम्। मुखाद्यपेक्षयाऽल्पपरिमाणेऽपि दर्पणादौ मुखादेः प्रतिबिम्बस्याव्याप्यवृत्तेरेव दर्शनेन स्फटिके प्रतिबिम्बेऽपि व्याप्यवृत्तित्वमित्यत्र नियामकस्य दुर्भणत्वात्। न च धर्ममात्रबिम्बकत्वमेव नियामकम्; धर्मिणं विहाय धर्म एव केवलः प्रतिबिम्बत इति कः श्रद्दधीत, न चानुभवबलादेवैवम्, अनुभवबलस्यैव निरूप्यमाणत्वात्। न च स्फटिकस्य सर्वतः स्वच्छत्वमेव नियामकम्, दर्पणादेस्तु पाश्चात्यभागो न स्वच्छ इति वाच्यम्, स्वच्छेऽपि सर्वस्मिन्नंशे प्रतिबिम्बानुदयादिति चेन्न, दर्पणाद्यपेक्षया विलक्षणस्वच्छताशालितया स्फटिके सर्वांश एव प्रसरत्प्रतिबिम्बस्य शक्यसमर्थनतयोपाधिसमानपरिमाणशून्यत्वाभावेन तत्राव्याप्तेः. महति कलसे आरोपिते स्वल्पजले उपाधिसमानपरिमाणशून्यतयाऽतिव्याप्तेश्च। तस्मात्प्रतिबिम्बत्वमनुभवविशेषसाक्षिकतयैव निरूप्यम्, अनुभवश्च सार्वजनीनो दर्पणादिस्थल एवेति चित्प्रतिबिम्बत्वं घटादौ कथं मुख्यम्, आगमादौ तथाभिधानस्याभिप्रायान्तरालम्बितया वक्ष्यमाणरीत्या सम्भवात्। प्रतिबिम्बसमानसंस्थानकबिम्बाभावाच्च। लोकसिद्धबिम्बाभावेऽपि प्रतिबिम्बलक्षणयोगादेव जगतश्चिति प्रतिबिम्बत्वम्, बिम्बस्य निमित्तविधयैवापेक्षणीयतया स्वातन्त्र्यशक्त्यैव निर्वाहादित्येव ह्यभिनवगुप्तपादादिभिरुदितम्, न च प्रतिबिम्बलक्षणासम्भवे तथा वदितुं शक्यमिति चेत्सत्यमेतत्, तद्विषयकप्रतीतिविषयत्वायोग्यत्वस्य तद्भेदव्याप्यत्व एव तात्पर्यात्। व्युत्पादितञ्चैतद्विज्ञानवादे। तथाच दर्पणप्रतिबिम्बयोरैक्यमिव स्फुरणप्रपञ्चयोरप्यैक्यमितिस्थितौ भेदोऽस्तु मिथ्यैवेत्युच्यते, तदा प्रकाशविषयत्वं सत्यत्वव्याप्यमिति प्रस्थितमेवेति भेदिनामपि मिथ्यात्वं न्यायानीतम्, तथाहि— दर्पणे प्रतिबिम्ब इव चितौ प्रतीयमानोऽयं प्रपञ्चो यथोक्तरीत्या न तद्भिन्नः, तथा न तदभिन्नोऽपि, दर्पणस्य सर्वदा प्रतिबिम्बवत्त्वस्येव चितेरपि सर्वदैकाकारप्रपञ्चवत्त्वस्यापत्तौ वस्तूनां निमेषोन्मेषयोरनुभूयमानयोरपलापापत्तेरित्यहो दुर्गतिरस्य प्रपञ्चस्य दीनस्य।

यदि तु—एतद्दोषपरिजिहीर्षया दर्पणो न प्रतिबिम्बात्मकोऽपि तु प्रतिबिम्ब एव दर्पणात्मकः, ननु साङ्ख्येषु वेदान्तिषु च केषुचित्सत्सु कथमेतदपि, तैर्बुद्ध्यादौ चैतन्यस्यैव प्रतिबिम्बाभ्युपगमात्। अथ कोऽत्रातिभारः, प्रतिबिम्बस्य बिम्बात्मकत्वे हि तस्य बुद्ध्याद्यात्मकत्वमसम्भवदुक्तिकं स्यात्, तस्य बिम्बातिरिक्तत्वे तु बुद्ध्याद्यनधिकसत्ताकत्वस्यैव सम्भवेन बुद्ध्याद्यभिन्नत्वेऽपि क्षत्यभावात्, एवञ्च बिम्बातिरिक्ततायाः प्रतिबिम्बे समर्थनेनैव निर्वृतिरस्तु, किञ्च चैतन्ये बुद्ध्यादेरेव प्रतिबिम्ब इत्यस्तु,

जीवेश्वरविषयं प्रतिबिम्बवादमनादृत्यावच्छेदवादोपगमेऽपि क्षत्यभावात्, प्रक्रियाग्रहिलता हि न तत्त्वविदामिति चेत्तथापि प्रतिबिम्बस्य बिम्बात्मकत्वे प्रतिबिम्ब एव दर्पणात्मक इत्यशक्यवचनमेवेति चेन्न, प्रतिबिम्बत्वेन रूपेण प्रतिबिम्बस्य बिम्बात्मकतायाः केनापि वक्तुमशक्यत्वात्, तथाहि "दर्पणाभिहता दृष्टिः परावृत्य स्वमाननम्। व्याप्नुवत्याभिमुख्येन व्यत्यस्तं दर्शयेन्मुखम्" इति नयेन दर्पणादौ न मुखव्यक्त्यन्तरमस्ति तज्जनकशून्यत्वात् शशशिरसि विषाणवत्, उपाध्यन्वयव्यतिरेकयोरुपाधिसम्बन्धोत्पत्तिमात्रोपक्षीणत्वान्न प्रतिबिम्बोत्पत्तिसाधकता, न च दर्पणेन प्रतिफलनस्य वृत्तत्वादिदानीं दर्पणं विनापि स्वमुखग्रहणं स्यादिति तन्त्रालोकटीकाकृदुक्तं युक्तम्, दर्पणसद्भावदशायामेव प्रतिफलनस्याभ्युपगमेन दर्पणनिवृत्तौ तस्यापि निवृत्तेः। न च "विपर्यस्तैस्तु तेजोभिर्ग्राहकत्वमागतैः। रूपं दृश्येत वदने निजे न मकुरान्तरे" इत्यभिनवगुप्तपादोक्तं साम्प्रतम्, स्वमुखे एव दर्पणस्थत्वादिप्रकारकभ्रमोदयात्। न च शिलादिसंयोगादपि नायनरश्मिप्रतिघातसम्भवेन दर्पणोपयोगो न शक्यसमर्थन इति युक्तम्, स्वच्छस्यैव प्रतिबिम्बप्रत्यक्षप्रयोजकताया भवतोऽप्यनुमतत्वेन स्वच्छसंयोगत्वेनैव प्रतिघातं प्रति हेतुताया वदितुं शक्यत्वात्। न चालोकस्य स्वच्छत्वात्तस्मिन् सति नभसि न कस्याप्यवकाशः स्यादिति वाच्यम्, नायनतेजसि वदनसंयोगजनकप्रतिघातविशेषं प्रत्येव तथाहेतुत्वाभ्युपगमात्,। एवं सत्यालोकेऽपि प्रतिबिम्बोऽवलोक्येतेति तु तत्र प्रतिबिम्बोत्पत्तिपर्यनुयोगेन समानसमाधानम्, स्वच्छत्वं तु प्रतिबिम्बप्रत्यक्षताप्रयोजको धर्मविशेष एव, एवं च प्रतिबिम्बस्य बिम्बाभेदे प्रमाणप्रश्ने यद्यपि प्रत्यभिज्ञासद्भावे विवाद एव, तत्सत्त्वेऽपि तस्या अत्र प्रामाण्ये विप्रतिपत्तिरेव, यत्किञ्चित्साम्यविषयकतयैवोपपत्तेः, भिन्नदेशस्थत्वादिप्रतीतेर्जागरूकत्वात्, तथापि प्रतिबिम्बो बिम्बाभिन्नो बिम्बाजनकाजन्यत्वादिति मानं नावमाननीयमिति बिम्बप्रतिबिम्बैक्यमतमाश्रित्य वक्तव्यम्।

परन्त्वसारमेतत्, बिम्बाभेदसिद्धिं विना बिम्बाजनकाजन्यत्वासिद्धेः, नच जनकान्तरानिरूपणेन तत्सिद्धिः; मुखसन्निहितदर्पणादेः कारणताया वक्तुं शक्यत्वात्, माया चेदानीं भवतो क्व गता येन साऽपि प्रातिभासिकस्य तस्य प्रसवायोपाधिसान्निध्यरूपदोषान्तराविष्टा न कल्पेत, नचोपाधिसम्बन्धमात्रोत्पत्त्यैवान्यथासिद्धिरिति वाच्यम्, धर्मिणोऽपि प्रत्यङ्मुखत्वादिविशिष्टस्यान्यस्यैवोपलम्भात्, न च—प्रत्यङ्मुखत्वादिकमौपाधिकम्, एवञ्च स्वाभाविकविरुद्धधर्मानधिकरणत्वेन बिम्बाभेदः साधनीय इति—वाच्यम्, यतः प्रतिबिम्बत्वविशिष्टस्य कश्चित्स्वाभाविको धर्मोऽस्ति न वा, नचेत्, न परं बिम्बेनैवापि तु सर्वेणैव प्रतिबिम्बस्यैक्यमेवेति दर्पणात्मकत्वोक्तौ कथं प्रद्वेषः, आद्ये तु कोऽसौ धर्मः ? बिम्बगत इति चेन्न, अभेदसिद्धिं विनाऽसिद्धेः, अन्यश्चेत्, बिम्बधर्मविरुद्धो न वा, आद्ये कथमभेदः, द्वितीयस्तु बिम्बगत एव स्यादिति कथमभेदसिद्धिं विना निराधारि, एवञ्च प्रतिबिम्बत्वं यदि स्वाभाविकं तर्हि बिम्बत्वविरुद्धमेवेति स्वरूपासिद्धिः, यदित्वौपाधिकम्, तर्हि कस्यादः स्वाभाविकमिति वक्तव्यम्, कस्यचित्स्वाभाविक एव हि धर्मोऽन्यस्यौपाधिको लोके व्यवह्रियते। सर्वथापि बिम्बाभेदे विप्रतिपन्नः स्वाभाविकविरुद्धधर्मानधिकरणतां न मन्तुमर्हति। न च तद्गतासाधारणधर्मवत्त्वं तदभेदसाधकमत्र; देवदत्तीयचित्रादेरपि देवदत्तेन कुतो नैक्यमित्यनेन समानयोगक्षेमत्वात्। तस्माद्दर्पणस्थत्वस्य बिम्बेऽलीकस्यासम्भवेन सम्बन्धं विना च विशिष्टबुद्ध्यसम्भवेन तस्यासत्यत्वे सम्बन्धिनोऽपि तथात्वमावश्यकमनुभवाद्यनुरोधाच्च न बिम्बात्मकत्वमित्येव युक्तम्। नायनतेजसि वदनसंयोगजनकप्रतिघातं प्रति स्वच्छसंयोगत्वेन हेतुतेत्यपि नातीव मनोज्ञम्, अस्वच्छमूर्तसंयोगस्यापि तादृशप्रतिघातजनकताया औचित्यावर्जितत्वात्,

तस्मात्प्रतिबिम्बप्रत्यक्षताप्रयोजकत्वमपि स्वच्छे बिम्बातिरिक्तप्रतिबिम्बाधिकरणतयैव शक्यमुपपादयितुमिति युक्तमेवैतद्, यद्दर्पणो न प्रतिबिम्बात्मकोऽपि तु प्रतिबिम्ब एव दर्पणात्मकः, उ-

त्युक्तेः, एवं स्फुरणं न प्रपञ्चात्मकम्, प्रपञ्च एव तु स्फुरणात्मकः, एवमेव च "सर्वं खल्विदं ब्रह्म" इत्यादिश्रुतीनां "चितिश्चेत्यं चितिरहं चितिः सर्वं चराचर" मित्याद्यागमिकवचसाञ्च सामञ्जस्यम्। अतएव "नहि शिवो घटादिरूपोऽपि तु घटादिः शिवरूप" इति शिवदृष्टिव्याख्यायामुत्पलदेवैरुक्तम्। ब्रह्मसिद्धौ मण्डनमिश्रैश्च ब्रह्मणः सर्वात्मत्वे सर्वस्योच्छेदासम्भवेन नित्यसंसारिताप्रसङ्गमाशङ्क्य सर्वं ब्रह्मैव, न तु ब्रह्म सर्वमेव, ब्रह्मैव च घटादीनां परमार्थं स्वरूपमित्युक्तम्। ईदृशाभेदवादित्वादेव च तैस्तर्ककाण्डे 'आहु र्विधातृ प्रत्यक्षं न निषेद्धृ विपश्चित" इत्यादिना भेदखण्डनायैव पराक्रान्तम्, तदनुसारिभि र्वाचस्पतिमिश्रैरपि समन्वयसूत्रभामत्यां "अभेदोपादानैव भेदकल्पने" त्यभेदस्य पारमार्थिकत्वं सङ्गिरद्भिस्तथैव सूचितम्, एवं खण्डनकारैरपि "पारमार्थिकमभेदमिच्छन्तोऽपी" ति भणद्भिस्तदेवानुसृतम्, अन्यथा सर्वस्य ब्रह्मात्मकत्वाभावे सर्वाभेदस्यापि ब्रह्मात्मकत्वासम्भवेन तस्य पारमार्थिकत्वोक्ते र्निर्दलत्वापत्तेः। एतेनानन्तशक्त्यैक्यरूपिणीति प्रागुक्तं

त्रिपुरा त्रिविधा देवी ब्रह्मविष्ण्वीशरूपिणी।
ज्ञानशक्तिः क्रियाशक्तिरिच्छाशक्त्यात्मिका प्रिये ॥"

इति चितौ ज्ञानशक्त्याद्यभेदात्मकत्वाभिप्रायकं वामकेश्वरतन्त्रोक्तञ्च व्याख्यातम्। अतएवैतेषां मण्डनमिश्रादीनां त्रयाणामपि मते 'नेह नानास्ती" त्यादिश्रुते र्न प्रपञ्चमिथ्यात्वार्थकत्वम्, अपि तु सर्वं ब्रह्माभिन्नमित्यर्थकत्वमिति व्युत्पादितं प्रत्यक्षादिबाधोद्धारोपक्रमे शारदायाम्, बृहदारण्यके च "स यथा दुन्दुभेर्हन्यमानस्ये" त्यत्र भाष्ये श्रीभगवत्पादैरपि 'चिन्मात्रानुगमात्सर्वत्र चित्स्वरूपतैव, यत्स्वरूपव्यतिरेकेणाग्रहणं यस्य तस्य तदात्मत्वमेव लोके दृष्ट' मित्युक्तम्। एवञ्च ज्ञेयस्य ज्ञानाभिन्नत्वं न केवलं योगाचाराणां शैवाणां शाक्तानां वाऽपि तु वेदान्तिनामपि सम्मतमेवेत्युच्यते,

तदा-ईदृशाभेदो विश्वस्य पारमार्थिकत्वं व्युदस्य न शक्याभ्युपगम इति विवर्तवादमशरणीकृत्य न निस्तार इति सिद्धमद्वैतसिद्धे द्वैतमिथ्यात्वसिद्धिपूर्वकत्वम्।

तथाहि-प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वादिरूपं मिथ्यात्वमाचक्षते तद्विदः। तत्र प्रतीतिर्यद्यपि लक्षणे सामान्यरूपेण प्रविष्टा, अन्यथा दलान्तरासङ्गत्यापत्तेः, तथापि वस्तुगत्या प्रपञ्चे प्रतीयमानत्वं वृत्तिविषयत्वं वा चिदविषयकप्रतीत्यविषयत्वं वा, आध्यासिकसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धेन चिद्विशिष्टत्वरूपं चिन्न्यूनसत्ताकत्वनियतं चिद्विवर्तत्वं वा, तत्र प्रथमे न कस्यापि विप्रतिपत्तिः, द्वितीयस्तु समान आवयोरित्युपपादितम्, "सर्वप्रत्ययवेद्येऽस्मिन् ब्रह्मरूपे व्यवस्थिते" इति चाहुर्वेदान्तिनः, अन्यथाऽधिष्ठानानुवेधस्यानुपपत्तेः। तृतीये तु विवादः, परन्तु घटादौ चिदविषयकप्रतीत्यविषयत्वेऽपि चितो घटाद्यविषयकप्रतीतिविषयत्वदर्शनेन घटादेश्चिदभिन्नत्वं चित्सत्ताऽतिरिक्तसत्ताशून्यत्वमेवायाति, एतच्चाप्रसिद्धप्रतियोगिकाभावाभ्युपगमेन, अन्यथा तु सिद्ध्यसिद्धिव्याघातवारणाय भेदसम्बन्धावच्छिन्नप्रतियोगिताकचिदभाववत्त्वमिति यथाश्रुतमेव, मिथ्याभेदस्योक्तरीत्या प्रसिद्धत्वात्, तत्राद्ये सम्प्रतिपत्तिरेव। द्वितीये तु यदि भेदसम्बन्धेन घटादौ चिन्नास्ति, तर्हि केन सम्बन्धेनास्तीति वक्तव्यम्, न तावन्न केनापि सम्बन्धेन, घटादेरलीकत्वप्रसङ्गात्, नाप्यभेदसम्बन्धेन, चिति घटाद्यविषयकप्रतीतिविषयत्वाभावप्रसङ्गात्, नापि विषयतासम्बन्धेन, तस्य चतुर्थे शारदायां निरस्तत्वात्, नच चिदात्मको विषयतासम्बन्ध इति न निरासभाजनम्; सम्बन्धस्य सम्बन्ध्यात्मकताया अप्रामाणिकत्वात्, तस्मात्परिशेषादाध्यासिकसम्बन्धावच्छिन्नप्रतियोगित्वसम्बन्धेनैव घटादौ चिदस्तीति वक्तव्यमिति विजयते विवर्तवादः। एवं च त्रैकालिकनिषेधप्रतियोगित्वमप्यागतमेव, तथाहि-चिद्भिन्नत्वेन नास्ति प्रपञ्च इति भवद्भिः स्वीकृतमेव, चिद्भिन्नस्वरूपत्वं च जडत्वम्, दृश्यत्वमप्युक्तरीत्या तन्नियतमेव,

तथाच जडत्वदृश्यत्वाद्यवच्छिन्नप्रतियोगिताकाभावेन वेदान्त्युक्तेन किमपराद्धम्, जडत्वादेश्च घटत्वादिव्यापकत्वेन व्यापकधर्मावच्छिन्नप्रतियोगिताकाभावे च व्याप्यधर्मावच्छिन्नप्रतियोगिताकाभावस्यावश्यकत्वेन घटवति घटत्वाद्यवच्छिन्नप्रतियोगिताकाभावोऽपि दुर्वार एव। नच विशेषस्य सद्भावेऽपि समान्यरूपेण विशेषाभावेन सिद्धसाधनम्; तस्याप्रामाणिकत्वात्। द्रव्यत्वेन घटो नास्तीत्यादौ प्रतियोगितायां घटत्वाद्यवच्छिन्नत्वस्यापि भानेन घटवति तदसम्भवात्, आध्यासिकसम्बन्धसिद्धौ साक्षादपि विशेषधर्मावच्छिन्नप्रतियोगिताघटितमिथ्यात्वसाधने उपद्रवाभावाच्चेति।

एवं स्थिते प्रपञ्च गर्भीकृत्य वर्तमानतया तत्र स्वनिष्ठधर्मविशेषसङ्क्रामकतया स्वच्छतया च चितेर्दर्पणत्वं चिदन्तर्गततयाऽनिर्वाच्यतया सङ्क्रमितचिद्गतधर्मविशेषतया च प्रपञ्चस्य प्रतिबिम्बत्वमित्येवागमेषु दर्पणप्रतिबिम्बन्यायतात्पर्यम्। यच्च प्रतिबिम्बमधिकृत्योक्तमभिनवगुप्तपादैः—

"न देशो नो रूपं न च समययोगो न परिमा।
न चान्योन्यासङ्गो न च तदपहानि र्न घनता॥
न चावस्तुत्वं स्यान्नच किमपि सारं निजमिति,
ध्रुवं मोहः शाम्येदिति निरदिशद्दर्पणविधि"रिति।

तदनिर्वाच्यतोद्गारभूतमपि प्रकाशविषयत्वस्य सत्यताव्याप्यताऽभिमानेन प्रतिबिम्बस्य सत्यतोक्तिसहितमनुपादेयमेव, तादृशाभिमानस्य निराकृतत्वात्। प्रतिबिम्बस्य बिम्बरूपतायादिनापि सूर्यकस्य सूर्यवद्दुर्दर्शित्वापत्तिवारणाय सूर्यसाम्मुख्यमेव दुर्दर्शताप्रयोजकमित्यभिदधता प्रतिबिम्ब एव बिम्बात्मको नतु बिम्बोऽपि प्रतिबिम्बात्मक इत्यवश्यं स्वीकर्तव्यम्, अन्यथा सूर्यकसाम्मुख्ये सूर्यसाम्मुख्यमप्यस्तीत्युक्तापत्तिरनवस्थैवेति प्रतिबिम्बस्य मिथ्यात्वं तन्मतेऽप्यावश्यकमेवेति।

एतेन—"अस्यां परिणतायां तु………" इतियोगिनीहृदयचतुश्शत्युक्त्या तान्त्रिकाणां शक्तिपरिणाम एव जगत्, 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्' 'आत्मकृतेः परिणामात्'," 'तदनन्यत्वमारम्भणशब्दादिभ्य' इत्यादिवैयासिकसूत्राणां च परिणामवादे एव स्वरसात्। शक्तिश्चोपनिषत्सम्मतं चैतन्यमेव, सैवानन्तरूपत्वान्मायेत्युच्यते. 'पराऽस्य शक्ति र्विविधैव श्रूयते' 'माया चाविद्या च स्वयमेव भवती'तिश्रुतेः, एकस्यैव तत्त्वस्य धर्मधर्मित्वकल्पनया 'अस्ये'ति व्यपदेशः, वस्तुतस्तु शक्तिशक्तिमतोरैक्यमेव, एवञ्च चित्परिणामत्वाच्चिद्रूप एव प्रपञ्चः सत्यश्च, मृद्घटयोरिव च ब्रह्मजगतोरपि वस्तुतोऽत्यन्ताभेद एवेति 'सर्वं खल्विदं ब्रह्मे'ति सामानाधिकरण्यं यथाश्रुतमेव नतु बाधायाम्, अद्वैतश्रुतिसामञ्जस्यमपि भेदमात्रस्य मिथ्यात्वोपगमात्, एवञ्च सर्वस्य जगतो मिथ्यात्वकल्पनं वेदान्तिनामनर्थकमेवेति शाम्भवानन्दकल्पलतानुसारिणा भास्कररायेण सेतुबन्धादौ तत्र तत्रोक्तं परास्तम्।

तथाहि—चितिजगतोः परिणामपरिणामिभावो मृद्घटादिसाधारणो लौकिको वाऽलौकिको वा, आद्येऽप्येकदेशेन वा, सर्वात्मना वा, आद्येऽनित्यत्वस्य द्वितीये च स्वरूपोपमर्दस्यापि प्रसङ्गः, एकरसस्य ब्रह्मणो नानारसप्रपञ्चपरिणामित्वासम्भवश्च, न च शक्तिबलात्स्यात् तस्या ब्रह्मातिरिक्ताया अनङ्गीकारात्। सदसत्कार्यवादयोःकार्यकारणभावमात्रस्य च शारदायां निरस्तत्वाच्च। द्वितीये त्वलौकिकत्वं तन्नियामकञ्च भवता जन्मसहस्रैरपि न निर्वक्तुं शक्यते। तस्मादन्यानपेक्षया तेन तेन रूपेण भासमानत्वरूपं स्वातन्त्र्यमेव सकलागमसिद्धं स्वीकर्तव्यम्। इदमेव चाविकृतपरिणामशब्देनाप्युच्यताम्। "स्वाभाविकी स्फुरत्ता विमर्शरूपाऽस्य विद्यते शक्तिः। सैव चराचरमखिलं जनयति जगदेतदपि च संहरती"ति सौभाग्यसुधोदयोदितमपीममेवार्थमुपोद्बलयति, स्वाभाविकीति। अन्यानपेक्षेत्यर्थः। एतच्चालोचयिष्यते। जनयति = उत्पन्नतया भासयति। संह-

रति = संहृततया भासयति। कामकलाविलासटीकायोगिनीहृदयदीपिकाकृदादीनामपीहैव निर्भरः। "चितिः स्वतन्त्रा विश्वसिद्धिहेतुः" "स्वेच्छया स्वभित्तौ विश्वमुन्मीलयति"ति शक्तिसूत्रयोरप्यत्रैव स्वरसः। नन्वत्र परिणामवादगन्धोऽपि. परिणामोऽच्छया घटादिकमुत्पद्यत इति हि कोऽनुमनुते। अत "अस्यां परिणतायां तु......"इति वाक्यस्याप्यत्रैव तात्पर्यमूहनीयम्, अन्यथा प्रागुपदर्शितागमयुक्तिनिकरविरोधात्। एवञ्च दर्पणप्रतिबिम्बन्याय एव पर्यवसानम्, स च विवर्ततामनालिङ्ग्य न प्राणान् धारयितुं पारयतीत्युक्तमेव। तथा च भेदस्येव प्रपञ्चान्तरस्यापि मिथ्यात्वं दुर्वारम्, उक्तन्यायसाम्यात्, भेदस्य मिथ्यात्वे तत्संसृष्टस्य सत्यत्वोदतेर्व्याहतत्वाच्च। तस्माद्ग्राह्याग्राह्यविवेकन्यायेन.संसृष्टचिन्मात्रमेव सत्यं वक्तव्यमिति कृतं घटत्वाद्यवच्छिन्नस्य सत्यताप्रतिज्ञानदुराग्रहेण। ब्रह्मण एवैकस्य सर्वधर्मधर्मित्वेऽपि घटत्वपटत्वादेः सत्यत्वे समावेशासम्भवेन तत्कल्पितत्वस्यावश्योदेयत्वेन कथं भेदस्यैव कल्पितत्वम्। विश्वसत्यत्वाभिनिविष्टचेतसस्तु झगित्येव विवर्तवादे प्रवेशो न सम्भवतीति तदनुग्रहाय परिणामवादो वैयासिकसूत्रेषु पूर्वभूमितयोपनिबद्ध इति व्यक्तं सङ्क्षेपशारीरकादौ। अनया च रीत्यात्रापि परिणामोक्तिः समन्वीयमाना न विरोधमावहति।

अत्र चायं निर्गलितोऽर्थः। विश्वं चिदभिन्नमित्येका दृष्टिः, चिच्च विश्वाभिन्नेति द्वितीया, तत्राद्योन्मीलने जगति सत्यत्वबुद्धिःप्ररोहति, द्वितीयोन्मीलने तु मिथ्यात्वमतिः, द्वयोरेवोन्मीलने तु चिदेवैका परमार्थसती तदन्यदसत्यमिति निर्मला मतिररति। एवञ्च स्वरूपेण मिथ्याभूतोऽपि प्रपञ्चश्चिदात्मना सत्य एवेत्यभिप्रायेण प्रामाणिकग्रन्थेषु क्वचित् प्रपञ्चे सत्यत्वमप्युच्यमानं न नः किञ्चिद्विरुणद्धि, एतेन—"एवं जगच्चिदात्मैकरूपं सत्यमुदीरित"मिति प्रागुद्धृतं त्रिपुरारहस्यवाक्यं व्याख्यातम्। परन्तु चिदात्मना सत्यत्वोक्तिः ग्राह्याग्राह्यविवेकन्यायेन चित एव सत्यत्वे पर्यवस्यतीति न विस्मर्तव्यम्।

पूर्णाहन्तेत्यादिशब्दस्तु चैतन्यदीपनेन जडस्वरूपेदन्ताव्यावृत्तिमात्रप्रदर्शनाय प्रयुज्यते, न तु तत्राहंक्रियापि विवक्षितेति भ्रमितव्यम्, अन्यथाऽपरिच्छिन्नत्वार्थकपूर्णपदवैयर्थ्यापत्तेः, तद्धि देहादिगताहन्ताव्यावर्तनाय। एवमकृत्रिमाहमितिं चमत्कारसततयो महेश्वर इत्यादावपि द्रष्टुमुचितम्। अकृत्रिमत्वं चैतन्ये स्वाभाविकत्वम्। सततोदिताहमितिप्रत्ययविवक्षा त्वालयविज्ञानधारावद्बुद्धेरेव शोभते।

यस्तु सर्वदैव चिदात्मनः सृष्ट्यादिपञ्चविधकृत्यकारित्वं विश्वमयत्वञ्चाभिधाय ब्रह्मवादात्स्वमतस्य विशेषं व्युत्पादयति स स्ववचनार्थमेव नावबुध्यते, तथाहि सर्वदेत्यस्य सर्वकालावच्छेदेनेत्यर्थः, कालश्चात्र बाह्य एव, अन्यथाऽवच्छेद्यावच्छेदकभावानुपपत्तेः, तथा चाविद्यापदे एवेदमिति को विरोधः. चिन्मात्रे स्वष्टाग्निशतत्वात्मना भवद्भिरपि स्वीकृते 'सर्वदे'त्यस्यैवाभावेन कथं तादृशविधेयोद्देश्यत्वम्। एवञ्च परमार्थतो विश्वोत्तीर्णत्वेऽप्यविद्यातो विश्वमयत्वमित्यकामेनाप्यालम्बनीयमिति।

एवं सति केवलस्वव्यवहारे स्वात्मकविश्वात्मना व्यवहारे चेतरानपेक्षस्वरूपं स्वातन्त्र्यमपि न वैषम्यमातनोति, मिथ्याभूतस्यापिप्रपञ्चस्योक्तरीत्या चिदात्मकताया वक्तुं शक्यत्वात्, वस्तुत इतराभावेन चेतरानपेक्षताया अप्यनिवार्यत्वात्। परन्त्वेतदविद्यादशायामेवेति परमार्थतश्चैतन्यं वेदान्तिसम्मतमेवायाति, अन्यथा तु विमर्शे वेद्यांशनिवेशे विमर्शस्यैव प्रकाशात्मकत्वं ननु प्रकाशस्य विमर्शात्मकत्वमित्युक्तरीत्यैव द्रष्टव्यम्। सति चैवं वेदान्तिसम्मतमायायामेव पर्यवसानम्, सा हि यदि सत्या तर्हि चिदात्मनैव, यदि तु मिथ्या तर्हि स्वरूपेणैवेत्यत्र नेदानीं भवद्भिर्विप्रतिपत्तव्यम्. उक्तञ्चेच्छाज्ञानक्रियाशक्तीनां चितिशक्तिविवर्तत्वमिति तास्वेव मायात्वम्, यदि तु तासां जन्यवृत्तिविशेषावच्छिन्नचिद्रूपत्वं वा जन्यवृत्तिविशेषरूपत्वमेव वेत्याग्रहः बाह्याभाससम्भिन्नचिद्रूपतादेरप्यत्रैव पर्यवसानात्, मायायास्तु मूलकारणतयाऽना-

दित्वमेवोचितम्, 'अजामेकां' 'स्वाभाविकी ज्ञानबलक्रिये' त्यादिश्रुतिस्वारस्यात्, अतएव संस्काराणामेव मायात्वमित्यसङ्गतम्, जन्यस्यागन्तुकत्वेनास्वाभाविकत्वात्, अनिर्वाच्यत्वपोषकत्वसाम्येऽप्यनवस्थाद्यपेक्षयाऽस्माश्रये एव लाघवादित्यालोच्यते, तदा षट्त्रिंशतत्त्वान्तर्गता प्रकृतिरेव स्वरूपावारकमायातिरेकिणी नोपगन्तव्या, क्रमविपर्यासः परमतिरिच्यताम्। उपगम्यतां वा सा, सत्त्वरजस्तमसामनपलपनीयत्वात्, तथापि प्रोक्तमायाया आवश्यकत्वमेव, भेदप्रथायां तु मायाशब्दप्रयोगोऽविद्याकार्येऽप्यध्यासे "तमेतमध्यासं पण्डिता अविद्येति मन्यन्ते" इत्यादावविद्याशब्दप्रयोगवत्। एवञ्च मायासमर्पकप्रागुदीरितश्रुत्यादीनामन्यथाकरणनिराकरणमकारि। निराक्षपाततया तु व्यपदेशिवद्भावेन भावुकानां स्फुरत्तायामपि शक्तिव्यवहारं न वारयामः। प्रपञ्चस्य सोपादानत्वे तु नास्माकमप्याग्रहः, परन्तु निरुपादानत्वेऽपि नासाविति विशेषः; अनिर्वाच्यवादित्वात्। कस्यापि पक्षस्योपपादनसम्भवेऽनिर्वाच्यत्वभङ्गप्रसङ्गात्। योगिनिर्मितघटादेरिव मृदादिना कुलालादिनिर्मितघटादेरपि दर्शनेन सर्गाद्यकालिककार्याणां सोपादानत्वानुपादानत्वसन्देहेनैकशेपस्य कर्तुमशक्यत्वात्। न च परमाणुवादस्य निरस्तत्वेन मायायाश्चैकजातीयायाः स्थूलसूक्ष्मादिकार्योपादानत्वासम्भवेनानुपादानत्वनिश्चय इति वाच्यम्; मायाया एकजातीयत्वस्यैव निर्णेतुमशक्यत्वात्। न च नानाजातीयत्वे तस्या विरुद्धधर्माध्यासेन नानात्वप्रसङ्ग इति वाच्यम्, तस्या नानाजातीयताया अप्यनुपगमात्। तर्हि कीदृशी सा? कथं च जीवति? किञ्च भुङ्क्ते? स्वरूपतो दुर्निरूपाऽपि चितिचरणार्चनरततया तयैवानुप्राणिता निराहारैव जीवतीति जानीहि। एतेन कार्यं चेदवगम्येत किं कारणपरीक्षया। कार्यं चेन्नावगम्येत किं कारणपरीक्षये"ति न्यायानुकूल्यमाकलितम्। अन्यथा तस्या अभावे ब्रह्मण एव स्वभावतो द्वैतस्पृष्टस्य पूतिकूष्माण्डायितत्वप्रसङ्गादिति स्वयं मलिनापि सा ब्रह्मणो नैर्मल्यसविधात्रीति सर्वमवदातम्।

एतेन—विमर्शमधिकृत्याजडप्रमातृतासिद्धौ "एतेन शान्तब्रह्मवादः कटाक्षितः" इति वदन्त उत्पलदेवाः, परात्रिंशिकायां "अन्तर्गतविश्ववीर्यसमुच्छलत्तात्मकविसर्गविश्लेषानन्दशक्त्यैक्यघनं ब्रह्म न तु वेदान्तपाठकाङ्गीकृतकेवलशून्यवादाविदूरवर्तिब्रह्मदर्शने इवे"ति भणन्तोऽभिनवगुप्ताः, प्रत्यभिज्ञाहृदयस्पन्दनिर्णय-स्पन्दसन्दोहेषु "ईश्वराद्वयदर्शनस्य ब्रह्मवादिभ्योऽयमेव विशेषो यत् सदा सृष्ट्यादिपञ्चविधकृत्यकारित्वं चिदात्मनो भगवतः" "विश्वोत्तीर्णो विश्वमयश्च स्वस्वभाव एव शङ्करो न तु वेदान्तवादिवत् विश्वं यत्र तदेव ब्रह्मेत्येवम्प्रायः" न च भासमानोऽसावसत्यः, ब्रह्मतत्त्वस्यापि तथात्वापत्तेरित्यसत्यविभक्तान्यरूपोपग्राहिता विवर्त इत्यपि न सङ्गतम्" "मूढभाव ऐश्वर्यात्मकविमर्शशून्यप्रकाशमात्रतत्त्वो ब्रह्मरूपोऽपि यत्र नास्ति यच्छू न्यन्तविदः प्रतिपन्नाः विज्ञाणं ब्रह्मेति, तस्यापि स्वातन्त्र्यात्मकस्पन्दशक्तिं विना जडत्वात्" "श्रुत्यन्तविदक्षपादमाध्यमिकादयः क्षोभप्रलये विश्वोच्छेदरूपमभावात्मकमेव तत्त्वमुपादिक्ष"न्निति वदन्तः क्षेमराजाश्च-पराकृताः। एतेषां धीधनानामपीदृशमभिधानं न केवलं वेदान्तादिदर्शनामननमूलकम्, अपि तु स्वसिद्धान्तस्याप्यनिष्पीडनमूलकम्, तन्निष्पीडने शाङ्करीत्या विवर्तवादे पर्यवसानस्य गीर्वाणगुरुणाऽपि दुर्वारत्वादिति कृतं परदोषाविष्करणेन।

यत्तु

"वाचकेन विमर्शेन विना किं वा प्रकाशयते।
वाच्येनापि प्रकाशेन विना किं वा विमृश्यते॥
तस्माद्विमर्शो विस्फूर्तौ प्रकाशं समपेक्षते।
प्रकाशश्चात्मनो ज्ञाने विमर्शं समपेक्षते॥" इति वदन्ति,

तदपि निरीक्ष्यमाणमुक्तार्थं नातिक्रामति, 'तथाहि—परस्परसिद्ध्यधीनसिद्धिकत्वं तावन्न प्रकाशविमर्शयोर्वक्तुं शक्यम्, अन्योन्याश्रयेणोभयोरेवासिद्धिप्रसङ्गात्। यदि तु विषयितासम्बन्धेन विषयतासम्बन्धेन वा परस्परमविनाभावस्तयोः, तथा च द्वयोरावश्यकत्वे तात्पर्यम्. उक्तञ्च ज्ञानमात्रस्य स्वरूपतो वा स्फुरणत्वादिना वा स्फुरणविषयकत्वम्, निर्विकल्पकानुपगमेन वा तदुपगमेऽपि तस्यापि सूक्ष्मवाग्विषयकत्वोपगमेन वा ज्ञानमात्रस्य शब्दविषयकत्वमपि निर्बाधम्, 'न सोऽस्ति प्रत्ययो लोके यत्र शब्दो न भासते' इत्यभियुक्तोक्तेः, एवं स्थिते विषयतासम्बन्धावच्छिन्नव्याप्यतापि तयोः परस्परनिरूपिता स्थिरैवेत्युच्यते, तदापि विमर्शशब्देन घटादिशब्दो वा शब्दसामान्यं वा विवक्षितम्, शब्दसामान्यमपि प्रकाशभिन्नं वा तदभिन्नं वा, तद्भिन्नाभिन्नं वा, प्रकाशशब्देनापि घटादिप्रकाशो वा प्रकाशसामान्यं वा, प्रकाशसामान्यमपि विमर्शभिन्नं वा तदभिन्नं वा तद्भिन्नाभिन्नं वेति। तत्र घटादिशब्दस्य घटादिप्रकाशस्य च साधनाय कः प्रयत्नः। चालनीन्यायेन व्याप्तौ व्यभिचारश्च। विमर्शसामान्यप्रकाशसामान्ये तु के इति विवेचनीयम्, न तावच्छब्दत्वज्ञानत्वरूपे तदवच्छिन्ने वा ताभ्यां रूपाभ्यां ज्ञानमात्रे शब्दप्रकाशयोर्भानस्याप्रामाणिकत्वात्। अथ प्रकाशसामान्यं चिदित्येव विवक्षितम्, सा च ज्ञानमात्रगोचरः, तदीया स्फुरत्ता च शब्दसामान्यम्. इयमेव वाग्रूपतापदोदितापि. तस्याश्च स्वरूपतोऽपि भानाभ्युपगम इत्युच्यते. तदा न तावद्भेदपक्षः, एकस्यैव तत्त्वस्य पारमार्थिकतासम्भवस्य भणितत्वेनापरस्य मिथ्यात्वप्रसङ्गात्. नाप्यभेदपक्षः, एकस्मिन् ग्राह्यग्राहकभावस्यैवायौक्तिकत्वेन ग्राह्यग्राहकनिषेधमुखेन स्पन्दपरमानन्दतन्त्रादौ निषिद्धतया च वाच्यवाचकभावस्य दूरोत्सारितत्वात्। नापि भेदाभेदपक्षो विरोधात्, रूपभेदोपगमेऽनवस्थानात्। भेदस्य मिथ्याभूतस्योपगमेनापि चैकत्र वाच्यवाचकभावसमर्थनेऽनुरागः किन्निमित्तः। यदि चोक्तरीत्या घटादेरपि प्रकाशात्मकत्वेन तेषु च वाच्यतायाः आनुभविकत्वेन तदभिप्रायेण प्रकाशे वाच्यत्वाभिधानम्, तदा विरोधमवधूय को न पाणिबन्धं विदध्यात्, परन्तु तद्भिन्नाभिन्नस्य तदभिन्नत्वध्रौव्येण विमर्शस्यापि घटाद्यभेदे प्रकाशमपास्य विमर्शे एव वाचकतायाः अनुग्रहः कथमनुग्रहीतव्यः।

यदितु—प्रकाशस्तावत्क्लृप्त एवेति तत्रैव वाग्रूपता कल्पनीया, अन्यथाऽतिरिक्तधर्मिणोऽपि कल्पनप्रसङ्गेन गौरवात्, एवञ्च वाग्रूपत्वेनैव वाचकतामनुसन्धाय विमर्शो वाचक इत्युच्यते, तेन च घटादिशब्देनैव घटादिविषयमत्कृता स्यात्, नो चेज्जडप्रायतामेवालम्बेत। अतएव—

> "वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती।
> न प्रकाशः प्रकाशेत सा हि प्रत्यवमर्शिनी॥"

इति भगवद्भर्तृहरिपादानुसारिमण्डनमिश्रैर्ब्रह्मसिद्धौ "शब्दसंस्पर्शेऽर्थे बोधोत्कर्षदर्शनात्तत्प्रतिसंहारे च सञ्चेतितानामप्यसञ्चेतितकल्पत्वात्पथि गच्छतस्तृणादीनां बोधापकर्षाद्वाग्रूपाधीनमेव चितश्चितित्वम्, वाक्शक्तिरेव वा चिति"रित्युक्तम्। अत्र च प्रथमकल्पे स्वभावतश्चितेर्जडत्वप्रसङ्गो द्वैतप्रसङ्गश्चेत्यादिकमरुचिबीजमूहनीयमित्युच्यते।

तदापि तृणादौ शब्दसंस्पर्शविरहदशायां वृत्तिविशेषरूपितचित्सम्पर्कः सम्भवति न वेति वक्तव्यम्, द्वितीये 'तत्प्रतिसंहारे चे'त्यादिना व्यतिरेकनिरूपणासङ्गतिः स्यात्। आद्ये तु शब्दसंस्पर्शविरहोऽवान्तरशब्दसंस्पर्शविरहो वा शब्दसामान्यसंस्पर्शविरहो वा; द्वितीये भवन्मते तस्य ज्ञायमाने तृणादावप्रसिद्धिः, प्रसिद्धौ वा स्फुरत्तात्मकशब्दसामान्यस्यापि कादाचित्कत्वेनानिष्टप्रसङ्गः। आद्येऽप्यवान्तरशब्दस्य कादाचित्कत्वेन चितो तद्रूपता न तात्त्विकी स्यात्, चैतन्यमागन्तुकं स्यादिति यावत्। तथाच भक्षितेऽपि लशुने न शान्तो व्याधिः। तस्माच्चित्सम्पर्क एव वाक्सम्पर्क इति वक्तव्यम्. तथाच वाग्रूपत्वमेव चितित्वं

चितित्वमेव च वाग्रूपत्वमिति नामान्तरकरणमेव, अन्यथा घटादेर्ब्रह्मरूपत्वेऽपि ब्रह्मणो घटादित्वाभावेन यथा घटादेर्मिथ्यात्वमुक्तम्, तथा चितेर्वाग्रूपत्वेऽपि वाग्रूपस्य चितिरूपत्वाभावे चितेर्मिथ्यात्वं स्यात्, तदाह शारदातिलककृत् "चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मति"रिति । अतएव च भावनोपनिषद्भाष्ये "गुरुराद्या भवेच्छक्तिः सा विमर्शमयी मते"ति तन्त्रराजवाक्यमुद्धृत्य "ईश्वरानुग्रहवशेन जायमानो विवेक एव सर्वसंशयभेदनेन मन्त्रवीर्यप्रकाशनेन तात्त्विकपदार्थनामवकाशप्रदानाद्विमर्शपदाभिधेयो गुरु"रिति भास्कररायैरुदीरितम्, अत्र विवेकावच्छिन्नचैतन्यस्य विमर्शतायां तात्पर्यम्, तादृशचैतन्योपाधित्वात्तु तत्र सुषुम्नाख्यनाड्यां विमर्शमयीत्वोक्तिः ।

नन्वेवं शब्दब्रह्मवादस्य दर्शनान्तरत्वप्रसिद्धिर्निर्मूला स्यादिति चेन्न, आपातत एकस्मिन्नेव चैतन्ये धर्मधर्मिभावविकल्पनामादृत्य शब्दब्रह्मवादो विमर्शवादो वा, तादृशकल्पनामपास्य त्वौपनिषद्ब्रह्मवादः । अथवा उत्कटत्वस्य विशिष्टस्फुरणस्य वा प्रत्यवमर्शसतरङ्गत्वापरपर्यायस्य चित्त्वे प्रतिपिपादयिषया वाक्शक्तिरिति शब्दब्रह्मेति चाभिधाय शाब्दिकास्तुष्यन्ति । स्वभावतो निस्तरङ्गमेव चित्त्वम्, उपाधिविशेषरूपणवशात्तु सतरङ्गमिति मन्यमाना औपनिषदाः पुनस्तथाभिधानं नातीवाद्रियन्ते, प्रत्युत तथाभिधानस्य वाच्यवाचकभावकल्पनातीतत्वाभावभ्रमजनकत्वम् । दर्शिता चाधस्तान्निस्तरङ्गावस्थाऽभ्युपगतप्राया ऽभ्युपगमार्हा वाऽष्टात्रिंशत्तत्त्वस्वीक्रियया विमर्शवादिनामपि, कादाचित्कावस्थाया अप्यावश्यकत्वेन तु विमर्शं विना न संविदित्यप्यभिधीयमानं न नो दुनोति । अत एव वाक्यपदीयोक्तमनादिनिधनत्वं शब्दे शब्दब्रह्मणि यथाश्रुतमसङ्गतमसहमाना नव्याः शाब्दिका यावत्सृष्टिकालावस्थित्यभिप्रायेण तद्व्याचक्षते । विशेष्यचैतन्यमात्राभिप्रायेण तु यथाश्रुतमेवानादिनिधनत्वं सम्यक्, अतएव श्रीमद्भगवत्पादैरपि "मनोवृत्त्युपाधिपरिच्छिन्नं मनोवृत्तिनिष्ठमात्मचैतन्यमनादिनिधनं यजुःशब्दवाच्यमात्मविज्ञानं मन्त्राः, एवञ्च नित्यत्वोपपत्तिर्वेदानाम्, 'सर्वे वेदा यत्रैकं भवन्ति स मानसीन आत्मे'ति श्रुतिर्नित्यात्मनैकत्वं ब्रुवत्यृगादीनां नित्यत्वे समञ्जसा स्या'दिति तैत्तरीयभाष्ये"भाषितम् । "वागेव विश्वा भुवनानि जज्ञे वागेवेदं बुभुजे" इत्यादिश्रुतिरपीत्थमेव योजनीया । मध्यमावस्थतत्तद्वाकारा मनोवृत्तिरत्र विवक्षितोपाधिः । समष्टौ तु तादृशी मायावृत्तिर्वक्तुं शक्या । मानसीनः = मनोवृत्त्यवच्छिन्नः । एवञ्च मन्त्रात्मकचैतन्येन बोध्यमपि चैतन्यमित्युपाधिमात्रभेदे सति वाच्यवाचकसामान्ययोरैक्यमुक्तप्रायमेव । वाच्यवाचकविशेषावपि स्वीरितरीत्या परा चितिशक्तिर्निर्वर्णितमायामहिम्ना विश्वमयीभविष्णुतया स्वात्मसात्कुर्वती तयोर्भेदाविकल्पतद्विकल्पात्मकपश्यन्तीमध्यमादशामधिशय्य वैखरीभूमौ भेदं स्फुटतरं भासयन्ती तत्तद्व्यवहारं निर्वाहयति । एवञ्च "अक्षरमम्बरान्तधृते"रित्यधिकरणे प्रणवस्य तत्प्रतिपाद्यब्रह्मणश्च भेदव्युत्पादनं भाष्यकृतां प्रणवपदेनोपाधिमात्रविवक्षयेति न विरोधः । बृहदारण्यकद्वितीयाध्यायभाष्ये "अनेके हि विलक्षणाश्चेतनाचेतनरूपाः सामान्यविशेषाः, तेषां पारम्पर्यगत्या यथैकस्मिन् महासामान्येऽन्तर्भावः प्रज्ञानघने" इतिग्रन्थेन वाच्यवाचकात्मकसकलप्रपञ्चस्य ब्रह्मरूपताभिधानं स्वधास्ताद्विवेचितरीतिं मनसि निधायैव । एवञ्च वाक्शक्तिरेव चितिरित्यनुक्त्वा चितिरेव वाक्शक्तिरिति मण्डनमिश्रैरुच्यमानं समञ्जसं स्यात् । अनुस्यूतस्याकल्पितत्वं व्यभिचारिणश्च कल्पितत्वमित्यत्रागमा अपि भजन्तेऽनुकूलतामित्याकलनीयं किल कौलैरपीति प्रोक्तं पुरा ।

इदन्त्ववधेयम्-तत्तदर्थविषयकासत्त्वापादकाज्ञानविरोधिचिद्विशिष्टतया तत्तदर्थविषयकेच्छाजनकतावच्छेदकज्ञानत्वस्य वृत्तिविशेषावच्छिन्नचिद्विशिष्टतया चान्येच्छानधीनेच्छाविषयत्वयोग्यस्वरूपसुखस्य कादाचित्कत्वेऽपि तदुपलक्षितव्यक्तेरिव तत्तद्वसम्पृक्तचिद्विशिष्टतया वाग्रूपत्वस्य कादाचित्कत्वेऽपि

तदुपलक्षितव्यक्तेर्ब्रह्मस्वरूपलक्षणत्वाभ्युपगमे ज्ञानानन्दरूपैव चितिरितिवत् वाक्शक्तिरेव चितिरित्यप्युक्तिर्न दुष्यतीत्येषा दिक्।

किञ्च विवर्तवादानभ्युपगमे सृष्ट्यादिकमपि नोपपद्यते तथाहि—परमेश्वरोऽनाप्तकामो वाऽऽप्तकामो वा. आद्ये तस्य संसारित्वप्रसङ्गः, द्वितीये तु कथं प्रपञ्चोल्लासनप्रवृत्तिः, न च हसितादिसाम्यम्; तत्रापि स्वानन्दप्रकटनादेः प्रयोजनस्योत्प्रेक्षणसम्भवात्, आनन्दोच्छलत्तादिरूपाणां तेषां बहिर्मुखताविशेषरूपतयेह बहिर्मुखतायां बीजस्य वक्तव्यत्वाच्च, तस्याः स्वाभाविकत्वेऽनिर्मोक्षप्रसङ्गात्, अतएवात्र निमेषादिसाम्यम्, देवस्यैष स्वभावोऽयमित्युक्तेरिति न वाच्यम्, स्वाभाविकत्वेऽपि मिथ्यात्वेऽभीष्टसिद्धेरिति मायावादे एवेदं समञ्जसम्। यत्तु—कृतार्थानामाप्तकामानामेव क्रीडादिप्रवृत्तिरुल्लासात् प्रार्थनापरिक्लिष्टचेतसां तु रतिविरहिणामनभिमतैव क्रीडा भवति, न च वैषम्यनैर्घृण्यदोषः, न हि मायाकारस्य विविधं प्रपञ्चं दर्शयतोऽङ्गसाकल्यवैकल्यविभागेन रागद्वेषविभाग इति; तदपि प्रपञ्चमिथ्यात्ववाद एव शोभते, न वा तत्रापि, वैषम्यनैर्घृण्यपरिहारेऽप्याप्तकामत्वस्यासम्भवात्—तद्धि कामसामान्यशून्यत्वं वा प्राप्तसर्वकाम्यकत्वं वा, उभयथापि प्रवृत्तेरिच्छाव्याप्यत्वेन तदभावे तदभावात्। द्वितीयस्य निर्विशेषतत्त्वे प्रसक्तेरेवाभावाच्च। मायानिबन्धनतत्प्रसक्तौ च विषयलाभेनैव रतेरसम्भवात्, रतिसद्भावे चानवाप्तकामताया आवश्यकत्वादिति। ननु किमुक्तविकल्पद्वयेन, यतः स्वयमेव स्वेच्छापूरणक्षमः परमेश्वर इत्युक्तौ संसारित्वादिप्रसङ्गाभावादितिचेन्न, द्वैतमनुद्भास्य वोद्भास्य वा स्वेच्छापूरणक्षम इति विकल्पसम्भवात्, आद्ये द्वैतप्रतीतेरपलापापत्तेः, द्वितीये तु द्वैतस्य मृषात्मताया उक्तत्वेन विवर्तवादः समापतित एव, नहि तत्र तादृशविकल्पसम्भवः, आप्तकामत्वेऽपि भ्रान्तेः प्रयोजनानपेक्षत्वात्। तदिदमाहुर्मण्डनमिश्रादयः—"नहि गन्धर्वनगरादिविभ्रमाः समुद्दिष्टप्रयोजना भवन्ती" ति। एवञ्च "क्रीडां करोति सृष्ट्यादिक्रमेण सर्वसाक्षिणी" त्यादि निष्प्रयोजनत्वनिरायासत्वाभिप्रायेणैवावगन्तुमुचितम्। भ्रमश्च भ्रमाहितसंस्कारमूलोऽपि, कस्यचिद्वचसा रज्ज्वादावेव सर्पत्वप्रत्ययवतो बालस्य तत्सदृशे पुनः सर्पत्वप्रत्ययोद्भवदर्शनात्, प्रमात्वस्याप्रयोजकत्वाच्च, वस्तुतस्तु भ्रमाहितसंस्कारमूल एव हट्टस्थरजतशुक्तिरजतयोराविधकत्वाविशेषात्, स्वप्नजागरयोरविशेषमधिकृत्य चोक्तम्। किञ्च नानिर्वाच्यवादिना भ्रमत्वं व्यवस्थापनीयम्, अपि तु प्रमात्वं खण्डनीयम्, तत्खण्डनं च शारदायां द्रष्टव्यम्। न च मयापि प्रमात्वं न व्यवस्थापनीयम्, अपितु भ्रमत्वं खण्डनीयम्; प्रमात्वखण्डने सति विषयसत्यताया असिद्धे भ्रमत्वखण्डनस्येष्टत्वात्।

ननु भवत्वेवं तथापि भ्रान्तिः कस्य ? वस्तुतोऽङ्ग ! न कस्यापि, यथाव्यवहारं तु भवादृशामस्मादृशाञ्च। तेऽपि के इति चेत् वस्तुतो न केऽपि, यथाव्यवहारं तु यथानुभूयन्ते तथैव। तत्किं वस्तुतः शून्यतैव ? न वस्तुतः सापि। वस्तुतस्तु यया प्रागुक्तनयेन क्षणिकतां दुःखरूपताञ्च स्प्रष्टुमप्यपारयन्त्या कालकलनातिपात्यानन्दरूपया चित्या भास्यते सा, सैव तत्किं भ्रान्तिनिर्मूलैव ? वस्तुत एवमेतत्, तथाऽप्यनाद्यविद्यामूला सेति प्रक्रियालम्बिभिरालोक्यते। सा चोक्तरीत्यैवावतरीतुं मानपथं कथमपि क्षमत एव। वयं तु शुद्धानिर्वाच्यवादिनोऽविद्यामपास्यैव वर्तमाना लक्षणप्रमाणलोकेऽवलोकितदोषजाला न लेशतोऽपि दोषाविनाभूतप्रक्रियासमर्थनमर्थयामहे। ऊचिरे च श्रीसुरेश्वराचार्याः—

"सेयं भ्रान्तिर्निरालम्बा सर्वन्यायविरोधिनी।
सहते न विचारञ्च तमो यद्वद्दिवाकरम्॥

अविद्याया अविद्यात्वमिदमेवात्र लक्षणम् ।
यद्विचारासहिष्णुत्वमन्यथा वस्तु सा भवेत्" ॥ इति ।

अनीदृशविचारधाराधिरूढमतिस्तु दैवताप्रसादमनासाद्य नाद्वैततत्त्वं प्रतिपत्तुं प्रभवतीति तन्मतिमलक्षालनाय नेह यत्नः । येन केनापि यत्किञ्चित्खण्ड्यते तत्सर्वं सविशेषतया मुख्यवेदान्तसिद्धान्तबहिर्भूतमेव, प्रपञ्चमिथ्यात्वादिलक्षणादेरपि निरासस्य शारदायां यथायथं दर्शितत्वात् । यत्तु सुरगुरुणापि न शक्यं खण्डयितुम्, तदेव मुख्यो वेदान्तसिद्धान्तः । तच्च वाङ्मनसागम्यमप्यापातत आकाङ्क्षामात्रापत्तुत्तये निर्विशेषं ब्रह्मेत्युच्यते । निर्विशेषे न प्रमाणसम्भव इत्याक्षिपंस्तु 'भवदीयवाक्ये निर्विशेषपदं निर्विशेषं बोधयति सविशेषं वा, आद्ये स्थानान्तरस्थेन तेन निर्विशेषबोधनं कुतो न स्यात्, तात्पर्याधीना वृत्तिरितिनीते भवताप्यनुमन्तव्यत्वात् । द्वितीये तु सविशेषे न प्रमाणसम्भव इत्यर्थपर्यवसाने स्वसिद्धान्त एव भवताऽऽक्षिप्तः स्या'दित्येवं प्रतिबोधनीयः । प्रामाणिकत्वव्यापकं सविशेषत्वमिति वदतापि सविशेषत्वाभाववति प्रामाणिकत्वाभावबोधोऽनुमन्तव्य इति तादृशबोधात्मकप्रमाविषयत्वं निर्विशेषे निर्बाधम्, अन्यथोक्तदोषात् । एवमुक्तव्यापकताज्ञानेन निर्विशेषे प्रामाणिकत्वग्रहप्रतिबन्ध इत्याद्यभिधानेऽपि द्रष्टव्यम् । अधिकन्तूक्तं शारदायाम् ।

वस्तुतस्तु निर्विशेषे तादृशशब्दप्रयोगोऽपि तस्य मानहानिमानयति । न च वीतरागाणामीदृशो व्यापारइति शान्त्यपारकूपारा महानुभावा मौनेन तदुपदिशन्ति । तदवोचन्—

चित्रं वटतरो मूले शिष्या वृद्धा गुरुर्युवा ।
गुरोस्तु मौनं व्याख्यानं शिष्यास्तु छिन्नसंशयाः ॥ इति ।

नचेदृशावस्थास्थिति दैवतानुकम्पां विना, नचासौ तदुपासनां विना, न चैषा गुरोः कारुण्यं विना, न च यस्य न देशयति देशना दिशं दिशमस्तृशन्त्या अपि दशास्तस्य गुरुताऽपि, न च यस्य नापारपुण्यपरम्परापरिपाकस्तस्य तादृशगुरोरासत्तिरपीति स्वस्वाधिकारानुरूप्येण काचिदाचर्या चर्येति कृतमनुप्रसक्तेन ।

## सर्वज्ञानयाथार्थ्यभङ्गः ।

ननु यथार्थं सर्वं ज्ञानमिति कथं भ्रान्तिः ? न च धर्म्यंशे ज्ञानमात्रस्य याथार्थ्यं सर्वसम्प्रतिपन्नमेवेति सिद्धसाधनम्; तज्ज्ञानीयविशेष्यताश्रयावृत्तिधर्मस्तज्ज्ञानीयप्रकारत्वाभाववानिति तात्पर्यात्, न च तथापि रङ्गरजतयोरिमे रजतरङ्गे इति ज्ञानप्रकारयो रजतत्वरङ्गत्वयोस्तज्ज्ञानीयविशेष्यावृत्तित्वाभावेन तादृशज्ञानस्य भ्रमत्वाव्यावृत्तिः, तदवृत्तिधर्मस्तन्निष्ठविषयतावच्छेदकत्वाभाववान् तदवृत्तित्वादिति विवक्षितत्वात् । न च रजतत्वेनेदं जानामीत्यनुभवेन रजतत्वावच्छिन्नशुक्तिनिष्ठविशेष्यताकज्ञानसिद्धया बाधः, एवं तद्विशेष्यकतत्प्रकारकप्रवृत्तिं प्रति तद्विशेष्यकतत्प्रकारकज्ञानस्य हेतुतयापि तादृशज्ञानसिद्धौ बाध इति वाच्यम्, भवन्मतेऽपि रजतत्वप्रकारकनिर्णयधर्मितावच्छेदकेदन्त्वप्रकारकनिर्णययोः प्रवृत्तेः एवंमावश्यकत्वेन ताभ्यामेव तादृशानुभवप्रवृत्त्योरुपपत्त्यत्वात् । तत्किं गौरवमेवैतदन्यथाख्यातेस्तानवमातनोति ? नैतत्, अन्यदपि तद्बाधकमस्त्येव, सुरभि चन्दनमित्यादौ सौरभं पश्यामीत्यनुभवाभावेन विषयतासम्बन्धेन चाक्षुषत्वावच्छिन्नाधिकरणतायाः सौरभादौ मानाभावेन लौकिकान्यविषयतासम्बन्धेन चाक्षुषाद्युत्पत्तये ज्ञानलक्षणादेः सन्निकर्षतायां मानाभावात् । ननु सत्यमेतन्न ज्ञानलक्षणया निर्वाह इति, तथापि लौकिकविषयतासम्बन्धेन प्रत्यक्षं प्रति दोषस्यापि हेतुत्वमुपेत्यान्यथाख्यातिरक्षाविधानं कुतो न स्यात्,

यदाह खण्डनकारः—"प्रत्यभिज्ञायां तदर्थं इन्द्रियेणासन्निकृष्ट एवोल्लिख्यते विभ्रमार्थवत्, सन्निकृष्टग्राहिता चेन्द्रियस्य सन्निकर्षसहकार्यवश्यम्भावमात्रम्, तच्चेदमंशसन्निकर्षादेव स्यात्, न तु सर्वग्राह्यसन्निकर्षसहकारित्वे" ति. नव्यतार्किकैरपि चायमेव पक्षः कक्षीकृत इति चेन्न, संयोगदोषयोरुभयोर्हेतुत्वे व्यभिचारवारणायाव्यवहितोत्तरत्वस्य कार्यतावच्छेदके निवेशनीयत्वेन दोषस्य रजतभ्रमं प्रति हेतुतायाः कल्पनीयत्वेन च गौरवात् ।

ननु शुक्तित्वप्रकारकज्ञानं प्रति प्रतिबन्धकत्वं दोषस्य भवतापि वाच्यम्, सत्यम्, भवतोऽपि त्वेतत्तुल्यम्, यथा च सन्मात्रविषयकत्वासत्संसर्गविषयकत्वाद्यनुपपत्त्यापि नान्यथाख्यातिसम्भवस्तथा लक्षणप्रयोजनखण्डने हेत्वाभाससामान्यलक्षणाक्षेपशेषादौ च शारदायामेवानुसन्धेयम् । न च तथापि प्रवृत्तिसामान्यं प्रति संवादिप्रवृत्तिं प्रति विसंवादिप्रवृत्तिञ्च प्रति क्रमेण स्वतन्त्रोपस्थितेष्टतावच्छेदकधर्म्यसंसर्गाग्रहस्य विशिष्टज्ञानस्य दोषाधीनज्ञानस्य च कारणतायाः कल्पनीयतया गौरवम्; सर्वत्रैव स्वाश्रयसमवेतत्वस्वसमानकालिकत्वाभ्यां रजतत्वप्रकारताशालिज्ञानविशिष्टेदन्त्वप्रकारतानिरूपितधर्मिनिष्ठनिरवच्छिन्नविशेष्यताशालिज्ञानत्वेन हेतुतायाः शक्यवचनत्वात् । नचैवं नेदं रजतमिति ज्ञानादपि प्रवृत्त्यापत्तिः; रजतभेदरजतत्वात्यन्ताभावतद्व्याप्यावगाहिज्ञानानि इदन्त्वावच्छिन्नविशेष्यकरजतत्वप्रकारकबुद्धिप्रतिबन्धकत्वेनानुगमय्य तादृशानुगतरूपावच्छिन्नाभाववैशिष्ट्यस्यापि प्रोक्तसम्बन्धाभ्यां प्रवृत्तिजनकतावच्छेदककोटौ निवेशादिति चेन्न,

इदं रजतमितिज्ञानद्वयस्य नेदं रजतमितिज्ञानप्रतिबध्यतावच्छेदकेदन्त्वावच्छिन्नविशेष्यतानिरूपितरजतत्वप्रकारताकबुद्धित्वानाक्रान्तत्वेन तादृशज्ञानस्य प्रतिबन्धकतानापत्तेः । रजतं साक्षात्करोमीतिप्रतीतिसाक्षिकविषयतायाः स्मृतावसम्भवेन त्रिवृत्करणप्रतिनिधिन्यायाभ्यां शुक्त्यादौ रजतादिसद्भावस्य भवद्भिरभ्युपगतत्वेन सुरासदृशवस्तुनि सुरात्वप्रकारकप्रतीतेरप्युक्तरीत्या प्रमात्वेन तत्पानेन सुरां न पिबेदिति निषेधशास्त्रोल्लङ्घनेन प्रत्यवायापत्तेश्च । नच—विसंवादिप्रवृत्तिजनकज्ञानद्वयीयविशेष्यताप्रकारतयो र्निरूप्यनिरूपकभावाङ्गीकारेण विशिष्टज्ञानवज्ज्ञानद्वयस्यापि रजतत्वनिष्ठप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्यताशालिज्ञानत्वेन प्रवृत्तिजनकत्वम्, एवञ्च नोक्तप्रतिबन्धकतानुपपत्तिर्नं वोक्तरीत्या प्रत्यवायापत्तिः, स्वनिरूपकज्ञानानिरूपितत्वस्वनिरूपितत्वाभ्यां प्रकारताविशिष्टविशेष्यताशालिबुद्धित्वस्य भ्रमपदशक्यतावच्छेदकतोपगमेन तदनाक्रान्तसुरात्वप्रकारकप्रमाविशेष्यपानस्यैव प्रत्यवायप्रयोजकत्वात्, अन्यथाख्यातित्वं तु स्वाश्रयाभाववन्निष्ठत्वस्वनिरूपितत्वस्वनिरूपकज्ञाननिरूपितत्वैः प्रकारताविशिष्टविशेष्यताकत्वरूपमेव मया नाङ्गीक्रियते इति—वाच्यम्, ज्ञानद्वयीयविषयतयोर्निरूप्यनिरूपकभावे मानाभावात्, न च सर्वज्ञानयाथार्थ्यसिद्धिरेव मानम्, उक्तनिरूप्यनिरूपकभावसिद्धिं विना तदसिद्धेरन्योन्याश्रयात् । न च रजतत्वं स्वनिरूपकज्ञाननिरूपितत्वस्वनिरूपितत्वाभ्यां शुक्तिनिष्ठविषयताविशिष्टाया अवच्छेदकताया अभाववत्, शुक्त्यवृत्तित्वादित्यनुमानेन फलतो ज्ञानयाथार्थ्यं प्रसाध्य भवदुक्तबाधकविधूननायोक्तविषयतयोर्निरूप्यनिरूपकभावः स्वीकार्यः; उक्तबाधकनिरासं विना तादृशानुमितेरुत्पादयितुमशक्यत्वात्, अप्रयोजकत्वाच्च, यथाहि पटावृत्तित्वेऽपि घटत्वस्य पटनिष्ठप्रतियोगितारूपधर्मावच्छेदकत्वदर्शनेन यो यदवृत्तिः स तन्निष्ठधर्मनिरूपितावच्छेदकत्वाभाववानिति व्याप्तिरप्रामाणिकी, तथोक्तानुमानीयापि । यद्यपि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावः सांशयिक एवेत्युपपादितमनुमानखण्डनशारदायाम्, तथापि तस्य सांशयिकत्वेऽपि व्यभिचारसंशयस्य दुर्वारत्वात् । खण्डनविधाता त्वत्र "कस्माद्वा प्रत्यभिज्ञाद्वयोऽप्येकं ज्ञानमङ्गीकृता इत्यु-

च्छिन्ना विशिष्टविज्ञानसङ्कथा, सञ्जातश्च गौरश्वः पुरुष इतिपद्धिशकलितो विज्ञानसंसार" इति चतुर्थे परिच्छेदेऽभ्यधात्।

किञ्च सर्वज्ञानयाथार्थ्यसाधनं विदधतोभवतोऽन्यत्रोदीरितस्य प्रमात्वादिखण्डनस्यावतारे कःप्रतिकारः? भ्रमेऽपि तादृशरीत्या दूषणोद्भावनसम्भव इति प्रतिबन्दिरेवेतिचेन्न ज्ञानस्य तावद्विषय एव सर्वस्वम्, स एव तु तत्र तत्रोक्तरीत्योरपन्नत्वानुत्पन्नत्वाभ्यामपि दुर्निरूपतया यस्यालब्धसत्ताक इवाविद्यक इति मन्महे, तस्य निर्धनस्य किमपहृत्य चेतः सन्तोषयिष्यसि। प्रमायास्तु खण्डनेन सविशेषविषयापहारे निर्धना सती सा भवतः किं प्रसाधयिष्यति। तस्मात्त्यक्तसर्वस्वा प्रमाकुलस्यापि सर्वस्वमाच्छिद्याविद्योदरे निक्षिपन्ती भ्रान्तिरेव विजृम्भते ननु प्रमितिरिति दिक्।

## शरीरशरीरिभावभङ्गः।

ये तु चिदचिदुभयविशिष्टाद्वैतोपपादनाय "यस्य पृथिवी शरीर" मित्यादियथाश्रुतश्रुत्यर्थाभिमानेन वैशिष्ट्यप्रयोजकं शरीरशरीरिभावमिच्छन्ति, तैरसौ निर्वक्तव्यः। तथाहि न तावत् 'न तु दृष्टान्तभावा'दितिसूत्रस्थश्रीभाष्यानुसारेण यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं शक्यं तत्तस्य शरीरमिति युक्तम्, जडे नियामकत्वाप्रसक्तेश्चेतनपदस्याव्यावर्तकत्वात्, चिदचिदुभयस्य द्रव्यत्वे द्रव्यपदस्याप्यव्यावर्तकत्वात्, गुणादेर्द्रव्यातिरेके तु तेषां भगवच्छरीरत्वानुपपत्तेः, सर्वपदस्य बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्ततया छिन्नादिधर्मानादाय पश्वादौ देवदत्तीयशरीरत्वव्यवहारप्रसक्तेश्च। उत्पत्तेरपि सर्वपदार्थान्तर्भावे तु नित्यानां भगवच्छरीरत्वानुपपत्तेश्च। चित्त्वाचित्त्वान्यतरस्य प्रत्येकमन्यतरत्वेन वा तदुभयस्य वा नियम्यतावच्छेदकत्वेऽव्याप्तेर्भ्रमण्णतिव्याप्तेरसम्भवस्य वा प्रसक्तेश्च।

एतेन—तदीयकृतिप्रयुक्तस्वीयचेष्टासामान्यकत्वरूपं तन्नियम्यत्वमेव तच्छरीरत्वम्, तदीयत्वस्य समभिव्याहारलभ्यत्वेन तु परिशिष्टमेव शरीरपदप्रवृत्तिनिमित्तमिति परास्तम्, ईदृशनियम्यतावच्छेदकस्यापि निरूप्यत्वेनोक्तदोषात्। अन्यथा कं धर्मं धर्मितावच्छेदकीकृत्य तादृशसामान्यकत्वं ज्ञेयमित्यज्ञानात्। हस्तादौ देवदत्तीयशरीरत्वव्यवहारापत्तेश्च, पर्वतादौ चेष्टायां मानाभावेन तेषां भगवच्छरीरत्वानापत्तेश्च। चेष्टापदेन स्पन्दमात्रविवक्षायामपि गुणादेर्भगवच्छरीरत्वानापत्तेश्च, देवदत्तीयमृतशरीरस्पन्दस्य यज्ञदत्तादिकृतिप्रयुक्ततया अपि सम्भवेन प्रसिद्धशरीरेऽसम्भवाच्च, जीवच्छरीरं सात्मकं प्राणादिमत्त्वादित्यादौ जीवत्पदोपादानेन लौकिकानामिव वैनयिकानामपि मृते शरीरत्वस्येष्टत्वात्। एतेन पूर्वं शरीरतया स्थितस्य द्रव्यस्य चेतनवियोगानन्तरक्षण एव नाशाभ्युपगम इति नाभ्युपगन्तव्यम्, अत्यल्पञ्चेदमुक्तम्, परिणामभेदेन द्रव्यभेदस्यावश्यकत्वेन जीवद्दशायामप्युपचयापचयदर्शनेन शरीरनाशस्यावश्यकत्वात्, परन्तु शरीरत्वव्यवहारः सर्वत्र समान एवायाचितः। न च मृतं शरीरमन्यदीयं जायत इति वक्तुं शक्यम्, पूर्वशरीरतया परिक्लृप्तसङ्घातैकदेशत्वेन मृते शरीरत्वव्यवहार इति तु ब्रुवाणे जीवद्दशायामुपचयावस्थशरीरैकदेशत्वेनापचयावस्थेऽपि शरीरत्वव्यवहारो न तु वस्तुतस्तस्य शरीरत्वमित्यपि कुतो न ब्रूयात्। विभूनां निस्स्पन्दतयाऽव्याप्तेश्च। नित्यानां कालादीनां सत्ताया अपि कृतिप्रयुक्तत्वाभावेन धात्वर्थमात्रस्य चेष्टापदेन विवक्षायामप्यनिस्ताराच्च। धातुत्वस्य क्रियावाचकत्वेन निवेशेऽन्योन्याश्रयेणाखण्डोपाधिताया अपि प्रतीतिनिरूप्यतयाऽन्योन्याश्रयपराहततयाऽशक्यवचनत्वेन स्वाद्यन्यतमत्वेन निवेशे व्यक्त्यानन्त्येनानुयोगिप्रतियोगिविधया सकलप्रपञ्चप्रवेशेन दुर्ग्रहत्वप्रसङ्गाच्च। स्वत्वघटितत्वेनापि शक्यतावच्छेदकानुगमासम्भवाच्च।

एतेन यस्य चेतनस्य यद्द्रव्यं सर्वात्मना धारयितुं शक्यं तत्तस्य शरीरमित्यस्य प्रागुक्तदोषकलुषितस्य व्याख्यानभूतं तदीयकृतिप्रयुक्तस्वप्रतियोगिकपतनप्रतिबन्धकसंयोगसामान्यकत्वं तच्छरीरत्व-

मित्यपि निरस्तम्, अवच्छेदकस्य दुर्निरूपत्वात्, हस्तादावतिप्रसङ्गात्, उक्तरीत्या मृतशरीरमादाय प्रसिद्धशरीरेऽसम्भवात्, अननुगमात्, पतनप्रतिबन्धकपदवैयर्थ्यात्, अगुरुप्रतियोगिकसंयोगस्य पतनप्रतिबन्धकत्वासम्भवेनाव्याप्तेश्च। न च जगदाधारत्वबोधकश्रुतिबलादेवागुरोरपि तादृशसंयोगाभ्युपगमः; अगुरोस्तादृशसंयोगादर्शनेन जगदाधारत्वमेवान्यादृशमित्यस्यापि सुवचत्वात्, उपपादितो हि दर्पणप्रतिबिम्बन्यायः। विभूनामजसंयोगस्वीकारेण तस्य कृतिप्रयुक्तत्वाभावेनाव्याप्तेश्च। संयोगे जन्यत्वोपादाने तु जन्यत्वस्य प्रागभावप्रतियोगित्वोत्पत्तिमत्वाद्यनेकविधत्वेनोत्पत्तिप्रागभावत्वयोरपि तथात्वस्य चतुर्थे शारदायां दर्शितत्वेन च कस्या विधाया इहोपादानमित्यत्र विनिगमकाभावेन शरीरपदस्य नानार्थत्वप्रसङ्गाच्च। तत्रैव सर्वासां विधानां प्रतिविधानाच्च।

एवं यस्य चेतनस्य यद्द्रव्यं सर्वात्मना शेषतैकस्वरूपं तत्तस्य शरीरमित्यप्युक्तरीत्या निराकार्यम्, शेषत्वस्य दुर्निरूपत्वाच्च। यत्तु—प्रकृते कार्यत्वकारणत्वान्यतररूपशेषत्वाभिप्रायेण ज्ञानावच्छिन्नानुयोगिताकापृथक्सिद्धिसम्बन्धावच्छिन्नकार्यत्वकारणत्वान्यतरावच्छेदकत्वं शरीरपदप्रवृत्तिनिमित्तम्, सूक्ष्मचिदचिद्विशिष्टस्य ब्रह्मणः कारणत्वात् स्थूलचिदचिद्विशिष्टस्य च तस्य कार्यत्वात् ब्रह्मनिष्ठकार्यत्वकारणत्वान्यतरावच्छेदकत्वस्य प्रपञ्चसामान्ये सत्त्वात्। अत्र ज्ञानं देवदत्तस्य शरीरमितिव्यवहारवारणाय ज्ञानावच्छिन्नानुयोगिताकत्वमपृथक्सिद्धिसम्बन्धे निवेशितम्, ज्ञानप्रतियोगिकसम्बन्धस्य ज्ञानावच्छिन्नानुयोगिताकत्वाभावात्। न च शरीरविशिष्टत्वेन जीवस्य सुखादिकारणतायामेव शरीरस्यावच्छेदकत्वं सम्भवति, नत्वेवम्, विशेषणविशेष्यभावे विनिगमनाविरहेण जीवविशिष्टशरीरत्वेनापि कारणतायां कार्यकारणभावद्वयप्रसङ्गात्, अपि तु स्वातन्त्र्येणैव कारणता जीवस्येति कथमवच्छेदकत्वं प्रसिद्धशरीरे इति वाच्यम्, कारणत्वस्य प्रयोजकतासाधारणस्य विवक्षितत्वात् एकविशिष्टापरस्वरूपसामग्रीत्वेन च कार्योत्पत्तिप्रयोजकतोपगमेन जीवनिष्ठप्रयोजकतावच्छेदकतामादाय प्रसिद्धशरीरे समन्वयात्। उक्तावच्छेदकतायामपृथक्सिद्धिसम्बन्धावच्छिन्नत्वनिवेशाच्च भृत्यविशिष्टराजादेः कार्यकारित्वेऽपि न भृत्यो राजशरीरमिति व्यवहारापत्तिरिति। तदसद्, तुल्ययुक्त्या ज्ञाने भगवच्छरीरत्वस्याप्यनापत्तेः। तत्कार्योत्पत्तिप्रयोजकताया एकत्वे सामग्र्यां शरीरस्यापि प्रवेशावश्यम्भावेन जीवनिष्ठायामिव स्वनिष्ठायामपि प्रयोजकतायां शरीरस्यावच्छेदकताया अनुपपत्त्या एवापत्तेश्च, तादृशप्रयोजकताया नानात्वे तु किन्नियामकम्, तत्कार्यस्यैकत्वात्। प्रयोजकतावच्छेदकस्य नानात्वमेव नियामकम्, विशेष्यविशेषणभावे विनिगमकाभावेनैकविशिष्टापरस्वरूपसामग्रीत्वस्यैकत्वासम्भवादिति चेदेवं तर्ह्येकविशिष्टापरात्मिकायास्तत्कार्यसामग्र्या अपि नानात्वमिति तत्कार्यं नानासामग्रीकमिति सर्वजनानुभवापास्तव्यवहृतेरापत्तिः। किञ्च स्थूलचिदचिद्विशिष्टस्य ब्रह्मणः कार्यत्वं किं विशेषणकार्यत्वप्रयुक्तं वा विशेष्यकार्यत्वप्रयुक्तं वोभयकार्यत्वप्रयुक्तं वा, विशिष्टस्यातिरिक्तत्वपक्ष एव वा, नान्त्यः, विशेषणविशेष्ययोरकार्यत्वे तस्य कार्यताया वक्तुमशक्यत्वात्, न तृतीयो नापि द्वितीयः, ब्रह्मणः कार्यत्वस्याप्रामाणिकत्वात्, नाद्यः, वैशिष्ट्यनिरूपणं विना विशेषणस्य कार्यतया विशिष्टे कार्यताव्यवहारस्याशक्यसमर्थनत्वात्, न च शरीरशरीरिभावसम्बन्ध एव वैशिष्ट्यम्; तस्यैव निरूप्यमाणत्वात्। न चापृथक्सिद्धिसम्बन्धेन वैशिष्ट्यम्, अत एव कार्यतावच्छेदकतया स एव प्रागुक्त इति वाच्यम्, तस्यातितुच्छत्वात्, तद्धि यावत्सत्त्वमसम्बन्धानर्हत्वमिति भवद्भिर्निरुच्यते, तत्तु स्वसत्ताव्यापकसम्बन्धयोग्यताकत्वं वा, स्वसत्ताव्यापकोऽसम्बन्धयोग्यत्वस्याभावो यस्य तत्त्वं वा, उभयत्रापि पूर्वोक्तरीत्या मृतेऽपि शरीरत्वव्यवहारस्य प्रामाणिकत्वेनाव्याप्तिः। आद्ये च योग्यतावच्छेदकत्वं न शरीरशरीरिभावस्यैव, अन्योन्याश्रयात्, न चान्यदपि सम्भवतीत्युक्तम्, सम्बन्धपदेन कालिकादिकमादाय हिमवद्वि-

न्यायेरप्यपृथक्सिद्धत्वव्यवहारापाताच्च. विशिष्यैव संयोगादेर्निवेशेऽपि देवदत्तादिशरीरे एवोत्पन्नविनष्टयूकादेरपि देवदत्तादिशरीरापृथक्सिद्धत्वव्यवहारापाताच्च. चिद्वर्गस्य घटादेश्च भगवति समवायाभावाच्च। एवं द्वितीयोऽपि परासनीयः। अपृथक्सिद्धेः प्रतीतिविशेषसाक्षिकसम्बन्धत्वे तु प्रतीतिविषयविशेषयोःपरस्परायत्तसिद्धिकतया परस्पराश्रयप्रसङ्ग इति।

एवं यथासम्भवमुदीरितदोषैरेव न्यायसिद्धाञ्जनोक्तं 'यस्य चेतनस्य यदवस्थमपृथक्सिद्धविशेषणं द्रव्यं तत्तस्य शरीरमिति, ज्ञानावच्छिन्नानुयोगिताकापृथक्सिद्धत्वसम्बन्धनिरूपितद्रव्यत्वसमानाधिकरणप्रतियोगित्वं शरीरपदप्रवृत्तिनिमित्तमिति च पूर्वोक्तलक्षणत्रयफलीभूतं निरस्तम्।

यत्तु अन्त्यावयवित्वे सति चेष्टावत्त्वम्, अन्त्यावयवित्वे सतीन्द्रियाश्रयत्वम्, अन्त्यावयवित्वे सति भोगावच्छेदकत्वं वा शरीरपदप्रवृत्तिनिमित्तमिति तार्किकमतम्. तन्न. चेष्टाया उपलक्षणत्वे उपलक्ष्यतावच्छेदकस्य मृतशरीरसाधारणस्य निर्वक्तव्यत्वात्, विशेषणत्वे तु मृतशरीरे एवाव्याप्तेः, एवं द्वितीयतृतीययोरपि द्रष्टव्यम्, अवयवित्वञ्च विज्ञानवादे निरस्तम्। अतएव अन्त्यावयविमात्रवृत्ति चेष्टावद्वृत्तिजातिमत्त्वम्. जातिश्च तादृशी मानुषत्वचैत्रत्वादिरित्यपि—न युक्तम् अधस्ताद् देशकालानुगमस्य संसृष्टवस्तुमात्रे निरासेन जातिमात्रस्य निरस्तत्वाच्च। पर्याप्तेर्निरस्तत्वेनान्त्यावयविभिन्नवृत्तित्वप्रतियोगिकाभावमुभयाभावादिसाधारणं द्रव्यत्वादावादायातिव्याप्तेश्च। तत्तत्पदार्थत्वेन लक्ष्यतायाः शारदायां निरस्तत्वेन तादृशजातिमत्त्वस्यैव लक्ष्यतावच्छेदकतायां विरोधाच्च। जातित्वस्याखण्डोपाधित्वेऽन्योन्याश्रयेण सखण्डत्वे चाननुगततयानुगमकत्वासम्भवेनानन्तानां तादृशजातीनां प्रत्येकमिलितविकल्पानुपपत्तेश्चेत्यादिकमूहनीयम्। अन्येतु—आद्ये देवदत्त ईश्वरस्य शरीरमितिव्यवहारस्य तार्किकानभिमतस्य प्रसङ्गः, ईश्वरकृतिप्रयुक्तचेष्टावत्त्वस्य देवदत्ते सत्त्वात्, चेष्टाया कृतिप्रयुक्तत्वमादायैव देवदत्तस्य शरीरमिदमिति व्यवहारात्, कृत्यसाधारणकारणत्वस्य षष्ठ्यर्थतास्वीकारेणातिप्रसङ्गवारणेऽप्यहल्यादिशरीरभूतशिलादावुक्तलक्षणाव्याप्तिर्दुर्वारैव। द्वितीये इन्द्रियवत्त्वं समवायेनासम्भवापादकम्, इन्द्रियावयवेष्वतिव्याप्तञ्च, संयोगेन तु घटादावतिप्रसक्तम्, स्वजन्यज्ञानावच्छेदकत्वसम्बन्धेन तथात्वे तु रामादिशरीरेष्वव्याप्तम्, ईश्वरज्ञानस्य भवतां नित्यत्वात्, व्याप्यवृत्तित्वेनावच्छेदकनिरपेक्षत्वाच्च, शिलादिरूपाहल्यादिशरीरेऽव्याप्तिश्च। तृतीये वेश्मादावतिव्याप्तिः, नच स्वावयवातिरिक्तदेशानवच्छिन्नत्वस्य भोगनिरूपितावच्छेदकतायां निवेशान्न दोषः, वेश्मनोदेहावच्छिन्नस्यैवावच्छेदकत्वादिति युक्तम्; परकायस्य प्रविष्टं प्रति शरीरत्वापत्तेः, ईश्वरभोगस्य व्याप्यवृत्तित्वेन तदवच्छेदकाप्रसिद्ध्या रामादिशरीरेऽव्याप्तेश्च, अतएवापीतौ तद्वदिति सूत्रे श्रीभाष्ये ईश्वरानन्दे व्याप्यवृत्तित्वरूपं निरतिशयत्वमुक्तमिति वदन्ति।

शरीरत्वस्य जातित्वं तु पृथिवीत्वादिना साङ्कर्येण तार्किकैरपि नानुमन्यते, निरस्तञ्च जातिमात्रं प्राक् शारदायां च। अतएव तत्तद्गोव्यक्तिभेदकूटवद्वृत्तिविषयतासम्बन्धेन यावद्गोव्यक्तिषु सम्बद्धं तावद्विषयकज्ञानमेव 'इयं गौ'रित्यादौ स्वरूपतः प्रकारतया भासमानं गोत्वमितिरीत्या शरीरत्वनिरुक्तिर्न सङ्गता, किञ्च भेदकूटस्यासर्वज्ञापरिच्छेद्यत्वेन विशिष्य च सर्वासां गोव्यक्तीनां शब्देनापि प्रतिपादयितुमशक्यत्वेन गोत्वावच्छिन्नप्रतियोगिताकभेदो निवेशनीयः, तत्र च 'इयं गौ'रित्यत्र स्वरूपत एव ज्ञानभानोपगमेन विषयतानवस्थानस्याभावेऽपि लक्षणज्ञाने तस्यावश्यकत्वमेव, नहि 'इयं गौ'रित्यत्र यज्ज्ञानं स्वरूपतो भासते तदेव गोत्वमित्यभिधानमात्रेण परः प्रतिपादयितुं शक्यते, व्यक्तिविशेषे एव तस्य सम्बन्धित्वशङ्काऽनिवारणादित्यवधेयम्। जातिप्रवृत्तिनिमित्तकत्वे गवादिशब्दवच्छरीरशब्दस्य ससम्बन्धिकत्वानुपपत्तिरित्यपि केचित्।

नन्तु लक्षणखण्डनेनैतेन किं कृतं स्यात् ? एवं तर्हि तन्निरूपणेनापि न किञ्चित् स्यात्, तेन यदि वस्तुसाधनं तर्ह्येतेन तद्बाधनमपि स्यात् । ननु परिच्छेत्तुमनर्हायाः परमेश्वरविभूतेरस्य प्रपञ्चस्यालौकिकत्वेनाप्यनिर्वचनं स्यात्, मिथ्यात्वं तु कुतः ? अविभूतिश्चासौ परमात्मा कथमिवोपास्यः स्यादिति चेच्छ्रद्धालुतया भगवत्कृपाभाजनेनापि भवता 'अल्पस्य हेतोर्बहु हातुमिच्छन् विचारमूढः प्रतिभासि मे त्व'मिति न्यायविषयता नातिक्रम्यते, संसृष्टवस्तुमात्रस्य खण्डनावतारपात्रतया विभूतिसंसृष्टपरमात्मापि तथा माभूदित्यसंसृष्टस्यैव तस्योपगन्तव्यत्वे स्वतःसिद्धस्वरूपं स्वातन्त्र्यमेव तस्य स्वात्मकं पारर्थिकी विभूतिः, अन्या तु तदात्मकतादृष्ट्या पारमार्थिकत्वेन पूर्वोक्तरीत्योच्यमानापि तदन्यत्वेन बाधिततयाऽद्भुताऽपि मिथ्याभूतैव नत्वलीकेति न दोषः । अलौकिकत्वं हि मायामहिम्नैवेति मायिकत्वमेवोपोद्बलयति, अन्यथा तु लक्षणप्रमाणाभ्यां वस्तुसिद्धिरितिमर्यादातिक्रमे यत्किञ्चिद्यत्र क्वचिदेव स्वीकार्यं किमिति न स्यात् । तस्माद्विचारस्य तादृशमर्यादामादृत्यैव प्रवर्तनीयत्वे लक्षणप्रमाणयोः केनापि निरूपणासम्भवेन द्वैतं वस्तुत्वबाधनध्रौव्यमेव, अधिकं तूक्तं शून्यवादे, यद्यपि तादृशमर्यादा ब्रह्मणि स्यवता, तथापि स्वतः सिद्धे एवासाधनीये तस्मिन्, न तु परतः सिद्धेऽपि; नहि लक्षणं विना प्रमाणमात्रेणैव वस्तुसिद्धिरस्तु अनुभूयते हि प्रपञ्च इति शक्यं वक्तुम्, इदं प्रमाणमिदमप्रमाणमिति विभागस्यापि लक्षणनिरूपणं विनाऽसम्भवदुक्तिकत्वात्, तस्माद्द्वैतसत्यत्वेऽभिनिविष्टस्य निरूपणासमर्थस्यालौकिकत्वोक्तिमात्रेण न निस्तारः; यथा च विशिष्टाद्वैतं द्वैतस्यैव नामान्तरकरणं तथोक्तं स्वातन्त्र्यवादखेप इति कृतमतिमसृगमतिना साकं वाग्विलासेनेति ।

एवञ्च सम्बन्धान्तरस्यासम्भवदुक्तिकत्वे आध्यासिक एवावशिष्यते सम्बन्ध इति "यस्य पृथिवी शरीर" मित्यादिश्रुतिरप्याध्यासिकनियम्यत्वेनैवोपपाद्येति सिद्धमचित्तचिदध्यस्तत्वमिति ।

अथ पुनरेतत्प्रकरणार्थनिष्कर्षः—ब्रह्मैव पारमार्थिकं तत्त्वम्, तस्यास्त्वेका मायाख्या शक्तिः, सा च वस्तुतस्ततोऽभिन्नापि कल्पिततद्भेदवती, ब्रह्मणः सत्यत्वेन तु तद्रूपेण सा सत्येत्युच्यते, ब्रह्मातिरिक्तत्वस्य मिथ्यात्वेन तु तेन रूपेण सा मिथ्येति कथ्यते । स्वरूपतः सा सत्या वा मिथ्या वेति प्रश्ने तु स्वरूपं यदि ब्रह्मरूपत्वं वा ब्रह्मभिन्नत्वं वा विवक्षितं तदोक्तमेवोत्तरम्, यदि तु मायात्वशक्तित्वदृश्यत्वादिकं, तदा धर्ममात्रस्य मिथ्यात्वेन तत्तद्धर्मेण रूपेण सा मिथ्यैव । एवं सति तत्तद्धर्मोपलक्षितं स्वरूपं सत्यं स्यादितिपर्यनुयोगे स्विष्टापत्तिरेव, ब्रह्मण एव सर्वधर्मोपलक्षितत्वात् । घटत्वादिनापि तस्यैव व्यवहारात् । सा च शक्तिरनुपपन्नार्थप्रदर्शकस्वरूपस्वातन्त्र्यशालितयाऽपर्यनुयोज्या सत्यत्वे मिथ्यात्वे वोक्तरीत्या स्वानुरूपान् भ्रान्तान् भ्रमविषयान् भ्रमांश्च नैकविधान् स्फारयति, स्वयमेवोद्भासितेन चोपायकलापेन कांश्चिन्मुक्ततया भासयति, वस्तुतस्तु न बन्धो न वा मोक्षः । नन्वेवं भ्रमनिवृत्तिरेव मायाया निवृत्तिर्नतु स्वरूपतोऽपि तन्निवृत्तिरिति स्यादित्याक्षेपे तु पूर्वोदीरितरीत्यैवोत्तरम् । यथा मिथ्या तथा निवृत्ता, यथा तु सत्या तथाऽवशिष्टेति चिदतिरिक्तं नावशिष्टम् । नावशिष्टमितिशब्देन बोध्यमाननिषेधस्य गतिं तु खण्डनचरमपद्यशारदायामवोचाम । यदि तु तत्रैवोक्तरीत्या न भावाद्वैते न वा स्वस्वेतरसर्वदृश्यनाशस्य वृत्त्यात्मकचरमक्षणात्मत्वे न वा चरमतत्त्वज्ञानस्य दृश्याश्रयकालपूर्वत्वाभावनियमे चित्तसन्तोषः, नापि पञ्चमप्रकारतापक्षे, सदसत्तदुभयात्मकतदुभयविलक्षणविलक्षणस्य बुद्ध्यनारोहात् तदा प्रपञ्चस्योक्तरीत्या दुर्निरूपतया मिथ्यात्वमपरित्यज्यैव शास्त्रसिद्धतया च सृष्टिप्रलयौ स्वीकृत्यैव "न कदाचिदनीदृश" मिति प्रवाहानन्ततापक्ष एवाभिनवोऽभिनयाय कस्मैचिद्रोचेत । बद्धत्वादिभ्रमनिवृत्तिफलः परिपूर्णात्मताबोधोदय एव च परमः पुरुषार्थः । शरीरविशे-

पावच्छेदेन द्वैतप्रतिभासनिवृत्तिरेव च "भूयश्चान्ते विश्वमायानिवृत्ति" रितिश्रुतिविषयः। मायाया-स्तूक्तैव गतिः; परन्तु न मुक्तावेवेयं गतिरपि तु बन्धेऽपीत्येषा दिक्। इति दर्शनसर्वस्वेऽनिर्वचनीयतावादे स्वातन्त्र्यवादनिष्पीडनप्रकारो विवर्तवादश्च।

ज्ञप्तिशून्यशिवतत्त्वविवर्ता-
स्त्रैपुरेण महसा सहभूताः।
द्वैतदर्पदलनाय सुसज्जा-
दर्शनेषु कुशलैः परिशील्याः॥

इति श्रीशङ्करचैतन्यभारतीयतिविरचितो दर्शनसर्वस्यापरपर्यायोऽनिर्वचनीयतावादः समाप्तिमगात्।

श्रीशारदार्पणमस्तु।



ॐ

श्रीशारदायै नमः ।

# खण्डनखण्डखाद्यम् ।

## शारदाख्यव्याख्यासंवलितम् ।

### प्रथमः परिच्छेदः ।

## अनुमानखण्डनप्रकरणम् ।

### अनुमितिपरामर्शयोः खण्डनम् ।

अनुमानमपि किमुच्यते ? । करणपक्षे लिङ्गपरामर्शोऽनुमानमिति चेत् ; किं

---

प्राणिता गुणगणेक्षणे रताः
सञ्जिता निजपदाम्बुजे पुनः ।
मञ्जिता मदनदृष्टि येन त-
स्त्रैपुरं किमपि मन्महे महः ॥

प्रमाणविशेषलक्षणनिरासः प्रस्तुतः, तत्र च न केवलमुपजीव्यप्रत्यक्षतुर्निरूपतयैवानुमानादेर्दुर्निरूपत्वमपितु स्वरूपेणापीत्यनुशयानः सावसरमाह अनुमानमपीति । अपिपदं प्रत्यक्षं दृष्टान्तीकर्तुम् । किमिति च वक्ष्यमाणाक्षेपगर्भा पृच्छा, केवला हीयं जिज्ञासोरेव शोभते, आक्षेपः पुनः केवलः स्फुट एव स्यादिति हेतोरभिधानमपेक्षते, तथा च प्रत्यक्षपदार्थं इवानुमानपदार्थोऽपि बाधित एव वक्ष्यमाणदोषादिति तात्पर्यार्थः । दोषानाख्यातुं परं तावदुत्थापयति करणपक्षे इति । अनुमानशब्दस्य करणल्युडन्ततापक्षे इत्यर्थः । परामर्श इति । यद्यपि परामर्शो निर्व्यापारत्वान्न करणम्, व्याप्तिज्ञानमात्रविवक्षणे तु 'व्याप्तस्ये' त्याद्यग्रिमग्रन्थासङ्गतिः, नवा व्याप्तिज्ञानादेरपि करणत्वसम्भव इत्युक्तं करणत्वखण्डने प्राक् ? नवैतेषां प्रमितिकरणतावच्छेदकरूपविरहिणां प्रमाणत्वं प्रामाणिकमपि । न च वक्तव्यरीत्या व्यभिचारप्रकारकज्ञानसामग्रीसद्भावे व्याप्तिनिश्चयसम्भवोऽपि, तदुक्तं सर्वज्ञकल्पैर्भर्तृहरिपादैः—"देशकालस्वभावादिभेदाद्भिन्नासु शक्तिषु । भावानामनुमानेन प्रसिद्धिरतिदुर्लभा" इति । प्रसिद्धिः = प्रमितिः । सम्भवति चातीन्द्रियार्थप्रसिद्धिः श्रद्धाधनानामागमादेव । अत एवेश्वरोऽप्यागमादेव व्यवस्थापित ईश्वरप्रतिपत्तिप्रकाशादौ । लिङ्गज्ञानजन्या सम्भावनैव च तत्तद्व्यवहारजननी । एतेन—भवदीयवाक्यस्य सन्दिग्धविपर्यस्तान्यतरं प्रत्येवार्थवत्त्वात्तयोश्च परकीययोरप्रत्यक्षत्वेनानुमानप्रामाण्योपगम आवश्यक इति-निरस्तम् । सम्भावना चागृहीतासंसर्गकयोः पर्वताग्न्याद्योर्निश्चय इति केचित्, उत्कटैककोटिकः संशय इत्यन्ये । उत्कटत्वं तु विषयताविशेषः । एवञ्चानुमिनोमीतिधीविषयता तादृशसम्भावनायामेव वक्तव्या । तस्यामेव च क्वचिन्निश्चयत्वाभिमानः । वस्तुतस्तु किञ्चिद्व्यवस्थापयति न कश्चित्पर्यनुयोगो युज्यतेऽप्यनियंतव्यतावादिनि, "याघेऽदृदेऽन्यसाम्यास्कि-" मित्याद्युक्तत्वात् । एवञ्च सति मूलोच्छेदे न बहु वक्तव्यम्, तथापि निरासप्रकारान्तरं शिक्षयितुमाह किमिति । परः प्रतिब्रूते व्याप्तस्येति । व्याप्तिसमानाधिकरणपक्षधर्मतावगाहिनिश्चयत्वं

लिङ्गत्वम् ? व्याप्तस्य पक्षधर्मत्वमिति चेत् संशयस्योपलक्षणत्वे तत्र दृष्टाऽपि व्यापकं तत्परामर्शेऽतिप्रसङ्गात्, अत एव न तस्य वर्तमानस्य, अतत्कालेऽप्युपलक्षणत्वात्;

---

परामर्शत्वमिति यथाश्रुताल्लभ्यते। अत्र यद्यपि परामर्शस्य तादृशनिश्चयरूपत्वे तदवच्छिन्नजनकताकजन्यताशालिज्ञानमनुमितिरिति स्यात्, तत्र च भ्रमात्मकपरामर्शजन्यानुमितावव्याप्तिः, तस्या यथार्थाया अपि सम्भवात्, एवं तज्जनकपरामर्शेऽप्यव्याप्तिः। अथ व्याप्यपक्षोभयवैशिष्ट्यविषयताशालिनिश्चयत्वेन व्याप्यत्वावच्छिन्नविषयतानिरूपितपक्षतावच्छेदकावच्छिन्नविषयताशालिनिश्चयत्वात्मकेन जनकता विवक्षणीया, हेतुतावच्छेदकानवगाहिज्ञानादनुमितिः स्वीक्रियत एव। व्याप्तिघटकपदार्थानाञ्च परस्परनिरूप्यनिरूपकभावापन्नविषयताश्रयतयैव निवेश आदर्तव्यः। अत्र च विशिष्टस्मरणादावप्यनतिप्रसङ्गः, पक्षविशेष्यकस्यैव परामर्शस्यानुमितिहेतुत्वे त्वनुमितिलक्षणे तादृशनिश्चयत्वावच्छिन्नजनकताकजन्यताशालिनि व्याप्यविषयकत्वमेव निवेशनीयम्, अन्वयव्यतिरेकव्याप्त्योस्तु व्यभिचारधीविरोधिधीविषयत्वेन निवेशः, साध्याभाववद्वृत्तित्वरूपव्यभिचारग्रहं प्रति साध्याभाववदवृत्तित्वरूपव्याप्तिग्रहस्यैव विरोधित्वं नत्वन्यादृशव्याप्तिग्रहस्य, मणिमन्त्रादिन्यायेन प्रतिबन्धकतायां मानाभावादिति मतादरे तु विशिष्यैव व्याप्तौ निवेशनार्हं। लाघवात्साध्याभाववदवृत्तित्वरूपव्याप्तिग्रहस्यैव वाऽनुमितिहेतुतावादः केवलान्वयिग्रन्थोक्तः पुरस्कर्तव्यः। व्याप्त्यादेः साध्यादिभेदभिन्नमूर्तिकत्वेन लिङ्गोपधानमतानभ्युपगमेऽपि कस्याश्चिदनुमितेर्व्याप्तिविषयकत्वसम्भवेन चाव्याप्तिवारणाय जातिघटितलक्षणस्यावश्यादरणीयत्वे तु नेयं चिन्तापि। एवञ्चोक्तजनकताकजन्यताशालिज्ञानवृत्त्यनुभवत्वव्याप्यजातिमत्त्वमेवानुमितेर्लक्षणम्। अत्र व्याप्यत्वं तु तत्समानाधिकरणत्वे सति तत्समानाधिकरणभेदप्रतियोगितावच्छेदकत्वमिति नानुभवत्वे स्वव्याप्यत्वमादाय प्रत्यक्षादावतिप्रसङ्गः, अनुभवत्वं न चतुष्टयसाधारणी जातिरिति प्राक्प्रत्यभिज्ञाप्रस्तावोक्तमते तु स्मरणासमवेतत्वमेवानुभवत्वव्याप्यत्वस्थाने प्रवेश्यम्, तादृशजन्यताशालिज्ञानं तु तद्व्यक्तित्वेनापि शक्यमुपादातुमिति चेन्न; साक्षात्कारित्वखण्डने जातिमात्रनिरासस्य निवेदितत्वेनोक्तलक्षणस्यासम्भवदुष्टिकत्वात्, एवञ्च परामर्शत्वस्याप्यनुगमाय तस्य मानसत्वव्याप्यजातिविशेषतोपगमोऽपि नादरार्हः, एवञ्चानुमितिपरामर्शयोरुभयोरेव दुर्वचता, अनुपदं वक्ष्यते चाधिकम्। तथापि स्फुटत्वादेतदुपेक्ष्य पक्षधर्मताघटकीभूतपक्षतायाः साध्यसन्देहात्मकत्वमते दूषणान्तरमाह संशयस्येति। समानाकारसिद्धेरेव संशयनिवर्तकतायाः प्रामाणिकत्वे सिद्धिनिवर्त्यत्वेन पक्षः साध्यवान्नवा साध्यं पक्षवृत्ति नवा पक्षनिष्ठाभावप्रतियोगि नवेत्यादिसंशयानामनुगमस्याप्रामाणिकत्वेनाननुगतस्वत्वघटितत्वाद्यसम्भवेन चाव्यवहितोत्तरत्वसम्बन्धेन तत्संशयविशिष्टानुमां प्रति तत्संशयस्य कारणतेति विशिष्यैव कार्यकारणभावपर्यवसानसूचनाय संशयस्येत्येवाभ्यधात्। उपलक्षणत्व इति। उपलक्षणतया परामर्शनिष्ठजनकतावच्छेदकत्वे इत्यर्थः। विषयतया तदवच्छेदकत्वं त्वसम्भावितमेव, पक्षतायाः परामर्शाविषयत्वात्। तत्र = पर्वतादौ। तत्परामर्शे = पर्वतादिधर्मिकपरामर्शे। अतिप्रसङ्गात् = अनुमित्युपधायकत्वप्रसङ्गात्। अविद्यमानस्यैवोपलक्षणत्वेन कालान्तरीयसंशयोपलक्षितधर्मिवृत्तिताविषयकपरामर्शसत्त्वे सिद्धिदशायामपि त्वदभिमतसामग्रीसद्भावात्, सिद्धिसत्त्वेऽनुमित्यनुत्पादाय च पक्षताया हेतुत्वं त्वयानुमन्यत इतीष्टापत्तेरनवसरादिति भावः। अत एव = उक्तातिप्रसङ्गादेव। वर्तमानस्येति। उपलक्षणतया जनकतावच्छेदकत्वमिति शेषः। उपाधिसाधारणमुपलक्षणत्वं कालिकाव्याप्यवृत्तिमन्निष्ठं विधेयानन्वयित्वे सति व्यावर्तकत्वमेवात्र विवक्षितमित्याशयः। एवञ्चातत्कालेऽपीत्यत्रापेरपि सामाञ्जस्यम्, अन्यथा

विशेषणत्वे चानुमाय व्यापकं धर्मिनाशवद्प्रवृत्त्यापत्तेः। पक्षधर्माद्धेतोः पक्षांशे विशेष्ये साध्यसिद्धिः, ईदृशश्च वैयधिकरण्यमिष्टमेवेत्यतो नैवमिति चेन्न; पक्षमादायैव वैयधिकरण्ये नियतसामानाधिकरण्यलक्षणव्याप्तिलोपापत्तेः। तथापि विशेष्यमादाय साऽस्तीति

---

विद्यमानत्वगर्भोपाधित्वस्याविद्यमानत्वगर्भोपलक्षणत्वस्य वा विवक्षणे तदसङ्गतेः। अतत्काले = स्वाभावकाले। उपलक्षणत्वादिति। तथाच कालान्तरीयसंशयमादायोक्तातिप्रसङ्गसम्भवः। तद्वारणाय विद्यमानत्वगर्भविशेषणतया संशयस्य जनकतावच्छेदकत्वोपगमे त्वाह विशेषणत्वे चेति। चस्त्वर्थः। अत्र च जनकतावच्छेदकत्वेऽपि स्वतन्त्रान्वयव्यतिरेकशालितया जनकत्वस्यापि संशये सम्भवः. इन्द्रियसम्प्रयोगनिष्ठकारणतावच्छेदकस्यापीन्द्रियस्य कारणतापि स्वीक्रियत एव। प्रकृते पुनः कारणत्वावच्छेदकत्वं त्यक्तुमपि शक्यमित्यन्यत्। विशेषणत्वं चात्रोपाधित्वमेव, संशयाविषयकत्वे संशयविशिष्टधर्मिविषयकत्वस्य परामर्शेऽनुपपत्तेरिति। धर्मिनाशवत् = पर्वतादेर्धर्मिणो नाशस्थले इव। यथा पर्वते वह्न्याद्यनुमित्यनन्तरं पर्वतस्य स्वरूपतो विनाशे न वह्न्याद्युपादित्सोस्तत्र प्रवृत्तिः, तथा संशये विनष्टे तदवच्छिन्नस्य तस्य विनाशेऽपि न सा स्यात्, यादृशे हि धर्मिणि साध्यसिद्धिस्तादृशे एव प्रवृत्तिः, अन्यथाऽतिप्रसङ्गादित्याभासः। ननु यादृशे इति यद्धर्मावच्छिन्नविशेष्यिकेत्यर्थः, ननु वस्तुगत्या यद्विशिष्टविशेष्यिकेत्यर्थः। अनुमितौ च विशेष्यतावच्छेदकं पर्वतत्वादिकमेव, ननु संशयावच्छिन्नत्वमभासमानत्वात्, तथा च पर्वतत्वावच्छिन्नविशेष्यिका प्रवृत्तिः सम्भवत्येव सत्यपि संशयस्य विनाशे इत्याशङ्कते पक्षधर्मादिति। विद्यमानपक्षताकधर्मिवृत्तितया परामृश्यमानादित्यर्थः। पक्षांशे = पक्षतोपलक्षिते। ननु यद्यप्यनुमिताविव परामर्शेऽपि सांशयिकतया न धर्मिभानम्, तथापि संशयस्यानुमितिकारणत्ववादिना प्राथमिकसंशयस्य परामर्शादिना नाशेऽप्यनुमित्यव्यवहितप्राक्क्षणे संशयान्तरस्य कल्पनीयतया परामर्शकाले संशयस्याभावव्यापकत्वेन वस्तुगत्या संशयविशिष्टविशेष्यकत्वं परामर्शे निर्बाधम्, अनुमितेस्तु कस्याश्चित्संशयनाशक्षणेऽप्युत्पत्तिसम्भवेन नोक्तविशेष्यकत्वम्, एवञ्चोक्तरीत्या प्रवृत्तेरुपपादनेऽपि परामर्शानुमित्योर्विशेष्यतया संशयविशिष्टाविशिष्टरूपभिन्नधर्मिवृत्तित्वात्मकं वैयधिकरण्यमापन्नम्, युक्तञ्च कार्यकारणयोः सामानाधिकरण्यमित्याशङ्कां शमयितुमाह ईदृशमिति। वैयधिकरण्यमिति। साध्यसाधनयो वैयधिकरण्यं त्वत्र न शङ्कास्पदमपि संशयकाले द्वयोरेव संशयोपहितत्वात्, तदभावकाले च द्वयोरेव संशयोपलक्षितनिष्ठत्वादिति तथा न व्याख्यातम्। इष्टमेवेति। उक्तवैयधिकरण्यस्यानतिप्रसञ्जकत्वात्, संशयाविषयकत्वस्य च द्वयोरविशिष्टत्वाद्विशेष्यतावच्छेदकतासम्बन्धेन सामानाधिकरण्योपपत्तेरित्यभिप्रायोऽग्रे उद्घाटनीयः। तदनुद्घाटनदशायामाह पक्षमादायैवेति। पक्षताविशिष्टान्तर्भावेणैवेत्यर्थः। परामर्शानुमित्योरितिशेषः। विशिष्टकेवलयोश्च भेदाभिप्रायेणेदम्। वस्तुतस्तु तयोरत्यन्तभेदस्य विशिष्टसत्ता न सत्तेतिप्रतीतेः प्रमात्वापादकत्वेनासम्भवितयाऽभेदस्य भेदाभेदस्य वोपगमे सामानाधिकरण्यसम्भव इति। नियतेति। स्वव्यापकेत्यर्थः। व्याप्तीति। कारणनिरूपिता हि कार्ये व्याप्तिरावश्यकीतिभावः। उक्ताभिप्रायमुद्घाटयति तथापीति। अभासमानं संशयमादाय वैयधिकरण्येऽपीत्यर्थः। विशेष्यमिति। विशेष्यतया तदवच्छेदकतया वा भासमानमित्यर्थः। सा = व्याप्तिः। इतिचेन्नेति। इति चेत्तथापीति वक्तुमुचितम्। पूर्वपक्षस्य सर्वथैव निराकरणीयतायां हि नकारप्रयोगः समुचितः, न चात्र तथा। 'उच्यते' इतिस्वीयपदङ्गीकारे, सत्यमित्यादिवचेषन्निराकार्यत्वे प्रयोग इति द्रष्टव्यम्। "सास्ती" त्यत्र 'तथा च विशेषणत्वपक्षे दोषाभावात्संशयात्मकपक्षताया अनुमितिहेतुत्वसम्भव' इति शेषतया व्याख्याने तु यथाश्रुतमेव सम्यक्। सिद्धिकालेऽनुमित्युत्पत्तिवारणमेव पक्षताया अनुमितिहेतुत्व-

चेन्न; साध्यविशेषसिद्धिरपि यत्र व्याप्तिबलायातं सामान्यं तत्र सामान्यप्रतीत्यपर्यवसानबलादेवेति सामान्यविशेषसिद्ध्यनुपयोगिनी पक्षधर्मता त्वदिष्टा केवलं सिद्धसाधनपरिहारायानुमितिकारणत्वेनेष्टव्या, सिद्धसाधनञ्च न स्वार्थानुमाने दोष इति नानुमितिमात्रहेतुनिवेशनी सेति । मोक्षमाणे हि "आगमेनानुमानेन ध्यानात्प्रत्यक्षणेन च । त्रिधाऽऽत्मनि

---

कल्पनफलमिति पर्यवसाययितुं व्यापकतावच्छेदकरूपेण तदनवच्छेदकरूपेण वाऽनुमितेः साध्यावगाहित्वे पक्षताया उपायतासम्भावनानारोहं तावदाह साध्यविशेषेति । यत्र व्याप्तिबलायातं सामान्यं तत्र साध्यविशेषसिद्धिरपि सामान्यप्रतीत्यपर्यवसानबलादेवेति योजना । यत्रानुमितौ व्याप्तिग्रहस्य वह्नित्वादिविषयकत्वप्रयुक्तं वह्नित्वादिविषयकत्वं तत्र वह्नित्वाश्रयव्यक्तिविषयकत्वमपि जातिनिष्ठसमवायसम्बन्धावच्छिन्नप्रमाप्रकारतायास्तत्समवायिव्यक्तिनिष्ठविशेष्यतानिरूपितत्वनियमस्य प्रामाणिकत्वनिबन्धनमेवेत्यनुक्रमेण तदर्थः । एतेनानुमितेः पर्वतादौ व्यापकतावच्छेदकरूपेण साध्यावगाहित्वा व्याप्तिप्रकारकेण पर्वतादिवृत्तित्वज्ञानेनैव प्रयुज्यते ननु पक्षताविशिष्टपर्वतादिवृत्तित्वज्ञानेनेति न तत्र पक्षतोपयोग इत्युक्तम् । एवमेव लाघवज्ञानात्मन इतरविशेषबाधात्मनो वा सहकारिणः सद्भावदशायामनुमितेर्व्यापकतानवच्छेदकरूपेण साध्यावगाहितायामपि द्रष्टव्यम् । यद्यपि पक्षतावच्छेदकावच्छेदेनानुमितौ पक्षतावच्छेदकव्यापकसाध्यप्रतियोगिकसंसर्गेण व्यापकतावच्छेदकसंसर्गतया परामर्शानवगाहितेनैव साध्यभानेन तत्र पक्षतावच्छेदकावच्छेदेन हेतुमत्ताविषयकपरामर्शस्येव प्रतिबन्धिकायाः पक्षतावच्छेदकावच्छेदेन सिद्धेरभावस्यापि हेतुत्वेन व्यापकतानवच्छेदकसंसर्गेण साध्यावगाहितायां पक्षताया उपयोगः, तथापि नैतदपि पक्षतायाः सिद्धिसत्त्वेऽनुमित्यनुत्पादनिर्वाहकत्वातिरिक्तार्थे पर्यवस्यतीति भावः । पक्षधर्मता = पक्षताविशिष्टधर्मिवृत्तिता, पक्षतेति यावत् । सिद्धसाधनपरिहाराय = सिद्धिसत्त्वेऽनुमित्यनुत्पादनिर्वाहाय । सिद्धसाधनं च = पक्षे साध्यवत्त्वनिश्चयस्तु । न स्वार्थानुमाने दोषः = न स्वानुमित्सानिवृत्तिप्रयोजनकानुमितेः प्रतिबन्धकः, नानुमित्साधीनानुमितेः प्रतिबन्धक इति यावत् । सिद्धिदशायां ह्यनुमितेः स्वसंशयनिवृत्तिफलकतया स्वार्थत्वासम्भवः, संशयविरहात्, एवञ्च वाद्युपन्यस्तप्रमाणेनानुमिनुयामितीच्छाधीनाया अपि सङ्ग्रहोऽनुमितेः । नानुमितिमात्रहेतुनिवेशनी सा = न निखिलानुमितिषु विशिष्यापि हेतुतावती संशयात्मिका पक्षता, तेन पक्षतायाः पक्षतात्वस्य वाऽनुगन्तुमशक्यतयाऽनुमितित्वव्यापकजन्यतानिरूपितजनकतायाः क्वचिदपि पक्षतायां परेणाप्यनङ्गीकार्यत्वेऽपि न क्षतिः । सिद्धिसत्त्वे यत्रानुमित्युत्पादो नेष्टस्तत्र तन्निर्वाहाय पक्षताया हेतुत्वं कल्प्यताम्, यत्र तु सिद्धिसत्त्वेऽप्यसाविष्टस्तत्र निर्वाह्याभावात्तस्या हेतुताकल्पनाऽसम्भवः, एतेनानुमित्साविरहविशिष्टसिद्ध्यभावस्यापि तत्र हेतुत्वकल्पनाया अप्रामाणिकत्वं सूचितम्, वक्ष्यते चाधिकं पक्षताखण्डने । न वा तदा संशयात्मकपक्षता सम्भाव्यापीत्युपष्टम्भसङ्गतिः । निश्चितेऽप्यर्थेऽनुमितिरित्यत्र स्थलविशेषमुदाहरति मोक्षमाणैरिति । मुमुक्षुभिरित्यर्थः । मुचोऽकर्मकस्येति साधु । इष्यते इत्यन्वयः । आगमेन = आगमाधीनशाब्दबोधेन । तृतीयार्थोऽभेदः सम्प्लवघटकज्ञानेऽन्वेति । एवमग्रेऽपि । अनुमानेन = अनुमित्या । ध्यानात्प्रत्यक्षणेन = ध्यानाधीनसाक्षात्कारेण, यदाहुः—"वेदान्तवाक्यजज्ञानभावनाजाऽपरोक्षधी"रिति । ध्यानं तु स्मृतिविशेषो न प्रमेति न तस्य प्रमाणसम्प्लवप्रयोजकत्वम्, यदाह "ध्यानादिभावं स्मृतिरेव लब्ध्वा चिन्तामणित्वद्धिभवं व्यनक्ति" । प्रमाणानां त्रिधात्मनि सम्प्लवः = आत्मरूपसमानविषयकज्ञानत्रयजनकत्वमिति यावत् । स्वार्थं = स्वदुःखनिवृत्तिफलकम् । न्यायात्मकमेव ह्यनुमानं परार्थमिति भावः । प्रात्यक्षिकसिद्ध्यनन्तरमनुमित्सयाऽनुमितिरित्यत्र तु न ग्रन्थकर्तुः स्वरस इति प्रत्यक्षखण्डने निवेदित-

प्रमाणानां सम्प्लवः स्वार्थमिष्यते" इति । एतेन संशययोग्यतापि निरस्ता ।

व्याप्यत्वमिति चेत्, किं वस्तुगत्या व्याप्यस्य स्वरूपेण परामर्शोऽनुमानम् ? व्याप्यतया वा ?; नाद्यः, अगृहीतव्याप्तिनापि धूमादिपरामर्शस्यानुमानताप्रसङ्गात् । नापि द्वितीयः, व्याप्त्युल्लेखिनः प्रमाणस्यानुमानत्वप्रसङ्गात्, तस्यापि व्याप्यत्वग्राहितया अवश्यं वक्तव्यत्वात् । अत एव द्वितीयतृतीयविशेषणे अपि निरस्ते, धारावाहिनि तथात्वापत्तेः । गृहीतव्याप्तिनापि च युगपदुभयग्रहणे 'द्वावेतौ व्याप्यव्यापकावि' तिपरामर्शस्यानुमानत्वप्रसङ्गात् । न च तदनुमानमेव, असन्दिग्धतया पक्षत्वाभावेन तद्धर्मस्य

---

मिति सा नोदाहृता । एतेनेति । सिद्धिसत्त्वेऽप्यनुमितेर्दर्शनेन तदभावघटितयोग्यताया अनुमितिसामान्ये हेतुताया असम्भवदुक्तिकत्वेनेत्यर्थः । संशययोग्यता = सिद्ध्यभावबाधाभावौ । बाधाभावस्यानुमितिं प्रति पृथक्कारणता न कल्पनीयेत्यभिप्रायः । अत्र मते संशयस्य परामर्शादिना नाशस्थले संशयान्तरमनुमित्यव्यवहितप्राक्क्षणे न कल्पनीयमिति लाघवम् । यद्यपि संशयकारणतावादिमते बाधाभावस्यानुमितौ कारणतैव न कल्पनीया, बाधदशायां संशयासम्भावादिति समं लाघवम्, तथापि संशयान्तरस्योक्तस्थले कल्पनाऽनुभवविरोधेनापि शक्या तिरस्कर्तुमित्याशयेन संशयकारणतां निरस्य मतस्यास्य निरास इत्यवधेयम् ।

व्याप्यत्वमिति । लिङ्गत्वमिति प्रश्नवाक्यस्थमनुषज्यते । यद्यपि पक्षतायाः कस्याश्चिदनुमितिहेतुत्वमस्तु मा वा, धर्मिवृत्तिताविषयकत्वं न परामर्शे त्याज्यम्, तथापि सामान्यतो धर्मिवृत्तितानिवेशो व्याप्यत्वेनैव चरितार्थः, साध्याभाववदवृत्तित्वरूपव्याप्तावपि साध्यसामानाधिकरण्यनिवेशस्यावश्यकत्वात्, विशिष्य तु तन्निवेशोऽनुगमस्यावश्यरक्षणीयतां मन्वानैर्नादरणीय इति व्याप्तेरनुगमाभिमानिनोऽभिप्रायः । स्वरूपेण = धूमत्वादिना । परामर्शोनिश्चयः । अगृहीतव्याप्तिनेति पुरुषपरम्, हेतौ तृतीया । व्याप्यविषयकधूमादिनिश्चयस्येति तु भावार्थः अनुमानताप्रसङ्गात् = अनुमित्युपधायकताप्रसङ्गात् । स्वकल्पितसामग्रीसत्त्वादिति भावः । एवमग्रेऽपि । अयमालोको वा धूमो वा सर्वथैव वह्निव्याप्य इति परामर्शेऽनुमित्यनुपधायकत्वप्रसङ्गस्याप्युपलक्षणमिदम् । व्याप्त्युल्लेखिन इति । पक्षधर्मताऽनुल्लेखिन इति शेषः । तेन नेष्टापत्तेरवसरः । प्रमाणस्य = निश्चयस्य । तस्यापि = पक्षधर्मतानुल्लेखिनोऽपि । तत्पदेन व्याप्त्युल्लेखित्वेन परामर्शे "व्याप्यत्वग्राहितया" इत्यस्यासङ्गतत्वापत्तेः । वक्तव्यत्वादिति । नहि व्याप्तिविषयकत्वं पक्षधर्मताविषयकत्वव्याप्यम्, वह्निव्याप्यो धूम इत्यस्यापि प्रत्ययस्य जागरूकत्वादिति भावः । अतएव = वक्ष्यमाणादेव । द्वितीयेति । व्याप्तिप्रकारको द्वितीयो वा तृतीयो वा परामर्शोऽनुमानमित्यर्थः । धारेति । पक्षधर्मतानवगाहिन्यपि व्याप्यत्वगाहिनि ज्ञाने धारावहनस्थले द्वितीयत्वतृतीयत्वयोरुपपत्तेरितिभावः । ननु व्याप्तिधर्मिविशेषवृत्तितोभयवैशिष्ट्यमवगाहमानमेव ज्ञानं द्वितीयादिशब्देन विवक्षितम्, अननुगमस्त्वनायत्या सोढव्यः, प्राथमिकस्तु प्रत्ययो महानसादौ न पक्षधर्मतामवगाहत इत्याशङ्क्याह गृहीतव्याप्तिनेति । इदं परामर्शस्य व्याप्यत्वावगाहित्वसम्पत्तये । युगपदिति परामर्शस्य सिद्ध्यात्मकत्वोपपत्तये प्रसङ्गे इष्टापत्तिं परिहर्तुम् । उभयग्रहणे = व्याप्यव्यापकोभयविषयकज्ञानवति जने, इदमनुमानत्वघटकानुमितावन्वेति, तेन नास्य वैयर्थ्यम्, एवं हि पुरुषनिष्ठप्रत्यासत्त्या कार्यकारणभावः सूचितो भवति किं वोभयग्रहणे इत्यस्योभयग्रहणसामग्रीदशायामित्यर्थः । एताविति धर्मिविशेषवृत्तिताभानलाभाय । परामर्शाकारे तु नादरः । अनुमानं = अनुमित्युपधायकम् । असन्दिग्धतयेति । साध्यवत्त्वेनेत्यादिः । सिद्धसाधनवत् = साध्यवत्त्वेन निश्चिते धर्मिणि

हेतोः सिद्धसाधनवदपक्षधर्मत्वात् । स्वार्थानुमाने नायं दोष इति चेन्न, प्रत्यक्षलक्षणोपपत्त्या साक्षात्त्वासाक्षात्त्वविरोधापत्तेः । अव्यापकविषयत्वे सतीति चेन्न, व्याप्यत्वविष-

वर्तमानस्यैव । यद्यपि प्रकृतेऽपि साध्यवत्त्वेन निश्चितत्वम्, तथानिश्चितेऽपि चासन्दिग्धत्वम्, तथापि साध्यवत्तयाऽसन्दिग्धत्वेन निश्चितत्वेन च भेदमभिप्रेत्य दृष्टान्तदार्ष्टान्तिकभावः सिद्धयभावात्मिकायाः संशयात्मिकायाश्च पक्षतायाः पार्थक्यनिबन्धनः प्रकृते तदुभयाभावे पर्यवस्यति । स्वार्थानुमाने नायं दोष इति । अनुमित्सास्थले संशयादिविरहोऽनुमितेरनुत्पादप्रयोजको नेत्यर्थः । उक्तरीत्या निर्वाह्यविरहेण तत्र पक्षताया हेतुत्वस्याकल्पनीयत्वादिति भावः । प्रत्यक्षेति । इन्द्रियसन्निकृष्टविषयके स्थाणुत्वव्याप्यकोटरादिमानयमित्यादिव्याप्तिप्रमितिविशेषवृत्तिताज्ञानजे ज्ञान इत्यादिः । साक्षात्त्वेत्यादि । साक्षात्त्वासाक्षात्त्वयोर्विरुद्धयोरेकविषयकत्वावच्छेदेनापत्तेरित्यर्थः । पक्षताया अनुमितिहेतुत्वे तु तदजन्यतया प्रकृतज्ञाने नानुमितित्वसम्भवः । नन्विन्द्रियजत्वेन न प्रत्यक्षत्वापादनसम्भवः, व्यापकस्यानापादकत्वात्, इन्द्रियत्वावच्छिन्नजनकताकज्ञानत्वं तु तत्र प्रत्यक्षत्वनिर्णयेनैव निर्णेयम्, प्रत्यक्षत्वेनेन्द्रियत्वेन च कार्यकारणभावात् । साक्षात्करोमीत्याद्यनुव्यवसायस्यैव तत्र प्रत्यक्षत्वनिर्णायकत्वमितिचेत्, अनुमितिसामग्रीसत्त्वग्रहे तादृशानुव्यवसायस्य प्रामाण्यानिश्चयात्, अनुव्यवसायः सर्वः प्रमैवेति हि न राज्ञामाज्ञा, अतएवानुमिनोमीत्यनुव्यवसायस्य स्थलविशेषे पक्षतागादाधर्यां भ्रमत्वमभ्यधायीति चेन्न; एवं सति तादृशज्ञानेऽनुमितित्वस्याप्यनापत्तेः, न हि परामर्शजत्वेन तत्, तस्य व्यापकत्वात्, अत एव व्याप्तिप्रकारकपक्षधर्मतानिश्चयत्वावच्छिन्नजनकताकज्ञानत्वेनापिन तत्, तस्यापि स्मृतिविशेषेऽपि वर्तमानत्वेन व्यापकत्वात्, व्याप्तिज्ञानकरणकत्वं त्वनुमितावसम्भावितमित्युक्तं करणत्वखण्डने, अप्रयोजकत्वञ्चानुमिनोमीत्यनुव्यवसायस्य प्रकृते प्रामाण्यसमर्थनं विना शक्योद्भावनम् । तादृशजनकताकानुभवत्वं यद्यपि व्याप्यमनुमितित्वस्य, तथापि प्रकृतानुभवेऽनुमितित्वसिद्धिं विना तादृशनिश्चयत्वेन कारणता तत्र कथं प्रत्येतव्या, अनुमिनोमीत्यनुव्यवसाये प्रामाण्यनिश्चयासम्भवस्य प्रत्यक्षसामग्रीसद्भावग्रहप्रयुक्तस्य त्वदुक्तरीत्यैव वक्तुं शक्यत्वात्, एवं च समानसमाधानमेवेदम् । तस्मात्तत्र कीदृशोऽनुव्यवसायः प्रमात्मकः सन् प्रामाणिक इति सर्वज्ञनिर्वाच्यमेव । अथैवमनुमित्साविरहविशिष्टसिद्ध्यभावस्यानुमित्साया एव वा तत्र पक्षतात्वं परिकल्प्य तज्जन्यत्वे प्रकृतज्ञानेऽनुमितित्वमेव मन्यताम्, तदेतदप्युक्तं 'स्वार्थानुमाने' इत्यनेन, अनुमित्सास्थले तस्या एव पक्षतात्वेनासन्दिग्धत्वं सिद्धत्वं वाऽऽदायापक्षधर्मत्वं नेति तदर्थः, अनुमित्सा तु सिध्यात्मकपरामर्शस्येष्टसाधनताविषयकत्वे तदुत्तरभाविनी, अन्यथा तु तदव्यवहितप्राक्क्षणभाविनी वा सम्भवत्यनुमित्यव्यवहितप्राक्क्षणे, यद्यपि भिन्नविषये प्रत्यक्षसामग्रीतोऽनुमितिसामग्र्याः प्राबल्यम्, अन्यथा परामर्शानन्तरं तदनुव्यवसाय एव स्यात्, नत्वनुमितिः, तथापि प्रकृते इच्छाघटितत्वेन प्राबल्यसम्भवः, अनुमित्साया विरहे तु प्रकृतज्ञाने प्रत्यक्षनिश्चयत्वमेवेतिचेदनुमित्साजन्यत्वादेरपि तद्विषयकप्रत्यक्षादिवृत्तितया व्यापकत्वेनानुमितित्वानापादकत्वात् । न वा साध्यादिभेदभिन्नमूर्तिकपक्षताया अननुगमे पक्षतात्वेनानुमितित्वेन च कार्यकारणभावोऽपि । विशिष्यकार्यकारणभावश्च न प्रकृतज्ञानेऽनुमितित्वसिद्धिं विना निर्वहतीत्यन्योन्याश्रयः । न च स्वप्रकाशवादोदितदिशाऽनुव्यवसायं निराकृत्य नित्यं साक्षिणं ज्ञानभासकं स्वीकुर्वन्ति परामर्शानन्तरमनुव्यवसायापत्त्याऽनुमितिसामग्र्याः प्राबल्यप्रमितिरपि । न चोत्तेजकाभावविशिष्टप्रतिबन्धकविघटनेनैव चरितार्थानुमित्साऽनुमितिसामग्र्यां निविशतेऽपि । अत एव ज्ञानस्य स्वविषयकेच्छाधीनत्वेन तदिच्छायास्तत्सामग्रीसम्पादनमात्रफलकत्वेन

यत्त्वाभावप्रसङ्गात्, व्याप्यत्वं हि सप्रतियोगिकग्रहणम्, तथाचैतस्य व्याप्यमिदमिति गृह्यते, तथा च सति व्यापकस्यापि विशेषणस्य ग्रहणमवश्यं वक्तव्यम्, अन्यथा विशिष्टग्रहणस्य वक्तुमशक्यत्वात्। विशेषतो व्यापकाविषयत्वे सतीति चेत्, अग्निधूमौ व्याप्तावित्याप्तोपदेशाद्वा, पूर्वं भूयोगृहीतवह्निधूमसाहचर्यस्य वह्निधूमाग्रहणकाले

साध्यताख्यविषयताविरहिणि तस्मिन् न विधेयतामनुमन्यन्ते ब्रह्ममीमांसकाः। अत एवाहार्यवृत्तेरपि न ज्ञानत्वम्, अनुमिताविच्छाधीनत्वकल्पनं तु प्रक्रियामात्रम्, सिद्धेः प्रतिबन्धकत्वे एव विवादे च सुतरामित्यादिकं लघुचन्द्रिकायां तृतीयपरिच्छेदेऽभिहितम्। वक्ष्यते चाधिकम्। न चानुमित्साऽस्तीत्येतावतैव तदुत्तरवर्तिज्ञाने विशेषदर्शनजेऽनुमितित्वं स्यात्, ज्ञानगतविशेषाणामिच्छानुरोधित्वे मानाभावात्। यदि चानुमित्सास्थलेऽनुभव एवानुमितौ प्रमाणतयोपन्यस्यते, तदेन्द्रियार्थसन्निकर्षादिरूपलौकिकप्रत्यक्षसामग्रीसत्त्वे तत्र प्रत्यक्षत्वेऽपि नानुभव इति वक्तुमशक्यमेव, तदेतदप्युक्तं 'प्रत्यक्षलक्षणोपपत्त्ये'ति, लौकिकप्रत्यक्षसामग्रीसत्तयेत्यर्थ इति। अव्यापकेत्यादि। तदविषयकत्वे सति तन्निरूपितव्याप्तिप्रकारकधर्मिविशेषवृत्तितानिश्चयोऽनुमानमिति सिद्ध्यात्मकपरामर्शस्य नानुमित्युपधायकत्वप्रसङ्ग इत्यर्थः। सप्रतियोगिकग्रहणं = व्यापकज्ञानाधीनज्ञानकम्। विशेषणस्य = निरूपकस्य घटकस्य वा। विशेषतः = धर्मिविशेषवृत्तितया। तथा च तत्साध्यनिरूपितव्याप्तिनिष्ठप्रकारतानिरूपितविशेष्यतावच्छिन्नया तल्लिङ्गनिष्ठविषयतया निरूपिता तत्साध्यनिष्ठविषयतया च साक्षादनिरूपिता या धर्मिविशेषनिष्ठविषयता तच्छालिनिश्चयोऽनुमानम्, एवञ्च व्याप्तिनिरूपकतया साध्यावगाहित्वेऽपि परामर्शस्य नोक्तासम्भवइति भावः। अत्र सिध्यात्मकपरामर्शादनुमित्यापत्तेर्वारणेऽपि परामर्शात्पूर्वमुत्तरं वा सिद्धिसत्त्वेऽनुमित्सां विनाऽनुमित्यापत्ते र्वारणाय भवता पक्षतायाः स्वातन्त्र्येणानुमितिहेतुतायाः अवश्यवाच्यतयोक्तरीत्या परामर्शे सिध्यानात्मकत्वनिवेशो विफलः, सिध्यात्मकपरामर्शादपि लौकिकप्रत्यक्षसामग्रीविरहदशायामनुमित्सयाऽनुमितेरिष्टत्वेन तदनुपपत्तिश्चेति दूषणं स्फुटत्वादुपेक्ष्य दूषणान्तरमाह अग्निधूमाविति। व्याप्तौ = एकव्याप्तिनिरूपकाश्रयौ। आप्तोपदेशाद्वेति। जायमानेत्यनेनान्वयः। व्याप्तिग्रहो हि सहचारदर्शनाधीनो वाऽन्यथा वा, तत्र द्वितीयमभिधाय प्रथममाह पूर्वमिति। यद्यपि व्यभिचाराग्रहसहकृतस्य सहचारग्रहमात्रस्य व्याप्तिग्राहकत्वेन भूयस्त्वमकिञ्चित्करम्, गृहीतापाद्यापादकव्याप्तिकस्य च वक्ष्यमाणविमर्शपदार्थकर्तावतारस्यापि प्रथमदर्शनेनैव सम्भवात्, तथाप्येकत्र सहचारदर्शनसत्त्वेऽपि स्थलान्तरान्तर्भावेण व्यभिचारशङ्कास्थले द्वितीयादिसहचारदर्शनस्योपयोगमभिप्रेत्य तदुक्तम्। वह्नीति। पक्षे इत्यादिः। अन्यथा व्याप्तिज्ञानस्य हेतुसाध्याज्ञानेऽसम्भवेनासङ्गतेः। यद्यपि परामर्शस्य सिद्ध्यनात्मकत्वसम्पत्तये पक्षे साध्याप्रतीत्यभिधानमेवोपयुज्यते तथापि पक्षे हेतोरग्रहणाभिधानमापादनीयेऽर्थे इष्टापत्तिं परिहर्तुम्। धर्मिविशेषवृत्तिताविषयकत्वस्य परामर्शे निविष्टत्वेऽपि यस्यकस्यचिद्धर्मिणो विवक्षा नातिप्रसङ्गं भङ्क्तुमलम्। प्रातिस्विकरूपेण तद्विवक्षायां तु वक्ष्यत्यननुगमम्। अन्वयस्तु सप्तम्यन्तस्य जायमानेत्यनेन, तेन पक्षद्वयसाधारण्यसम्भवः। विमर्शः = धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादित्यादिकस्तर्कः। आप्तोपदेशाद्वा विमर्शवशाद्वा व्याप्यपरामर्शोऽनुमानं स्यादित्येतावदुक्त्यैव पञ्चम्या अधीनत्वार्थकतया निर्वाहेऽपि जायमानव्याप्तिग्रहणस्येत्यस्य बहुव्रीहिणा पुरुषपरस्योक्तिरस्य तादृशः परामर्शस्तस्यैवानुमित्यापत्तिलाभाय। अन्यथा तु शिरोवेष्टनेन नासिकास्पर्शानुकारितैव। एवमग्रे 'प्रत्यभिजानानस्ये'त्यत्रापि द्रष्टव्यम्। व्याप्यपरामर्शः = वह्निव्याप्यो धूमो महानसादिवृत्तिरितिनिश्चयः। प्रथमग्रहणे = उक्तनिश्चये। प्रत्यभिज्ञानं यदि तत्साध्यावगाह-

विमर्शवशाद्वा जायमानव्याप्तिग्रहणस्य व्याप्यपरामर्शोऽनुमानं स्यात्। न परामर्शः प्रत्ययमात्रं येन प्रथमग्रहणे प्रसङ्गः स्यात्, किन्नाम प्रत्यभिज्ञानमितिचेन्न, विचाराद्वाप्तोपदेशाद्वा प्रतीत्य व्याप्तिं पुनराप्तोपदेशाद्विचारान्तराद्वा 'यैव मया व्याप्तिर्गृहीता सैवेयं' मिति प्रत्यभिजानानस्य व्याप्तिज्ञानमनुमानं स्यात्। विशेषतो व्याप्यविषयत्वे सतीति चेन्न, अव्यापकत्वप्रसङ्गात्, एकव्यक्तिविषयत्वस्य व्यक्त्यन्तरेऽसम्भवात्, सामान्यतो व्यक्तिविषयत्वस्य चातिप्रसञ्जकत्वात्।

---

मानं ज्ञानं विवक्षितं तदा तत्तावगाहित्वं तस्य व्याप्त्यंशमादायापि सम्भवदतिप्रसक्तिवारणस्य नेष्टे इत्याशयेनाह विचारादित्यादि। विचारात् = उक्ततर्कात्। विचारान्तरादित्यन्तरपदं व्यक्तिभेदाभिप्रायेणेवाऽऽकारभेदाभिप्रायेणापि सम्भवति। सैवेति। साध्याभाववदवृत्तित्वस्य स्वव्यापकसमानाधिकरणधूमत्वादेर्वा व्याप्तेरैक्यसम्भव इति भावः। उदासीनेऽपि तत्तावगाहिज्ञानमुपादाय हेतौ तादृशत्वावगाहित्वविवक्षायाञ्चापक्षवृत्तिधूमे एव तादृशत्वावगाहिज्ञानमादायातिप्रसङ्गस्योपलक्षणमिदम्। इयम् = महानसादिगतधूमगता। प्रत्यभिज्ञानपदेन यत्स्वाभिप्रेतं तदाह विशेषत इति। यदुद्देश्यकाऽनुमितिरिष्टा हेतुतावच्छेदकसम्बन्धेन तद्वृत्तितयेत्यर्थः। सतीति। विशेषतो व्यापकाविषयकनिश्चयोऽनुमानमिति विपरिणामादिनाऽनुपञ्जनीयम्। तथा च पर्वतोद्देश्यकवह्निसाध्यकानुमां प्रति पर्वतोवह्निव्याप्यधूमवानितिनिश्चयो हेतुः, लिङ्गान्तरविषयपरामर्शमादाय व्यभिचारस्तु वारणीयोऽव्यवहितोत्तरत्वनिवेशेनैव, अनुमित्युपधायकत्वं तु तादृशनिश्चयस्य पक्षताविशेषसहकृतस्यैवेति भावः। कार्यमात्रवृत्तिधर्मस्यानुमितित्वस्याकस्मिकत्वप्रसक्तिव्युदस्तयेऽनुगतानतिप्रसक्तधर्मावच्छिन्नकारणतानिरूपितकार्यतावच्छेदकतायास्तत्रावश्योपेयतयाऽननुगमस्यैष्टुमशक्यस्यैव प्रसङ्ग इति प्राह अव्यापकत्वेति। ननु विशेषकार्यकारणभावोपगमेऽपि सामान्यघटितविशेषस्यैव कार्यतावच्छेदकत्वान्न सामान्यस्याकस्मिकत्वापात इत्याशङ्कां शमयितुं प्रोक्तकार्यकारणदले पक्षसाध्यादिव्यक्तिविशेषो यदि निविशते तदाह एकेति। पर्वतवह्न्यादिव्यक्तिविशेषनिष्ठस्यानुमितिपरामर्शविषयत्वस्य पर्वतवह्न्यादिव्यक्त्यन्तरेऽसम्भवेन नैकधर्मावच्छिन्नपक्षकादिस्थलेऽप्यनुगतकार्यकारणभावनिर्वाह इत्यर्थः। वस्तुतस्तु सामान्यघटितविशेषस्य कार्यतावच्छेदकतयैवाकस्मिकत्वस्य परिहारोपगमे सामान्यकार्यकारणभावनिरूपणस्य सर्वत्रैव तार्किकाणां वैयर्थ्यप्रसङ्गः, एवं व्यापकधर्मावच्छिन्नसामग्री व्याप्यधर्मावच्छिन्नसामग्र्या संवलितैव कार्यजननी, साऽपि व्यापकधर्मावच्छिन्नसामग्र्या समेतैव, व्यापकधर्मविरहिणो व्याप्यस्येव निर्विशेषस्य सामान्यस्याप्यदृष्टचरत्वादित्याद्यभिधानस्यापीति द्रष्टव्यम्। अधिकं त्वनुपदं वक्ष्यते। पर्वतत्वावच्छिन्नोद्देश्यताकवह्नित्वावच्छिन्नविधेयताकानुमितित्वावच्छिन्नं प्रति वह्नित्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छिन्नव्याप्तित्वावच्छिन्नप्रकारतानिरूपितविशेष्यतावच्छिन्नधूमत्वावच्छिन्नप्रकारतानिरूपितपर्वतत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन हेतुतोक्तौ त्वाह सामान्यत इति। सामान्यधर्मावच्छिन्नत्वेनेत्यर्थः। अतिप्रसञ्जकत्वादिति। पर्वतविशेषादिपक्षकवह्निविशेषादिसाध्यकानुमितावपरपर्वतापरवह्न्यादिविषयकपरामर्शस्य कारणत्वप्रसङ्गात्, अधिकं त्वितिन्यायेन तत्राप्युद्देश्यतादौ पर्वतत्वावच्छिन्नत्वस्य विधेयतादौ च वह्नित्वावच्छिन्नत्वस्य सत्त्वात्, इतरवारकपर्याप्तिनिवेशेऽनवस्थाप्रसङ्गस्य निवेदितदोषभावस्य स्मृत्यन्यत्वखण्डने आवेदितत्वात्। किञ्चान्याधिकरणवृत्तितादृशानुमितित्वाश्रयव्यक्तिं प्रत्यपराधिकरणवृत्तितादृशनिश्चयत्वाश्रयस्य कारणत्वप्रसङ्गात्। न चैकात्मानुयोगिकसमवाय-

सम्बन्धेन कार्यकारणभावः, सामान्यत एकत्वस्याव्यावर्तकत्वात्, तद्वयक्त्यनुयोगिकसमवायविवक्षायां तु नैकधर्मावच्छिन्नपक्षकादिस्थलेऽपि कार्यकारणभावाननुगमः । अपि च सर्वत्र पक्षविशेष्यकादेव परामर्शादनुमितिरिति तावच्छपथैकप्रमाणकमेव, तथा च व्याप्यविशेष्यकस्यापि परामर्शस्यानुगमाय यतनीयम्, नच—वह्निव्याप्यत्वावच्छिन्नविषयतानिरूपितपर्वतत्वावच्छिन्नविषयताशालिनिश्चयत्वेनानुगमः, एवञ्च हेतुतावच्छेदकानवगाहिनोऽपि पर्वतो वह्निव्याप्यवानित्यादेः परामर्शस्य सङ्ग्रह इति—वाच्यम्, आलोकलिङ्गकानुमितीच्छायां तल्लिङ्गकपरामर्शासद्भावेऽपि धूमलिङ्गकपरामर्शात्सिद्धिदशायामनुमित्यापत्तेः । एतेन-वह्निव्याप्यधूमत्वावच्छिन्नविषयतानिरूपितपर्वतत्वावच्छिन्नविषयताशालिनिश्चयोत्तरपर्वतत्वावच्छिन्नपक्षकवह्नित्वावच्छिन्नसाध्यकानुमां प्रति तादृशनिश्चयत्वेन हेतुतेति—परास्तम्, सिद्धिदशायां वह्निव्याप्यधूमविशेष्यकपर्वतप्रकारकनिश्चयोत्तरानुमितिर्जायतामितीच्छातस्तादृशनिश्चयाभावेऽपि वह्निव्याप्यधूमप्रकारकपर्वतविशेष्यकनिश्चयादनुमित्यापत्तेः । पक्षताघटको यादृशनिश्चयस्तादृशनिश्चयोत्तरप्रकृतपक्षसाध्यकानुमितित्वस्यैव तादृशनिश्चयघटितपक्षताजन्यतावच्छेदकत्वोपगमेऽपि सिद्धेरनुमित्साासामान्यस्य चाभावस्थले पक्षविशेष्यकव्याप्यविशेष्यकनिश्चयद्वयघटितापेक्षित-पक्षताद्वयस्य विशेष्याभावप्रयुक्तस्य सत्त्वेनैकविधपरामर्शबलादुभयविधपरामर्शजन्यतावच्छेदकपक्षविशेष्यकव्याप्यविशेष्यकनिश्चयोत्तरानुमितित्वावच्छिन्नयोरापत्तेरिति लिङ्गविशेष्यकपरामर्शस्य पक्षविशेष्यकपरामर्शस्य च स्वस्वाव्यवहितोत्तरप्रकृतपक्षसाध्यकानुमितित्वमेव कार्यतावच्छेदकं वाच्यमिति क्वाननुगमः ।

अथ—व्यक्त्यैव पक्षताया अनुमाहेतुतेति कथितापत्त्यसम्भवेन वह्निव्याप्यत्वावच्छिन्नविषयतानिरूपितपर्वतत्वावच्छिन्नविषयताशालिनिश्चयत्वेनानुगमो निराबाधः, व्याप्यतावच्छेदकसम्बन्ध एव च वह्निव्याप्यत्वावच्छिन्नविषयतावच्छेदकसम्बन्ध इति नान्यान्यसम्बन्धेन व्याप्यतां पर्वतधर्मतान्चावगाहमानपरामर्शादनुमित्यापत्तिः । विशेष्यतायाः सम्बन्धानवच्छिन्नत्वेन वह्निव्याप्यत्वावच्छिन्न-विशेष्यताकपरामर्शाननुग्रहस्तु न चोदनीयः, घटोऽवृत्तिरितिबुद्धिं प्रति संयोगेन घटवद्भूतलं संयोगेन घटवान् पट इत्यादिनिश्चयानां संयोगसम्बन्धावच्छिन्नघटत्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकतायां लाघवेन प्रकारतायामिव संयोगेन घटवद्भूतलं पटवद्भूतलमित्यादिनिश्चयानां संयोगेनानधिकरणं भूतलमितिमितिं प्रति संयोगसम्बन्धावच्छिन्नभूतलत्वावच्छिन्नविशेष्यताशालिनिश्चयत्वेन प्रतिबन्धकतायां लाघवेन विशेष्यतायामपि सम्बन्धावच्छिन्नत्वसम्भवात् । पुरस्कर्तव्यो वा हेतुतावच्छेदकसम्बन्धानवच्छिन्नप्रकारताभिन्ना हेतुतावच्छेदकसम्बन्धान्यसम्बन्धानवच्छिन्ना वा या व्याप्यत्वावच्छिन्नविषयता तन्निरूपिता हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वसम्बन्धानवच्छिन्नप्रकारताभिन्ना हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतान्यसम्बन्धानवच्छिन्ना वा या धर्मितावच्छेदकावच्छिन्नविषयता तच्छालिनिश्चयत्वेन हेतुतानुगमप्रकारः । अन्तरा भासमानपदार्थनिष्ठप्रकारताविशेष्यतयोस्तु नैक्यमपि स्वच्छेद्यावच्छेदकभाव इत्यन्यत्र द्रष्टव्यम्, तेन वह्निव्याप्यधूमवत्पर्वतवान् देश इति परामर्शस्य पर्वतनिष्ठप्रकारताविशेष्यतयोरैक्यमादाय हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयतासम्बन्धानवच्छिन्नप्रकारतात्वस्य पर्वतनिष्ठविशेष्यतायां सद्भावप्रयुक्तोऽनुमित्यनुत्पादकत्वप्रसङ्गोनावतारणीय इति । नेदं चारु । साध्याभाववद्वृत्तित्वतद्भिन्नान्योन्याभावप्रतियोगितानवच्छेदकसामानाधिकरण्यसाध्याभावव्यापकीभूताभावप्रतियोगित्वाद्यात्मकतया व्याप्तेर्नैकविधत्वेन विशिष्यैव निवेशार्हतयाऽनुगमस्य तथाप्यसम्भवात्, व्यभिचारधीविरोधिधीविषयत्वेनानुगमस्तु व्यभिचारस्यापि नैकविधत्वेन शङ्कितुमप्यशक्यः, व्याप्तिधीविरोधिधीविषयत्वेन तदनुगमे त्वन्योन्याश्रयः । यत्तु प्रतियोगिवैयधिकरण्यघटितत्वेनात्यन्ताभावघटितव्यापकतायास्तदपेक्षया प्रतियोग्यवृत्तित्वघटिततया लघुभूत-

भेदघटितव्यापकताज्ञानमेवानुमितिहेतुतापदेऽभिपित्सति, यो वा कारणतावच्छेदकस्य कल्पनायाश्च लाघवात् साध्याभाववद्वृत्तित्वज्ञानस्यैवानुमाजनकतामनुमनुते, स प्रतिपादनीयः, नहि कस्याप्यत्यन्ताभावघटित-व्यापकताज्ञानं कदापि नानुमितिमजीजनदिति सर्वज्ञेन शक्यं वक्तुम्। कथमन्यथा व्याप्त्यनुगमग्रन्थे प्राचीनास्तज्ज्ञानेनानुमितेरानुभविकत्वं वदेयुः। एवञ्च व्यभिचारसंशयस्य प्रतिबन्धकतायां लाघवज्ञानस्योत्तेजकतामादायापि न प्रत्यवस्थानसम्भवः। एतेन—व्यापकताज्ञानस्यानुमितिहेतुत्वे ज्ञानत्वत्वादिना ज्ञानत्वादेर्व्यापकतावच्छेदकत्वग्रहे ज्ञानादिमानित्यनुमितिर्न स्यात्, स्याच्च ज्ञानत्ववत्वानित्येवानुमितिः, यद्धर्मावच्छिन्ने व्यापकतावच्छेदकत्वग्रहस्तेन रूपेण साध्यतावच्छेदकस्यानुमितिगोचरत्वनियमादिति—निरस्तम्, क्वचिदपि व्यापकताज्ञानेऽनुमित्याधायकत्वस्यानुभविकत्वे "को हि हस्तगतं पादगतं करोती"तिन्यायेन 'ज्ञानादिमानि'त्यनुमितेरुपपादने भवद्भिरवश्यं यतनीयत्वात्, अन्यथाऽपरीक्षकत्वापत्तेः। निरुक्तञ्चेह तत्तद्वह्नित्वेन प्रतियोगित्वेऽपि वह्नित्वेनाप्रतियोगितामनुमत्य स्वरूपतः साध्यतावच्छेदकभानेनापि सम्भवत् साध्यतावच्छेदकावच्छिन्ने हेतुमन्निष्ठाभावाप्रतियोगित्वज्ञानस्यैवानुमितिहेतुत्वमित्यादिकं समाधानमन्यत्रेति नात्रास्माभिः परिश्रमणीयम्। एवं च निश्चयत्ववपुषश्छिन्नतयाऽप्यननुगमोऽनुसन्धेयः, तत्र व्याप्यत्वावच्छिन्नाभावस्य प्रवेशात्, तथाहि—जातिमात्रस्य निरस्तत्वेन निश्चयत्वस्य जातितायावक्तुमशक्यत्वेन तदभावाप्रकारकत्वे सति तत्प्रकारकज्ञानत्वस्यैव तदात्मकताया वचनीयत्वेन धर्मिप्रकारकस्य व्याप्यप्रकारकस्य चैकरूप्याय हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रतियोगिताकधर्मितावच्छेदकावच्छिन्नाभावप्रकारत्वानिरूपितया हेतुतावच्छेदकसम्बन्धानवच्छिन्नप्रकारताभिन्नया व्याप्यत्वावच्छिन्नविषयतया निरूपिता या हेतुतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकव्याप्यत्वावच्छिन्नाभावप्रकारत्वानिरूपिता हेतुतावच्छेदकसम्बन्धावच्छिन्नाधेयत्वसम्बन्धानवच्छिन्नप्रकारताभिन्नधर्मितावच्छेदकावच्छिन्नविषयता तच्छालिज्ञानत्वं विवक्षणीयम्, नचैतदुक्तप्रणालिकया व्याप्यत्वानामननुगमासम्भवेऽनुगतं सम्भवति, एवं पर्वतत्वसामानाधिकरण्येन वह्निव्याप्यधूमतदभावावगाहिनिश्चयात्पर्वतत्वसामानाधिकरण्येनानुमितेरुत्पत्त्या पर्वतत्वावच्छेदेन च तदनुत्पत्त्या सामानाधिकरण्येनावच्छेदकावच्छेदेन चानुमितौ विलक्षण एव कार्यकारणभाव इति क्वानुगमः।

किञ्च वह्निव्याप्यालोकवानयं पर्वतो वह्निव्याप्यधूमवांश्चेति संशयादनुमित्युत्पत्तये व्याप्यत्वावच्छिन्नाभावप्रकारत्वानिरूपितत्वं भवता व्याप्यत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभावप्रकारत्वानिरूपितत्वमेव विवक्षणीयम्, सति चैवं यदि कश्चित् 'वह्निव्याप्यधूमवांश्चेति संशयानस्य मेऽद्य कुतो नानुमितिरुत्पन्ना, वह्निव्याप्यत्वपर्याप्तावच्छेदकताकप्रतियोगिताकाभावाप्रकारकज्ञानस्य सद्भावादिति ब्रूयात्, स कथं प्रतिविधातव्यः?। तादृशप्रतियोगिताकाभावप्रकारकत्वं त्वज्ज्ञानेऽस्त्येव, किन्तु त्वया न ज्ञायते इत्येवं प्रतिविधेयमिति चेद्धन्त सखे! एवं प्रतिविधातुर्भवतो वा शाठ्यम्, तादृशप्रष्टुर्वेति निर्णयाय न प्रभविष्णवो वयम्। स हि स्वज्ञानविषयं न जानाति भवांस्तु तं कल्पयतीति कोऽयं मन्त्रप्रभावः, नह्यजानन् 'जानामी'ति जानन् वा 'न जानामी'ति कश्चिद्व्यवस्यति, ज्ञानस्वाभाव्यभङ्गप्रसङ्गात्। एवञ्च सति सति बाधेऽनुमित्यनुत्पत्त्यनुपपत्तिर्नात्र प्रयोक्तव्या। तस्मादनिर्वचनीयतयैव भगवत्या तादृशानुपपत्तिः शमयितव्येति साधु, समाधानान्तरन्तु प्रतारणामात्रमेवेति विश्वसिमः। एवमप्रामाण्यज्ञानानास्कन्दितत्वनिवेशस्याप्यावश्यकत्वेन तदादायाप्यननुगमो द्रष्टव्यः, अप्रामाण्यं हि प्रमात्वाभावः प्रमाभेदो भ्रमत्वञ्चेत्यनेकविधम्, एवं भ्रमत्वप्रमात्वयोरपि नैकैकविधत्वम्, एवञ्च सर्वेषामप्रमात्वानामनुगमकं न किञ्चिद्रूपम्। न वा सामान्यतोऽप्रामाण्यज्ञानानास्कन्दितत्वनिवेशः शक्योऽपि, क्वचिदंशे गृहीताप्रामाण्यकस्यापि सङ्ग्राह्यस्य ज्ञानस्य गृहीताप्रामाण्यकाप्रामाण्यज्ञानास्क-

न्दितज्ञानस्य चासङ्गृहात्, एवञ्च तत्र तत्राप्यप्रामाण्यज्ञानानास्कन्दितत्वनिवेशप्रसक्तावनवस्था दुर्वारैवापन्ना, उक्तरीत्या व्याप्यत्वस्यानुगमे च व्याप्यत्वावच्छिन्नाभावेनाधेयतासम्बन्धावच्छिन्नप्रतियोगिताकपक्षाभावेन च घटितस्य भ्रमत्वस्य विरहो निवेशनीय इति नाशङ्कनीयम्। एवञ्च यत्र यत्राप्रामाण्यज्ञानव्यक्तिसत्त्वे नानुमितेरुदयस्तत्तद्विरहकूटनिवेशप्रसङ्गे प्रसङ्गोऽसर्वज्ञदुर्ग्रहत्वस्यापि। आहार्यज्ञानव्यावृत्तये इच्छाप्रयोज्यत्वाभावनिवेशस्य परामर्शीयविषयतायां ध्रौव्येण चानवस्थाप्रसक्तिः स्मृत्यन्यत्वखण्डनोक्तप्रणाल्याऽनुसन्धेया।

वस्तुतस्त्वेतादृशानुगमशङ्का बालानामेव शोभते, वह्निव्याप्यो धूमो धूमवान् पर्वत इति ज्ञानस्य वह्निव्याप्यत्वावच्छिन्नविषयतानिरूपितपर्वतत्वावच्छिन्नविषयताशालित्वविरहेणानुमित्यनुत्पादकत्वप्रसङ्गात्, न च तथात्वमिष्टमेव तादृशज्ञानस्य, अनुभवापलापप्रसङ्गात्, मीमांसका हि तादृशज्ञानादनुमितिं मन्यन्ते आनुभविकीम्, न चानुभववैषम्यं युज्यते। एवञ्च मीमांसकानुभवस्तार्किकैस्तार्किकानुभवश्च मीमांसकैरुपपाद्य एव, अन्यथा तु मतद्वयमप्यश्रद्धेयमेव, एतच्च वह्निव्याप्यधूमवान् पर्वत इत्यादिपक्षविशेष्यकस्यैव निश्चयस्यानुमितिकारणतामतेऽपि समानम्। एतेन गृह्यमाणव्याप्यतावच्छेदकधर्मप्रकारकज्ञानस्य हेतुतापक्षो विक्षिप्तो वेदितव्यः, वह्निव्याप्यवानिति परामर्शजन्यतया तार्किकानुभवसिद्धाया अनुमितेरपलापप्रसङ्गात्। व्युत्पत्त्यनुसारिणोऽनुभवस्य वस्तुव्यवस्थापकत्वमिति तु सममेव। अथैवं परामर्शानामनुगमासम्भवेऽप्यन्यतमत्वेन तत्सम्भवः, भेदकूटप्रवेशेनासर्वज्ञदुर्ज्ञेयत्वं तु न देश्यम्, अन्यतमत्वस्याखण्डस्यैवोपगन्तव्यत्वात्, कार्यानुपलब्धिलिङ्गकानुमानभङ्गप्रसङ्गस्तु कुसुमाञ्जलिप्रथमस्तबकदेशितो विजातीयानामेकैकरूपेण कारणतोपगमे शोभते, न वा सर्वत्र व्यभिचारशङ्का युक्तिचुम्बितापि; यत्तु तृणारण्यादीनां फूत्कारनिर्मन्थनादिनियतसहकारिसहितानामन्यतमत्वेन कारणत्वे सहकारिनियमानुपपत्तिरिति; तन्मन्दम्, तत्तत्सहकारिविशिष्टस्यैवान्यतमत्वेन कारणत्वात्, तत्तद्विशिष्टान्यतमत्वस्य केवलेऽपि सत्त्वेन सहकारिरहितादपि कार्यापत्तिस्तु भेदस्याप्युपगमेन वारणीया, अन्यतमत्वाश्रयेषु परस्परकार्यकरणापत्तिस्तु विशिष्यापि कार्यकारणभावोपगमेन शक्यव्युदासेति चेन्न, अन्यतमत्वमखण्डं व्यासज्यवृत्ति वाऽव्यासज्यवृत्ति वा. नाद्यः, यावदाश्रयाप्रतीतौ तत्प्रतीत्यसम्भवेनासर्वज्ञदुर्ज्ञेयत्वापत्तेः, नान्त्यः, एकाश्रयप्रतीतौ तत्प्रतीत्यापत्तेर्गोत्वादिवत्। इष्टापत्तिस्त्वनुभवविरोधादशक्या। अखण्डोपाधेः प्रतीतिविशेषसाक्षिकतयैव निरूप्यत्वेनान्योन्याश्रयाच्च। अनुगतधर्ममात्रस्य साक्षात्कारित्वखण्डने निरस्तत्वाच्चेति। अत एवानुमितित्वज्ञानत्वाभ्यामपि न कार्यकारणभावः। तद्धर्मावच्छिन्नपक्षकतद्धर्मावच्छिन्नसाध्यकानुमितित्वावच्छिन्नं प्रति नानाव्याप्तिलिङ्गाद्यवगाहिपरामर्शानामेकशक्तिमत्त्वेनापि न कारणता, शक्तिमत्त्वस्य पर्याप्त्या विवक्षितत्वे एकस्मात्परामर्शादनुमित्यनापत्तेः। तादात्म्येन विवक्षितत्वेऽपि तत्तत्परामर्शकालीनतत्तत्सम्बन्धादेरप्येकशक्तिमत्त्वेन कारणतापत्तेः, व्यभिचारस्तु तत्तत्सम्बन्धादेरिव तत्तत्परामर्शस्यापि तुल्य इति।

तदित्थमेकधर्मावच्छिन्नसाध्यकादिस्थलेऽप्यनुगतकार्यकारणभावासम्भवेऽव्यवहितोत्तरत्वं निवेश्य विशिष्यैव कार्यकारणभावोऽवशिष्यते। नचासौ विचारसहः, तथाहि—अव्यवहितोत्तरत्वसम्बन्धेन तत्तत्परामर्शविशिष्टपर्वतत्वावच्छिन्नोद्देश्यकवह्नित्वावच्छिन्नविधेयकानुमितित्वं शुद्धतादृशानुमितित्वाद्भिन्नं वाऽभिन्नं वा भिन्नाभिन्नं वा, न प्रथमचरमौ, शुद्धतादृशानुमितित्वस्याकस्मिकत्वप्रसङ्गपरिहारानुपपत्तेः। न द्वितीयः, शुद्धतादृशानुमितित्ववद्विशिष्टतादृशानुमितित्वस्यापि व्यभिचारेण परामर्शविशेषजन्यतावच्छेदकत्वानुपपत्तेः। न च—तत्तत्परामर्शतादृशानुमितित्वोभयधर्मावच्छिन्नजन्यताकजनकता तत्तत्परामर्शनिष्ठैव विवक्षितमिति वाच्यम्, तत्तत्परामर्शस्य तादृशानुमितावविशेषणत्वे जन्यतावच्छेदकत्वा-

किञ्च, धूमवत्त्वादेर्यदाकदाचिदग्निमत्त्वं वा प्रतीयते तदानीं वाऽग्निमत्त्वं पर्वतादेः, नाद्यः, तदानीमिवान्यदाप्यग्न्यर्थिप्रवृत्तेस्तत्र प्रसङ्गात् । नापि द्वितीयः, तदानीमग्निमत्तया व्याप्तत्वानवगमात् । तदेति धूमकालोऽपेक्षित इति चेन्न, क्वचिद्देशेऽन्यदापि धूमस्याद्यस्थानमस्तीति कालान्तरस्यापि धूमकालत्वात् । तद्धूमकालोऽपेक्षित इति चेन्न, तच्छब्दस्य व्यक्तिविशेषवचनत्वेऽप्रतीतव्याप्तिकत्वम्, यत्किञ्चिद्व्यक्तिवचनत्वे चोक्तदोषा-

सम्भवेनोक्तदोषवारणानुपपत्तेः, नवा स्वावच्छिन्नजन्यताकजनकत्वं स्वस्मिन् युक्त्याऽऽयातम्, यथाहि कारणतावच्छेदकावच्छिन्नसमवधानाधीनत्वेनान्योन्याश्रयात्कार्योत्पादस्य कारणतावच्छेदकान्तःपातिता न तर्कचणानुमता, अत एव कार्यघटितरूपेणापि कारणतायामन्यथासिद्धिः सामान्यलक्षणाजागदीश्यामभिहिता, अत एवानुमित्यनुकूलशक्तिमत्त्वेन न कारणता, तथा कार्यतावच्छेदकावच्छिन्नस्यैव कारणतावच्छेदकावच्छिन्नाधीनत्वेन स्वावच्छिन्नस्य च स्वाधीनत्वे स्वस्यापि स्वप्रयोज्यत्वप्रसङ्गेन कारणस्य कार्यतावच्छेदकत्वं नानुमन्तव्यम्. नहि घटत्ववद्दण्डत्वमपि दण्डत्वेन प्रयुज्यते । एवञ्च स्वं यदि स्वावच्छिन्नजनकं स्यात् स्वभिन्नं स्यादित्यनौपाधिक एव प्रसङ्गः । एतेनैवाशयेन कारणस्य कार्यतावच्छेदकत्वानुपगमं मङ्गलवादे दिनकरोऽपि जगाद । अन्यथा तत्क्षणाव्यवहितोत्तरकार्यं प्रति तत्क्षणस्य कारणत्वमित्यस्याप्यापत्त्या बहुविप्लवापत्तेः, आवेदितञ्चैतत्पुरा करणत्वखण्डनेऽपीति । एतेन तत्परामर्शनाशकानुमितिं प्रति तत्परामर्शः कारणमिति निरस्तम्, नाशकत्वं च यदि नाशोपधानम्, तदा परामर्शसत्त्वाद्दशायां कदाप्यनुमितिर्न स्यात्, यदि तु नाशस्वरूपयोग्यत्वं तदा प्रतियोगितासम्बन्धेन तत्तन्नाशं प्रति स्वाव्यवहितपूर्वत्वसम्बन्धेन योग्यविभुविशेषगुणत्वेन ज्ञानत्वेच्छात्वादिप्रत्येकरूपेण वा तादृशयोग्यत्वस्वीकाराद्व्यभिचरितत्वं कार्यकारणभावस्य तदवस्थम्। तत्तत्परामर्शनाशकत्वस्यैव तादृशयोग्यतावच्छेदकत्वोपगमे स्वात्माश्रयादित्यादिकमप्यूहनीयमिति शम् ।

व्यक्त्योरेव कार्यकारणभावोपगमो यद्यपि सामान्यस्यालीकत्ववादिनामेव शोभते, अन्यथासिद्धस्यापि कारणत्वप्रसञ्जकश्च, तथाप्यभ्युपेत्यैव दोषान्तरं प्रतिपादयितुमाह किञ्चेत्यादि । धूमवत्त्वादेः = धूमादिलिङ्गकपरामर्शात् । यदा कदाचित् = कालविशेषानवच्छिन्नम् । तदानीं = तत्तद्धूमादिकालावच्छिन्नम् । तदानीं = तत्तद्धूमादिकाले । अन्यदा = तत्तद्धूमाद्यभावकाले । तत्र = पर्वतादौ । प्रसङ्गादिति । नहि ज्ञानानां स्वाधिकरणक्षणावच्छेदेनैव प्रवर्तकत्वनियमः, भाविसाध्यकानुमादौ व्यभिचारात्, एवञ्च कालविशेषावच्छिन्नतया साध्यवत्तानवगाहने नियामकविरहादन्यदेव तदानीमपि प्रवृत्तिर्न स्यात्, तदानीमिवान्यदापि वा स्यात्, अन्यदाप्रवृत्तिः पुनरिदानीन्तनानुमित्यधीनस्मृतिनिबन्धनेत्यन्यदेतदितिभावः । तदानीमग्निमत्तया = तत्तद्धूमादिकालावच्छिन्नत्वविशिष्टसंयोगेनाग्निना । तत्तद्धूमादाविति शेषः, शुद्धसंयोग एव साध्यतावच्छेदकसम्बन्ध इति भावः । ननु कोऽत्रातिभारः, आस्तां विशिष्टसंयोगस्यैव साध्यतावच्छेदकसम्बन्धतेत्याशङ्कते तदेतीति । अपेक्षितः = सामानाधिकरण्यघटकसाध्यतावच्छेदकसम्बन्धे विशेषणतया विवक्षितः । एतादृशसामानाधिकरण्यघटितव्याप्तेरभिनायकं वाक्यं 'यदा यत्र धूमस्तदा तत्र वह्नि'रिति दर्शयितुं तदेतीत्युक्तम् । धूमकालशब्देन धूमसामान्यकालो विवक्षितः, किं वा तद्धूमकालः. आद्ये पक्षधर्मताबलेन पर्वतीयधूमकालिकवह्निसिद्धिपर्यवसानेऽपि कालान्तरेऽपि पर्वते धूमसम्भवेन तादृशसिद्ध्यधीनस्मृत्याऽनुमित्यन्तरमन्तरेणैव प्रवृत्तेरापत्तेः, कालान्तरीणधूमकालिकवह्निभानमादाय परार्थेऽर्थान्तरञ्च शक्योद्भावनमित्यभिप्रेत्याह क्वचिद्देश इति । इदानी पक्षतावति क्वचिदित्यर्थः । तेन न पक्षधर्मताबलस्य तिरस्कारः । कालघटितव्याप्यग्रहदशायां का गतिरित्यपि द्रष्टव्यम् । द्वितीयमाशङ्कते तद्धूमेत्यादि । तत्ताया अननुगमपक्षे आह तच्छब्दस्येति । अप्रतीतेति ।

पत्तिः। हेतोः पक्षधर्मतयाप्यपर्वतादिधर्मैः साध्यो मा भूत्ततस्तु कालान्तरे किन्न स्यात्, तं कालमन्तर्भाव्य पक्षत्वे कथं पश्चान्निष्कम्पं प्रवर्तेत। तद्धूमकालश्चेदंशतः स्ववृत्तिः। इत्यनुमितिपरामर्शयोः खण्डनम्।

---

व्याप्यव्यापकभावस्य सामान्यधर्मपुरस्कारेणैव ग्राह्यत्वात्, धूमविशेषकालावच्छिन्नसंयोगस्य साध्यतावच्छेदकसम्बन्धत्वे च तदसम्भवादिति भावः। तत्तया अनुगमपक्षे आह यत्किञ्चिद्व्यक्तिवचनत्वे इति। धूमसामान्यपरत्वे इत्यर्थः। वस्तुतस्तु तत्तादेर्नानुगमसम्भव इत्यभाणि लक्षणप्रयोजनखण्डने। नन्वेवं सामानाधिकरण्ये विशिष्टसंयोगस्य प्रवेशेन तत्तद्धूमकालावच्छिन्नवह्निसिद्ध्यसम्भवेऽपि पक्षधर्मताबलात्तत्सम्भव इति निगूढाभिप्रायिकामाशङ्कां निगूढाभिप्रायेणैव शमयति हेतोरिति। पक्षधर्मतयेति। पर्वतादिधर्मिविशेषवृत्तित्वज्ञानेन बाधाद्यभावसहकारेण चेत्यर्थः। मा भूत् = मा सैत्सीत्। ततस्तु कालान्तरे = तद्धूमकालान्यकालावच्छिन्नतया, तद्धूमकालानवच्छिन्नतयेति यावत्। स्यात् = सिद्ध्येत्, पर्वतत्वस्यैव पक्षतावच्छेदकत्वे पक्षधर्मताबलात्तद्धूमकालावच्छिन्नतया सिद्धिः साध्यस्यासम्भविनीति भावः। ननु स्यादेवं यदि पर्वतत्वस्यैव पक्षतावच्छेदकत्वं स्यात्, वस्तुगत्या परामर्शस्यानुमितेर्वाऽधिकरणीभूतो यः क्षणस्तस्यापि पक्षतावच्छेदकत्वे तु तदवच्छिन्नत्वस्य साध्ये भानसम्भवः, उद्देश्यतावच्छेदकस्य यः कालस्तदवच्छिन्नत्वभानं विधेये यद्यपि न नवीनसम्मतम्, मानाभावात्, विभिन्नकालीनोद्देश्यतावच्छेदकविशिष्टे साध्यवैशिष्ट्यावगाह्यनुमितेः प्रमात्वप्रसङ्गस्य विधेये समानकालीनत्वनियतस्वरूपसम्बन्धविशेषात्मकोद्देश्यतावच्छेदकावच्छिन्नत्वभानोपगमेनैव वारितत्वात्, अत एव लिङ्गोपहितलैङ्गिकभानमभ्युपेत्य नात्र प्रत्यवस्थानमाद्रियते, तावतापि धूमकालावच्छिन्नत्वस्य भानसम्भवेनोक्तदोषानिवृत्तेश्च। तथापि कालस्योद्देश्यतावच्छेदकत्वस्थले तदवच्छिन्नत्वस्य विधेये भाने न कस्यापि विप्रतिपत्तिः, अन्यथा गन्धप्रागभावकालिको घटो गन्धवानितिधियो बाध्यमानत्वं बाध्येतेति पराभिप्रायमुद्भाव्य निराचष्टे तमिति। तं कालमन्तर्भाव्य पक्षत्वे = वस्तुगत्या परामर्शस्यानुमितेर्वाऽधिकरणीभूतक्षणस्योद्देश्यतावच्छेदकत्वे। पश्चात् = तादृशक्षणस्य नाशक्षणे। तत्क्षणावच्छिन्नसाध्यसिद्धिर्हि तत्क्षणे एव प्रवर्तयितुमीष्टे, नत्वन्यस्मिन्, अतिप्रसङ्गात्, प्रवृत्तिस्तु तदुत्तरक्षणेऽप्यानुभविकीति भावः। सकम्पप्रवृत्तौ कदाचिदिष्टापत्तेरपि सम्भवादुक्तं निष्कम्पमिति। सकम्पत्वनिष्कम्पत्वे तु वैजात्यविशेषावनुभवसिद्धौ। ननु धूमकालस्योद्देश्यतावच्छेदकत्वे तदवच्छिन्नवह्निभानेनोत्तरकाले प्रवृत्तिसम्भवः, तस्यापि धूमकालत्वादित्याशयेनाह धूमकालमन्तर्भाव्येति पक्षत्वोपगमे इत्यर्थकं पक्षत्वे इत्यनुवर्तते। उक्तमिति। अनुमितिरद्यतनी श्वस्तनीमपि प्रवृत्तिं भावयेदनुमित्यन्तरविरहदशायां स्मृत्या, अर्थान्तरञ्चेत्युक्तमिति। तद्धूमकालमिति। अन्तर्भाव्य पक्षत्वोपगमे इत्यनुषज्यते। अत्र च नोक्तदोषद्वयम्। अंशत इति। स्वविशिष्टवृत्तित्वप्रयुक्तेत्यर्थः। विशेषणस्य विशेष्यान्वयिनाऽन्वयित्वस्य सम्बन्धभेदमनादायैव प्रागुपवर्णितत्वात् तद्धूमीयकाले तद्धूमस्य वृत्तौ विशेषणीभूते तद्धूमेऽपि तस्याः प्रसङ्गः, अविद्यमानस्यैवोपलक्षणत्वेन स्वाधिकरणकाले स्वस्योपलक्षणतया वक्तुमशक्यत्वात्, उपाधित्वसम्भवेऽपि स्वस्थितौ स्वापेक्षित्वनिबन्धनस्यात्माश्रयस्य दुर्वारत्वादिति। एतच्च कल्पान्तरेष्वपि समानम्। वस्तुतस्तु सर्वत्र तत्तद्धूमकालस्य पक्षतावच्छेदकतायामदृष्टपर्यन्तैकप्रमाणकत्वेन तदभावस्थले कथमुक्तदोषवारणमित्यवधेयम्। अथ प्रतीतेस्तावत्समयविशेषविषयकत्वनियमः, विद्यमानधूमेन च वह्न्यनुमितेर्यत्कालावच्छिन्नप्रवृत्तिजनकत्वमानुभविकं तस्यास्तत्कालावच्छिन्नवह्निविषयकत्वमित्यनुभवबलादेव व्यवस्थाप्यमिति चेद्व्यवस्थाप्यतां को वारयति, नह्यनिर्वचनीयताविचारकैरनुभवोऽपलप्यते अपि तु तदुपपादनप्रकारो दुर्निरूप इत्युच्यते, एवञ्चानुभूयमानस्यापि दुर्निरूपताऽऽयातीत्यन्यत्। तस्मादनुभवस्योपपादनप्रकारमनभिधाय तद्बलस्य श्रद्धे-

## अथ व्याप्तितज्ज्ञानोपाययोः खण्डनम् ।

कश्च व्याप्तिशब्दार्थं इति वक्तव्यम् । अविनाभाव इतिचेत्, किमेकस्याव्यतिरेकेऽपरस्य भावोऽविनाभावपदार्थः, उतैकस्य व्यतिरेकेऽपरस्य व्यतिरेकः, यद्याद्यस्तदाऽव्यतिरेकोऽन्वयार्थइत्येकस्यान्वयेऽपरस्यान्वय इत्युक्तं स्यात्, एवञ्च सति पार्थिवत्वलोहलेख्यत्वयोरप्यन्वयो व्याप्तिः स्यात् । न काचित्कः सम्बन्धो व्याप्तिः, सार्वत्रिकस्य तथात्वेन विवक्षितत्वादितिचेत्किमिदं सार्वत्रिकत्वं सम्बन्धस्य ? सर्वासु तज्जातीयव्यक्तिषु विद्य-

---

यतोपगमे सर्वत्र कार्यकारणभावादिकल्पनाया वैयर्थ्यप्रसङ्गो वज्रलेपायित एवापतति । प्रकृते चानुमितेः कालविशेषावच्छिन्नवह्निविषयकत्वे व्याप्तिपक्षधर्मतयोरुकरीत्याऽनियामकत्वे नियामकं किमन्यदिति वक्तव्यम् । तत्तत्कालस्य पक्षतावच्छेदकत्वे पक्षधर्मतैव, अन्यत्र तु लाघवज्ञानमितरविशेषबाधज्ञानं वा नियामकम्, एतत्त्रितयाभावे तु व्याप्त्यप्रविष्टकालविशेषावच्छिन्नविषयकत्वेऽनुमितेर्नमानमितिचेदेवं तर्हि नियामकानुगमाभावे व्यभिचारस्य कार्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशेनैव वारणीयत्वात्तस्य च निरस्तत्वादित्यादिकमवधेयमिति खण्डनशारदायामनुमितिपरामर्शयोः खण्डनम् ।

अविनाभाव इति । "कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमोऽदर्शनान्न न दर्शना"दितिबौद्धाः । स्वभावात् = तादात्म्यात् । अदर्शनान्न = व्यभिचारादर्शनमात्रान्न भवति, न दर्शनात् = नवा सहचारदर्शनमात्रादिति तदर्थः । तत्र नियमशब्दोनिश्चयपरः, विनाशब्दश्चाभाववदर्थकोऽत्र निरूपितत्वार्थकलुप्तसप्तम्यन्तः, नञर्थस्य तदेकदेशेऽभावेऽन्वयः. भावस्तु वृत्तिरित्याशयेन प्रथमो विकल्पः, तथाच साध्याश्रयनिरूपितवृत्तित्वमिति तदर्थः । नञर्थस्य भावपदार्थान्वयित्वं शिष्टं च प्राग्वदित्याशयेन साध्याभाववदवृत्तित्वार्थको द्वितीयोविकल्पः । यदि तु विनापदार्थोऽभावः, तस्य च व्यापकत्वरूपप्रयुक्तस्वसम्बन्धेन नञर्थान्वितभावपदार्थेनान्वयः, अथवोक्तकारिकायां नियमशब्दस्य व्यापकत्वार्थकत्वे साध्याभाववति नियमेन न भाव इत्यन्वयस्तदा साध्याभावव्यापकीभूताभावप्रतियोगित्वमपि द्वितीयविकल्पार्थः सम्भवति । यद्यपि व्यभिचाराग्रहसहकृतसहचारदर्शनस्यैव व्याप्तिग्राहकत्वेन कार्यकारणभावस्य तादात्म्यस्य चाभावेऽपि व्याप्यव्यापकभावसम्भवइति कार्यकारणभावाद्वेत्यादिबौद्धोक्तिरसङ्गता, तथापि सर्वत्रैव व्याप्यव्यापकभावस्य दुर्निरूपतानिरूपणाय यतमानेन नात्रादरो विधेयोऽपि तु तार्किकैर्वैरयाशयेन तामनिराकृत्यैवाविनाभावपदार्थो निराक्रियत इति द्रष्टव्यम् । अव्यतिरेको = ऽव्यतिरेकशब्दः । अन्वयः = सामानाधिकरण्यम् । व्याप्तिः स्यात् = पार्थिवत्वे लोहलेख्यत्वनिरूपिता व्याप्तिः स्यात्, लोहलेख्यत्वव्याप्यत्वं यदि लोहलेख्यत्वसामानाधिकरण्यमेव स्यात् पार्थिवत्ववृत्त्यपि स्यादिति यावत्, वज्रे व्यभिचारान्नेष्टापत्तिः । नवीनग्रन्थेषु धूमवान् वह्नेरित्यस्येव प्राचीनग्रन्थेषु लोहलेख्यं पार्थिवत्वादित्यस्यातिप्रसङ्गस्थलत्वेन प्रसिद्धतया प्रसिद्धस्थलमपहायाप्रसिद्धस्थलानुधावनं किमित्यकार्षादिति न देशनीयम् । उपलक्षणञ्चेदमविरुद्धव्यभिचारिमात्रेऽतिप्रसङ्गस्य । काचित्कः सम्बन्धः = अव्यापकनिरूपितसामानाधिकरण्यम् । किञ्चिद्देशान्तर्भावेण सामानाधिकरण्यमित्यर्थकत्वे एकाधिकरणकहेतुकस्थलासङ्ग्रहापत्तेः, अनेकाधिकरणकहेतुकस्थलाभिप्रायकत्वेऽपि व्याप्त्यन्तरस्यैकाधिकरणकस्थले वक्तव्यत्वापत्तेः । तथात्वेन = व्याप्तित्वेन । तज्जातीयेति हेतुसजातीयेत्यर्थः । हेतुमदिति यावत् । विद्यमानता = विद्यमाननिरूपितता । तथाच सर्वशब्दस्य स्वसमभिव्याहृतपदार्थतावच्छेदकव्यापकत्वबोधकत्वेन हेतुव्यापकसामानाधिकरण्यलाभः । हेतुत्वस्य व्याप्तिघटितत्वेन तु न तेनात्मना निवेशोऽपि तु धूमत्वादिनेति । धूमव्यापकत्वं धूमवन्निष्ठभेदप्रतियोगितानवच्छेदकत्वम्, तत्र धूमव्यापकत्वानतिप्रसक्तये धूम-

मानतेतिचेन्न, नेयं सर्वतज्जातीयव्यक्त्यपरिज्ञाने शक्यावधारणा, न च सर्वास्ता व्यक्तयो विशेषतो ज्ञातुं शक्याः, तत्तत्प्रमितिकरणासम्भवात् । इन्द्रियेण सामान्यलक्षणया प्रत्यासत्त्या व्याप्तिग्रहणकाले सर्वास्तज्जातीयव्यक्तयो गृह्यन्ते, यदनभ्युपगमे पण्डकमुद्वाह्य मुग्धायाः पुत्रप्रार्थनमिवेति वाचस्पतिरुपालम्भमवादीदिति चेन्मैवम्, सामान्यलक्षणया

---

तद्वदादीनामनन्तानां यदि तत्तद्व्यक्तित्वैः प्रवेशोविवक्षितस्तदायुगसहस्रेणापि तेषां ज्ञानासम्भवेन व्यापकताया अज्ञाने न तद्घटितव्याप्तिग्रहसम्भव इत्यभिप्रेत्याह नेयमिति । विशेषतः = तत्तद्व्यक्तित्वैः । यावत्त्वेन निवेशे तु तस्य व्यासज्यवृत्तित्वे यावद्धूमाधिकरणाप्रसिद्धिः, यावत्त्वावच्छेदेन धूमवत्सु वह्नेरव्यवृत्तिश्च, व्यापकतारूपत्वे तु धूमवत्ताव्यापकत्वस्य भेदवत्तायां व्यापकत्वानुप्रवेशेनानवस्थानप्रसङ्गः, घटकीभूतव्यापकताया अप्युक्तरीत्या व्यापकताघटितत्वावश्यम्भावात् । धूमवन्निष्ठभेदप्रतियोगितावच्छेदकत्वस्य सामान्याभावविवक्षायामपि धूमतद्वदादेर्निखिलस्याविवक्षणे यत्किञ्चिद्धूमवन्निष्ठभेदप्रतियोगितावच्छेदकत्वस्य सामान्याभावमादाय व्यापकत्वातिप्रसङ्गात् । अथ सकलस्य धूमतद्वदादेर्धूमत्वधूमवत्त्वादिना सामान्यात्मना निवेशविवक्षायां नोक्तदोषः, सामान्यप्रत्यासत्त्या तज्ज्ञानसम्भवात्, अत एव सर्वेषां वह्नीनां तत्सामानाधिकरण्यानाञ्च व्याप्तिग्रहविषयत्वस्याप्युपपत्तिः, अन्यथा महानसीयधूमवह्न्योरेव सामानाधिकरण्यस्य गृहीतत्वेन पर्वते धूमत्वेन रूपेण पर्वतीयधूमप्रकारकनिश्चयस्य व्याप्तिप्रकारकत्वानुपपत्तेः, पर्वते व्याप्तिविशिष्टपर्वतीयधूमवैशिष्ट्यावगाहिग्रहं प्रति विशेषणतावच्छेदकप्रकारकविशेषणनिश्चयविधया व्याप्तिप्रकारकपर्वतीयधूमज्ञानस्य हेतुत्वादित्याशयेनाशङ्कते इन्द्रियेणेति । सामान्यलक्षणया प्रत्यासत्त्या = अलौकिकविशेष्यतासम्बन्धेन स्वप्रकारीभूततत्सामान्यवत्त्वसम्बन्धेन वा तत्सामान्यप्रकारकप्रत्यक्षंप्रति स्वविषयतत्सामान्यवत्त्वसम्बन्धेन कारणतामापन्नया सामान्यज्ञानात्मिकया प्रत्यासत्त्या । सामान्यस्य समवायादिना स्वसमवायिनिष्ठविषयतासम्बन्धेन वा हेतुताया अतीतादेः सामान्यस्य कार्यप्राक्कालासत्त्वेन विषयतायाः सविषयकान्यस्यासम्बन्धत्वेन चानुपपत्तेः, सामान्यप्रकारकज्ञानस्यैव कारणत्वे च क्षणविलम्बेन कार्यकारणात्मनः सामान्यप्रकारकज्ञानद्वयस्याप्रामाणिकस्य कल्पनापत्तेरित्यभिप्रायः । व्याप्तिग्रहणकाले = व्याप्तिप्रत्यक्षाव्यवहितप्राक्काले । यदनभ्युपगमे = यस्याः सामान्यप्रत्यासत्तेरनभ्युपगमे । पुत्रप्रार्थनमिवेति । सर्वधूमवह्न्यादितत्सर्वसामानाधिकरण्यविषयकव्याप्तिग्रहाधीनानुमितिप्रार्थनमिति शेषः । अवादीदिति । तात्पर्यटीकायामादिमसूत्रे प्रत्यक्षविरोधोदाहरणावसरे इति शेषः । ननु व्यापकसमानाधिकरणधूमत्वस्य व्याप्तित्वे तस्यैकत्वेनोपनयेन पर्वतीयधूमे प्रत्यक्षसम्भवे सामान्ये प्रत्यासत्तित्वाभ्युपगमो निष्फल इति चेन्न, धूमत्वस्यैव व्याप्यतावच्छेदकत्वेनावच्छेद्यावच्छेदकयोरैक्यानुपपत्तेः । व्यापकत्वे यत्किञ्चिद्धूमादेरुक्तरीत्या निवेशयितुमशक्यत्वेन तदर्थं तत्प्रत्यासत्तित्वाभ्युपगमौचित्याच्च । न च वह्नौ धूमवन्निष्ठभेदप्रतियोगितावच्छेदकत्वं नास्तीति प्रतीतिसाक्षिकसामान्याभावो विवक्षणीयः, तत्र च सामान्यरूपेण यस्य कस्यापि धूमादेः प्रवेशे न काचित्क्षतिः, अतएव घटो नास्तीतिप्रतीतौ घटसामान्याभावस्य सर्वघटप्रतियोगिकत्वेऽपि तत्र विशेषणतया कस्यचिदेव घटस्य भानमिति नव्याः । प्रतियोगितावच्छेदकप्रकारकज्ञानादेव च सामान्याभावबोधनिर्वाहो न तु निखिलप्रतियोगिज्ञानमप्यपेक्षणीयम्, येन तदर्थमपि सामान्यलक्षणोपासनीया भवेदिति वाच्यम्, नीलघटो नास्तीतिबुद्धितो घटोनास्तीति सामान्याभावबुद्धेर्वैलक्षण्योपपत्तये सकलप्रतियोगिविषयकत्वस्य तत्रावश्योपेयत्वात् तदर्थं सामान्यलक्षणाया आवश्यकत्वात् । न च—घटोनास्तीति सामान्याभावबुद्धौ घटत्वादिसामान्यधर्मे प्रतियोगितावच्छेदकतापर्याप्तेर्भानेन नीलघटो नास्तीतिबुद्धौ च तदभानेन तयोर्वैलक्षण्यं सकलप्रति-

योगिविषयकत्वाभावेऽपि सम्भवतीति—वाच्यम्, पर्याप्तेः स्मृत्यन्यत्वखण्डने प्रत्यक्षखण्डनेचाधस्तान्नि-रस्तत्वात्। सामान्यतः सकलप्रतियोगिविषयकत्वस्य सामान्याभावबुद्धेरानुभविकत्वाच्च। अत एव प्राञ्चस्तार्किकास्तथैव वदन्ति। अनुभवश्च प्राचामेव श्रद्धेयो न तु नवीनानां तार्किकाणाम्, तस्य व्युत्पत्तिमात्रानुसारित्वेन वस्तुव्यवस्थापकत्वादित्यवधेयम्। एवञ्च पर्याप्तिमादाय प्रत्यवस्थानासम्भवे व्यापकतायामपि सामान्यरूपेण सकलस्य धूमतद्वदादेः प्रवेशो ध्रुवः। एवं साध्यवदन्यवृत्तित्वसामान्याभावगर्भे साध्यतद्वदादेरपि ।

एतेन—आस्तां स्वव्यापकसामानाधिकरण्यं नानैव व्याप्तिः, तथापि न सामान्यलक्षणापेक्षा, पर्वतीयधूमनिष्ठस्य तस्याग्रहेऽपि न काचित्क्षतिः, यद्धर्मावच्छिन्नविशेष्यताकत्वं व्याप्तिग्रहस्य, तद्धर्मप्रकारेण हेतौ पक्षधर्मताज्ञानस्यानुमित्यौपयिकत्वेऽपि क्षत्यभावात्, अयमालोको वा धूमो वोभयथापि वह्निव्याप्य एवेत्यादौ त्वन्यतरत्वमेव तादृशोधर्मः। व्याप्तिविषयकोद्बुद्धसंस्कारस्याप्यनुमितिकारणत्वमिति मतादरे स्वेच्छक्तिमत्त्वेन कारणतावादः पुरस्कर्तव्यः, सर्वत्र व्याप्तिविशिष्टवैशिष्ट्यावगाहिज्ञानस्यानुमितेः प्राक्कल्पना तु गौरवग्रस्ता, न चैवं पर्वतो वह्निव्याप्यवानितिज्ञानादनुमितिर्न स्यात्; व्यापकसामानाधिकरण्यस्य व्याप्तित्वपक्षे तस्य हेतुतावच्छेदकघटितत्वेन तार्किकैरपि तादृशज्ञानादनुमितेरनङ्गीकारादिति व्यक्तं परामर्शगादाधर्याम्। सामान्यमुखीयव्याप्तिस्थले च व्याप्तिविशिष्टपक्षधर्मताज्ञानस्यानुमित्यहेतुता तार्किकाणामपि सम्मतैवेति व्यक्तीभविष्यति शारदायामुपमानखण्डने। एवञ्चैकधर्मावच्छेदेन व्याप्तिपक्षधर्मतावगाहितापेक्षायामन्यस्य व्याप्तिज्ञानेनापरस्य च पक्षधर्मताज्ञानेनानुमितेरजनेऽतिप्रसङ्गो न देशनीय इति —निरस्तम्; उक्तरीत्या व्यापकतादिग्रहाय सामान्यलक्षणाया आवश्यकत्वात्। एवं धूमो वह्निव्यभिचारी न वेति संशयोपपादकतयापि सा स्वीकार्या, अन्यथा प्रसिद्धधूमे वह्निव्याप्यत्वग्रहेणाप्रसिद्धस्य चाज्ञानेन स न स्यात्। न च समानधर्मावच्छिन्नविशेष्यताप्रत्यासत्त्या प्रतिबध्यप्रतिबन्धकभावोपगमेन प्रसिद्धधूमविशेष्यक एव तादृशसंशयः, महानसीयधूमे महानसीयधूमत्वावच्छेदेन वह्निव्याप्यत्वग्रहस्य शुद्धधूमत्वावच्छेदेन वह्निव्याप्यत्वानवगाहितया धूमत्वसामानाधिकरण्येन वह्निव्यभिचारसंशयविरोधित्वानुपपत्तेः, प्रसिद्धेऽपि धूमे धूमत्वावच्छेदेन वह्निव्याप्यत्वनिश्चयदशायां तु न कस्यापीष्टस्तादृशसंशय इति वाच्यम्, अनुभवानुरोधेन समानविशेष्यताप्रत्यासत्त्यैव प्रतिबध्यप्रतिबन्धकभावोपगमेन महानसीयादिधूमत्वेन व्याप्तिनिश्चयेऽपि धूमत्वेन रूपेण महानसीयधूमविशेष्यकस्य तादृशसंशयस्यानुपपत्तेः। न चैवं समानविशेष्यतयैव विरोधित्वे पृथिव्यादिरूपे वायुत्वाभावव्याप्यत्वनिर्णयदशायां रूपं वायुत्वाभावव्यभिचारि न वेति संशयो न स्यादिति वाच्यम्, प्रसिद्धरूपातिरिक्तं रूपं नवेति सम्भावनाया उत्तेजकत्वाभ्युपगमात्, तां विनाऽपि तादृशनिर्णयदशायां तादृशसंशयस्य सर्वानुभवविरुद्धत्वात्, एवञ्च प्रतिबन्धकतावच्छेदकशरीरे गौरवं फलमुखमेव, प्रसिद्धरूपातिरिक्तं सर्वं न रूपम्, रूपं प्रसिद्धरूपात्मकमेवेत्यादिग्रहदशायां च तादृशसम्भावनाविरहः एवञ्च प्रसिद्धरूपातिरिक्तानां घटत्वादिना निश्चितानां रूपत्वादिना सम्भावनाविषयत्वासम्भवादतिरिक्तान्तरोपस्थितये सामान्यलक्षणोपेतव्या। एतेन धूमत्वं वह्निव्याप्यत्वेन निश्चिततत्तद्धूमातिरिक्तवृत्ति न वेति संशयात् धूमो वह्निव्यभिचारी नवेति संशयसम्भव इति निरस्तमिति। एतच्चानुभविकतया प्राचीनमतं रोचयमानैरस्माभिरुक्तम्, अतएव मूले सामान्यलक्षणायां साधकं न निराकृतम्, अपि तु बाधकमेवाभिहितम्। एवञ्च सामान्यलक्षणायाः सद्भावो वाऽसद्भावो वोभयथापि दूषणानीत्यनिर्वचनीयतैवेति प्रघट्टकार्थः।

प्रत्यासत्त्या व्याप्तिग्रहणकाले सर्वतज्जातीयव्यक्तिग्रहणे प्रमेयत्वादिव्याप्तिं गृह्णतः सार्वज्ञ्यप्रसङ्गात् । क्वचिदप्यज्ञानं ते न स्यादिति च सार्वज्ञ्यापादनमिति न प्रतिकृत्यापि ।

अत्र यद्यपि सामान्यात्मनापि धूमादेः सर्वस्य प्रवेशे निखिलधूमाद्यधिकरणाद्यप्रसिद्धिर्वा, लक्षणे धूमादौ यावत्त्वस्यानुपात्तत्वेन सामान्याभावविवक्षायामुक्तरीत्याऽतिप्रसक्तिर्वेति तद्वारणाय धूमत्वनिष्ठ-निरवच्छिन्नावच्छेदकताभिन्नावच्छेदकत्वानिरूपकतादृशावच्छेदकतानिरूपकधूमनिष्ठावच्छेदकताभिन्नाश्रय-त्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकतादृशावच्छेदकताद्वयनिरूपकनिरूपितत्वसम्बन्धावच्छिन्नाश्र-यनिष्ठावच्छेदकताभिन्नवृत्तितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकतादृशावच्छेदकताद्वयनिरूपकवृ-त्तित्वनिष्ठावच्छेदकताभिन्नभेदत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकतादृशावच्छेदकताद्वयनिरूपकभे-दनिष्ठावच्छेदकताभिन्नप्रतियोगितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकतादृशावच्छेदकताद्वयनिरू-पकप्रतियोगितानिष्ठावच्छेदकताभिन्नावच्छेदकतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकतादृशावच्छे-दकताद्वयनिरूपकावच्छेदकतानिष्ठप्रतियोगितानिरूपकाभाव एव धूमाश्रयवृत्तितावच्छेदप्र-तियोगितावच्छेदकत्वं नास्तीति प्रतीतिसाक्षिकोऽवश्यं विवक्षणीयः, तद्व्यक्तेः स्वरूपतोभाना-नङ्गीकारे तु न्यूनवारकपर्याप्तिर्न निवेशनीया, तद्व्यक्तिमन्निरूपितवृत्तितावच्छेदप्रतियोगितावच्छेदकत्वं नास्तीत्याद्यभावानामितरवारकपर्याप्त्यैव वारणात् । एवञ्च समभिव्याहृतपदार्थतावच्छेदकव्यापकत्व-पर्यवसायियावत्त्वनिवेशपक्ष इवेदृशनिवेशेऽपि लक्षणापर्यवसानप्रसव एव, अवच्छेदकतानिरूपकत्वघटो-भयाभावादिकमादायातिप्रसङ्गवारणायावच्छेदकतानिरूपकतात्वेतरनिष्ठावच्छेदकत्वानिरूपकत्वस्य तत्र तत्र विवक्षणीयतया तस्याप्युक्तरीत्यैवातिप्रसक्तत्वव्युदासाय विशेषणपरम्परायाः प्रवेशयत्वादित्यादिक-मपर्यवसितलक्षणस्य लक्ष्याव्यवस्थापकत्वादिकञ्च वितत्योक्तं स्मृत्यन्यत्वनिरासे पुरेति द्रष्टव्यं तत्रैव, प्रतीतिसाक्षिकतयाऽभिधीयमानस्य व्यापकत्वात्मनोऽभावस्य तद्व्यक्तित्वेन निवेशस्तु प्रतीतिविषययोः परस्परायत्तविशेषकत्वेन परस्परायत्तप्रमात्वसत्यत्वसिद्धिकत्वेन चान्योन्याश्रयपराहत एव, तथाप्यभ्यु-पेत्यैवाह सामान्येत्यादि । प्रमेयत्वादिव्याप्तिं = प्रमेयत्वादिमतो व्याप्तिं, यत्प्रमेयवत्तदभिधेयवदिति वाक्योपदर्शितव्याप्तिमिति यावत् । यत्प्रमेयं तदभिधेयमितिव्याप्तिग्रहस्य प्रमेयत्वप्रकारकस्य घटत्वप्रका-रकत्वाभावेन नात्र विवक्षा, तत्प्रकारकसंशयं प्रति तत्तदभावान्यतरप्रकारकस्यैव निश्चयस्य विरोधित्वेनाग्रि-मग्रन्थासङ्गतेः । सार्वज्ञेति । तत्तत्पदार्थवृत्तिसकलधर्मप्रकारकज्ञानवत्तेत्यर्थः । नन्वेतादृशज्ञानवत्तापादने तवापि तादृशज्ञानवत्त्वप्रसङ्गः, नह्यापाद्यज्ञानं विनाऽऽपादनम्, न च तद्विषयकज्ञान-ज्ञानं न तद्विषयकम्, 'विषयनिरूप्यं हि ज्ञानं तेन ज्ञानवित्तिवेद्योविषय' इति न्यायात्, प्रमेयत्वेन सकलधर्मप्रकारकज्ञाने इष्टापत्तिस्तु समा ममापीत्याशङ्कां शमयति क्वचिदपीति । विशिष्याज्ञातत्वेन सम्प्रतिपन्नेऽपि परकीयज्ञानविषयादावित्यर्थः । अज्ञानं = स घटो नवेत्यादि-संशयः । ते = तादृशव्याप्तिग्रहवतः कस्यापि । प्रमेयवदिति ज्ञानस्य प्रमेयत्वेन रूपेण प्रमेयमात्र-प्रकारकत्वेन घटत्वतदभावान्यतरप्रकारकत्वस्यापि तत्राक्षतत्वेन तादृशसंशयप्रतिबन्धकतावच्छेदक-रूपाक्रान्तत्वात् । यदि तु प्रमेयवदिति ज्ञानस्य निर्धर्मितावच्छेदकतया न प्रतिबन्धकत्वसम्भवः, तदा प्रमेयं प्रमेयवदिति ज्ञानस्य सकलप्रमेयविषयकप्रमेयवदितिज्ञानेनोपनयविधया जनितस्य संशयविरोधित्वापादने तात्पर्यं द्रष्टव्यम् । प्रतिकृत्या = प्रतिबन्द्या । ननु समानाकारतायामेव प्रतिबध्यप्रतिबन्धकभावः, स घटो नवेति संशयसमानाकारस्तु निश्चयः स घट इत्येव, घटत्वांशेऽ-विलक्षणविषयताकत्वात्, प्रमेयं प्रमेयवदिति तु घटत्वे प्रमेयत्वमप्यवगाहमानस्तद्विलक्षणविषयताक एव । न चैवमनवच्छिन्नघटत्वप्रकारताकनिश्चयस्यैव तादृशसंशयप्रतिबन्धकत्वपर्यवसानेन स घटत्ववानिति

प्रमेयतया सर्वं तदा ज्ञायते एव न तु रूपान्तरेणेतिचेन्न, यदि रूपान्तरेण तत्प्रमेयं तदा रूपान्तरवतोऽपि प्रमेयत्वाधारतया कथमग्रहणम्, अथ न प्रमेयम्, नास्त्येव रूपान्तरेण तत्, येन तु रूपेणास्ति, तेन सर्वेण प्रमेयमिति याचद्विद्यमानाकारेण ज्ञातत्वप्रसङ्गः, तथात्वस्वीकारे च ज्ञायतां प्रमेयत्वदर्शिना भवता मामकी चित्तवृत्तिस्ततः श्रद्धास्ये । स्यादेतत्-यथा भेदोऽन्योन्याभाववैधर्म्यादिः पृथक्, तथैक्यमपि वस्तूनाम्, ततः प्रमेयत्वाद्यपि धर्मिणामेकत्वमेकमेव, ततः प्रमेयत्वेन ज्ञायमानं तत्सर्वमपि तेनैक्येन प्रतीय-

---

निश्चयस्य तत्प्रतिबन्धकत्वानुपपत्तिरितिवाच्यम्; तस्य भेदप्रतियोगितावच्छेदकनिश्चयविधया विरोधित्वासम्भवेऽपि तदभावव्याप्यवत्तानिश्चयविधयैव विरोधित्वोपपत्तेः, तत्र घटेतरावृत्तित्वे सति सकलघटवृत्तित्वरूपघटत्वत्वस्य भानेन घटेतरत्वांशेऽविलक्षणविषयताकत्वात्, घटेतरावृत्तित्वस्य च घटभेदाभावव्याप्यत्वरूपत्वात् । नचैवमपि प्रमेयत्वसामान्यलक्षणप्रत्यासत्त्यैव स घट इति निश्चयो जन्यताम्, विशेषणीभूतघटत्वज्ञानस्य प्रमेयत्वप्रकारकस्यापि स्वरूपतो घटत्वप्रकारकनिश्चयोत्पादकत्वोपगमे बाधकाभावादिति तस्यैव स घटो नवेति संशयविरोधित्वसम्भवइति वाच्यम्. जातित्वादिना घटत्वज्ञानेऽपि स्वरूपतो घटत्वप्रकारकग्रहस्यानुत्पत्त्या तं प्रति स्वरूपतो घटत्वज्ञानस्यैव कारणतायाः कल्पनीयत्वात् तादृशज्ञानञ्च सविकल्पकाभावे निर्विकल्पकमेव, घटत्वांशे तु द्वयमपि निर्विकल्पकमेव विशिष्टबुद्धित्वेन विशेषणज्ञानत्वेन च कार्यकारणभावाभावेऽप्युक्तकार्यकारणभावबलादेव निर्विकल्पकस्य सिद्धिः, यदि तु स्वरूपतो घटत्वभानौपयिकस्य वैजात्यविशेषस्येन्द्रियसंयोगादावश्यापेयत्वात्तेनैव स्वरूपतो घटत्वविशिष्टबुद्ध्युपपत्तावनन्तनिर्विकल्पकव्यक्त्यभ्युपगमप्रयोजक उक्तकार्यकारणभावाभ्युपगमो नोचितः, निर्विकल्पकमनभ्युपेत्यापि तादृशकार्यकारणभावोपगमे 'अयं घट'इति बुद्धेस्तादृशबुद्धिजन्यत्वे ज्ञानानवस्थापत्तेरिति विभाव्यते, तदा स्वरूपतो घटत्वव्यञ्जकस्य विजातीयसन्निकर्षस्य फलबलकल्प्यस्य प्रमेयत्वसामान्यलक्षणास्थलेऽभावेनैव न तज्जन्यज्ञानस्य तादृशसंशयविरोधित्वसम्भव इति मनसि निधाय शङ्कते प्रमेयतयेति । एवकारस्य व्युत्क्रमेण प्रमेयतयैवेत्यन्वयः । नतु रूपान्तरेण = नतु स्वरूपतोऽपि घटत्वादिना, तथा च तत्र निरवच्छिन्नघटत्वप्रकारताकनिश्चयो नास्तीति कथं तादृशसंशयप्रतिबन्धसम्भवइति । समानविषयकत्वे एव प्रतिबध्यप्रतिबन्धकभावो नतु समानाकारत्वमपि तत्रापेक्षणीयम्, नचैवं जातित्वेन घटत्वावगाहिनो जातिमान् स इतिनिश्चयस्यापि स घटो नवेति संशयप्रतिबन्धकत्वापत्तिरितिवाच्यम्, इष्टत्वात्, अतएव प्राचीनैः 'तद्व्यक्तित्वविशिष्टवान् स' इत्यादिनिश्चयस्याप्यनुभवबलात् तादृशसंशयप्रतिबन्धकत्वमनुमन्यते एवेति प्रमेयत्वेन घटत्वप्रकारकनिश्चयस्यापि तादृशसंशयप्रतिबन्धकत्वसम्भव इत्यभिप्रायेण परिहरति यदीति । रूपान्तरेण = शुद्धघटत्वादिना । प्रमेयत्वाधारतया = स्वविषयप्रमेयत्वरूपसामान्यवत्त्वसंसर्गेण प्रमेयत्वज्ञानात्मकप्रत्यासत्त्याश्रयतया । अग्रहणं = अलौकिकविषयतासम्बन्धेन प्रमेयत्वप्रकारकप्रत्यक्षाविशिष्टत्वम् । उपसंहरति तथात्वेति । ज्ञायतां = निश्चीयतां नतु सन्दिह्यतां प्रमेयत्वदर्शिना = प्रमेयत्वेन निखिलवस्तुदर्शिना । मामकी चित्तवृत्तिः = मदीयज्ञानविषयः । कचित्प्रमेयत्वज्ञानं हि तत्र सर्वाभेदज्ञानमेव, प्रमेयत्वस्य सर्वाभेदरूपत्वादेकत्वाच्चेति सर्वेषां यदेकमेकत्वं तज्ज्ञानेऽपि न सर्वज्ञानमिति सम्भवति संशयइत्याशङ्कते स्यादेतदिति । वैधर्म्यादिरिति । आदिना पृथक्त्वमुपादेयम् । पृथक् = स्वाश्रयात् पृथक् । अत एव भेदः पृथगित्येव नोक्तम्, स्वरूपभेदे बाधात् । वस्तूनामिति । स्वाश्रयात्पृथगित्यनुवर्तते । अन्यथाऽऽधाराधेयभावानुभवबाधादिति भावः । एकमेवेति । ऐक्यस्य स्वाश्रयात्मकत्वे आश्रयाणां घटपटादीनामनेकत्वादैक्यस्याप्यनेकत्वमेव स्यादित्यु-

मानैकव्यक्त्यात्मकमेव ज्ञातं भवतीति कथं तदेकत्ववेदिनः सार्वज्ञ्यम्। न च वाच्यं नानात्वमपि व्यक्तीनां प्रमेयमिति तदपि धर्मितया ग्राह्यमेवेति; यतस्तदपि प्रमेयत्वादिना गृह्यमाणमेकमेव गृहीतं भवतीति। तस्मात्—

"एको भावस्तत्त्वतो येन दृष्टस्सर्वे भावास्तत्त्वतस्तेन दृष्टाः" इति।

तत्त्वतः=ताद्रूप्येणैकीभूताइति भावः। तदेतदपि नोपपन्नम्, नानैकमितिव्याहतप्रतीत्यापत्तेः। अथ रूपान्तरेण नानात्वं प्रमेयत्वादिना चैक्यमिति व्यवस्थितत्या न व्याघातः स्यात्; तर्हि प्रमेयत्वाधारस्य व्यक्तिभेदस्य कृत्स्नस्य ग्रहणात् सार्वज्ञापत्तिस्तादृश्येवेति।

---

पष्टम्भसङ्गतिः। यद्यपि प्रमेयत्वं विषयभेदभिन्नम्, अन्यथा घटपटाविति समूहालम्बनस्य घटावृत्तिपटत्वावच्छिन्नघटनिष्ठविषयताकतया भ्रमत्वापत्तेः। अत एव विषयताया ज्ञानरूपत्वेन भगवतः सर्वविषयकप्रमाव्यक्तिविषयत्वस्यैकत्वं निर्बाधमिति न वाच्यम्, स्वं न स्वीयमित्यनुभवविरोधाच, रूपभेदेन परिहारे विषयतायां ज्ञानभिन्नत्वस्यैव पर्यवसानेन तदात्मकतावाचोयुक्तयुक्तेश्च। अत एव प्रमेयत्वत्वेनैव प्रमेयत्वस्य केवलान्वयित्वमवच्छेदकगर्भं तार्किकैरुक्तम्, तथापि प्रमेयोघटः, प्रमेयः पट इत्याद्यनुगतप्रतीतिबलात्प्रमेयत्वादीनामपि प्रमेयत्वत्वादिनैक्यमापन्नानां घटपटादेरैक्यापादकत्वमितिभावः। ऐक्यञ्चाभेदः समानाकारप्रतीतिनियामक इति साधर्म्यस्यैवाभेदत्वमुक्तं भवति एवञ्चाभेदो द्विविधः, तत्प्रतियोगिकभेदासमानाधिकरणस्तदभेदस्तद्व्यक्तित्वाभिधान एकः। तत्प्रतियोगिकभेदसमानाधिकरणस्तु तत्साधर्म्याभिधानोऽपर इति। भेदाभावश्च नात्राभेदोविवक्षणीयः, द्रव्यत्वाद्यवच्छिन्नप्रतियोगिताकभेदप्रसिद्ध्या द्रव्यत्वेन घटपटाद्यभेदसम्भवेऽपि प्रमेयत्वाद्यवच्छिन्नप्रतियोगिताकभेदाप्रसिद्ध्या प्रमेयत्वादिना तदसम्भवादिति। ऐक्येनेत्यादि। प्रमेयत्वेन लौकिकसन्निकर्षबलात्प्रतीयमाना या काचिद्व्यक्तिस्तदात्मकमेवेत्यर्थः। प्रमेयत्वरूपैकत्वस्यानेकत्वे एकव्यक्तिरूपत्वं सर्वस्यासम्भवीत्युपष्टम्भसङ्गतिः। ज्ञातमिति। इदं प्रमेयमित्यादि प्रमेयत्वेनैकव्यक्तिज्ञानमेव प्रमेयत्वेन सर्वव्यक्तिविषयकमुच्यते प्रमेयत्वेन सर्वस्यैक्यात्, न तु तदनन्तरभाविज्ञानान्तरमितिभावः। कथमिति। नह्येकत्वं स्वाश्रयसर्वात्मकं किन्तु तत्पृथगित्युक्तमिति। धर्मितया = प्रमेयत्वात्मकसामान्यज्ञानप्रत्यासन्नतया। ग्राह्यमेवेति। नह्येकत्वमिव नानात्वमपि भवत्यनुगतमेकम्, स्वस्मिन्नपि स्वभेदापत्तेः, तथा च तत्तत्प्रतियोगिकतया गृह्यमाणं तत्सार्वज्ञ्यं प्रयुञ्ज्यादेवेति भावः। एकमेव = उक्तरीत्यैकव्यक्त्यात्मकमेव। भावः = धर्मी। तत्त्वतः = प्रमेयत्वादिसामान्यवत्त्वेन। सर्वे = तादृशसामान्याश्रयाः। ननु प्रमेयत्वेनापि सर्वेषां दर्शने सार्वज्ञापत्तिरुक्तरीत्याऽक्षतैवेत्याशङ्कायां तत्त्वतइतिद्वितीयपदं व्याचष्टे ताद्रूप्येणैकीभूता इति। प्रमेयत्वादिना प्रतीयमानैकव्यक्त्यात्मका इत्यर्थः। एकोभावः सर्वभावस्वभावः, सर्वे भावा एकभावस्वभावा इति श्लोकशिष्टांशः। नानैकम् = घटभिन्नः पटो घटइतिप्रतीतेः प्रमात्वापत्तिरित्यर्थः। नन्वत्र याभ्यां रूपाभ्यां घटपटयोर्भेदो भाति ताभ्यामेवाभेदोऽपि, नचैवं ममाभ्युपगमइत्याशङ्कते अथेति। रूपान्तरेणेति। अवच्छिन्नप्रतियोगिताकत्वमित्राभिन्नत्वमपि वैधर्म्यस्य भेदत्वपक्षे तृतीयालभ्यम्। प्रमेयत्वादिनेति तृतीयार्थोऽभेदः। व्याघातः = अनुपपन्नप्रतीत्यापत्तिः, उक्तप्रतीतेः प्रमात्वापत्तिरिति यावत्। तर्हि = तथापि, उक्तव्याघातपरिहारेऽपि। व्यक्तिभेदस्य = तत्तद्व्यक्तेः। ग्रहणात् = ग्राह्यत्वात्। तादृशीति। अयम्भावः—यदि प्रमेयत्वेनैकव्यक्त्यवगाहितैव प्रमेयत्वेन निखिलव्यक्त्यवगाहिता, तदा सामान्यस्य प्रत्यासत्तिविधयाऽलौकिकविषयतानियामकत्वं तावदत्तजलाञ्जल्येव, निर्विकल्पकज्ञानस्य विशेषणज्ञानविधयैवैवंसत्युपयोगस्य वक्तव्यत्वात्, आश्रयज्ञानार्थं हि सामान्यप्रत्यासत्त्युपगमः।

किञ्च सामान्यलक्षणया प्रत्यासत्त्या तज्जातीयविशेषग्रहणे तासु सर्वासु व्यक्तिषु सम्बन्धास्तित्वे किं प्रमाणम् ? सर्वव्यक्तिग्रहवत्तत्सम्बन्धग्रहेऽपि व्याप्तिग्राहकमिन्द्रि-

---

प्रमेयत्वाश्रयनिखिलव्यक्तिभानानुपगमे च गतं सर्वोपसंहारेण व्याप्तिग्रहेण। एवञ्च सति सामान्यस्य स्वाश्रयाभेदव्यपदेऽभिषेकोऽस्तु मा वा, तत्प्रकारकग्रहस्य किञ्चिदंशे लौकिकत्वं किञ्चिदंशे चालौकिकत्वमभ्युपेत्य तदाश्रयनिखिलव्यक्तिविषयकत्वमवश्यं वक्तव्यमिति कथं नोक्तरीत्या सार्वज्ञापत्तिरिति। यदि तु समानविषयकत्वे प्रतिबध्यप्रतिबन्धकभावः समानाकारकत्वे वेति प्राचीननवीनयोरनुभूतिकलहे निश्चिताव्यभिचारकं रूपं परित्यज्य गृह्यमाणव्यभिचारकेण रूपेण प्रतिबध्यप्रतिबन्धकभावकल्पनानौचित्येन विशेषणान्तरानवच्छिन्नघटत्वप्रकारताकनिश्चयस्यैव भेदप्रतियोगितावच्छेदकप्रकारकनिश्चयविधया तादृशसंशयप्रतिबन्धकत्वं कल्प्यते, एवञ्च भासमानवैशिष्ट्यीयभासमानप्रतियोगित्वमेव प्रकारत्वम्, तज्ज्ञानविशिष्टवैशिष्ट्यविशिष्टप्रतियोगित्वमेव तद्धर्मांशे तज्ज्ञानीयप्रकारत्वमितियावत्, आद्यं वैशिष्ट्यं स्वविषयताश्रयतद्धर्म्यनुयोगिकत्वस्वीयसांसर्गिकविषयताश्रयत्वाभ्याम्, द्वितीयं तु स्वीयत्वस्वविशिष्टतज्ज्ञानीयसांसर्गिकविषयताश्रयत्वाभ्याम्, अत्र वैशिष्ट्यं स्ववृत्तिसांसर्गिकविषयतानिरूपकत्वस्वाश्रयतद्धर्मिविषयकत्वाभ्यामिति मतेऽपि प्रमेयत्वाद्यनवच्छिन्नस्यैव तादृशप्रतियोगित्वस्य प्रतिबन्धकतावच्छेदकघटकतोचिता तथाच सर्वसंशयविरोधिज्ञानात्मकसार्वज्ञ्यापत्तिर्न सम्भवतीत्युच्यते, तदापि बाधकान्तरमस्त्येव, तथाहि—सौरभं साक्षात्करोमीत्याद्यापत्तिवारणाय साक्षात्कारित्वस्य लौकिकविषयताविशेषरूपस्य तार्किकैरुपगतत्वेन सामान्यज्ञानाधीनज्ञानस्य सर्वविषयकत्वोपगमे सर्वान् धूमान् साक्षात्करोमीत्यनुव्यवसायाद्यापत्तेर्दातुमशक्यत्वेऽपि प्रत्यक्षत्वजातेर्लौकिकसाधारण्या एवाभ्युपगतत्वेन सर्वान् धूमान् प्रत्यक्षयामि जानामीत्याद्यनुभवापत्तिर्दुर्वारैव। अथ प्रत्यक्षत्वसाक्षात्कारित्वाभेदग्रहनिबन्धन एव प्रत्यक्षयामीत्यनुभवव्यवहारविरहः, सर्वधूमान् जानामीत्यनुभवव्यवहारौ त्विष्टावेव, क्वचित्तयोरप्यभावस्तु ज्ञानत्वेऽपि साक्षात्कारित्वाभेदप्रतीत्यैवेतिचेदेवं तर्हि सार्वजनीनप्रत्यक्षत्वव्यवहारस्य साक्षात्कारिण्येव सत्त्वे तदतिरिक्तस्य प्रत्यक्षतायां न मानम्, यथा च विशेषणज्ञानजन्यतावच्छेदकतापि साक्षात्कारित्वे एव शक्याभिधाना, तथोक्तं प्रत्यक्षत्वखण्डनशारदायाम्, अनुमितित्वादिकं तु सामान्यप्रत्यासत्तिजे भवताऽपि न स्वीक्रियत इति यावद्विशेषबाधे सामान्यस्य ज्ञानत्वस्यापि बाधेन न सामान्यप्रत्यासत्तिजे ज्ञानत्वमपीति कृतमधिकेन। एतचाभ्युपेत्य, वस्तुतस्तु सामान्यज्ञानादेरिन्द्रियप्रत्यासत्तित्वमसम्भवदुक्तिकमेव, इन्द्रियाप्रतियोगिकत्वात्। एतेन प्रत्यक्षविषयताया इन्द्रियसन्निकर्षप्रयोज्यत्वनियमेन सामान्यज्ञानादेरिन्द्रियप्रत्यासत्तिविधया प्रत्यक्षकारणत्वसिद्धिरिति निराकृतम्, बाधे सति तादृशनियमेनेन्द्रियप्रत्यासत्तित्वस्य सामान्यज्ञानादौ साधनासम्भवात्, यत्किञ्चिद्विषयसन्निकर्षजत्वेनैवोपपत्तेस्तादृशनियमस्येन्द्रियसन्निकर्षमात्रसाधकत्वादिति।

अभ्युपेत्याप्याह किञ्चेत्यादि। तज्जातीयविशेषग्रहणे = निखिलधूमवह्न्यादिग्रहणेऽपि। सम्बन्धास्तित्वे = व्याप्यव्यापकभावास्तित्वे। उत्तरयति सर्वव्यक्तीति। ग्रहेऽपीत्यनेन करणतानिरूपकस्य लब्धत्वात्प्रमाणपदं करणमात्रपरम्। इन्द्रियमेवेति। शब्दस्य व्याप्तिग्रहकरणत्वे तदभावदशायामप्यानुभविकस्य व्याप्तिग्रहस्यानुपपत्तेः, अनुमानस्य तथात्वे च तस्यापि व्याप्तिग्रहमूलकत्वेनानवस्थापत्तेः, उपमानं तु सादृश्यादिमात्रविषयकमेवेत्याशयेनैवकारः। नन्वेवं व्यभिचारज्ञानसत्त्वेऽपीन्द्रियस्य व्याप्तिग्राहकत्वापत्तिरित्यत आह व्याप्तिग्राहकमिति। व्याप्तिग्राहकान्तरसहकृतमित्यर्थः। मत्वर्थी-

याच्प्रत्ययेन तादृशार्थलाभसम्भवात्, तथाच व्यभिचाराग्रहसहकृतमिन्द्रियं व्याप्तिव्यापकत्वयोः प्रमाणम् । व्यभिचाराग्रहस्तु संशयसामग्र्या इव संशयस्यापि प्रतिबन्धकताभ्युपगन्तृप्राचीनमते व्यभिचारग्रहसामान्याभावः, संशयोत्पत्तिकाले निश्चयोत्पत्तिवारणाय संशयसामग्र्याः प्रतिबन्धकत्वावश्यकत्वे संशयस्य प्रतिबन्धकत्वे न मानम्, विशेषदर्शनाभावे संशयोत्तरं निश्चयापत्तेः संशयात्मककोटिद्वयोपस्थितिरूपायाः संशयसामग्र्याः सद्भावेनैव वारणसम्भवादितिनव्यमते तु व्यभिचारनिश्चयाभाव एव। विरुद्धकोट्युपस्थितिविशेषादर्शनाद्यभावस्तु पृथगेवेन्द्रियसहकारितया वक्तव्य इति । अत्र यस्य यत्साध्यकयद्धेतुकव्याप्तिग्रहप्रतिबन्धिका यादृशव्यभिचारबुद्धिः प्रसिद्धा तस्य तत्साध्यकतद्धेतुकव्याप्तिग्रहं प्रत्येव तादृशव्यभिचारबुद्धिविरहस्य हेतुता, व्यभिचारव्याप्त्योः साध्यसाधनादिभिन्नमूर्तिकतया सामान्यकार्यकारणभावासम्भवादिति तार्किकसिद्धान्तः । सहचारग्रहस्य व्याप्तिग्राहकत्वं तु नोक्तम्, तस्य विशेषणज्ञानविधयैव हि हेतुता धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वस्य वह्निसामानाधिकरण्यावच्छेदकरूपवत्त्वस्य वा व्याप्तित्वे एव स्यात्, न च तयोर्व्याप्तित्वं सम्भवदुक्तिकमिति वक्ष्यते । नियतपौर्वापर्यस्यानुभविकतया स्वातन्त्र्येणैव सहचारज्ञानस्य व्याप्यव्यापकभावज्ञानकारणत्वमिति प्राचीनमते तु सहचारज्ञानस्यापि सहकारिताऽनुमन्तव्यैवेति । यद्यपि धूमवदादेरिन्द्रियासन्निकृष्टस्यातीन्द्रियपरमाण्वादिरूपस्य च सम्भवेन तन्निष्ठाभावानामपि तथात्वेन च धूमवन्निष्ठाभावप्रतियोगितावच्छेदकत्वस्य सत्त्वेऽप्यग्रहणसम्भवेन प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वरूपयोग्यताया अनुपलब्धावसद्भावेन तादृशावच्छेदकत्वाभावस्य न लौकिकप्रत्यक्षसम्भवः, अत एव गुरुत्वविशिष्टघटत्वावच्छिन्नप्रतियोगिताकात्यन्ताभावस्यापि लौकिकप्रत्यक्षागम्यत्वमुपपद्यते, प्रतियोगितावच्छेदकतापर्याप्त्यधिकरणधर्मावच्छिन्नविषयकलौकिकोपलब्धेरेव प्रसञ्जनीयत्वात्, लौकिकप्रत्यक्षस्यासम्भवे चोपनीतभानादेर्मानान्तरमूलकस्यापि न सम्भवः । यत्तु—धूमत्वाद्यवच्छिन्नाभावे धूमादिविरोधग्रहवशाद्धूमत्वादौ धूमविरुद्धाभावप्रतियोगितावच्छेदकत्वादिरूपव्यतिरेकिहेतुनानुमितो धूमवन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावो वह्नित्वादावुपनयमर्यादया भासते, साध्यप्रसिद्धिं विनाप्यभावसाध्यकव्यतिरेकिप्रवृत्तेर्न तस्या अपेक्षेति, तदसत्, धूमवतामिन्द्रियासन्निकृष्टानामतीन्द्रियाणां च सम्भवे धूमाभावे धूमवद्वृत्तित्वसामान्याभावरूपस्य धूमविरोधस्यापि लौकिकप्रत्यक्षासम्भवात्, एवं तद्घटितोक्तहेत्वभावस्यापि, तथा च न व्यतिरेकसहचारग्रहोऽपि । एतेन साध्याभाववद्वृत्तित्वसामान्याभावादिरूपव्याप्तीनां लौकिकप्रत्यक्षागम्यत्वं व्याख्यातम्, साध्याभाववतामसन्निकृष्टानामतीन्द्रियाणां च सद्भावात् । यत्तु तत्तद्धूमाद्यवसन्निकृष्टादिदेशवृत्तित्वसम्भावनाविरहे वह्न्यभाववद्वृत्तित्वाभावो लाघवाद्धूमत्वावच्छेदेनैव लौकिकप्रत्यक्षगोचर इति; तत्तु 'अभावस्तु कदाचित्स्यादि'त्याद्यग्रिमग्रन्थेन मूले प्रतिविधास्यते । यत्तु—धूमवद्वृत्तित्वमभावप्रतियोगि एतद्घटावृत्तित्वादित्याद्यनुमानेन पक्षतावच्छेदकावच्छेदेनाभावप्रतियोगित्वसिद्धौ धूमवद्वृत्तित्वसामान्याभावरूपविरोधस्य धूमाभावेऽवगमेनोक्तहेतोः पक्षधर्मताग्रहसम्भवः, एवं धूमविरुद्धाभावप्रतियोगितावच्छेदकत्वमभावप्रतियोगि घटत्वावृत्तित्वादित्याद्यनुमानेनोक्तरीत्या हेत्वभावसिद्धौ व्यतिरेकसहचारग्रहस्यापि सम्भव इति; तन्न चारु, व्याप्तिग्रहस्याप्यनुमानाधीनत्वेऽनवस्थानात् । अथोक्तरीत्या चिरानुमितस्य हेतुमन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वाभावस्य स्मरणादिनाऽपि प्रकृतानुमित्युपधायकतदुपनीतभानसम्भवेनानवस्थिताविरलव्याप्तिज्ञानानुमितिधारानपेक्षणेन न दोषः, तादृशधाराया एव सुषुप्त्याद्युच्छेदकत्वेन दोषत्वादिति चेदत्रोच्यते, उक्तरीत्या व्याप्तिग्रहसम्पादनं परार्थानुमानस्थले स्वार्थानुमानस्थले वा, नाद्यः, तत्र व्याप्तौ प्रमाणपर्यनुयोगस्य सावसरत्वेनानुमानस्य तत्र प्रमाणतयोपन्यासे तन्मूलभूतव्याप्तावपि तथैव पर्यनुयोगेनाविरलव्याप्तिज्ञानानुमितिधारायाः आपत्तिः

यमेव प्रमाणमिति चेत्, तर्हि क्वचिदेवमवधारितस्य यद्व्यभिचारो दृश्यते तन्न स्यात्, इन्द्रियेण तत्सम्बन्धस्य प्रमितत्वात् । भ्रान्तिस्तत्र सम्बन्धप्रतीतिः पश्चाद्बाधादिति चेन्न, सामग्र्यभेदे काचिद्भ्रान्तिः काचिदभ्रान्तिरिति विभागानुपपत्तेः, दोषादोषवैचित्र्यविवेचनस्य दुष्करत्वात् । कार्यभेदादेव सामग्रीभेदोऽप्युन्नेय इति चेत्, उन्नीयताम्, स एव कीदृगुन्नेय इति वाच्यम् । न तावत्सार्वत्रिकसम्बन्धभावाभावात्मकः, तदानीं भाविनां सम्बन्धानामसत्त्वेनाकारणत्वात्, सामान्यतश्च तज्जाती-

---

शेषोच्छेदादामूलमुच्छित्तिर्वा दुर्वारैव । न द्वितीयः, उक्तानुमानपरम्परां विनापि व्यापकताग्रहस्यानुभविकत्वात्, नच तत्र शब्देनैव तद्ग्रहः, तदभावेऽपि तद्दर्शनात् । किञ्च व्यवधानलग्नाया अप्यनवस्थिताया ज्ञानधाराया दुष्टत्वमेव, सुषुप्त्याद्युच्छेदकत्वाभावेऽपि प्रमाणापगमस्यानवस्थाया अनाभासत्वप्रयोजकस्य सत्त्वात् । नन्वत्रानुमानमेव प्रमाणम्, व्याप्तिग्रहस्य कार्यस्य कारणं विनानुपपत्तेरिति चेन्न, अनुमानप्रामाण्यसिद्धौ तादृशज्ञानधारासिद्धिः, तत्सिद्धौ च कारणोपपत्त्यानुमानप्रामाण्यसिद्धिरित्यन्योन्याश्रयात् । एवञ्च सति बीजाङ्कुरस्थलीयानवस्थाया अप्यनिर्वाच्यवादिनां वस्त्वपघातकत्वमिष्टमेव, तस्या अपि कार्यलिङ्गकानुमानाधीनत्वात् । तदुक्तं माध्यमिकैः—"नैवाग्रं नावरं यस्य तस्य मध्यं कुतो भवे"दिति । तर्कमणिरहस्ये मथुरानाथोऽपि "नहि कदाचिदन्तरान्तराविच्छेद एवानवस्थापरिहारः, किन्त्वात्यन्तिकविच्छेद एवेति सकलसम्प्रदायसिद्ध"मिति जगादेति । एवञ्च सति न कथमपि व्याप्तिग्रहोपपादनसम्भवः; तथाप्यभ्युपेत्यैवाह तर्हीति । इन्द्रियस्य व्याप्तौ प्रमाणत्वे इत्यर्थः । एवं = व्याप्यतया व्यापकतया वा । यदिति क्रियाविशेषणम् । तत् = व्यभिचारदर्शनम् । सामग्रीभेदनिरूपणं विना पश्चाद्बाधाभावोऽप्यापादनीय इत्याशयेनाह सामग्र्यभेदे इति । ननु दुष्टेन्द्रियघटिता सामग्री व्याप्तिभ्रमस्य, तद्विलक्षणा तु व्याप्तिप्रमितेरिति न सामग्र्यभेद इत्याशङ्क्याह दोषादोषेति । क्वचिद्दोषत्वेनाभिमतस्याप्यपरत्र गुणत्वदर्शनेन क्वचिद्गुणत्वेनाभिमतस्याप्यपरत्र दोषत्वदर्शनेन च दोषत्वस्याव्यवस्थितत्वे 'अत्रायं दोष' इत्यस्य विनेयं प्रत्येव वक्तव्यत्वात् । विविच्य वाचाचि दोषत्वनिराकरणमनुभवत्वस्य जातित्वनिराकरणप्रकरणे प्रागिति । भेदादेव = बाधितविषयकत्वतदभावरूपवैलक्षण्यादेव । सएव = स तु । सार्वत्रिकेत्यादि । प्रतीतिसामग्र्यभेदे विषयाबाधस्यैव विषयसत्त्वपर्यवसन्नस्यापादितत्वेन तस्य सामग्रीभेदकत्वशङ्कैवमापाततएवेति द्रष्टव्यम् । सार्वत्रिकसम्बन्धेत्यस्य विशिष्य निखिलानि हेत्वधिकरणान्यन्तर्भाव्य सामान्यात्मना साध्ये तत्तन्निरूपितवृत्तित्वरूपयावत्सम्बन्धार्थकता यथाभिप्रेता तदाह भाविनामित्यादि । अतीतानामप्युपलक्षणमिदम् । सम्बन्धानां = उक्तसामानाधिकरण्यानाम् । अकारणत्वादिति । सामग्रीभेदो हि तद्घटकभेदेन पर्यवानेव, तद्घटकं च कारणमेव, नचातीतानागतानां सामानाधिकरण्यानां प्रत्यक्षकारणतेति यावत्सामानाधिकरण्यसद्भावस्य न भ्रमसामग्रीतः प्रमितिसामग्रीभेदकत्वमित्याभासः । वस्तुतस्तु सामानाधिकरण्यानां यावतां लौकिकप्रत्यक्षं न पूर्ववादिनोऽपि सम्मतम्, सामान्यलक्षणयैव तत्प्रत्यक्षाभ्युपगमात्, अलौकिकं च प्रत्यक्षं यत्किञ्चिद्विषयजत्वेऽपि सम्भवति, स्वव्यापकनिरूपितसामानाधिकरण्यमेव च सार्वत्रिकसम्बन्धः, तत्र च सामानाधिकरण्यांशे न भ्रमत्वमपि तु व्यापकतांशे, यत्र च व्यभिचारनिरूपकाधिकरणे एव सामानाधिकरण्यभ्रमः, तत्र न कस्यापि सामानाधिकरण्यस्य सद्भावोऽन्यथाख्यातिमते इति विषयसत्त्वासत्त्वनिबन्धनः सामग्रीभेदः स्पष्ट एव तत्र। व्यापकतायास्तु लौकिकं प्रत्यक्षं परस्येष्टम्, सा च तस्य तद्वन्निष्ठभेदप्रतियोगितावच्छेदकत्वात्यन्ताभावरूपा नित्यैवेति सम्मतेति तदसत्त्वं नाभिधानीयम्, अन्यथाऽभाव एव न सिद्ध्येत्, नानाधिकरणेष्वभाव-

ययोः सम्बन्धस्य प्रतीतेः पूर्वं सत्त्वं भ्रान्त्यभ्रान्तिसाधारणम्; क्वचिदपि सम्बन्धाभावे भ्रान्तेरेनुत्पादात्। किमेतावता, अन्य एव तर्हि-कार्यभेदात्कारणभेदः कल्पयिष्यत इति चेत्, स हि किमिन्द्रियसहकारिभूतः करणान्तरमेव वा कल्पनीयमिति वाच्यम्, नाद्यः, इन्द्रियस्य भाविभूतसम्बन्धांशे प्रमाणत्वकल्पनायां प्रमाणाभावात्। प्रत्युत व्युपरतेन्द्रि-

त्वकल्पनगौरवाद्विभ्यद्भिरेवाभावपार्थक्यमभ्युपगतम्, अधिकरणसमसंख्याकत्वे स्वभावस्य गौरवं पृष्ठारूढमेव स्यात्। अत्यन्ताभावघटितव्यापकताकल्पेऽपि तद्वन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकत्वात्यन्ताभावरूपव्यापकतावच्छेदकत्वांशे नित्य एव भ्रमत्वम्, एवं साध्याभाववद्वृत्तित्वाभावेऽपि, यदंशे च भ्रमत्वं तस्यैव सत्त्वासत्त्वाभ्यां प्रत्यक्षयोः प्रमाभ्रमात्मनोः सामग्रीवैलक्षण्यं शङ्काऽर्हम्, नानात्वेऽपि वा व्यापकतादेर्नैकमपि पार्थिवत्वव्यापकतादिकं व्यवहारमर्हति लोहलेख्यत्वात्रावित्ति भाविनामित्याद्यभिधानस्य कोऽवसरः, पूर्वपक्षग्रन्थस्य निखिलव्यापकतासत्त्वासत्त्वे भेदकत्वाभिधायकतामभिमत्योत्तरग्रन्थयोजने तु पूर्वपक्ष एवातिशिथिलः। तस्माद्विपयसत्त्वस्यापादने तस्याविशिष्टतया सामग्रीभेदकत्वशङ्कानौचित्यमेव दूषणं सारमिति। ननु विशिष्य सर्वाणि हेत्वधिकरणानि नोपादेयानि, असम्भवादुक्तदोषाच्च, साध्ये हेतुसामानाधिकरण्यत्वावच्छिन्नसन्नावस्तु प्रत्यक्षप्रमासामग्रीघटकतया तद्भेदकः स्यात्, यत्किञ्चित्सामानाधिकरण्यसत्त्वेऽपि तत्सम्भवादित्याशङ्क्याह सामान्यत इति । तज्जातीययोः = साध्यसाधनजातीययोः। सामान्यतः सम्बन्धस्य = सामानाधिकरण्यत्वावच्छिन्नस्य। सत्त्वमित्यनेनाप्यन्वयः। अथवा हेतुमन्निष्ठभेदप्रतियोगितानवच्छेदकत्वादिरूपं व्यापकत्वमेव किञ्चिद्वृत्तित्वाविशेषितं प्रत्यक्षप्रमितिसामग्रीघटकं यदि, तदाह सामान्यत इति । साध्यतावच्छेदकावच्छिन्नवृत्तित्वेनाविशेषितस्य व्यापकतारूपसम्बन्धस्येत्यन्वयः। तज्जातीययोः = साध्यसाधनजातीयकतया प्रतीतस्य; अन्यथाऽप्रसिद्धेः। भ्रान्तीत्यादि। प्रत्यक्षात्मकभ्रमप्रमोभयसामग्रीघटकमित्यर्थः। यद्यप्युपनीतस्य भ्रमे भानेन न तस्य कारणत्वम्, तथापि लौकिकसन्निकर्षाश्रयस्य तादृशसम्बन्धस्य लौकिकसन्निकर्षाश्रयेऽपरत्रारोपस्थले तस्य कारणत्वसम्भवः। साध्यनिष्ठत्वेन विशेषितव्यापकत्वस्य सामग्रीघटकत्वे तु तस्य भ्रमस्थलेऽसम्भवद्व्युपष्टम्भसङ्गतिः। उक्तसाधारण्येऽन्यथाख्यातिमतेन हेतुमाह क्वचिदपीति । ज्ञेयत्वस्य सत्त्वव्याप्यत्वम्, असत्संसर्गाभानाभ्युपगन्तृप्राचीनमतेऽपि संसर्गतातिरिक्तं ज्ञानविषयत्वं तद्व्याप्यमेव, प्रकृते तु सामानाधिकरण्ये व्यापकत्वे वा संसर्गतातिरिक्तैव विषयतेति भावः। अन्य एवेति। कार्यं चेदवगम्येत किं कारणपरीक्षया। कार्यं चेन्नावगम्येत किं कारणपरीक्षयेति न्यायेन विशिष्य निर्देष्टुमशक्यत्वेऽपि न क्षतिरिति भावः। भेदपदं विशेषपरम्। विशिष्य कारणविशेषानिरूपणे कार्यविशेषेऽपि बाधशङ्कोदयात्तन्निरूपणमावश्यकमित्यभिप्रायेण विकल्पयति स किमिति। भूत इति। कल्पनीय इति विपरिणामेन सम्बन्धनीयम् । इन्द्रियसहकारित्वं हीन्द्रियजन्यजनकत्वमिति व्याप्तिग्रहे इन्द्रियस्य कारणत्वे एव तत्सहकारित्वं कल्पनीयविशेषे स्यात्तदेव स्वसम्भवदुक्तिकमित्याशयेनाहेन्द्रियस्येति । भूतेत्यादि। व्याप्तिग्रहस्य सकलसामानाधिकरण्यविषयकत्वमावश्यकमित्युक्तम्, व्यापकतागर्भेऽपि च भूतादेः प्रवेशावश्यकतोक्तैव। प्रमाणाभावादिति। बाधकरहितसाधकाभावादित्यर्थः। तेन प्राचीनमतानुसारेणोक्तरीत्या सामान्यप्रत्यासत्तिद्वारा भूतादिविषये इन्द्रियस्य प्रमाणत्वे साधकसम्भवेऽपि न क्षतिः। बाधकानि तूक्तानि। नव्यमते तु यथाश्रुतमेव सम्यगित्युक्तप्रायम्। यद्यपि तन्मते धूमत्वादेरेव व्याप्तित्वेन सकलसामानाधिकरण्यविषयकत्वं व्याप्तिग्रहस्य नापेक्षणीयम्, तथापि तस्य व्याप्तित्वासम्भवो वक्ष्यत इति भावः। इन्द्रिये व्याप्तिग्रहकारणताविघटकं व्यतिरेकव्यभिचारमप्याह प्रत्युतेति। इन्द्रियपदं चक्षुरादिविशेषपरम्। भावयतः = धूमो यदि वह्निव्यभिचारी स्यात् वह्निजन्यो न स्यादित्या-

यव्यापारस्यापि भावयतः पूर्वप्रतीतसम्बद्धधर्मिद्वयव्याप्त्यवधारणदर्शनात्। तदापि मनोऽस्तीन्द्रियमितिचेत्, अस्तु, तस्मिन् कार्ये मनसः करणत्वे तु प्रमाणाभावः, अवश्यं परिकल्पनीयेनान्येनैव सर्वानुपपत्त्युपशान्तेः। कारणत्वमात्रं तु चक्षुरादिजज्ञानवन्मनसस्तत्र स्यात्, चक्षुरादिवत्करणमन्यदेव तत्र कल्पनीयमिति तत्सप्तममिन्द्रियं प्रमाणान्तरं वा प्रसज्येत, अन्यथा चाक्षुषादिप्रतीतावपि चक्षुरादेः करणत्वं न स्यात्, शक्यते तत्रापि वक्तुं मन एव तत्र सुखादिप्रतीतिवत्करणम्, चक्षुरादयस्तु सहकारिमात्रम्। नापि द्वितीयः, इन्द्रियान्तरप्रसङ्गात् प्रमाणान्तरप्रसङ्गाद्वा।

नापि विनाभाव एकस्य व्यतिरेकेणापरस्याव्यतिरेकस्तन्निषेधोऽविनाभाव इति द्वितीयः पक्षः; एवं हि लोहलेख्यत्वव्यतिरेकश्च पार्थिवत्वव्यतिरेकश्च क्वचिदस्तीति पार्थिवत्वलोहलेख्यत्वयोरप्यविनाभावः प्रसज्येत। सार्वत्रिकं व्यतिरेकयौगपद्यं विवक्षितं नतु काचित्कम्, अतएवोच्यते अविनाभावनियम इति चेन्न, सार्वत्रिकान्वयावधारणनिरासन्यायेन सार्वत्रिकव्यतिरेकावधारणस्याप्यशक्यत्वात्। शक्यत्वे चान्वयावधारणमेवास्तु सार्वत्रिकं कृतं व्यतिरेकावधारणकुटिलिकया।

---

दितर्कयतः। दर्शनादिति। लौकिकसन्निकर्षव्युपरमे क्षणमात्रविलम्बेनापि चाक्षुषादिकं नेष्टम्, अन्यथा तस्यैव सामान्यप्रत्यासत्तिविधया कारणस्य सम्पन्नत्वेन चाक्षुषादिपरम्परापत्तेरिति वदन्ति। लौकिकव्यापारव्युपरमस्य क्षणद्वयाद्यनन्तरजज्ञाने चाक्षुषत्वादेस्त्वनुभवविरोधेनैव नाशङ्का। तदा = चक्षुरादिव्यापारव्युपरमदशायां। मनइति। तथाचोक्तव्याप्त्यवधारणस्य मानसत्वेनैव प्रत्यक्षत्वसम्भव इति भावः। तत्र मनसः करणत्वे कार्यान्यथानुपपत्तिस्तु न प्रमाणम्, अन्यथैवोपपत्तेस्तद्बाधकत्वादित्याह अवश्यमिति। क्वचिद्व्याप्तिग्रहस्य भ्रान्तित्वोपपत्तये इत्यादिः। अन्येनैवेति। यद्यप्यन्यः स दोष एव तार्किकैः कल्पनीयः, तस्य च न करणत्वम्, तथापि दोषमादाय प्रत्यवस्थानं निराकृतमधस्तात्। किन्त्वयमेवात्र दोष इति परकीयश्रद्धानुरोधेऽपि नयनादिव्यापारव्युपरमकालीनव्याप्तिज्ञाने सकलसामानाधिकरण्यादिविषयके मनस इन्द्रियत्वेन कारणत्वं प्रत्यक्षत्वोपपत्तये एव वाच्यम्, नच सकलांशे प्रत्यक्षत्वं नवा व्याप्तेः प्रत्यक्षत्वं सम्भवद्युक्तिकमित्युक्तमधस्तात्। तत्र = उक्तस्थलीयव्याप्तिग्रहे। करणं = करणं तु। अन्यदेव = मनोन्यदेव। सप्तममिति। चक्षुरादिषडतिरिक्ते इन्द्रियत्वव्यवहारविषयत्वमापादनीयम्, तेन न सिद्ध्यसिद्धिव्याघातः। अनुमित्याद्यनात्मके तादृशव्याप्त्यवधारणे उक्तरीत्या प्रत्यक्षत्वस्याप्यनभ्युपगमे तु प्रत्यक्षव्याप्तिज्ञानादिव्यतिरिक्ते प्रमाणत्वव्यवहारविषयत्वमापादनीयमित्याह प्रमाणान्तरमिति। ननु व्याप्तिप्रमाभ्रमसामग्रीभेदकतया कल्पनीयं मनसः सहकारितामासादयतु मनस्तु तत्र करणमेवास्त्विति नोक्तप्रसङ्ग इत्यत आह अन्यथेति।

साध्याभाववद्वृत्तित्वमविनाभावपदार्थं निराकुरुते नापीति। द्वितीयः पक्षइत्यन्वयः। साध्याभावाधिकरणनिरूपितयत्किञ्चिद्वृत्तित्वाभावमादायातिव्याप्तिमाह एवंहीति। क्वचित् = जलादौ। साध्याभावव्यापकीभूताभावप्रतियोगित्वविवक्षायां नोक्तदोषो वज्रे व्यभिचारादित्याशयेनाह सार्वत्रिकमिति। सर्वेषां साध्यसाधनाभावाधिकरणानामन्तर्भावेन। यौगपद्यं सामानाधिकरण्यम्। तथाचोक्तव्यतिरेकव्याप्तौ पर्यवसानम्। साध्याभाववद्वृत्तित्वसामान्याभावविवक्षाया अप्युपलक्षणमिदम्। सार्वत्रिकान्वयेति। व्यापकसामानाधिकरण्यरूपान्वयव्याप्तीत्यर्थः। न्यायेनेति। उक्तेनेतिशेषः। सार्वत्रिकव्यतिरेकावधारणस्येति। व्यतिरेकव्याप्त्यवधारणस्येत्यर्थः। तादृशवृत्तित्वसामान्याभावावधारणस्याप्युपलक्षणमिदम्। शक्यत्व इति। अभ्युपगममात्रमिदम्। कृतमिति। अन्वयसहचारप्रसि-

यत्र विपक्षे वृत्तौ बाधकमस्ति तयोरन्वयोर्व्याप्तिरिति केचित्, तन्न, यत्तु विपक्षे वृत्तौ बाधकं तत्प्रमाणं वा तर्को वा स्यात्, आद्ये न तावदिन्द्रियम्, तदसम्भवात्, अन्यथा व्यभिचाराव्यभिचारसंशयो न स्यात्, नाप्यनुमानम्, अनवस्थाप्रसङ्गात्। नाप्यर्थापत्तिः, अनुमानाव्यतिरेकात्, व्यतिरेके वा यदि लिङ्गिव्यतिरेकेण लिङ्गस्यानुपपत्तिस्तदा तत एव लिङ्गिसिद्धेः कृतमनुमानेन, अनेवम्भावे च तयोः किमायातम्,

द्धिस्थल इतिशेषः, तेन तदप्रसिद्धिस्थले व्यतिरेकव्याप्त्यवधारणस्यापेक्षणीयत्वेऽपि न क्षतिः। कुटिलिकात्वं गौरवग्रस्ततया। अत्राधिकं तु विवेचयिष्यते।

यत्र विपक्षे वृत्ताविति। ययोरेकस्य विपक्षेऽपरस्य वृत्तिमत्त्वग्रहस्येत्यर्थः। एवमग्रेऽपि। तेन न सिद्ध्यसिद्धिव्याहतिः। यत्सम्बन्धावच्छिन्नयद्धर्मावच्छिन्नप्रतियोगिताकाभाववति यद्धर्मावच्छिन्नस्य यत्सम्बन्धावच्छिन्नवृत्तिताग्रहस्येति यावत्। बाधकं = अनुत्पादप्रयोजकं, निवृत्तिस्तूत्पन्नस्य ग्रहस्य स्वयमेव स्वोत्तरवर्तिविशेषगुणेन वा सम्भवति। तयोरन्वयोर्व्याप्तिरिति। तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्ननिरूपकतानिरूपिताधिकरणतावति तद्धर्मावच्छिन्नस्य तत्सम्बन्धावच्छिन्नवृत्तित्वं तत्सम्बन्धावच्छिन्नतद्धर्मावच्छिन्नविधेयताकानुमितिजनकतावच्छेदकमित्यर्थः। यत्तु = यद्वि प्रमाणं = अव्यभिचारप्रमितिः, उक्तव्यभिचारग्रहं प्रति तस्या ग्राह्याभावावगाहितया विरोधित्वात्। तर्क इति। धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादितितर्कस्य व्यभिचारग्रहं प्रति व्यभिचारापादककप्रसङ्गत्वेन विरोधित्वात्। मतभेदेन प्रवृत्तिव्याघातग्रहस्य प्रवृत्तेरन्वयव्यतिरेकानुविधानज्ञानस्य चोक्तप्रसङ्गे इष्टापत्त्यादिनिवारकत्वमेव नतु साक्षाद्व्यभिचारग्रहविघटकत्वमित्याशयेन व्याघातादिकं नात्र विकल्पितम्। यद्यपि कारणान्तरासत्त्वनिबन्धनोऽपि व्यभिचारग्रहस्य शङ्कानिश्चयसाधारणस्यानुत्पादः, तथापि कारणान्तरसत्त्वस्थलीयतदनुत्पादस्य प्रयोजकविकल्पे न न्यूनता, परार्थस्थले च व्यभिचारग्रहे प्रमाणतर्कयोरेव विरोधिताभिधानमुचितम्। इन्द्रियम् = ऐन्द्रियकप्रमा, एवंपरतोऽनुमानादिपदमप्यनुमित्यादिप्रमापरम्। तदसम्भवात् = ऐन्द्रियकप्रमितेरव्यभिचारविषयकत्वासम्भवात्, अव्यभिचारस्याभावरूपत्वेन योग्यानुपलब्धिसहकृतस्यैवेन्द्रियस्य तद्ग्राहकत्वं वाच्यम्, नच प्रकृते योग्यानुपलब्धिः सम्भवतीत्युक्तं प्राक् वक्ष्यति च ग्रन्थकारः। बाधकमप्याहान्यथेति। नस्यादिति। नहीन्द्रियप्रमिते घटसत्त्वादौ सन्देहोदृष्टः, निरस्तञ्च दोषमादाय प्रत्यवस्थानमिति भावः। अनवस्थेति। अव्यभिचारविषयकानुमितिमूलभूतव्याप्तिग्रहार्थमपि विपक्षवृत्तित्वग्रहविघटकानुमित्यन्तरस्यापेक्षणीयत्वादिति भावः। यथा चाव्यवधानलग्नानुमितिव्याप्तिज्ञानधारायामप्यनवस्थितायां नेष्टापत्तिस्तथानिवेदितमनुपदम्। अनुमानाव्यतिरेकात् = व्यतिरेकव्याप्तिग्रहाधीनग्रहस्यार्थापत्तिपदाभिधेयस्यानुमित्यात्मकत्वात्, तत्रान्वयव्याप्तिग्रहाधीनग्रहे इवानुमिनोमीत्यनुव्यवसायसत्त्वात्, कदाचिदर्थापयामीत्याद्यनुव्यवसायेऽप्यर्थापत्तित्वस्यानुमितित्वव्याप्यतया एवोपगन्तव्यत्वात्, एवञ्चान्वयव्याप्तिव्यतिरेकव्याप्त्यन्यतरज्ञानस्यैवानुमितिहेतुत्वम्, व्याप्तेरननुगमे तु सामान्यकार्यकारणभावोऽनुमितित्वज्ञानत्वाभ्यामेव सम्भवदुक्तिकः, अतिप्रसङ्गस्य विशेषसामग्र्यैव वारणसम्भवादित्यन्यत्, एवञ्चानवस्थाऽत्रापि समानेति भावः। अथ व्यतिरेकव्याप्तिग्रहाधीनबुद्धौ 'अनुमिनोमी'त्यनुव्यवसाय एव न नः सम्प्रतिपत्तिः 'अर्थापयामी'त्येवानुव्यवसायात्, एवञ्चानुमितिसामग्रीजन्यत्वमपि न तत्रेत्यनुमितित्वविरुद्धमेवार्थापत्तित्वमिति चेत्तत्राह व्यतिरेकेति। उक्तबुद्धेरनुमितित्वानाश्रयत्वे इति यावत्। व्यतिरेकेणेति तृतीयार्थः प्रयुक्तत्वम्। अनुपपत्तिः = अभावः। तथा च साध्याभावव्यापकीभूताभावप्रतियोगित्वं यदि हेतावस्ति तदेत्यर्थः। तत एव = हेतौ तादृशप्रतियोगित्वग्रहादेव। कृतमिति। विपक्षवृत्तित्वग्रहप्रतिबन्धाय-

अस्तु वा कथमपि तावदर्थापत्तिर्वाधिका, तथापि कीदृशश्चाभ्युपगमइति प्रष्टव्यम्, किं विपक्षवृत्तिबाधकसध्रीचीनो यत्र क्वचिदन्वयो व्याप्तिः, उत तत्सहितः सार्वत्रिकोऽन्वयः, उत किन्नो विशेषणवेपण्येन तत्सध्रीचीनः सामान्यतोऽन्वयोव्याप्तिः, उतस सार्वत्रिकोऽन्वयः, सच विपक्षबाधकादवगम्यते। नाद्यः, विकल्पानुपपत्तेः, तथाहि–किं विपक्षे वृत्तौ बाधकं

---

व्यभिचारविषयकार्थापत्तेरिदानीं भवतावश्यमेष्यस्वान्मानान्तराभ्युपगमो गौरवपराहत इति भावः। अनेवम्भावे च = हेतौ तादृशप्रतियोगित्वाभावे च। तयोः= साध्यसाधनयोर्व्याप्तौ किमायातम्। साधनाभावस्य साध्याभावाव्यापकत्वे साधनस्य साध्याव्यभिचरितत्वासम्भवेन साध्यव्यभिचरितत्व-ग्रहविघटनायार्थापत्त्युपादानमनुपपन्नमित्यर्थः। ननु साधने तादृशप्रतियोगित्वमस्त्येव, तज्ज्ञानोत्तर-साध्यज्ञाने चानुव्यवसायबलादर्थापत्तित्वमिष्टमेव, साध्याभाववदवृत्तित्वग्रहाधीना तु साध्यधीरनुव्यव-सायसामर्थ्यादनुमितिरेव, एवञ्चानुभवानुरोधे न गौरवबिभीषिकापीत्यत आह अस्तुवेति। वस्तुतस्तु सर्वस्य तादृशप्रतियोगित्वग्रहोत्तरसाध्यग्रहे 'अर्थापयामी'त्येवानुव्यवसायः, साध्याव्यभिचारग्रहोत्तर-तद्ग्रहे चानुमिनोमीत्येवेति सर्वज्ञैरेव वक्तुं युज्यते इति। कथमपीति। अर्थापत्तेर्व्याप्तिग्रहापेक्षाया आवश्यकत्वेऽपि विरलानवस्थितज्ञानधाराया अदोषत्वमुपेत्येत्यर्थः। वस्तुतस्तु नैतद्युक्तम्, तस्या अपि दोषताया उपपादितत्वात्, अतएव तर्कनिरासावसरे पुनरपि तादृशीमेवानवस्थामुद्भावयिष्यतीतिध्येयम्। अभ्युपगमो व्याप्तिविषयकः। सध्रीचीनत्वं साहित्यं तच्च विषयतया स्वरूपसम्बन्धेन च घटितम्। यत्र क्वचिदन्वयः = अधिकरणविशेषमन्तर्भाव्य निरुक्तं सामानाधिकरण्यम्, तेन न तृतीयेन पौनरुक्त्यम्। यद्यपि नैतज्ज्ञानस्यानुमित्यौपयिकत्वसम्भवः, पर्वतीयादिधूमे महानसादिवृत्तित्वाभावात्, सर्वत्र च भ्रमे मानाभावात्, सामान्यलक्षणयापि च निखिलसामानाधिकरण्यभानं तत्राधिकरणविशेषस्याप्रवेशे एव स्यात्, तथापि व्याप्तिज्ञानपक्षधर्मताज्ञानयोः समानप्रकारकत्वेन कार्यकारणभावपक्षे कथञ्चिदस्य-कल्पस्योत्थानसम्भव इति। सार्वत्रिकोऽन्वयः = सर्वेषु हेतुमत्सु साध्यसम्बन्धः, हेतुव्यापकसाध्यनिरू-पितसामानाधिकरण्यमिति यावत्, व्याप्तिविकल्पस्यैव हि प्रस्तुतत्वम्, नतु व्यापकताविकल्पस्य। सामान्यत इत्यधिकरणविशेषान्तर्भावं वारयति। विपक्षबाधकात् = विपक्षवृत्तित्वग्रहप्रतिबन्धकात्। विकल्पानुपपत्तेः = विकल्पनीययावद्विशेषाणामनुपपत्तेः, तथाच यावद्विशेषबाधे सामान्यस्यापि बाध इति नाद्यकल्पसम्भव इत्यर्थः। यद्यपि तादृशग्रहप्रतिबन्धकस्य व्याप्त्यन्तर्भावोऽसम्भवदुक्तिकः, तस्याव्यभि-चारप्रमित्यात्मकस्य स्वरूपसत एव हेतुत्वेनानुमापकतावच्छेदकविषयतानाश्रयत्वात्, यदि च सामाना-धिकरण्ये वस्तुत एव तत्साहित्यमपेक्षितम्, तदाप्यव्यभिचारधियोऽवश्यापेक्ष्यतोपगमे तयैवोपपत्तौ सामानाधिकरण्यस्य ज्ञानमकिञ्चित्करमिति तस्यैव व्याप्तिघटकत्वं कथमित्याद्यं कल्पत्रयमसम्भवदुक्तिकमेव, तथाप्येतद्दोषसत्त्वे एव दोषान्तराभिधानाय विकल्पयति तथाहीति। पर्वतीयधूमे पर्वतवह्निजन्यत्व-मनुपपन्नं सत्पर्वतीयवह्न्यभाववद्वृत्तित्वमानयतीत्येवं विशिष्याव्यभिचारावगाहित्वमर्थापत्तेः प्रथमवि-कल्पार्थः। सामान्यरूपेणैव सर्वव्यक्तिविषयत्वं तु नात्र विवक्षितम्, द्वितीयकल्पेन पौनरुक्त्यात्, उप-रितनदूषणग्रन्थासङ्गतेश्च। तत्तद्धूमे तत्तत्सामानाधिकरण्याक्षेपिकार्थापत्तिरपि नात्र विवक्षिता, दूषण-ग्रन्थसङ्गतावपि तस्या अव्यभिचारानाक्षेपकत्वात्, द्वितीयकल्पेऽप्येवं सति सामानाधिकरण्यविषयकत्वस्य विवक्षणीयत्वेन तद्दूषणग्रन्थासङ्गतेश्च। धूमे वह्निजन्यत्वमनुपपन्नं सद्वह्न्यभाववद्वृत्तित्वाभावमानयती-त्येवं तादृशवृत्तित्वसामान्याभावाघटिताव्यभिचारावगाहित्वं द्वितीयविकल्पार्थः। तथैवाग्रिमदूषणग्रन्थ-सङ्गतेः। तादृशवृत्तित्वसामान्याभावघटिताव्यभिचारावगाहित्वमादाय तु तृतीयोऽपि द्रष्टव्यः, एवं

सर्वव्यक्तिविषयम्, उत सामान्यविषयम्, आद्ये यत्राप्यनुमानं प्रवर्तनीयं तत्रावश्योपस्थाप्यया ऽन्यथाभावबाधकभूतया ऽर्थापत्त्यैव साध्यसिद्धेः शान्तमनुमानव्यसनेन। द्वितीये क्वचिद्व्यभिचारेऽपि क्वचिदव्यभिचारमाश्रित्य बाधकस्य चरितार्थत्वम्, धूमवत्तामात्रमग्निमत्तामात्रव्यतिरेकीत्येवंरूपो हि सामान्यतो विपक्षः, तत्र च बाधकं तयोरविरोधे पर्यवस्यति, अविरोधश्च क्वचित्साहित्याद्भवत्येवेति पार्थिवत्वलोहलेख्यत्वयोरप्येवम्भूतव्याप्तत्वप्रसङ्गः। नापि द्वितीयः, विशेषणवैयर्थ्यात्, सार्वत्रिकोऽन्वय इत्येवोच्यताम्, नच सोऽपि सङ्गतइत्युक्तम्। नापि तृतीयः, बाधकस्य सामान्यविशेष-

---

व्यापकताग्रहस्यापि मणिमन्त्रादिन्यायेन व्यभिचारधीविरोधितायाः प्राचीनैरुपगमाद्वह्नौ धूमजनकत्वमन्यथानुपपन्नं सद्धूमव्यापकत्वमाक्षिपतीत्येवं चतुर्थोऽपि। यत्र = पर्वतीयादिवह्नौ। प्रवृत्तिरदार्थैकदेशानुमित्यन्वयि विषयित्वं सप्तम्यर्थः। अनुमानं प्रवर्तनीयम् = व्याप्तिज्ञानेनानुमितिरुपधातव्या। अन्यथाभावबाधकेति। विपक्षवृत्तित्वग्रहप्रतिबन्धकेत्यर्थः। साध्यसिद्धेः = साध्यावगाहनात्। उक्तार्थापत्तेः पर्वतीयवह्न्यवगाहित्वात्, सर्वव्यक्तिविषयत्वकल्पे कालविशेषावच्छिन्नपर्वतीयवह्निविषयकस्यापि बाधकग्रहस्य वक्तव्यत्वादिति। तज्जन्यत्वप्रतीतयेऽपि तत्प्रतीतिरपेक्षणीया, असम्भवो च सर्वव्यक्तिषु विशिष्याव्यभिचारग्रह इत्यपि द्रष्टव्यम्। अवश्यक्लृप्ततयार्थापत्तेः साध्यसाधकत्वोपगमस्तु द्वितीयकल्पेऽपि समानइतिनात्रैव वचनार्ह इति नासौ विवक्षितः, नवाऽनुव्यवसायबलेन तत्पार्थक्यमुपेत्य प्रवृत्तस्य तद्वचनमपि शोभते इति। क्वचिद्व्यभिचारेऽपि = साध्याभावीययत्किञ्चिदधिकरणनिरूपितवृत्तित्वेऽपि। क्वचिदव्यभिचारमाश्रित्य = साध्याभावीययत्किञ्चिदधिकरणनिरूपितवृत्तित्वाभावमवगाह्य। बाधकस्य = तादृशप्रतिबन्धकत्वेनाभिमतग्रहस्य। चरितार्थत्वम् = धूमत्वावच्छिन्ने वह्नित्वावच्छिन्नाभाववद्वृत्तित्वप्रतियोगिकाभावरूपस्य सामान्यविषयकत्वस्याक्षतत्वम्, नतु विपक्षवृत्तित्वग्रहप्रतिबन्धकत्वम्। एतदेव स्फुटयति धूमवत्तामात्रमिति। धूमइत्यर्थः। अग्निमत्तामात्रव्यतिरेकीति। अग्निव्यभिचारीति निश्चयोवाऽग्निव्यभिचारी न वेति संशयो वेत्यर्थः। सामान्यतो विपक्षः = धूमवह्निसामान्यविषयकोविपक्षवृत्तित्वग्रहः। बाधकं = बाधकत्वेनाभिमतं धूमेवह्न्यभाववद्वृत्तित्वविशेषाभावावगाहि ज्ञानम्। तयोः = साध्याभावसाधनयोः। अविरोधे = सामानाधिकरण्ये पर्यवस्यति, सामानाधिकरण्यग्रहं न विरुणद्धीति यावत्, साधने साध्याभाववद्वृत्तित्वसामान्याभावबोधो हि साधने साध्याभाववद्वृत्तित्वग्रहविरोधी नतु साध्याभाववद्वृत्तित्वविशेषाभावबोधोपीति भावः। नन्वेवमपि साध्यसामानाधिकरण्यवतः कथं साध्याभावसामानाधिकरण्यमिति तद्वति वक्ष्यमाणा कथमतिव्याप्तिरित्यतआह अविरोधश्चेति। सामानाधिकरण्यं त्वित्यर्थः। क्वचित्साहित्यात् = देशविशेषान्तर्भूतसामानाधिकरण्यादपि, एकतरस्य यद्यदधिकरणं तत्तन्निरूपितवृत्तित्वमपरत्रानपेक्ष्यापीति यावत्। भवत्येव = प्रत्यक्षादिसिद्धमेव। एवम्भूतव्याप्तत्वप्रसङ्ग इति। साध्याभावसामानाधिकरण्याविरुद्धं साध्याभावसामानाधिकरण्यप्रतियोगिकाभावमादाय पार्थिवत्वादौ लोहलेख्यत्वादिव्याप्तत्वव्यवहारप्रसङ्ग इत्यर्थः। इदञ्च विपक्षवृत्तिबाधकसध्रीचीनत्वपदेन विपक्षवृत्तित्वप्रतियोगिकाभावावगाहिज्ञानसध्रीचीनत्वविवक्षायामेव पर्यवसन्नं दूषणम्। विपक्षवृत्तित्वविषयकत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकताशालिज्ञानसध्रीचीनत्वविवक्षायां तु यथाव्याख्यातद्वितीयकल्पस्यासम्भवदुक्तिकत्वात्तृतीयचतुर्थयोरेव विश्रामः, नच तावपि सम्भवतः, साध्याभावसामानाधिकरण्यसामान्याभावस्य व्यापकत्वस्य च ग्रहणाशक्यताया आवेदितत्वादिति। विशेषणेति। सहितान्तेत्यर्थः। अत्राव्यभिचरितत्वव्यापकत्वयोर्द्वयोरेव ज्ञानस्य सर्वत्रापेक्षणीयताप्रसङ्गस्तूक्तप्राय एव। इत्युक्तमिति। दुर्ग्रहत्वोपपादनेनेति शेषः। दुर्ग्रहत्वसत्त्वे एव

विषयत्वविकल्पोक्तयुक्त्यैव निरस्तत्वात्। नापि चतुर्थः, तथाहि यद्धूमवत्तदग्निमदित्यत्रेदमन्वयस्य सार्वत्रिकत्वं वाच्यम्—यत्सर्वासां धूमवद्व्यक्तीनामग्निसम्बन्धित्वम्, तद्यदि व्याप्तिग्रहकाले गृहीतम्, तदा पक्षस्यापि धूमवद्व्यक्तेरग्निमत्त्वं प्राग्गृहीतं स्मर्यते एवेति गतमनुमानम्। सामान्यतोऽग्निमत्त्वं तस्यापि गृहीतमेव विशेषतस्त्वनुमीयत :

---

दोषान्तरं वक्तुमाह तथाहीति। इत्यत्र = इतिवाक्योपदर्शितं। इदं = वक्ष्यमाणं। अन्वयस्य = धूमनिष्ठसामानाधिकरण्यस्य। व्यक्तीनामितिषष्ठ्यर्थः सम्बन्धोऽन्यन्वयी। एवञ्च सर्वपदमहिम्ना धूमव्यापकत्वस्याग्नौ लाभः। अग्निसम्बन्धित्वं = अग्निनिरूपितत्वम्। यथाश्रुते तु नान्वयनिष्ठं सार्वत्रिकत्वं निरुक्तं स्यात्। उक्तवाक्ये चोद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयविवक्षया वा वीप्सितयत्पदघटितत्वे तद्बलादेव वा धूमव्यापकत्वस्याग्नौ तादृशाग्नेश्च धूमविशिष्टे भासमानस्य सामानाधिकरण्येन धूमेऽपि भानमिति विवक्षितार्थलाभसम्भवः। तदा पक्षस्येत्यादिकं सर्वासां धूमवद्व्यक्तीनामित्यादेरुक्तानार्थं, न तु धूमवन्निष्ठभेदप्रतियोगितानवच्छेदकत्वस्याग्नौ विवक्षितत्वे, तत्र धूमवत्यग्नेरभातत्वात्। तादृशविवक्षायामपि दुर्ज्ञेयत्वं दुर्वारमेव। किञ्च, धूमवत्त्वावच्छेदेन वह्निमत्त्वविषयकप्राक्तनग्रहस्योद्देश्यतावच्छेदकव्यापकविधेयप्रतियोगिकत्वेन संयोगस्य संसर्गविधया भासकत्वेऽपि धूमविशिष्टे वह्निवैशिष्ट्यावगाहित्वं हि नापगच्छतीति धूमवत्त्वेन पर्वते वह्निमत्त्वस्य पूर्वं ग्रहे नानुपपत्तिलेशोऽपि। स्मर्यते इति। नचैवमनुभवामीत्यनुमिनोमीति चानुभवो नानुगृहीतः स्यात्; न स्याच्चेदुपनयसन्निकर्षस्य तथाभ्युपगमो न स्यात्, तदभ्युपगमे तु विशेष्यसन्निकर्षविशेषणज्ञानतदसंसर्गाग्रहाणां विशिष्टानुभवहेतूनां सत्त्वात्ज्ञाननुग्रहउक्तानुभवस्य, अनुमिनोमीत्यनुभवस्यापि साध्यबोधे व्याप्तिधीजन्यत्वं प्रतिसन्दधत उपपत्तिरेव, विस्तरश्चैतद्वाचि प्रत्यक्षखण्डने। एतेन—धूमावच्छेदेन वह्निमत्त्वस्य पूर्वग्रहे उपनयबलादपि धूमवान् वह्निमानित्येव धीः स्यात् न तु पर्वतोऽयं वह्निमानितीति—निरस्तम्, इन्द्रियसन्निकर्षस्य पर्वते सत्त्वेन धूमवानयं पर्वतो वह्निमानिति बुद्धौ बाधकाभावात्, एतेनैवाभिप्रायेण वक्ष्यति अग्निमद्रूपतयेत्यादि। गतमिति। तादृशबुद्ध्यनन्तरभाविन्यामनुमित्साधीनायामेव क्वाचित्कबुद्धावनुमितित्वमस्त्विति तु न वाच्यम्, उपनयाधीनतादृशबुद्धावेवानुमितित्वव्यवहारविषयत्वोपगमे तदनन्तरमनुमित्साया असम्भवात्, तस्या अनुमितिहेतुत्वस्य निरस्तत्वाच्च। अनुमानं = प्रत्यक्षत्वविरुद्धजातिमत्तयाऽभिमतं व्याप्तिज्ञानाधीनं ज्ञानं, तादृशज्ञाने तादृशजातेर्निषेधपर्यवसाने न सिद्ध्यसिद्धिव्याघातः। एवञ्च प्रमाणविभागभङ्ग एव पर्यवसानम्। सामान्यत इति। अग्नित्वेनाग्निरवगतो न तु कालविशेषाद्यवच्छिन्नत्वेनापि, धूमवत्त्वेन च पर्वते, न तु पर्वतत्वेनापि, यश्च यत्र विशिष्य पूर्वमवगतः स तत्रोपनयवशाद्भासते इति नियम इति नानुमित्यनवकाश इत्यर्थः। अग्निमत्त्वस्येति। कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनेति न्यायेनाग्निमत्त्वमग्निसम्बन्धः, तस्य च विशेषः प्रतियोग्यनुयोगिव्यक्त्यात्मकः। कालदेशादीत्यादिना लाघवज्ञानादिबलाज्ज्ञानाहंमकेत्वादिकं ग्राह्यम्। तस्य = उक्तव्यक्तिरूपविशेषस्य। व्याप्तौ प्रतीतत्वेन = धूमवत्त्वावच्छेदेन वह्निमत्त्वग्रहविषयत्वेन। भवता = सामान्यप्रत्यासत्तिवादिना। एवकारस्याङ्गीकारादेवेत्यन्वयः। यथाश्रुते सामान्यप्रत्यासत्त्यनभ्युपगन्तारं प्रति समाधानस्य वक्तव्यतामासेदुषोऽप्यवचनादसङ्गतिः। तदभ्युपगमेऽपि विशेषणतावच्छेदकप्रकारकज्ञानेनैव निर्वाहसम्भवइति तु तत्त्वम्। उक्तनियमे च न मानम्, अन्यत्र गृहीतस्यापि धर्मिविशेषे साधारणधर्मदर्शनेन स्मृतस्य संशयादिदर्श-

इति चेन्न, विशेषतइति किमग्निमत्त्वस्य विशेषो व्यक्तिरूपो विवक्षित उतकालदेशादिसम्बन्धस्तस्य, नाद्यः, सर्वव्यक्तीनां व्याप्तौ प्रतीतत्वेन भवतैवाङ्गीकारात् । नापि द्वितीयः, अग्निमद्रूपतया स्मृतस्य पक्षीभूतस्य धूमवद्विशेषस्य चक्षुरादिभिरेव पर्वतत्वादिदेशकालविशेषादिमत्तया परिच्छेदात्, यथा प्राक्प्रत्ययाहितसंस्कारसध्रीचीनैश्चक्षुरादिभिः परिच्छिद्यमानेदानीम्भावदेशविशेषावस्थानादेः स एवायमिति प्रत्यभिज्ञायमानताऽङ्गीक्रियते तथैवात्राप्यस्तु कृतमनुमानेन । नाप्युपमानं विपक्षे बाधकं वक्तुं शक्यम्, तस्य नियतविषयत्वेनैतादृशे विषयेऽनुदयात् । नापि शब्दः, आप्तस्योपदेष्टुरभावे व्याप्त्यनवगमप्रसङ्गात् । अभावस्तु कदाचित्स्यात्, सोऽपि निरूप्यमाणो न घटते, एवं स वाच्यो

---

नादित्यन्यत्र व्यक्तम् । अग्निमद्रूपतया = अग्निमत्त्वेन । पर्वतत्वादीत्यादि । पर्वतत्वादिमत्तया पर्वताद्यात्मकदेशविशेषवर्तमानकालविशेषाद्यवच्छिन्नाग्निमत्तया चेत्यर्थः । परिच्छेदादिति । उपनयसन्निकर्षसहकारेणेत्यादिः । धूमकालावच्छिन्नवह्निभानं तु यद्धर्मावच्छेदेन यद्वत्त्वमवगतमुपनयवशात्तद्धर्मविशिष्टे तस्य भानाभावेन धूमस्योद्देश्यतावच्छेदकताया आवश्यकत्वेनोद्देश्यतावच्छेदककालावच्छिन्नत्वस्य च विधेयगततया भानस्य व्युत्पत्तिसिद्धत्वेन सम्भवति । अतएवातीतानागतपक्षीयधूमकालीनत्वभानप्रसङ्गो न, चक्षुरादिसहकारात्, तत्तद्धूमस्यैवोद्देश्यतावच्छेदकतायाः फलबलेन वक्तुं शक्यत्वाच्च । लाघवज्ञानस्यापीदृशप्रत्यक्षे सहकारिता शक्यवचनैवेति भावः । संस्कारोपनायकतावादिप्राचीनमतेन संस्कारेति । नव्यमते तु स्मृतेरेवोपनायकत्वम् । इदानीम्भावेति । एतत्कालावच्छिन्नत्वेत्यर्थः । तथैवेति । अत एव "प्रसिद्धसाध्यकस्थले सर्वत्रैव साध्यवत्त्वोपनीतभानसामग्रीसम्भवा"दिति पक्षतायां जगदीशोऽभ्यधात् । तादात्म्येन साध्यवत्प्रकारको वा संयोगादिना साध्यप्रकारको वोपनयाधीनो ग्रह इत्यत्र तु न निर्बन्धः । अप्रसिद्धसाध्यकं तु नानुमानमपि त्वर्थापत्तिरित्यावेदितं प्रत्यक्षखण्डनशारदायाम् । नियतविषयकत्वेन = सादृश्यशक्त्यन्यतरविषयकत्वेन । तादृशे विषयेऽनुदयादिति । व्यभिचाराभावविषयकत्वेनानुत्पत्तेरित्यर्थः । व्याप्त्यनवगमेति । व्याप्त्यप्रमितीत्यर्थः । अन्यथाऽऽप्तस्येत्यस्य वैयर्थ्यात् । अभावः = योग्यानुपलम्भात्मकषष्ठप्रमाणाधीनोऽनुभवः । कदाचित् = कथञ्चित्, वक्ष्यमाणपूर्वपक्षप्रकारैः । स्यात् = विपक्षवृत्तित्वग्रहबाधकतयाऽऽशङ्क्येत । निरूप्यमाणइति । अव्यभिचारविषयकत्वेन परीक्ष्यमाणइत्यर्थः । न घटते = न सम्भवदुक्तिकोक्तविषयताकः, तथाच स विपक्षवृत्तित्वग्रहबाधकोऽपि कथम् । वाच्यः = अव्यभिचारविषयकत्वेन सपरिकरं परं प्रत्युपन्यसनीयः । यद्वीत्यादिकं प्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वरूपयोग्यताभिप्रायेण । वह्निव्यतिरेकेण स्यात् = वह्न्यभाववद्वृत्तिः स्यात् । तथा = वह्न्यभाववद्वृत्तितया । यद्यपि निखिलधूमं पक्षीकृत्य नैतदापादनसम्भवः, असन्निकृष्टधूमस्य वह्न्यभाववद्वृत्तित्वेऽपि तथात्वेनानुपलम्भसम्भवात्, सन्निकृष्टधूमविशेषस्य पक्षत्वे तु न धूमत्वावच्छेदेन व्याप्तिनिश्चयस्यानुमित्यौपयिकस्य सम्भवः, तथापि धूमविशेषे एव निश्चीयमानापि व्याप्तिर्लाघवाद्धूमत्वावच्छेदेनैव निश्चीयते, व्यभिचारसंशयस्य प्रतिबन्धकतायां लाघवज्ञानस्योत्तेजकत्वात्, नच तथापि व्यवहितविप्रकृष्टदेशवर्तिवस्त्वन्तरे व्यभिचारइति वाच्यम्, तादृशदेशावृत्तित्वस्याप्यापादककोटौ विशेषणीयत्वात्, यदि च तस्य प्रतियोग्यग्राहकत्वादापादककोटिविशेषणता, तदापि सन्निकर्षविशेषस्यैव तथात्वसम्भवादिति भावः । क्वचिद्व्यभिचारादर्शनात् = वह्न्यभाववद्यत्किञ्चिन्निरूपितवृत्तित्वस्य धूमेऽदर्शनात् । अभावः = अनुपलम्भाधीनोऽनुभवः । प्रवर्तते = उत्पद्यते । सर्वत्र व्यभिचारादर्शनात् = वह्न्यभाववन्निखिलनिरूपितवृत्तित्वस्य धूमेऽदर्श-

यदि वह्निव्यतिरेकेण धूमः स्यात्तदा तथोपलभ्येत नचोपलभ्यतेऽतोऽनुपलम्भान्नास्ति तद्व्यतिरेकेणेति, तच्च न, तथाहि—क्वचिद्व्यभिचारादर्शनादयमभावः प्रवर्तते सर्वत्र व्यभिचारादर्शनाद्वा, नाद्यः, पार्थिवत्वलोहलेख्यत्वयोरपि व्याप्तत्वप्रसङ्गात् । नापि द्वितीयः, सर्वत्र योग्यानुपलम्भोवाऽनुपलम्भमात्रं वा, नाद्यः, सर्वत्र योग्यानुपलम्भासम्भवात् । नापि द्वितीयः, पार्थिवत्वलोहलेख्यत्वयोरपि सम्भवात् । तत्र वज्र एव व्यभिचार इतिचेन्न, तदीयादर्शनदशायांव्यभिचारानवगमात् । तद्दर्शनदशायां तावदस्ति व्यभिचारो यत्र तु न कदाचिदपि व्यभिचारदर्शनं तत्र व्याप्तिरितिचेन्न, अन्यत्रापि व्यभिचारो न दृश्यत इत्यत्र नियामकादर्शनात् ।

नापि विपक्षे बाधकस्तर्को वाच्यः तर्कस्य व्याप्तिमूलत्वाभ्युपगमेऽनवस्थान-

---

नात् । नाद्य इत्यादि । वह्न्यभाववतामतीन्द्रियाणां व्यवहितानाञ्च सद्भावात्तन्निरूपितवृत्तित्वस्य धूमे सत्त्वेऽप्यनुपलम्भोपपत्तेर्निरुक्तयोग्यत्वं नानुपलम्भे सम्भवति । न च धूमविशेषस्तावत्पक्ष इत्युक्तम्, तस्य च देशान्तरवृत्तित्वसम्भावनाविरहदशायामुक्तापादनं निराबाधमिति वाच्यम्. इदानीं धूमविशेषे तादृशसम्भावनाविरहेऽपि कालान्तरे वह्न्यभाववद्देशनिरूपितवृत्तित्वस्य तत्र सत्त्वेऽपीदानीमनुपलम्भसम्भवेनोक्तापादनासम्भवात् । नच कालान्तरे तादृशदेशवृत्तित्वसम्भावनाया अपि विरहे तादृशापादनसम्भवेन योग्यानुपलम्भसम्भव इति वाच्यम् एवं स्वार्थानुमाने व्याप्तेर्ग्रहसम्भवेऽपि वस्तुगत्या साध्याभाववद्वृत्तित्वसामान्याभावसद्भावस्य तत्र वक्तुमशक्यत्वात्, प्रतिवादिना कालान्तरे तादृशवृत्तित्वसम्भावनाया उद्भावनीयत्वात्, यच्च तद्वारकत्वेनाभिमतं तस्यापि निरसिष्यमाणत्वादिति भावः। इदमत्रावधेयम् । सत्यपि लाघवज्ञाने व्यभिचारसंशये धूमत्वावच्छेदेन व्याप्तिनिश्चयश्चार्वाकप्रभृतीनां परदृशतानां नोदेतुं प्रभवतीति सर्वसम्प्रतिपन्नमेव, अन्यथा व्याघातादिना भवतस्तदीयशङ्कानिरासप्रयासानुपपत्तेः । एवञ्च व्यभिचारसंशयप्रतिबन्धकतायां लाघवज्ञानस्योत्तेजकत्वं नैवानुमोदनीयम् । एतेन लाघवज्ञानस्योत्तेजकत्वमादाय तार्किकाणां कार्यकारणभावस्य प्रतिबध्यप्रतिबन्धकभावस्य च व्यवस्थापनं सर्वत्रैव प्रत्यादिष्टं द्रष्टव्यम्। द्वितीये पक्षेऽतीन्द्रियाद्यभावस्य षष्ठप्रमाणगोचरत्वप्रसङ्गे तत्र संशयाद्यनुपपत्तिरिति दूषणं स्फुटत्वादुपेक्ष्याह पार्थिवत्वेति । वज्रे = वज्रान्तर्भावेण । व्यभिचारः = व्यभिचारग्रहः । तदीयादर्शनदशायां = लोहलेख्यत्वाभाववत्त्वेन वज्रानुपस्थितिदशायां । तद्दर्शनदशायां = उक्तोपस्थितिदशायाम् । व्यभिचारः = व्यभिचारग्रहः । नियमकादर्शनात् = प्रमाणाभावात् । व्यभिचारदर्शनं हि संशयनिश्चयसाधारणं सोपाधित्वज्ञानेन विशेषादर्शनसहकृतसाधारणधर्मज्ञानेन वा सम्भाव्यते कदाचित्कस्यचिदिति सर्वदेशकालपुरुषीयव्यभिचारदर्शनाभावो नासर्वज्ञैर्ग्रहणार्हः किञ्चित्पुरुषीयव्यभिचारदर्शनाभावस्तु कदाचित्तदीयव्याप्तिग्रहमादधातु नाम, किन्तु नैतावता तस्य प्रमात्वं सम्भवद्युक्तिकमिति भावः ।

व्याप्तिमूलत्वाभ्युपगमे = आपाद्यनिरूपितापादकनिष्ठव्याप्तिप्रमाधीनत्वोपगमे । अनवस्थानप्रसङ्गादिति । उक्तव्याप्तिग्रहार्थमापाद्याभाववद्वृत्तित्वग्रहस्यापादके विघटनाय तर्कान्तरस्यापेक्षणीयत्वादिति भावः । व्यवधानलक्षज्ञानधाराया अपि दूषणत्वं प्रागुपपादितमेव। एतेन—इयमनवस्था न दोषाय, जन्मप्रवाहस्यानादितया सर्वत्रैव जन्मनि स्वस्वपूर्वजाततर्कापेक्षव्याप्तिप्रत्यक्षमूलकस्मरणस्य प्रथममव्यवहितप्राक्काले तर्कं विनापि सम्भवेन कार्योत्पत्तौ विरोधाभावात्, अन्यथा बीजाङ्कुरस्थलीयानवस्थाया

प्रसङ्गात्, तदनभ्युपगमे मूलशैथिल्येन तर्काभासत्वापातात् । अथ ब्रूये—न शक्यमिदं वक्तुम्, तथाहि—धूमाग्निव्यभिचारशङ्कायां बाधकस्तर्कोऽयमभिधीयते—यदि धूमोऽग्निं व्यभिचरेत्, अकारणकः सन्नित्यः स्यात्, न स्यादेव वा, सचायमनुत्तरस्तर्कः, तत्र शङ्कायां व्याघातापत्तेः, तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातादयो

---

अपि दोषत्वापत्तिरिति—नाशङ्कनीयम् । परार्थानुमाने तु तर्कोपन्यासानवस्थानिरस्तैव । मूलशैथिल्येन = आपादके आपाद्यनिरूपितव्याप्तेर्विरहेण । तर्काभासत्वेति । अतिप्रसङ्गेनाव्याप्येनाव्यापकापादनानुपपत्तेः, यदाहुः—"तत्रानुकूलत्वमिथोविरोधौ द्वौ मूलशैथिल्यमनिष्टतृतीयम् । विपर्ययापर्यवसानमिष्टप्रसञ्जनं द्वे इति तर्कदोषा" इति । इदं = अनवस्थादिकम् । शङ्कायां बाधकः = शङ्कानुत्पादप्रयोजकः । तथात्वं च प्रदर्शनीयतर्कयोः प्रथमस्य साक्षादेव मणिमन्त्रादिन्यायेन तदापादकप्रतिबन्धकत्वेन, द्वितीयस्य तु तत्रेष्टापत्तिवारकतया परम्परयेति । एतच्च तर्क इति जातावेकवचनम् । अकारणकः सन्नित्यनेनैको व्याप्तिग्राहकः प्रसङ्गः सूचितः, किन्त्वकारणकत्वमात्रापादने घटादौ व्यभिचार इति वह्न्यकारणकत्वमेवापादनीयम्, तथा च धूमो यदि वह्न्यभाववद्वृत्तिः स्याद्वह्न्यजन्यः स्यादित्यर्थः । तर्के चापाद्याभावनिश्चयो हेतुरन्यथेष्टापत्तेरित्याशयेनोक्तापाद्याभावस्य वह्निजन्यत्वस्य निश्चयाय द्वितीयस्तर्को 'नित्यः स्यान्न स्यादेव वे'त्यनेन सूचितः । अत्र चालीकाभ्युपगन्तारं प्रति शक्यं नित्यत्वालीकत्वान्यतरवत्त्वमापादयितुम् । नच घटादौ वह्निजन्यत्वाभावस्यापादकस्य सत्तया व्यभिचार इति वाच्यम्, नित्यत्वं हि ध्वंसप्रतियोगित्वाभावः, अलीकत्वञ्च कालसम्बन्धित्वाभावः, तत्र चान्यतरस्मिन् प्रतियोगिनि वह्न्यसमवहिताजन्यत्वं विशेषणीयम्, एवञ्च वह्न्यसमवहितजन्ये घटादौ विशेषणाभावप्रयुक्तस्योक्ताभावयोरन्यतरस्य सत्त्वं निराबाधम्, पक्षे तु नैव शक्यं साध्यं सङ्कल्पयितुम्, वह्न्यसमवहिताजन्यत्वस्य तत्र योग्यानां वह्न्यसमवहितानां धूमोत्पादकत्वादर्शनादयोग्यानाञ्चोपस्थितिकल्पनागौरवाद्वह्निनिश्चितत्वेन विशेषणीयत्वादिति वह्निजन्यत्वमादायैव विपर्ययपर्यवसानम् । न च—तथापि नान्तरीयकवह्निके घटादौ व्यभिचारः, तत्र वह्न्यसमवहिताजन्यत्वविरहमादायापि विशिष्टाभावसमन्वयानुपपत्तेः, नहि वह्न्यभिमतसामग्र्यजन्यत्वं वह्न्यसमवहिताजन्यत्वम्, वह्नौ धूमजनकतासन्देहे तस्यापि धूमे सन्दिग्धत्वात्, अपि तु स्वसमानाधिकरणवह्न्यभाववत्क्षणाव्यवहितपूर्वक्षणकं यत्तत्तदन्यत्वमेवेति—वाच्यम्, नान्तरीयकवह्निकभेदस्यापि प्रतियोगिकुक्षौ निवेशेन व्यभिचारवारणसम्भवात् । वस्तुतस्तु सार्वत्रिकत्वादलीकानभ्युपगन्तृसाधारणं वह्न्यसमवहिताजन्यत्वविशिष्टोत्पत्तेरभाववत्त्वमेवापादनीयम्, उत्पत्तिस्त्वत्र वह्न्यसमवधानकालीनवह्नितत्समवधानेतरयावत्कारणकत्वरूपा पारिभाषिकैव, एवं च नान्तरीयकवह्निकेऽपि घटादौ न व्यभिचारः, वह्निसमवधानकालीनयावत्कारणकत्वस्यैव तत्र सत्त्वात् । आपाद्याभावप्रतियोगिप्रसिद्धिस्तु वह्निजन्य एव, तदर्थमेव च वह्नितत्समवधानेतरेति यावत्कारणविशेषणम्, अन्यथा वह्निजन्ये वह्न्यसमवधानकालीनयावत्कारणकत्वस्याप्रसिद्धेरित्यन्यत्र विस्तरः । अनुत्तरः = तर्कान्तरानपेक्षः । तन्नतदापादके आपाद्यव्यभिचारशङ्काप्रतिबन्धाय तर्कान्तरमपेक्षणीयम्, तादृशशङ्कासत्त्वे अपि तर्कानुपपत्तेः, एवञ्चानवस्था दुरुत्तरैवेत्याशङ्क्याह तत्रेति । उक्ततर्के उपन्यस्यमाने इत्यर्थः । शङ्कायामिति । धूमोऽकारणक एवोत्पत्स्यते इत्यादिशङ्कोत्पत्तावित्यर्थः । व्याघातापत्तेः = तत्तत्कार्यार्थं तत्तत्कारणे दृश्यमानायाः प्रवृत्तेरभावापत्तेः, सर्वत्राकारणककार्योत्पत्तिसम्भावनासम्भवादिति । तथाच स्वप्रवृत्तिप्रतिबन्धेन शङ्कानुत्पादस्थले तर्कान्तरानपेक्षणेन नानवस्थेति भावः । एतदेवोपपादनाचार्योक्त्या द्रढयति तदेवेति । आशङ्क्यते = आशङ्काविषयोभवति, यस्मिन्नाशङ्क्यमाने = यद्विषयकाशङ्कायां सत्यां प्रवृत्तिर्न स्यादित्यत इति

दोषा नावतरन्तीति लोकमर्यादा, एवं सर्वत्रानुत्तरस्तर्को बाधकोऽभिधेय इति; मैवम् किमित्येवं शङ्कितव्यं 'यद्धेतुफलभाव एव न भविष्यती'ति, एवं तु शङ्कितव्यम्—'अग्निं विहायान्यस्मादपि हेतोरयमुदेष्यतीति । न च वाच्यमेवं हि सति धूमस्यैकजातिमत्त्वं न स्यादिति; क्वचिदिन्द्रियजत्वे क्वचिदनुमानादिजत्वेऽपि विज्ञानैकजात्यवत्तदुपपत्तेः । तत्रेन्द्रियादीनामवान्तरसामान्ये साक्षात्कारित्वादौ प्रयोजकत्वं न ज्ञानतायामितिचेन्न; ज्ञानत्वस्याकस्मिकत्वपरिहाराय तत्कारणस्यानुगतस्य भवतावश्यं वक्तव्यत्वात् । धूमेऽपि वह्नेर्विशेषे एव प्रयोजकत्वस्य तद्वच्छङ्कितुं शक्यत्वात् । न

---

स्वार्थसाधारणी व्याख्या । एवञ्च प्रवृत्तिदर्शनेनैव शङ्काविरहो लोकानामनुमीयते इति । एवं परार्थस्थलेऽपि तदेवाशङ्कनीयं यदाशङ्का प्रवृत्तिव्याहतिं न प्रयोजयेदिति भावः । आदिना स्ववचनस्वसिद्धान्तव्याघातादिर्गृह्यते । हेतुफलभाव इति । कारणं विनैव धूमादेरुत्पत्तिशङ्कायां तत्तत्कार्यसम्पादनाय कारणोपार्जनं व्याहन्येत, सैव तु न क्रियत इत्यर्थः । अग्निमित्यादि । अग्निशून्यकारणकलापाधीनोत्पत्तिकोऽपि धूमो भविष्यतीत्यर्थः । एवञ्चाग्नेरपि क्वचिद्धूमे हेतुत्वं स्वीकृतमिति धूमार्थं नाग्नौ प्रवृत्त्यनुपपत्तिरिति भावः । अग्न्यसमवहितकारणकूटजन्ये यदि धूमत्वमस्ति, तदा धूमत्वावच्छिन्नोत्पत्तिनियामकं किमिति वक्तव्यम्, अग्नेस्तथात्वस्य त्वया त्यागात्, न चान्यन्निर्वक्तुं शक्यत इति धूमत्वस्य तत्राभाव एवानुमन्तव्यः, एवञ्च धूमत्वावच्छेदेनाग्निजन्यत्वं निराबाधमिति सिद्धा धूमत्वावच्छेदेनाग्नित्वावच्छिन्ननिरूपितव्याप्तिरित्यभिप्रायिकामाशङ्कां शमयति नच वाच्यमिति । एवं सति = विजातीयकारणजत्वे सति । यद्धि यदीयकारणविजातीयकारणजं तत्तद्वृत्तिजातिशून्यमिति वा, तद्वृत्तिजातिमदिति वा विवक्षितम् । आद्ये व्यभिचारं प्रदर्शयन्नाह क्वचिदिति । इन्द्रियजत्वे = इन्द्रियत्वावच्छिन्नजन्यत्वे । अनुमानादिजत्वे = व्याप्तिज्ञानत्वाद्यवच्छिन्नजन्यत्वे । विज्ञानेति । प्रत्यक्षादिवृत्तिजातिशून्यत्वं नानुमित्यादौ, ज्ञानत्वस्य सर्वसाधारण्यादिति भावः । पटादिवृत्तिद्रव्यत्वादिमति घटादावपि पटकारणविजातीयकारणजे व्यभिचारस्योपलक्षणमिदम् । द्वितीयमभिप्रेत्याशङ्कते तत्रेति । अवान्तरसामान्ये इत्यन्वयः । ज्ञानत्वसमानाधिकरणत्वे सति ज्ञानत्वसमानाधिकरणभेदप्रतियोगितावच्छेदके इत्यर्थः । प्रयोजकत्वमिति । तथाच परस्परावृत्तिजातिमत्त्वस्य सत्त्वान्न व्यभिचार इति भावः । न ज्ञानतायामिति । इन्द्रियादेरपि ज्ञानत्वावच्छिन्नं प्रत्येव जनकत्वे साक्षात्कारित्वादेरवान्तरधर्मस्याभ्युपगन्तुमशक्यतामभिप्रेत्येदमुक्तम्, तथा सति व्यभिचारतादवस्थ्यप्रसङ्गादिति । एवं वैजात्योपपादनेऽपि ज्ञानत्वेन प्रत्यक्षादेः साजात्यस्य त्यक्तुमशक्यत्वेन तदवच्छिन्नोत्पत्तिनियामकं यथाऽनुगतमननुगतं वा भवता निर्वाच्यं तथा धूमत्वावच्छिन्नोत्पत्तिनियामकं मयापीति समः समाधिरित्यभिप्रेत्याह ज्ञानत्वस्येति । जन्यत्वसमानाधिकरणस्येत्यादिः । नित्ये ज्ञानत्वस्य धर्मिग्राहकमानानीतत्वेनाकस्मिकत्वशङ्कानुदयात् । आकस्मिकत्वं नियामकराहित्यम् । तत्परिहारश्चावश्यकः, अन्यथा सर्वमेव ज्ञानं स्यात्, किञ्चिदेव वा न स्यादितिभावः । प्रसङ्गप्रणाली तु "सर्वत्र सत्ताऽसत्ता वे'ति कारिकाव्याख्यायां प्रागुक्ता । नन्वत्र समाधिसाम्यमस्ति नवेति पश्चाच्चिन्तनीयम्, वैजात्यं तूक्तनियमबलादभ्युपेयत्वेन प्रसक्तमेव ते नचेष्टव्यमेव तत्; धूमसामान्याद्वह्न्यनुमानानुदयापत्तेरित्याशङ्क्याह धूमेऽपीति । वह्नेरपीत्यन्वयः । धूमे विशेष एव = धूमगतवैजात्ये एव । तद्वत् = ज्ञानगतवैजात्य इन्द्रियादेरिव । शङ्कितुमिति । तथा च धूमसामान्याद्वह्न्यनुमानानुदयोऽपि न ममानिष्टः, वैजात्यमनाकलयत एव तथानुमानम्, वस्तुतस्तु सम्भावनैव बहुशो व्यवहर्तेर्जननी, सम्भावना-

दृश्यते तावदग्निप्रयोज्ये धूमे विशेष इति च न वाच्यम्; तद्दर्शनस्यापाततो हेत्वन्तरप्रयोज्यावान्तरजात्यदर्शनेनायोग्यतयाऽविकल्प्यत्वादप्युपपत्तेः, यदा तु हेत्वन्तरप्रयोज्यो धूमस्य विशेषो द्रक्ष्यते तदासौ विकल्पिष्यते इति सम्भावनाया दुर्निवारत्वात्।

---

यामनायतमानैव विजातीयव्यवहृतिरिहानुभविकीत्यत्र तु न नः सम्प्रतिपत्तिरिति भावः। धूमे वैजात्यमनुपलम्भबाधितमित्याशङ्कते न दृश्यत इति। चस्त्वर्थे। तदद्दर्शनस्योपपत्तेरित्यन्वयः। सप्रतियोगिकत्वेनेत्यादिः। वस्तुगत्या धूमे यद्यस्ति विशेषस्तदा योग्यस्य तस्य दर्शनावश्यम्भावात् 'अनन्यजन्यत्वेन शङ्क्यमानधूमादग्निजन्ये धूमेऽयं विशेष' इत्येवं सप्रतियोगिकत्वेनैवादर्शनस्य वाच्यत्वात्, तादृशदर्शनं हि प्रतियोगिज्ञानायत्तं तेन विना कथं स्यात्, तदिदमुक्तम्—आपाततोऽविकल्प्यत्वादिति। वैजात्यस्येत्यादिः। प्रतियोगिवैजात्यज्ञानं विना सप्रतियोगिकत्वेनाग्निजधूमे वैजात्यस्य बुद्ध्यविषयत्वादित्यर्थः। तत्र हेतुः—अयोग्यतयेति। असम्भूतस्वदर्शनसामग्रीकतयेत्यर्थः। तत्र हेतुः—हेत्वन्तरेत्यादि। हेत्वन्तरमग्न्यसमवहितम्। विकल्पिष्यते = सप्रतियोगिकत्वेन भासिष्यते। दुर्निवारत्वादिति। तथा च योग्यानुपलम्भाभावेन वैजात्ये बाधनिश्चयोऽसम्भवी। एवञ्च वह्नौ तृणादिजन्यताया वह्नित्वसमानाधिकरणाया अपि यथा न वह्नित्वावच्छिन्नत्वम्, अपि तु वैजात्यावच्छिन्नत्वम्, तथा प्रकृतेऽपि धूमे वह्निजन्यताया धूमत्वसमानाधिकरणाया अपि न धूमत्वावच्छिन्नत्वसिद्धिसम्भवः, वैजात्यस्यैवावच्छेदकत्वसम्भवात्. यदि हि धूमसामान्ये वह्न्यसमवहिताजन्यत्वं भवेत्तत्रोक्ततर्केण धूमत्वावच्छेदेन वह्निजन्यत्वं सिद्ध्येदपि, तदेव तु वह्न्यघटितसामग्र्यजन्यत्वमिव न धूमसामान्ये निश्चितम्, एवञ्च धूमत्वावच्छेदेन व्याप्तिरपि कथं शक्यग्रहा। अथ सामान्यधर्मावच्छेदेन कार्यकारणभावाभावशङ्का तावदुक्ततर्केण निवर्तनीयैवेति सामान्यधर्मसामानाधिकरण्येन कार्यकारणभावग्रहो निर्बाधः, स एव तु विशेषधर्मावच्छेदेनान्वयव्यतिरेकग्रहाज्जायमानः सामान्यधर्मावच्छिन्नविशेष्यताकप्रकृतकार्यत्वाभावानिर्णयानुगतागुरुविशेषरूपान्तरानुपस्थितिलाघवप्रतिसन्धानगौरवप्रतिसन्धानाभाववशात्सामान्यधर्मावच्छेदेनैव कार्यकारणभावमवगाहत इत्यनुभवमनुरुध्यैव कल्प्यते, प्रकृते च धूमत्वसामानाधिकरण्येन वह्न्यजन्यत्वसंशयसत्त्वेऽपि न तन्निर्णयः, संशयस्तु तादृशो लाघवज्ञानविशेषदर्शनशून्य एव सामान्यधर्मावच्छेदेन कार्यकारणभावग्रहप्रतिबन्धकः स्यात्, नचैवं प्रकृते, कस्यचिद्धूमस्य वह्न्यजन्यत्वे तत्तद्धूमत्वतत्तद्वह्नित्वादीनां कार्यकारणभावावच्छेदकत्वे नानाकार्यकारणभावकल्पनापत्त्या गौरवम्, धूमत्ववह्नित्वयोस्तदवच्छेदकत्वे तु लाघवमिति प्रतिसन्धानसम्भवात्। प्रत्यक्षनिश्चये ग्राह्यसंशयस्य प्रतिबन्धकतानभ्युपगन्तृमते तु विशेषदर्शनवल्लाघवज्ञानस्य विपरीतकोटिभाननिवर्तकत्वेनैव निश्चयोपयोगसम्भव इति चेन्न, सत्यप्युक्तलाघवज्ञाने धूमत्वसामानाधिकरण्येन वह्न्यजन्यत्वसंशयसत्त्वे चार्वाकप्रभृतीनां धूमत्वावच्छेदेन वह्निजन्यत्वनिश्चयानुदयेन लाघवज्ञानस्य संशयनिष्ठप्रतिबन्धकतायामुत्तेजकत्वे विपरीतकोटिभाननिवर्तकत्वे वा मानाभावादित्युक्तत्वात्।

किञ्च लाघवप्रतिसन्धानवशेन कस्यचित्तार्किकतनयस्य भवतु नाम धूमत्वावच्छेदेन वह्निजन्यत्वनिश्चयः, तथापि धूमत्वसामानाधिकरण्येन वह्न्यजन्यत्वसम्भावनायाः प्रामाणिकत्वेन तादृशनिश्चयस्य प्रमात्वमसम्भवदुक्तिकमेवेति धूमत्वावच्छेदेन वह्निव्याप्यत्वं परं प्रति नोपपादयितुं शक्यम्। नहि लाघवज्ञानस्य तादृशनिश्चये प्रमात्वस्यापि प्रयोजकत्वम्, अलघुन्यपि लाघवज्ञानसम्भवात्, प्रमाणसत्त्वे गौरवस्यापि सह्यत्वाच्च। वस्तुतस्तु स्वीकृतयोगमाहात्म्यैस्तार्किकैः धूमत्वावच्छेदेन वह्निजन्यत्वं न कदापि वाच्यम्,

अस्त्यात्ममनोयोगोऽनुगतं कारणं ज्ञानोत्पत्ताविति चेन्न, यद्यात्ममनोयोगादुत्पद्यमानं ज्ञानं स्यादिच्छादयोऽपि ज्ञानं प्रसज्येरन् । यदि त्वदृष्टविशेषो वा शक्तिभेदो वा ज्ञानत्वजातिर्वा ज्ञानप्रागभावो वा तत्रानुगतं कारणमुच्यते । तदा तदितरत्रापि वह्निव्यभिचारेऽपि धूमस्यैकजात्यप्रयोजकतया शक्यत एव शङ्कितुम् । दृष्टे व्यभिचारे

---

"योगिनामपि मृद्बीजं विनैवेच्छावशेन तत् । घटादि जायते तत्तत्स्थिरस्वार्थक्रियाकरं" मित्यभियुक्तोक्त्या योगप्रभावेण वह्निं विनापि धूमस्योत्पादनसम्भवात् । एतेन सामान्यकार्यकारणभावमात्रं तार्किकैरङ्गीकृतं पराकृतं मन्तव्यम् । यदि च योगिनापि वह्निमुत्पाद्यैव धूमोत्पादनं क्रियते तदा कोऽयं योगप्रभावः । वह्नेःक्लृप्तस्वसामग्रीं विनोत्पादनोपगमे च धूमस्य तथोत्पादनोपगमेन किमपराद्धम् । एतेन भावकार्यस्य सोपादानकत्वनियमोऽप्यपास्तः । योगिना क्रमद्व्यणुकादिक्रमेण कार्योत्पादनोपगमे विलम्बस्याप्रामाणिकस्यापत्तेः, युगपदेव तथोपगमे च योगप्रभावस्यावश्यादरणीयत्वप्रसङ्गे उपादानकल्पना दुराग्रहमूलैव, यथाचारम्भवादो न क्वापि प्रामाणिकस्तथा व्यक्तमाकरेषु । यदाहुः—"कणादः पारिमाण्डल्यसंयोगाद्द्व्यणुकक्रमात् । जगदुत्प्रेक्षयन् मायावादसादरमानसः" इति । निरवयवानां संयोगस्य व्याप्यवृत्तित्वाव्याप्यवृत्तित्वाभ्यां विचारासहत्वादिति तत्राशयः । अविद्यापि वेदान्तिभिर्भावकार्यस्य सोपादानकत्वनियमोपगन्तृतार्किकमनोरञ्जनायैव जगतां परिणाम्युपादानतापदेऽभिषिच्यते, वस्तुतस्त्वनिर्वाच्यवादिनां तेषां लोकप्रसिद्धपरिणाम्युपादानानभ्युपगमेऽपि न काचित्क्षतिरित्यनिर्वाच्यवादे विवेचयिष्यते इति दिक् ।

नन्वेवं धूमत्वसामानाधिकरण्येन वैजात्यावच्छिन्नं वह्निजन्यत्वमादायैवोक्ततर्कचारितार्थ्येऽपि वह्न्यसमवहितजन्येऽपि धूमत्वोपपत्तये धूमत्वप्रयोजकं किञ्चिदनुगतं त्वयोपपादनीयम्, जन्यज्ञानत्वप्रयोजकत्वं तु सम्भवत्यात्ममनोयोगजत्वे इति न तत्प्रतिबन्दिरित्याशङ्कते अस्तीति । आत्ममनोयोगजत्वे यदि जन्यज्ञानत्वव्याप्यत्वं विवक्षितं तदाह इच्छादयोऽपीति । ननु प्रयोजकान्तरसम्भवेऽदृष्टपर्यन्तानुधावनं विफलम्, अदृष्टस्य कारणान्तरोपहारमुखेनैवापेक्षणीयत्वादित्यत आह शक्तिभेद इति । आत्मगतः शक्तिविशेष इत्यर्थः । शक्त्यनभ्युपगन्तृतार्किकमतसाधारण्येनाह ज्ञानत्वजातिरिति । ननु ज्ञानत्वे जन्यज्ञानत्वावच्छिन्नकारणत्वोपगमे स्वप्रयोजकत्वस्य स्वस्मिन् प्रसङ्गेनात्माश्रय इत्यतआह ज्ञानप्रागभाव इति । तत्रानुगतं कारणमिति । जन्यज्ञानत्वावच्छिन्नकारणमित्यर्थः । तदिति । अदृष्टविशेषो वा शक्तिविशेषो वा धूमत्वं वा धूमप्रागभावो वेत्यर्थः । इतरत्राप्यैकजात्यप्रयोजकतयेत्यन्वयः । इतरत्र = अन्यसमवहितजन्यत्वेनाभिमते । ऐकजात्यं = धूमत्वं । जातेः प्रयोजकं हि न कारणम्, तव मते तस्या नित्यत्वात्, मन्मतेऽपि जातिमात्रस्य ब्रह्मरूपत्वपक्षेऽविद्यारूपत्वपक्षे वा कारणानपेक्षत्वात्, आविद्यकत्वपक्षे त्वविद्याया एव तत्कारणत्वात् । नापि कार्यं वा व्याप्यं वा व्यापकं वा, तेषां प्रकृते पृच्छानास्पदत्वात्, धूमत्वप्रत्यक्षादेः कार्यस्य, प्रमेयत्वादेर्व्यापकस्य, धूमसामग्रीजन्यत्वादेर्व्याप्यस्य सुविदितत्वाच, अपि तु धूमत्वावच्छिन्नोत्पत्तिनियामकं, तत्तु धूमसामग्र्येव, सा च प्रतिकार्यव्यक्तिभिन्नैवेति तवापि समानमिति भावः । एवञ्च प्रागभावस्याप्यनङ्गीकारे, अङ्गीकारेऽपि तस्य सामान्यधर्मावच्छिन्नप्रतियोगिताकत्वानभ्युपगमे वा न काचित्क्षतिरिति । दृष्टे व्यभिचारे इति । इन्द्रियत्वाद्यवच्छिन्नस्य ज्ञानत्वावच्छिन्नाजनकत्वरूपव्यभिचारिताया निश्चये सतीत्यर्थः । ज्ञानत्वप्रयोजकत्वानुपपत्ताविति शेषः । अदृष्टादेरिति प्रयोज्यत्वार्थकपञ्चम्यन्तम् ।

युक्तमदृष्टादेरैकजात्यपरिकल्पनमिति चेत्, अस्तु दृष्टे तन्निश्चयः, अत्रापि व्यभिचारो न दृश्यत इत्यत्र नियामकाभावाच्छङ्क्यते।

एवं शङ्क्यमाणस्य भवतो न क्वचिदनुमानं स्यात्, प्रतिवाद्यात्माद्यनुमानादिव्यतिरेकेण कथायामेव प्रवृत्त्यनुपपत्त्या स्वयं स्वीकर्तव्येष्वनुमानेष्वेतादृशशङ्काक्रमणात् स एव व्याघात इति चेन्न, धूमवद्वह्नेरपि

---

परिकल्पनमिति। धूमे तु वह्न्यसमवहितजन्यत्वानिश्चयादादृष्टादिप्रयोज्यत्वस्य धूमत्वे कल्पनं युक्तम्, अपि तु स्थितिशरीरकृतलाघवाद्वह्निप्रयोज्यत्वस्यैवेति भावः। दृष्टे इति। उक्तव्यभिचरितायां निश्चयं सतीत्यर्थः। तन्निश्चयः = अदृष्टादिप्रयोज्यत्वनिश्चयः। शङ्क्यते इति। व्यभिचार इत्यनुषङ्गः। व्यभिचारः = वह्न्यसमवहितजन्यत्वम्। तथा च लाघवज्ञानस्योत्तेजकताया निरस्तत्वाद्धूमे वह्न्यसमहितजन्यत्वसन्देहे वह्निजन्यत्वस्य निश्चेतुमशक्यत्वेन न धूमत्वप्रयोजकताया वह्नित्वावच्छिन्ने निर्णयसम्भव इति न व्याप्तिनिर्णयोऽपीति भावः।

स्यादिति। इष्टापत्तिमाशङ्क्याह प्रतिवादीति। आत्मादीत्यादिना सन्देहविपर्यासौ गृह्येते। अनुमानादीत्यादिनाऽर्थापत्तिः, तस्या अपि व्याप्तिग्रहमूलकत्वात्, अनुमानञ्चानुमितिः। प्राणादिमत्त्वेन हेतुना प्रतिवादिशरीरस्य सात्मकत्वमनुमायैव तेन सह कथायां प्रवृत्तिः, अन्यथा मृतत्वेन ज्ञातेनापि तत्प्रसङ्गात्, मृतत्वज्ञानस्य प्रतिबन्धकत्वे चामृतत्वज्ञानस्य तद्धेतुत्वात्, यद्व्यतिरेकज्ञानं यत्प्रतिबन्धकं तन्निश्चयस्य तद्धेतुताया अन्यत्र क्लृप्तत्वात्। एवं भवद्वाक्यानां सन्दिग्धविपर्यस्तान्यतरं प्रत्यर्थवत्त्वात् स्वरूपसतोश्च सन्देहविपर्यासयोः प्रवृत्त्यनौपयिकत्वात्परकीययोस्तयोः प्रत्यक्षासम्भवेन चानुमेयत्वस्यैव वक्तव्यत्वात्, शब्दादेस्तदानीमभावादिति भावः। स्वीकर्तव्येष्विति। तत्तन्निरूपितव्याप्तिमत्तयेत्यादिः। अनुमानेषु = लिङ्गेषु। एतादृशशङ्केति। व्यभिचारविषयकशङ्केत्यर्थः। व्याघातः = प्रवृत्त्यनुपपत्तिः। यद्यपि सम्भावनैव प्रवृत्तेः प्रसवित्रीति न व्याघातस्तथाप्यभ्युपेत्यैवाह धूमवदिति। एवं सति = दुष्टस्यापि लिङ्गस्यादुष्टत्वोपगमे। अयम्भावः—धूमत्वावच्छेदेन वह्निजन्यत्ववादिना धूमलिङ्गकवह्निसाध्यकानुमितेर्धूमवत्पक्षिकायाः प्रमात्वमनुमन्यते यथा, तथा वह्निमत्पक्षिकाया वह्नेः कारणविशेषस्य तृणस्य पर्णस्य मणेर्वा साधिकाया वह्निलिङ्गिकाया अप्यनुमितेः क्वचिदुत्पन्नायाः प्रमात्वमनुमन्तव्यम्, व्यभिचारग्रहसाम्यात्, यद्यपि तादृशानुमितिमता व्यभिचारो न गृहीतः, तथा सति तस्य परामर्शानुदयेनानुमितेरेवानुपपत्तेः, तथापि प्रमात्वाप्रमात्वविचारकाभ्यामावाभ्यां व्यभिचार उभयत्रापि गृहीत एव। द्वयोस्तु विशेषः—यत्तृणमण्यसमवहितात्पर्णात्, तृणपर्णासमवहितान्मणेः, मणिपर्णासमवहितात्तृणाद्वह्न्युत्पादस्य निश्चितत्वेन तेषां प्रत्येकं वह्निमन्निष्ठभेदप्रतियोगितावच्छेदकत्वनिश्चयः, वह्निं विना तु धूमोत्पादस्य सांशयिकत्वेन धूमवन्निष्ठभेदप्रतियोगितावच्छेदकत्वस्य वह्नौ संशय इति। व्यभिचारसंशयोऽपि च दोष एव, यदाहुः शिरोमण्यादयः—"व्याप्यनिश्चयदशायामनुकूलतर्कापरिस्फूर्तौ सन्दिग्धानैकान्तिकत्वस्येष्टत्वा"दिति; नहि धूमे वह्निव्यभिचारसंशयदशायां वह्निव्याप्यत्वनिश्चयसम्भव इत्युक्तम्, नाप्यनुकूलतर्कः, तस्य सन्दिग्धव्याप्तिकापादककत्वेन तर्काभासत्वसन्देहात्। एवञ्चोक्तानुमित्योर्व्याप्तिमत्त्वेन दुर्निरूपलिङ्गकपरामर्शजत्वाविशेषेऽप्येकस्याः प्रमात्वमपरस्याश्चाप्रमात्वमभ्युपैषीति वैचित्र्यं कुतः? विषयबाधाबाधाभ्यामिति तु न वाच्यम्, तदनुपपत्तेरेव प्रदर्श्यमानत्वात्, बाधोऽपि हि शङ्कनीय एव। वस्तुगत्या व्याप्तिसत्त्वासत्त्वाभ्यामित्यपि न वाच्यम्, व्याप्तिमत्त्वेन दुर्निरूपताया उभयत्र साम्यादिति भावः। ननु धूमे वह्निव्याप्यत्वं सुनिरूपमेव, व्यभिचारशङ्काया व्याघातपादनेनैव निवर्तनसम्भवादि-

कारणविशेषानुमानस्यैवं सति सदनुमानत्वप्रसङ्गात्, सामग्रीसाम्येन प्रमाऽप्रमावैचित्र्यस्यानुपपत्तेः, साधारणधर्मदर्शनविशेषादर्शनादौ सत्यपि शङ्कायाश्चानुदये सामग्र्यां सत्यामपि कार्यानुदयात् परप्रतिपत्त्युत्पादनार्थं वचनादिरूपां प्रतिपत्तिसामग्रीमुत्पादयितुं यतमानस्य भवतोऽपि स्वक्रियाव्याघातस्तुल्यः। व्याघातस्यैव विशेषत्वात्तद्दर्शने शङ्कासामग्र्येव नास्ति मत्पक्षे तत्कुतो व्याघातसाम्यमिति चेन्न, तद्धि न तावदाहारादिकारणाज्जायमानमेष्टव्यं कूटविषयस्य तस्यातिप्रसञ्जकत्वात्। कूटभिन्नः

---

स्यत आह साधारणधर्मेति। आदिना धर्मितावच्छेदकप्रकारकग्रहादिग्रहः। साधारणासाधारणान्यतरधर्मवद्धर्मिणो विप्रतिपत्तेर्वा ज्ञानेन जन्या हि कोट्युपस्थितिर्विशेषादर्शनसहकृता सन्देहजननी, अस्ति च धूमे प्रमेयत्वद्रव्यत्वकार्यत्वादेर्वह्निजन्यत्वतदभावोभयकोटिसहचरितत्वरूपसाधारण्यवतो धर्मस्य ज्ञानं तादृशकोट्युपस्थितिश्च, नास्ति तु विशेषदर्शनं, धूमत्वावच्छेदेन वह्निजन्यत्वानिश्चये धूमत्वदर्शनस्य विशेषदर्शनत्वासम्भवादिति भावः। स्वक्रिया = परप्रतिपत्त्युत्पत्त्यनुकूलकृतिः। विशेषदर्शनाभावोऽसिद्ध इत्याशङ्कते व्याघातस्येति। व्याप्यत्वसम्बन्धेन शङ्कानिष्ठस्य प्रवृत्त्यभावस्यैवेत्यर्थः। तथा च शङ्कानिष्ठः प्रवृत्तिप्रतियोगिको विरोध इति पर्यवस्यति, तदभावव्याप्तेरेव तद्विरोधपदार्थत्वात्। विशेषत्वात् = विरोधितावच्छेदकविषयताश्रयत्वात्, शङ्काविरोधिता तूक्तविरोधविषयकज्ञानस्य स्वातन्त्र्येणैव, अन्यथा व्याप्यधर्मदर्शनस्यैव विशेषदर्शनतयाऽन्यत्र प्रसिद्धत्वेन चार्वाकादौ प्रवृत्त्यभावव्याप्यशङ्कादर्शनं प्रवृत्त्यभावविषयकसंशयमेव विघटयेत्, अज्ञातस्तूक्तविरोधो न शङ्काविरोधीति भावः। वस्तुतस्त्वज्ञातस्यापि तस्य प्रतिबन्धकत्वं शक्यशङ्कम् यतो हि शङ्कायां प्रवृत्त्यभावव्याप्यत्वमत एव प्रवृत्तिसत्त्वे न शङ्कोत्पादसम्भवः, एवं च सति प्रवृत्तेरपि शङ्काप्रतिबन्धकत्वमागतमेव। व्यापकाभावस्य व्याप्याभावप्रयोजकत्वादिति। मत्पक्षे = व्याघातोद्भावनेन शङ्काप्रतिबन्धमिच्छतो मते। व्याघातसाम्यं = प्रवृत्त्यनुपपत्तिसाम्यम्, अत्र व्याघातदर्शनं प्रमाणाधीनं वा तर्कोपन्यासाधीनं वेति विकल्पद्वयं परिशेषयितुं व्याप्यांशेऽप्याहार्यापादकवत्ताज्ञानाधीनत्वं तावन्निराकरोति तद्धीति। उक्तव्याघातदर्शनं हीत्यर्थः। आहारादिकारणात् = आहार्यादिकारणकात्तर्कोपन्यासात्। आदिना बाधनिश्चयः। अनिश्चितयाधार्थापादने इष्टापादनात्। जायमानमित्यत्र परम्परयाऽधीनत्वमेव विवक्षितम्। तर्कस्याहार्यापाद्यव्याप्यापादकवत्तानिश्चयेनापाद्याभावनिश्चयेन च जन्यत्वे तर्कोपन्यासस्यापि तादृशनिश्चयद्वयाधीनत्वमक्षतम्। प्रकृते च यदि भवान् गृहीतान्वयव्यतिरेकहेतुं विनापि कार्योत्पत्तिविषयकशङ्कावान् स्यात्, तदा धूमाद्यर्थं वह्न्यादौ प्रवृत्तिमान्न स्यादिति तर्कोपन्यासप्रकारः। अत्र च धूमाद्यर्थं वह्न्यादौ प्रवृत्तिमान् भवान् तादृशप्रवृत्त्यभावव्याप्योक्तशङ्कावान् स्यादिति ज्ञानमहार्यमपेक्षणीयम्। धूमाद्यर्थं वह्न्यादौ प्रवृत्तिमान्न स्यादित्येतावन्मात्रं तु तर्कः। उक्ततर्कोद्बोधकवाक्यजन्यबोधे च सम्भावनार्थकयदितदाभ्यां तादृशशङ्कारोपविषयताप्रयोज्यत्वस्य तादृशप्रवृत्त्यभावारोपविषयतायां भाने तदनन्तरं तादृशशङ्कायां तादृशप्रवृत्त्यभावव्याप्यत्वस्यापि भानसम्भवोऽन्यथोक्तप्रयोज्यप्रयोजकभावानिर्वाहादिति व्याघातदर्शनस्य तादृशतर्कबोधकवाक्याधीनत्वं सम्भवदुक्तिकमिति भावः। आपाद्यव्याप्यापादकवत्ताग्रहस्य व्याप्यांशेऽप्याहार्यत्वमथवाऽऽपादकवत्तांश एव, आद्ये आह कूटविषयस्येति। अव्याप्ये व्याप्तिविषयकस्य। तस्य = उक्ताहार्यनिश्चयस्य। अतिप्रसञ्जकत्वादिति। तदव्याप्येनापि तदापादने किन्नाम तत्, यन्न शक्यमापादयितुमिति भावः। द्वितीयाभिप्रायेणाशङ्कते कूटभिन्न इति। वस्तुगत्याऽऽपाद्यनिरूपितव्याप्त्याश्रय इत्यर्थः। प्रमितस्यैव = वस्तुगत्या स्वनिष्ठव्याप्तिनिरूपकस्यैव प्रसञ्जकः

प्रसञ्जकः प्रमितस्यैव स्यादिति चेन्नः, तस्य तर्कावसरे निरास्यत्वात्। तस्माद्यदेत-द्व्याघातरूपस्य विशेषस्य दर्शनं शङ्काप्रतिपक्षभूतमुच्यते तत्किं प्रमाणात्कुतश्चि-दुपजायमानं वक्तव्यम्, तर्काद्वा, यदि प्रथमः, शङ्कास्तित्वमपि तेनैव प्रमाणेनोपनेयम्, शङ्कायां सत्यां व्याघातात्। यदि च शङ्कां विनापि व्याघातस्तदा शङ्कमानाशङ्कमानयो-

---

स्यादित्यन्वयः । प्रकृते च तादृशशङ्कायां तादृशव्याप्यत्वमबाधितमित्यभिमानः । एवं सत्यग्रिमद्वितीयकल्पान्तर्भाव इत्यभिप्रायेणाह तस्येति । तर्कोपन्यासाधीनव्याघातबोधस्येत्यर्थः। तर्कावसरे इति। अनुपदं विकल्पनीयस्य तर्काद्वेति कल्पस्य निरासावसरे इत्यर्थः। इदानीं कल्पद्वयं परिशेषयन्नाह तस्मादिति । प्रमाणात् = तर्कानुपन्यासात्मकप्रत्यक्षादिप्रमाणात् । तर्कात् = तर्को-पन्यासात्। उपनेयं = बोधनीयं। यद्यपि शङ्कमानस्यापि चार्वाकादेः प्रवृत्तेः प्रामाणिकत्वेन प्रवृत्त्यभावव्या-प्यत्वं तादृशशङ्कायामप्रामाणिकम्, न चाहार्यैव चार्वाकादेस्तादृशी शङ्का, अनाहार्या च प्रवृत्त्यभावव्याप्येति वाच्यम्, धूमत्वावच्छेदेन वह्निजन्यत्वमनिश्चिन्वानस्य तस्य तादृशशङ्कायामाहार्यत्वस्य वक्तुमशक्यत्वात्, एवञ्च प्रवृत्तेरपि शङ्कानुत्पादप्रयोजकत्वासम्भवः, प्रवृत्त्यभावस्य शङ्काव्यापकत्वे एव प्रवृत्तेस्तथात्वस्य सम्भवात्, अतएव—'विरोधिविषयकज्ञानस्यैव प्रतिबन्धकत्वेन प्रवृत्तेश्च कृतिरूपतया कार्यकारणभा-वविषयिकायास्तस्याः प्रकृतशङ्काविरोधिविषयकत्वसम्भवेऽपि ज्ञानत्वाभावान्न प्रतिबन्धकत्वम्, प्रतिबन्ध-कतावच्छेदकशरीरे ज्ञानत्वानन्तर्भावे च विरुद्धविषयकानुद्बुद्धसंस्कारस्यापि शङ्काप्रतिबन्धकत्वापत्तिः, संस्कारव्यावृत्तजातिविशेषस्य कृतिसाधारणस्य तु प्रतिबन्धकतावच्छेदकशरीरे न निवेशसम्भवः, शङ्कायां विरुद्धविषयकज्ञानत्वावच्छिन्नाभावस्य निश्चिताव्यभिचारकत्वम्. न तूक्तजात्यवच्छिन्नाभावस्य, कृत्यनन्तरं शङ्कानुत्पादानिश्चयात्, निश्चिताव्यभिचारकं च रूपं परित्यज्य गृह्यमाणव्यभिचारकेण रूपेण कारणत्वकल्पनानुदयादि"ति तार्किकोक्तमपि सङ्गच्छते, शङ्कायाः प्रवृत्त्यभावव्याप्यत्वे तु कृतेः शङ्कानुत्पादप्रयोजकत्वस्यावश्यकत्वात् कृत्यनन्तरं शङ्कानुत्पादानिश्चयाभिधानस्यासङ्गत्यापत्तेः । एवञ्च सति स्वक्रियायामपि शङ्काऽभावव्याप्यत्वमप्रामाणिकमेवेति "स्वक्रियैव शङ्काप्रतिबन्धिका ननु व्याघातस्तद्बोधो वे"त्यपि निरस्तम्, प्रवृत्त्यभावव्याप्यत्वस्य शङ्काभावव्याप्यत्वस्य वा परं प्रति निरूपणं व्यभिचारशङ्काविघटनं विना न सम्भवतीत्यनवस्था तु सर्वपक्षसमानैव, तादृशशङ्काया व्याप्तिग्रहमूलक-तर्केणैव विघटनीयत्वात्। तथाप्यभ्युपेत्यैवाह यदीत्यादि। शङ्कायां सत्यामिति। प्रवृत्त्यभावव्या-प्तिर्हि स्वाश्रयीभूतशङ्कां विना नावस्थातुमुत्सहते इति यादृशी शङ्का व्याघातप्रमित्या गोचरीक्रियमाणा तया प्रतिबन्द्धुमिष्टा तदुत्पत्तिरावश्यकीति व्याघातप्रमितेस्तादृशशङ्काप्रतिबन्धकत्वासम्भवः, तादृश-शङ्कातिरिक्ते हि प्रवृत्त्यभावव्याप्यत्वप्रमितेस्तादृशशङ्काप्रतिबन्धकत्वं दूरोत्सारितमिति भावः। व्याघा-तात् = शङ्काश्रिततया व्याघातप्रमितिसम्भवात्। व्याघातस्यैव प्रतिबन्धकत्वे तु यथाश्रुतमेव सम्यक्। शङ्कांविनापीति । प्रकृतशङ्कातिरिक्तेऽपीति यावत् । व्याघातः = इष्टसाधनताज्ञानादिकालिकस्य प्रवृत्त्यभावस्य व्याप्तिः। शङ्कमानाशङ्कमानयोरित्यत्राशङ्कमान इष्टसाधनताज्ञानादिमान् प्रायः, नात इष्टा-पत्तेरवकाशः । व्याघातस्य = प्रवृत्त्यनुपपत्तेः। शङ्कान्तरं नोत्पद्यते इत्यत्र व्याघातदर्शनोत्तरज्ञानादी कार्यकारणभावाभावादिविषयकशङ्कात्वनिषेधे तात्पर्यम्, नातः सिद्धसिद्धिव्याहतिर्देशनीया। एतादृशी-कस्यां शङ्कायां प्रवृत्त्यभावव्याप्तिदर्शने तज्जातीयशङ्कान्तरानुत्पत्त्यैव तर्कावतारेण व्याप्तिग्रहसम्भवइति

व्याघातस्य साम्यं सिद्धमेव । भवतु शङ्कायामपि तत् प्रमाणम्, किमेतावता, प्रथमोपजातशङ्कामवलम्ब्यावस्थितस्य व्याघातरूपस्य विशेषस्य दर्शनात्तु शङ्कान्तरं नोत्पद्यत इति चेन्न, व्याघातसत्ताकाले तदवलम्ब्यया शङ्कयैव शङ्क्यमानव्यभिचारता, तस्याः शङ्काया व्युपरमे च तदवलम्बिनो व्याघातरूपस्य विशेषस्याभावात् कः शङ्कान्तरोत्पत्तेर्वारयितेति वक्तव्यम् । मा नामास्तु तदा व्याघातात्मा विशेषस्तदवगमस्तदाहितो वा संस्कारस्तावदस्ति, विशेषावगमतत्संस्कारौ च शङ्काविरोधिनौ न तु स्वरूपेण कचिदपि विशेषस्यावस्थानं तथेति चेन्न, अयावदाश्रयभाविनो विशेषस्य पूर्वस्थितस्य यद्दर्शनं तदाहितो वा संस्कारस्तस्य कालान्तरेऽपि तत्प्रतिधर्मसंशयविरोधित्वेऽवयविपाकपक्षे कुम्भस्य, परमाणुपाकपक्षे परम्परया तदारम्भकस्य परमाणोः, पूर्वं श्यामतया ज्ञातस्य कालान्तरे सम्भावितपाकस्य पाकजन्यरूपविशेषवत्तायां संशयो न स्यात् । यदि च शङ्कायां व्याघातस्तदा शङ्काश्रयस्य विशेषरूपस्य व्याघातस्य दर्शनाच्छङ्कायां शङ्कान्तरं माभूत्, यदि तु व्यभिचाराश्रयस्तदा

---

फलबलेनैव कल्प्यमिति भावः । शङ्कयैव शङ्क्यमानव्यभिचारतेति । वह्निं विना धूमोत्पादशङ्काधीनैव धूमे वह्निव्यभिचारशङ्केत्यर्थः । वारयितेतीति । इतएवापत्तेर्भयाद्व्याघातस्य न शङ्काप्रतिबन्धकत्वं वाच्यमपि तु तद्बोधस्यैव, अतएव तदुद्भावनमपि कथायां सफलमित्यभिप्रायेणाशङ्कते मा नामेति । संस्कारस्योद्बुद्धस्यैव प्रतिबन्धकत्वमाशङ्क्येत, किन्तु तत्सत्त्वे स्मृतिरावश्यकीति विशेषावगमस्यैव स्मृत्यनुभवसाधारणस्य प्रतिबन्धकत्वशङ्का युज्यते । एवञ्च सति मूलेऽवगमशब्देनानुभवस्य संस्कारशब्देन च स्मृतेर्विवक्षायां न दोषः । नचेति । नहीत्यर्थः । तथा = शङ्काविरोधितया कृतम् । सत्यपि विशेषे तद्दर्शने संशयोदयदर्शनात्, असत्यपि च विशेषे तद्दर्शने संशयानुदयदर्शनादिति भावः । अयावदाश्रयभाविनो विशेषस्येति । स्वाश्रयाधिकरणकालत्वव्यापकवृत्तिकत्वेनानिश्चितस्य विशेषस्येत्यर्थः । तेन वक्ष्यमाणापादने नेष्टत्वोद्भावनसम्भवः, नवा प्रवृत्त्यभावव्याप्तेस्तादृशवृत्तिकत्वेऽप्यसङ्गतिः, तथात्वेनानिश्चितत्वस्य तत्रापि सम्भवात् । विरुद्धो धर्मः प्रतिधर्मः । कालान्तरे इति सप्तम्यन्तार्थस्य कालान्तरावस्थितिकत्वस्याग्रैवान्वयः । पाकसम्भावनाया अभावे तादृशसंशयाभावस्येष्टत्वात्सम्भावितपाकस्येत्युक्तम् । नन्वत्र श्यामत्वदर्शनस्य प्रतिबन्धकतायां पाकसम्भावनाया एवोत्तेजकत्वसम्भवः, व्याघातदर्शनस्य शङ्काप्रतिबन्धकतायां तु न किञ्चिदुत्तेजकम्, उपाधिसम्भावनाया अपि व्याघातदर्शनप्रतिबध्यत्वादुत्तेजकत्वासम्भवात्, किञ्चोक्तवृत्तिकत्वेन निश्चितत्वस्यापि व्याघाते सम्भवेन तद्दर्शने कथं शङ्केतिचेन्न, उक्तरीत्या प्रवृत्त्यभावव्याप्तेरेव शङ्कायां निश्चायनासम्भवे तत्रोक्तवृत्तिकत्वनिश्चायनस्य दूरोत्सारितत्वात्, एवञ्चैकस्यां शङ्कायां प्रवृत्त्यभावव्याप्तिग्रहस्तज्जातीयशङ्कान्तरानुत्पादप्रयोजक इति कथम् ? स्वार्थे फलबलेन कथञ्चित्तथा कल्प्येतापि नतु परार्थे, फलस्यैवाभावात् । यस्यां यस्यामाशङ्कायां प्रवृत्त्यभावव्याप्तिस्तदनुत्पादप्रयोजकत्वस्य तद्दर्शने उपगमस्तु बाधित एव, तथा सति तत्तच्छङ्कोत्पत्तेरावश्यकत्वात् । तद्धर्मिकविशेषदर्शनं तद्धर्मिकसंशयमेव निवर्तयितुं क्षमं नत्वन्यधर्मिकसंशयम्, अतिप्रसङ्गादित्यभिप्रायेणाह यदिचेति । शङ्काश्रयस्य = शङ्कानिष्ठस्य । माभूदिति । हेतौ व्यभिचारशङ्का तु स्यादेवेति शेषः । इदञ्चापाततः, स्वातन्त्र्येणैव तादृशशङ्कां प्रति व्याघातदर्शनस्य प्रतिबन्धकताया उक्तत्वात् । व्यभिचाराश्रय इति । शङ्क्यमानव्यभिचाराश्रय इत्यर्थः । सत्यपि व्यभिचारे तदज्ञाने प्रवृत्तिदर्शनाद्यथाश्रुतासङ्गतेः । व्याघात इत्यनुपज्यते । इदमप्यापाततः, शङ्क्यमानव्यभिचाराश्रित-

व्यभिचारःस्यादेव, व्याघाताश्रयस्य व्यभिचारस्यापि प्रमितत्वापत्तेः।

अनादिसिद्धव्याप्तिकास्ते तर्का इति चेन्न, तद्बुद्धेः प्रमितित्वासिद्धेः, शरीरे स्वात्मप्रत्ययस्य तादृशस्याप्यप्रमात्वोपगमात्, अनादित्वासिद्धेश्चोभयत्राविशेषात्। नापि यद्यत्र व्यभिचारः शङ्क्येत तदा व्याघातः स्यादित्येवं रूपात्तर्काद्व्याघातावगमः, व्याघातप्रतिपादकस्य तर्कस्य मूलशैथिल्ये तर्काभासत्वापातात्। तादृशस्यापि व्याघातोप-

स्थोक्तेर्व्यभिचारशङ्काश्रितत्वे एव पर्यवसानाच्छङ्कासिद्धावपि व्यभिचारासिद्धेः। न च शङ्कायां विषयतया विशेषणतया तस्यापि सिद्धिः, धूमो वह्निव्यभिचारी नवेत्यत्र धूमो विशेष्यतया वह्न्यभाववद्वृत्तित्वञ्च कोटितया संशये विशेषणमिति तयोरस्तु सिद्धिः, ननु धूमे वह्न्यभाववद्वृत्तित्वस्येति। यदि तु धूमविषयतानिरूपितवह्निव्यभिचारविषयताशालिसन्देहसिद्धौ विषयतयोर्निरूप्यनिरूपकभावान्यथानुपपत्त्या धूमस्य वह्निव्यभिचारस्य च संसर्गोऽपि सिद्ध्यति, सदसदुपरागाभावेन च तस्यानलीकत्वमावश्यकम्, यथा चान्यत्रैव सम्बन्धस्यापि प्रसिद्धिरित्युक्ति र्न युज्यते तथा हेत्वाभाससामान्यलक्षणाक्षेपशेषे वक्ष्यते, एवञ्च धूमे वह्निव्यभिचारः सिद्ध एवेत्युच्यते, तदा मूलं समीचीनमेवेत्यवधेयम्। व्यभिचारसद्भावे हेतुमाह व्याघाताश्रयस्येति। नन्वनादिप्रसिद्धिविषयत्वेन निश्चितव्याप्तेः शङ्कानास्पदत्वात्तत्प्रतिबन्धार्थं तर्कान्तरस्यानपेक्षणीयत्वात्तादृशव्याप्तिमूलकतर्कैणैव शङ्कानुत्पादसिद्धौ व्याघातापादनं त्याज्यमेव, तथा च न शङ्काया व्याघाताश्रयतया सिद्धिरित्याशयेनाशङ्कते अनादीति। अनादिप्रसिद्धिविषयत्वेन निश्चितव्याप्तिमूलका इत्यर्थः। तेन स्वरूपसतोऽनादिसिद्धत्वस्याकिञ्चित्करत्वेऽपि नासङ्गतिः, व्याप्तेस्तादृशनिश्चितत्वोक्त्या च तन्मूलभूतकार्यकारणभावादेरपि तथात्वमायाति। ते = शङ्कानिवर्तकत्वेनाभिमताः। तद्बुद्धेः = तर्कमूलभूतव्याप्तिबुद्धेः। प्रमितित्वासिद्धेरिति। तथा च मूलशैथिल्यसन्देहेन तर्कस्य शङ्कानिवर्तकत्वासम्भवइति भावः। नन्वनादिप्रसिद्धिविषयत्वेन निश्चितविषयकत्वेन हेतुना व्याप्तिधियः प्रमात्वं प्रसाध्यमित्यत आह शरीरेति। स्वात्मप्रत्ययस्य = स्वात्मताप्रत्ययस्य, आत्माभेदप्रत्ययस्येति यावत्। तादृशस्यापि = अनादिप्रसिद्धिविषयत्वेन निश्चितविषयकस्यापि। अप्रमात्वोपगमादिति। तथा च व्यभिचारान्नोक्तहेतोर्व्याप्तिबुद्धौ प्रमात्वसाधकत्वमिति भावः। ननु देहात्माभेदप्रत्यये उक्तहेतुरेव नास्ति, देहे आत्माभेदसंसर्गेऽनादिप्रसिद्धिविषयत्वस्य मानाभावेन निश्चितत्वाभावात्, न च वाक्याभासाधीनकिञ्चित्पुरुषीयतादृशनिश्चयविषयत्वसम्भवः, प्रमितत्वस्य विवक्षितत्वात्, तथा च न व्यभिचार इत्यत आह अनादित्वासिद्धेश्चेति। अनादिप्रसिद्धिविषयत्वेन प्रमितत्वाभावस्येत्यर्थः। उभयत्र= उक्तसंसर्गे तर्कमूलतयाऽभिमतव्याप्तौ च। अविशेषादिति। अनादिप्रसिद्धिविषयत्वस्यानुमानेनार्थापत्त्या वा व्याप्तौ प्रमापणीयत्वात्, मानान्तराभावात्, तयोश्च व्याप्तिग्रहसापेक्षत्वात्, तस्य च शङ्कानिवृत्तये तर्कमपेक्षमाणस्यानवस्थयाऽसम्भवादिति स्वरूपासिद्धिरिति भावः। तर्कोपन्यासाधीनं व्याघातदर्शनमिति द्वितीयविकल्पं निराचष्टे नापीति। व्याघातः स्यात् = प्रवृत्त्यभावः स्यात्। वह्निर्यदि विषयतासम्बन्धेन धूमवच्छिन्नभेदप्रतियोगितावच्छेदकत्वकोटिकशङ्कावान् स्यात्, विषयतासम्बन्धेन धूमार्थिप्रवृत्तिमान्न स्यादितियथाश्रुतार्थः। यदि भवान् वह्निं विनापि धूमोत्पत्तिशङ्कावान् स्यात्, तदा धूमार्थं वह्नौ प्रवृत्तिमान्न स्यादित्यस्याप्युपलक्षणमिदम्। तर्कात् = तर्कोपन्यासात्। व्याघातावगमः = निर्दिष्टदिशा शङ्कायां प्रवृत्त्यभावव्याप्यत्वावगमः। व्याघातप्रतिपादकस्य = प्रवृत्त्यभावापादकस्य, मूलशैथिल्ये = व्याप्त्यमूलकत्वे। यद्यपि "तद्विध न तावदाहारादिकारणा" दिति प्राक्तनग्रन्थेन व्याप्तिमूलक एव तर्को द्वितीयविकल्पविषयो न तु व्याप्त्यमूलक इत्युक्तम्, तथापि सुहृद्भूत्वा पुनस्तदेवात्र स्मारितमिति द्रष्टव्यम्। पातादिति। तथा च तादृशतर्कावबोधकं

नायकत्वे व्याघातापत्तेः साम्यम् । शक्यत एव तर्काभासाद्भवतोऽपि व्याघात उपनेतुम् । अथ तस्य तर्कस्य व्याप्तिमूलताऽभ्युपगम्यते, तत्रापि व्यभिचारशङ्कायां पुनरनवस्थैव, तत्रापि व्याघातापादने पुनरित्थमनवस्थैव ।

तस्मादस्माभिरप्यस्मिन्नर्थे न खलु दुष्पठा ।
त्वद्गाथैवान्यथाकारमक्षराणि कियन्त्यपि ॥४४॥
व्याघातो यदि शङ्कास्ति न चेच्छङ्का ततस्तराम् ।
व्याघातावधिराशङ्का तर्कशङ्कावधिः कुतः ॥४५॥

---

वाक्यमप्यप्रमाणमिति भावः । तादृशस्य = तर्काभासस्य । व्याघातोपनायकत्वे = प्रवृत्त्यभावापादकत्वे व्याघातापत्तेः = प्रवृत्त्यभावापत्तेः। तर्काभासात् = तर्काभासबोधकवाक्यात् । व्याघातः = प्रवृत्त्यभावः । उपनेतुं = तर्काभासविषयीकारयितुं । एतद्घटकतर्काभासे 'भवत' इति पञ्चम्यर्थो निष्ठत्वमन्वेति । तस्य = व्याघातविषयकस्य । व्याप्तिमूलता = व्याप्तिग्रहाधीनत्वम् । तत्रेति । तदेत्यादिः । अनवस्थैवेति । व्याघातविषयकतर्कप्रयोजकव्याप्तौ शङ्कोद्भावने तर्कान्तरस्य त्वया मय्युत्पाद्यत्वात्, एवं तत्र तत्रापीत्यनवस्थेत्यर्थः । ननु तादृशव्याप्तौ शङ्कोद्भावने प्रवृत्त्यनुपपत्त्यापत्तिरेव प्रदर्शनीया, न तु तर्कान्तरमुत्पाद्यमिति नानवस्थेत्यत आह तत्रेति । तादृशव्याप्तौ शङ्कोद्भावने इत्यर्थः। अनवस्थैवेति । शङ्कायां प्रवृत्त्यभावव्याप्तिनिरूपणं विना शङ्ककं प्रति प्रवृत्त्यनुत्पत्त्यापत्तिप्रदर्शनासम्भवात्, तन्निरूपणस्य च शङ्कानिवृत्त्यधीनत्वादिति भावः ।

अत्र श्रीमदुदयनाचार्यैर्व्यभिचारस्यायोग्योपाधेर्वा शङ्कया व्याप्तिग्रहासम्भवादनुमानाप्रामाण्यं मन्वानं चार्वाकं प्रति "शङ्का चेदनुमास्त्येव न चेच्छङ्का ततस्तराम् । व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मत" इत्यभ्यधायि । अयमेतदर्थः—कालान्तरदेशान्तरयो वर्तमाने धूमे व्यभिचारस्यातीन्द्रियपिशाचादावुपाधित्वस्य वा शङ्का चेदस्ति, तदा भाविभूतदेशकालान्तरादिज्ञानमनुमित्यतिरिक्तं न सम्भवतीति शङ्कान्यथानुपपत्त्यैवानुमानप्रामाण्यं मन्तव्यम्, तादृशशङ्काया अभावे तु व्याप्तिग्रहे प्रतिबन्धकाभावेनानुमानप्रामाण्यं सुतरामागतम् । एवं प्रतिवादिनं जल्पेन निराकृत्य तत्त्वबुभुत्सुं प्रत्याह तर्कः शङ्कावधिरिति । शङ्कानुत्पादप्रयोजक इत्यर्थः । ननु तर्कस्यापि व्याप्तिग्रहायत्तत्वात्तत्र शङ्काप्रतिबन्धाय तर्कान्तरापेक्षायामनवस्थेत्यत आह व्याघातावधिरिति । तादृशाशङ्का शङ्कानिष्ठप्रवृत्त्यभावव्याप्यत्वरूपव्याघातप्रयोज्यानुत्पत्तिकेत्यर्थः । अथवा यत एव क्वचिदाशङ्का तादृशव्याघातप्रयोज्यानुत्पत्तिका, अतएव तर्कः शङ्कावधिः = शङ्कावध्यवधिकः, शङ्कावधिर्व्याघातः, स एव तर्कस्यावधिः, व्याघातेन शङ्कानुत्पादस्थले तर्कान्तरस्यानुपयोगात, तथा च नानवस्थेति । एतत्कारिकार्थनिरासमेतावता कृतं प्रतिकारिकया सङ्कलयितुमाह तस्मादिति । उदाहृतदिशाऽनवस्थाया दुर्वारत्वादित्यर्थः । अस्मिन्नर्थे = शङ्कानवस्थयोः सद्भावरूपार्थे । प्रतिपादकत्वं सप्तम्यर्थो गाथान्वयी । त्वद्गाथैव = त्वद्गाथासजातीयैव, साजात्यञ्च तद्घटकपदसमानानुपूर्वीककतिपयपदघटितत्वेन । तदाह अन्यथाकारमिति । अन्यथाकरणं = विलक्षणानुपूर्वीसम्पादनं यथा भवति तथा कियन्तिचिदक्षराणि कृत्वेति शेषः । व्याघातो यदीति । शङ्काश्रिततयोपेयते इति शेषः । शङ्कास्तीति । तदा शङ्काया उत्पत्तिरप्युपेयैव, अन्यथा तस्या आश्रयत्वानुपपत्तेः, न हि सा नित्येति न व्याघातस्य तदनुत्पादप्रयोजकत्वम् । न चेदिति । शङ्काश्रितो व्याघातो यदि नास्ति, ततस्तरां शङ्का = तदा प्रतिबन्धकविरहेण सुतरां शङ्का, तथा च व्याघातावधिः = व्याघातप्रयोज्यानुत्पत्तिका शङ्केति कुतः ।

अव्यभिचारश्चैकपरित्यागव्यवच्छेदेनापरान्वयः समकालजातदृष्टनष्टे ऽ दृष्टः शङ्क्यत इत्याहुः ।

---

तर्को वा शङ्कानुत्पादप्रयोजकः शङ्कावध्यवधिको वेति कुतः। व्याघातस्य शङ्कोच्छेदकत्वाभावे शङ्कया तर्कस्यानवतारेण तस्य शङ्काप्रतिबन्धकत्ववाचोयुक्तेस्तर्कान्तरापेक्षणे चानवस्थाविरहवाचोयुक्तेरयुक्तेरित्यर्थः । यत्तु—शङ्काश्रिततया व्याघातस्य प्रतिबन्धकत्वं न ब्रूमः, अपि तु यत्र शङ्कोत्पत्तौ प्रमाणसिद्धप्रवृत्त्यनुपपत्तिरूपो व्याघातस्तत्र शङ्का नोत्पद्यते, स्वक्रियाया एव प्रतिबन्धकत्वात्, स्वक्रियापदेन चान्वयव्यतिरेकानुविधानज्ञानं विवक्षितम्, विशेषदर्शनविधया च तस्य विरोधित्वम्, न चान्वयव्यतिरेकमात्रस्य नान्तरीयकवह्निकघटादिविशेषसाधारणत्वात्तद्धियो विशेषदर्शनविधया न वह्न्यजन्यत्वशङ्काप्रतिबन्धकत्वसम्भव इति वाच्यम्, नियतान्वयव्यतिरेकयोर्विवक्षणीयत्वादिति; तत्तुच्छम्, एवं सति वह्निव्याप्यत्वज्ञानस्य वह्निव्यतिरेकव्यापकव्यतिरेकप्रतियोगित्वज्ञानस्य च धूमे, वह्निजन्यत्वव्याप्यत्वज्ञानस्य च वह्निनियतान्वयव्यतिरेकयोरपेक्षणीयत्वेऽनवस्थाया दुर्वारत्वात् । नचाविच्छिन्नतर्कव्याप्तिज्ञानधारानभ्युपगमान्नानवस्थेयं दोषावहेति वाच्यम्; अत्रैव प्रघट्टके दत्तोत्तरत्वादिति ।

ननु कोटिद्वयदर्शनं विना संशयानुपपत्तेरव्यभिचारदर्शनं क्वचिदुपेयम्, यदाहुरुदयनाचार्याः, "न चैतच्छङ्कितुमपि शक्यते, अप्रतीते संस्काराभावात्, संस्कारानुपनीतस्य चारोपयितुमशक्यत्वा" दिति, तथा च सुस्थमनुमानप्रामाण्यमित्याशङ्क्याह अव्यभिचारश्चेति । अपरान्वय इत्यन्तेनाव्यभिचारपदार्थ उक्तः, एकपदं साध्यत्वेनाभिमतव्यक्तिपरम्, तदीयपरित्यागस्य = तदभाववद्वृत्तित्वस्य व्यवच्छेदेन = अभावेनापरस्य = हेतोरन्वयः = तत्सामानाधिकरण्यम् । तृतीयार्थो वैशिष्ट्यम्, तथा च साध्याभाववदवृत्तित्वे सति साध्यसामानाधिकरण्यमव्यभिचारपदार्थः, विशेष्यदलं गगनादावतिव्याप्तिवारणफलमिति प्रसिद्धमेव । एवं च व्यभिचारकोटिरपि साध्याभाववद्वृत्तित्वसाध्यसामानाधिकरण्योभयाभावरूपैवेति भावः । समकालशब्दार्थस्य जातादिपदार्थत्रयेणान्वयः । एवञ्च समदेशोत्पत्त्यादिकमपि विवक्षितम्, अन्यथा कालिकाव्यभिचारशङ्कोपपादनेऽपि दैशिकाव्यभिचारशङ्कानुपपादनात् । कालपदं क्षणपरम्, अन्यथा प्रहरादिकालमादाय पौर्वापर्यस्योत्पत्तिनाशयोः सम्भवेन व्यभिचारशङ्कातादवस्थ्यात् । एवञ्चैकस्मिन्नेव देशे युगपदुत्पत्तिविनाशवतोर्द्वयोः समकालमेव दर्शने नैकस्यापरानुमापकत्वसम्भव इति न लब्धप्रसरत्वमनुमानस्येति भावः । सिद्धौ सत्यामपि तत्रानुमित्सयाऽनुमितिसम्भवात्, ज्ञानस्येच्छानधीनत्वमितिमतादरे चैकक्षणोत्पत्तिकत्वं द्वयोः कथं ग्राह्यम्, क्षणस्यातीन्द्रियत्वेन प्रत्यक्षेण ग्रहणासम्भवात्. शब्देनेति चेच्छब्दप्रयोक्त्रा तत्कथङ्गृहीतमिति वक्तव्यम्, अनुमानेनेत्यभिधानं तु तत्प्रामाण्यं निराकुर्वाणस्य नोपपद्यते । क्षणस्यैन्द्रियकत्वमेवेतिमतादरेऽपि स्वस्मिन्नेव स्वाव्यभिचारदर्शनस्यायत्नलभ्यस्य सम्भवे तादृशस्थलानुधावनं विफलम्, अन्यथाख्यातेर्निरस्तत्वेन प्रमितस्यैवारोपविषयतायां मानाभावेन पराभिमताव्यभिचारमादायैव तत्कोटिकशङ्कासम्भवश्चेत्यस्वरससूचनायाहुरित्युक्तम् ।

इदन्त्ववधेयम्, धूमवन्निष्ठभेदप्रतियोगितानवच्छेदकवह्नित्वावच्छिन्नसामानाधिकरण्यादिकं न व्याप्तिः, तस्य नानात्वेन पक्षधर्मधूमेऽग्रहेणानुमित्यनौपयिकत्वात् । न च धूमव्यापकवह्निप्रतियोगिकसामानाधिकरण्यत्वादिना सामानाधिकरण्यव्यक्तीनामनुगमात्सामान्यप्रत्यासत्त्या पक्षीयहेतुगतव्याप्तेरपि तेन रूपेण पूर्वं ग्रहसम्भवेन सम्भवत्यनुमित्यौपयिकत्वं तस्येतिवाच्यम्, सामान्यप्रत्यासत्तिनिरासात् । एवं तादृशसामानाधिकरण्यस्य रासभादिसाधारण्येन भ्रमं विनाऽपि रासभादिलिङ्गकानुमि-

व्यापत्तिरपि । अथ तादृशसामानाधिकरण्यस्य स्वाश्रयनिष्ठधूमत्वादिमत्त्वरूपपरम्परासम्बन्धेन ज्ञानमनुमितिहेतुरिति नोक्तदोषः, धूमवृत्तित्वं तु सामानाधिकरण्ये नोपादीयते, तथा सति धूमवृत्तिसामानाधिकरण्यवद्वानितिग्रहस्यैवानुमितिहेतुताया वक्तव्यत्वात्समानाकारस्यैव च ज्ञानस्य प्रतिबन्धकत्वेन 'धूमाभाववान् पक्ष' इति ज्ञानस्य तदप्रतिबन्धकतयाऽसिद्धावव्याप्तिप्रसङ्गादितिचेन्न, परम्परायाः सम्बन्धत्वे मानाभावात्, नानात्वतादवस्थ्याच्च । न च धूमव्यापकवह्निसमानाधिकरणवृत्तिधूमत्वं व्याप्तिरिति वाच्यम्. आत्माश्रयेण व्याप्तेरवच्छेदकस्य धूमत्वस्य व्याप्तित्वानुपपत्तेः । तादृशसमानाधिकरणवृत्तित्वविशिष्टं धूमत्वमवच्छेद्यम्, शुद्धं च तदवच्छेदकमिति तु न वाच्यम्, नहि पर्वतो धूमव्यापकवह्निसमानाधिकरणवृत्तित्वविशिष्टवद्धूमवानिति परामर्शोऽत्र पक्षेऽनुमितिकारणतयोपेतव्यो न पर्वते वह्निमत्तानिश्चयायत्तः, न च सामानाधिकरण्यानां नानात्वे तद्वद्वृत्तित्वविशिष्टधूमत्वस्यापि न नानात्वम्, तथा च भक्षितेऽपि लशुने न शान्तोव्याधिः । एतेन तादृशसामानाधिकरण्योपहितनिरूपितवृत्तित्वोपहितधूमत्वं व्याप्तिः, तादृशवृत्तित्वोपहितवद्धूमवानिति परामर्शश्चानुमितिहेतुरित्यपि नाशङ्कनीयम् । अत्रापि पर्वते वह्निमत्तानिश्चयस्य प्रागपेक्षणीयत्वापत्तेर्दुर्वारत्वाच्च । अविद्यमानत्वगर्भं ह्युपलक्षणत्वं नेह शक्यशङ्कम् । किञ्च विशिष्टोपहिताभ्यां शुद्धस्यात्यन्ताभेदेऽवच्छेद्यावच्छेदकभावानुपपत्तिप्रसङ्गमासम्भवेनात्यन्तभेदस्य च विशिष्टधूमत्वं न धूमत्वमितिप्रतीत्यापत्त्याऽसम्भवदुक्तिकत्वेन भेदाभेद एव स्यादित्यनिष्टप्रसङ्गः, विरुद्धयोरेकतरस्य मिथ्यात्वेऽद्वयोपेये तत्प्रयोजकरूपावच्छिन्नयोरपि तथात्वस्य दुर्वारत्वात् । एतेनैकधर्मिविशेषणतापन्नधूमत्वादिरूपहेतुतावच्छेदकतादृशसामानाधिकरण्योभयं व्याप्तिरित्यपि प्रत्यादिष्टम्, व्याप्त्यवच्छेदकस्य व्याप्तित्वे आत्माश्रयात् । अत एव साध्यसामानाधिकरण्यावच्छेदकं रूपं व्याप्तिरित्यपि न युक्तम् । न च स्वरूपसम्बन्धरूपावच्छेदकत्वमेव स्वस्मिन्नोपेयते तद्यन्यूनानतिप्रसक्तस्वरूपमर्पातिवाच्यम्, तस्यात्र प्रवशे व्याप्तेर्व्याप्तिघटकत्वापत्तावनवस्थापत्तेः । वस्तुतस्त्वेवं धूमत्वादेर्वह्निसामानाधिकरण्यानवच्छेदकत्वं मा भूदिति स्वविशिष्टाधिकरणावृत्तियावत्साध्यासमानाधिकरणकत्वरूपं पारिभाषिकमवच्छेदकत्वमेव वचनीयं तदाश्रयश्च स्वपदार्थो हेतुतावच्छेदकोधर्म इति स एव व्याप्तिरित्युक्तदोषः । न च व्याप्तिघटकसामानाधिकरण्यभागावच्छेदकत्वमादायैव धूमत्वे व्याप्यतावच्छेदकत्वव्यवहारः कथञ्चिन्नेतव्य इति साम्प्रतम्, धूमत्वं वह्निव्याप्यत्वावच्छेदकं न तु वह्निव्याप्यत्वमित्यबाधितव्यवहारस्य जागरूकत्वे तथोक्तेरमानकत्वात् । न च साध्यसामानाधिकरण्याभावव्यापकतावच्छेदकत्वसामानाधिकरण्याभावत्वकत्वादेर्व्याप्तित्वे नोक्तदोषइति वदितुं युक्तम्, एकधर्मावच्छिन्नहेतुकस्थलेऽपि तत्पानन्तुगमेनानुमित्यनौपयिकत्वप्रसक्तिव्युदस्तये तादृशव्यापकतावच्छेदकत्वविशिष्टसामानाधिकरण्याभावत्वको योधर्मस्तस्यैव व्याप्तिताया विवक्षणीयत्वेनोक्तदोषतादवस्थ्यात्, बहुव्रीह्यर्थस्य दुर्वचत्वाच्च, परम्परायाः सम्बन्धत्वे मानाभावात् । न च सम्बन्धत्वेनैव तस्य विवक्षा, तद्धि विशिष्टधीजनकत्वं वा विशेष्यताप्रकारताभिन्नविषयत्वं वा, विशेष्यताऽन्यप्रकारतानिरूपितविषयत्वं वा, प्रकारताऽन्यविशेष्यतानिरूपितविषयत्वं वा, पदार्थान्तरमेव वा, तत्प्रतियोगिकत्वविशेष एव तत्सम्बन्धत्वमिति वा । नाद्यः, अतीन्द्रियसंसर्गासङ्ग्रहात्, जनकताया नियमघटितत्वेनानवस्थानाच्च, जनकतावच्छेदकनिरूपणसापेक्षत्वाच्च । न द्वितीयः, तादृशभेदकं धर्मं धर्मितावच्छेदकीकृत्य ज्ञातव्य इति जिज्ञासायां धर्मितावच्छेदकान्तरोक्तौ तस्यैव लक्षणत्वौचित्यात्, प्रमीयविषयतामादाय संयोगादेरपि द्रव्यत्वादिसम्बन्धतापाताच्च, अत एव न तृतीयतुरीयौ, विषयतायां प्रमीयत्वोपादाने च प्रमात्वस्य सम्बन्धिताघटितत्वस्य प्राङ्निवेदितत्वेनानवस्थातादवस्थ्यात्, प्रमात्वस्य निरस्तत्वाच्च । नापि पञ्चमः, पदार्थान्तरसिद्धेनावता लक्षणस्यानपेक्षणीयत्वासम्भवेन तस्य निरूप्यत्वात्, प्रतीतिविशेषसाक्षिकतयाऽभिधानस्या-

न्योन्याश्रयावहत्वात्। एतेन प्रतियोगित्वानुयोगित्वावच्छेदकत्वादिकं व्याप्तिलक्षणमात्रघटकं व्याख्यातम्। प्रतियोगित्वं सहानवस्थाननियम इति तु न, तस्य तदभावव्याप्यत्वरूपतयाऽनवस्थापत्तेः। तदधिकरणवृत्तित्वसामान्याभावरूपं तत्प्रतियोगित्वमितिचेन्न, तस्य प्रतियोगिताघटितत्वेनानवस्थानात्। एतेन यदभाववन्निष्ठाधिकरणतासामान्ये यद्धर्मावच्छिन्ननिरूपितत्वाभावस्तद्धर्मवत्त्वमेव प्रतियोगित्वम्, एवञ्च विशिष्टस्यानतिरिक्तत्वपक्षे तस्य विशिष्टाभावाधिकरणवृत्तित्वेऽपि न विशिष्टसत्ताद्यभावप्रतियोगित्वासङ्ग्रहः, सामान्यपदार्थश्च व्यापकत्वं न तु व्याप्तिनिरूपकत्वमित्यपि निराकृतम्, उक्तयुक्त्यैव प्रतियोगितावच्छेदकस्य प्रतियोगित्वाद्युपपत्तेश्च, व्यापकतागर्भेऽपि प्रतियोगिताया प्रविष्टत्वेन तस्या व्यापकताघटितत्वानौचित्याच्च। अधिकं तु प्रतियोगिताविषये संसर्गाभावान्योन्याभाववैधर्म्यखण्डनेऽभिहितमधस्तात्। एतेन प्रतियोगिताघटितभ्रमोऽपि परास्तः। विशेषस्य दुर्वचतया प्रतीतिसाक्षिकतयाऽभिधानेऽन्योन्याश्रयाच्चेति।

अपि च दण्डिमान् दण्डिसंयोगादित्यादौ विशिष्टसाध्यतावच्छेदकस्थले कथं साध्यतावच्छेदके प्रतियोगितानवच्छेदकत्वं सम्पादनीयम्, तद्दण्डावच्छिन्नप्रतियोगिताकाभावस्य हेतुमति सद्भावात्। साध्यतावच्छेदकतावच्छेदकेतरानवच्छिन्नसावच्छिन्नावच्छेदकत्वीयस्वरूपसम्बन्धेन प्रतियोगितावच्छेदकत्वाभावो दण्डादौ साध्यतावच्छेदके सुलभ इति तु न वचनीयम्, विशेषरूपेण संसर्गतायां मानाभावात्, दण्डिसंयोगादिसाध्यकेऽप्रतीकाराच्च, तद्दण्डिसंयोगो नास्तीत्यभावीयप्रतियोगितावच्छेदकतायां साध्यतावच्छेदकतावच्छेदकदण्डेतरस्यानवच्छेदकत्वात्, तत्तादेस्तदवच्छेदकतायामेवावच्छेदकत्वात्। तत्र साध्यतावच्छेदकतावच्छेदकतावच्छेदकेतरानवच्छिन्नसावच्छिन्नावच्छेदकत्वीयस्वरूपसम्बन्धस्यैव प्रतियोगितावच्छेदकतावच्छेदकतानिष्ठप्रतियोगितावच्छेदकत्वमिति चेद्दण्डिसंयोगप्रतियोगिकसमवायस्य साध्यतायां तद्दण्डिसंयोगप्रतियोगिकत्वविशिष्टसमवायो नास्तीत्यभावमादाय तथापि दोषात्। अवच्छेदकतावृत्तित्वस्तप्रतीकार इति चेत्किमवच्छेदकताधाराघटितसम्बन्धमविदुषोऽनुमितिर्नोत्पद्यत एव, तथा चानुपयुक्ता दुरुपयुक्ता च तार्किकमतिः। अतएव क्वचित्साध्यतावच्छेदके प्रतियोगितानवच्छेदकत्वं क्वचित्साध्यतावच्छेदकतावच्छेदके प्रतियोगितावच्छेदकतानवच्छेदकत्वं क्वचित्साध्यतावच्छेदकतावच्छेदकतावच्छेदके प्रतियोगितावच्छेदकतावच्छेदकतानवच्छेदकत्वमित्येवं विवक्षाधारा नादरार्हा। यादृशव्यापकतावच्छेदकत्वस्य वह्नित्वादौ ज्ञानादनुमितिरनुभूयते सर्वजनेन, तादृशस्यैव दण्डादौ ज्ञानादनुमितेरनुभविकत्वात्तस्य, अतएव प्राचीनानामेकोक्त्यै यत्नः फलेग्रहिरेव। अतएव तत्तद्वह्नित्वेन प्रतियोगित्वेऽपि वह्नित्वेन प्रतियोगित्वाभाव इत्यनुभवैकपक्षपाती प्रगल्भमिश्रोऽभिधायापिच्छिलं पन्थानं निर्वर्तयामास। अनुभवापलापकत्वादेव च दण्डत्वस्य स्वाश्रयाश्रयत्वलक्षणेन तत्तद्दण्डव्यक्तीनामेव वा स्ववृत्तिदण्डत्वाश्रयाधिकरणत्वलक्षणेन परम्परासम्बन्धेन साध्यतावच्छेदकत्वं, साध्यत्वमेव वा दण्डत्वादेः स्ववृत्तिपुरुषत्वावच्छिन्नाधिकरणत्वसम्बन्धेनेत्यादिकल्पना कुकल्पनैव, लक्षणमनुरुध्य लक्ष्यमन्यथयतो ह्युपेक्षणीयतया एवौचिती। किञ्च नानासाध्यतावच्छेदकस्थले साध्यतावच्छेदकतावच्छेदके प्रतियोगितावच्छेदकत्वानवच्छेदकत्वनिवेशेऽपि तद्दण्डी नास्तीत्यभावीयप्रतियोगितावच्छेदकतावच्छेदकतायास्तत्ताद्दण्डत्वयोः पर्याप्तत्वेऽपि यः प्रत्येकवृत्तिधर्मावच्छेदेन यदभाववान् स उभयत्वावच्छेदेन तदभाववानितिनियमेऽप्रयोजकतामुपेत्यैव केवले दण्डत्वे प्रतियोगितावच्छेदकतावच्छेदकताया विरहो वक्तव्यः, किन्तु यदि तत्तानिष्ठावच्छेदकता स्वरूपसम्बन्धावच्छिन्ना दण्डत्वनिष्ठा च सा समवायसम्बन्धावच्छिन्नेति तयोरैक्यं न कश्चिच्छ्रद्धीत, तदा कथमतिप्रसङ्गनिवारणम्। यदा वा दण्डत्ववृत्तित्वविशिष्टावच्छेदकता दण्डत्वे एव पर्याप्तेत्येवं कश्चित्प्रत्यवतिष्ठेत, तदा का प्रतिक्रिया ? तथा च स्वत्वान्यत्वनिरास-

प्रस्तावोदितस्य पर्याप्तिनिरासस्यावतारः । अतएव तत्तद्वह्नित्वेन हेतुसमानाधिकरणाभावप्रतियोगित्वेऽपि वह्नित्वेन तदभावसद्भावात्तादृशप्रतियोगित्वाभाव एव व्यापकतास्वरूपमित्यप्ययुक्तम्, तत्तद्वह्नित्वस्य प्रतियोगितावच्छेदकत्वे वह्नित्वस्यापि तथात्वात् केवलवह्नित्वे तन्नास्तीति चेदेवं तर्हि सैवेयं पर्याप्तिः । अपि चैवं तादृशप्रतियोगित्वाभावावच्छेदको धर्म एव व्यापकत्वमित्युक्तं स्यादित्यात्माश्रयग्रस्तस्य व्यापकतातदवच्छेदकयोरैक्यस्यापत्तिरित्युक्तरीत्या द्रष्टव्यम् । चिवदन्ते च प्रतियोगितानवच्छेदकस्य प्रतियोगित्वाभावावच्छेदकत्वे इति । किञ्च प्रतियोगिसमानाधिकरणाभावमादाय मा भूदव्यापकताक्षतिरिति प्रतियोगिवैयधिकरण्यं निवेश्यते, किन्तु कालो घटवान् महाकालत्वादित्यादौ प्रतियोगिव्यधिकरणाभावाप्रसिद्धिनिबन्धनाव्याप्तिर्मा प्रसाङ्क्षीदिति समवायादिना घटाद्यभावमादाय तत्साधारण्याय प्रतियोगितावच्छेदकसम्बन्धेन प्रतियोगितावच्छेदकावच्छिन्नानधिकरणहेतुमन्निष्ठाभावप्रतियोगितासामान्ये यत्सम्बन्धानवच्छिन्नत्वयद्धर्मावच्छिन्नत्वोभयाभावस्तेन सम्बन्धेन तद्धर्मावच्छिन्नस्य तद्धेतुव्यापकत्वमिति विवक्ष्यते, तत्र च व्यभिचारिण्यतिव्याप्तिवारणाय "सामान्ये" इत्युक्तम्, तच्चोक्तोभयाभावनिष्ठे तादृशप्रतियोगितात्वव्यापकत्वे पर्यवसन्नमित्यनवस्था, तादृशव्यापकतागर्भे व्यापकतान्तरस्य प्रवेश्यत्वात् । विशिष्य तत्तत्प्रतियोगितानामुपादानं त्वशक्यमेवेति ।

एतेन साध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यसामान्याभाववदवृत्तित्वमपि निरस्तम्, साध्यतावच्छेदकसम्बन्धावच्छिन्नत्वस्य यथाश्रुतस्य निवेशे संयोगसमवायाभ्यां वह्न्यभावमादाय दोषवारणाय स्वावच्छेदकनात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन स्वनिरूपितसंसर्गतावच्छेदकतास्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकरूपवृत्तिसंसर्गताकत्वस्य विवक्षणीयतयाऽनवस्थानात्, एकत्वादेः पर्याप्तेरभावेन वह्निमान् धूमादित्यादावव्याप्तेश्च । न च—साध्यतानिरूपितसंसर्गतासमनियतसंसर्गताकत्वं विवक्षितम्, समनियतत्वं च स्वनिरूपितावच्छेदकतावत्त्वसम्बन्धेन, अवच्छेदकतावत्ता च स्वावच्छेदकसम्बन्धावच्छिन्नत्वस्वसामानाधिकरण्योभयसम्बन्धेनेति—वाच्यम्, समनियतत्वं हि व्याप्तिगर्भमिति व्याप्तौ व्याप्त्यन्तरस्य तत्रापि च व्याप्त्यन्तरस्य प्रवेशयत्वेनानवस्थानात् । एवं साध्यतावच्छेदकधर्मावच्छिन्नत्वेऽपि द्रष्टव्यम् । किञ्च स्वावच्छिन्नसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रतियोगिताकाभावसामानाधिकरण्यसम्बन्धावच्छिन्नप्रतियोगिताकसाध्यतावच्छेदकाभाववत्त्वविवक्षणे वा, वृत्त्यनियामकसम्बन्धस्य प्रतियोगितावच्छेदकतायाः परम्परायां संसर्गतायाश्चाप्रामाणिकत्वे तु हेतुतावच्छेदकनिष्ठं यत्साध्यवदवृत्तितावच्छेदकत्वं तदन्यवृत्तितावच्छेदकताशून्यहेतुतावच्छेदकधर्मवत्त्वविवक्षणे वा, उक्तरीत्या व्याप्यतावच्छेदकस्य व्याप्तित्वानुपपत्तौ तु साध्यवदनिरूपितस्वावच्छिन्नप्रतियोगिताकस्याधेयत्वाभावस्य विवक्षणे वा, वक्ष्यमाणरीत्या व्यधिकरणधर्मावच्छिन्नाभावस्याप्रामाणिकत्वे तु "साध्याभाववदाश्रितत्वविरहो धूमादिलब्धस्थितिः । व्याप्तिः सा नहि केवलान्वयवता धर्मेण सङ्गच्छते" इति प्राचीनतार्किकोक्तिमनुसृत्य केवलान्वय्यनुमानमनुपेतवतः शिरोमणेर्मतेरनुमोदने वा, वाच्यत्वाद्यभाववति ब्रह्मणि ज्ञेयत्वादेरप्यवृत्तित्वमिति वेदान्तिमतादरे वा वाच्यं ज्ञेयत्वादित्यादौ दोषाभावेऽपि सत्तावान् जातेरित्यादौ का गतिः ? सत्ताऽभाववति हेतुतावच्छेदकसम्बन्धेन वृत्त्यप्रसिद्धेः । स्वाधिकरणावृत्तिसाध्याभावकत्वं तु न विवक्षितुं शक्यम्, सत्ताऽभाववान् जातित्वादित्यादौ विरोधिताघटकसम्बन्धेन समवायेन हेतुमति वृत्तेरप्रसिद्ध्या दोषतादवस्थ्यात् । अथ तत्र साध्याभाववदवृत्तित्वज्ञानादेवानुमितिरस्तु, साध्याभावात्मकसत्तावति हेतुतावच्छेदकेन स्वरूपसम्बन्धेन वृत्तेः प्रसिद्धेः । न च—तथापि संयोगसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावे साध्ये विपर्ययितया घटादिहेतुकानुमाने का गतिः ? तत्र हेतुमति ज्ञानादौ साध्यात्मकाभावप्रतियोगितावच्छेदकसंयोगेन विरोधिताघटकेन वृत्त्यप्रसिद्धेः स्वाधि-

करणावृत्तीत्यादिव्याप्तेरसम्भवात्, साध्याभाववति संयोगिनि विषयितारूपहेतुतावच्छेदकसम्बन्धाप्रसिद्धेस्तु साध्याभाववदवृत्तित्वरूपव्याप्तेरपि तत्रासम्भवादिति—वाच्यम्, तत्र व्यापकसामानाधिकरण्येनैव चारितार्थ्यात्, तस्यानुमित्यनौपयिकत्वमते तु वृत्त्यनियामकसम्बन्धेन व्याप्तेरनभ्युपेयत्वेन तत्र स्वरूपसम्बन्धेन विषयिताहेतुकानुमानस्यैवोपगन्तव्यत्वादितिचेदस्त्वेषा कथमपि लक्षणकन्दुकेषु बालक्रीडा, तथापि वृत्त्यनियामकसम्बन्धस्य व्याप्यतानवच्छेदकत्वे वृक्षः शिंशिपाया इत्याद्यनुमितेरपलापः । अनुमित्यौपयिकत्वोपपत्तये स्वावच्छिन्नाधिकरणावृत्तिसाध्याभावको यो धर्मस्तद्वत्त्वस्यावश्यं विवक्षणीयत्वेन व्याप्यतावच्छेदकस्य व्याप्तित्वानुपपत्तिरित्याद्युक्तदोषश्च, उक्तरीत्यैव बहुव्रीह्यर्थस्य दुर्वचत्वञ्च। अथ हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्ननिरूपकत्वीयस्वरूपसम्बन्धेन साध्याभाववन्निष्ठाधिकरणतानिरूपितनिरूपकत्वविरहो विवक्षणीयः, तथा च समवायसम्बन्धावच्छिन्नजातित्वावच्छिन्ननिरूपकत्वीयस्वरूपसम्बन्धेन व्यधिकरणेन सत्ताभाववन्निष्ठाधिकरणतानिरूपितनिरूपकत्वस्याभावः सुलभ इति चेन्न, विशेषरूपेण संसर्गताया अप्रामाणिकत्वात्, संयोगादेर्हि संयोगत्वादिनैव संसर्गताऽनुभूयते न तु घटीयसंयोगत्वादिनापि । एवं साध्याभावाधिकरणतायां निरवच्छिन्नत्वस्यावश्यं विवक्षणीयत्वेनाव्याप्यवृत्तिप्रतियोगिकाभावसाध्यकेऽव्याप्तिरपीति ।

केचित्तु प्रतियोगितायाः समानाधिकरणसम्बन्धावच्छिन्नत्वमेव न, प्रागेव तु व्यधिकरणसम्बन्धावच्छिन्नत्वम्, संयोगेन घटवति समवायेन घटो नास्तीतिबुद्धौ तु शिखी चैत्रो नष्ट इत्यादौ चैत्रीयशिखादेर्नाशप्रतियोगित्वमिव घटीयसमवायस्यात्यन्ताभावप्रतियोगित्वं भाति, एवञ्च प्रतिबध्यप्रतिबन्धकभावे न काचिदनुपपत्तिः, प्रत्युत लाघवमेव, तथाहि समवायेनात्र घट इति ज्ञानं प्रति घटसमवायोऽत्र नास्तीतिनिश्चयस्य परैरपि प्रतिबन्धकत्वं वाच्यम्, परन्तु स्वरूपसम्बन्धावच्छिन्नघटसमवायत्वावच्छिन्नप्रतियोगिताकाभावविषयकत्वेन, अस्माभिस्तु घटसमवायत्वावच्छिन्नप्रतियोगिताकाभावविषयकत्वेनैव । न च घटसंयुक्तदेशे केनचित्सम्बन्धेन घटसमवायसत्त्वात्तदभावोऽपि तत्रासम्भवीति तत्र समवायेन घटोनास्तीतिप्रतीतेः प्रमात्वोपपत्तये समवायसम्बन्धावच्छिन्नप्रतियोगिताकघटाभावविषयकत्वमेव वाच्यमिति वाच्यम्, स्वरूपसम्बन्धेन घटसमवायस्याभावत्वेन परैः स्वीक्रियमाणस्यैवास्माभिर्घटसमवायाभावत्वेन स्वीकारात्, तस्यैव घटसमवायप्रतियोगिकस्वरूपसम्बन्धविरोधित्वात् । अत एव—कालिकेन दैशिकेन च सम्बन्धेन घटादेः सर्वत्र जन्ये मूर्ते च सत्त्वात्तत्र घटसामान्याभावधीप्रमात्वोपपत्तये प्रतियोगितायां सम्बन्धविशेषावच्छिन्नत्वमुपेयमेवेति—नादेयनीयम्, घटीयदैशिकसाक्षात्सम्बन्धसामान्याभावस्यैव घटसामान्याभावत्वात् । तादृशश्च घटस्य सम्बन्धः संयोगः समवायश्च, न तु कालिकी दैशिकी च विशेषणता, नवा स्वाश्रयसंयोगादिः, अत एव घटकालिकादिसम्बन्धवत्यपि घटोनास्तीति धीः प्रमात्वेन सर्वसिद्धा । एवञ्च संयोगेन रूपं नास्तीत्यादौ न संयोगसम्बन्धावच्छिन्नप्रतियोगिताकरूपाभावविषयकत्वं न वा रूपीयसंयोगाभावविषयकत्वम्, संयोगे रूपीयत्वाप्रसिद्धेः, तस्याः प्रतीतेस्तदंशे भ्रमत्वोपगमे च लोकसिद्धस्य तदीयप्रमात्वस्य बाधापत्तेः, अपि तु रूपीयत्वादिना संयोगाद्यभावविषयकत्वमेव । यदि तु घटत्वेन घटोनास्तीति प्रतीतेरनुदयेन घटोनास्तीत्येव चोदयेन घटत्वादौ प्रतियोगितावच्छेदकत्वं घटादिविशेषणतापन्ने एवाभावबोधेनावगाह्यते ननु स्वातन्त्र्येण तदा पटत्वेन घटोनास्तीत्यादेरिव रूपीयत्वादिना संयोगाद्यभावावगाह्युक्तप्रत्ययस्यापि भ्रमत्वमेव वक्तव्यम्, अत एव "यदि पुनरानुभविको लोकानां स्वरसवाही घटत्वेन घटोनास्तीत्यादिप्रत्ययो न तदा तादृशाभावनिवारणं गीर्वाणगुरूणामपि शक्य"मिति शिरोमणिपङ्क्तिव्याख्यायां यदि तदेत्यनेन तादृशप्रतीतेरानुभविकत्वे विवादं प्रदर्श्य तादृशाभावस्यापारमार्थिकत्वं सूचितमिति गदाधरभट्टाचार्यैरुक्तम् । न चैवं प्रतियोग्यंशे विशेषणतापन्नस्यैव प्रतियो-

स्वाभाविकः सम्बन्धो व्याप्तिरित्यपरः, स प्रष्टव्यः, कस्य स्वाभाविकः ? किं सम्बन्धिनोरुतान्यस्य ? न चरमः, वैपरीत्यापत्तेः । आद्ये कः स्वाभाविकशब्दार्थं इति प्रष्टव्यम् । किं सम्बन्धिस्वभावाश्रितः ? अथ सम्बन्धिस्वभावजन्यः ? अथ सम्बन्धित्वविवक्षितस्वभावानतिरिक्तः ? अथवा सम्बन्धिस्वभावव्याप्यः ? अथवा सम्बन्धिस्वभावादन्येन न प्रयुक्तः ? उतान्य एव कश्चिद्विवक्षितः । आद्ये पार्थिवत्वलोहलेख्यत्वयोरपि व्याप्तिप्रसङ्गः । न द्वितीयः, अतिव्याप्तेरव्याप्तेश्च । अतएव न तृतीयः । नापि चतुर्थः,

---

गितावच्छेदकतया भानोपगमे घटो न पट इत्यादिनिश्चयकाले पटत्वेनात्र घटोनास्तीति ज्ञानेन न भूयेतेति वाच्यम्, उक्तनिश्चयकाले घटत्वादिविशिष्टे पटत्वादिभानासम्भवेऽपि 'एकत्र द्वय'मिति रीत्या शुद्धघटादौ घटत्वपटत्वाद्युभयं विशेषणीकृत्य पटत्वेनात्र घटोनास्तीति ज्ञानोत्पत्तौ बाधकाभावात् । तत्र घटादौ पटत्वादिवैशिष्ट्याभावभाने स्वत्र घटः पटत्वेनास्तीत्याकारकस्यैकत्र द्वयमितिरीत्या घटत्वपटत्वाद्युभयविशिष्टविषयकज्ञानस्य सत्त्वेऽप्युक्तज्ञानोत्पत्त्यापत्तेः । एवञ्च न केवलं व्यधिकरणसम्बन्धावच्छिन्नाभावेनापि तु व्यधिकरणधर्मावच्छिन्नाभावेनापि घटितस्य लक्षणमात्रस्यासम्भवः, संशयेनापि लक्षणासिद्धेश्च, विशिष्टशुद्धयोर्भेदस्याप्यावश्यकत्वे तु प्रतियोगितायां समानाधिकरणधर्मावच्छिन्नत्वमप्यप्रामाणिकम्, आपत्तेरभावादिति लघुचन्द्रिकाकारानुसारिणी सरणिरिति प्राहुः । सामान्याभावादिखण्डनं प्रागावेदितं तूक्तसर्वलक्षणसाधारणमेव एवं परिष्कृतलक्षणानामग्रहेऽपि व्याप्तिव्यवहारस्यानुमित्युत्पत्तेश्चानुभविकत्वेन तेषां तदनौपयिकत्वम्, तेषां व्यावृत्त्यौपयिकत्वे तु व्यवहाराद्यौपयिकस्य लक्षणान्तरस्य वक्तव्यत्वापत्तिरित्यादिकमप्यसकृदावेदितमिति कृतमधिकेन ।

वाचस्पतिमिश्रसम्मतव्याप्तिलक्षणनिरासं प्रस्तौति स्वाभाविक इति । सम्बन्धः = साध्यसामानाधिकरण्यम् । व्याप्तिः = व्याप्तिपदार्थः । धूमादिव्यभिचारिणि वह्न्यादौ तु साध्यसामानाधिकरण्यमार्द्रेन्धनसंयोगादिरूपोपाधिप्रयुक्तं न तु स्वाभाविकमित्यनतिप्रसङ्ग इति भावः । सम्बन्धिनोरितिद्वित्वमविवक्षितम्, हेतुतयाऽभिमतस्येत्यर्थः । वैपरीत्यापत्तेरिति । तद्व्यभिचारिणस्तद्व्याप्यत्वापत्तेरित्यर्थः । तत्रापि हि साध्यसामानाधिकरण्यं हेत्वन्यस्य स्वाभाविकमेवेतिभावः । सम्बन्धिस्वभावाश्रितः = हेत्वाश्रितः । सम्बन्धिशब्दो हि सर्वविकल्पेषु हेत्वभिमतव्यक्तिपरः, स्वभावश्च तदनतिरिक्त इतिभावः । सम्बन्धित्वेति । हेतुत्वेन विवक्षितस्य यः स्वभावस्तदनतिरिक्तः, हेत्वभिन्नत्वमेव साध्यसामानाधिकरण्यस्य स्वाभाविकत्वम्, आधेयताया आधेयस्वरूपत्वमते चैतत्सम्भावनारूढं कर्तुं शक्यम् । व्याप्य इति । यदि तादात्म्येन व्यापकता, स्वरूपेण च व्याप्यता, तथा च हेतुभिन्नावृत्तित्वमेव साध्यसामानाधिकरण्ये स्वाभाविकत्वं तदा वह्न्यादिसामानाधिकरण्यस्य धूमाद्यतिरिक्तेऽपि सद्भावादसम्भवः, तस्माद्धेतुतावच्छेदकसम्बन्धेन व्यापकतां निरूपकतासम्बन्धेन च व्याप्यतां विवक्षित्वा गोत्वादिसाध्यके सास्नादिहेतौ सङ्गमाऽसम्भाव्योऽयं कल्पः । अन्य एवेति । अनारोपितत्वमनौपाधिकत्वं हेतुतावच्छेदकरूपस्वभावावच्छिन्नत्वं वा स्वाभाविकत्वमित्यर्थः । व्याप्तत्वप्रसङ्ग इति । व्याप्यव्यापकभावप्रसङ्ग इत्यर्थः । अविरुद्धव्यभिचारिमात्रेऽतिव्याप्तेरुपलक्षणमिदम् । लोहलेख्यत्वादिव्यभिचारिणोऽपि पार्थिवत्वादेर्यल्लोहलेख्यत्वादिसामानाधिकरण्यं तत्पार्थिवत्वाद्याश्रितमेवेति भावः । अतिव्याप्तेरिति । असम्भवपरिहारायाधेयताया आधेयानात्मकत्वपक्षे आदरणीये धूमसामानाधिकरण्यस्यापि संयोगसम्बन्धावच्छिन्नस्य संयोगरूपस्य तदतिरिक्तस्य वा वह्निजन्यत्वात् धूमवान् वह्नेरित्यादावतिप्रसङ्ग इत्यर्थः । अव्याप्तेश्चेति । जातेः समवायस्य च नित्यत्वाभ्युपगमेन

व्याप्त्यनिरुक्तौ व्याप्यत्वानिरुक्तेः । सम्बन्धस्य व्याप्यत्वे च सम्बन्धिनोर्व्यापकयोः सम्भावितसम्बन्धाधिकदेशकालतयैकसम्बन्धिदर्शनेऽपरानुमाननियामकत्वायोगात् । नापि पञ्चमः, न प्रयुक्त इति यदि न जनितः, तदा सम्बन्धस्याकृतकत्वपक्षेऽन्येनेति विशेषणवैयर्थ्यम्, अकृतकस्य सम्बन्धिस्वभावेनाप्यजनितत्वात् । सम्बन्धस्य कृतकत्वपक्षे स्वरूपासिद्धिरेव स्यात्, सामग्र्याः सर्वसम्भवात्, अन्ततः कालदेशादृष्टादिभिरपि तज्जन्यत्वस्यावश्यं वक्तव्यत्वात् । नापि षष्ठः, तस्य निर्वक्तुमशक्यत्वात् । एवमेव विकल्प्यायं चरमविकल्पः सर्वत्रोपन्यस्य दूष्यो न्यूनत्वशङ्काभयादिति । इति व्याप्तितज्ज्ञानोपाययोः खण्डनम् ।

---

पृथिवीत्वादौ द्रव्यत्वादिसामानाधिकरण्यस्य समवायरूपस्यातिरिक्तस्यापि वा परमाण्वन्तर्भावेण नित्यत्वात् द्रव्यं पृथिवीत्वादित्यादावव्याप्तिरित्यर्थः । अत एवेति । आधेयताया आधेयरूपत्वे धूमादिसामानाधिकरण्यस्यापि वह्न्याद्यात्मकत्वाद्व्यभिचारिण्यतिप्रसङ्गः, अन्यथात्वव्याप्तिः, असम्भवस्तु न, स्वरूपसम्बन्धस्य हेतुतावच्छेदकत्वस्थले तदवच्छिन्नवृत्तितायास्तदात्मकत्वमते लक्षणसमन्वयात्, तस्य सम्बन्ध्यात्मकत्वात् । व्याप्यत्वेति । व्याप्त्याश्रयत्वेत्यर्थः । ननु हेतुतावच्छेदकसम्बन्धावच्छिन्नहेतुतावच्छेदकावच्छिन्नप्रतियोगिताकाभावाधिकरणनिरूपितस्य निरूपकताविशेषसम्बन्धावच्छिन्नसम्बन्धित्वस्याभावोविवक्षितः साध्यसामानाधिकरण्ये, तथा च नात्माश्रयः, प्रकृतव्याप्तेः स्वघटितत्वाभावादित्याशङ्क्य विषमव्याप्तेऽव्याप्ते धूमवान् वह्नेरित्यादावतिव्याप्तेश्च सत्वे एवाह सम्बन्धस्येति । साध्यसामानाधिकरण्यस्येत्यर्थः । व्याप्यत्वे = हेतुव्याप्यत्वे । सम्बन्धिनोर्व्यापकयोरिति । द्वित्वमविवक्षितम्, व्यापकस्य हेतोरित्यर्थः । सम्भावितेति । साध्यापेक्षयेत्यादिः । निरूपकतासम्बन्धेन साध्यसामानाधिकरण्यस्य व्याप्यत्वं हि साध्यतावच्छेदकसम्बन्धेन साध्यस्य व्याप्यतायां पर्यवसन्नमिति भावः । समदेशकालयोरपि व्याप्यव्यापकभावदर्शनात् सम्भावितेत्युक्तम् । एकसम्बन्धिदर्शने = प्रकृतव्याप्तिमत्तया हेतोर्दर्शनस्य । अपरानुमाननियामकत्वायोगादिति । प्रतिबन्धकाभावदशायामप्यनुमितिजनकत्वासम्भवादित्यर्थः । तथा च तद्विषयस्य व्याप्तित्वमप्यसम्भवीति भावः । न जनित इति । इत्यर्थकमितिशेषः । जन्यत्वे च व्याप्यन्तरमेव प्रवेश्यमिति नात्माश्रय इति भावः । सम्बन्धस्याकृतकत्वपक्षे इति । यत्र साध्यसामानाधिकरण्यस्य नित्यत्वं द्रव्यं पृथिवीत्वादित्यादौ, प्रकृतलक्षणस्य तादृशस्थलीयत्वे इत्यर्थः । साध्यसाधनादिभेदेन व्याप्तिभेदस्यावश्यकत्वादिति भावः । सम्बन्धस्य नित्यत्वं वाऽनित्यत्वं वेतिविकल्प्य व्याख्यानं त्वतितुच्छत्वादुपेक्षितम् । सम्बन्धस्य कृतकत्वपक्षे चेति । यत्र साध्यसामानाधिकरण्यस्यानित्यत्वं वह्निमान् धूमादित्यादौ, प्रकृतलक्षणस्य तादृशस्थलीयत्वे इत्यर्थः । स्वरूपासिद्धिः = असम्भवः । हेतुमात्रासाधारणकारणत्वविवक्षायामप्ययमेव दोषः, हेत्वसाधारणकारणत्वविवक्षायामप्यविरुद्धव्यभिचारिण्यतिव्याप्तिः, प्रयुक्तत्वं यदि व्याप्यत्वं तदा चतुर्थकल्पोक्तदोषः, असम्भवश्च, प्रमेयत्वादिव्याप्यत्वस्य सर्वत्र सत्त्वात्, यदि व्यापकत्वं, तदाप्यसम्भवः, अन्ततः स्वव्यापकत्वस्यैव स्वस्मिन् सत्त्वात्, साध्यसामानाधिकरण्ये निरूपकतासम्बन्धेन हेतुव्यापकताया एव स्वाभाविकपदार्थताविवक्षायामपि पूर्वोक्तस्य व्यापकताखण्डनस्यावतार इति भावः । अशक्यत्वादिति । अग्नौ पर्वताद्यवच्छेदेन धूमसामानाधिकरण्यस्यानारोपितत्वेन धूमवान् वह्नेरित्यादावतिव्याप्तिः, हेतोः स्वभावेनावच्छिन्नं साध्यसामानाधिकरण्यमिति तु साध्यसामानाधिकरण्यावच्छेदकरूपवत्त्वे पर्यवस्यति, तच्च प्राङ्निरस्तम् । अनौपाधिकत्वं तु निरसनीयमनुपदमितिभावः । इति खण्डनशारदायां व्याप्तितज्ज्ञानोपाययोः खण्डनम् ।

## अथ व्याप्त्युपाध्योः खण्डनम् ।

अनौपाधिकः सम्बन्धो व्याप्तिरित्यपरः, स प्रष्टव्यः, कोऽयमुपाधिर्नाम यच्छून्यत्वमनौपाधिकत्वम् । उपाधिः साध्यव्यापकत्वे सति साधनाव्यापकः, अयञ्च—

"एकसाध्याविनाभावे मिथः सम्बन्धशून्ययोः ।
साध्याभावाविनाभावी स उपाधिर्यदत्ययः ॥"

---

उदयनाचार्याभिमतं व्याप्तिलक्षणं निराकर्तुमाह अनौपाधिकः सम्बन्ध इति । उपाध्यभाववत्त्वे सति साध्यसामानाधिकरण्यमित्यर्थः । सद्धेतौ प्रकृतसाध्यव्यापकत्वे सति प्रकृतसाधनाव्यापकस्योपाधिपदार्थस्य सिद्ध्यसिद्धिभ्यां निषेधानुपपत्तेः साध्यव्यापकानां व्यभिचारित्वसम्बन्धावच्छिन्नप्रतियोगिताकाभावः साधने वक्तव्यः, व्यभिचारिणि हि साधने साध्यव्यापकस्य व्यभिचारित्वसम्बन्धेन सद्भावोऽन्यथा तस्य साधनाव्यापकत्वानुपपत्तेः । किंवा साधनाव्यापके साध्यव्यापकतायाः साध्यव्यापके वा साधनाव्यापकताया निषेधो विवक्षणीयः, तथाचाद्ये साधनसमानाधिकरणात्यन्ताभावप्रतियोगिनावच्छेदका यावन्तो धर्मा यद्धर्मावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितावच्छेदकास्तद्धर्मावच्छिन्नसामानाधिकरण्यं द्वितीये तु साध्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदका यावन्तो धर्मा यद्रूपावच्छिन्नसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकास्तद्रूपवत्त्वमनौपाधिकत्वं पर्यवस्यति, एकरूपेण साधनाव्यापकादौ रूपान्तरेण केनचित् साध्यव्यापकतादेर्निषेधमादाय व्यभिचारिणि भङ्क्तुमतिप्रसङ्गस्य धर्मपर्यन्तानुधावनमिति । यद्यपि यावत्त्वस्य व्यापकत्वपर्यवसन्नत्वेन निवेदिततन्निरासभाञ्ज्यमूनि लक्षणानि, अवहेलितञ्च सामानाधिकरण्यस्य हेतुतावच्छेदकस्य च व्याप्तित्वम्, तथापि न्यूनत्वपरिहाराय सम्भवन्ति दूषणान्तराण्यप्याख्यातुमाह कोऽयमिति । यच्छून्यत्वं = फलतोयद्घटकप्रतियोगिकशून्यत्वपर्यवसन्नम् । अन्यथा सिद्ध्यसिद्धिव्याघातात् । उपाधिः = उपाधिपदाभिधेयः । साध्यवन्निष्ठभेदप्रतियोगितानवच्छेदकत्वे सति साधनवन्निष्ठभेदप्रतियोगितावच्छेदकत्वमर्थः, तेन वह्निमान् धूमादित्यादौ साधनाव्यापके घटत्वादौ प्रमेयत्वादिना साध्यव्यापकतामादायानतिप्रसङ्गः । श्यामत्वादौ साध्ये मित्रातनयत्वादिहेतौ साधनाद्यवच्छिन्नसाध्यव्यापकशाकपाकजत्वादिसङ्ग्रहाय यत्किञ्चिद्धर्मविशिष्टसाध्यव्यापकत्वं विवक्षणीयम्, किन्त्वेवं महानसत्वाद्यवच्छिन्नवह्निव्यापकव्यञ्जनवत्त्वादौ धूमाव्यापके वह्निसाध्यकधूमाद्युपाधित्वप्रसङ्गइति यद्धर्मविशिष्टसाध्यव्यापकत्वं तद्धर्मविशिष्टसाधनाव्यापकत्वं वक्तव्यम्, न च महानसत्वविशिष्टधूमाव्यापकं व्यञ्जनवत्त्वमित्यनतिप्रसङ्गः । स्वव्यतिरेकेण पक्षे साध्याभावोन्नायकस्यैवोपाधित्वमते ह्रदो वह्निमान् धूमादित्यादौ वह्निसामग्र्यादेरुपाधितोपगमेन साधनाव्यापकत्वस्यानुपादेयत्वेऽपि पक्षे उपाधिसद्भावे तदभावे साध्याभावोन्नयनयोग्यताया असम्भवेन पक्षावृत्तित्वे सति यत्किञ्चित्पक्षधर्मविशिष्टसाध्यव्यापकत्वस्यैव लक्षणत्वेन नोक्तदोषः, पर्वतस्य पक्षत्वे विशेष्यदलाभावात्, महानसस्य पक्षत्वे च विशेषणदलाभावादितिध्येयम् । अयञ्चेति । पर्यवसितोऽर्थ इत्यन्वयः । एकसाध्येति । मिथःसम्बन्धशून्ययोः = परस्परव्याप्यव्यापकभावरहितयोर्धर्मयोर्मध्ये स उपाधिः, यदत्ययः = यदभावः प्रकृतसाध्याभावव्याप्यः, एतेन साध्यव्यापकत्वमुपाधौ लब्धम्, 'नियम्यत्वनियन्तृत्वे भावयो'रित्यादिन्यायात्, मिथःसम्बन्धशून्यत्वोक्त्या च तत्र साधनाव्यापकत्वलाभः, तत्र साध्यव्याप्यताया अपि वक्ष्यमाणरीत्योपाधिपदयोगार्थघटनौपयिकतामासादयन्त्या विवक्षया 'एकसाध्याविनाभावे' इति । एवञ्चास्य यदत्यय इत्यत्र यत्पदार्थैकथञ्चिदन्वयः । एकेति प्रकृतत्वलाभाय, क्वचिद्द्वयादेरपि साध्यत्वसम्भवात् । अविनाभावः साहचर्यमात्रमत्र, एवञ्च मिथः

इत्यस्य व्यतिरेकमुखस्य 'यदत्ययः स उपाधि'रिति योज्यमानस्य पर्यवसितोऽर्थः। तद्धर्मभूता हि व्याप्तिर्जपाकुसुमरक्ततेव स्फटिके साधनाभिमते चकास्तीत्युपाधिरसावुच्यते। तदिदमाह—

"अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः।
तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा ॥"

---

सम्बन्धशून्ययोः प्रकृतसाध्यसाहचर्ये सतीति पूर्वार्धार्थ इति तु न युक्तम्, साधनस्य साध्यसाहचर्ये एवोपाधेरुपगमे विरुद्धे सम्बन्धस्यानौपाधिकत्वप्रसङ्गात्, न चानौपाधिकसम्बन्धस्य व्याप्तित्ववादे युज्यत एतत्। व्यतिरेकमुखस्य = शब्दशक्तिमर्यादया उपाध्यभावसाध्याभावयोर्व्याप्यव्यापकभावबोधकस्य। ननूपाधेः पक्षे साध्यविरहोन्नायकविरहप्रतियोगित्वं साधने साध्यव्यभिचारोन्नायकव्यभिचारप्रतियोगित्वं वा दूषकताबीजम्, तत्राद्ये साध्यव्यापकत्वमुपयुज्यताम्, द्वितीये च साध्यव्यापकव्यभिचारिणः साधनस्य साध्यव्यभिचारिताध्रौव्यात्साधनाव्यापकत्वमपि, साध्यव्याप्यत्वस्य तु "एकसाध्याविनाभावे" इत्यनेनाभिधानं किमितीत्याशङ्क्याह तद्धर्मभूतेति। उपाधिनिष्ठेत्यर्थः। साधनाभिमते इति। वस्तुगत्या व्याप्यत्वघटितसाधनत्वस्य व्यभिचारिण्यसम्भवादिति भावः। उक्तलक्षणवाक्ये तु साधनसाध्यपदे वह्नित्वाद्यवच्छिन्नपरे इत्यग्रे व्यक्तीभविष्यति। चकास्ति = भ्रमविषयो भवति। अयम्भावः—स्वसन्निधानवर्तिनि स्वनिष्ठधर्माधायकत्वं ह्युपाधिपदस्य यौगिकोऽर्थः, आधायकत्वञ्च सङ्क्रामकत्वापरपर्यायं भ्रमजनकत्वमेव, तथाचोपाधेः साध्यव्याप्तिविधुरत्वे तदाधायकत्वं हेतौ न सम्भवतीति साध्यव्याप्यत्वमादर्तव्यम्, शिष्टं तु रूढिलभ्यम्। एवञ्चार्द्रेन्धनप्रभववह्न्यादौ साध्यसमव्याप्ते एव मुख्यमुपाधिपदम्, गौणं तु साध्यविषमव्याप्ते आर्द्रेन्धनादौ, दूषकतौपयिकरूपसद्भावात्, तन्निबन्धन एव च शास्त्रे सामान्यत उपाधिपदप्रयोगः, अत एव लक्षणमपि विषमव्याप्तसाधारणं सध्यव्याप्यत्वाघटितमेव, एवञ्चानौपाधिकत्वस्य व्याप्तित्वपक्षे व्याप्तिबोधस्य विषयानवस्थादिकमपि न, अत एव—'एकत्र धर्मिणि यदि साध्येन समाविनाभावः = समव्याप्तिः, साधनेन चासमाविनाभावः = समव्याप्त्यभावः, साधनाव्यापकत्वमिति यावत्, तदा स धर्मोऽपाधिः, यदि तु समेन नोव्याप्तः = साध्यसमव्याप्तिशून्यः, तदा साधनाव्यापकत्वसत्त्वेऽपि तयोर्हीनः = साध्यसमव्याप्तिसाधनाव्यापकत्वोभयाभाववानसावप्रयोजकः = स्वव्यभिचारेण साधने साध्यव्यभिचाराननुमापकः' इत्यर्थकं "समासमाविनाभावावेकत्र स्तो यदा तदा। समेन यदि नो व्याप्तस्तयोर्हीनोऽप्रयोजकः" इति केषाञ्चिदभिधानमनुपादेयम्, साध्यव्याप्यत्वस्य दूषकत्वौपयिकत्वविरहादिति भावः। तदिदमाह = उपाधिपदस्य योगार्थमनुरुध्य साध्यव्याप्यत्वमुपाधावभिप्रयन्नाह। अन्ये = धूमादिसाधने वह्न्यादयः, परप्रयुक्तानां = उपाधिसङ्क्रामितानां व्याप्तीनामुपजीवकाः, व्याप्यत्वव्यवहारे इति शेषः। वस्तुतस्तत्तदुपाधिधर्मभूता या व्याप्तिः, तत्प्रकारकभ्रमविषयीभूता इति तु भावार्थः। दृष्टैरिति। पक्षे इत्यादिः। नैवेष्टेति। नियमेन प्रमात्वेन नैवेष्टेति तार्किकमतेनार्थः। तेन वस्तुतो वह्निमति पक्षे व्याप्तिभ्रमेणापि प्रमित्युत्पत्तावपि न क्षतिः, दोषजन्यज्ञानत्वं भ्रमत्वनियतमिति भट्टमते तु यथाश्रुतमेव सम्यक्, तत्र विशेष्यावृत्तेरेव वह्नेर्भानोपगमात्। अग्रे उपाधिसन्देहस्योद्भावनीयत्वेन तस्य दूषकतां व्यवस्थापयितुमाह स चेति। आशङ्कितश्च = आशङ्कितोऽपि। निश्चितत्वञ्च साध्यव्यापकत्वसाधनाव्यापकत्वाभ्याम्, यथा धूमवान् वह्नेरित्यादावार्द्रेन्धनप्रभववह्निमत्त्वस्य, सन्दिग्धत्वं तु तदुभाभ्यां तदन्यतरेण वा, यथा श्यामो मित्रातनयत्वादित्यत्र शाकपाकजत्वस्य, यथा वा क्षितिः सकर्तृका कार्यत्वादित्यत्र तर्कानवतारदशायां शरीरजन्यत्वस्य। परम्परयाऽनुमानदूषकइति शेषः। साक्षात्तु

स चोपाधिर्निश्चित इवाशङ्कितश्च, यत्रेदमुच्यते—

"यावच्चाव्यतिरेकित्वं शतांशेनापि शङ्क्यते।
विपक्षस्य कुतस्तावद्धेतोर्गमनिकाबलम् ॥"

इति चेन्न, साध्यव्यापके साधनाव्यापके पक्षेतरत्वेऽपि प्रसङ्गात् । तद्व्यतिरिक्त

---

तदाहितस्य साध्याभावग्रहस्य व्यभिचारग्रहस्य वा तथात्वम्, अतएवोपाधिर्न हेत्वाभासः, साक्षादनुमितितत्कारणान्यतरप्रतिबन्धकज्ञानविषयस्यैव तथाभावात् । अयम्भावः—यद्यप्युपाधिसन्देहो नोपाधिः, नापि हेत्वाभासः, नवाऽस्य साध्याभावोन्नायकत्वस्य सम्भावनापि, तथापि व्याप्यसंशयस्य व्यापकसंशयहेतुत्वेन व्यभिचारसंशयाधानक्षमोऽसौ दोष एव. तथाहि—साधनाव्यापकत्वसन्देहदशायां साध्यव्यभिचारव्याप्यसाध्यव्यापकव्यभिचारसन्देहस्यावश्यकत्वे साधने साध्यव्यभिचारसन्देहसम्भवः, साध्यव्यापकत्वसन्देहदशायां तु साधनाव्यापकत्वव्याप्यस्य साधनाव्यापकव्याप्यत्वस्य साध्ये सन्देहेन साधनाव्यापकत्वसन्देहः, नहि साधनाव्यापकस्य व्याप्यं साधनव्यापकं सम्भवति । ततश्चौचित्यावर्जितः साधने साध्याव्याप्यत्वसन्देहइति । यत्रेति । व्यभिचारसंशयस्य दूषकतामधिकृत्येत्यर्थः । व्यभिचारसंशयस्य दूषकत्वे चोपाधिसंशयस्य तदाधायकस्य दूषकत्वमर्थादायातीति भावः । व्यभिचारसंशय उपाधिसंशयादेवेत्यभिप्रायेणाग्रिमगाथात उपाधिसंशयस्य दूषकत्वलाभ इति तु न, सहचारादिदर्शनरूपकारणान्तरादपि व्यभिचारसंशयसम्भवात् । विपक्षस्य शतांशेनाप्यव्यतिरेकित्वमित्यन्वयः, यत्किञ्चित्साध्याभाववद्वृत्तित्वमपीत्यर्थः । यत्किञ्चिद्विपक्षवृत्तित्वशङ्काया अपि सति प्रतिबन्धकत्वेऽनेकविपक्षवृत्तित्वशङ्कायास्तथात्वे किमु वक्तव्यमिति भावः । गमनिकाबलम् = अनुमित्युपधायकत्वम्, व्यभिचारसन्देहेन व्याप्तिनिश्चयानुत्पत्तेरिति भावः । साध्यव्यापके = साध्यव्यापकत्वेन निश्चिते, तेन वस्तुतः साध्यव्यापकत्वस्य पर्वतेतरत्वादावसम्भवेऽपि नासङ्गतिः । एवञ्च ज्ञानातिव्याप्तिरेवोद्भाव्यते न तु वस्त्वतिव्याप्तिः । यद्धर्मविशिष्टसाध्यव्यापकत्वं तद्धर्मविशिष्टसाधनाव्यापकत्वमितिविवक्षायाः प्रागादृतत्वेन तु द्रव्यत्वविशिष्टसाध्यसाधनयोर्व्यापकत्वाव्यापकत्वे अत्र प्राह्ये । प्रसङ्गादिति । व्यभिचारस्य साध्याभावस्य वोन्नायकप्रतियोगितया दूपकत्वप्रसङ्गादित्यर्थः । न च पक्षे साध्यसन्देहदशायां पक्षेतरत्वस्य साध्यव्यापकतानिश्चयोऽपि न सम्भवतीति कथमयमतिप्रसङ्ग इति वाच्यम्, सन्दिग्धसाध्यके उपाध्यभावग्रहस्य प्रतिबन्धकतामनङ्गीकृत्यैव साध्यव्यापकताया निश्चेयत्वात्, अन्यथा पक्षे साध्यसन्देहदशायां क्वाप्युपाधित्वं न गृह्येतेत्याशयात् । ननु साध्यानधिकरणसाधनाधिकरणवृत्तिधर्मावच्छिन्नसाध्यव्यापकत्वे सति साधनाव्यापकत्वं वक्तव्यम्, एवं सति रूपवान् द्रव्यत्वादित्यादौ पृथिवीत्वाभावादेरप्युपाधित्वसम्भवः, तत्र हि साध्यानधिकरणं साधनाधिकरणं वाय्वादि तद्वृत्तिधर्मो वायुजलान्यतरत्वादिस्तद्विशिष्टसाध्यव्यापकत्वं निर्बाधम्, पर्वतो वह्निमान् धूमादित्यादौ तु साध्यानधिकरणस्य साधनाधिकरणत्वमसम्भवदुक्तिकमेवेति न पर्वतेतरत्वेऽतिव्याप्तिरितिचेन्न; साधनाधिकरणे केवलसाध्यानधिकरणत्वप्रवेशे उपाधिज्ञानस्यैव व्यभिचारविषयकत्वापत्त्या तदनन्तरं व्यभिचारानुमानस्यानुपपत्तेः । न च हेतुविशेष्यकसाध्यव्यभिचारप्रकारकज्ञानार्थमनुमानं तदनन्तरं सम्भवतीति वाच्यम्, तादृशज्ञानस्य निष्प्रयोजनत्वात्, तत्प्राचीनव्यभिचारज्ञानस्यैव व्याप्तिग्रहप्रतिबन्धकत्वसम्भवात् । यदि तु स्वविशिष्टत्वं साध्ये विशेषणीक्रियते, स्वमुपाधित्वेनाभिमतो धर्मः, एवञ्चोपाधिज्ञानस्य न शुद्धसाध्यव्यभिचारविषयकत्वमिति नोक्तदोषः, तदा पर्वतेतरत्वविशिष्टवह्न्यनधिकरणं धूमाधिकरणं प्रसिद्धमेवेति तद्वृत्तिद्रव्यत्वविशिष्टसाध्यव्यापकत्वनिश्चयसम्भव एवेति नासङ्गतिः । अथैवमपि तादृशसाध्य-

इत्यपीति चेन्न, बाधोन्नीतस्य तस्याव्यापनात्, अन्यथा निरुपाधिसम्बन्धत्वे बाधासिद्धेः, यदाह "बाधेनोपाधिरुन्नीयतामन्येन वेति न कश्चिद्विशेषः"। एतदर्थमपि विशेषणीयमिति

व्यापकतानिश्चयोऽनुकूलतर्कासद्भावान्न सम्भवति, यत्र त्वनुकूलतर्केण स्वतःसिद्धव्यभिचाराग्रहेण वा तादृशनिश्चयस्तत्र बाधोन्नीतवदुपाधित्वमेष्टव्यमेवेतिचेन्न; तर्कनिराकरणस्यावेदितत्वात्। किञ्चानुकूलतर्कासत्त्वेन साध्यव्यापकताया अनिश्चयेऽपि तत्सन्देहसम्भवेन सन्दिग्धोपाधितायाः पक्षेतरत्वे दुर्वारत्वात्, सन्दिग्धोपाध्यन्तरवत्पक्षेतरत्वस्यापि व्यभिचारशङ्काधायकत्वात्। न च पक्षेतरत्वस्योपाधित्वे तस्य सर्वत्रैवोद्भावनसम्भवेन परार्थानुमानमात्रोच्छेदः, उपाध्यभावेन साध्याभावानुमानेऽपि तदुद्भावनसम्भवात्, एवञ्च स्वव्याघातकत्वादपि न पक्षेतरत्वमुपाधिरितिवाच्यम्, अनुकूलतर्कादिना व्याप्तिनिश्चयदशायामनुमानसम्भवात्, अत एव न स्वव्याघातकत्वमपि। किञ्चानुकूलस्तर्कोऽस्तु मा वा, सर्वत्र हि पक्षेतरत्वस्योपाधित्वेनोद्भावने न मानमिति तदनुद्भावनदशायां परार्थानुमानसम्भवान्न तन्मात्रोच्छेदः। वस्तुतस्तु व्यभिचारशङ्काधानक्षमरूपसद्भावे पक्षेतरत्वस्य तदाधायकताया अवर्जनीयत्वे किञ्चिदनुमानोच्छेदो न विभीषिका, "बाधेऽदृष्टेऽन्यसाम्यात्किं दृष्टेऽन्यदपि बाध्यता" मित्युक्तत्वात्। अतएवोक्तं तार्किकैः—"नहि प्रयोजनक्षतिभिया सामग्री कार्यं नाजयती"ति। पक्षे व्यभिचारसन्देह इव पक्षेतरत्वोपाधिसन्देहाहितव्यभिचारसन्देहोऽपि न व्याप्तिग्रहं प्रतिबध्नातीति तु न चारु, नहि व्यभिचारज्ञानत्वेन प्रतिबन्धकतापक्षे पक्षेतरत्वोपाधिज्ञानाजन्यत्वं पक्षीयव्यभिचारसंशयान्यत्वं वा प्रतिबन्धकतावच्छेदकतामालिङ्गति, गौरवान्मानाभावाच्चेति। तदिदं सम्मता सरणिस्तार्किकशिरोमण्यादीनामपीति। अथैवं पक्षेतरत्वस्य सन्दिग्धोपाधितायामिष्टापत्तिसम्भवादतिप्रसङ्गोऽयं किमितीतिचेत्तस्य सन्दिग्धोपाधितयाऽनुद्भावनस्य कथकसम्प्रदायसिद्धत्वेनोपाधिताप्रयोजकरूपस्य तद्व्यावृत्तस्यैव निर्वक्तव्यत्वात्, अन्यथोपाधिताप्रयोजकरूपस्य तद्व्यावृत्तस्याप्रामाणिकतापत्तौ तादृशसम्प्रदायस्यानुरोधव्यत्ययापत्तेः। अत्रापीष्टापत्तिरेवेति तु न वाच्यम्, तथा सति किं दूषणान्तरगवेषणप्रयासैरिति सर्वत्र पक्षेतरत्वस्य सन्दिग्धतोपाधितयोद्भावनमेवादीभिंक्ष्यमासादयत्परपराजयाय पर्याप्तं स्यादिति बहु विप्लवेत। अत एव—उपाधेरनित्यदोषतामनुसृत्य साध्यव्यापकतादिना गृह्यमाणत्वघटितमेव बाधानुन्नीतपक्षेतरत्वसाधारणं लक्षणमास्तामिति-नाशङ्कनीयम्। एवं सति बाधादेरपि तथैव निर्वचनसम्भवेनानित्यदोषत्वसाम्राज्यं स्यादित्यपि वदन्ति। पक्षेतरत्वभेदं निवेशयातिव्याप्तिं परिहरति तद्व्यतिरिक्त इति। इत्यपीति। विशेषणीयमिति शेषः। यद्यपि साध्यव्यापकत्वसाधनाव्यापकत्वयोरेवोक्तरीत्या दोषोन्नयनोपयोगित्वाद्विशेषणवैयर्थ्यम्, तथापि तत्सत्त्वे एव दूषणान्तरमाह बाधेनेति। वह्निरनुष्णः कृतकत्वादित्यादौ स्वरूपासिद्ध्यभावस्थले पक्षे साध्याभावग्रहेणेत्यर्थः। ह्रदो वह्निमान् धूमादित्यादौ पक्षधर्मताविरहिणि हेतौ पक्षेतरत्वस्य साधनव्यापकत्वेनोपाधित्वासम्भवात्, व्यभिचारोन्नायकतया दूषकतामते चेदम्। उन्नीतस्य = प्रतीतस्य। तस्य = पक्षेतरत्वस्य। ननु तत्र बाधेनैवानुमानस्य दुष्टत्वे उपाधिर्नानुमन्तव्य एवेत्याशङ्क्याह अन्यथेति। तत्रोपाध्यनभ्युपगमे इत्यर्थः। निरुपाधिसम्बन्धत्वे = निरुक्तव्याप्तिमत्त्वापत्तौ। बाधासिद्धेः = बाधस्यैवाप्रामाणिकत्वापत्तेः, व्याप्तिपक्षधर्मते हि सद्धेतुताप्रयोजिके, ते च यदि तत्र स्तस्तदा कथं बाधः, अत एव "बाधेऽपक्षधर्मो हेतुरनैकान्तिको वेति" प्रवादः, बाधे हि पक्षस्य विपक्षताप्राप्तौ तद्वृत्तित्वेनानैकान्तिको हेतुः, अनैकान्तिकत्वञ्च सोपाधित्वव्याप्यमेव, यदाहुस्तात्पर्यपरिशुद्धिकाराः "व्यभिचारे चावश्यमुपाधि"रिति, एवञ्च बाधस्यासङ्कीर्णोदाहरणे न मानम्, गन्धप्रागभावविशिष्टो घटो गन्धवान् पृथिवीत्वादित्यादावपि कालघटितव्याप्तेरभावात्, पक्षेतरत्वसोपाधित्वाच्चेतिभावः। यदाहेति। उदयनाचार्यः कुसुमाञ्जलाविति शेषः। बाधेनेति। पक्षधर्मे

चेन्न, तथापि साधनाव्यापकत्वे सतीति तद्व्याप्त्यनवधारणे न शक्यावधारणम्, एवं

---

हेताविति शेषः। उन्नीयतामिति । एवञ्चोपाधेर्व्यापकत्वलाभेन तदभावे बाधासम्भवस्तदभिप्रेत इति भावः । अन्येन = विपक्षबाधकतर्काभावेन व्यभिचारेण वा । न कश्चिदिति । उपाधिव्याप्यत्वाविशेषादिति भावः । एतदर्थमपीति । बाधोन्नीतपक्षेतरत्वसङ्ग्रहार्थमपीत्यर्थः । नन्वत्र किं विशेषणं विवक्षितम्, न तावत्साध्यव्यापकतास्थाने साध्यसमव्याप्तत्वम्, तावता बाधोन्नीतस्य सङ्ग्रहेऽपि केवलस्य पर्वतेतरत्वादेश्च वारणेऽपि वह्निमत्त्वे सति पर्वतेतरत्वादावतिप्रसक्तत्वादवस्थ्यात्, नापि बाधानुन्नीतपक्षेतरत्वान्यत्वम्, पर्वतावयववृत्त्यन्यत्वपर्वतेतरद्रव्यत्वादौ तथाप्यतिप्रसङ्गात् । अथ विपक्षाव्यावर्तकविशेषणघटितधर्मानवच्छिन्नत्वं साध्यव्यापकतायां विवक्षणीयम् बाधानुन्नीते पर्वतेतरत्वादौ पर्वतरूपं विशेषणं न स्वविशेष्यतावच्छेदकावच्छिन्नस्येतरत्वादेः विपक्षाद्व्यावर्तकम्, इतरत्वस्यैव पर्वतेतरत्वादेरपि ह्रदादौ सद्भावात्, स्वविशिष्टविशेष्यतावच्छेदकावच्छिन्नाभाववद्विपक्षकत्वं हि विपक्षाद्व्यावर्तकत्वम्, तथा च तत्स्थलीयसाध्यव्यापकताग्रहो नोक्तसाध्यव्यापकताग्रह इति नातिप्रसक्तिः । बाधोन्नीते वह्नीतरत्वादौ तु वह्निरूपं विशेषणं तादृशमेव, विपक्षे वह्नावितरत्वस्य वृत्तावपि वह्नीतरत्वस्य वृत्तेः । न च पर्वतावृत्तित्वपर्वतान्यवृत्तित्वादिविशेषणविशिष्टवह्न्यादेः पर्वतपक्षकवह्न्यादिसाध्यकोपाधित्वं तथापि स्यादेव, तादृशवह्न्यादेर्विपक्षेऽसद्भूतत्वादिति वाच्यम्, स्वविशेष्यतावच्छेदकतद्धर्मावच्छिन्नाधिकरणविपक्षवृत्तिस्वविशिष्टतद्धर्मावच्छिन्नाभावकं यत्स्वं तदन्यविशेषणविशेष्यतावच्छेदकतापन्नतद्धर्मानवच्छिन्नत्वस्य विवक्षितत्वात्, पर्वतादिकं न तादृशं स्वं, तदीयविशेष्यतावच्छेदकभेदत्वावच्छिन्नाधिकरणे विपक्षे ह्रदादौ पर्वतविशिष्टभेदत्वावच्छिन्नाभावस्यावृत्तेरिति पर्वतेतरत्वादौ नातिप्रसङ्गः, नापि पर्वतावृत्तित्वादिकं तादृशं स्वं, तदीयविशेष्यतावच्छेदकवह्नित्वावच्छिन्नाधिकरणताया विपक्षेऽवर्तमानत्वादिति न पर्वतावृत्तित्वादिविशिष्टवह्न्यादावतिप्रसङ्गः, ह्रदादिकं तु तादृशं स्वं तद्विशेष्यतावच्छेदकभेदत्वावच्छिन्नाधिकरणे ह्रदादौ विपक्षे ह्रदादिविशिष्टभेदत्वावच्छिन्नाभावस्य सत्त्वादित्यन्यत्र विस्तर इति चेन्न, पर्वतभेदस्य ह्रदादिभेदविशिष्टतद्व्यक्तित्वादिना तथाप्युपाधित्वप्रसङ्गतादवस्थ्यात्, ह्रदादिभेदविशेष्यतावच्छेदकतद्व्यक्तित्वावच्छिन्नाधिकरणे ह्रदादौ ह्रदादिभेदविशिष्टतद्व्यक्तित्वावच्छिन्नाभावस्य सत्त्वात्तदन्यविशेषणविशेष्यतावच्छेदकानवच्छिन्नत्वस्य साध्यव्यापकतायां सद्भावात्, एवं साध्यव्यापकतामात्रस्य दोषोन्नयनोपयोगित्वेन विशेषणवैयर्थ्यं चेदन्यत्र विस्तर इति चेत्सत्यम्, अभ्युपेत्य वादेनैवाह तथापीति । कथञ्चिद्विशेषणेनातिप्रसङ्गाप्रसङ्गयोः परिहारोपगमेऽपीत्यर्थः । तद्व्याप्त्यनवधारणे = साधनव्याप्त्यनवधारणे । न शक्यावधारणमिति । साधननिष्ठव्याप्तिनिरूपकत्वाभाव एव साधनाव्यापकत्वमिति भावः । साध्यव्यापकत्वमपि साध्यनिष्ठव्याप्तिनिरूपकत्वं साध्यव्याप्त्यवधारणापेक्षावधारणकमेवेत्याह एवमिति । एतच्च तद्भिन्नभेदप्रतियोगितानवच्छेदकत्वादिरूपव्यापकतायाः पुरोदीरितनिरासं मनसि निधायैवोच्यत इति ध्यातव्यम् । अयम्भावः—व्याप्तिरविनाभावादिरूपा तावन्निरस्तैवेति साधननिष्ठा साध्यनिष्ठा च व्याप्तिरुपाधितावशरीरेऽनौपाधिकत्वरूपैव प्रवेश्या, अनौपाधिकत्वं च सिद्ध्यसिद्धिव्याघातपरिहाराय साधनाव्यापके साध्यव्यापकताया निषेधविवक्षायां यावत्साधनाव्यापकाव्यापकत्वसाध्यसामानाधिकरण्यरूपं साध्यव्यापके साधनाव्यापकतानिषेधविवक्षायां तु यावत्साध्यव्यापकव्यापकत्वरूपमित्युक्तम् । धूमवान् वह्नेरित्यादौ वह्न्यव्यापकजलाद्यव्यापकधूमसामानाधिकरण्यं धूमव्यापकप्रमेयत्वादिव्यापकत्वञ्च वह्नावादायातिप्रसङ्ग इत्युभयत्र यावत्त्वोपादानम्, तत्राद्ये यद्यपि नात्माश्रयः साधननिष्ठव्याप्तिनिरूपकत्वाभावगर्भे प्रकृतसाधननिष्ठव्याप्तेः प्रविष्टत्वेऽपि तन्निरूपकतायाः प्रकृतसाध्यातिरिक्ते ग्रहणेनैव

साध्यव्यापक इत्यपि । अथ मन्यसे, अदृष्टव्यभिचारसाध्यत्वं साध्यव्यापकत्वम्, न, वस्तुतो व्यभिचारिसाध्यस्याप्यापाततोऽदृष्टव्यभिचारिसाध्यत्वसम्भवात्तस्याप्युपाधित्वापातात्, न दृश्यत इति च निरूपयितुमशक्यम्, व्याप्तिग्रहकाले च साध्यत्वाभावेन

---

तदभावग्रहसम्भवेन प्रकृतसाध्ये तस्या ग्रहस्यानपेक्षणीयत्वात् साध्यसाधनभेदेन च व्याप्तेर्भेदाभ्युपगमात्, तथापि प्रकृतसाधननिष्ठानौपाधिकत्वरूपव्याप्तिगर्भे प्रकृतसाधननिष्ठानौपाधिकत्वान्तरस्य प्रविष्टत्वेन तत्रापि चानौपाधिकत्वान्तरस्यैव प्रवेशनीयत्वेनानवस्था दुर्वारैव, व्याप्तिबोधस्य विषयापर्यवसानेनानुत्पत्तिप्रसङ्ग इति यावत् । एवं साध्यनिष्ठव्याप्तिनिरूपकत्वाभावस्य तत्र प्रविष्टत्वेन साध्यनिष्ठव्याप्तिमादाय यावत्त्वस्यापि व्याप्तिनिरूपकत्वपर्यवसायितया तद्घटकीभूतां साधनाव्यापकत्वनिष्ठव्याप्तिमादाय चानवस्थाप्रसङ्गोद्रष्टव्यः, विशिष्य यावत्तां निवेशस्यासर्वज्ञदुर्ग्रहत्वापादकत्वादसम्भवाच्च । सामान्याभावेन प्रतियोगित्वेन च घटिततया तु स सुप्रसिद्ध एवेति निवेदितं प्राक् । एवञ्च निरुक्तानौपाधिकत्वयोस्तद्व्यक्तिष्ठभेदप्रतियोगितावच्छेदकत्वसामान्याभावादिरूपव्यापकत्वप्रवेशेऽपि यावत्त्वस्य चैतादृशव्यापकतारूपत्वेऽपि न प्रकृतदोषनिस्तारः । एतेन द्वितीयमपि निरस्तम्, तत्रापि साध्यनिष्ठव्याप्तेर्यावत्त्वादेश्च घटकत्वेनानवस्थाया जागरूकत्वात्, आत्माश्रय पुनरधिकः, साध्यस्यापि यावत्साध्यव्यापकान्तर्गततया साधने तद्व्यापकत्वस्य प्रकृतसाधननिष्ठप्रकृतसाध्यनिरूपितव्याप्तिघटितत्वपर्यवसानात्, यदि चेयं घटकीभूता व्याप्ति र्न यावत्साध्यव्यापकेत्यादिरूपा, अपि तु यावत्साधनाव्यापकेत्यादिरूपा तदाऽनवस्थैवेति । उक्तदोषपरिजिहीर्षुराशङ्कतेऽनौपाधिकत्वाघटितव्यापकत्वम्, अदृष्टेति । अदृष्टव्यभिचारं साध्यं येन तत्त्वम्, यदभाववद्वृत्तित्वप्रकारकप्रमाविषयतासामान्याभाववत्प्रकृतसाध्यं तत्त्वं प्रकृतसाध्यव्यापकत्वमित्यर्थः, रूपविशेषसम्बन्धविशेषाभ्यां साध्यव्यापकताया लाभाय तु तयोर्निवेश आदरणीय एव, रीतेः प्रसिद्धत्वात् । प्रमेयत्वाद्यभावस्य त्वप्रसिद्धावपि न क्षतिः, तस्य साधनव्यापकत्वेनोपाधिताया अनुपपादनीयत्वात् । व्यभिचारिसाध्यस्येत्यस्य बहुव्रीहिणा साध्याव्यापकस्येत्यर्थः पर्यवस्यति । तस्य = साध्याव्यापकस्य । ननु वस्तुतो यत्साध्याव्यापकं तद्व्यभिचारप्रकारकस्य कस्यचिद्दर्शनस्य विषयता कदाचित्प्रकृतसाध्ये सम्भाव्यते एवेति तत्सामान्याभावो दुर्घटः, न च तस्यापि सम्भावनयैवातिप्रसङ्गसम्भावना, सापि च लक्षणदूषिकैव, नत्वतिप्रसङ्गनिश्चय एवेति वचनीयम्, अन्ततो भगवत एव तादृशदर्शनादानसम्भवादित्यत आह न दृश्यत इति । यत्प्रकृतसाध्यव्यापकत्वेनाभिमतं तदीयव्यभिचारप्रमीयविषयतापि प्रकृतसाध्ये न भविष्यतीति नासर्वज्ञैर्वक्तुं शक्यम्, तथा च तादृशयत्किञ्चित्प्रमाविषयत्वसम्भावनायां तत्सामान्याभावनिश्चयो दुर्घटः । एतेन यदभाववद्वृत्तित्वसामान्याभाववत्प्रकृतसाध्यं तत्त्वमित्यादिप्रकारान्तरं दर्शनाघटितमपि निरस्तम्, तादृशवृत्तित्वसम्भावनायां तदभावस्य दुर्निश्चयत्वात्, तर्कव्याघाताभ्यां तादृशसम्भावनानिवृत्तेर्निरस्तत्वादिति भावः । दोषान्तराणि सूक्तानि । एतेन–द्रव्यत्वाभाववान् सत्त्वादित्यत्र साधनव्यापकस्यापि संयोगाभावस्योपाधित्वदर्शनान्न साधनाव्यापकत्वघटितमुपाधित्वम्, अपि तु साधनवति साध्याभावोन्नायकव्यतिरेकप्रतियोगितावच्छेदकरूपवत्त्वमेव, उक्तस्थले च सत्त्वरूपसाधनवति द्रव्ये द्रव्यत्वाभावाभावोन्नायकसंयोगात्मकव्यतिरेकप्रतियोगितावच्छेदकसंयोगाभावत्वमादाय लक्षणसमन्वयः, अत्र च साध्यनिष्ठव्याप्तिनिरूपकत्वमादाय नोक्तखण्डनसञ्चारसम्भव इति निरस्तम्, सकलोपाधिव्यतिरेकस्य सर्वत्र साधनवति साध्याभावानुमित्युपधायकताया अप्रामाणिकत्वेनानुपाधिव्यतिरेके साध्याभावव्याप्यत्वभ्रमेण साध्याभावानुमित्युपधानदर्शनेन चाव्याप्त्यतिव्याप्तिभ्यामुन्नायकत्वस्यानुमित्युपधायकत्वात्मकताया वक्तुमशक्यत्वेनानुमिति-

तद्व्यभिचारः कथमवधार्यः। साध्यं व्यापकमपेक्षितमिति चेन्न, व्याप्त्यनवगमे व्यापकार्थानवगमात्। सम्भावितव्यापकभावो व्यापकोऽपेक्षित इति चेन्न, व्यापकस्यानिरुक्तौ किंरूपतया सम्भावनापि स्यात्। अथ साध्यव्यापक इत्येव भद्रम्, तदानीं साध्यत्वाभावेऽपि साधयितुमर्हत्वस्य विवक्षितत्वात्; न, कथं ह्यवगन्तव्यमिदमेव साधयितुमर्हमिदं नेति, व्यापकत्वादिति वक्तुमशक्यत्वात्।

---

योग्यत्वरूपताया एव वक्तव्यत्वात् तस्य च व्याप्तिरक्षधर्मतातिरेकासम्भवादिति। यावत्साध्यव्यापकव्यापकत्वमित्यत्र साध्यत्वमनुमितिविषयत्वं वा प्रकृतसाधनव्यापकत्वं वा, तद्व्यापकतया सम्भाव्यमानत्वं वा, अनुमितिविषयत्वयोग्यत्वं वा वह्नित्वादितत्तद्धर्मावच्छिन्नत्वं वा, आद्ये व्याप्तिग्रहेति। साध्यत्वाभावेन = अनुमितिविषयत्वाग्रहेण, स्वीयानुमितिविषयत्वं तावन्नास्त्येव तदा. परकीयानुमितिविषयत्वं सम्भवदपि तदा मानाभावान्न शक्यग्रहणम्, क्वचित्तद्ग्रहेऽपि वा कदाचित्तद्ग्रहेऽपि व्याप्तिग्रहोदयेन तत्र का गतिरिति भावः। तद्व्यभिचार इति। साध्यत्वविशिष्टनिरूपितव्यापकत्वघटितोक्तानौपाधिकत्वमित्यर्थः। द्वितीयमाशङ्कते साध्यमिति। व्यापकमिति। प्रकृतसाधनव्यापकमित्यर्थः, अन्यथाऽव्यावर्तकत्वात्। व्यापकार्थेति। व्यापकत्वेत्यर्थः। व्यापकत्वं व्याप्तिनिरूपकत्वमिति प्रकृतसाधननिष्ठव्याप्तेरेवोक्तानौपाधिकत्ववपुषि प्रवेशेनात्माश्रयो व्याप्तिनिरूपकत्वज्ञानमादाय चान्योन्याश्रय इत्यर्थः। तद्वन्निष्ठभेदप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वविवक्षणे तज्ज्ञानस्यानौपाधिकत्वज्ञानानधीनत्वेन यद्यपि नायं दोषः, तथापि तदपि निरस्तमेवेति भावः। तृतीयमाशङ्कते सम्भावितेति। व्यापकस्य = व्यापकत्वस्य। अनिरुक्ताविति। परार्थस्थले यथाश्रुतमिदम्। स्वार्थे त्वप्रतीतावित्यर्थः। विषयानवस्थानादिपराहता हि व्यापकताप्रतीतिरित्युक्तम्। तुरीयमाशङ्कते अथेति। साध्यत्वाभावेऽपि = अनुमितिविषयत्वस्य प्रत्येतुमशक्यत्वेऽपि। वक्तुमशक्यत्वादिति। अनुमितिविषयत्वयोग्यत्वं ह्यनुमितिनिरूपितविधेयताख्यविषयताप्रयोजकधर्मवत्त्वम्, तादृशधर्मश्च व्यापकत्वमेव, तच्च व्याप्तिनिरूपकत्वं वाऽन्यादृशं वोभयथाप्युक्तो दोष इति भावः। पञ्चमे तु यद्यपि नामी दोषास्तथाप्यननुगमः। न च लक्ष्यस्याप्यननुगतत्वेन नासौ दोष इति वाच्यम्; वह्निव्याप्यो धूमोऽनित्यत्वव्याप्यं कृतकत्वमित्यादिव्यवहाराणां व्याप्त्यंशेऽनुगमस्यैवानुभवात्, तदननुरोधे च साध्यतावच्छेदकाद्यैक्यस्थले व्याप्त्यैक्यसमर्थनेऽपि कुतो निर्बन्धः, कथं वा तत्र तत्राव्याप्त्युद्भावनसामञ्जस्यम्। अत एवाननुगमाद्बिभ्यतः सम्बन्धमात्रं व्याप्तिसामान्यलक्षणमिति केचित्प्राञ्चस्तार्किका ऊचिरे। सम्बन्धत्वस्यापि विशिष्टबुद्धिजननयोग्यत्वादिरूपस्य विचार्यमाणस्यानुगमासम्भवेन कथञ्चित्सम्भवेऽपि वा सम्बन्धत्वमात्रज्ञानेऽपि व्याप्तिव्यवहारादर्शनेन तदप्यसम्यगित्यन्यत्। नचानुगन्तुमशक्यतामात्रेणाननुगमस्य दोषताऽपैति, अतिप्रसङ्गात्। न च सर्वासां व्याप्तीनां विशिष्यापि लक्षणसम्भव इत्यसिद्धिरेव, नवैवं व्याप्तिनिश्चयत्वस्याप्यनुगमाभावेऽनुमितित्वस्याकस्मिकत्वमपि नापद्येत, नवैवं व्याप्त्यादिपदानां समयग्रहोपपत्तिरपि, न हि व्याप्तित्वमपि किञ्चिदनुगन्तुं शक्यम्, येन तेन रूपेणापि स स्यात्। इदन्तु बोध्यम्, अननुगम इवानुगमोऽपि न युक्तः, कथमपि व्याप्तेरैक्ये वह्निव्याप्यं जलमितिप्रत्ययस्यापि प्रमात्वापत्तेः, निरूपकविशेषनियन्त्रितायास्तस्या जलावृत्तित्वमिति चेत्तस्याः शुद्धव्याप्तेर्भेदे क्वानुगमः, अभेदे तु कथन्नोक्तदोषः, भेदाभेदे च विरोधेनैकतरस्य मिथ्यात्वे कथन्नानिर्वाच्यवादः, न च रूपभेदेन भेदाभेदेऽविरोध इत्युपपादितं "एकमित्युपादाय यदेवकारमप्युपादत्ते श्रुति"रिति पङ्क्तिव्याख्यायां प्राक्। वस्तुतस्तु निरूपकविशेषनियन्त्रितैव व्याप्तिः सर्वत्रानुभूयते

न च साधनाव्यापकत्वं सर्वत्र निश्चेतुं शक्यम्, स श्यामो मैत्रतनयत्वादित्यत्र शाकाद्याहारपरिणतिपरम्पराया मैत्रतनयेऽभावस्य दुरधिगमत्वात्। यत्रोक्तलक्षणस्य निश्चायकं प्रमाणमस्ति तत्र निश्चितोपाधित्वम्, अन्यत्र शङ्कितोपाधित्वम्, मैत्रतनयत्वं व्याप्य शाकाद्याहारपरिणतिपरम्परया स्थातव्यमित्यत्र नियामकाभावादिति चेन्न, मैत्रतनयत्वेनैव हेतुना तस्यापि प्रसाधने तच्छङ्काया अपि छेत्तुं शक्यत्वात्। तत्रापि

---

न तु शुद्धापि काचिदिति तत्सम्भावनापि दूरे एवापसरति। तस्मादनुभूतिं युक्तिं न स्पृश्यते, युक्तिश्चानुभूतिमिति द्वयोर्विवादेऽनिर्वाच्यतासिद्धिरिति परमार्थः। एवं यावत्साधनाव्यापकाव्यापककसाध्यसामानाधिकरण्यमित्यत्र साधनत्वमनुमित्युपधायकत्वं वा प्रकृतसाध्यव्याप्यत्वं वा तद्व्याप्यतया सम्भाव्यमानत्वं वा प्रकृतसाध्यनिरूपितव्याप्तिपक्षधर्मतात्मकमनुमितिजननयोग्यत्वं वा धूमत्वादितत्तद्धर्मावच्छिन्नत्वं वेति विकल्प्योक्तानुक्रमेणैव दूषणानि द्रष्टव्यानि।

खण्डनान्तरमवतारयितुमाह—न चेति। वह्निरनुष्णः कृतकत्वादित्यादौ वह्निभेदादेः साधनाव्यापकतानिश्चयसम्भवात् सर्वत्रेति। सर्वत्रोपाधावित्यर्थः। श्यामत्वकोटिकविवादाध्यासितस्य पक्षतालाभाय स इति परोक्षनिर्देशः। हेतुमत एव चात्र पक्षत्वम्, तेन मित्रातनयत्वहेतुना श्यामसामग्रीसाधनपरोपरितनग्रन्थस्य नासङ्गतिः। मैत्रतनयत्वात् = मित्रासम्बन्धितनयत्वात्। तेन न डगापत्तिः, नवा तनयपदवैयर्थ्यम्। अभावस्येति। जन्यतासम्बन्धावच्छिन्नप्रतियोगिताकस्येति शेषः। जन्यतासम्बन्धेनैव तादृशपरम्परायाः साधनावच्छिन्नसाध्यव्यापकतयोपाधित्वस्वीकारात्। नन्वनुक्तोपालम्भनमिदम्, नहि निश्चितोपाधितां शाकपाकजन्यत्वस्याचक्ष्महे, अपि तु सन्दिग्धोपाधितामेवेत्याशङ्कते यत्रेति। उक्तलक्षणस्य = साध्यव्यापकत्वसाधनाव्यापकत्वोभयस्य। प्रकृते तु साधनावच्छिन्नसाध्यव्यापकताया निश्चयेऽपि साधनव्यापकताया मानाभावेन निश्चेतुमशक्यतया सन्देह एवेत्याह मैत्रतनयत्वमिति। व्याप्येतिल्यबन्तं पृथक्पदम्, स्थातव्यमित्यन्वयः। तथा च तादृशपरम्परया मैत्रतनयत्वनिष्ठव्याप्तिनिरूपिकया भवितव्यमित्यत्र नियामकस्य = प्रमाणस्याभावादित्यर्थः। मैत्रतनयत्वतादृशपरम्परयोः कार्यकारणभावादेर्व्याप्यव्यापकभावग्राहकस्याभावेन तन्निश्चयासम्भवादिति यावत्। एवञ्चात्र 'मैत्रतनयत्वव्याप्यशाकाद्याहारे'त्यादिकमेकपदतया व्याचक्षाणः कश्चिन्महति व्यामोहे निपतित इत्यवधेयम्। स्वार्थेऽस्तु सन्देहः, परार्थे तु शाकपाकजन्यत्वस्य सन्दिग्धोपाधितयोद्भावनं न सम्भवतीत्यभिप्रायेणाह मैत्रतनयत्वेनैवेति। तस्य = शाकपाकजन्यत्वस्य, जन्यतासम्बन्धेन शाकपाकस्य वा। तच्छङ्कायाः = साधनाव्यापकत्वशङ्कायाः, पक्षे शाकपाकजन्यशङ्काया वा। शक्यत्वादिति। अयम्भावः, कार्यकारणभावादिरेव न व्याप्यव्यापकभावनियामकः, "कार्यकारणभावाद्वा स्वभावाद्वा नियामका"दिति बौद्धमतप्रवेशापत्तेः, जलत्वादिना द्रव्यत्वाद्यनुमानभङ्गापत्तेश्च अपि त्वनौपाधिकत्वमेव व्याप्यत्वनियामकम्, तत्सत्त्वेऽप्रयोजकत्वचोदनाया अप्रामाणिकत्वात्, यदाह शिरोमणिः—"करवह्निसंयोगः सर्वः संयोगो वा प्रत्यक्षसंयोगधर्मातिरिक्तधर्मसमवायी समवायित्वादित्यादितो न कथं शक्त्यादिसिद्धिः? निरुपाधित्वेऽप्यप्रयोजकत्वादिति चेन्न, निरुपाधित्वस्यैव प्रयोजकत्वात्, तथात्वेऽपि चाप्रयोजकत्वे निरुपाधित्वाभिमतानामितरेषामपि तथात्वा"दिति। तस्मादेतादृशानुमानेष्वप्रयोजकत्वमनभिधायोपाधेरेवोपपादने यत्नो विधेयः, स च निश्चितो वा सन्दिग्धो वेत्यन्यदिति तदाशयः, एवञ्च प्रकृते मित्रातनयत्वेनैव श्यामत्वसामग्र्या जन्यत्वसम्बन्धेन साधने उपाधेरभावेन 'मैत्रतनयत्वं व्याप्ये'त्याद्यभिधानमकिञ्चित्करम्। तस्मात्साधनव्यापकत्वनिश्चये तत्पाः सन्दिग्धोपाधित्वमप्यनुपपन्नमिति। न च—जन्यत्वसम्बन्धेन श्यामसामग्रीसाधने

तत्तत्सामग्रीत्युपाधिपरम्पराभिधाने च तस्यास्तस्या अपि मैत्रतनयत्वेनैव साधनस्य कर्तुं शक्यत्वात् । अनवस्थैवं स्यादिति चेन्न, उपाध्युपन्यासे एव कुतोऽनवस्था न स्यात् । साध्यसामग्र्या उपाधित्वे धूमानुमानसाधारण्यात् । एवञ्च साध्यसामग्र्युपाधित्वव्यवच्छेदार्थमपि लक्षणं विशेषणीयम् । श्यामत्वादौ साध्ये शाकाद्याहारपरिणतिपारम्पर्यादेस्तस्मिन् साध्ये श्यामत्वादेरुपाधित्वसम्भवेन कथमुपाधिरपि साधयितुं शक्यत इति चेन्मैवम्, प्रत्येकं द्वयोरपि मैत्रतनयत्वादिना साधने साधनाव्यापकत्वस्य

---

श्यामसामग्रीसामग्र्या उपाधित्वमिति निरुपाधित्वमेवासिद्धम्, तस्याः स्वजन्यजन्यत्वसम्बन्धेन साधनावच्छिन्नश्यामसामग्रीव्यापकत्वात्, पक्षे तेन सम्बन्धेन सन्दिह्यमानत्वेन च तस्याः साधनाव्यापकतायाः सन्दिग्धत्वात्सन्दिग्धोपाधितायाः सूपपन्नत्वादिति वाच्यम्, तेनैव सम्बन्धेन तस्याः पक्षेऽपि मित्रातनयत्वेनैव हेतुना साधनसम्भवात्, तत्रापि स्वजन्यजन्यजन्यत्वसम्बन्धेन श्यामसामग्रीसामग्रीसामग्र्या उपाधित्वोद्भावने च तस्या अपि तेन सम्बन्धेन पक्षे मित्रातनयत्वहेतुना साधनसम्भवः, एवमग्रेऽपि, तथाच क्व नाम न साधनव्यापकत्वनिश्चय इत्याह तत्रेति । श्यामसामग्र्यादिसाधने इत्यर्थः । तत्तत्सामग्रीतीति । तत्तत्सामग्रीरूपेत्यर्थः । न स्यादिति । तथा च यत्रोभयोः समो दोषः परिहारोऽपि वा सम"इति न्यायावतार इति भावः । साध्यसामग्र्याः सन्दिग्धोपाधितामभ्युपेत्य तत्परिहारोऽभिहित एतावता, वस्तुतस्तु तस्यास्तथात्वाभ्युपगमो महतोऽनिष्टस्य प्रसञ्जक इत्याह साध्यसामग्र्या इति । उपाधित्वे = उपाधित्वेन ज्ञानस्य दोषत्वे । धूमानुमानेति । पर्वते वह्निसाधकतयाऽभिमतधूमलिङ्गेऽत्यर्थः । तेन स्वव्यतिरेकेण साध्यव्यतिरेकोन्नायकतयैवोपाधेर्दूषकत्वमिति मते साधनव्यापकस्याप्युपाधित्वेन ह्रदो वह्निमान् धूमादित्यत्र पक्षावृत्तिलिङ्गे साध्यसामग्र्या उपाधित्वसम्भवेऽपि न क्षतिः । किञ्च तत्र निश्चितोपाधित्वमेव, इत्थमेव तदभावेन साध्याभावानुमानसम्भवादित्यतोऽपि न क्षतिः । न च—वह्निनेव तत्सामग्र्याऽपि समं धूमस्यानौपाधिकत्वनिश्चयः, श्यामसामग्र्या तु समं न मित्रातनयत्वस्यानौपाधिकत्वनिश्चयो व्याप्तिग्राहकस्य कार्यकारणभावस्याभावादिति वैषम्यम्, अत एव "सामग्री च क्वचिन्नोपाधिर्नतु सर्वत्रे"त्युदयनाचार्यैरुक्तमिति—वाच्यम्, दत्तोत्तरत्वात्, साधनव्यापकत्वस्योक्तरीत्योपपादने उपाध्यग्रहसहचारग्रहयोः सत्त्वेनानौपाधिकत्वनिश्चयस्य प्रकृतेऽपि सम्भवात् । एवञ्च साध्यसामग्र्याः सन्दिग्धोपाधित्वं न क्वापि स्यात्, साधनव्यापकत्वनिश्चायकरीतेः सद्भावात्, तदनादरे तूभयत्रापि स्यात् । अतएवाह एवञ्चेति । तत्तत्स्थले सद्धेतुतया स्वीकृतेषु लिङ्गेष्वपि साध्यसामग्र्याः सन्दिग्धोपाधित्वप्रसङ्गसम्भवे चेत्यर्थः । साध्यसामग्र्युपाधित्वव्यवच्छेदार्थं = तेषु साध्यसामग्र्युपाधित्वेन ज्ञानव्यवच्छेदार्थम् । विशेषणीयमिति । यद्धर्मावच्छिन्नं यद्धर्मावच्छिन्नव्यापकत्वे सति यद्धर्मावच्छिन्नसामग्रीभिन्नत्वे सति यद्धर्मावच्छिन्नाव्यापकं तद्धर्मावच्छिन्नं तद्धर्मावच्छिन्नसाध्यकतद्धर्मावच्छिन्नहेतुकोपाधिरित्यनित्यसाध्यकस्थले वक्तव्यम्, एवञ्च शाकपाकस्याप्युपाधित्वेन ग्रहणं न स्यात्, यत्त्वादेरननुगमेन साध्यसामग्र्या उपाधित्वानिष्टिस्थले तथालक्षणकरणेऽपि निवेदितदिशा साध्यव्यापकत्वसाधनाव्यापकत्वयोरेव दूषकतौपयिकत्वेन शेषवैयर्थ्यम् । नहि कश्चित्साध्यसामग्र्या उपाधित्वस्येष्टत्वे 'कथकसम्प्रदायानुरोधेनैव तस्या उपाधित्वेनानुद्भावनंसम्भवेनोक्तविशेषणादानेऽपि न क्षति'रिति वक्तुं शक्यते, वैपरीत्यबीजनिरासादिति भावः । शङ्कते श्यामत्वादाविति । श्यामत्वादिसाध्यके मैत्रतनयत्वे इत्यर्थः । पारम्पर्यादेरुपाधित्वसम्भवेनेत्यन्वयः । तस्मिन् साध्ये = तादृशपारम्पर्यादिसाध्यकमैत्रतनयत्वे । शक्यत इति । तथा च न साधनाव्यापकत्वसन्देहच्छेदनसम्भवः, नवोक्तरीत्याऽनवस्थापीति भावः । प्रत्येकमिति ।

शङ्कितुमशक्यत्वात्। अन्यथा सकर्तृकत्वे साध्येऽदृष्टजत्वमदृष्टजत्वे च सकर्तृकत्वमुपाधिरित्युभयासिद्धिः स्यात्, एवं बुद्धिमत्पूर्वकत्वे प्रयत्नवत्पूर्वकत्वं प्रयत्नवत्पूर्वकत्वे च बुद्धिमत्पूर्वकत्वम्, एवं वह्नित्वजात्याक्रान्तवत्त्वेऽपीन्धनत्वजात्याक्रान्तवत्त्वं तस्मिन् वह्नित्वजात्याक्रान्तवत्त्वमुपाधिः स्यादित्यादि विश्वमनुमानं व्याकुलीस्यात्। अत एव

शाकपाकश्यामत्वयोः प्रत्येकं साधनाव्यापकत्वस्य परस्परसाध्यकस्थले शङ्कितुमशक्यत्वादित्यन्वयः। मैत्रतनयत्वादिनेत्यादिपदं स्थलान्तराभिप्रायेण। साधने = युगपत्साधने। अयम्भावः—साध्यं हि नोपाधितयोद्भाव्यत इति साध्याभावस्य साध्यव्यभिचारस्य वा साधने साधनसाध्ययोरविशेषप्रसङ्गमूलः कथकसम्प्रदायः, तथा च शाकपाकश्यामत्वयोः प्रत्येकं साधने परस्परस्योपाधित्वेनोद्भावनसम्भवेऽपि युगपदेव तयोः साधने न तत्सम्भव इति। ननु श्यामत्वमात्रे विवादादुभयसाधनेऽर्थान्तरप्रसङ्गः, श्यामत्व इव शाकपाकजत्वेऽपि विवादसम्भवेन तत्परिहारेऽपि युगपदुभयसाधनं 'स श्यामः शाकपाकजश्च मित्रातनयत्वा'-दिति वा, 'श्यामत्वविशिष्टशाकपाकजत्ववा'निति वा, 'श्यामत्वशाकपाकजत्वोभयवा'निति वा स्यात्, तत्राद्ये एकांशेऽपरस्य द्वितीयतृतीययोस्त्वेकैकस्योपाधितयोद्भावने बाधकाभावः। साध्योपाध्यो रूपभेदे उक्तप्रसङ्गानुपपत्तेरित्याशङ्क्याह अन्यथेति। युगपदुभयसाधनेऽप्युक्तरीत्या साध्यस्योपाधितयोद्भावनाभ्युपगमे इत्यर्थः। सकर्तृकत्वे साध्य इति। क्षितिः सकर्तृका कार्यत्वादित्यादिस्थले कार्यत्वहेतावित्यर्थः। एवमग्रेऽपि। उभयासिद्धिरिति। तत्रोपाधेः साधनव्यापकत्वनिश्चयसम्पादनाय युगपदुभयसाधनेनैव प्रत्यवस्थेयम्, तत्राप्येकैकस्योपाधित्वेन तु कथं तत्सम्भव इति भावः। बुद्धिमदित्यादिसप्तम्यन्तेषु साध्ये' इत्यनुपज्यते, प्रथमान्तानां च 'उपाधिःस्या'दित्यनेनोपरितनेन सम्बन्धः। वह्नित्वेन वह्नेः साध्यतालाभाय 'वह्नित्वजात्याक्रान्तवत्त्वे' इत्युक्तम्, विशेषरूपेण तत्साधने धूमत्वावच्छिन्नस्य दुष्टत्वात् प्रकृतानुदाहरणत्वात्। एवञ्च महानसीयेन्धनत्वादिनेन्धनस्य वह्नित्वावच्छिन्नव्यापकतानुपपत्तेरुपाधितापादनासम्भवेनेन्धनत्वेन तल्लाभायेन्धनवत्त्वमित्यनुक्त्वेन्धनत्वजात्याक्रान्तवत्त्वमित्युक्तम्। इन्धनत्वपदञ्चेन्धनत्वमणित्वाद्यन्यतमपरम्, वह्नित्वमेव वा वैजात्यसमानाधिकरणं विवक्षितम्, धूमादिविशिष्टेन्धनव्यापकताया वह्नौ सम्भवेन च 'तस्मिन्वह्नित्वे'त्यादिग्रन्थस्य नासङ्गतिः। इन्धनजतेजस्त्वमिति पाठे तु नानुपपत्तिशङ्कापि। इत्यादीति। तथाचैवमादीत्यर्थः। सावयवत्वादिनाऽनित्यत्वादौ साध्ये कृतकत्वादि तस्मिंश्चानित्यत्वाद्युपाधिः स्यादित्यभिप्रेत्यादिपदम्, तथा च यत्र हेतुसाध्यातिरिक्तं तदधिकरणवृत्तित्वविशिष्टप्रमेयत्वाद्यनात्मकं साध्यसमव्याप्तं प्रसिद्धं तादृशं सदनुमानमात्रं ग्राह्यम्। अनुमानं = सदनुमानत्वेन स्वीकृतं व्याकुलीस्यात् = सोपाधित्वसन्देहविषयीभवेत्। नचैवंसति सद्धेतुत्वेऽपि तदनिश्चयदशायां सन्दिग्धोपाधिकत्वे न दोषः, अतएव क्षितिः सकर्तृका कार्यत्वादित्यत्र साधने साध्यव्याप्यतानिश्चायकस्य साधनाव्यापकशरीरजन्यत्वादौ साध्यव्यापकतानिश्चायकस्य च तर्कस्यानवतारदशायां शरीरजन्यत्वादेः साध्यव्यापकतायाः सन्देहात्सन्दिग्धोपाधित्वं तार्किकैरङ्गीकृतमिति—वाच्यम्, ग्रन्थस्तावद्वयं परार्थाभिप्रायक इत्यावेदितम्, एवञ्चोक्तानुमानेषु साध्ये उपाधित्वसन्देहमुद्भाव्यैव परः कृती स्यात्, यदि युगपदुभयसाध्यतायामप्येकैकस्य साध्यतावच्छेदककोटिप्रविष्टरूपेणोपाधिना स्यात्, तर्कमादाय प्रत्यवस्थानासम्भवस्योदीरितत्वात्। अतएव शरीरजन्यत्वादेः सन्दिग्धोपाधिताविधूनने तर्कस्याकिञ्चित्करतामनुमत्यागमबलादेवेश्वरसाधनमिच्छन्ति तत्त्वविदः। अत एवानुकूलतर्कबलात्कार्यत्वादेः सकर्तृकत्वादिनेवादृष्टजत्वादिनापि व्याप्तिनिश्चयाद्योभयसाधने एकैकस्योपाधितासम्भव इति प्रत्यवस्थानमस्थान इति। साध्यव्यापकत्वे सति साधनाव्यापकत्वमिति यथाश्रुतलक्षणे शाकपाकजत्वस्य शुद्धश्यामत्वाव्यापकत्वेनाव्याप्तिं वक्ष्यति साध्यसाधनसम्बन्धव्यापकत्वविवक्षायां तु यद्यपि सा न सम्भवति तथाप्युक्तरीत्या सा तादृशविवक्षायामपि दुर्वारेत्यभिप्रायेणाह अत एवेति। शाकपा-

साध्यसाधनसम्बन्धं प्रति व्यापकत्वं साध्यव्यापकत्वमित्यपि प्रत्युक्तम् । यत्राप्युपाधिर्निश्चीयते तत्राप्यतीन्द्रियोपाधिविषये तदभावस्य साधनाव्याप्त्यर्थमनुमेयतायां सोपाधीक्रियमाणेन साधनेनैव सत्प्रतिपक्षस्य कर्तुं शक्यत्वात् । तथा सति तत्र शङ्कितोपाधित्वमेव निर्व्यूढं स्थास्यतीतिचेन्न, एवं ब्रुवाणो नियतमजैषीः परं मन्द !

---

फजत्वेऽव्याप्तेरेवेत्यर्थः । साध्यसाधनसम्बन्धं प्रतीति । अयम्भावः—शुद्धसाध्यव्यापकत्वस्योपाधिताघटकत्वे श्यामत्वस्य शिलादावपि सत्त्वेन शाकपाकजत्वस्य तदव्यापकत्वेनाव्याप्तिर्माभूदिति किञ्चिद्धर्मविशिष्टसाध्यव्यापकत्वं यदि विवक्ष्यते, तदा साधनविशिष्टसाध्यव्यापकत्वमादाय तत्राव्याप्तिवारणेऽपि महानसीयत्वविशिष्टसाध्यव्यापकत्वमादाय वह्निमान् धूमादित्यत्र व्यञ्जनवत्त्वेऽतिप्रसङ्ग इति साध्यसाधनसम्बन्धव्यापकत्वमेव वक्तव्यम्, तथाच वह्निधूमोभयसम्बन्धस्य पर्वतादावपि सत्त्वेन तत्र व्यञ्जनवत्त्वस्याभावेन नोक्तदोषः । न च गौरश्वत्वादित्यादौ विरुद्धे गोत्वाश्वत्वयोः सामानाधिकरण्याप्रसिद्धेः सोपाधित्वानुपपत्तिरिति वाच्यम्, इष्टत्वात्, मयाऽनौपाधिकत्वमेव व्याप्तिरित्यनभ्युपगमादिति भावः । वस्तुतस्तु विरुद्धसाधारण्याय यद्धर्मविशिष्टसाध्यव्यापकत्वं तद्धर्मविशिष्टसाधनाव्यापकत्वमित्यादिविवक्षानामादरेऽपि प्रकृताव्याप्तिर्निष्प्रत्यूहैवेति ध्येयम् । प्रत्युक्तमिति । नहि साध्यसाधनसम्बन्धव्यापकत्वमेव लक्षणम्, प्रमेयत्वादावतिप्रसङ्गात्, अपि तु साधनाव्यापकत्वघटितम्, तथा चोक्तरीत्या साधनाव्यापकत्वसम्पादने कथं नाव्याप्तिरिति भावः । अत्र—वह्निः कार्यानुकूलातीन्द्रियाद्विष्टधर्मसमवायी जनकत्वादित्यादौ व्यभिचारोन्नायकतामासेदुषोऽपि बहिरिन्द्रियाप्रत्यक्षत्वस्योपाधित्वं न स्यात्, गुरुत्वात्मकसाध्यस्य साधनस्य चाधिकरणे घटादौ तस्यावर्तमानतया साध्यसाधनसम्बन्धाव्यापकत्वादित्यपि वदन्ति । एवं सन्दिग्धोपाधावव्याप्तिमभिधायोक्तयैव प्रणाल्या निश्चितोपाधावपि तामभिधत्ते यत्रापीति । निश्चीयते = निश्चयविषयतयाऽभिमन्यते । तत्रेति निर्धारणे । अतीन्द्रियोपाधिविषये = अतीन्द्रियोपाधिस्थले । सत्प्रतिपक्षस्य कर्तुं शक्यत्वादित्यन्वयः । तदभावस्य = अतीन्द्रियोपाध्यभावस्यानुमेयतायामित्यन्वयः । तदभावसाधनाय हेतौ प्रयुक्ते सतीत्यर्थः । अयोग्यप्रतियोगिकत्वेन प्रत्यक्षासम्भवादिति भावः । साधनाव्याप्त्यर्थम् = साधनाव्यापकत्वसिद्ध्यर्थम् । सोपाधीक्रियमाणेन = सोपाधित्वेन प्रतिपिपादयिषितेन । साधनेनैव = प्रकृतसाध्यसाधकतयोपन्यस्तेनैव हेतुना । शक्यत्वादिति । तत्पतनवद्द्रव्यत्वात्, अग्निः कार्यानुकूलाद्विष्टातीन्द्रियधर्मसमवायी जनकत्वात्, वज्रं लोहलेख्यं पार्थिवत्वादित्यादौ गुरुत्वबहिरिन्द्रियाप्रत्यक्षत्वप्रशिथिलावयवत्वादिकोऽतीन्द्रिय उपाधिः, प्रशिथिलावयवत्वस्य स्फटिकादौ लोहलेख्यत्वेनैवानुमेयत्वोपगमात्र बहिरिन्द्रियग्राह्यत्वम्, एवञ्च पक्षे तत्तदभावस्य प्रत्यक्षासम्भवेन साधनाव्यापकत्वसिद्धयेऽनुमानमेव वक्तव्यम्, तत्र च परेण तद्गुरुत्ववद्द्रव्यत्वादित्यादिरीत्या प्रकृतहेतुनैवोपाधेः साधनाय प्रवर्तनीयं तत्र पतनादेरुपाधिताभिधाने च युगपदुभयमेव साधनीयमिति द्वयोर्हेत्वोः समबलत्वप्रतिसन्धाने पक्षे उपाध्यभावानुमितेरुत्पत्त्यसम्भवेन साधनाव्यापकत्वानिश्चयात्रोपाधित्वनिश्चयसम्भवो गुरुत्वादाविति ज्ञानाव्याप्तिरिति भावः । शङ्कते तथा सतीति । निश्चितोपाधित्वासम्भवे इत्यर्थः । शङ्कितेति । शङ्का च लैङ्गिकी वा मानसी वेत्यन्यदेतत् । तत्र = गुरुत्वादौ । परं = केवलं । मन्देति सम्बुद्धिः । मन्दाक्ष =

मन्दात्वं न प्रतिपन्नम्. तथाहि—स्वीकृतनिश्चितोपाधिभावे शङ्कितोपाधित्वमापतदनुकूलं मन्यते कोऽन्यो जितलज्जान्। न च क्वचिन्निश्चितोपाध्यनभ्युपगमे तच्छङ्का शक्या। यत्र प्रत्यक्षेणोपाधिनिश्चयस्तदेव तद्दर्शनस्थानं भविष्यतीति चेन्न, ऐन्द्रियकबाधे तज्जातीयस्यातीन्द्रियस्याप्रयोजकीक्रियमाणेन हेतुनैव साधयितुं शक्यत्वात्। न च यदेकत्रैकजातीयमैन्द्रियकं तदन्यत्रैन्द्रियकबाधे हेतुबलादतीन्द्रियं न प्रसाध्यते पाकदर्श-

---

लज्जाम्। न प्रतिपक्षं = न प्रतिवादिनं। स्वीकृतेति। तथाचापसिद्धान्त इति भावः। यद्यपि पक्षे उपाध्यभावसाधकहेतावनुकूलतर्कावतारदशायां साधनाव्यापकत्वनिश्चयेनोपाधित्वनिश्चयः, तदनवतारदशायां तु साधनाव्यापकत्वसन्देहसम्भवेनोपाधित्वसन्देह इति व्यवस्थितौ नापसिद्धान्तः, तथापि तर्कनिरासस्यावेदितत्वेन परं प्रति न साधनाव्यापकत्वनिश्चायनसम्भवइति परार्थे निश्चितोपाधितयोद्भाव्यो न कोऽपि स्यादिति भावः। निश्चितोपाध्यनभ्युपगमे = उपाधित्वनिश्चयानभ्युपगमे, साध्यव्यापकत्वसाधनाव्यापकत्वयोर्निश्चयाभावे इति यावत्। तच्छङ्का = उपाधित्वशङ्का। शक्येति। इदमापाततः, एकत्र साध्यव्यापकत्वस्यापरत्र च साधनाव्यापकत्वस्य निश्चयेनैव तयोः क्वचिच्छङ्कितुं शक्यत्वात्। परंप्रति साध्यव्यापकत्वसाधनाव्यापकत्वयोरेकत्र निश्चायनासम्भवेऽपि स्वयं तयोरेकत्रापि निश्चयस्य कस्यचित्सम्भवाच्च, परार्थेऽपि सर्वत्र सत्प्रतिपक्षे मानाभावेनैकत्र तयोर्निश्चयसम्भवाच्च, अत एव परार्थे न कोऽपि निश्चितोपाधितयोद्भाव्यः स्यादित्यपि न भद्रम्, परार्थेऽपि क्वचित्साधनाव्यापकत्वनिश्चये बाधकाभावादिति। यथाश्रुतग्राह्याशङ्कते यत्रेति। धूमवान् वह्नेरित्यादावित्यर्थः। प्रत्यक्षेणोपाधिनिश्चयः = आर्द्रेन्धनाद्युपाधेरिन्द्रियग्रहणयोग्यत्वम्। तद्दर्शनस्थानं = उपाधित्वनिश्चयस्थलम्। आर्द्रेन्धनस्य योग्यत्वेन तदभावस्यायोगोलके प्रत्यक्षतया साधनाव्यापकत्वनिश्चयसम्भवेऽन्यत्रोपाधित्वसंशयो निर्बाधइति भावः। ऐन्द्रियकबाधे = अयोगोलके ऐन्द्रियकस्यार्द्रेन्धनस्याभावनिश्चयेऽपि। तज्जातीयस्य = आर्द्रेन्धनत्वाश्रयस्य। अतीन्द्रियस्येति। नह्यैन्द्रियकत्वमप्युपाधितावच्छेदकम्, साध्याभावाद्युन्नयने व्यर्थविशेषणत्वापत्तेरित्यभिप्रायः। अप्रयोजकीक्रियमाणेन = सोपाधितया प्रतिपिपादयिषितेन। शक्यत्वादिति। आर्द्रेन्धनवान् वह्नेरित्यत्र साधनावच्छिन्नसाध्यव्यापको धूम एवोपाधिरिति कथं पक्षे उपाधिसाधनसम्भव इति तु नाशङ्कनीयम्, साध्योपाध्युभयस्य युगपत्साधनसम्भवेन दत्तोत्तरत्वात्। नन्वार्द्रेन्धनत्वावच्छेदेनैन्द्रियकत्वमेवेति कथमतीन्द्रियार्द्रेन्धनसिद्धिरतआह नचेति। न प्रसाध्यत इत्यन्वयः। यदेकजातीयम्=यद्धर्मावच्छिन्नम्। ऐन्द्रियकमिति। क्लृप्तमिति शेषः। तद् = तद्धर्मावच्छिन्नम्। हेतुबलात् = हेतोः पक्षधर्मताबलात्, हेतुमत्येकविशेषबाधपुरस्कारादिति यावत्। पाकदर्शनात् = भुक्तभक्तादेर्बुभुक्षादिना विक्लित्यात्मकपाकानुमानात्। उदरस्य पक्षत्वे पाकः पाकस्य पक्षत्वे तु पाकत्वं हेतुरिति भावः। अनलादीत्यादिना तद्व्यापारोपग्रहः। क्षित्यादावैन्द्रियककर्तृबाधेऽतीन्द्रियकर्तृसिद्धिस्तु प्रसिद्धैव। एवमादावनुकूलस्तर्को न तु प्रकृते इति तु न वाच्यम्, अनौपाधिकत्वस्यैव तर्कत्वात्। नन्वेवं पशुत्वादिनाऽयोग्यशृङ्गादेरपि सिद्धिः स्यात्, उपाधेरभिधाने तस्यापि पक्षे तेनैव लिङ्गेन साधनसम्भवेनानौपाधिकत्वस्य तर्कताया मयापि सुवचत्वात्, तर्कनिरस्यता त्वयाऽनुकूलतर्काभावेनाप्रत्यवस्थेयत्वाच्च, देवगवातिरिक्तवृत्तिशृङ्गत्वावच्छेदेन योग्यत्वनिश्चयेनायोग्यशृङ्गाद्यनुमितिरसम्भविनीतिरीत्या समाधानं तु न प्रकृतेपि दण्डवारितम्, आर्द्रेन्धनत्वावच्छेदेन योग्यतानिश्चयस्य सम्भवात्। आर्द्रेन्धनत्वावच्छेदेनैन्द्रियकत्वमित्यत्राप्रयोजकत्वमिति तूक्तरीत्या निरास्यमितिचेन्न, त्वया निर्बाधमस्माभिश्च दूषणीयमिति मर्यादाधीनकथायां मामेवं पर्यनुयोक्तुं भवतोऽनधिकारात्, अपर्यनुयोज्यानुयोगेन भवत एव निग्रहात्, अनुमानप्रामाण्यखण्डनाय बद्धपरिकरं प्रति लिङ्गेन केनचित्कस्यचित्सिद्धिमापादयतो

नाऽजठरानलादिवत् ।

साधनाव्यापकत्वे सति साध्यव्यापक इति च न शाकाद्याहारपरिणतिपरम्परा साध्यं व्याप्नोतीत्यव्यापकतादोषः, नहि शाकादित्वं नाम किञ्चिदेकमस्ति यत्साध्यं व्याप्नुयात् । अस्तु वा कथमपि तथापि श्यामत्वं न व्याप्नोति, इन्द्रनीलशिलादिश्यामलत्वस्याहाराजन्यत्वात् । शरीरश्यामत्वं साध्यं, तच्च व्याप्नोत्येवेदमिति चेन्न, व्याप्तावुपा-

---

भवतोऽपरिमेयमौर्ख्यप्रसङ्गाच्च, अनौपाधिकत्वस्यैव प्रयोजकत्वमितिरीतिं परिकल्पयतस्त्वादृशस्यैव शिरसि तादृशप्रहारौचित्यादिति भावः ।

ननु धूमवान् वह्नेरित्यत्रैन्द्रियक एव धूमः साध्यः, तादृशेनैव सहचारग्रहात्, एवञ्चोपाधिरपि वस्तुत ऐन्द्रियकमेवार्द्रेन्धनम्, ऐन्द्रियकत्वमुपाधितावच्छेदकं भवतु मा वेत्यन्यत्, तथाचातीन्द्रियस्य पक्षे साधनेऽपि न क्षतिः । किञ्च वह्निरनुष्णः कृतकत्वादित्यत्र वह्नित्वावच्छिन्नप्रतियोगिताकभेद उपाधिः, स कथं पक्षे प्रसाध्यः, अत्यन्तासत्यपीतिन्यायेन प्रतिज्ञयाऽऽहार्यबोधजननेऽपि नानुमितेराहार्यता, अनिर्वाच्यवादिनोऽपि तद्धर्मावच्छिन्ने तद्धर्मावच्छिन्नस्य न भेदो नाप्यभेद इत्येव युज्यते इत्युक्तं 'नातत्तन्मन्यसे तावत्त तत्त्वपि मंस्यसे' इति कारिकाव्याख्यायां प्राक् । न च रूपान्तरेणैव वह्निभेदः पक्षेऽतीन्द्रियः साधनीयः वह्नित्वावच्छिन्नभेदत्वेनैवोपाधित्वात्, तथा च कथं सर्वत्र साधनाव्यापकत्वग्रहविघटनमित्याशङ्क्य साध्योपाध्योरप्रयोजकीक्रियमाणेन हेतुना युगपत्प्रसाधनेऽप्रयोजकतामुपेत्य च प्रकारान्तरेण दूषयितुमाह । साधनेति । इति चेति । इतिपदं लुप्तसप्तम्यन्तमव्यापकतादोष इत्यनेनान्वेति । चकारस्य चाग्रिमेणेतिनाऽन्वयः । साध्यं व्याप्नोति = साध्यव्यापिका, तथा च शाकादिपाकजत्वं न साध्यव्यापकमित्येवमपि 'साधनाव्यापकत्वे सति' त्यादिलक्षणेऽव्याप्तिदोष इत्यर्थः । नहीति । शाकतैलाद्यनुगमकानतिप्रसक्तरूपाभावादनुगतरूपं विनाऽऽदिशब्दस्याप्यप्रवृत्तेश्च, अन्यथाऽसङ्कुचितेनादिपदेन किन्नाम यन्न गृह्येतेति भावः । यत् = यद्घटितपाकजत्वं । साध्यमिति । श्यामत्वं साध्यमनुगतमिति भावः । ननु जन्यतासम्बन्धेन शाकपाकः, शाकपाकजत्वमेव वोपाधिः, शाकं विना भुक्तस्य तैलादेर्विजातीयश्यामरूपप्रयोजकत्वे मानाभावात्, तदुक्तं—"शाकेतरभुक्तद्रव्येण शरीरगतश्यामरूपसजातीयरूपस्य जनयितुमशक्यत्वाच्छाकावयवजन्यत्वस्य मित्रातनयशरीरे श्यामविशेषोत्पादप्रयोजकताया वैद्यकबोधिताया आवश्यकत्वेने"ति । एवञ्च शाकादित्वस्यानुगमेऽपि न क्षतिः, न च तथापि जन्यताननुगमः, नरीयश्यामत्वस्य तदवच्छेदकत्वेनानुगमादित्याशङ्क्याह अस्तु वेति । कथमपीति । उपाधिरनुगत इति शेषः । श्यामत्वं = शुद्धश्यामत्वम् । आहाराजन्यत्वात् = शाकपाकजत्वाप्रयोज्यत्वात् । शरीरेति । नरीयशरीरेत्यर्थः । तेन शाकपाकजत्वस्य काकादिश्यामत्वाव्यापकत्वेऽपि नासङ्गतिः । साध्यं = पक्षधर्मतावल्लभ्यम् । तच्चेति द्वितीयान्तम् । इदम् = शाकपाकजत्वम् । व्याप्तावित्यादि । व्याप्तौ येन रूपेण साध्यसाधनयोः प्रवेशस्तेनैव रूपेण तदीयव्यापकत्वाव्यापकत्वाभ्यां घटितस्योपाधिलक्षणस्य भवताऽभिहितत्वात्तादृशे एव लक्षणे मयाऽव्याप्तिरुक्तेत्यर्थः । दूषकताबीजसत्त्वे क्वचित्पक्षधर्मावच्छिन्नसाध्यव्यापकस्याप्युपाधेरभ्युपगमेन यथाश्रुतं त्यक्तम् । न च पुरुषश्यामत्वेन व्याप्तिः = नहि पुरुषीयश्यामत्वत्वेन रूपेण साध्यस्य व्याप्तौ प्रवेशो भवता कृतः । स श्यामो मित्रातनयत्वादित्यत्र शुद्धश्यामत्वस्यैव साध्यतया निर्दिष्टत्वादिति भावः । व्यापकांशे व्यर्थविशेषणताया अदोषत्वात् मित्रात-

धेरभिधेयत्वात्, न च पुरुषश्यामत्वेन व्याप्तिः, हेतुपक्षधर्मतयैव हि साध्यं पक्षधर्मः सिद्ध्यति, न व्याप्त्या, अन्यथा पुरुषपदस्याव्यवच्छेदकस्याविशेषणत्वापातात्। परम्परासम्बन्धिकज्जलादिलेपश्यामलत्वव्यवच्छेदकत्वे च संयुक्तश्यामपुरुषसमवेतश्यामत्वस्य परम्परासम्बन्धिनः कथं व्यवच्छेदः स्यात्। न च साध्यसाधनसम्बन्धादृष्टव्यभिचारत्वं साध्यव्यापकत्वम्; मा रूपसाक्षात्कृतिकरणादेस्तैजसादित्वे साध्ये

---

नयत्वे पुरुषश्यामत्वनिरूपितव्याप्तेः सत्त्वाद्यथाश्रुतं त्यक्तम्। ननु मास्तु पुरुषीयत्वस्य व्यापकतावच्छेदककोटिप्रवेशिता, तथापि पक्षधर्मताबललभ्यसाध्यव्यापकत्वस्योपाधितावटकत्वोपगमे पुरुषीयश्यामत्वव्यापकतायाः शाकपाकजत्वे सत्त्वेन नाव्याप्तिरित्यत आह हेतुपक्षधर्मतयैवेति। हेतुमतीतरविशेषबाधादिग्रहसहकारेणैवेत्यर्थः। हेतुमत्तया पर्वतेऽपि गृहीते महानसीयवह्निभिन्नवह्नियाधग्रहे महानसीयवह्नौ लाघवग्रहे वा पर्वतो महानसीयवह्निमानित्येवानुमितेरुदयाद्यथाश्रुतं नादृतम्। पक्षधर्मः सिद्ध्यति = व्यापकतानवच्छेदकरूपेणापि सिद्ध्यतीति यावत्। तथा च व्यापकतानवच्छेदकरूपप्रकारकत्वमनुमितौ निरुक्तपक्षधर्मताप्रयोज्यमेव न तु व्याप्तिप्रयोज्यमित्यर्थः। प्रकृते च व्यापकतानवच्छेदकपुरुषीयत्वविशिष्टश्यामत्वस्य पक्षधर्मताबलात्सिद्धौ किमुपाधिः करिष्यति, तदसिद्धौ च कथं तद्व्यापकत्वमुपाधाववगन्तव्यमिति भावः। पक्षधर्मावच्छिन्नसाध्यव्यापकत्वं तु न विवक्षाक्षमम्, घटः प्रत्यक्षो विभुत्वादित्यादौ साधनावच्छिन्नसाध्यव्यापकस्यात्मत्वोपाधेरसङ्ग्राहकत्वादितिध्येयम्। अन्यथेति। पुरुषीयत्वविशिष्टश्यामत्वविषयताया अपि व्याप्तिप्रयोज्यत्वे इत्यर्थः। पुरुषीयत्वस्यापि व्यापकतावच्छेदकेऽन्तर्भाव्यत्वादिति शेषः। पुरुषपदस्येति। प्रतिज्ञादिवाक्ये इतिशेषः। अव्यवच्छेदकस्य = अव्यवच्छेदकार्थकस्य। अविशेषणत्वापातादिति। प्रयोगानर्हतयाऽधिकोक्तयनौचित्यापत्तेः। हेतुतावच्छेदकसम्बन्धेन पुरुषस्यैव मित्रातनयत्वाधिकरणत्वादितिभावः। एवञ्च व्याप्यांशेऽपि यदा व्यर्थविशेषणत्वं न प्रमाणदूषणम्, तदा नतरां व्यापकांशे इत्यभ्युपगमेऽपि न क्षतिः। मित्रातनयनेत्रादिगतकज्जलादिनिष्ठश्यामलत्वस्य परम्परया मित्रातनयवर्तिनः व्यवच्छेदाय पुरुषीयत्वं विशेषणमित्याशङ्क्याह परम्परेति। मित्रातनये इत्यादिः। साध्यतावच्छेदकसम्बन्धस्यावश्यं वाच्यत्वात्समवायस्यैव तथात्वविवक्षया कज्जलादिश्यामलत्वव्यावृत्तिसिद्धौ पुरुषीयत्वं न विशेषणीयम्, सरलामिमां सरणिमरोचयमानस्य तु मित्रातनयसंयुक्तादिवस्त्रान्तरगतश्यामलत्वस्य स्वाश्रयसंयोगादिना मित्रातनयसम्बन्धिनः सिद्धिविघटनाय विशेषणान्तरमपि प्रक्षेप्यमापद्येतेत्याशयः। साध्यसाधनेति। न दृष्टो व्यभिचारो यस्य सोऽदृष्टव्यभिचारः, साध्यसाधनसम्बन्धोऽदृष्टव्यभिचारो येन तत्त्वमित्यर्थः, अदृष्टत्वमप्रमितत्वम्। व्यापकत्वस्य व्याप्तिनिरूपकतारूपत्वे व्याप्तिघटितत्वनिबन्धनदूषणपरिजिहीर्षयेत्थमुक्तम्, तद्वन्निष्ठभेदप्रतियोगितानवच्छेदकत्वरूपत्वे तु साध्यसाधनसम्बन्धव्यापकत्वमित्यभिधानमेव न्याय्यः। एतच्च साधनावच्छिन्नसाध्यव्यापकत्वविवक्षाया अप्युपलक्षणम्, प्रकृते उभयथाप्यव्याप्तेः परिहारादिति। नचेत्यत्र हेतुमाह मेति। भूदितिसम्बन्धः। करणादेरिति हेतौ पञ्चमी। करणमुत्पादनम्। चक्षुस्तैजसं रूपादिषु मध्ये रूपस्यैव व्यञ्जकत्वादित्यत्रोद्भूतरूपवत्त्वमुपाधिः स्यात्, ऊष्मादौ व्यभिचारेण शुद्धसाध्यव्यापकत्वाग्रहेऽपि प्रदीपादौ साध्यसाधनसम्बन्धव्यापकत्वग्रहात्, चक्षुष्युद्भूतरूपाभावेन साधनाव्यापकत्वाच्चेत्यर्थः। आदिपदत्रयेण गन्धसाक्षात्कारकरणादेर्घ्राणादौ पार्थिवादित्वे साध्ये उद्भूतगन्धवत्त्वादेर्जले रसवत्त्वेन प्रमेयत्वे साध्ये पृथिवीत्वस्य चोपाधित्वप्रसङ्गो बोध्यः। ननु वस्तुगत्या चक्षुषस्तैजसत्वेन तत्र साध्यसाधनसम्बन्धसत्त्वेऽप्युपाधेरभावेन न तस्य साध्यसाधनसम्बन्धव्यापकत्वम्, तथा च न वस्तुनिर्व्याप्तिरपितु ज्ञानातिव्याप्तिः, सा च न दोषावहा, सोपाधित्व-

भूद्भुद्भूतरूपवत्त्वादेरुपाधित्वम् । साधनेनापि च विशेषणतया निवेश्येन यदि केवल-साध्यव्यापकं व्यवच्छेद्यम्, तदा तस्य व्यभिचारशङ्काऽऽधानक्षमस्याप्युपाधित्वं न स्यात् । अथ न किञ्चिद्व्यवच्छेद्यं तदा विशेषणत्वासिद्धिरेव, नहि प्रयोजनमात्राद्विशेषण-मर्थवद्भवति, किन्तु किञ्चिद्व्यवच्छेदादिति शरीराजन्यत्वमिवाकर्तृकत्वे व्यक्तमसिद्धौ पर्यवस्येदिति ।

---

ज्ञानस्य सन्देतावपि दूषकत्वोपगमादिति यदि केनचिदाशङ्क्यते तदाप्याह साधनेनापीति । वस्तुतस्त्वेवं सति ज्ञानातिव्याप्तिपरिहारोपायाभावेन परं प्रति चक्षुरादौ तैजसत्वादिसाधनासम्भव एवेत्यवधेयम् । विशेषणतया = उपाधिनिरूपितव्याप्यतावच्छेदकतया । निवेश्येन = निवेशितेन । केवलेति पक्षधर्माव-च्छिन्नेत्यस्याप्युपलक्षणम् । अयं गौरश्वत्वादित्यत्र केवलस्यैव साध्यस्य व्यापकं सास्नादिमत्त्वम्, साधन-साध्यसम्बन्धस्यैवाप्रसिद्धेः, धूमवान् वह्नेरित्यादौ तु केवलसाध्यस्यापि व्यापकमार्द्रेन्धनं साध्यसाधन-सम्बन्धस्यापि व्यापकमेव, घटः प्रत्यक्षो विभुत्वादित्यादौ तु बहिर्द्रव्यत्वरूपपक्षधर्मावच्छिन्नस्यैव साध्य-स्य व्यापकमुद्भूतरूपवत्त्वम्, न तु साध्यसाधनसम्बन्धस्येति द्वयोर्व्यवच्छेदः स्यात्, नचायं युक्तस्तयो-र्लक्ष्यत्वादित्यव्याप्तिरित्यर्थः । व्यभिचारशङ्काधानक्षमस्येति लक्ष्यतावच्छेदकावच्छिन्नत्वोपपाद-नाय । स्वव्यभिचारेण साधने साध्यव्यभिचारग्रहजननयोग्यस्येति तदर्थः । उपाधिनिश्चयेन साध्यव्यभि-चारनिश्चयजननादुपाधिसन्देहेन च साध्यव्यभिचारसन्देहजननादुभयसाधारण्याय ग्रहेति । वस्तुगत्यो-पाधेरपि कदाचिद्व्यभिचारग्रहानुपधायकत्वसम्भवादव्याप्तिर्माभूदिति योग्यतानुधावनम् । विस्तरस्त्व-न्यत्र । स्वाभावेन साध्याभावोन्नायकत्वं तु न लक्ष्यतानियामकम्, घटः प्रत्यक्षो विभुत्वादित्युक्तस्थले पक्षवृत्त्युद्भूतरूपवत्त्वस्यानुपाधितापत्तेः, साधनाव्यापकत्वघटितलक्षणस्यानौचित्यापत्तेश्च, तन्मते साधन-व्यापकस्यापि क्वचिदुपाधित्वादित्युक्तं प्राक्, सन्दिग्धोपाधेरदोषत्वापत्तेश्च, तत्र व्यापकत्वसन्देहे पक्षगत-त्वसन्देहे वा तदभावेन साध्याभावोन्नयनासम्भवादित्यभिप्रेत्य व्यभिचारेत्यादिकमुक्तं न तु साध्या-भावोन्नयनक्षमस्येति । प्रयोजनमात्रादिति । केवलसाध्याव्यापकस्य शाकपाकजत्वस्य सङ्ग्रह एव प्रकृते प्रयोजनम् । विशेषणमिति । कश्चिद्धर्मं इत्यर्थः । अर्थवद्भवति = विशेषणलक्षणाक्रान्तं भवति । अन्यथा व्याघातात् । व्यवच्छेदकत्वस्य विशेषणलक्षणघटकता प्रसिद्धैवेति भावः । व्याप्यतावच्छेदकगर्भ-प्रविष्टं भवतीति वार्थः । इतीति । विशेषणत्वानुपपत्ताविस्यर्थः । अकर्तृकत्वे साध्ये । असिद्धौ = व्याप्य-त्वासिद्धौ । यथा क्षितिरकर्तृका शरीराजन्यत्वादित्यत्र स्वरूपासिद्धिवारकमपि व्याप्तिग्रहानुपयुक्तत्वाच्छ-रीरेति व्याप्यत्वासिद्ध्यापादकम्, व्यर्थविशेषणत्वस्य हेत्वाभासत्वानभ्युपगमे स्वशक्तिविशेषज्ञापकतया प्रयोक्तृनिग्रहाधायकं वा, तथा वह्निर्धूमव्यभिचारी वह्न्यवच्छिन्नधूमव्यापकव्यभिचारित्वात्, वह्निधूम-सम्बन्धव्यापकव्यभिचारित्वाद्वेत्यत्र धूमव्यापकव्यभिचारित्वस्य धूमसम्बन्धव्यापकव्यभिचारित्वस्य वा हेतुत्वसम्भवेन परिशिष्टं व्याप्यत्वासिद्धेः प्रयोक्तृनिग्रहस्य वाऽऽपादकं स्यादिति । व्यक्तमित्युक्त्या चेदं व्यञ्जितम्—साधनावच्छिन्नसाध्यव्यापकतावच्छेदकरूपावच्छिन्नव्यभिचारत्वघटकव्यापकतावच्छेदकतात्म-काभावस्याखण्डस्य शुद्धसाध्यव्यापकतावच्छेदकत्वात्मकाभावान्तिरिक्ततया तादृशाखण्डाभावघटितहेतोः शुद्धसाध्यव्यापकतावच्छेदकत्वरूपाभावघटितरूपाघटिततया न वैयर्थ्यमिति स्वकपोलकल्पितपरिभाषा-वासनास्कन्दितमानसानामुक्तिर्नादर्तव्येति, स्फुटं सखण्डत्वेनानुभूयमानेऽप्यखण्डत्वस्याभ्युपगमे शरीर-जन्यत्वाभावस्याप्यखण्डतामतिरिक्ततां च को वारयेदिति जितम्भैनैः स्यादिति । इदन्तुबोध्यम्—वह्नि-

किञ्चाभासे केवलव्यतिरेकिणि पक्षधर्मे हेतौ 'जीवच्छरीरं पृथिव्याद्यष्टद्रव्यातिरिक्तानेकद्रव्यवत् प्राणादिमत्त्वा'दित्यादौ कथमिदमुपाधिलक्षणं व्यवस्थाप्यम्, तद्धाभासे व्यतिरेक्यनुमानात्मनि यत्साध्यं तदुपाधिना व्याप्तं वर्तते तस्य पराभिमतस्य क्वचित्सिद्ध्यापत्तेः। व्यतिरेकव्याप्तावुपाधिश्चेत्तर्हि व्यतिरेके यद्व्याप्यं तस्य व्याप्य

---

धूमव्यभिचारी आर्द्रेन्धनव्यभिचारित्वादिति विशिष्य व्यभिचारोन्नयनाभ्युपगमे न वैयर्थ्यशङ्कावकाशः, उपाधेर्व्यापकत्वादिनोपन्यासस्यानुकूलतर्कमात्रप्रदर्शकत्वात्, नचोपाधेः साधनावच्छिन्नसाध्यव्यापकतया साध्यसाधनसम्बन्धव्यापकतया चोपन्यासे साधनावच्छिन्नसाध्यव्यभिचारस्तदुभयसम्बन्धव्यभिचार एव वा सिद्ध्येन्न तु शुद्धसाध्यव्यभिचार इति वाच्यम्; साधनाव्यभिचारित्वेन हेतो विशेषणीयतया शुद्धसाध्यव्यभिचारस्यैव साध्यत्वसम्भवादित्यन्यत्र विस्तरः। तस्मात्पूर्वोक्तस्थलेऽव्याप्तिरेव दूषणं सारमिति।

ननु यद्धर्मविशिष्टसाध्यव्यापकत्वं तद्धर्मविशिष्टसाधनाव्यापकत्वमित्यादिप्रकारान्तरविवक्षायां नोक्ताव्याप्तिः, शुद्धसाध्यव्यापकस्थले किञ्चिद्धर्मविशिष्टसाध्यत्वेन व्याप्यत्वाभावेऽपि तद्भिन्नभेदप्रतियोगितानवच्छेदकत्वरूपतद्व्यापकत्वसम्भवादित्याशङ्क्य "एतदर्थमपि विशेषणीय"मित्यादिग्रघट्टके निवेदितदोषाणां सत्त्वे एवाह किञ्चेति। आभासे पक्षधर्मे इति। व्याप्तिपक्षधर्मताविशिष्टः सद्धेतुरेव, असङ्कीर्णबाधोदाहरणे मानाभावादित्यावेदितम्, एवञ्च पक्षधर्मताविशिष्टे अभासत्वं व्याप्यभावप्रयुक्तमेव वाच्यम्, नचानौपाधिकत्वे सति व्याप्यभाव इत्युपाधिरवश्यं वाच्य इति सूचनार्थेते विशेषणे इति। केवलव्यतिरेकिणीति। असत्सपक्षो हि केवलव्यतिरेकीति तत्र साध्यव्यापकतानिश्चयो दुर्घटः, अन्यथा केवलव्यतिरेकित्वव्याकोपात्, पक्षे तु साध्यं सन्दिग्धमेवेत्युपाधिलक्षणाप्रवृत्तिप्रदर्शकमिदं विशेषणम्। जीवच्छरीरमिति। मृतेऽपि लोकव्यवहाराद्यनुसारेण शरीरत्वोपगमाज्जीवदितिविशेषणं न व्यर्थम्, पक्षतावच्छेदकावच्छेदेनानुमितावसिद्धिवारकत्वात्, अत एव जीवच्छरीरं सात्मकं प्राणादिमत्त्वादितिन्यायवार्तिकमण्यादौ प्रयोगो दृश्यते, एवञ्च चेष्टोपलक्षितत्वस्य मृतसाधारण्यान्मृते शरीरत्वानुपगमो नोचित इति भावः। पृथिव्याद्यष्टकमात्मव्यतिरिक्तं द्रव्यं ग्राह्यम्, अनेकेतिविशेषणमाभासत्वसम्पत्तये, स्ववृत्तिसुखाद्यवच्छेदकत्वसम्बन्धेन साध्यता, न तु संयोगेन, अनेकविभुजीववादे सिद्धसाधनात्। तादृशानेकद्रव्याणां चात्मनां नानाशरीरेषु प्रत्येकं प्रसिद्धानामेकत्र साध्यतेति नाप्रसिद्धसाध्यता। व्यतिरेक्यनुमानात्मनि = असत्सपक्षे। क्वचिदिति। पक्षे वा तद्भिन्ने वेत्यर्थः। उभयथापि नेष्टापत्तिः, अपसिद्धान्तात्। ननु व्यतिरेकसहचारेणान्वयव्याप्तिरेव गृह्यत इति मते स्यादुक्तानुपपत्तिः, व्यतिरेकव्याप्तेर्ग्रहोपगमे तु साधनाभावरूपसाध्यव्यापकत्वं साध्याभावरूपसाधनाव्यापकत्वञ्चादायोपाधिलक्षणसम्भवः, वस्तुतस्तु नोक्तमतेऽप्यनुपपत्तिः, साधनाभावस्य साध्याभावाव्यापकत्वे साधनस्य साध्यव्याप्यत्वानुपपत्तेरित्याशयवानाशङ्कते व्यतिरेकव्याप्ताविति। व्यतिरेकव्याप्तौ यत्साधनत्वेन प्रविष्टं साधनव्यतिरेकव्याप्यत्वेनाभिमतं साध्याभावरूपं तत्रेत्यर्थः। तत्रोपाधिश्चाव्याप्यत्वसम्बन्धेन, तथैव तद्व्यापकत्वस्योपाधौ सम्भवात्, प्रकृते च नैरात्म्याभोगायतनत्वादिकमुपाधिः सम्भाव्यते घटादौ तस्य प्राणादिमत्त्वाभावरूपसाध्यव्यापकत्वनिश्चयात्, साधनाव्यापकत्वं तु तस्य सन्दिग्धम्, तादृशानेकद्रव्याभावस्य जीवच्छरीरेऽभोगायतनत्वाद्यभाववति सन्देहात्. निश्चये तु साधनाव्यापकत्वमपि निश्चितमेवेति भावः। व्यतिरेके यद्व्याप्यं=साधनव्यतिरेकनिरूपितव्याप्तिमद्यत् साध्याभावस्वरूपं साधनं। तस्य व्याप्य उपाधिः = उपाधिस्तस्य व्याप्य एव मन्तव्यः, ननु तद्विरुद्धः, तद्व्यापकत्वं त्वशक्यशङ्कमेव, साधनाव्यापकत्वक्षतेः। अन्यथा = साध्याभावरूपसाधनविरुद्धत्वस्योपाधावुपगमे। अन्वये = अधिकरणे, अर्थं आद्यजन्ततयैदर्थलाभसम्भवः। साध्यान्वयापत्तेः = साध्याधिकरणतापत्तेः। अयम्भावः—विरोधो हि परस्परा-

उपाधिरवश्यं मन्तव्यः, अन्यथोपाधेरन्वये साध्यान्वयापत्तेरित्युपाधिव्यतिरेकव्याप्त्य-वश्यंभावस्याभ्युपगम्यतयोपाधेर्यद्व्यापकं तद्व्यतिरेक उपाधिव्यतिरेकस्य व्याप्यतया मन्तव्य इति परसाध्यापत्तिः, असमव्याप्तिकयोरन्वयव्याप्तिसाध्यसाधनभाववैपरीत्येन व्यतिरेकव्याप्तेरिति। न च दोषान्तरमेव तर्हि वाच्यमिति वाच्यम्, हेतोः पक्षधर्मत्वस्थितौ व्याप्तिसत्यर्थं त्वयोपाध्युपगमध्रौव्यात्।

भावव्याप्यत्वमसामानाधिकरण्यपर्यवसन्नम्, नचावृत्तिरुपाधिरिति साध्यतावच्छेदकसम्बन्धावच्छिन्न-प्रतियोगिताकसाध्याभावासमानाधिकरणस्य तस्य साध्यतावच्छेदकसम्बन्धेन साध्यसामानाधिकरण्य-मेव वक्तव्यम्, तच्च न पक्षे वक्तुं शक्यम्, तत्रोक्तसम्बन्धेन साध्याभ्युपगमप्रसङ्गात्, उपाधेस्तत्राभा-वाच्च, किन्तु तद्व्यतिरिक्ते, तथा च केवलव्यतिरेकित्वव्याकोप इति। वस्तुतस्त्वपसिद्धान्तापादनमेव विवक्षितम्, असद्भूतौ केवलव्यतिरेकित्वव्याकोपविभीषिकाया असम्भवात्। एतेन—स्वप्रकाशप्रस्तावे केवलव्यतिरेकिण्युपाध्यसम्भवप्रदर्शनावसरे तत्त्वप्रदीपिकायां 'साध्यसद्भावे मा भूदुपाधिः साध्या-भावे तु भविष्यती'ति ग्रन्थेनान्वयव्याप्तावुपाध्यसम्भवेऽपि व्यतिरेकव्याप्तावुपाधिसम्भवमाशङ्क्य 'यत्रो-पाधिरस्ति तत्र साध्यं नास्तीति साध्याभावस्य व्याप्यत्वेनोपाधिरेष्टव्य' इति प्रकृतग्रन्थसमुत्थितम-भिधाय 'अन्यथोपाधिसद्भावेऽपि साध्याभावोऽव्यापकतया न वर्तते चेदुपाधिसद्भावे साध्यं स्यात्, तच्च न पक्षे, तत्रोपाधिसद्भावे तस्य साधनव्यापकत्वप्रसङ्गा'दिति यदुक्तं तदसङ्गतं द्रष्टव्यम्, व्यतिरेकव्याप्तौ साध्याभावस्य साधनतया प्रविष्टत्वेनान्वयव्याप्तीयसाधनव्यापकताप्र-सङ्गदानानौचित्यात्, व्यतिरेकव्याप्तीयसाधनव्यापकत्वप्रसङ्गस्तु नैवास्ति, पक्षे साध्यो-पाध्योः सामानाधिकरण्योपगमे साध्याभावात्मकसाधनस्य वृत्तेर्विरुद्धतयाऽसम्भवात्. तस्मात्सा-धनव्यापकत्वप्रसङ्गस्थाने परं प्रति पक्षे स्वप्रकाशत्वस्वीकारप्रसङ्ग एव तत्र दातुमुचित इति सुधीभिरव-धेयम्। नन्वस्तु साध्याभावव्याप्य एवोपाधिः प्रकृते तु किमायातमित्यत आह इत्युपाधेरिति। इतिपदेनोपाधेः साध्याभावव्याप्यत्वस्थितेः परामर्शः। सा च 'व्याप्यतया मन्तव्य' इत्यत्र हेतुः। व्यतिरेकव्याप्त्यवश्यम्भावस्येति। व्यतिरेकिण एव धर्मस्योपाधित्वम्, तथैव तदभावस्य तद्व्यभि-चारस्य वा प्रसिद्धौ तेन साध्याभावस्य साध्यव्यभिचारस्य वोन्नयनसम्भवात्, अतएव केवलान्वयिन उपाधित्वव्युदासाय साधनाव्यापकत्वमुपाधित्वे प्रवेशयत इति भावः। यद्व्यापकं साध्याभावात्मकं साधनं तद्व्यतिरेकस्तादृशानेकद्रव्यात्मकः। उपाधिव्यतिरेकस्य भोगायतनत्वादिरूपस्य। व्याप्यतयेति। तथाच भोगायतनत्वस्य जीवद्देहे एव वृत्तेस्तद्व्याप्यता तादृशानेकद्रव्ये पक्षान्तर्भावेणैव स्यादिति पक्षे साध्यसत्त्वप्रसङ्ग इतिभावः। उपाधेः साध्याभावविरुद्धत्वोपगमपक्षे तु केवलव्यतिरेकित्वव्याकोपो वा पक्षातिरिक्ते साध्यसत्त्वप्रसङ्गो वोक्तो न तु पक्षे साध्यसत्त्वप्रसङ्गइति न सन्दर्भाशुद्धिः। उपाधेः साध्याभावव्याप्यत्वे साध्ये उपाधिविरहव्याप्यत्वमुक्तं तत्र हेतुमाह असमव्याप्तिकयोरिति। गोत्वसा-स्नादिमत्त्वयोः समव्याप्तिकत्वात्तदभावयोरपि समव्याप्तिकत्वम्, न तु वैपरीत्येन व्याप्यव्यापकभावः, प्रकृते तु साध्याभावोपाध्योर्धूमहुताशनयोरिव न समव्याप्तिकत्वम्, तादृशानेकद्रव्याभावस्याभोगायतन-त्वादिव्यापकत्वेऽपि जीवच्छरीरे व्यभिचारेण तद्व्याप्यत्वाभावात्। अन्वयव्याप्तिसाध्यसाधनभावेति। अन्वयव्याप्तीयव्याप्यव्यापकभावेत्यर्थः। व्यतिरेकव्याप्तेः = व्यतिरेकव्याप्तीयव्याप्यव्यापकभावात्। तर्हि = उक्तानुमाने उपाधेरसम्भवे। दोषान्तरं न तावत्स्वरूपासिद्धिरित्याह पक्षधर्मत्वस्थिताविति। नापि बाधः, तथासति पक्षस्यैव विपक्षत्वेन तद्वृत्तितया हेतोर्व्यभिचारितावश्यम्भावः, व्यभिचारे चाव-श्यमुपाधिरिति सोऽत्रावश्यं निरूप्यइत्यभिप्रायेणाह उपाध्युपगमध्रौव्यादिति। त्वया = व्यभिचारे

भवतु वा या काचिद्व्याप्तिर्नाम, तत्सत्त्व एवानुमितिभावात्तस्याश्चानुमितेश्च व्याप्तिरेष्टव्या, ततश्चात्माश्रयः, तद्भेदे चाननुगमाविनिगमौ स्यातामिति ॥ इति व्याप्त्युपाध्योः खण्डनम् ।

## अथ पक्षताखण्डनम् ।

व्याप्तिपक्षधर्मते अनुमितिं भावयत इति वदन्ति, तत्र कोऽयं पक्षो नाम यद्धर्मत्वं पक्षधर्मत्वम् । सिषाधयिषितधर्मा धर्मीतिचेन्न, सिषाधयिषा हि प्रतिपिपादयिषा वा स्यात्प्रतिपित्सा वा, आद्ये स्वार्थानुमित्यनुदयप्रसङ्गः, द्वितीये चासुरभिगन्धानुमेयकुत्सितरसविषयस्वार्थानुमित्यनुदयप्रसङ्गः ।

---

चायदयमुपाधिरिति वदता । एतेनैकेनैव चेतनेन प्राणादिमत्त्वस्य हेतोरुपपत्तेरप्रयोजकत्वमेवात्र दोषान्तरमित्यपि प्रतिविहितम्, उपाध्यनिरूपणेऽनौपाधिकत्वस्यैवानुकूलतर्कत्वेनाप्रयोजकतोक्तेरसम्भवादित्यावेदितत्वात् ।

"शास्त्रे चानेकहेतूक्तिर्न दोषाय कथास्विव । शिष्यः कश्चित्क्वचित्किञ्चिदनुस्मृत्याभिधास्यती"ति न्यायमनुसृत्याह भवतु वेति । तत्सत्त्वे एवेति । अव्याप्येऽपि व्याप्तिभ्रमेणानुमितिदर्शनाद्यद्यपि व्याप्तिं व्यभिचरत्यनुमितिः, वस्तुगत्या साध्यवति व्याप्तिभ्रमाधीनानुमितेरपि प्रमात्वदर्शनाच्च सदनुमितिरपि, तथापि यादृशानुमितेर्व्याप्तिप्रमितिजन्यतया व्याप्तिप्रयोज्यत्वं तादृशानुमित्यभिप्रायेणायं ग्रन्थः । तस्याः = तन्निरूपिता, अनुमितेः = अनुमितिनिष्ठा । अत्र व्याप्यता यदि समवायेन, तदा व्यापकता स्वप्रकारकप्रमितिसमवायितया, यदि तु व्याप्यता स्वजनकतावच्छेदकप्रकारतया, तदा व्यापकता स्वरूपसम्बन्धेन । व्याप्तेः साध्यसाधनादिभेदेन भेदानभ्युपगमे आह आत्माश्रय इति । व्याप्तिनिरूपितव्याप्तेस्तादृशानुमितावुपगमे निरूप्यनिरूपकभावस्यैकत्रादृष्टचरत्वेनात्माश्रयात्, रूपभेदेनापि तस्य विशिष्टशुद्धयोर्भेदाभेदादिविकल्पेनानन्तरूपाभ्युपगमप्रसङ्गेन च पूर्वं निरस्तत्वात् । एवं व्याप्तौ प्रमेयत्वादिव्याप्तेरावश्यकत्वेनाप्यात्माश्रयो द्रष्टव्यः । तद्भेदे = साध्यादिभेदेन व्याप्तेर्भेदे । अननुगमेति । अत्र यद्वक्तव्यं तदत्रैव प्रवट्टके "कथं ह्यवगन्तव्यमिदमेव साधयितुमर्हमिदं ने"ति पङ्क्तिव्याख्यायामावेदितम् । तदेवाभिप्रेत्याविनिगमोऽप्युक्तः, अनुगमाननुगमपक्षयोर्विनिगमकाभाव इत्यर्थः । पक्षद्वयेऽपि गुणदोषयोः सद्भावस्योक्तत्वात्, तथाचानिर्वचनीयतेति भावः । इतिखण्डनशारदायां व्याप्त्युपाध्योः खण्डनम् ।

भावयतः = प्रयोजयतः, व्याप्तेः पक्षतोपलक्षितधर्मिवृत्तितायाश्च ज्ञानस्य पक्षतायाश्चानुमितिजनकत्वेन जनकजनकतावच्छेदकसाधारणप्रयोजकत्वस्य तात्पर्यात् । कोऽयंपक्षः = केयं पक्षता । यद्धर्मत्वं = यदाश्रयधर्मत्वं । धर्मेति । कर्मधारयपूर्वपदत्वेन केवलपूर्वपदस्योपपत्त्याऽनिष्टसम्भवः । धर्मपदं च स्वरूपपरम्, तथाच तद्धर्मावच्छिन्नोद्देश्यकतद्धर्मावच्छिन्नविधेयकतत्पुरुषीयसाधनेच्छा तद्धर्मावच्छिन्नोद्देश्यकतद्धर्मावच्छिन्नविधेयकतत्पुरुषीयानुमितौ पक्षतेत्यर्थः । तेन विनष्टादिसाध्यकानुमितौ सिषाधयिषितसाध्यवत्त्वस्य पक्षेऽसम्भवेऽपि न क्षतिः, स्वविषयीभूतविशेष्यतावच्छेदकधर्मवत्त्वसम्बन्धेन तस्याःपर्वतादौ पक्षव्यवहारनियामकत्वलाभाय धर्मीत्युक्तम् । केचित्तु—सिषाधयिषितः साध्यरूपो धर्मो यस्य पुरुषस्य स तथा, धर्मी = पुरुषः पक्षतावान्, अनुमितिपक्षतयोः पुरुषे सामानाधिकरण्येन कार्यकारणभावः, इदं च न पक्षपदप्रवृत्तिनिमित्तकथनम्, तेन पर्वतादावस्याभावेऽपि न क्षतिः, अनुमित्युद्देश्यत्वं तु पक्षपदप्रवृत्तिनिमित्तम् । एवमनवधारितधर्मा धर्मीत्यादिवक्ष्यमाणलक्षणेष्वपि द्रष्टव्यमित्याहुः । प्रतिपिपादयिषा = अनुमिमापयिषा । प्रतिपित्सा = अनुमित्सा । स्वार्थेति । परस्य प्रतिपादनीयस्य तत्राभावादितिभावः । असुरभिगन्धानुमेयेति । असुरभिगन्धहेतुकेत्यर्थः । परार्थेऽनुमित्सां विनाऽनु-

मित्यनुदयस्येष्टत्वमभिप्रेत्य स्वार्थेत्युक्तम् । अप्रतिपिरिसितविषयकानुमितिमात्रस्योपलक्षणमिदम् । तथा च व्यतिरेकव्यभिचाराञ्चोक्तपक्षता कारणम् । भगवदिच्छामादाय पक्षतासम्पत्तिस्तु नेदृशस्थले, तस्या नित्यतया सिद्धिसत्त्वेऽप्यनुमित्युत्पादापत्तेरितिभावः । ननु तादृशानुमित्साजन्यतावच्छेदकं सिद्ध्युत्तरानुमितित्वघटितमिति नोक्तदोषः, अथैवमनुमित्साया अनुमितिविशेषं प्रत्येव हेतुत्वात्तां विनापि सिद्धिदशायामनुमितिसामान्यं स्यात् । न च विशेषसामग्रीं विना सामान्यसामग्र्याः कार्यानिर्जकत्वात् प्रकृते च तत्तदनुमित्युत्पादकतत्तत्परामर्शव्यक्तीनां विशेषसामग्रीत्वात्तदभावादेव नानुमितिसामान्यापत्तिरिति वाच्यम्, कदाचिदनुमित्युत्पत्तिकालेऽपि तत्तत्परामर्शरूपविशेषसामग्रीसम्भवेनानुमित्यनन्तरमप्यनुमित्यापत्तेः, क्षणविशेषविरहस्य सामान्यकार्यानुत्पादप्रयोजकत्वोपगमे तु गौरवं क्षणविशेषाणामेव सर्वत्र कारणत्वसम्भवेन कारणान्तरकल्पनोच्छेदप्रसङ्गश्चेतिचेन्न, सिद्ध्युत्तरानुमितौ सिद्ध्यभावस्य हेतुत्वान्तरकल्पनात् । न च कार्यकारणभावद्वयप्रसङ्गाद्गौरवम्, अनुमित्साविरहविशिष्टसिद्ध्यभावस्य हेतुत्वकल्पने एव गौरवाधिक्यात्, विशेषणविशेष्यभावे विनिगमनाविरहेण प्रतिबन्धकताद्वयस्य गुरुशरीरस्य स्वयोपगन्तव्यत्वादितिचेदत्र केचित्, सिद्ध्युत्तरानुमितित्वं हि सिद्ध्यव्यवहितोत्तरानुमितित्वम्, सिद्ध्यव्यवहितोत्तरत्वञ्च यथा स्वध्वंसाधिकरणसमयध्वंसानधिकरणत्वे सति स्वाधिकरणसमयध्वंसाधिकरणत्वरूपं तथा विनिगमनाविरहात्स्वाधिकरणसुखवृत्तित्वे सति स्ववृत्तिप्रागभावप्रतियोगित्वरूपमपि, अधिकरणत्वं वृत्तित्वञ्च कालिकेन ग्राह्यम् । स्वस्य स्वाव्यवहितोत्तरत्वप्रसङ्गवारणाय विशेष्यदलम् । एवं सुखपदस्थाने दुःखादिपदप्रक्षेपेण निर्वाच्यम् । सुखदुःखेच्छाद्वेषप्रवृत्तिनिवृत्तिशब्दानां सप्तानामेव क्षणद्वयमात्रावस्थायितया विनिगमनाविरहेणोत्तरत्वानुत्तरत्वघटकत्वादित्यनेककार्यकारणभावप्रसङ्गः, तस्मादनुमित्साविरहविशिष्टसिद्ध्यभावस्यैव पक्षतात्वमुचितमिति । किन्तु तस्यापि पक्षतावच्छेदकसाध्यतावच्छेदकादिघटितसिद्धिघटितत्वेन तद्भेदेन पक्षताया भेदात्पृथक्कार्यकारणभावस्यावश्यकत्वात्नानुमितिमात्रं प्रति पक्षता हेतुः, यत्रक्षसाध्यकपरामर्शकालीनसिद्धिदशायामनुमित्सा तत्र पक्षताया अनुमितिहेतुत्वाभावेऽपि क्षतिविरहात्, पक्षतायाः कारणताकल्पननिर्वाहस्य सिद्धिसत्त्वेऽनुमित्यनुत्पादस्य तत्राभावात् । किञ्च यत्रक्षसाध्यकपक्षे सिद्ध्यनन्तरं कदाप्यनुमितिर्न जाता, तत्रेच्छानिवेशो प्रयोजनाभावेन सिद्ध्यभावस्यैव पक्षतात्वं वाच्यम् । अनुमित्सायाश्च 'अनुमिनुयाम्, प्रत्यक्षादिभिन्नं ज्ञानं मे जायता'मित्यादिरूपाया बहुविधपक्षसाध्यकस्थले एकविधानुमित्साया उत्तरमेवानुमितिस्तत्र तादृशानुमित्सैव पक्षता, साध्यविशेष्यकानुमितौ तु साध्यज्ञानाभाव एव सा, साध्यज्ञानमात्रस्य तत्र विरोधित्वादिति दुर्वारानुगमपङ्कनिमग्ना सा । वस्तुतस्त्वनुमित्सा न क्वाप्यनुमितौ हेतुर्मानाभावात् । तद्विषयकेच्छा हि क्वचित्तत्साधनसम्पादने उपयुज्यते, न तु कश्चिदनुमित्सतीत्येतावता सिद्धिकालीनपरामर्शोऽनुमितिं जनयेत्, इच्छया वस्तुशक्ति विपर्यस्यतस्तु महायोगिता. अत एव कृतिनिरूपितसाध्यत्वाख्यविषयतापर्यवसन्नस्य स्वेच्छाधीनकृतिसाध्यत्वस्य विधेयताप्रयोजकस्य ज्ञानेऽभावेन तस्य न विधेयत्वमिति ब्रह्ममीमांसकानामुद्घोषः । यदाहुश्चन्द्रिकाकृतः-"नहि ज्ञाने साध्यत्वाख्यविषयतया कश्चित्प्रवर्तते । ननु बाधकालीनमिच्छाजन्यं ज्ञानमाहार्यं प्रसिद्धमिति चेन्न, तादृशविषयताविशिष्टाहार्यास्यवृत्तेर्ज्ञानत्वाभावात्, अतएव तादृशविषयत्वावच्छेदेनैव ज्ञानत्वाभावः कल्प्यते, नह्याहार्यवृत्तौ तादृशविषयतावत्यन्यस्मिन्वा जानामीत्यनुभवो लोकानाम्, इच्छाजन्यज्ञानत्वेन तार्किकसम्मते तु तत्तदिच्छानां विशिष्य हेतुत्वस्यावश्यकत्वात्प्रमाणस्य तत्र हेतुत्वमप्रामाणिकम्, अत एव तस्य न प्रमात्वमपि, अन्यथा तत्पूर्वमिन्द्रियसंयोगाद्यनन्तव्यक्तीनां ज्ञानहेतूनां कल्पने महागौरवात्, अनुमित्यादाविच्छाजन्यत्वकल्पनं तु प्रक्रियामात्रम्, सिद्धेः प्रतिबन्धकत्वे एव गौरवेणाननुभवेन च प्राभाकराणां विवादा"दिति । एतेन-

पक्षताया अनुमित्यहेतुत्वमते विनापि वह्न्यादिलिङ्गकवह्न्याद्यनुमित्सां तादृशानुमित्दुरत्या तत्र तादृशानुमित्सायाः कारणत्वासम्भवात् प्रत्यक्षादिसामग्र्यभावस्य तत्र कारणत्वोक्तौ चानुमित्सासत्त्वेऽपि सत्यां प्रत्यक्षादिसामग्र्यामनुमित्यनापत्तेः, न चेष्टापत्तिः, अनुमित्सायाः उत्तेजकत्वस्य तवापि सम्मतत्वात्, वह्न्यादिलिङ्गकवह्न्याद्यनुमित्साविरहविशिष्टप्रत्यक्षादिसामग्र्यभावस्य तत्र कारणत्वे तु गौरवम्, पक्षताहेतुत्वमते तु तादृशानुमितेरिच्छानियतत्वाल्लघीयस्या इच्छाया एव तत्र हेतुत्वम्, सैव च तत्र पक्षता, अन्यथा साध्यस्यैव तत्र लिङ्गतया तज्ज्ञानस्य प्रागपेक्षणीयत्वात्सिद्धिसत्त्वादनुमितिर्न स्यादिति—बालालापायितम्, इच्छाजन्यत्वस्य ज्ञानेऽप्रामाणिकत्वादिति । एवञ्चानुमित्सां विनाऽपि प्रत्यक्षादिसामग्रीविरहे सिद्ध्यात्माऽपि परामर्शः प्रसूतेऽनुमितिम्। सति चैवं सिद्ध्यभावोऽपि न क्वाप्यनुमितौ हेतुः, परार्थानुमानस्थले चार्थान्तरविधयैव सिद्धसाधनं दूषणम्, सिद्धेऽर्थे आकाङ्क्षाविरहादिति न तस्य कथायामनुद्भावनप्रसङ्गः । नच सिद्ध्यभावस्यानुमित्यहेतुत्वेऽनुमित्यनन्तरमुत्पन्नव्यक्तिरेव कुतो नोत्पद्यते इति वाच्यम्, उत्पन्नव्यक्तेरेव स्वोत्पत्तौ प्रतिबन्धकत्वात्, प्रागभावस्याप्रामाणिकत्वेनान्यत्राप्युत्पन्नस्य पुनरुत्पादवारणायास्या एव गतेरादर्तव्यत्वात् । यत्तु—समानविषयकप्रत्यक्षसामग्रीदशायामनुमित्यनुत्पादाद्वह्न्यादिप्रत्यक्षजनकत्तत्तदसाधारणकारणव्यक्तीनामेव वह्न्याद्यनुमितिविरोधित्वं वाच्यम्, कालादिसाधारणसामग्र्यास्तथात्वे गौरवात्, तथा च वह्निचक्षुःसंयोगादिव्यक्तीनामिव वह्न्याद्यात्मकविशेषणादिविषयकतया वह्निमत्ताप्रत्यक्षहेतूनां पर्वतो वह्निमानित्यादिसिद्धिव्यक्तीनामपि तादृशानुमितिविरोधित्वमावश्यकम्, विनिगमकाभावात्, एवञ्च तत्रैव पर्वतो वह्निमानित्याकारकनिश्चयत्वेनानुगतरूपेण तत्तत्सिद्धिव्यक्तीनां तादृशानुमितिविरोधित्वं कल्प्यते लाघवात्, ननु तत्तत्सिद्धिव्यक्तित्वेन गौरवादित्यवश्यं पक्षताऽनुमितिहेतुरिति, तदचारु, विशिष्टबुद्धित्वेन विशेषणज्ञानत्वेन च कार्यकारणभावस्याप्रामाणिकत्वात्, विशेषणविशेष्याभ्यां युगपत्सन्निकर्षादेव प्रत्यक्षोपपत्तेः, घटस्यापि कथञ्चिद्विशेषणत्वेन तज्ज्ञानात्पटविशिष्टबुद्धेरप्यापत्तेश्च । आह च शिरोमणिः—विशेषणज्ञानत्वेन हेतुत्वस्य विशेष्यज्ञानादेरपि कारणतापत्त्या मानाभावेन च निरस्तत्वा"दिति । एवमेव विशेषणतावच्छेदकप्रकारकज्ञानस्यापि न विशिष्टवैशिष्ट्यबुद्धौ कारणता, अवश्यक्लृप्तैर्विशिष्य कार्यकारणभावैरेवोपपत्तेः । निवेदितञ्चैतदस्माभिः पुरा।

यदपि—सिद्धेरप्रतिबन्धकत्वे परामर्शनिष्ठाप्रामाण्यग्रहाभावस्य पृथगनुमितिहेतुत्वमते सिद्ध्यात्मकपरामर्शनिष्ठतत्तज्ज्ञानत्वधर्मितावच्छेदककाप्रामाण्यग्रहाभावानामपि पृथक् हेतुताया आवश्यकत्वेन महागौरवम्, सिद्धेः प्रतिबन्धकत्वे तु तादृशपरामर्शस्य सिद्ध्यात्मकत्वादेव न दोष इति, तदप्यपेशलम्, सिद्धिसत्त्वेऽपि प्रत्यक्षादिसामग्रीविरहदशायामनुमितेरानुभविकत्वं ब्रुवाणः कथमिव गौरवापत्त्या बिभीषणीयः स्यात्, गौरवभयात्स्वानुभवावहेलनाया अनौचित्यात् । अतएव गुरूणामिव नव्यानामपि पक्षताया अनुमित्यहेतुत्वं नवीनैः केवलान्वयिग्रन्थेऽभिहितम् । वस्तुतस्तु गौरवं तवापि समानम्, यतः सिद्ध्यात्मकपरामर्शानां दण्डो रक्त इत्यादिविशेषणतावच्छेदकप्रकारकाणां रक्तत्वाद्यंशेऽप्रामाण्यग्रहास्कन्दितत्वे तदुत्तरं रक्तत्वादिविशिष्टवैशिष्ट्यप्रत्यक्षादेर्वारणाय तत्तदप्रामाण्यग्रहव्यक्तीनां तादृशविशिष्टवैशिष्ट्यप्रत्यक्षादिप्रतिबन्धकतायास्त्वया कल्पनीयत्वात्, सिद्धेरनुमित्यप्रतिबन्धकतामते तु तत्र वह्न्यनुमितेरेवोत्पत्तिः अन्यत्र क्लृप्तेन भिन्नविषयकानुमितिसामग्र्याः प्रतिबन्धकत्वेन तत्र रक्तत्वादिविशिष्टवैशिष्ट्यप्रत्यक्षाद्यसम्भवादिति । यत्साध्यकसिद्धिपरामर्शदशायां वस्त्वन्तरेऽपि न कदाप्यप्रामाण्यग्रहास्कन्दनं तत्रैवोक्तक्रमेण पक्षताहेतुत्वव्यवस्थापनमित्यभिधानं नु सर्वज्ञस्यैव शोभते, तादृशस्थलस्य विविच्य दर्शयितुमशक्यत्वात्, तादृशस्थलसम्भावनायां नु गौरवस्यापि सम्भावनैव स्यान्न नु निश्चयः, तस्याश्चात्राकिञ्चित्करत्वम् । अत एव परामर्शदीधित्यादौ विशिष्टपरामर्शस्यानुमितिकारणत्वे गौरवसम्भा-

न चानवधारितधर्मा धर्मी पक्षः; हेतुमत्तयाऽप्यनवधारणेऽनुमानोदयनिदानभावासम्भवात्, अवधारणे चानवधारितधर्मत्वानुपपत्तेः। न चानवधारितहेतुविषयधर्मा धर्मी पक्षः, तथाहि—केनानवधारितधर्मा, न तावदनुमानप्रयोक्त्रा, स्वयमज्ञाते परं प्रत्यप्रयोगात्। प्रतिवादिनेति चेन्न, प्रतिवादिविदितेऽप्यर्थे वादितया परस्परविद्योत्कर्षनिरूपणार्थमनुमानदर्शनात्। तथाऽनवधारणं यत्किञ्चिद्धेतुविषयधर्मगोचरं वादिप्रयोक्तव्यहेतुविषयगोचरं वा, नाद्यः, अग्निमत्त्वनिश्चयदशायामपि तत्तद्धेतुविषयबहुतरापरधर्मान-

---

वनायाः प्रतिबन्धकत्वमाशङ्क्य "सम्भाव्यतां न तु सम्भावनं प्रतिबन्धक"मित्युक्तम्। किञ्च पर्वतादौ कथं पक्षव्यवहारनिदानत्वमस्याः पक्षताया इति वक्तव्यम्, स्वप्रतियोगितावच्छेदककोटिप्रविष्टविशेष्यतावच्छेदकत्वादिरूपपरम्परासम्बन्धेनेति तु न वक्तुं युज्यते, परम्पराणां संसर्गताया अप्रामाणिकत्वात्। अनुमित्युद्देश्यत्वं पक्षपदप्रवृत्तिनिमित्तमेव पक्षव्यवहारनियामकमित्यपि न, कस्यचित्पुंसः सिद्धिसत्त्वेऽपि कस्यचिदपरस्यानुमित्युद्देश्यत्वमादाय पक्षव्यवहारप्रसङ्गात्, नचैतद्भवतामिष्टं, यदाह "सिद्धसाधनस्थले पक्षव्यवहारविरहेणे"ति। अनुमितौ तत्पुरुषीयत्वादिनिवेशे तु न पक्षपदप्रवृत्तिनिमित्तत्वसम्भवोऽननुगमात्, अनुगतस्यैव तथात्वात्, अतएव सर्वनामस्थलेऽपि बुद्धिविषयतावच्छेदकत्वेन प्रवृत्तिनिमित्तानुगम आस्थीयते। नवाऽनुमितित्वस्य निरुक्तिं विना तदाश्रयोद्देश्यत्वनिरूपणसम्भवः, तस्य च जातितयाऽन्यथा वा न निर्वचनसम्भव इत्युपपादितमिति शम्। न चानवधारितेति। धर्मनिष्ठनिश्चयीयविषयतानिरूपितविषयतानाश्रयत्वं पक्षत्वमिति यथाश्रुतार्थः। साध्यस्येव हेतोरपि धर्मत्वादुक्तपक्षतासत्त्वे हेतुमत्तावगाहिपरामर्शस्य तादृशपरामर्शसत्त्वे चोक्तपक्षताया असम्भवेनानुमिति र्न कदापि स्यादित्युक्तलक्षणमसम्भवीत्याह हेतुमत्तयेति। अनुमानोदयनिदानस्य = अनुमित्युत्पत्तिकारणस्य परामर्शस्य भावासम्भवात् = पक्षतया समवधानासम्भवात्, अवधारणे वा = हेतुमत्तयाऽवधारणेऽप्युक्तपक्षताया असम्भवेन तयोः समवधानासम्भवादित्यर्थः। धर्मपदेन हेतुविषयो विवक्षितः, तत्त्वं च हेतुव्यापकत्वम्, व्याप्यव्यापकभावश्च भेदगर्भ एव प्राचां सम्मतः, नहि स्वं स्वात्मानं व्याप्नोतीति व्यवहारः, अत एवोदयनाचार्यैः प्रतियोगितद्व्याप्येतरसकलतदुपलम्भकालीनत्वमिति योग्यतानिरुक्तौ प्रतियोगिभेदः पृथङ्निवेशितः, अन्यथा प्रतियोगिनोऽपि तद्व्याप्यतयैवोपादानसम्भवेन तदसङ्गतेः स्पष्टत्वात्तथा च नोक्तदोष इत्याशङ्कां शमयति नचेति। अज्ञाते = पक्षे साध्यस्यानिश्चये। निश्चयवत्त्वस्य कथातः पूर्वं समविद्यत्वज्ञापकपरीक्षादिना सिद्धत्वान्निश्चितयोरेव वादेऽधिकार इति भावः। वस्तुतस्तु कथाप्रवृत्तेराभिमानिकनिश्चयेनाप्युपपत्तेर्यत्रानुमानप्रयोक्त्रा साध्यं पक्षे निश्चितं तत्र स्थलविशेषे एवाव्याप्तिर्द्रष्टव्या। प्रतिवादिविदितेऽप्यर्थेऽनुमानदर्शनादित्यन्वयः। वादितया = परस्परवादिप्रतिवादिभावमाश्रित्य। निरूपणार्थं = बोधनार्थं। ननु सिद्धिस्थले यद्यनुमितिस्तर्ह्यनुमित्सयैव, अनुमित्सानुत्तरानुमितौ तूक्तपक्षता हेतुरिति नायं दोषः, न च तथाप्यन्यदीयसाध्यनिश्चयविषयत्वमादायासम्भवोऽव्याप्तिर्वेति वाच्यम्, लक्ष्ये लक्षणघटकनिश्चये च तत्पुरुषीयत्वस्याप्युपादेयत्वादित्यतो दूषणान्तराभिधानाय विकल्पयति तथेति। यत्किञ्चिदिति वादिप्रयोक्तव्येति च हेतावन्वेति। तथा च यत्किञ्चिद्धेतुव्यापकनिष्ठतत्पुरुषीयनिश्चयीयविषयतानिरूपितविषयतानाश्रयत्वं वा वादिप्रयोक्तव्यहेतुव्यापकेत्यादिकं वा विवक्षितमित्यर्थः। तत्तद्धेतुविषयेति। अग्न्यव्याप्यं तत्तद्धेतुपदेन ग्राह्यम्, धूमपदेन चाग्निव्याप्यमात्रम्। धूमादिनाऽग्निसाधने पर्वतस्य पक्षव्यवहारविषयत्वप्रसङ्गादित्यर्थः। तथापि = हेतौ वादिप्रयोक्तव्यत्वनिवेशेऽपि। तत्प्रसङ्गात् = सिद्धिदशायामपि धूमादिनाग्निसाधने पर्वतस्य पक्षत्वेन व्यवहार्यत्वप्रसङ्गादित्यर्थः। तत्र

वधारणाद्धूमं प्रति पर्वतस्य पक्षत्वप्रसङ्गात्। न द्वितीयः, तथापि तत्प्रसङ्गात्, तद्धेतूनामपि वादिप्रयोज्यत्वात्, असाधारणविवक्षायाञ्चाननुगमात्, इतरेतराश्रयदोषाच्च, पक्षधर्मत्वेन हेतुत्वनिरूपणात्, व्याप्तपक्षधर्मस्य हेतुत्वात्, हेतुना च पक्षनिरूपणात्। स्वार्थानुमाने च हेतोरप्रयोज्यत्वात् पक्षत्वाभावेनानुमानानुदयप्रसङ्गात्, विरुद्धहेतौ च पक्षधर्मत्वाभावप्रसङ्गात्, तत्र साध्यस्य तद्धेतुविषयत्वाभावात्, हेतोरेव साध्यविपरीतव्याप्त्या दुष्टत्वात्। एतेन—सन्दिग्धसाध्यधर्मविशिष्टो धर्मी पक्षः, साध्यत्वञ्च स्वपरार्थानुमानसाधारणमुत्पाद्यज्ञानत्वमिति—निरस्तम्। इतिपक्षताखण्डनम्।

## अथ पक्षधर्मताखण्डनम्।

भवतु वा यः कश्चन पक्षः, केयं पक्षधर्मता ? पक्षाश्रिततेति चेन्न नैयायिकादीन् प्रति प्रमेयत्वस्याहेतुत्वप्रसङ्गात्, विषयविषयिभावस्य ज्ञेयज्ञानस्वरूपातिरि-

---

हेतुमाह तद्धेतूनामपीति। अन्यतिरिक्तस्य व्याप्यानामपीत्यर्थः। वादीति। कदाचिदित्यादिः। प्रयोज्यत्वं हेतौ प्रकृतप्रयोगविषयत्वं न तु योग्यतासाधारणमित्याशङ्क्याह असाधारणेति। प्रकृतत्वेत्यर्थः। नन्वेष्टव्य एवागत्याऽननुगमः, अनुगमविरोधितत्पुरुषीयत्वादिकमपि ह्युपादेयमेवेत्यत आह इतरेतराश्रयदोषादिति। तमेव निरूपयति पक्षधर्मत्वेनेति। हेतुत्वात् = हेतुत्वात्मकत्वात्। हेतुना = हेतुत्वेन। पक्षनिरूपणात् = पक्षतानिरूपणात्। ननु हेतुत्वनिवेशे प्रयोजनविरहात्प्रकृतप्रयोगविषयस्य यद्व्यापकं तन्निष्ठनिश्चयीयविषयतेत्यादिकमेव तादृशव्यापकसाध्यकानुमित्सानुत्तरानुमितौ पक्षत्वं वक्तव्यमित्यत आह स्वार्थेति। ननु प्रयोगविषयत्वमपास्य तदीयव्यापकनिष्ठनिश्चयीयविषयतेत्यादिकस्य तदीयव्यापकसाध्यकानुमित्सानुत्तरानुमितौ पक्षतात्वाभिधाने नोक्तदोष इत्यत आह विरुद्धेति। व्यभिचारिमात्रस्योपलक्षणमिदम्। तत्र = व्यभिचारिणि साध्यस्य = वस्तुतो व्यभिचारिणा साध्यतयाऽभिमतस्य। तद्धेतुविषयत्वाभावात् = स्वव्यभिचारिधर्मनिरूपितव्यापकत्वानाश्रयत्वात्। तत्र पक्षता नास्त्येवेति नाव्याप्तिरित्यत आह हेतोरेवेति। एवो व्युत्क्रमेण साध्यविपरीतव्याप्त्यैवेत्यन्वेति। साध्याभावव्याप्त्यैवेत्यर्थः, साध्याव्याप्त्यैवेति यावत्, तेन व्यभिचारिमात्रसङ्ग्रहः, दोषान्तरव्यवच्छेदस्तृतीयार्थः। अपक्षधर्मतया तत्र हेतो र्न दुष्टत्वम्, पक्षधर्मे एवाव्याप्तेरभिधित्सितत्वादिति भावः। न च—तन्निष्ठतत्पुरुषीयनिश्चयीयविषयतानिरूपितविषयतानाश्रयत्वं तत्साध्यकतत्पुरुषीयानुमित्सानुत्तरानुमितौ पक्षतेत्युक्तौ नायमपि दोष इति—वाच्यम्, सिद्धेरप्रतिबन्धकत्वाद्यभिधानेन दत्तोत्तरत्वात्। एतेनेति। विदितेऽप्यर्थेऽनुमितेर्दर्शनेन तत्राव्यापकत्वेनेत्यर्थः। सन्दिग्धेति। साध्यसन्देहः पक्षतेत्यर्थः। उत्पाद्यज्ञानत्वमिति। उत्पाद्यं ज्ञानं यस्य तत्त्वं, विधेयताख्यविषयताश्रयत्वमित्यर्थः। यद्यपि हेतोरपि क्वचित्तथात्वेन तत्संशयेऽतिप्रसङ्गः, तदनुमितिविधेयताश्रयसन्देहोक्तौ तु वह्निः पर्वतवृत्तिर्न वेत्यादिसन्देहानुपग्रहः, तथापि यादृशसंशयाव्यवहितोत्तरं यादृशानुमितिस्तादृशसंशयस्य तादृशानुमितौ पक्षतात्वं वाच्यम्, अत्राधिकं प्राक्चर्चितमनुमितिखण्डने। इति खण्डनशारदायां पक्षताखण्डनम्।

पक्षः = पक्षतापदार्थः। पक्षधर्मता = पक्षधर्मतापदार्थः। पक्षाश्रितता = हेतुतावच्छेदकसम्बन्धेन पक्षसम्बन्धिता, तेन तादात्म्येन हेतोर्नापक्षधर्मत्वप्रसङ्गः। नैयायिकादीन् प्रति=नैयायिकादीन् प्रतिवादीकृत्य। प्रमेयत्वस्येति। यत्र हेतुतावच्छेदकसम्बन्धोऽनतिरिक्तः स्वरूपसम्बन्धस्तन्मात्रस्योपलक्षणमिदम्, अव्याप्त्युपपादकवक्तव्ययुक्तेः सात्यात्। अहेतुत्वप्रसङ्गात् = हेतुत्वेनाप्रयोगप्रस-

कस्यानङ्गीकारात्, तयोश्च ज्ञेयाश्रितत्वायोगात् ।

प्रतीतिं व्याप्तिबलेन सामान्यतोऽव्यापकावगाहनप्रवृत्तां विशेषमादाय परं पर्यव-

---

ज्ञात्, अन्यथा तेनासिद्धेरुद्भावनीयत्वात् । नैयायिकादिना तु "उभयसिद्धस्य हेतुत्वं नादृष्टायोपदिश्यते । प्रत्येप्यन्ति स्वसिद्धेन साधनेन स्वयं यत" इतिन्यायेन परं प्रति विषयत्वस्य हेतुतया प्रयोगःशक्य इत्यभिप्रायेण नैयायिकादिमते इत्यनुक्त्वा नैयायिकादीन् प्रतीत्युक्तम् । विषयविषयिभावस्य = निरूपकतया विषयिनिष्ठस्य स्वरूपेण च विषयनिष्ठस्य विषयत्वस्य । अनङ्गीकारादिति । तदुक्तमुदयनाचार्यैर्बौद्धाधिकारे "लक्ष्यस्तावदत्र विषयविषयिभावः, स च प्रकाशस्य सतस्तदीयतामात्ररूपः स्वभावविशेष" इति । प्रकाशस्य = ज्ञानस्य, इच्छादौ सविषयकत्वव्यवहारस्तु याचितमण्डनन्यायेनेति भावः। सतः = वर्तमानस्य । एतेन विषयताया ज्ञानसमकालिकत्वमेवेति सूचितम्। तदीयतामात्ररूपः = घटादिविषयसम्बन्धरूपः स्वभावविशेषः = स्वरूपविशेष इति तदर्थः । अत्र क्लृप्तेनैवोपपत्तावतिरिक्तकल्पनायां गौरवभीरुतायां विषयताया विषयस्वरूपत्वं वा ज्ञानस्वरूपत्वं वेत्यत्र विनिगमनाविरहमाकलय्योभयात्मकत्वं मूलेऽभिहितम्, विषयस्वरूपत्वे आधाराधेयभावस्येव ज्ञानस्वरूपत्वे निरूप्यनिरूपकभावस्यानुपपत्तिरिति साम्यमेव । विषयस्वरूपत्वे 'इदानीं नष्टो घटो ज्ञात' इति वर्तमानकालावच्छिन्नतया विषयताभानानुपपत्तिरिति किं वा घटत्वनिष्ठप्रकारतानिरूपितायाः पटत्वनिष्ठप्रकारतानिरूपितायाश्च घटनिष्ठविषयताया ऐक्येन प्रमाया अपि भ्रमत्वापत्तिरिति तु ज्ञानस्वरूपत्वे घटपटावितिसमूहालम्बनस्य घटावृत्तिपटत्वावच्छिन्नघटनिष्ठविषयताशालितया भ्रमत्वापत्तिरित्यनेन सममेवेतिभावः । वस्तुतस्तु विषयताया अतिरिक्तत्वेऽपि तस्याः स्वाश्रयेण स्वरूपमेव सम्बन्धोऽभ्युपेयोऽन्यथानवस्थानात्, नचेष्टापत्तिः, सम्बन्धिनोर्योग्यतया कदापि सम्बन्धधारायाः प्रत्यक्षापत्तेः । स्वरूपमेव सम्बन्ध इत्यस्य च विषयविषयिणौ द्वावेव नत्वन्यः कश्चिदित्यर्थः, तथा च घटनिरूपितसम्बन्धिता विषयतानिष्ठा घटावच्छिन्नेति न युक्तमुक्तं स्यात्, न च घटस्य सम्बन्धत्वेन स्वनिरूपितसम्बन्धितावच्छेदकत्वं स्यादिति वाच्यम्, घटस्य सप्रतियोगिकत्वाननुभवेन सम्बन्धत्वस्य तत्र बाधात् । एवञ्च प्रमेयत्वादेर्हेतुतास्थले सम्बन्धावच्छिन्नपक्षसम्बन्धित्वाप्रसिद्ध्याऽव्याप्तिः, अत एव पक्षानुयोगिको हेतुतावच्छेदकसम्बन्ध एव पक्षधर्मतेत्यपि न युक्तम्, उक्तस्थले हेतुतावच्छेदकसम्बन्धस्यैवाप्रसिद्धेः । तदिदमभिप्रेत्याह तयोरिति । घटादिज्ञेयतज्ज्ञानयोरित्यर्थः । ज्ञेयाश्रितत्वायोगात् = हेतुतावच्छेदकसंसर्गावच्छिन्नघटादिपक्षनिरूपितसम्बन्धित्वासम्भवात् । न चैवं क्वचित्सम्बन्धानवच्छिन्ना पक्षसम्बन्धिता, क्वचित्तु हेतुतावच्छेदकसम्बन्धावच्छिन्ना सा पक्षधर्मतास्तु, अननुगमस्यातत्स्यैष्टत्वादिति वाच्यम्, सम्बन्धितापि सम्बन्धानवच्छिन्नेति हि रिक्तं वचः ।

शङ्कते प्रतीतिमिति । व्याप्तिबलेन = व्याप्तिग्रहस्य व्यापकतावच्छेदकरूपावच्छिन्नविषयकत्वेन प्रयुक्तं यत् सामान्यतो = व्यापकतावच्छेदकरूपेण व्यापकावगाहनं = साध्यविषयीकरणं तत्र प्रवृत्तां = तदनुकूलकारणसमवधानकालीनप्रागभावप्रतियोगिनीं प्रतीतिं = अनुमितिं विशेषमादाय परं = विशेषमादायैव पर्यवसाययितुं = पर्वतीयत्वादिविशिष्टव्यापकतावच्छेदकावच्छिन्नविषयकत्वेनोत्पादयितुं व्याप्यनिष्ठं सामर्थ्यं सा = पक्षधर्मता । अत्रानुमितिनिष्ठव्यापकतानवच्छेदकावच्छिन्नसाध्यप्रकारताकत्वानुकूलो व्याप्यनिष्ठः सामर्थ्यविशेषः पक्षधर्मतेति न शक्यविवक्षम्, पक्षतोपलक्षितपर्वतादिवृत्तित्वावगाहिपरामर्शबलाद्व्यापकतावच्छेदकरूपेणैव साध्यावगाहिन्याः पर्वतो वह्निमानित्याद्यनुमितेरुत्पत्तेः, पक्षतावच्छेदकावच्छेदेनानुमितौ व्यापकतानवच्छेदकेनैव पक्षतावच्छेदकव्यापकसाध्यप्रतियोगिकसंसर्गेण

**सायितुं व्याप्यस्य सामर्थ्यं सेति चेन्न, तस्याः सामान्यविषयाया अनुपपत्तेरसिद्धेः, व्याप्तिवत्सम्भवात्, अनुपपत्तित्वे व्याप्त्यनुप्रवेशात्, अधिकविषयाकाङ्क्षित्वे चिरस्य**

साध्यमानेन तत्र हेतौ पक्षतावच्छेदकावच्छिन्नवृत्तितावगाहिपरामर्शस्यैव प्रतिबन्धिकायाः पक्षतावच्छेदकावच्छेदेन सिद्धेरभावस्यापि पक्षतात्मनोऽनुकूलत्वेन पक्षताविशिष्टधर्मिवृत्तितायाः अप्यनुकूलत्वस्य शब्दवचनत्वेऽपि तस्यासार्वत्रिकत्वेनाव्याप्तेर्दुर्वारत्वात्, लाघवज्ञानादेरेवानुमितौ व्यापकतानवच्छेदकरूपेण साध्यावगाहितायां प्रयोजकत्वात्, तस्य च क्वचित्पक्षधर्मतावलशब्देन व्यवहारदर्शनेऽपि सर्वत्रानुमितावनपेक्षणीयत्वात्, अनुमितिसामान्येऽपेक्षणीयाया एव पक्षधर्मताया निरुच्यमानत्वात्, तस्य सहकारित्वेन व्याप्त्यानिष्टत्वेन च तत्सामर्थ्यस्यासम्भवाच । नापि तदीयसाध्ये तदीयाधिकरणविशेषवैशिष्ट्यावगाहिताप्रयोजकत्वं तदीयपक्षधर्मतात्वम्, तदीयसाध्य इत्यस्य तल्लिङ्गकपरामर्शजन्यानुमितिनिरूपितविधेयताश्रय इत्यर्थकत्वेन परामर्शत्वस्य व्याप्तिप्रकारकपक्षधर्मतावगाहित्वघटितत्तयाऽऽत्माश्रयाद्यापत्तेः । न च सप्तम्यन्तस्थाने तदीयव्यापकतावच्छेदकावच्छिन्न इति अव्याप्यस्यापि पक्षधर्मतायाः सङ्ग्राहकत्वे तु तदीयव्यापकतावच्छेदकत्वेनाभिमतेन धर्मेणावच्छिन्नेति वक्तव्यमिति वाच्यम्, धूमज्ञानानधीनायां पर्वतो वह्निमानित्यादिशाब्दादिप्रतीतौ पर्वतवैशिष्ट्यावगाहिताप्रयोजकेऽतिप्रसङ्गात् । किन्तु तदीयव्याप्यवगाहिज्ञानकरणकज्ञानीयविधेयतावति तदीयाधिकरणविशेषवैशिष्ट्यावगाहिताप्रयोजकत्वं तदीयपक्षधर्मतात्वम्, पक्षतायाश्चात्रोपलक्षणत्वम्, तदुपलक्षितपर्वतादिवृत्तित्वस्यैव तादृशवैशिष्ट्यावगाहिताप्रयोजकत्वात्, पक्षतां विना तादृशवैशिष्ट्यावगाहिनो ज्ञानस्यानुत्पत्तिमात्रेण तु तस्यास्तादृशावगाहितायां न प्रयोजकत्वं मानाभावात्, अन्यथा व्याप्तिज्ञानादिकं विनाऽपि तादृशज्ञानस्यानुत्पत्त्याऽतिप्रसङ्गात्, कस्यचित्प्रयोजकत्वं हि प्रतीतिसाक्षिकं क्वचिदेव, तादृशवैशिष्ट्यविषयिताप्रयोजकविषयितानिरूपकत्वविवक्षायां नु न पक्षतासाधारण्यशङ्कापि, पक्षतायाः परामर्शाविषयत्वादिति भावः । अत्रानुमिते लिङ्गाधिकरणविशेषवैशिष्ट्यावगाहित्वमेव स्वविधेयतावति कुतः, वह्निमानित्येव वा महानसादिको वह्निमानित्येव वा न कुतस्तदाकार इति कथं पक्षधर्मतोपासनेति विमर्शे यदि व्यापकतावच्छेदकरूपावच्छिन्नविषयकत्वस्य तादृशवैशिष्ट्यावगाहितां विनाऽनुपपद्यमानत्वमेवोत्तरं पर्यवसाययितुमिष्यन्तेन यथाश्रुतग्रन्थेन प्रतीयमानं तदाऽऽह तस्या इति । अनुमितेरित्यर्थः । सामान्यविषयायाः = व्यापकतावच्छेदकरूपेण साध्यविषयकत्वस्य, अनुपपत्तेरसिद्धेः = तादृशवैशिष्ट्यावगाहितां विनाऽनुपपन्नत्वस्याप्रामाणिकत्वात् । प्रतीत्यपर्यवसानतया प्रसिद्धैवाऽनुपपत्तिरेतया वाचा निरुच्यत इति द्रष्टव्यम् । व्याप्तिवत्सम्भवादिति । वह्निव्याप्यो धूम इत्यादिव्याप्त्यादिज्ञानवदनुमितेरपि तादृशवैशिष्ट्यावगाहित्वाभावेऽपि व्यापकतावच्छेदकरूपेण साध्यविषयकत्वसम्भवादित्यर्थः । **अनुपपत्तित्वे इति** । अविद्यमानोपपत्तिर्यस्य तथात्वे व्यापकतावच्छेदकरूपेण साध्यविषयकत्वस्य तादृशवैशिष्ट्यावगाहितां विनाऽनुपपन्नत्वे इत्यर्थः । व्याप्त्यनुप्रवेशादिति । व्याप्त्यादिज्ञानेऽपि तादृशवैशिष्ट्यविषयकत्वप्रसङ्गादित्यर्थः । ननु धर्मिविशेषे साध्यव्याप्यहेतुवैशिष्ट्यावगाहिताशालिनिश्चयत्वावच्छिन्नजनकताकजन्यतासमानाधिकरणाया व्यापकतावच्छेदकरूपेण साध्यावगाहितायास्तादृशवैशिष्ट्यावगाहित्वं विनानुपपन्नत्वोक्तौ नायं प्रसङ्ग इत्याशङ्क्य तादृशव्यापकतावच्छेदकरूपावच्छिन्नसाध्यावगाहित्वतादृशवैशिष्ट्यावगाहित्वयोरुपपाद्योपपादकभावः क्षणभेदेन वा, एकक्षणावच्छेदेन वेति विकल्प्य प्रथमे आह **अधिकविषयाकाङ्क्षित्वे इति** । व्यापकतावच्छेदकरूपेण साध्यावगाहित्वस्य प्रथमक्षणावच्छेदेन स्वासमानाधिकरणाया अपि तादृशवैशिष्ट्यावगाहिताया द्वितीयक्षणे आक्षेपकत्वे इत्यर्थः । चिरस्येति । अनुमितेरित्यादिः ।

व्यापारापत्तेः, मानान्तरत्वापत्तेर्वा, विशेषविषयायाश्चानुपपत्तित्वेऽतिप्रसङ्गात्। पक्षधर्मतया च यदि साध्यव्यक्तिभेदः सिद्धयेत्तदाऽनुमाय तां प्रत्यक्षेण पश्यन् [ पुंशब्दात्पुरुषमनुमाय प्रत्यक्षेण पुरुषद्वयदर्शने ] तद्विशेषासंशयी स्यात्। प्राग्विशेषादर्शनात्तथा स्यादिति चेन्न, पश्चात्तद्दर्शित्वान्न संशयीतेति। इति पक्षधर्मताखण्डनम्।

---

पत्तेरिति। नचेयं क्षणद्वयावस्थायिज्ञानवादिनामिष्टा, यदाहुः—"तस्माज्जन्मैव बुद्धेर्विषये व्यापार इष्यत" इति भट्टपादाः। किञ्चिद्विषयिकैव हि धीरुत्पद्यते, नतूत्पद्य पुनर्विषयान्तरं गोचरयति, नियामकाभावात्, निखिलवस्त्ववगाहितापत्तेश्चेतिभावः। अत्र कल्पे उपपाद्योपपादकभावासम्भवः, अन्यथा प्रथममेव व्यापकतावच्छेदकरूपेण साध्यावगाहित्वस्यासम्भवात्, ततःप्रागेव तादृशवैशिष्ट्यावगाहितापत्तेश्चेति ध्येयम्। अथैतदापत्तिभिया व्यापकतावच्छेदकरूपेण साध्यावगाहिज्ञानानन्तरमेव तादृशवैशिष्ट्यावगाहिज्ञानं स्वीकार्यमितिचेदेवं सति व्यधिकरणत्वान्न व्याप्यव्यापकभावोऽपि, उपपाद्योपपादकभावस्तु प्रागेवापहस्तित इति स्फुटत्वादुपेक्ष्य दोषान्तरमाह मानान्तरत्वापत्तेरिति। व्यापकतावच्छेदकरूपेण साध्यावगाह्यनुमितेरित्यादिः। तादृशवैशिष्ट्यावगाहिज्ञानजनने तस्याः क्लृप्तप्रमाणान्तर्भावासम्भवात्, स्वयं तस्या अनुपपत्तिज्ञानानात्मकत्वादितिभावः। अनुपपत्तिज्ञानजन्यत्वात्तादृशवैशिष्ट्यावगाहिज्ञानस्यार्थापत्तित्वापत्तेरित्यर्थ इति केचित्। एकक्षणावच्छेदेन तयोरुपपाद्योपपादकभावः, अनुभूयते हि पर्वतवह्निवैशिष्ट्यावगाह्यनुमितिः, अतएव तदुत्तरं पर्वते वह्न्युपादित्सोः प्रवृत्तिः, तथा च परामर्शे धूमे पर्वतवृत्तित्वविषयकत्वस्यैवानुमितौ तादृशवैशिष्ट्यविषयकत्वप्रयोजकतेति नोक्तलक्षणे कश्चिद्दोष इति द्वितीयमाशङ्क्य, एवं सति धर्मिविशेषे साध्यव्याप्यहेतुवैशिष्ट्यावगाहिनिश्चयत्वावच्छिन्नजनकताजन्यतासमानाधिकरणस्य व्यापकतावच्छेदकरूपावच्छिन्नसाध्यविषयकत्वस्य साध्ये हेत्वधिकरणविशेषवैशिष्ट्यावगाहित्वं विनाऽनुपपन्नतयाऽनुमितेस्तादृशवैशिष्ट्यावगाहित्वावश्यकत्वे तत्प्रयोजकत्वं पक्षतोपलक्षितधर्मिवृत्तित्वविषयकत्वे मन्यत इति ते मतं न युक्तम्, उपपाद्यत्वेन ज्ञाते उपपादकत्वेन चाज्ञाते हि धर्मिण्युपपादकमर्थापत्त्यानीयते, अत्र तु पर्वतो वह्निमानित्येव मतेरुत्पत्तेरुपपाद्यावगाहिना ग्रहेणोपपादकस्यापि विषयीकरणीयत्वादर्थापत्तिमितिकरणस्यानुपपन्नत्वग्रहस्यानवसर एव, अन्यथोपपादकस्य पुनरप्याक्षेपप्रसङ्गादित्याह विशेषविषयाया इति। साध्ये हेत्वधिकरणविशेषवैशिष्ट्यविषयिकाया इत्यर्थः। अनुपपत्तित्वे इति। अनुपपन्नत्वे इत्यर्थोबहुव्रीहिणा लभ्यः। तादृशवैशिष्ट्यविषयित्वं विनोक्तसाध्यविषयकत्वस्यानुपपत्तिज्ञानाजंकत्व इति यावत्। अतिप्रसङ्गात् = तादृशवैशिष्ट्यविषयकत्वविषयकमितिधाराप्रसङ्गात्, पीनत्वादिना रात्रिभोजनं सकृदेव ह्याक्षिप्यते, तावतैवानुपपत्तिज्ञानशान्तेरिति भावः। नन्वस्तु कथञ्चिदेवमुक्तमतस्य त्याज्यत्वादेव, अनुमितेर्धर्मिविशेषीयसाध्यविषयकत्वस्यानुभवेन परिच्छेदे तु तत्प्रयोजकत्वं लिङ्गे परामर्शीयधर्मिविशेषवृत्तित्वविषयितायामेवेत्यत्र न कश्चिद्दोष इत्यतआह पक्षधर्मतयेति। भेदः = विशेषः। तां = साध्यव्यक्तिं। प्रत्यक्षेण = चक्षुषा। पश्यन् = जानन्। तद्विशेषासंशयी स्यादित्यन्वयः। का व्यक्तिरनुमितेति संशयवान्न स्यादित्यर्थः। 'पुंशब्दात्पुरुषमनुमाय प्रत्यक्षेण पुरुषद्वयदर्शने' इति पाठस्तु 'अनुमाय तां प्रत्यक्षेण पश्यन्नि'त्यनेन वैकल्पिको बोध्यः। प्राग्विशेषादर्शनादिति। अनुमित्या व्यक्तिविशेषावगाहनेऽपि इयं व्यक्तिरनुमितेति दर्शनविरहादित्यर्थः। तथा स्यात् = उक्तसंशयःस्यात्। तादृशदर्शनस्यैवोक्तसंशयापहन्तृत्वादितिभावः। पश्चात्तद्दर्शित्वादिति। अनुमित्या व्यक्तिविशेषावगाहने तादृशदर्शनस्यापि तदनन्तरं सम्भवेन तद्दशायां संशयो न स्यादित्यर्थः। विशेषविषयकानुमितेरुत्पत्तौ तादृशदर्शनाभावेऽपि ज्ञानस्वाभाव्यविरुद्ध एवोक्तः संशयइत्यपि स्वप्रकाशवादोक्तरीत्या द्रष्टव्यम्।

अपरोक्षसंशयं न परोक्षनिश्चयो निवर्तयितुं क्षम इति भावेन प्राग्विशेषादर्शनादिति ग्रन्थेनापरोक्षनिश्चयाभावमभिधाय पश्चादित्यादिना प्रत्यक्षेण पुरुषद्वयदर्शनदशायामपरोक्षविशेषदर्शनसत्त्वेन तादृशसंशयो न स्यादित्यभिहितमिति व्याख्यानं तु नादृतम्, तादृशसन्देहसद्भावेनानुमितेरिव प्रत्यक्षस्यापि सन्दिह्यमानविशेषाविषयकत्वस्य वक्तव्यत्वेन 'तद्दर्शित्वा' दिति ग्रन्थासङ्गतेः। इदन्तु बोध्यम्। 'पक्षधर्मतया चे'त्यादिग्रन्थ आपातत एव, अनुमितेः साध्ये धर्मिविशेषवैशिष्ट्यावगाहितायां लिङ्गे धर्मिविशेषवैशिष्ट्यविषयितायाः परामर्शीयायाः प्रयोजकत्वं पराभिमतं न तु साध्यीयविशेषान्तरावगाहितायामपि, यत्र त्वितरविशेषबाधस्य लाघवज्ञानस्य वा सहकाराद्विशेषान्तरावगाहित्वमनुमायाः, तत्र विशेषान्तरे संशयो न भवत्येव, अत एव क्षित्यादिकर्तैको वाऽनेको वेति सन्देहस्तदनुमितेरनन्तरं नानुभूयते तस्यास्तदेकत्वस्यापि परिच्छेदकत्वात्, प्रकृते चानुमितेर्लाघवज्ञानाद्यभावेन देशविशेषे पुरुषमात्रावगाहित्वं, तत्र च नास्त्येव संशय इति। तस्मादुक्तपक्षधर्मतालक्षणे प्रत्यक्षखण्डनेऽनुमितौ व्याप्तिज्ञानकरणत्वानुपपत्तेः प्रदर्शितत्वेनासम्भवः, प्रयोजकत्वस्य प्रतीतिसाक्षिकतया निरूपणे प्रतीतिविषययोः परस्परायत्तनिरूपणकतयाऽन्योन्याश्रयः, तादृशवैशिष्ट्यविषयिताशालिज्ञानजनकज्ञानविषयत्वविवक्षायां तु व्याप्यत्वादावतिप्रसङ्गः, व्याप्त्यादेर्दुर्निरूपत्वञ्चेत्यादिकमेव दूषणं द्रष्टव्यमिति शिवम्। इति खण्डनशारदायां पक्षधर्मताखण्डनम्।

## समाप्तमिदमनुमानखण्डनप्रकरणम्।





# उपमानखण्डनप्रकरणम् ।

उपमानमपि किमुच्यते ? सादृश्यज्ञानमुपमानमित्येके । तन्न, स्मृतावपि प्रसङ्गात् । अनुभव इत्यभिधाने च सदृशाविमावितीन्द्रियजेऽपि प्रसङ्गात्, सोऽपि गवयो गवा सदृशो गवयत्वाद्गवयान्तरवदित्यनुमानस्यापि तथात्वापत्तेः । एवमाप्तोक्तिजेऽपि । किञ्चोपमितिलक्षणमिदमुपमितिकरणलक्षणं वा स्यात् । नाद्यः, सादृश्यस्योपमेयतापत्तेः,

---

किमिति । उपमानपदस्य करणपरत्वे फलपरत्वे वा प्रत्यक्षस्यैव गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यस्थगवादिपदानां गोपदं गोत्वविशिष्टवाचकं तद्विशिष्टविषयकशक्तिभ्रमाजन्यलक्षणाग्रहाजन्यशाब्दबोधजनकत्वादिति रीत्या शक्तिग्राहकतया गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादितिरीत्या सामान्यतः सप्रवृत्तिनिमित्तकत्वबोधकतया चानुमानस्याप्युपमानोपजीव्यतया तयोर्निरासं वक्तव्यरीत्या विचारासहिष्णुताञ्चालोच्य सावसराक्षेपगर्भेयं पृच्छा । सादृश्यज्ञानमित्यादि । सादृश्यस्यातिरिक्तानतिरिक्ततायां भट्टप्रभाकरयोर्विवादेऽपि गवि गवयसादृश्यज्ञानं फलं गवये गोसादृश्यज्ञानं च करणमित्युपमानपदस्य करणपरत्वे भावपरत्वे वा तयोः समानमेव । यद्यपि श्रुतातिदेशवाक्यस्यारण्ये गवये गोसादृश्यदर्शनमुपमितिकरणं गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यार्थस्मरणं व्यापारो गवयो गोपदवाच्य इतिमितिः फलमिति तार्किकमतसाधारण्यमप्येतद्ग्रन्थस्य सम्भवति तथाप्युपमानपदस्य करणपरत्वे एव, नचात्र तस्य करणपरत्वमेवेति विविक्तम्, 'किञ्चोपमितिलक्षणमिदमुपमितिकरणलक्षणं वे'त्यग्रिमग्रन्थविरोधात् । नहि तार्किकं प्रति तादृशविकल्पः सम्भावनारोही । न चोपमितितत्करणयोः सादृश्यज्ञानात्मकतानिर्णये मीमांसकं प्रत्यपि तादृशविकल्पासम्भव इति वाच्यम्, वक्ष्यमाणदिशा तादृशविकल्पसम्भवात् । स्मृतौ = सादृश्यस्मृतौ । सा हि नोपमितिः, अनुभवस्यैव तथात्वात्, नाप्युपमितिकरणम्, प्रत्यक्षस्यैव तत्त्वात् । अनुभव इत्यभिधाने = ज्ञानपदेनानुभवत्वविवक्षणे । इमावित्युक्त्या गोगवयोभयस्यापि प्रत्यक्षत्वं स्फोरितम्, तथा चातिव्याप्तिः फलकरणोभयलक्षणसाधारण्येव । असन्निकृष्टविशेष्यकसादृश्यप्रकारकानुभवत्वं तु न शक्यविवक्षम्, करणपक्षेऽसम्भवापत्तेः, फलपक्षेऽपि विशेष्यस्य कस्यचित्सन्निकृष्टत्वसम्भवेनाव्याप्तिरेव, यथा च पुरुषविशेषनियन्त्रितत्वेनापि न निस्तारस्तथा वक्ष्यते। प्रत्यक्षान्यानुभवत्वविवक्षायामपि करणपक्षेऽसम्भवोऽस्त्येव, अतिव्याप्ति स्वाह सोऽपीति । स इत्येत्र विवक्षितम् । इत्यनुमानस्य = इतिवाक्यावगतलिङ्गकपरामर्शायत्तानुमितेः । तथात्वेति । उपमानत्वेत्यर्थः । अनुमितित्वादेव नोपमितित्वम्, उपमित्यजनकत्वाच्च न तत्करणत्वम्, तादृशानुमितिबलात्तद्गवयसदृशी गौरितिज्ञानस्य सम्भवेऽपि तस्योपमितित्वानभ्युपगमात्, गोपदेन सन्निहिताया गोर्विवक्षणीयत्वाद्वेति भावः । प्रत्यक्षानुमित्यन्यसादृश्यप्रकारकानुभवत्वविवक्षायामप्याह एवमिति । प्रमाणखण्डनप्रस्तावादनुभवे याथार्थ्यविवक्षामप्यादृत्योक्तमाप्तेति । अर्थापत्त्यात्मकसादृश्यज्ञानस्याप्युपलक्षणमिदम् । प्रत्यक्षाच्छब्दाद्वा गवये गोसादृश्यज्ञानाद्गवयसदृशो गौरितिज्ञानमुपमितिरितिमतस्याप्युपमानमणावाशङ्कितत्वेन सादृश्यशाब्दे करणपक्षे इष्टापत्तिसम्भवेऽपि फलपक्षे न तत्सम्भव इति द्रष्टव्यम्, एवञ्चैतन्मते प्रत्यक्षान्यत्वनिवेशेऽव्याप्तिर्नत्वसम्भव इति । किञ्चेति । किञ्चेदमुपमितिलक्षणं वा स्यादुपमितिकरणलक्षणं वेत्यन्वयः। गवयविशेष्यकगोसादृश्यप्रकारकप्रत्यक्षत्वावच्छिन्नकारणताकं गोविशेष्यकगवयसादृश्यप्रकारकज्ञानं तादृशप्रत्यक्षकरणकोपमितिरिति वा, सादृश्यं ज्ञायते अनेनेतिव्युत्पत्त्या सादृश्यविषयकत्वनियतधर्मा-

सदृशे चोपमेयव्यवहारोऽस्ति चन्द्रोपमेयं मुखमित्यादि । सदृशमितिः सेति चेन्न, अक्षादिकरणासम्भवे तदुदाहरणासिद्धेः । नापि द्वितीयः, सादृश्यज्ञानस्य सर्वस्यासम्भवत्प्रमाणान्तरव्यापारफलजनकताया दर्शयितुमशक्यत्वात् । न च सादृश्यमेकमनुगतमस्ति, मुखसादृश्यस्य हस्तसादृश्यस्य च भेदेनैवोपलम्भात् । न च सादृश्यरूपत्वमनुगतं

---

त्वावच्छिन्नकार्यतानिरूपितकारणताशालिज्ञानमुपमानमिति वा विवक्षितमित्यर्थः । परामर्शादिनिरूपिता सादृश्यविषयकानुमित्यादिनिष्ठा कार्यताऽनुमितित्वादिनाप्यवच्छिन्ना, तच्च न सादृश्यविषयकत्वनियतम्, व्यभिचारवारणाय तत्तल्लिङ्गकपरामर्शस्य जन्यतावच्छेदककोटाववश्यनिवेश्यतया पक्षसाध्यविषयतायास्तदन्तर्भावस्य निष्फलत्वादिति । उपमेयतापत्तेरिति । उपमेयपदोल्लेखिव्यवहारविषयतापत्तेरित्यर्थः । एतेनोपमितिविषयत्वापादने इष्टापत्तिः तद्विशेष्यत्वापादने चापादकाभावेनासम्भव इति निरस्तम् । उक्तोपमित्यात्मकज्ञानस्यांशविशेषे तादृशव्यवहारप्रयोजकत्वस्याविवक्षायामिदम् । तादृशविवक्षाभिप्रायेण त्वाशङ्कते सदृशमितिरिति । सा = उपमितिः । सादृश्यानुयोगिविषयकत्वावच्छेदेन तादृशोपमितेरुक्तव्यवहारजनकत्वमिति भावः । अक्षादीति । यादृशज्ञानेऽक्षादीनां तत्तन्निर्तिं प्रति क्लृप्तकरणभावानां नास्ति सम्भवः, तादृशज्ञानमेवोपमित्युदाहरणं वाच्यम्, परन्तु सर्वत्राक्षाद्यन्यतमस्यैव सम्भवान्न तादृशज्ञानं शक्यमुदाहर्तुमिति नोपमितिः क्लृप्तप्रमातिरेकिणीत्यर्थः । व्यक्तीभविष्यतीदमनुपदम् । सादृश्यज्ञानस्येति । उपमितिकरणत्वेनाभिमतस्येति शेषः । असम्भवन् प्रमाणान्तरस्य क्लृप्तस्य व्यापारो यत्र, एवम्भूतं यत्फलं तज्जनकताया इत्यर्थः । अशक्यत्वादिति । तथा च क्लृप्तेनैव निर्वाहेऽक्लृप्तकल्पनायां गौरवम् । अत्रेदमाकूतम्—मीमांसका हि—परोक्षगोविशेष्यकं गवयसादृश्यज्ञानं न प्रत्यक्षम्, असन्निकृष्टविशेष्यकत्वात्, उपनीतस्य च विशेषणतयैव भानात् । नाप्यनुमितिः, यत्वतत्त्वयोरननुगतत्वेन सामान्यव्याप्तेरप्रामाणिकत्वेन यो यद्गतसादृश्यप्रतियोगी स तत्प्रतियोगिकसादृश्यानुयोगीतिव्याप्त्या तदसम्भवात्, व्याप्तिग्रहात्प्रागपि गवये गोसादृश्यज्ञानाद्गवि गवयसादृश्यज्ञानोत्पत्तेश्च । अत एव यो गवयनिष्ठसादृश्यप्रतियोगी स गवयप्रतियोगिकसादृश्यानुयोगीति विशेषव्याप्त्यापि न निस्तारः । अत एव नार्थापत्तिरपि, गवयनिष्ठगोसादृश्योपपादकस्य गोनिष्ठगवयसादृश्यस्य प्रागग्रहात्, एवञ्च शब्दस्याप्यनवतारदशायां सा गौरेतद्गवयसादृश्यवतीति धीरुपमितिरेव, तत्करणञ्चोपमानमिति-वदन्ति । किन्तु क्षणैकविलम्बस्य दुरधिगमत्वेन व्याप्तिग्रहं विनैव गवि गवयसादृश्याधिगमस्य शपथैकनिर्णेयत्वेन गवये गोप्रतियोगिकसादृश्यग्रहे च गवयनिष्ठसादृश्यप्रतियोगित्वस्य गवि भानेन तल्लिङ्गकासन्निकृष्टगोविशेष्यकगवयसादृश्यानुमितौ न किञ्चिद्बाधकम्, गवयान्तरे व्याप्तिग्रहसम्भवात्, तस्यानुपस्थितिदशायामपि वक्ष्यमाणरीत्याऽर्थापत्तेर्व्यतिरेकिणो वाऽत्र सम्भवदुक्तिकत्वादिति । दोषान्तरमाह नचेति । भेदेनैवेति । तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वरूपसादृश्यस्य तत्तद्धर्मभेदेन भिन्नत्वात्, सादृश्यस्यातिरिक्तपदार्थतामतेऽप्यनुभवानुसारेण प्रत्याश्रयं भिन्नस्यैव तस्योपगमात्, तथाचैकसादृश्यस्य लक्षणे निवेशेऽपरसादृश्योपमितिकरणाव्याप्तिरिति भावः । लक्षणस्येव लक्ष्यस्याप्यननुगमे तु सदृशपदसमयग्रहानुपपत्तिरिति द्रष्टव्यम् । ननु सादृश्यत्वस्यानुगमादेव तेन रूपेण सादृश्यानामप्यनुगम इति नोक्तदोष इत्याशङ्क्य निराचष्टे नचेति । सादृश्यरूपत्वं = सादृश्यत्वं । तेष्वपि = भिन्नेष्वपि सादृश्येषु । सादृश्यत्वस्येव सादृश्यस्याप्यनेकनिष्ठत्वेन सादृश्यप्रतियोगिकं सादृश्यत्वानुयोगिकं सादृश्यमनेकनिष्ठत्वं वाच्यम्, तत्र च सादृश्यत्वमस्ति न वा, आद्ये परस्पराश्रयः, सादृश्यत्वस्यैकस्यैवाभ्युपगमेन स्ववृत्तिवृत्तित्वात्, द्वितीये तु सादृश्यत्वानधिकरणत्वेनानेकनिष्ठत्वं सादृश्यमेव न स्यात्, सादृश्यत्वान्तरस्य तत्राभ्युपगमे तु नानुगमसम्भव इति तदवस्थ-

तेष्वपीत्यदोषः; तथापि सादृश्येन सह सादृश्येऽनेकस्थत्वादौ सादृश्यरूपत्वाश्रिते सादृश्यरूपत्वस्याश्रयणाभ्युपगमे परस्पराश्रयभावोऽनभ्युपगमे चाननुगमः। तयोः सादृश्यानभ्युपगमे वाऽन्यत्रापि तथात्वापत्तिः । किञ्च वैधर्म्यप्रतिपत्तेरपि प्रमाणान्तरत्वमेवं स्यादविशेषात्, एवमेवाभ्युपगमे च परिगणितप्रमाणाधिक्यप्रसङ्गो वा सादृश्यबुद्धेरपि वा परिगणितेष्वेवान्तर्भावः स्यादिति ।

अप्रतीयमानस्य प्रतीयमानेन सह सादृश्यप्रमितिरुपमानमित्यपि न, आप्तवाक्या

---

उक्तदोष इति भावः । अनेकस्थत्वादावित्यादिना वृत्तिमत्त्वादिकं ग्राह्यम् । नन्वन्योन्याश्रयभियैव सादृश्यसादृश्यत्वयोरनेकस्थत्वेऽपि तस्य सादृश्यत्वं नाभ्युपेयमित्यत आह तयोरिति । सादृश्यसादृश्यत्वयोरित्यर्थः । अन्यत्र = मुखचन्द्रादौ तथात्वापत्तेः = सादृश्यानभ्युपगमापत्तेः, अनुभवापलापसाम्यात्, यत्किञ्चिद्दोषभयेन चानुभवस्यापलपितुमयुक्तत्वात्, अतएव घटाभावादौ घटाभावाद्यभ्युपगमोऽपि साधु सङ्गच्छते । नचैवमन्योन्याश्रयः स्वीक्रियतामिति वाच्यम्, स्वीक्रियतां को वारयति, तस्यादोषता तु परिहर्तुमशक्यतामात्रेण न सम्भवदुक्तिका, अतिप्रसङ्गात्, अभ्युपेत्यवादेन त्वाह किञ्चेति । वैधर्म्यप्रतिपत्तेरिति प्रमाणभूताया इति शेषः । प्रमाणान्तरत्वं = क्लृप्तप्रमाणभिन्नत्वं । एवञ्च न सिद्ध्यसिद्धिव्याघातः । एवं = साधर्म्यप्रतिपत्तेः प्रमाणभूतायाः क्लृप्तप्रमाणभिन्नत्वस्वीकारे । अविशेषात् = विनिगमकाभावात्, असन्निकृष्टविशेष्यकत्वादिना प्रत्यक्षाद्यनन्तर्भावस्य समत्वात् । एवञ्च विमता वैधर्म्यप्रतिपत्तिर्न प्रत्यक्षमसन्निकृष्टविशेष्यकत्वात्, सा गौ गवयसदृशीतिप्रतिपत्तिवदित्यादिरीत्याऽत्र प्रत्यवस्थातव्यम् । अयम्भावः—उन्मिषति हि धीरेषा करभे गोविसदृशताज्ञानानन्तरं 'करभविसदृशो गौ रिति' तत्करणमपि क्लृप्तप्रमाणानन्तर्भूतं कुतो न ? नच गवि करभविधर्मता करभवृत्तिधर्माभाववत्त्वं तच्चानुपलब्धिगम्यमिति वाच्यम्, करभावृत्तिधर्मवत्त्वस्य वैधर्म्यत्वेन प्रतीतिदशायां प्रमाणान्तरत्वस्यापर्यनुयोज्यत्वात् । अथ करभे गोवैधर्म्यं गवि करभवैधर्म्यं विनाऽनुपपन्नमित्यर्थापत्तिगम्यं तन्, तदा तेन सार्द्धमेतत्सादृश्यस्यानेन सार्द्धं तत्सादृश्यं विनाऽनुपपत्तिरेवेति साम्यमेव, तदाहुः—"साधर्म्यमिव वैधर्म्यं मानमेवं प्रसज्यते । अर्थापत्तिरसौ व्यक्तमिति चेत्प्रकृते न किं"मिति । यत्तु कैश्चिदुक्तम्—तत्प्रतियोगिकपदार्थप्रकारकज्ञानजन्यं तद्विशेष्यकं सत्सादृशज्ञानविशेष्यप्रतियोगिकपदार्थप्रकारकं ज्ञानमुपमितिः, गोसदृशो गवयः, गोविधर्मा करभ इत्यादिना गोप्रतियोगिकसाधर्म्यवैधर्म्यप्रकारकज्ञानेन जन्यं गोविशेष्यकं तादृशज्ञानविशेष्यीभूतगवयकरभप्रतियोगिकसाधर्म्यवैधर्म्यप्रकारकं ज्ञानं गवयसदृशो गौः, करभविसदृशो गौरित्यादि, तथाचैवमुभयोरेवोपमानान्तर्भाव इति न क्लृप्ताधिक्यमिति; तदचारु, गवयेन गामुपमिनोमीति धीवत्करभेन गामुपमिनोमीतिधियोऽभावेन तथोक्तेरसम्भवादिति । एवमेवाभ्युपगमे चेति । वैधर्म्यप्रतिपत्तेः प्रमाणान्तरत्वस्य क्लृप्तप्रमाणान्तर्भावस्य वाऽभ्युपगमे चेत्यर्थः । तेन 'सादृश्यबुद्धेरपि वेत्यादिग्रन्थस्य नासङ्गतिः ।

शाबरभाष्योक्तं "उपमानमपि सादृश्यमसन्निकृष्टेऽर्थे बुद्धिमुत्पादयती"ति लक्षणमर्थत आशङ्कते अप्रतीयमानस्येति । अप्रत्यक्षस्येत्यर्थः । सर्वथैवाप्रतीतौ तत्र सादृश्यप्रतीत्यनुपपत्तेः, प्रत्यक्षेण प्रतीतौ चोपमानानवसरापत्तेः । सादृश्यान्वयानुयोगित्वं षष्ठ्यर्थः । प्रतीयमानेन = प्रत्यक्षेण, सादृश्यप्रतियोगिनः प्रत्यक्षतायामेवोपमितेरनुभवादिदमुक्तम् । उपमानं = उपमितिः । एवञ्च तत्पुरुषीयतत्कालीनप्रत्यक्षाविषयानुयोगिकतत्पुरुषीयतत्कालीनप्रत्यक्षविषयप्रतियोगिकसादृश्यप्रमितिस्तत्पुरुषीया तत्कालीनोपमितिरित्यर्थः । तेन पुरुषान्तरीयप्रत्यक्षविषयत्वमादाय न दोषः ।

दपि तथाप्रमितेः। यत्र तद्व्यापारो नास्तीति चेन्न, स चायञ्चाभिन्नाविति वत् सचायञ्च सदृशाविति पूर्वप्रतीतस्य प्रतीयमानेन सहैवैन्द्रियकसादृश्यप्रतीतावपि प्रसङ्गात्। इन्द्रियासम्पृक्तस्येति चेन्न, प्रत्यक्षतो गोगवयसादृश्यं प्रतीत्य साऽपि च गौर्गवयेन सदृशी गोत्वादियमिवेत्यनुमितावपि प्रसङ्गात्। अलिङ्गजापीति चेत्, नन्वेवं प्रत्यक्षानुमानशब्दानुत्थत्वे सतीत्युक्तं स्यात्, तथा च विशेषणमेव समर्थमित्यप्रतीयमानस्येत्यादि व्यर्थम्। नोपादेयमेव पदान्तरमिति चेन्न, अर्थापत्तेरवश्यम्भावात्, तेन सार्द्धमेतत्सा-

---

तत्करणञ्चोपमानमिति शेषः। तथेति। सादृश्यप्रतियोगिनः प्रत्यक्षत्वदशायामिदं द्रष्टव्यम्। तादृशप्रमितौ शब्दाजन्यत्वविशेषणे शाब्दतादृशप्रमितौ नातिव्याप्तिरित्याह यत्रेति। तद्व्यापारः = शब्दव्यापारः। नास्तीति। सा तादृशप्रमितिरुपमितिरित्यनुषङ्गः। एवं परतोऽपि। ऐन्द्रियकेति। उक्तप्रतीतौ विशेष्यस्य तत्ताविशिष्टस्येन्द्रियासन्निकृष्टत्वेऽपि नासङ्गतिः, इदन्ताविशिष्टस्य तत्सन्निकृष्टत्वात्, यावद्विशेष्यसन्निकर्षस्य चानपेक्षणीयत्वात्। अन्यथाऽयं स इति भ्रान्तविपरीतप्रत्यभिज्ञाया अनुपपत्तिः, तत्र तत्तयोल्लिख्यमानस्येदन्तयोल्लिख्यमानाद्भिन्नतयाऽसन्निकृष्टत्वात्। व्यक्तमिदमुपमानमण्यादौ, अत्रैव च प्रत्यभिज्ञाखण्डने। इन्द्रियासम्पृक्तस्येति। इन्द्रियासन्निकृष्टविशेष्यिका तादृशप्रमितिः, इन्द्रियाजन्या तादृशप्रमितिरुपमितिरिति यावत्। तत्ताविशिष्टेऽलौकिकसन्निकर्षसत्त्वादुक्तैन्द्रियकप्रतीतेर्व्यावृत्तये यथाश्रुतमिदमिति तु भ्रमः, प्रभाकरेणालौकिकसन्निकर्षस्यैवानभ्युपगमात्। भट्टेन च वह्निविशेष्यकमानसोपनीतभानानभ्युपगमेऽपि वह्निविशेष्यकचाक्षुषाद्युपनीतभानाभ्युपगमेऽपि विशेषणतयैवोपनीतस्य भानेनोक्तप्रतीतौ तत्ताविशिष्टे विशेष्येऽलौकिकसन्निकर्षस्य वक्तुमशक्यत्वादिति। प्रत्यक्षत इति। सादृश्यप्रतियोगिनः प्रत्यक्षत्वलाभायेदम्। गोगवयसादृश्यं प्रतीत्य = गोत्वे गवयसादृश्यव्याप्तिं प्रतीत्य। अलिङ्गजा = व्याप्तिज्ञानाजन्या। तथाचेति। प्रमाणचतुष्टयवादे इति शेषः। विशेषणमेवेति। सादृश्यप्रमितित्वरूपविशेष्यसहितमिति शेषः। अतएवाह अप्रतीयमानस्येत्यादीति। सद्धान्तमिति शेषः। अर्थापत्तेरवश्यम्भावादिति। केवलव्यतिरेकितया पार्थक्येन वा क्लृप्तयाऽर्थापत्त्यैव सा गौर्गवयसदृशीतिधीसिद्धेरुपमानस्य पृथक्प्रमाणताभ्युपगमो निष्फल इत्यर्थः। एतदेव व्यनक्ति तेनेत्यादिना। नचार्थापत्त्यपेक्षितस्य गवयप्रतियोगिकगवानुयोगिकसादृश्यात्मकोपपादकज्ञानस्यार्थापत्तेः प्रागसम्भवात्कथं तस्या अवकाश इति शङ्क्यम्, तत्त्वादेरनुगमपक्षे सामान्यत उपपादकज्ञानसम्भवात्, उक्तञ्चोपमानमण्यादौ—"परस्परसदृशं हस्त्यादिकं प्रत्यक्षयतो यो यत्सादृश्यप्रतियोगी स तत्सदृश इति सामान्यतो व्याप्तिज्ञाने सति गौर्गवयसदृशस्तत्सादृश्यप्रतियोगित्वादित्यनुमानसम्भवः, सामान्यव्याप्तिग्रहाय साध्यप्रसिद्ध्यनपेक्षणात्, यत्तद्भ्यां व्याप्तिग्रहेऽस्माकं व्यतिरेकी, परेषामर्थापत्तिरित्यन्यदेत"-दिति। न च सामान्यव्याप्तिग्रहाय साध्यप्रसिद्ध्यनपेक्षणेऽपि विशेषणज्ञानविधया तदपेक्षा, अन्यथाऽनुमित्याद्यात्मकविशिष्टज्ञानानुत्पत्तेरिति वाच्यम्, विशेषणज्ञानस्य विशिष्टबुद्धिहेतुताया बहुशो निरस्तत्वात्, अभावसाध्यकव्यतिरेकिणीवात्रापि प्रथमं साध्यविशेष्यकमितिसम्भवाच्च। तत्त्वादेरननुगमे तु गोसदृशो गवय इत्यत्र भातानामेव पदार्थानां विशेषणविशेष्यभाववैपरीत्येन गवयसदृशो गौरित्यत्र भानाद्विशिष्टाप्रसिद्धावपि खण्डशः प्रसिद्ध्यैव निर्वाहात्। विशेष्ये विशेषणमित्यादिरीत्या चाप्रसिद्धसाध्यकस्थले साध्यविशेषणकमितौ न किञ्चिद्बाधकम्। किञ्च गवयसादृश्यं गवयभिन्नत्वे सति गवयगतभूयोधर्मवत्त्वम्, तत्र विशेषणदलं घटादौ विशेष्यदलञ्च गवये प्रसिद्धम्, गवयसादृश्यं किञ्चिद्वृत्ति सादृश्यत्वादितिरीत्या

दृश्यस्यानेन सार्द्धं तत्सादृश्यव्यतिरेकेणानुपपद्यमानत्वात्, अन्यथाऽन्यथाप्रत्ययोत्पत्तिविषयं प्रमाणं प्रमाणान्तरमापद्येत। तस्मादयं ह्रस्व इति प्रतीतेरस्मात्स दीर्घ इति चान्यथा कतमा प्रमा स्यात्। अर्थापत्तिं प्रमाणान्तरमनिच्छताऽपीयमर्थापत्तिरनुमानेवाऽन्तर्भाव्या पृथक्प्रमाणीकर्तव्या वा। एतेनाप्रतीतगवयगवान्तरसादृश्यस्य दृष्टान्ताभावेनानुमानासम्भवाद्गवयेनानेन सदृशी सा गौरितिमितिरुपमितिरित्यपि व्युदस्तम्। तथैतत्सादृश्यस्यैतेन तत्सादृश्यं विनाऽनुपपत्त्यैव सिद्धेरिति।

अनवगतसङ्गतिसंज्ञासमभिव्याहृतवाक्यार्थस्य सञ्ज्ञिन्यनुसन्धानमुपमानमि-

---

च सामान्यतो गवयसादृश्यं क्वचित्प्रसिद्धम्, गोविशेष्यकगवयसादृश्यप्रकारिका तु धीरर्थापत्तेर्व्यतिरेकिणो वा फलमिति काऽसङ्गतिः। किञ्च गवयप्रतियोगिकं सादृश्यं विना गवयानुयोगिकसादृश्यमनुपपन्नमिति यत्र प्रतियोगितासम्बन्धेन गवयानुयोगिकं सादृश्यं तत्रानुयोगितासम्बन्धेन गवयप्रतियोगिकं सादृश्यमिति तदेवोपपादकमिति पक्षधर्मताबलाद् गवि गवयप्रतियोगिकसादृश्यसिद्धिः। किञ्च यत्तादेरननुगमपक्षे प्रकृतसाधने यत्तद्भ्यां गृह्यमाणा व्याप्तिर्नानुमितावुपयुज्यते, व्याप्तिविशिष्टपक्षधर्मताज्ञानस्यानुमितिसामान्येऽपेक्षणीयताया निर्बीजत्वात्, अपि तु प्रकृतसाधने पक्षधर्मताज्ञानमेव तत्स्थलीयानुमितौ हेतुः, व्याप्तिग्रहस्तु प्रकृतसाध्यसाधनसजातीययोः ययोः कयोश्चिदेवेति भावसाध्यकत्वेऽप्रसिद्धसाध्यिकैवानुमितिः सम्भवति, कयोरपि साध्यसाधनजातीययोर्व्यभिचारग्रहस्तु प्रतिबन्धकः, स्वीकृता चैषा सरणिः प्रामाण्यवादे गदाधरैः। अत एव स्त्रीयस्तन्यपानादौ प्रवृत्तेः कृतिसाध्यताज्ञानसाहचर्यदर्शनेन यो यद्विषयकप्रवृत्तिमान् स तद्विषयककृतिसाध्यताज्ञानवानिति सामान्यव्याप्तिं निश्चित्य बालो गवानयनादौ प्रवृत्त्यात्मकलिङ्गेन तद्विषयकमध्यमपुरुषीयकृतिसाध्यताज्ञानमनुमाय लिङ्गस्तत्र शक्तिं गृह्णातीति भावः। अन्यथा = उक्तरीत्याऽर्थापत्त्यवयस्भावानभ्युपगमे। अन्यथा कतमेत्यत्रान्यथापदस्यायमेवार्थः। अन्यथा प्रत्ययोत्पत्तिविषयं = वैधर्म्यप्रत्ययोत्पादकं वैधर्म्यप्रत्ययस्तु तद्विधर्माऽयमिति प्रतीतिसमनन्तरभावी एतद्विधर्मा स इति ग्राह्यः। प्रमाणान्तरं = क्लृप्तप्रमाणभिन्नं। इति प्रतीतेः = इति प्रतीतिजन्या ततोऽस्य वैधर्म्यमस्मात्तस्य वैधर्म्यं विना ततोऽस्य ह्रस्वत्वं चास्मात्तस्य दीर्घत्वं विनाऽनुपपन्नमित्यर्थापत्तिरेवात्र प्रसारणीयेति भावः। पृथगिति। व्यतिरेकव्याप्तिज्ञानजन्यज्ञानस्यानुमितित्वे मानाभावादनुव्यवसायवैलक्षण्यादिति भावः। एतेनेति। अन्वयिनोऽसम्भवेऽपि व्यतिरेकिणोऽर्थापत्तेर्वा सम्भवेनेत्यर्थः। अप्रतीतमेतद्गवयस्य गवान्तरे सादृश्यं येन तस्येत्यर्थः। दृष्टान्ताभावात् = अन्वयव्याप्त्युपसंहारस्थलाभावात्। अनुमानासम्भवात् = सा गौरनेन गवयेन सदृशी गोत्वादियमिवेत्यनुमानासम्भवात्।

उक्तरीत्या सादृश्याधिगमस्योपमानफलत्वासम्भवेऽपि प्रवृत्तिनिमित्तपरिच्छेदस्य तथात्वसम्भवः, यद्यपि गोसादृश्यमतिदेशवाक्यादेवाधिगतम्, तथापि तन्न प्रवृत्तिनिमित्तमपि तु गवयत्वं जातिरेव लाघवात्, तच्चानधिगतमेव, तत्र हि गवयपदं वा गोसदृशपदं वाऽतिदेशवाक्यघटकं न बोधकम्, आद्यस्यानवगतशक्तिकत्वाद्द्वितीयस्य च गोसादृश्यस्यैव बोधकत्वादित्यभिप्रायेण न्यायकुसुमाञ्जलावुक्तं लक्षणं निराकुरुते अनवगतेत्यादि। अनवगता = अनिश्चिता सङ्गतिः = शक्तिर्यस्यास्तादृशी या संज्ञा गवयादिका तत्समभिव्याहृतं = तद्घटितं गोसदृशो गवय इत्यादिवाक्यं तदर्थस्य गोसादृश्यस्य संज्ञिनि गवयेऽनुसन्धानं गवयो गवयपदवाच्य इत्युपमितेः करणमित्यर्थः। तादृशवाक्यार्थशाब्दबोधस्योपमितिकरणत्वमतेऽनुसन्धानपदं शाब्दबोधपरमेव वक्तव्यम्, तादृशवाक्यार्थ-

त्यपि न, प्रस्मृतसङ्गतेरेवम्भूतोपमित्यव्यापनात् । अस्मृतसङ्गतीत्यभिधेयमिति चेन्न,

---

स्मरणस्य तथात्वमते तु यथाश्रुतमेव सम्यक्, गवये गोसादृश्यप्रत्यक्षस्य तथात्वमिति नव्यमते तु प्रत्यक्षमेव विवक्षणीयम्, ज्ञानसामान्यपरत्वं तु न, उपमितावपि कदाचिदुपनीतस्य गोसादृश्यस्य भानसम्भवेनातिव्याप्तेः । निश्चयत्वञ्च विवक्षाईमेव वह्निव्याप्यधूमवत्पर्वतसदृशं महानसमित्यादौ धर्मितावच्छेदकघटकांशे संशयाभावेन तदंशे ज्ञानत्वमात्रविवक्षयैव निर्वाहेऽपि तदन्यांशे संशयस्य प्रसक्तस्य वारणीयत्वात् । यँथार्थमपि तादृशवाक्यार्थं इति नाव्याप्तिः । गवयपदशक्तिग्रहानन्तरजाते तादृशवाक्यार्थज्ञानेऽतिव्याप्तिवारणायानवगतसङ्गतीत्युक्तम् । एवञ्च तत्पुरुषीयतत्कालीननिश्चयविषयतानाश्रयसङ्गतिकयत्किञ्चिच्छब्दघटितवाक्यार्थानुसन्धानं तत्पुरुषीयतत्कालीनोपमितिकरणमित्यर्थः । यत्र सङ्गत्यंशे संशयात्मकमपरांशे च निश्चयात्मकं ज्ञानं तत्र निश्चयीयविषयतानाश्रयत्वस्य सङ्गतावभावेऽपि कोटितास्यविषयताविलक्षणविषयताविशेषानाश्रयत्वमक्षतमेव, अतिदेशवाक्यघटकानां गवादिशब्दानां तादृशविषयताश्रयत्वस्यावश्यकत्वाच्छब्दे यत्किञ्चिदिति विशेषणम् । तादृशानुसन्धानमुपमितिकरणलक्षणलक्ष्यमेवोपादर्शि, न तु तदुपमितिकरणलक्षणम्, उपमित्युपधायकव्यापारवत्कारणत्वस्यैव तथात्वात्, तच्चोपमितिलक्षणनिरूपणाधीननिरूपणकमिति प्रथममुपमितिलक्षणमेव वक्तव्यम् । तच्च यदि तत्पुरुषीयतत्कालीननिश्चयीयविषयतानाश्रयसङ्गतिकतच्छब्दघटितवाक्यार्थसामानाधिकरण्येन तच्छब्दवाच्यतावच्छेदकप्रकारकोऽनुभवस्तत्पुरुषीयतत्कालीनतच्छब्दवाच्यतोपमितिरित्येवमुच्यते, तदा वस्तुगत्या तादृशवाक्यस्य गवादिसादृश्यादिरूपोयोऽर्थस्तत्सामानाधिकरण्येन गवयादिशब्दवाच्यतावच्छेदकप्रकारकानुमित्यादावतिप्रसङ्गः, तादृशवाक्यार्थे तत्पुरुषीयतत्कालीनानुसन्धानविषयत्वविवक्षायामपि दोष एवायम्, किन्नाम तत्र वस्तुतो वाक्यार्थः । अथ तादृशवाक्यार्थानुसन्धानकालीनत्वमपि तच्छब्दवाच्यतावच्छेदकप्रकारकानुभूतौ विवक्षणीयम्, तादृशानुसन्धानकालीना च वाच्यतावच्छेदकप्रकारिकानुभूतिरुपमितिरेवेति नियतिरियमचला धीरधीरिवेति ब्रूपे तदापि कालशब्देन स्थूलकालस्य क्षणस्य वा विवक्षणे सङ्गतौ तत्क्षणवृत्त्युपमितिविषयत्वमादायासम्भवः, कश्चायं तादृशानुसन्धानस्य महिमा येन तत्कालीनो वाच्यतावच्छेदकानुभव उपमितिरेव स्यात्, बलवत्त्वानुमितिसामग्र्या एव तत्र सम्भवस्याभिधास्यमानत्वात् । एवञ्च स्वाव्यवहितप्राक्क्षणावच्छेदेन तत्पुरुषीयनिश्चयीयविषयतानाश्रयत्वविवक्षाऽपि नादरणीया । एतेन किञ्चिद्वाक्यार्थसामानाधिकरण्येन संज्ञाप्रवृत्तिनिमित्तपरिच्छेद उपमितिरिति च परास्तम् । यदपि उपमितिर्यं जातिरेव, न च कोपमितिरिति जिज्ञासाया उपमितित्वमात्राभिधानेन न निवृत्तिसम्भव इति वाच्यम्, गवयो गवयपदवाच्य इत्यादिव्यक्तिञ्चिद्वयक्तिवृत्त्यनुभवत्वन्यूनवृत्तिजातित्वेन तस्या लक्षणत्वादिति, तदप्येतेन निरस्तम्, यदि ह्युपमितित्वस्य जातित्वे 'उपमिनोमी'त्यनुभवः प्रमाणम्, तदा गवयोगवयपदवाच्य इत्यादिधियामुपमितित्वेन तावत्प्रसिधतम्. गवयेन गामुपमिनोमीतिबुद्धेरेव सत्त्वेन सादृश्यप्रतीतेरेवोपमितित्वस्य वक्तव्यत्वात्, यदि च कारणवैजात्ये कार्यवैजात्यमावश्यकमिति कारणवैजात्यमेव तत्र प्रमाणम्, तत्प्रदर्शनपरमेव चानवगतसङ्गतीत्यादिवाक्यमित्युच्यते, तदाऽभिधास्यमानोऽनुमासामग्र्याः सम्भव एवात्रोत्तरतामालम्बनाम्, निरस्तञ्च जातिमात्रमिति । एवञ्चोपमितेरेव दुर्निरूपत्वे तत्करणत्वनिरूपणं दूरापास्तमिति समुदायार्थः । यथाश्रुतं निराचष्टे प्रस्मृतेति । विस्मृतसङ्गतिकजनस्येत्यर्थः । प्रोपसृष्टो हि स्मरतिर्विस्मरणे प्रयुज्यते, "नाक्षराणि पठता किमपाठि प्रस्मृतः किमथवा पठितोऽपी"त्यादौ यथा । एवम्भूतेति । संज्ञासंज्ञिभावविषयकेत्यर्थः । मीमांसकसम्मतोपमितित्याव्रृत्तये इदम् । उपमितिपदं तत्करणोपलक्षणम् । तत्रसङ्गतावनवगतत्वाभा-

अनुभूतस्मृतकालान्तरप्रस्मृतसङ्गतेरव्यापनात् । असमर्यमाणेति चेन्न, कदाचिदस्मर्यमाणतायास्तत्रापि सम्भवात्, सर्वदाऽस्मर्यमाणतायाः क्वचिदप्यसम्भवात् । उपमितिप्राक्काले इति चेत्, स्यादप्येतद्यद्युपमितिर्लक्षिता स्यात्, तदर्थमेव तु क्रन्दनमिदम्भवतः । किञ्च सर्वैरनवगतसङ्गतित्वस्य प्रकृतेऽप्यसिद्धेः, केनाप्यनवगतसङ्गतित्वस्य वाक्यजेऽपि सम्भवात् । उपमात्रेति च पूर्ववन्निरस्तम् । यस्याः प्रमितेर्येन प्रमात्रेति चाभिधानेऽनुगतरूपाभावाद्व्यक्तौ पतनेन लक्षणाननुगत्यापत्तेः । सञ्ज्ञेत्यपि व्याकुलम्, गोसदृशो गवयः प्रायः कानने महति दृश्यते इतिश्रुतवाक्यस्य काननपदाविदितसङ्गतेर्गवयपदविदितसंङ्गतेश्च सञ्ज्ञासञ्ज्ञिसम्बन्धप्रतिपत्तिफलायामीदृशप्रतिपत्तौ गतत्वेनाति-

---

वेनोक्तानुसन्धानस्य करणत्वासम्भवात् । प्रस्मृतसङ्गतेरव्यापनात् = प्रस्मृतसङ्गतेः पुरुषस्योपमितिकरणासङ्ग्रहात् । अस्मर्यमाणेति । तत्कालीनस्मृतिविषयत्वाभावः सङ्गतौ विवक्षणीय इति तत्र कदाचित्स्मृतिविषयत्वसत्त्वेऽपि न क्षतिरिति भावः । तत्कालपदेन यत्किञ्चित्कालो वा, उपमित्यव्यवहितप्राक्कालो वा, तत्तानुगमे सर्वकालो वा विवक्षितः, तत्राद्ये कदाचिदिति । तत्रापि = कदाचित्स्मृतसङ्गतावपि । तथा च गवयपदसमयग्रहोत्तरजातेऽतिदेशवाक्यार्थानुसन्धानेऽतिव्याप्तिरिति भावः । तृतीये सर्वदेति । असम्भवात् = अनिश्चयात्, तथा च लक्षणस्यापि न क्वचिन्निश्चयसम्भवः । द्वितीयमाशङ्कते उपमितिप्राक्काले इति । स्मृतिविषयत्वाभावः सङ्गतौ विवक्षित इति शेषः । स्वाव्यवहितप्राक्क्षणावच्छिन्ननिश्चयविषयत्वाभाववत्सङ्गतिकसंज्ञाघटितवाक्यार्थसामानाधिकरण्येन संज्ञाप्रवृत्तिनिमित्तपरिच्छेदात्मनोपमितिं निरुच्य तत्करणतयोपमाननिरुक्तौ नात्माश्रयः, स्वत्वेनोपमितेरुपादानेऽप्युपमितित्वेनानुपादानादित्यस्वरसादाह किञ्चेति सर्वपुरुषीयनिश्चयविषयत्वाभावो वा, यत्किञ्चित्पुरुषीयनिश्चयविषयत्वाभावो वा, उपमातृनिश्चयविषयत्वाभावो वा विवक्षितः, तत्राद्ये सर्वैरिति । प्रकृते = उपमितिग्राह्यशक्तिके गवयादिशब्दे । तथाचसर्वाव्याप्तिः । द्वितीये केनापीति । केनचिदित्यर्थः । वाक्यजे = मानान्तरेण शक्तिग्रहानन्तरं पुनरपि गोसादृश्यादिसामानाधिकरण्येन शाब्दबोधाद्गृहीतशक्तिके गवयादिशब्दे । तथाचातिव्याप्तिरिति भावः । तृतीये उपमात्रेति । अनवगतसङ्गतिकत्वं विवक्षणीयमिति शेषः । पूर्ववदिति । उपमितित्वेनोपमितेः प्रवेशेनात्माश्रयादित्यर्थः । ननु तत्पुरुषीयोपमितेः स्वाव्यवहितप्राक्क्षणावच्छिन्नतत्पुरुषीयनिश्चयविषयतानाश्रयसङ्गतिकसंज्ञेत्यादिप्रकारेण निर्वचने नोक्तदोष इत्याशङ्क्याह यस्या इति । व्यक्तौ पतनेन = तत्तद्व्यक्तिपर्यवसानेन । यत्तातत्तात्वत्वादेरननुगमादिति भावः । निवेदितञ्चैतत्प्रत्यक्षखण्डने । अगत्याऽननुगमस्य स्वहस्तिततत्वपक्षेऽप्याह संज्ञेति । व्याकुलं = लक्षणस्य दुष्टतासम्पादकम् । महतीतिपदं सम्पातायातम्, काननपदसङ्गतिग्रहणे तदनुपयोगात् । वस्तुतस्तु गोसदृश इति पदमपि तथैव, तद्धि वाक्यार्थस्य साधर्म्यवैधर्म्यान्यतरात्मकतया विवक्षणेऽपि निश्चयाविषयसङ्गतिककाननसंज्ञासमभिव्याहृतगोसाधर्म्यस्य गवयेऽनुसन्धानमस्तीत्यापाततो लक्षणसङ्गमनप्रदर्शनायैव । संज्ञासंज्ञिसम्बन्धप्रतिपत्तिफलायामिति । काननं काननपदार्थ इति प्रतिपत्तिफलायामित्यर्थः । ईदृशप्रतिपत्तौ = गवयवत्त्वेन प्रायो दृश्यमानं काननमितिप्रतिपत्तौ । अस्याः प्रतिपत्तेर्गवयवत्त्वेन प्रायो दृश्यमानत्वरूपतादृशवाक्यार्थसामानाधिकरण्येन काननपदप्रवृत्तिनिमित्तपरिच्छित्तिकरणत्वादुपमानत्वं स्यात्, तादृशपरिच्छित्तिस्तु काननं काननपदवाच्यं गवयवत्त्वेन प्रायोदृश्यमानत्वादित्यनुमित्यात्मिका वा प्रसिद्धपदसमभिव्याहारान्यथानुपपत्त्यधीना वेत्यन्यत् । गवयवत्त्वेन दृश्यमानत्वस्य व्यभिचारित्वात्प्रायः पदमुपात्तम्, तदनुपादानेऽपि प्रसिद्धपदसमभिव्याहारान्यथानुपपत्त्याऽर्थापत्तेः

व्यापकत्वात्, विनापि वा प्रायःशब्दमभिहितस्य तस्यानुसन्धाने प्रसङ्गः, तत्र काननसञ्ज्ञासञ्ज्ञिसम्बन्धावधारणेऽप्यन्यत्रैव पदान्तरसम्बन्धोत्थाया अन्यथानुपपत्तेः प्रमाणत्वान्नतूपमानस्य। उपमेयसञ्ज्ञासमभिव्याहृतेति विशेषणे च पूर्वोक्त एव निरासः। वाक्यार्थेत्यपि तादृगेव, प्रतिपत्तिकालास्मृतातिदेशवाक्यगतकाननादिपदार्थस्य तथाविधप्रत्ययाव्यापनात्। वाक्यैकदेशस्यापि वाक्यत्वेन विवक्षितत्वे सदृशो गवय इत्यादिस्मारिणोऽपि प्रत्यये प्रसङ्गात्। प्रतीत्युत्पत्तिं प्रति प्रयोजकीभूतं यावत्तावद्वाक्यं

---

सम्भवः, न च गवयवत्त्वेन प्रायो दृश्यमानत्वमपि क्वचिद्गृहादौ न सम्भवति, परिच्छित्तिशब्देन प्रमात्वविवक्षणेऽपि भ्रान्त्यात्मकान्यथानुपपत्तिग्रहेणापि प्रमोत्पादनात्, एवञ्चासल्लिङ्गकपरामर्शेनापि जन्याया धियो वस्तुतः साध्यवद्विषयकत्वे प्रमात्वसम्भव इत्यभिप्रायेणाह विनापीति। अभिहितस्य तस्य = उच्चरितोक्तवाक्यार्थस्य। ननु संज्ञासंज्ञिसम्बन्धप्रत्ययफलकत्वे तादृशानुसन्धानस्योपमानत्वमेष्टव्यमेवेत्यत आह तत्रेति। अन्यत्रैवेति। यथा प्रभिन्नकमलोदरे मधूनि मधुकरः पिबतीति वाक्यमाकर्ण्य मधुकरपदातिरिक्तपदार्थं विद्वान् मधुपानकर्तृतयाऽवलोक्यमानं मधुकरपदाभिधेयतया निश्चिनुते, मधुकरपदस्य तदभिधायकतां विना प्रसिद्धसमपकोक्तवाक्यघटकपदसमभिव्याहृतत्वानुपपत्तेः, तथा प्रकृतेऽपीतिभावः। पदान्तरसम्बन्धोत्थायाः = गृहीतशक्तिकपदान्तरसमभिव्याहारज्ञानाधीनायाः। अन्यथानुपपत्तेरिति। अनुमानस्याप्युपलक्षणमिदम्। न तूपमानस्येति। प्रमाणत्वमिति विपरिणतमनुपज्यते। "नामूढस्येतरोत्पत्तेः," "नानुपमृद्य प्रादुर्भावा"दितिन्यायसूत्रयोरमूढस्येतरोत्पत्तेरभावात्, अनुपमृद्य प्रादुर्भावाभावादित्यर्थकतादर्शनेन प्रथमेतरविभक्त्यन्तार्थस्यापि नञर्थान्वयोपगमे तु विपरिणामं विनापि निर्वाहसम्भव इति ध्येयम्। उपमानस्य हि साधर्म्यवैधर्म्यान्यतरसामानाधिकरण्येन प्रवृत्तिनिमित्तपरिच्छेद एव प्रामाण्यम्, न च काननपदस्य प्रकृतः प्रवृत्तिनिमित्तपरिच्छेदस्तादृशः, किञ्चित्साधर्म्यस्य वैधर्म्यस्य वा साधर्म्यत्वेन वैधर्म्यत्वेन वा काननेऽप्रतीतत्वादिति भावः। नन्वनवगतसङ्गतिका संज्ञोपमेयस्य विवक्षिता उक्तवाक्येन च न काननं किञ्चित्सादृश्यवत्तयाभिहितमपि तु गवय इति काननसंज्ञाऽनवगतसङ्गतिकापि नोपमेयस्येत्याशङ्क्याह उपमेयेति। पूर्वोक्त इति। उपमितित्वस्य स्वज्ञानाधीनज्ञानकत्वापत्त्याऽप्रमाश्रयइत्यर्थः। ननु स्वाव्यवहितप्राक्क्षणावच्छेदेन तत्पुरुषीयनिश्चयविषयतानाश्रयसङ्गतिकतत्संज्ञासमभिव्याहृतवाक्यार्थसामानाधिकरण्येन तादृशवाक्यार्थस्य साधर्म्यत्वेन वैधर्म्यत्वेन वाऽनुसन्धानकालीनस्तत्संज्ञाप्रवृत्तिनिमित्तपरिच्छेदस्तत्पुरुषीयतत्संज्ञाप्रवृत्तिनिमित्तोपमितिस्तत्करणञ्चोपमानम्, तच्च तादृशानुसन्धानमेवेति नोक्तदोष इत्याशङ्क्याह वाक्यार्थेति। तादृगेव=व्याकुलमेव। तादृशवाक्यार्थस्येत्यत्र तादृशसमग्रवाक्यस्य वा तादृशवाक्यैकदेशस्य वा विवक्षा स्यात्, तत्राद्ये प्रतिपत्तीत्यादि। गवयपदार्थानवगन्तारं प्रति 'कानने गोसदृशो गवयोऽवलोक्यते' इत्यादिवाक्यप्रयोगस्थले द्रष्टव्यमिदम्। प्रतिपत्तिकालः = उपमित्यव्यवहितप्राक्कालः। पदार्थस्येत्यन्तं बहुव्रीहिणा पुरुषपरम्। तथाविधप्रत्ययाव्यापनात् = गवयो गवयपदवाच्य इत्युपमितेस्तत्करणस्य चासङ्ग्रहात्, सोपमितिर्हि तत्र न समग्रवाक्यार्थानुसन्धानकालीना, कानने गोसदृशोगवयोऽवलोक्यते इति समग्रवाक्यार्थानुसन्धानस्याभावात्, गोसदृशो गवय इत्यस्यैवानुसन्धानस्य तत्र सद्भावादिति भावः। द्वितीये वाक्येति। इत्यादिस्मारिणोऽपि = इत्यादिवाक्यैकदेशस्मारिणोऽपि। अपरांशे संस्कारानुद्बोधदशायामिदम्। प्रत्यये = सदृशो गवय इत्यनुसन्धाने साधर्म्यत्वेन तादृशसंज्ञाघटितवाक्यार्थविषयके। प्रसङ्गात् = निरुक्तोपमितिकरणत्वप्रसङ्गात्। किञ्चित्प्रतियोगिकसाधर्म्यत्वेनानुसन्धानविवक्षायां नायं दोष

विवक्षितमितिचेन्न, अन्तर्भावितवनाधिकरणताद‍ृशप्रतीतिं प्रति तस्यापि प्रयोजकत्वात्। उपमितिं प्रतीति तु पूर्ववन्निरस्तमिति। यावत्सञ्ज्ञासञ्ज्ञिसम्बन्धबुद्ध्यौपयिकं तावद्विवक्षितमिति चेन्न, लक्षणसहचरितसञ्ज्ञोपदेशार्थानुसन्धानेऽपि प्रसङ्गात्। किञ्च यदा तर्कानुसन्धानविरहिणः सत्यप्येवंविधानुसन्धाने साद‍ृश्यमेवं गवयपदप्रवृत्तिनिमित्तमिति मितिः फलमुत्पद्यते तदा तस्याप्रमाकरणस्याप्युपमानत्वमापद्येत। प्रमाफलकमिति विशेषणप्रक्षेपे चानुसंहितरूपव्यवहार्यतानुमित्युत्पादेनाप्येताद‍ृशानुसन्धानमुपमानं स्यात्। अव्याप्तविषयप्रमाफलकमिति विशेषणीयमिति चेन्न, वस्तुगत्याऽव्याप्तत्वस्यो-

---

इतिचेत्, धूमवत्त्वेन पर्वतसद‍ृशं महानसमितिवाक्यैकदेशार्थविषयके पर्वतसद‍ृशं महानसमित्यनुसन्धाने तथाप्यतिप्रसङ्गात्। गूढाभिसन्धिराशङ्कते प्रतीतीति। गूढाभिसन्धिः परिहरति अन्तर्भावितेति। विषयतयाऽन्तर्भावितं वनात्मकं गवयाधिकरणं यस्या एवम्भूतां कानने गोसद‍ृशो गवयइत्याद्याकारां प्रतीतिमित्यर्थः। तस्य = उक्ताकारवाक्यस्य। प्रयोजकत्वादिति। तथा च समग्रवाक्यार्थानुसन्धानविवक्षापक्षोक्तदोष इत्यर्थः। पराभिसन्धिमुद्धाट्यापि स्वाभिसन्धिमुद्धाटयन्निराकरोति उपमितिमिति। प्र त ति। प्रयोजकीभूतं यावत्तावद्वाक्यं विवक्षितमित्यनुपपद्यते। गोसद‍ृशो गवय इति वाक्यांशस्तूपमितिप्रयोजक एवेति नोक्तदोषः। पूर्वमिति। आत्माश्रयादिति भावः। ननूपमितित्वेनोपमितेर्निवेशो न मे विवक्षागोचरः, ताद‍ृशवाक्यार्थस्येत्यनेन तत्संज्ञाशक्तिग्रहौपयिकताद‍ृशवाक्यार्थस्येति हि विवक्षितमिति भावेनाशङ्कते यावदिति। वाक्यमिति शेषः। लक्षणेति। उपदेशोऽत्र वाक्यं गन्धवती पृथिवीत्यादिकम्। प्रसङ्गात् = उपमितिकरणत्वप्रसङ्गात्, गन्धस्य किञ्चित्प्रतियोगिकसाधर्म्यत्वेन भानदशायामित्यादिः। बलवत्तानुमितिसामग्रीसम्भवन्नाभिप्रेत्येदम्, अन्यथेष्टापत्तिसम्भवात्। दोषान्तरमाह किञ्चेति। तर्कानुसन्धानेति। गवयत्वापेक्षया सखण्डत्वेन साद‍ृश्ये गौरवानुसन्धानेत्यर्थः। एवंविधानुसन्धाने = अनिश्चितसङ्गतिकसंज्ञाघटितवाक्यार्थानुसन्धाने। अप्रमाकरणस्येति। साद‍ृश्यस्यातिरिक्तपदार्थतामते तु गौरवानवकाशात्तस्यापि प्रवृत्तिनिमित्तत्वसम्भवेन प्रमाकरणत्वमेवोक्तानुसन्धाने इति द्रष्टव्यम्। उपमानत्वमापद्येतेति। प्रमाकरणस्यैव लक्षणाभिप्रायेणेदम्, अन्यथेष्टापत्तिसम्भवात्। प्रमाफलकमिति। अत्र विषयत्वानवच्छिन्ना प्रमाजनकता विवक्षिता, तेन स्वविषयकानुव्यवसायात्मकप्रमाफलकत्वेऽपि ताद‍ृशानुसन्धानस्य न दोषतादवस्थ्यम्, प्रमामात्रफलकत्वस्य स्वध्वंसफलकेऽपि तत्रासम्भवात्। अनुसंहितेति। अनुसन्धानविषयीभूतं रूपं गोसाद‍ृश्यं तल्लिङ्गकगवयशब्दोल्लेखिव्यवहारविषयतासाध्यकानुमित्युत्पादके वक्ष्यमाणरीत्या व्याप्तिविषयकेऽतिदेशवाक्यार्थानुसन्धाने शक्तिग्रहानुत्पादकेऽपि प्रमाफलकत्वसत्त्वादतिव्याप्तिः। यद्यपि 'वराहं गावोऽनुधावन्ती'ति श्रुतेर्वराहस्यापि गोसद‍ृशत्वेनोक्तसाध्ये तद्व्यभिचारि, तथाऽपि साध्यवत्पक्षकत्वेनानुमितेः प्रमात्वं निर्बाधम्। न च निवेशितं शक्तिग्रहौपयिकत्वं न तत्स्वरूपयोग्यत्वमपि तु तदुपधायकत्वमिति वाच्यम्, कार्योत्पादस्य कारणतावच्छेदककोटौ निवेशोऽन्योन्याश्रयात्, नहि कार्योत्पादं विना तद्वैशिष्ट्यात्मकतदुपधानसम्भवइति भावः। उत्पादेनापीत्यत्र वैशिष्ट्ये तृतीया। ताद‍ृशानुमित्युत्पादकमपीतियावत्। यदि तूक्तस्थलीयानुसन्धानस्य शक्तिग्रहोत्पादकत्वमपीत्युच्येत, तदाऽनुमितिसामग्रीसम्भवे एव वक्ष्यमाणे तात्पर्यम्। अव्याप्तेति। अव्याप्यविषयकत्वे सति निरुक्तं प्रमाफलकत्वं विवक्षितम्, अनुमितिमुपदधानस्य त्वनुसन्धानस्य व्याप्यविषयकत्वमेवेति नातिव्याप्तिरिति भावः। लिङ्गोपधानमते प्रमायामव्याप्तविषयकत्वविवक्षयाप्यतिव्याप्तिवारणसम्भवेऽपि मतान्तरसाधारण्याय सा नादृता। 'तेन सह व्याप्तत्वाव-

पमेयेऽप्यभावात्। व्याप्ततयाऽनवगम्यमानस्येति च कृते यत्प्रति तल्लिङ्गं तेन सह व्याप्तत्वावगतमुपमितिकरणमपि न व्याप्नुयात्। उपमेयेन सह व्याप्तत्वानवगतस्योक्तावप्यनुमाने प्रसङ्गस्तदवस्थः। अनुमेयेन सहेति कृते च तदनपायादव्याप्तिस्तदवस्थैव।

सञ्ज्ञासञ्ज्ञिसम्बन्धप्रमितिकरणमिति चेन्न, तथात्वासिद्धेः, अर्थापत्त्यादितस्तत्सिद्धेर्वक्ष्यमाणत्वात्। अनन्तुमितिजनकं तादृक्प्रतिसन्धानमुपमानमिति चेन्न, तज्जातीय-

---

गत'मित्यग्रिमग्रन्थास्वरसाच्चेति। उपमेये=सादृश्यवत्तया अतिदेशवाक्यार्थानुसन्धानविषये। अभावादिति। सर्वस्यापि वस्तुतः किञ्चिन्निरूपितव्याप्तिमत्त्वादिति भावः। व्याप्ततयाऽनवगम्यमानस्येति। प्रमाफलकं तादृशानुसन्धानमुपमानमिति शेषः। एवञ्च विषयत्वं षष्ठ्यर्थोऽनुसन्धानान्वयि। तथा च व्यावृत्तिरनुमित्युत्पादकानुसन्धानस्येति व्याप्यत्वावच्छिन्नविषयत्वानिरूपकत्वमनुसन्धाने विवक्षितव्यमिति भावः। यत्प्रति तल्लिङ्गं=सादृश्यवत्तयाऽनुसन्धीयमानं यन्निरूपितव्याप्तिमत्। तेन सह व्याप्तत्वावगतमिति। तन्निरूपितव्याप्तिमत्त्वमवगतं विषयीकृतं येन तादृशमनुसन्धानमित्यर्थः। अथवा तन्निरूपितव्याप्तिमत्त्वेनावगतमनुसन्धानेन विषयीकृतं यदुपमेयं तदेतल्लक्षणमुपमितिकरणमपि तादृशानुसन्धानं न व्याप्नुयादित्यध्याहृत्य व्याख्येयम्। ननूक्तानुसन्धाने व्याप्यत्वावच्छिन्नविषयत्वानिरूपकत्वासत्त्वेऽपि प्रकृतसादृश्यावच्छिन्नविषयतानिरूपितव्याप्यत्वावच्छिन्नविषयत्वानिरूपकत्वमक्षतमेव, तदेव च विवक्षितम्, न च गोसदृशव्याप्यतायां गोसदृशे एवावगाहनसम्भवेन क्वचिदव्याप्तिः; भेदघटितव्याप्यत्वस्य विवक्षितत्वात्, तदंशे भ्रममादाय तु न दोषः, प्रमीयतादृशविषयत्वानिरूपकत्वस्य विवक्षितत्वात्. तत्राह उपमेयेनेति। प्रकृतसादृश्यवतेत्यर्थः। उपमितित्वविवक्षायामात्माश्रयाद्यापत्तेः। अनुमाने=अनुमित्युत्पादकानुसन्धाने गवयपदव्यवहर्तव्यतानिरूपितव्याप्तिविषयके। अनुमेयनिरूपितव्याप्यत्वावच्छिन्नविषयत्वानिरूपकत्वविवक्षायां नातिव्याप्तिः, अनुमानस्य तादृशविषयतानिरूपकत्वादित्याशङ्क्याह अनुमेयेनेति। तदनपायात्=अनुमेयत्वस्य क्वचिदप्यनपायात्। अव्याप्तिरिति। उपमानेन यद्व्याप्यतयोपमेयावगाहनं तस्याप्यनुमेयत्वात्क्वचित्, एवमनुमेयस्य साध्यत्वादिना निवेशेऽपि दोष एव। फलीभूतमितिनिरूपितविधेयताश्रयनिरूपितव्याप्यत्वावच्छिन्नविषयत्वानिरूपकत्वविवक्षणेऽपि तथैव, कदाचिदुपमितिनिरूपितविधेयताश्रयनिरूपितव्याप्यत्वस्याप्युपमाने भानसम्भवात्। एतद्दोषपरिजिहीर्षुराशङ्कते संज्ञेत्यादि। करणमिति। उपमानमिति शेषः। किञ्चेत्यादिप्रागुक्तदोषस्य वारणाय प्रमात्वनिवेशः, संज्ञासंज्ञिसम्बन्धविषयकत्वनियतधर्मावच्छिन्नप्रमानिष्ठकार्यतानिरूपितकरणताश्रयत्वं तु विवक्षितम्, तेन प्रमात्वस्यार्थसमाजग्रस्ततया कार्यतानवच्छेदकत्वेऽपि क्वचिन्मानान्तरस्यापि शक्तिप्रमापकत्वेऽपि च न दोषः। तथात्वासिद्धेः=क्लृप्तमानातिरिक्ते तादृशकरणताश्रयत्वासिद्धेः। अर्थापत्त्यादित इत्यादिनानुमितिर्ग्राह्या। तत्सिद्धेः=संज्ञासंज्ञिसम्बन्धप्रमितेः। एवञ्च कार्यकारणभावानुगमस्याभावेन क्वचिदन्यथानुपपत्त्यादिनिष्ठकरणतानिरूपितकार्यतैव संज्ञासंज्ञिसम्बन्धविषयकत्वनियतधर्मावच्छिन्ना वक्तव्येति भावः। अननुमितिजनकमिति। व्यवहर्तव्यतासाध्यकानुमितिजनकप्रतिसन्धानव्यावृत्तयइदम्, अर्थापत्तेरनुमित्यन्तर्भावमभिसन्धाय च। तादृक्प्रतिसन्धानमिति। स्वफलीभूतमित्यव्यवहितप्राक्क्षणावच्छिन्नतत्पुरुषीयनिश्चयविषयतानाश्रयसङ्गतिकसंज्ञाघटितवाक्यार्थस्यानुसन्धानं तत्पुरुषीयोपमितिकरणमित्यर्थः। अननुमितिजनकमित्यनेनानुमितिस्वरूपयोग्यत्वं वा निषिध्यते तदुपधायकत्वं वा. आद्ये तज्जातीयस्येति। निरुक्तानुसन्धानजातीयस्येत्यर्थः। अनुमिति-

स्यानुमितिजनकत्वात् । व्यक्त्यपेक्षायाञ्चाजनकत्वस्य जनकत्वस्य सामान्याकारपर्यवसायिनो नित्यं व्यक्त्यावसम्भवितयाऽननुगमेन चायुक्तत्वादिति । किञ्च गोसादृश्यं विहाय गवयत्वजातौ गवयशब्दार्थताप्रतीतिः कल्पनालाघवाख्यं तर्कमपास्य न स्यादिति तदुपन्यासस्थितौ किमानुमानिक्येव तत्र गवयपदवाच्यताप्रमितिरियं नेष्यते, सम्भवति हि प्रयोगः—विमतिपदं गवयशब्दप्रवृत्तिनिमित्तं तथात्वे तर्केण विपक्षीक्रियमाणविपर्य-

---

जनकत्वात् = स्ववहृतंव्यतासाध्यकानुमितिजनकताया दर्शितत्वात् । न च तस्य व्याप्तिज्ञानत्वेनैवानुमितिजनकत्वं वाच्यम्, तच्च कथमिति वाच्यम्, यो गोसदृशः स गवयपदव्यवहार्य' इत्यतिदेशवाक्यस्थले वा गोसदृशो गवयपदव्यवहार्य इत्यतिदेशवाक्यस्य गोसदृशत्वावच्छेदेन तादृशव्यवहार्यताबोधाय प्रवृत्तिदशायां वोक्तानुसन्धानस्य व्याप्तिज्ञानत्वसम्भवात्, तादृशबोधे व्याप्तिनिरूपकत्वभानात् । एवञ्चानुमितिस्वरूपयोग्यत्वस्य निर्बाधत्वेन तन्निषेधोऽशक्यः । द्वितीये व्यक्त्यपेक्षया चाजनकत्वस्येति । तज्जातीयस्यानुमितिजनकत्वेऽपि तस्यानुमितिजनकत्वाभावविवक्षयोक्तनिवेशस्येत्यर्थः । एवञ्च फलोपधायकत्वनिषेध एव पर्यवस्यति । अयुक्तत्वादिति सम्बन्धः । तत्र हेतुमाह जनकत्वस्येत्यादिना । सामान्याकारपर्यवसायिनः = सामान्यधर्मावच्छेदेनैव प्रत्येतुं शक्यस्य । व्यक्तौ नित्यमसम्भवितया = व्यक्तीनामानन्त्येन विशेषधर्मपुरस्कारेण कथमपि प्रत्येतुमशक्यतया । एवं हि एस्यास्तादृशानुसन्धानव्यक्तेरनुमित्युपधायकत्वाभावस्तस्यास्तत्पुरुषीयोपमितिकरणत्वमित्युक्तं स्यात्, करणत्वञ्च कारणताघटितमिति प्रातिस्विकरूपेण तादृशानुसन्धानव्यक्तीनां कारणताग्रहोऽनुसर्तव्यः, न च स सम्भवतीतिभावः । नन्वेवं सर्वासां तादृशव्यक्तीनां तत्पुरुषीयोपमितिकरणत्वानुपपादनेऽपि कस्याश्चित्तत्त्वं तावन्निर्व्यूढमेवेत्यत आह अननुगमेनेति । तत्पुरुषीयोपमितिकरणत्वमपि नैवमनुगतं निर्वाहितमिति भावः । किञ्चैवमनुगतधर्मापुरस्कारेऽन्यथासिद्धस्यापि कारणताप्रसङ्गः, तज्जातीयस्य तं विनाप्युत्पत्तिदर्शनेनेत्यस्यानुगतधर्मं पुरस्कृत्यैव वदितुं शक्यत्वात्, किञ्च यत्किञ्चिन्मितिस्वरूपयोग्यत्वेऽपि तदनुपधायकत्वमात्रेण न कस्यचित्तत्करणबहिर्भावोऽभ्युपगम्यते मानाभावादतिप्रसङ्गाच्चेत्यपि द्रष्टव्यम् । ननु व्याप्तिज्ञानत्वेन तादृशप्रतिसन्धानस्यानुमितिजनकत्वेऽपि तादृशप्रतिसन्धानत्वेनोपमितिजनकत्वमेव, उपमितिकरणलक्ष्यतावच्छेदकमेव चैवं निरूपितम्, उपमितिकरणलक्षणं तु नैतदिति प्रागुक्तमिति नामी दोषाः, अनुमितिजनकत्वस्यानिवेशनीयत्वादिति चेत्सत्यम्, अत एव मुख्यामुपमानखण्डिकां युक्तिमवतारयति किञ्चेति । शब्दार्थतेति । शक्यतावच्छेदकस्य शक्यत्वाभिप्रायेणेदम् । लाघवेति । गवयत्वस्याखण्डत्वाल्लघुत्वम् । तर्कमिति । व्याप्यमूलकत्वेऽपि विपर्ययापर्यवसायित्वेऽपि च प्रमाणाधीनधीजनकानुसन्धानविषयत्वेनैवास्य तर्कत्वव्यवहार इत्युपपादितमधस्तात् 'अनौचित्यापि तर्केणे"तिकारिकाशारदायाम् । तदुपन्यासस्थितौ = लाघवाख्यतर्कानुसन्धानस्यावश्यकत्वे । तत्र = गवयत्वे । प्रयोग इति । परार्थे प्रयोगप्रदर्शनं स्वार्थेऽनुमासामग्रीसम्भवप्रदर्शने एव पर्यवसन्नम्, अन्यथोपमानस्य पृथक्प्रमाणताखण्डनासम्भवात् । विमतिपदं = विवादविषयीभूतं गवयत्वं । तस्य प्रागनवगमेऽपि प्रत्यक्षेणोपमितिजनकतयाऽवश्यापेक्षणीयेनावगमदशायां धर्मित्वसम्भवः । गवयशब्दप्रवृत्तिनिमित्तं = गवयशब्दस्य प्रवृत्तौ शाब्दबोधजनने ज्ञायमानतया निमित्तं, शक्यतावच्छेदकमिति यावत् । तथात्वे = गवयशब्दप्रवृत्तिनिमित्तत्वे तर्केण = तर्कसहकृतप्रमाणेन, स्वतस्तर्कस्यानिश्चायकत्वेन व्याप्तिमूलकस्यापि तर्कस्य विपर्ययानुमानद्वारैव निश्चायकत्वेन गौरवादेश्चातथात्वेन यथाश्रुतासाङ्गत्यात् । विपर्यीक्रियमाणो बोध्यमानो विपर्ययो स्वेतरस्याभावो यस्य तथात्वात् । स्वं गवयत्वम् । अयञ्चाभाव आधेयतासम्बन्धावच्छि-

यकत्वाच्च यदेवं न तदेवं यथा गोत्वं तथा चेदं ततस्तथेति, नह्यस्ति सम्भवो मूलशैथिल्यादिदोषविरहिततर्कनिवेदितविपर्ययश्चार्थो न च तथेति । अथवा गवयपदमसम्भवत्प्रवृत्तिनिमित्तान्तरमनुपपद्यमानाप्तोक्तगोसदृशसामानाधिकरण्यमर्थाद्गवयत्वप्रवृत्तिनिमित्तकतामाक्षिपतीत्यर्थापत्तिरेवात्र प्रमाणमस्तु, सा च त्वया व्यतिरेकीकृत्य

---

त्वप्रतियोगिताको गवयशब्दप्रवृत्तिनिमित्तनिष्ठ इति सप्तम्यन्तार्थस्य तादृशप्रवृत्तिनिमित्तत्वनिष्ठत्वस्यात्रैवान्वय इति । नचैवं तर्कसहकृतप्रमाणबोधितस्वेतरप्रवृत्तिनिमित्ताभावकत्वादित्येव हेतुः कुतो नोक्त इति वाच्यम्, स्वेतरगोसादृश्यादौ प्रवृत्तिनिमित्तत्वाप्रसिद्ध्या सिद्ध्यसिद्धिव्याघातात् । योध्यमानान्तं स्वरूपासिद्धिशङ्कापरिहाराय । गवयपदं किञ्चित्प्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानमेव गौरवप्रतिसन्धानसहकृतं गवयपदस्येतराप्रवृत्तिनिमित्तकत्वं बोधयतीति भावः । गवयशब्दो गवयत्वप्रवृत्तिनिमित्तकस्तदितराप्रवृत्तिनिमित्तकत्वे सति सप्रवृत्तिनिमित्तकत्वादिति तु प्रयोगान्तरम् । न यदेवमिति । यत्पदे वीप्सा नास्ता, तत्सत्त्वेऽपि सकलसाधनाधिकरणतात्पर्याग्रहे व्यभिचारबुद्धेर्निवृत्त्यसम्भवात्, तादृशतात्पर्यग्रहे तु तद्बलादेव यद्योगप्राथम्याभ्यां साधने व्याप्तिधियः सम्भवादित्यभिप्रायः, अत एव वीप्सायामपि व्यभिचारज्ञानतादवस्थ्यं मणावुक्तम् । अप्रयोजकतां परिहरन्नाह नहीति । मूलशैथिल्यादीत्यादिना विपर्ययापर्यवसानेष्टापत्त्यादिकं ग्राह्यम् । मूलशैथिल्यञ्च व्याप्तिराहित्यम् । अत्रादुष्टतायामेव तात्पर्यम्, तेन गौरवादेर्व्याप्तिराहित्येऽपि विपर्ययापर्यवसायित्वेऽपि च न क्षतिः, अधिकं त्वत्र चतुर्थे वक्ष्यते । तर्कनिवेदितविपर्ययः = तर्कसहकृतप्रमाणनिवेदिततदितराप्रवृत्तिनिमित्तकः । न च तथा = न च तत्प्रवृत्तिनिमित्तकः । स्वघटितबहुव्रीहिणाऽर्थपदेन गवयत्वग्रहणे तु तथापदं प्रवृत्तिनिमित्तपरम् । ननु पूर्वं तर्कानवतारदशायां साधुपदत्वलिङ्गकोक्तसामान्यतोदृष्टानुमानस्य किञ्चित्प्रवृत्तिनिमित्तकत्वप्रत्यायनेनैव पर्यवसानेनेतराप्रवृत्तिनिमित्तकत्वप्रत्ययासम्भवे केवलव्यतिरेक्यनवतारात्प्रवृत्तिनिमित्तविशेषपरिच्छेदाय पश्चात्तर्कसहकृतमुपमानमेव शरणीकरणीयमिति चेदत्र वदन्ति—क्लृप्तप्रमाणभावस्य सामान्यतोदृष्टस्य पुनरनुसन्धानमात्रं कल्पयितुमुचितम्, लाघवात्, न तु मानान्तरं गौरवात् । न च पुनरनुसन्धीयमानादपि तस्मान्नेतराप्रवृत्तिनिमित्तकत्वप्रतीतिसम्भवः, अनुमितेर्व्यापकतावच्छेदकप्रकारकत्वनियमादिति वाच्यम्, तथानियमे मानाभावात्, लाघवादिसहकारे व्यापकतानवच्छेदकरूपेणापि साध्यस्यानुमितौ भाने बाधकाभावात्, यदाह शिरोमणिः—"सति लाघवप्रतिसन्धाने लघ्वर्थपरिच्छेदकत्वमनुमानस्ये"ति । कथमन्यथा क्षित्यादावेककर्तृकत्वानुमितिः । एवञ्चोक्तव्यतिरेकिपर्यन्तानुधावनमप्यनतिप्रयोजनकम्, उक्तसामान्यतोदृष्टस्यैव लाघवप्रतिसन्धानसहकृतस्य जातिविशेषपरिच्छेदकत्वोपपत्तेः । किञ्च यथा देवदत्तो जीवनमरणान्यतरप्रतियोगी प्राणित्वादिति सामान्यतोदृष्टमभावरूपमरणापेक्षया भावरूपजीवने लाघवानुसन्धानसहकृतं पुनरनुसन्धीयमानं जीवित्वप्रकारकं ज्ञानमर्जयतीत्यर्थापत्तिमणावुद्गीरितम्, तथा गवयपदं गवयत्वतदितरान्यतरप्रवृत्तिनिमित्तकं साधुपदत्वादितिसामान्यतोदृष्टं लाघवानुसन्धानसहकृतं पुनरनुसन्धीयमानं गवयत्वप्रवृत्तिनिमित्तकतामवगमयतु । किञ्च गवयत्वेतरत्र प्रवृत्तिनिमित्तं लघुसमानाधिकरणगुरुत्वादितिमानेनेतराप्रवृत्तिनिमित्तकत्वनिश्चये उक्तव्यतिरेकिणैव गवयत्वप्रवृत्तिनिमित्तकत्वसिद्धिसम्भवः । न च साध्याप्रसिद्धिः, गवयत्वं किञ्चित्पदप्रवृत्तिनिमित्तं जातित्वादितिरीत्या सामान्यतस्तत्सम्भवात् । व्यत्यप्रतिसन्धानदशायाञ्च गवयत्वप्रवृत्तिनिमित्तकत्वपरिच्छेदे मानाभाव इति । गोसदृशेति । गोसदृशशब्देनेत्यर्थः । आप्तेन गोसदृशशब्दसमानविभक्तिकत्वतया गवयशब्दोच्चारणे गोसदृशवृत्तिधर्मस्यैव गवयशब्दप्रवृत्तिनिमित्तत्वमायाति, स

परेण पृथगेवावश्यं प्रमाणनीयेति । इत्युपमानखण्डनप्रकरणम् ।

---

च धर्मो गवयत्वं वा, गोसादृश्यतद्व्यक्तित्वादिकं वा स्यात्, तत्र द्वितीये गौरवादाद्यस्यैवार्थापत्तिविषयतेति । अर्थात् = सामर्थ्यात्, परिशेषादिति यावत् । इति खण्डनशारदायामुपमानखण्डनप्रकरणम् ।



## अथ शब्दखण्डनप्रकरणम् ।

शब्दोऽपि क उच्यते ? आप्तवाक्यं हि शब्दः प्रमाणमिति न युक्तम्, विकल्पानुपपत्तेः । तथाहि—कोऽयमाप्तो नाम । यथादृष्टवादीति चेन्न, भ्रान्तिप्रतिपन्नवादिवाक्येऽपि प्रसङ्गात् । प्रमाणदृष्टेति विशेषणे च तथाभूतस्यान्यथावादव्यापनात् । यथा प्रमाणेतिकरणे चांशे तथाभूतवादिवाक्यस्यायथार्थस्यापि व्यापनात् । यावद्यथाप्रमाणदृष्टनिरुक्तौ च प्रायेणातथाभूतत्वादेव लक्ष्याणां तदव्याप्तेः, नहि यावत्प्रमितं तावदभि-

---

शब्दोऽपीत्यादि । कीदृशः शब्दः प्रमाणशब्द इत्यर्थः । अन्यथा शब्दस्वरूपप्रश्ने स्फोटाद्युत्तरापत्त्याग्रिमग्रन्थासङ्गतेः । सङ्गतिरपिकिमर्थौ च प्राग्वत् । शब्दस्वरूपशक्त्यादिग्राहकतयोपजीव्यानां निरस्तत्वादिति । आप्तवाक्यमिति । शब्दत्वमपहाय वाक्यत्वेनोपादानं ध्वनिनिराकाङ्क्षशब्दव्यावृत्तये । शब्दः प्रमाणमिति । प्रमाणशब्द इत्यर्थः । यथादृष्टवादी = स्वज्ञानसमानविषयकज्ञानजनकज्ञानविषयवाक्यप्रयोक्ता । भ्रान्तीत्यादि । भ्रान्त्या विषयीकृतमर्थं वदतोऽपि वाक्ये इत्यर्थः । प्रसङ्गादिति । प्रमाणशब्दत्वस्येत्यादिः । प्रमाणदृष्टेत्यादि । स्वीयप्रमासमानविषयकज्ञानप्रयोजकवाक्यप्रयोक्ताऽऽप्त इति विवक्षणीयमिति भावः । यद्यपि प्रमासमानविषयकज्ञानप्रयोजकवाक्यस्यैव प्रमाणशब्दत्वसम्भवे तादृशवाक्यप्रयोक्तृवाक्यत्वेन तन्निर्वचनं वैयर्थ्यग्रस्तम्, आप्तलक्षणस्यैव खण्डनं तु न सन्दर्भसङ्गतम्, तत्तद्वाक्ये एवात्रातिव्याप्तेरुच्यमानत्वात्, प्रमितिप्रयोजकवाक्यत्वस्य लक्षणान्तरत्वसम्भवेऽपि तादृशज्ञानप्रयोजकवाक्यत्वे यथासन्निवेशे न वैयर्थ्यम् । नचैतदेवात्र दूष्यताम्, वक्तृव्यातिव्याप्त्यादेरत्र सुसङ्गमादितिवाच्यम्, 'तावदभिधीयत' इतिपर्यन्तग्रन्थस्यैतत्खण्डने सुयोजत्वेऽपि "यथाप्रमितस्यैवे"त्यादिग्रन्थस्य दुर्योजत्वात्, अश्वत्थामा हतो नरो वा कुञ्जरो वेतिवाक्यस्यालक्ष्यत्वेनाव्याप्त्यभिधानस्यासामञ्जस्यात्, प्रयोक्तृघटितलक्षणस्य त्वव्याप्तेर्वाक्यान्तरे एव शक्यवचनत्वात्, तथापि 'यथाप्रमितस्य'त्यादिग्रन्थो यथाश्रुते एव नेतव्यः, वैयर्थ्यमेव वा तादृशग्रन्थव्याख्यानानन्तरमुद्घाटनीयमिति । तथाभूतस्यान्यथावादः = प्रमाविषयविषयकभ्रान्तिप्रयोजकं वाक्यं घटत्वादिना प्रमितस्य पटत्वादिना बोधकम्, तत्र समानविशेष्यकत्वमादायातिव्याप्तेः । यथाप्रमाणेति । प्रमीयविशेष्यताविशिष्टविशेष्यताकबोधप्रयोजकत्वं वाक्ये वक्तव्यम्, वैशिष्ट्यञ्च स्वावच्छेदकधर्मावच्छिन्नत्वस्वनिरूपितप्रकारतावच्छेदकावच्छिन्नप्रकारताकत्वाभ्याम्, प्रकारतावच्छेदकं तु धर्मसंसर्गोभयमेव ग्राह्यम्, एवञ्च घटत्वादिना संयोगादिना वा प्रमितस्य पटत्वादिना सम्बन्धान्तरेण वा बोधजनकवाक्ये नातिप्रसङ्ग इतिभावः । अंशे = यत्किञ्चिद्विषयकत्वावच्छेदेन, इदं तथाभूतपदार्थान्तःपातिप्रमात्वान्वयि । अयथार्थस्य = अपरांशेऽप्रमात्ववद्बोधजनकस्य ह्रदो जलवान् वह्निमांश्चेत्यादिकस्य । एवं ह्रदपर्वतौ जलवन्तौ, संयोगसमवायाभ्यां ह्रदो जलवानित्यादि वाक्यमपि ग्राह्यम् । यावदित्यादि । उक्तदोषवारणाय स्वावच्छेदकतासमनियतावच्छेदकताकत्वस्वनिरूपितप्रकारतावच्छेदकतासमनियतावच्छेदकताकप्रकारताकत्वाभ्यां वैशिष्ट्यं विवक्षणीयमिति भावः । व्यापकतामात्रविवक्षायामुक्तदोषतादवस्थ्यम्, व्याप्यतामात्रविवक्षायाञ्चोक्तदोषाभावेऽपि परतोऽव्याप्त्यभिधानासङ्गतिरिति सामनैयत्यमिहाभिप्रेतम् । अत्र च व्यापकतानिवेशस्य वैयर्थ्यसत्त्व एवाह प्रायेणेति । भूतले घटपटाद्यनेकपदार्थान् प्रमाय भूतलं घटवदित्येतावन्मात्रबोधजनकवाक्यस्यापि प्रयोगदर्शनात्सामनैयत्यविवक्षाया अव्याप्त्यापादकत्वादिति । नहीति । सर्वत्रेति शेषः । अतएव प्रायेणेतिप्रागुक्तम्,

धीयते। यथाप्रमितस्यैव वक्तुर्वाक्यमिति व्याकारे च युधिष्ठिरवाक्यस्याप्यनेवम्भूतत्वे- नाव्याप्त्यापत्तेः। तत्र विषये इति विशेषणे च विशेषरूपस्य विषयस्यासाधारण्येनाव्याप- कत्वापातात्। अथ निर्दोषस्य वाक्यं तथेति चेन्न, सदोषस्य नास्ति घट इत्यभिधित्सतो-

---

क्वचिद्यावतोऽपि प्रमितस्याभिधानसम्भवात्। प्रयोक्तृघटितलक्षणे त्वव्याप्तेः सन्देह एव, प्रमात्वस्य विषयभेदभिन्नमूर्तिकत्वात्प्रमीयविशेष्यताविशिष्टविशेष्यताकबोधजनकवाक्यप्रयोक्तृत्वस्य प्रायः सर्वत्र सम्भवात्। सामनैयत्यस्थाने व्याप्यतामात्रविवक्षायां नायं दोष इत्यभिप्रायेणाह यथाप्रमितस्यैवेति। व्याकारे = निरुक्तौ। युधिष्ठिरवाक्यस्य = अश्वत्थामा हतो नरो वा कुञ्जरो वेत्यस्य। अनेवम्भूतत्वेन = उक्तसम्बन्धाभ्यां प्रमीयविशेष्यताविशिष्टविशेष्यताकबोधाजनकत्वेन। अथवा युधिष्ठिरवाक्यस्येत्यनेन लक्ष्यमेव वाक्यं ग्राह्यम्, तस्याव्याप्त्यापत्तेः = असङ्ग्रहापत्तेः, अनेवम्भूतत्वं तस्य तादृशबोधजनकवाक्य- मात्रप्रयोक्त्रनुच्चरितत्वम्, युधिष्ठिरस्यापि कदाचिन्मृषाभाषित्वात्। तादृशबोधजनकवाक्यमात्रप्रयोक्ता- ऽऽप्तस्तदीयवाक्यञ्च प्रमाणशब्द इति विवक्षायामिदं दूषणम्, अन्यथा मात्रपदानुपादाने को नाम न तादृशयत्किञ्चिद्वाक्यप्रयोक्तेति तदीयं वाक्यमात्रं प्रमाणं स्यात्, एवञ्च सत्यवादित्वेन सुप्रसिद्धस्य युधिष्ठिरस्याप्यनाप्तत्वेन तदीयवाक्यानामप्रमाणत्वापत्तिः, किमुतान्यस्य। ननु तादृशबोधजनकवाक्य- प्रयोक्ता तादृशबोधविषय आप्त इति विवक्षायां युधिष्ठिरस्य क्वचिदनाप्तत्वेऽपि न क्षतिरित्याशङ्क्य सामान्यत आप्तत्वमेवं न लक्षितं स्यादित्याह तत्रेति। विशेषणे चेति। वस्तुतस्तु तादृशविशेषणानुपादानेऽपि प्रमात्ववाक्यत्वयोर्विषयविशेषनियन्त्रितत्वेनाननुगमो दुर्वार एवेति द्रष्टव्यम्। ननूक्तरीत्या वैयर्थ्यभिया तादृशबोधजनकवाक्यत्वमेव प्रमाणशब्दत्वं वाच्यम्, तदपि च विषयविशेषनियन्त्रितम्, अननुगमस्तु नात्र दूषणम्, कस्मिन्नर्थे किं वाक्यं प्रमाणमित्याकाङ्क्षायामेवैतल्लक्षणकरणात्। न चैवं प्रमाणशब्द- सामान्यं न लक्षितं स्यात्; साकाङ्क्षशब्दमात्रस्यैव यत्र क्वचिदर्थे प्रमाणत्वेन साकाङ्क्षशब्दत्वस्यैव तल्लक्षणत्वात्, अयोग्यार्थकानां विशिष्टार्थे एव प्रमात्वस्य व्यवच्छेद्यत्वात्, प्रमात्वस्याननुगमे प्रमाण- शब्दत्वस्याप्यनुगतस्याभावाच्च। बोधपदेन च शाब्दबोधो विवक्षितः, तेन क्वचिच्छ्रावणप्रत्यक्षजनकतां लिङ्गविधयाऽनुमितिजनकतां वाऽऽदाय न तद्विषयांशे शब्दप्रमाणत्वप्रसङ्गः। वैयर्थ्याभावेऽप्यनुचितं गौरवं न सह्यते यदि, तदा शाब्दप्रमितिजनकवाक्यत्वमेव लक्षणमस्तु। न च–शाब्दप्रमितिजनकत्वं न शाब्दत्वप्रमितित्वोभयधर्मावच्छिन्नजन्यताकजनकत्वम्, प्रमितित्वस्यार्थसमाजग्रस्तत्वेन जन्यतानवच्छे- दकत्वात्, नापि प्रमितिनिष्ठशाब्दत्वावच्छिन्नजन्यतानिरूपितजनकत्वम्, तादृशजनकत्वस्य बाधितार्थ- कवाक्येऽपि सत्त्वेन तस्यापि प्रमाणत्वव्यवहारापत्तेः, एतच्च वैशिष्ट्यघटितोक्तलक्षणसाधारणमेव दूषण- मिति–वाच्यम्, प्रमितित्वन्यूनवृत्तिशाब्दत्वघटितधर्मावच्छिन्नजन्यताकजनकत्वस्य विवक्षितत्वात्, एतदेव च शाब्दप्रमितिकरणत्वमित्युच्यते इति चेन्न, तादृशजनकत्वावच्छेदकं न तादृशजनकत्वमेव, आत्माश्रयात्, नाप्यन्यत्, दुर्निरूपत्वात्, अतिप्रसक्तस्य शब्दत्वादेश्चातथात्वात्, न चावच्छेदकग्रहं विना जनकत्वं शक्यग्रहं, शाब्दत्वञ्च न 'शाब्दयामी'ति प्रतीतिसाक्षिकजात्यतिरिक्तं विवक्षितम्, जातिमात्रञ्च निरस्तमिति भावः। निर्दोषस्य वाक्यम् = भ्रमप्रमादविप्रलिप्साकरणापाटवात्मकदोष- चतुष्टयरहितप्रयुक्तं वाक्यम्। तथा = प्रमाणशब्दः। सदोषस्य = उक्तान्यतमदोषवतः। नास्तीति। घटवतीत्यादिः। एवञ्चैतादृशाभिधित्सा सदोषतायां प्रमाणतयोपन्यस्ता भवति, अन्यथा यथार्थवाक्य- प्रयोक्तुः सदोषत्वं परो नानुमन्येत। दैवात् = दोषघटितसामग्रीवशात्। व्यवहारस्य प्रत्यक्षादिनैव सम्भ- वाद्दोषवतो वाक्यं शाब्दबोधमेव नोपधत्ते इति त्वयुक्तम्, तत्र शाब्दयामीत्यनुव्यवसायसत्त्वात्। न भवत्येवेति। प्रमात्वस्य दोषाभावप्रयोज्यतायास्तादृशलक्षणवादिना वक्तव्यत्वादिति विशेष्यावृत्तेरेव

ऽस्ति घट इति दैवान्निर्गतयथार्थवाक्याव्याप्तेः। तत्प्रमाणं तु न भवत्येवेति चेन्न, पूर्वमुक्तोत्तरत्वात्, प्रवृत्तिसामर्थ्येन प्रामाण्यसम्भवात्, आपाततः सन्देहेऽप्यदोषात्। सामान्यतो निर्दोषत्वस्य च भीमाग्रजेऽप्यभावात्, विशेषतस्तथात्वस्यासाधारण्यपर्यवसायित्वात्।

---

घटस्योक्तवाक्यजबोधे भानमभ्युपेयमिति भावः। प्रमाया गुणजन्यतापक्षे तु नेयमाशङ्का तत्रेश्वरज्ञानस्यैव गुणत्वसम्भवात्। पूर्वमिति। तत्त्वानुभवत्वखण्डनशेषे इत्यर्थः। उक्तोत्तरत्वादिति। दोषप्रयोज्यत्वेऽपि तद्वति तत्प्रकारकत्वमात्रेण ज्ञानस्य प्रमात्वात् तत्करणस्य प्रमाणत्वावश्यम्भावात्, अबाधितप्रत्यभिज्ञानानुरोधेन च विशेष्यावृत्तित्वव्यक्त्यवगाहित्वकल्पनानुपपत्तेः, इदं गोत्ववदित्यादिवाक्यजबोधे च तादृशकल्पनाया उन्मीलनस्यैवासम्भवात्, जातेरैक्यात्, अन्यथाऽसत्ख्यात्यापत्तेः, अतएव वक्तृदोषे सत्यपि भ्रान्तविप्रलम्भकवाक्ये संवादात्प्रामाण्यदर्शनान्न दोषोऽप्रामाण्यप्रयोजक इति तार्किका मीमांसकं प्रत्याचक्षते इति भावः। तदाह प्रवृत्तिसामर्थ्येनेति। सफलप्रवृत्तिजनकत्वेनेत्यर्थः। प्रामाण्यसम्भवात् = प्रामाण्यनिश्चयसम्भवात्। आपाततः = संवादात्पुरा तादृशवाक्यं प्रमाणं नवेतिसन्देहेऽपि। अदोषात् = वास्तविकप्रामाण्यनिरासासम्भवात्, सत्यपि वस्तुनि विशेषदर्शनं विना तत्सन्देहस्य तदनपघातकत्वात्। ननु तात्पर्यविषये प्रामाण्यवतः शब्दस्य लक्ष्यत्वम्, उक्तप्रतारकवाक्यं तु न तथेत्यलक्ष्यत्वादेव न तत्राव्याप्तिरिति यदि कश्चिद्ब्रूयात्तदाप्याह सामान्यतोनिर्दोषत्वस्येति। दोषसामान्याभावस्येत्यर्थः। भीमाग्रजे = युधिष्ठिरे। अभावादिति। तस्यापि कदाचिदनृतवादित्वात्, तथा च सत्यवादित्वेन प्रसिद्धस्यापि तस्य वाक्यानि न सङ्गृहीतानीत्यव्याप्ति लौकिकप्रमाणवाक्यमात्रे, अपौरुषेयत्ववादे त्वसम्भव एवेतिभावः। न च वेदस्यानित्यत्वमते स्वाव्यवहितप्राक्कालावच्छिन्नदोषसामान्याभावो विवक्षणीय इति कादाचित्कदोषवत्तामादाय न दोष इति वाच्यम्, भ्रान्तप्रतारकवाक्ये तथाप्यव्याप्तेः। एवं विषयान्तरे भ्रान्त्यादिसत्त्वस्थलेऽपि। विषयविशेषे भ्रान्त्याद्यभावस्येदानीमनिविष्टत्वात्, अननुगमस्याग्रे एवाभिहितत्वात्। तथात्वस्य = निर्दोषत्वस्य, विशेषतश्च तद्दोषविशेषाभावे पर्यवस्यति। असाधारण्यमननुगमः। यत्किञ्चिद्दोषवतोच्चरितस्यापि यद्यद्वाक्यस्य प्रामाण्यं सम्प्रतिपन्नं तत्तल्लक्षणस्य तत्तद्दोषाभावघटितस्यैव वक्तव्यत्वात्। अथ दोषाजन्यवाक्यत्वमभिप्रेतम्, अत्र कादाचित्कस्य भ्रान्त्यादेस्तात्कालिकस्यापि विषयान्तरसंस्पर्शिनः सत्त्वेऽपि न क्षतिः, उक्तान्यथाऽभिधित्सास्थलेऽपि नाव्याप्तिः, अन्यथाऽभिधित्साया दोषजन्यत्वेऽपि 'अस्ति घट' इति वाक्यस्य दोषाजन्यत्वात्, करणापाटवस्य तु तत्र गुणत्वमेव, प्रमात्वप्रयोजकत्वात्, क्वचिद्दोषस्याप्यपरत्र गुणत्वसम्भवः, यदाह "नहि जात्यैव कश्चिद्दोष" इति। भ्रान्तप्रतारकवाक्येऽपि नाव्याप्तिः, वस्तुगत्याऽविद्यमानस्यार्थस्य हि न तत्र बुबोधयिषा, सैव च प्रतारणा, वस्तुगत्या घटवति घटाभावमवेत्य हि स घटं प्रतिपादयति सन्तमेवेति चेन्न, एवं हि दोषत्वस्याव्यवस्थितत्वे दोषाजन्यत्वस्य वाक्ये प्रमाणशब्दस्य प्रतीत्यैव प्रत्येतव्यतया लक्ष्यतावच्छेदकव्यवहारानौपयिकत्वमुक्तलक्षणे प्रसज्येत। विसंवादिशुकादिवाक्येऽतिव्याप्तिश्च, वाक्यार्थानभिज्ञस्य शुकादेस्तद्विषये भ्रमादिशून्यत्वात्, तदुच्चरितवाक्ये शिक्षयितुर्भ्रमादीनामव्यवहितप्रागवर्तितयाऽजनकत्वात्। वाक्यत्वञ्च दुर्वचमिति वक्ष्यते। दोषाजन्यत्वस्य प्रमात्वप्रयोजकत्वं दोषस्य भ्रमकारणत्वे एव स्यात्, तदेव तु न, दोषविशेषस्य व्यभिचारित्वात्, तं विनापि भ्रमदर्शनात्, निखिलदोषाणां कारणत्वे च भ्रमोच्छेदप्रसङ्गात्, तेषां समवधानासम्भवात्, अन्यतमत्वेन कारणतायाश्च तस्यासर्वज्ञदुर्ग्रहत्वेनासम्भवात्, दोषत्वस्य चानुगतस्योक्तरीत्यैवाभावादित्यपि वदन्ति।

यथार्थवाक्यं शब्दप्रमाणमित्यत्र को दोष इति चेत्, पूर्वोक्तयाथार्थ्यदूषणानि तावत्प्रथमः, यथार्थमिति विशेषणस्य व्यवच्छेदकत्वाव्यवच्छेदकत्वयोः पूर्ववद्दोषश्च द्वितीयः, वाक्यत्वानिरुक्तिश्च तृतीयः। तथाहि—किमिदं वाक्यं नाम ? एकार्थावच्छिन्न-

---

यथार्थवाक्यमिति। वाक्ये यथार्थत्वं यथार्थशाब्दज्ञानजनकत्वं वा यथार्थज्ञानजन्यत्वं वा, आद्ये उक्तरीत्या निरुक्तशाब्दप्रमाकरणत्वे एव पर्यवसानम्, तच्च निवेदितनिरासम्। द्वितीये तु तद्विशेष्यकतत्संसर्गकतत्प्रकारकप्रमाजन्यं वाक्यं तद्विशेष्यकतत्संसर्गकतत्प्रकारकप्रमाकरणशब्द इत्यर्थे पर्यवसानम्, तत्र च मौनिश्लोके शुकादिवाक्ये चेश्वरीयतादृशज्ञानजन्यत्वमादायाव्याप्तिविरहेऽपि भूतलविशेष्यकसंयोगसंसर्गकघटप्रकारकप्रमयाऽऽशान्तरे भ्रमात्मिकया जन्ये भ्रमस्यैव जनके वाक्ये तादृशप्रमाकरणत्वप्रसङ्गः; तादृतप्रमात्वावच्छिन्नजनकताकजन्यताविवक्षायाञ्च मौनिश्लोकादावव्याप्तिर्दुर्वारा, ईश्वरज्ञानस्य कार्यसामान्यजनकस्य तादृशप्रमात्वेन जनकत्वे मानाभावात्। प्रमीयतत्संसर्गताकतत्प्रकारताकतद्विशेष्यताघटितरूपेण जनकताविवक्षणेऽपि दोष एवायमिति। उभयसाधारणानि दूषणानि व्याचष्टे पूर्वोक्तेति। याथार्थ्येति प्रमात्वमात्रपरम्। को दोष इत्याकाङ्क्षामनुसृत्योद्देश्यगतबहुत्वसङ्ख्याविरुद्धैकत्वस्य विवक्षामादाय प्रथम इत्येकवचनान्तप्रयोगः। बहुत्वेऽपि दोषाणां स्वाश्रयप्रकृत्यर्थतावच्छेदकत्वसम्बन्धेनैकत्वान्वयानुयोगित्वसम्भवः। याथार्थ्यीयत्वघटिततया प्रथमत्वघटिततया चाभेदान्वयबोधौपयिको रूपयोर्भेद इति। द्वितीयइति। प्रमात्वं सर्वांशे वाऽऽशिकभ्रमसाधारणं वा विवक्षितम्, द्वितीये तस्याव्यावर्तकत्वम्, सर्वांशे भ्रमस्यैवाभावात्, आद्ये तु व्यावर्तकत्वम्, परन्त्वेवमांशिकप्रमाया अनुपग्रह इत्यव्यापकत्वमित्यर्थः। वस्तुतस्तु तद्वति तत्प्रकारकत्वमांशिकप्रमात्वम्, तच्च तदतिरिक्तप्रकारांशे भ्रमस्य व्यावर्तकमेव, सर्वांशे प्रमात्वं तु याथार्थ्यनिरासप्रस्तावे निरुक्तम्, तस्य चात्रानुप्रवेशे तादृशप्रमाकरणशब्दस्यैव लक्ष्यतया वक्तव्यत्वेन नाव्याप्तिरिति न द्वितीयत्वेन गणितो दोषः। तृतीय इति। यद्यप्याद्ये कल्पे वाक्यत्वं प्रयोजनविरहान्नोपात्तम्, तथापि संस्कारेच्छादावतिव्याप्तिवारणाय द्वितीय उपात्तमेवेति तत्रैवायं दोषः। न च वाक्यत्वस्थाने वर्णत्वनिवेशेनापि निस्तारेण नायं दोषइति वेद्यम्, वर्णत्वस्य कत्वखत्वादिव्यापकशब्दत्वव्याप्यध्वनिव्यावृत्तजातिविशेषत्वेन जातिमात्रनिरासेन दत्तोत्तरत्वादिति। एकार्थेति। गौरश्व पुरुष इत्यादिसमुदायेऽतिव्याप्तिवारणायैकार्थावच्छिन्नत्वं समुदायविशेषणम्; तच्च विशिष्टैकार्थप्रतिपादकत्वम्, तेन विशेषणादीनां नानात्वेपि न क्षतिः, विशिष्टस्यैकत्वात्। तत्रैव नानाविशिष्टार्थप्रतिपादकेऽतिव्याप्तिवारणायैकत्वमुपात्तम्। प्रतिपादकत्वञ्च प्रतीतिमात्रघटितं वा शाब्दबोधघटितं वा, आद्ये विशिष्टार्थोपस्थितिजनकत्वमादाय शक्ततया पदत्वमालम्ब्यमाने केवलप्रकृत्यादावतिव्याप्तेर्द्वितीये च केवलप्रकृत्यादेः शाब्दबोधाजनकतया तत्रातिव्याप्तिविरहेऽपि क्रियाप्रधानघटितस्यैव वाक्यत्ववादिमते गौरित्येतावन्मात्रादेरवाक्यत्वेनानुभववैपम्यायोगेन च तार्किकाणामिव तेषामपि शाब्दबोधजनकतायास्तत्रानिवार्यत्वेनातिव्याप्तेर्वारणाय समुदायविवक्षा। सुबन्तादेरेव तन्मते पदत्वेन गौरित्यादेः पदसमुदायत्वाभावात्। पदत्वविवक्षाऽपि तन्मतेनैव, शब्दत्वमात्रविवक्षायां समयविशेषेण ध्वनिविशेषादेः केवलप्रकृत्यादिरूपवर्णसमुदायस्य च विशिष्टार्थप्रतीतिजनकत्वेऽपि शाब्दबोधजनकत्वविरहेण तत्रानतिव्याप्तावपि गौरित्यादिरूपस्य शब्दसमुदायस्य शाब्दबोधजनकस्यातिव्याप्तिस्थलत्वात्। एवञ्चोपरितनपदत्वपरासनस्य नासङ्गतिः। तार्किकमते तस्य लक्ष्यत्वेन शब्दत्वविवक्षयैव निर्वाहेऽपि तत्र जातिविशेषतया पुरोदीरितजातिमात्रनिरासभागितैवेति। वस्तुतस्तु "आख्यातं सविशेषणं वाक्य"मित्यादिसर्वज्ञकल्पपतञ्जल्याद्युक्त्या क्रियाप्रधानघटितस्यैव वाक्यतया अनादिव्यवहारसि-

पदसमुदायो वाक्यमितिचेत्, एकत्वविषयत्वावच्छिन्नत्वानां वाच्यानि दूषणानि ताव-

---

द्धत्वेन तादृशस्यैव लक्ष्यताया औचित्येन पदत्वविवक्षाया आवश्यकत्वमेवेति द्रष्टव्यम्। एकत्वेति। श्वेतो धावतीत्यादिवाक्ये शुक्लो धावति, इतः श्वा धावतीत्याद्यर्थद्वयप्रतिपिपादयिषयोच्चरिते विशिष्टार्थद्वयप्रतिपादकेऽव्याप्तिः। न च तत्र वाक्यद्वयमेव प्रत्येकं लक्ष्यम्. श्वेतो धावतीत्यस्य सकृदेवोच्चरितत्वेन वाक्यद्वयस्य प्रत्यक्षबाधितत्वात्। एकस्यैव च वाक्यस्यार्थद्वयपरत्वे बाधकाभावात्। अतएव पुनरनुसन्धानात्मिकाऽऽवृत्तिरपि न तत्र युक्तिमती, उक्तं हि शब्दमण्यादौ "अनेकपदार्थप्रतीतीच्छयैकमुच्चारणं भवत्येव, पुमिच्छाया नियन्तुमशक्यत्वात्, यदि च वाक्यात्मकं तदुच्चारणं नानेकार्थपरं तदाऽऽवृत्तिरपि न स्यात्, तात्पर्यनिर्वाहार्थमेवावृत्तेः कल्पनात्. तात्पर्यविषयान्वयानुपपत्तिं विनाप्यावृत्तेः कल्पने एकार्थपरेऽपि घटोऽस्तीत्यादिवाक्ये आवृत्तिः स्यात्, अतएवानेकार्थकवाक्योच्चारणस्योभयपरतायां नावृत्तिकल्पनम्, तस्माद्युगपदेवानेकार्थोपस्थितौ तात्पर्यादिज्ञाने युगपदनेकान्वयबोधः, सामग्र्यास्तुल्यत्वात् प्रथममेकस्यान्वयबोधो न तदन्यस्येतिनियन्तुमशक्यत्वा"दिति। एवञ्चाव्याप्तिर्दुर्वारैव। किञ्च विशिष्टार्थद्वयप्रतिपादकस्य विशिष्टैकार्थस्यापि प्रतिपादकत्वेनैकत्वमात्रस्याव्यावर्तकत्वेन द्वित्वाद्यनवच्छिन्नत्वरूपस्य च तस्य वस्त्वन्तरान्तर्भावेणैकस्मिन्नपि द्वित्वावच्छिन्नत्वसद्भावेनासम्भवापादकत्वेन पदार्थान्तरत्ववाचोयुक्तेश्चाखण्डोपाधिन्यायेनान्योन्याश्रयावहत्वेन स्वसजातीयनिष्ठभेदप्रतियोगित्वाभाव एव स्वस्यैकत्वं वाच्यम्, तत्र च साजात्यस्य भेदघटितस्यैवानुभविकत्वेन स्वसजातीयस्य सिद्ध्यसिद्धिभ्यां तादृशप्रतियोगित्वाभावस्य व्याघातः। अथ स्वोद्देश्यकविधेयवन्निष्ठभेदप्रतियोगित्वाभावो विवक्षणीयः, स्वोद्देश्यकविधेयवत्ता च स्वस्मिन्नपि सम्भवति, एकोविशिष्टार्थः प्रकृतवाक्यप्रतिपाद्य इत्युद्देश्यविधेयभावमादाय च प्रकृते समन्वयः। नच पटादिमद्भूतलेऽप्येकोघटो भूतलवृत्तिरितिप्रतीत्युदयेन घटे उपपादनीयमेकत्वं नोक्तं सम्भवतीति वाच्यम्, स्वाश्रयत्वस्वोद्देश्यतावच्छेदकवत्त्वाभ्यां स्वोद्देश्यकविधेयवत्ताया विवक्षितत्वादिति चेन्नैतद्भद्रम्, उभयभेदप्रतियोगित्वमादायासम्भवस्य दुर्वारत्वात्, भेदे स्वप्रतियोग्यवृत्तित्वविवक्षाया अपि प्रतियोगिवृत्तित्वोदासीनोभयाभावोपादाननियन्धनदूषणलङ्घनाजङ्घालत्वात्। एवञ्च पुराऽऽवेदितस्य स्वत्वस्यन्यत्वनिरासस्यात्रावतार इति। अतएव—एकत्वमेकमात्रवृत्तिधर्मोऽभेदाख्यः, नचात्माश्रयः, स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वाभ्यां भेदविशिष्टान्यत्वस्यैवैकमात्रवृत्तित्वरूपत्वात्, न चैवं तद्व्यक्तिप्रतिपादकत्वस्य वाक्यान्तरेऽभावेनाननुगमः, तादृशार्थे एव वाक्यस्य लक्ष्यत्वादिति—निरस्तम्, उक्तरीत्या भेदविशिष्टेऽपि तदन्यत्वसम्पादनस्य सुकरत्वात्। अननुगमस्तु सुलभ एव सर्वसाधारणो दोषः, एकत्वव्यवहारस्याननुगतस्यैव दर्शनादिति। नन्वेकवाक्यस्य वाक्यान्तरार्थे वाक्यत्ववारणाय यादृशविषयताकान्वयबोधजनको यो मिथःसाकांक्षपदसमुदायस्तस्य तादृशविषयताकबोधजनने वाक्यत्वं विवक्षणीयम्, तत्र चैकत्वोपादाने न प्रयोजनम्, मिथःसाकांक्षत्वोक्त्यैव गौरश्वःपुरुष इत्यादिसमुदायवारणसम्भवात्, आकांक्षा चाव्यवहितोत्तरत्वसम्बन्धेन तत्पदविशिष्टतत्पदत्वादिरूपा तादृशशाब्दानुकूलैव विवक्षणीया, एवं च ह्रदो वह्निमानित्यादेरपि वाक्यत्वोपपत्तिः, विशिष्टार्थाप्रसिद्धावपि निरूप्यनिरूपकभावापन्नविषयिताशालिबोधस्य तत्र प्रसिद्धेः। तत्राह विषयत्वेत्यादि। विषयत्वनिरासश्चतुर्थे वक्ष्यते। अवच्छिन्नत्वं शाब्दबोधजनकत्वम्, तद्धुपधानं वा योग्यत्वं वा शाब्दबोधेच्छयोच्चरितत्वं वा, नाद्यः, शुकाद्युच्चरिते वाक्यविशेषे केनापि व्युत्पन्नेनाश्रुतेऽव्याप्तेः, तस्य शाब्दानुपधायकत्वात्, दोषसम्भावनयापि लक्षणत्वानुपपत्तेः। न द्वितीयः, तथाहि योग्यतावच्छेदकं परस्परसाकांक्षपदसमुदायत्वमेव

स्तन्तु. पदपदार्थं तु चिन्तयामः । सुप्तिङन्तं पदमित्येके । वर्णा विभक्त्यन्ताः पदमित्यन्ये ।

---

स्यात्, आकांक्षा चोक्तानुपूर्वी राज्ञः पुरुषः, पुरुषोराज्ञइत्यादि नैकविधा, तथा चैकस्या योग्यतावच्छेदकतया निवेशेऽपरतज्ज्ञानाच्छाब्दाद्युत्पत्त्यापत्तिः, नचान्यतमत्वेन सर्वासां योग्यतावच्छेदकत्वम्, अनुयोगिप्रतियोगिविधया सकलप्रपञ्चघटितत्वेनान्यतमत्वस्यासर्वज्ञाज्ञेयत्वात्, भेदज्ञाने विशिष्यैवानुयोगिज्ञानस्यापेक्षणीयत्वात्, नच तत्तद्भेद एव स्वानुयोगितावच्छेदकः, आत्माश्रयाद्यापत्त्या भेदखण्डने दत्तोत्तरत्वात् । भेदोपपादकं ह्यनुयोगिप्रतियोगिगतवैधर्म्यं भेदातिरिक्तमेव निरूपणीयम् । अन्यथा तद्व्याप्यस्य भेदस्याप्यश्रद्धेयत्वात् । नचाव्यवहितोत्तरत्वं निवेदय निस्तारः; राजसम्बन्धिपुरुषाद्यर्थे पुरुषो राज्ञ इत्यादेरिव राज्ञः पुरुषइत्यादेरपि वाक्यत्वात् । आवेदितञ्चाव्यवहितोत्तरत्वघटितस्य कार्यकारणभावमात्रस्याप्रामाणिकत्वमधस्तात् । न च शक्तिविशेषो योग्यतावच्छेदकः; स्वध्वंसाद्यनुकूलशक्तेर्व्यावृत्तये शाब्दानुकूलशक्तेः शाब्दजनकतावच्छेदकत्वोपगमे कार्योत्पादस्य कारणतावच्छेदकावच्छिन्नसमवधानाधीनत्वेनान्योन्याश्रयात्, स्वीकृतञ्च गुरुधर्मेणेव कार्यघटितरूपेणापि कारणतायामन्यथासिद्धत्वं तार्किकैः । एतेन यादृशपदानां यादृशार्थविषयताकशाब्दानुकूला परस्पराकाङ्क्षा तादृशपदसमुदायस्तादृशार्थे वाक्यमित्यत्रापि शाब्दजनके आकाङ्क्षाज्ञाने योग्यत्वमुपधायकत्वं वा जनकत्वं वा विकल्प्य निरसनीयम् । न चरमः, शाब्दबोधेच्छा विनैवोच्चरितानां शुकादिनाक्यानामसङ्ग्रहात् । न चेश्वरेच्छैव तत्रोपादेया; अनेकार्थवाक्यस्थले यादृशार्थविषयकप्रतीतीच्छयोच्चरितत्वाभावनिश्चयस्तादृशार्थेऽपि तस्य वाक्यत्वप्रसङ्गात्, ईश्वरेच्छायास्तत्रापि निरङ्कुशत्वात् । ईदृशलक्षणवादिना च भवतेष्टापत्तिर्नात्र विधातुं शक्यते । न च तादृशार्थविषयकशाब्दाव्यवहितपूर्ववृत्तेरेवेच्छायास्तत्रापेक्षणीयत्वम्, कारणतावच्छेदके कार्यप्रवेशेनोक्तरीत्यैव परस्पराश्रयात् । सन्त्विति । नन्वत्रोपेक्षायां किं बीजमिति चेत्परस्परसाकाङ्क्षपदसमुदायत्वस्यार्थविशेषानियन्त्रितवाक्यत्वात्मकतासम्भवात्तत्रचैकत्वादीनामप्रविष्टत्वात्, पदखण्डनस्य तु तत्साधारणत्वादित्याशयादिति गृहाण । वर्णा इति । एतदाकाङ्क्षानिवृत्तिमात्रफलकम् । इत्यन्ये इति । न्यायसूत्रकृत इत्यर्थः । शक्तं पदम्, यदीयवृत्तिज्ञानीयविषयता यद्विषयताप्रयोजिका तत्तदर्थे पदमिति तु न विकल्पितम्, उक्तरीत्या गौरित्यादिमात्रस्य वाक्यतायाः स्वीकारमनर्हन्त्याः प्रसङ्गावारकत्वात् । का चेयं शक्तिः ? न तावत्पदार्थान्तरम्, तस्य प्रतीतिविशेषसाक्षिकतया निरूपणे परस्पराश्रयात्, अन्यानुकूलशक्तिमतोऽन्यस्योत्पत्तिवारणाय तत्तत्कार्यानुकूलशक्तिमत्त्वेन कारणताया वक्तव्यतयोक्तरीत्याप्यन्योन्याश्रयाच्च, शक्तौ तत्तत्कार्यानुकूलत्वस्य तत्तत्कार्यजनकतावच्छेदकतारूपत्वेन शक्तित्वेन च जनकतावच्छेदकताया अतिप्रसक्ततयाऽसम्भवेन जनकतावच्छेदकताविशिष्टरूपेण तथात्वस्याभिधेयत्वे जनकतावच्छेदकतायाः स्वावच्छेदकताप्रसक्त्याऽऽत्माश्रयाच्च । नापि पदपदार्थयोरितरेतराध्यासमूलकतादात्म्यग्रहणो वाच्यवाचकभावापरपर्यायः कोऽपि सम्बन्धः शक्तिः; लक्षणानिरूपणे तदसिद्धेः, स्वरूपतः कार्यतः कारणतश्च पदपदार्थयोर्भेदं गृहीतवतोऽपि शक्तिज्ञानोदयेनेतरेतराध्यासमूलकतादात्म्याधीनग्रहणताया असम्भवदुक्तिकत्वाच्च, गौरितिशब्द इत्यादौ गकारादिघटितानुपूर्वीविशेषस्य गौरित्यर्थ इत्यादौ सास्नादिमदर्थस्य गौरितिज्ञानमित्यादौ गोत्वादिप्रकारकत्वस्य प्रतीत्या तादृशव्यवहारमात्रेणापाततोऽध्यासस्य वक्तुमशक्यत्वाच्च, अन्यथा गोशब्दः सास्नादिमानित्यपि कदाचित्स्यादनुभवः । अतएव श्लोकः श्रुत इत्यादौ श्रावणप्रत्यक्षस्यार्थः श्रुत इत्यादौ च शाब्दबोधस्य श्रुधातुना प्रत्यायनम् । स्फुटतरश्चायमर्थः "अक्षरमम्बरान्तधृते" रित्युत्तरमीमांसासूत्रभाष्यभामत्याम् । "हिमालयो नाम नगाधिराजः" "नचिकेता नाम पुत्र आस" इत्यादौ तु

तत्र नाद्यः—प्रत्येकं मिलितस्य चाऽव्यापकत्वात्, पृथक्प्रवृत्तिनिमित्ततायाञ्च वाक्यलक्षणाव्यापकत्वात्। नापि द्वितीयः, विभक्त्यर्थस्यानुगतस्याभावात्, "विभक्ति"

---

वाच्यतासम्बन्धेन हिमालयादेर्नाम्नो नगाधिराजादावन्वयोऽनुभवसिद्धो नत्वभेदेनेति यदर्थे यन्नाम्नो वाच्यतासम्बन्धेनान्वयस्तत्समानविभक्तिकत्वं तस्यापेक्ष्यत इति व्युत्पत्तिः कल्प्यते, नामार्थयोरभेदान्वयव्युत्पत्तिविरोधस्तु नात्र शङ्क्यः, नाम्नो नामार्थत्वाभावात् । एतेन वृद्धिरादैच्, रामेतिद्व्यक्षरं नामेत्यादिकं व्याख्यातम् । मान्त्रिकदृष्ट्याऽपि च शब्दसामान्यविचारे बृहदारण्यकभाष्ये व्यञ्जितया मूलभूततत्त्वमादाय पदपदार्थयोः सर्वथैक्यमेवेति कस्तत्राध्यासावकाशः, वस्तुतः पृथग्भूतयोरेवापृथक्त्वप्रतीतेस्तत्राभिप्रायविषयत्वात् । नापि तच्छब्दजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यत्वं तदर्थविषयकबोधजनकत्वनिष्ठप्रकारतानिरूपितेश्वरेच्छीयविशेष्यत्वञ्च वाच्यत्ववाचकत्वे, ईश्वरीयत्वं नित्यत्वं वा शाब्दोपयोगितायां तु नोपादेयम्, तदप्रतीतावपि शाब्दोदयात्, तादृशान्यतरेच्छा च शक्तिरिति; इदं वाक्यमिममर्थं बोधयत्वितीच्छामादायातिप्रसङ्गात्, न च पदत्वस्य शक्तेर्वा प्रवेशोऽत्र शक्यः, तयोरेव निरुच्यमानत्वात्, किञ्च वाच्यवाचकभावस्य सम्बन्धत्वेनानुभूयमानस्य सम्बन्धत्वेनाननुभूयमानतादृशविशेष्यतात्मकत्वानुपपत्तेः, परम्परासम्बन्धे मानाभावात्, शाब्दबोधान्यथानुपपत्तेश्चानिर्वाच्यवादिनि वक्तुमशक्यत्वात्, सम्बन्धेनानिर्वचनीयेनैवोपपत्तेः । एवञ्च तादृशेच्छाऽपि न शक्तिः, तस्याः सम्बन्धानात्मकतया सम्बन्धज्ञानविधया तज्ज्ञानस्य पदार्थोपस्थापकत्वानुपपत्तेः । ईश्वरसङ्केतश्चात्रास्य शक्तिरित्युपदेशात्मकः शक्तिविषयक एव, न तु शक्त्यात्मक इति व्यक्तमन्यत्र । अपि च व्युत्पित्सुः प्रयोज्ये प्रवृत्तिविशेषेण ज्ञानविशेषं कारणान्तरस्यानुपस्थिततया च तस्य शब्दविशेषजन्यत्वमनुमाय यदि शब्दोऽर्थासम्बद्धः स्यात्तद्विषयकज्ञानाजनकः स्यादिति वितर्क्य शब्दार्थयोः सम्बन्धं निश्चिनुते इत्यविवादम्, एवञ्चार्थसम्बन्धं विनाऽनुपपन्नतया प्रतीताऽर्थविषयकज्ञानजनकता कथमर्थसम्बन्धघटकतया प्रतिपत्तुं शक्येत, अनुपपद्यमानं हि नोपपादककोटिमध्यासितुमीष्टे, अतएव "नहि यत्प्रयुक्तानुपपत्त्या यत्कल्पनं तदेव तस्य विषय"इति चिन्तामणावपूर्ववादे उक्तम् । एतदेवाभिसन्धाय तत्त्वप्रदीपिकायां चित्सुखाचार्यैः—"वाचकत्वं नाम तद्विषयकप्रतीतिजनकत्वं वाच्यत्वं च तज्जन्यप्रतीतिविषयत्वं, तदेवासति सम्बन्धे कथं स्यादितिपर्यनुयोगे तस्मादेव तद्भवतीति ब्रुवाणः पण्डितगोष्ठीषु कथं नापत्रपेते"ति जगदे । केचित्तु—इच्छाया इव ज्ञानकृत्योरपि विनिगमनाविरहेण शक्तित्वं स्यादिति पदेऽर्थवाचकत्वमर्थे च पदवाच्यत्वमवगाहमानानि शक्तिज्ञानान्यादाय कार्यकारणभावषट्कप्रसङ्ग इति महद्गौरवम् । एवमिदमस्माद्भवत्वितीच्छाविषयत्वमेव जनकत्वं स्यादिति बहूपप्लवः, प्रमाणानां जनकतातद्घटितातिरिक्तसम्बन्धेनैव प्रमेयसङ्गतानां ज्ञानजनकत्वं दृष्टमिति नेह तयोः सम्बन्धतौचिती, अन्यथा धूमाद्वह्निज्ञानं जायतामितीच्छाविषयत्वमेव हेतुसाध्ययोः सम्बन्धः स्यादिति व्याप्त्युच्छेद इत्यपि—वदन्ति । एतेन पदीयवृत्तिज्ञानीयविषयतेत्यादिकमपि निरस्तम्, वृत्तेः शक्तिलक्षणान्यतरात्मकत्वेन शक्तेरनिरुक्तौ तदनिरुक्तेः, लक्षणाया अपि शक्तिघटितत्वाच्चेत्यलं पल्लवैः । प्रत्येकमित्यादि । सुबन्तस्यैव पदत्वे तिङन्ते, तिङन्तस्यैव पदत्वे च सुबन्तेऽव्याप्तिः, सुबन्तत्वे सति तिङन्तत्वं तु लोकेऽसम्भवग्रस्तम् । नच सुप्तिङन्यतरान्तत्वं विवक्षणीयम्, अन्यतरत्वस्यानुपदं निरस्तत्वात्। ननु पदपदस्य सुबन्तत्वतिङन्तत्वरूपनानाप्रवृत्तिनिमित्तकत्वोपगमे नामी दोषा इत्यत आह पृथगिति । वाक्यलक्षणेति । वाक्यलक्षणे सुबन्तसमुदायो वा तिङन्तसमुदायो वा सुबन्ततिङन्तसमुदायो वा प्रवेशनीयः, आद्ये 'त्वया शयितव्य'मित्यादेः द्वितीये च 'पचति

रित्यनेन सुप्तिङोः "प्राक्दिशो विभक्ति" रित्यनेन च तसिलादेः पृथक्पृथगेव विभक्ति-

---

भवती'त्यादेः सङ्ग्रहेऽपि 'चैत्रःपचती'त्यादेरसङ्ग्रहः । तृतीये तु 'चैत्रः पचती'त्यादेः सङ्ग्रहेऽपि 'चैत्र' इत्येतावन्मात्रादेरलक्ष्यताया एवाभ्युपगमनीयत्वेन तदसङ्ग्रहस्य हानिकरत्वविरहेऽपि 'त्वया शयितव्यम्' 'पचति भवती'त्यादेः कथं सङ्ग्रहः, द्वितीयलक्षणे वक्ष्यमाणानि दूषणानि चेहानुसन्धेयानि। किञ्च सुबन्तत्वं स्वघटकत्वस्वघटकोत्तरत्वस्वघटकपूर्वत्वाभाववत्त्वसम्बन्धैः सुब्वृत्तित्वं वा, तत्त्वेन प्रतिसन्धीयमानत्वं वा स्वपूर्ववृत्तीतरेण स्वेतरेणाघटितत्वस्वघटितत्वस्वपूर्ववृत्तिघटितत्वेति सम्बन्धैः सुबुपलक्षितत्वं वा, नाद्यः, दध्यादिशब्दस्याव्ययानाञ्च पदत्वानापत्तेः । अतएव न द्वितीयः, अव्ययेषु विभक्तिप्रतिसन्धानस्यानियतत्वात्, तथाचाव्ययव्यक्तिविशेषेऽव्याप्तिः । न तृतीयः भाविसुबुपलक्षितकेवलप्रकृतेरपि पदत्वापत्तेः, शक्तं पदमिति भवतानभ्युपगमात् । किञ्चेदं सुप्त्वम्, न तावत्स्वाद्यन्यतमत्वम्, स्वादिव्यक्तीनामानन्त्येनासर्वज्ञाज्ञेयत्वप्रसक्तेः, न च सुत्वादिनाऽनुगमः, तस्याप्यनुगतस्य दुर्वचत्वात्, अनुगतधर्ममात्रस्य साक्षात्कारित्वखण्डने निरस्तत्वाच्च, अतएव सुप्त्वादिकं न जातिविशेषः, तस्य जातित्वे साधकाभावाच्च, सुत्वादिना साङ्कर्यप्रसङ्गाच्च, सुप्त्वं विहाय सुत्वं सुष्ठुवाचके सुशब्दे, सुत्वं विहाय सुप्त्वं जसादौ, उभयोः समावेशः प्रथमैकवचने इति । साधकाभावे च जातिनानात्वमुपेत्य न सङ्करपरिहारसम्भवः । न च शक्तिसम्बन्धेन सुब्त्वम्, पाणिन्यादिसङ्केतेनैवोपपत्तौ शक्तेरप्रामाणिकत्वात्, न च सङ्केतसम्बन्धेन सुब्त्वम्, अन्यत्रापि कस्यचित्तत्सङ्केतसम्भवेनातिप्रसङ्गात् । पाणिनिसङ्केतवचसश्च व्याकरणान्तरप्रणेतृतत्सङ्केतमादाय विनिगमनाविरहेणासङ्गतेः । एतेन तिङन्तत्वं व्याख्यातम् । एतेन कारकान्वितक्रियाशाब्दजनकशब्दसमुदायो वाक्यम्, अत्र च पदत्वविवक्षाया निष्प्रयोजनत्वेन नोक्तखण्डनं सावकाशम्, नच वस्तुतः पाकक्रियायाः कारकान्वितत्वात्पचतीत्येतावन्मात्रं वाक्यं स्यात्; न स्यात्, साक्षात्परम्परया वा कारकविषयतानिरूपितक्रियाविषयताशालिशाब्दस्य विवक्षितत्वादित्यपि नाशङ्कनीयम्, उक्तन्यायेनैव क्रियात्वखण्डनस्य करणत्वखण्डनेऽभिहितत्वात् । अतएव तद्घटितकारकत्वस्यापि दुर्वचत्वम्, वह्निमनुमिनोतीत्यादौ वह्न्यादेरकारकतयाऽव्याप्तिश्च। जनकपदेनोपधायकत्वविवक्षाया उक्तरीत्याऽसम्भवेन योग्यताविवक्षणे गौरित्यादेरप्युक्तरीत्याऽसम्भवलक्ष्यभावस्य वाक्यतापत्तेश्च, ग्रामं गच्छतीत्येतदेकदेशस्यापि ग्रामं गच्छेत्यस्य वाक्यत्वापत्तेश्च, आनुपूर्वीविशेषावच्छिन्नायास्तदात्मिकाया वा तादृशशाब्दजननयोग्यतायास्तत्र सद्भावात्, एवञ्च पदत्वमवश्यं निवश्यम् । योग्यतावच्छेदकतयाऽऽकाङ्क्षाया अवश्यापेक्षणीयत्वेन कारकान्वितक्रियेत्यस्य वैयर्थ्यञ्चेति । विभक्तिरिति । "विभक्तिश्चे" तिसूत्रैकदेशोऽयम् । पृथक्पृथगेवेति । अनुगतधर्ममनवच्छेदकीकृत्यैवेत्यर्थः । अन्यथा पृथग्विधानाभिधानस्याकिञ्चित्करत्वात् । यदा सुप्तिङोरपि नानुगमः, तदा नतरां तसिलाद्यन्तर्भावेण तयोः । यद्यपि तसिलाद्यन्तानां "तद्धितश्चासर्वविभक्ति"रित्यनेनाव्ययतया सुपो लुकि तदन्ततयैव सङ्ग्रह इति "विभक्त्यन्ताःपद"मित्यत्र सुप्तिङ्रूपैव विभक्तिर्विवक्षिता, तथापि प्रत्येकमिलितविकल्पानुपपत्तेरुक्ताया परिहाराय विभक्तिसंज्ञात्वेन सुप्तिङोरुपादानं तत्रादृतम्, विभक्तिसंज्ञकत्वं तु तयोरिव तसिलादेरपीति तदन्तर्भावेणापि प्रत्येकमिलितविकल्पानुपपत्तेः प्रदर्शनाय तसिलादिविभक्तिपर्यन्तानुधावनम् । अननुगमस्य द्वयोरपि विभक्तिसंज्ञकयोर्जागरूकत्वात् । ननु सङ्केतसम्बन्धेन विभक्तिपदवत्त्वं सुबादिसाधारणम्, विभक्तिपदवांश्च न यावान् न वा सुबेव वा तसिलादिरेव वा तिङेव वा विवक्षितो येनाव्याप्तिर्वाऽसम्भवो वा भवेत्, अपि तु विभक्तिपदवत्त्वेन रूपेण यथासम्भवं यः कोऽपि, स च सुब्वा वा

संज्ञाविधानात्, शब्दसाम्येन च लक्षणायोगात्। किञ्च वर्णा इति बहुत्वस्य विवक्षितत्वेऽहमित्यादेरपदत्वप्रसङ्गः, अविवक्षितत्वे देवदत्तइत्यन्ताकारस्य पदत्वापातः, तस्य विभक्त्यन्तत्वात्। सार्थकस्तथेति चेत्, भवतीत्यादौ शवकारादीनां पदत्वप्रसङ्गः, शपः सार्थकत्वात्। यत्र विहिता विभक्तिस्तदितिचेन्न, शवकारं परित्यज्य पदत्वप्रसङ्गात्।

---

तिङ्वा लक्ष्यमात्रव्याप्येवेत्याशङ्क्याह शब्दसाम्येनेति। विभक्तिपदवत्त्वेनेत्यर्थः। घटितत्वं तृतीयार्थो लक्षणान्वयी। सुपादौ विभक्तिपदवत्त्वं नित्यसङ्केतसम्बन्धेन वा, अनित्यसङ्केतसम्बन्धेन वा, आद्ये मानाभावः, द्वितीयस्य तु सुपाद्यतिरिक्तेऽपि सम्भवेनातिप्रसङ्गः, पाणिनिसङ्केतस्य तु सम्बन्धताया व्याकरणप्रणेतृपुरुषान्तरसङ्केतमादायाविनिगम्यत्वम्, न वा पाणिनेः पुरा पदत्वं न समपद्यतेत्याशयः। एवं विभक्त्यन्तत्वमपि सुबन्तत्ववद्विकल्प्य निराकार्यम्। केचित्तु विभक्तिः = वृत्तिः, अन्तः = सम्बन्धो येषां ते विभक्त्यन्ताः, तथा च वृत्तिमत्त्वं पदत्वमिति सूत्राशयं वर्णयन्ति। एतन्निरासस्तु निवेदित एवेति न काचित्क्षतिः। प्रसङ्ग इति। वर्णपदेनाक्षरात्मकसाचकहल्विवक्षायामिदम्. अन्यथा तु वासुदेवादिवाचकाकारादावव्याप्तिर्द्रष्टव्या। अचां हलां वा बहुत्वं विवक्षितमिति विकल्प्येदमित्यपि कश्चित्। इत्यन्ताकारस्य = इत्यत्र चरमाकारस्य। विसर्गसहितस्येति शेषः। विभक्त्यन्तत्वात् = स्वघटकत्वस्वघटकोत्तरत्वस्वघटकपूर्वत्वाभाववत्त्वसम्बन्धैर्विभक्तिवृत्तित्वात्। सार्थक इति। बहुत्वाविवक्षायाः प्रस्तुतत्वादेकवचनम्। विभक्त्यन्त इति शेषः। तथा = पदम्। शवकारादीनामिति। आदिना श्यन्यकारादेः परिग्रहः। तिबादिविभक्तिसहितानामिति शेषः। शपः = शबादेः। तिबादिसहितस्येति शेषः। सार्थकत्वादिति। भवतीत्येतदधीनशाब्दबोधौपयिकत्वादित्यर्थः। एतेन—शपो न सार्थकत्वं मानाभावात्, कर्तरि शबिति सूत्रस्य हि कर्तरि प्रतिपाद्ये धातोश्शबिति नार्थः, अपि तु कर्तृवाचिनि सार्वधातुके परे धातोः शबिति। नच कर्तृपदस्य लक्षणया ह्ययमर्थो न युज्यते, निष्प्रयोजनत्वात्, भावकर्मणोस्तु शपो यका बाधादेव न दोष इति वाच्यम्, उक्तार्थककर्तृपदस्य "दिवादिभ्यः श्यन्"नित्यादावनुवृत्त्यर्थत्वात्, अन्यथा यक् पुरस्तादपवादन्यायेन शपएव बाधक इति भावकर्मणोरपि दिवादिभ्यः श्यन् स्यात्। अथैवमुक्तानुशासनस्य शपः सार्थकत्वे प्रामाण्याभावेऽपि पचतीत्यादौ कर्तुः कृतेर्वा प्रतिपादने तिपा सह शपोऽविनिगम्यत्वम्, सम्भेदे नान्यतरवैयर्थ्यमितिन्यायात्, नचात्तीत्यादौ विकरणं विनापि कर्तुः कृतेर्वा बोधान्नाविनिगमनेति वाच्यम्, गच्छेत्यादौ तिबाद्यभावेऽपि तद्बोधेन साम्यात्, यः शिष्यते स लुप्यमानार्थाभिधायीतिन्यायेन प्रकृतेरेव तत्र कर्त्राद्यभिधायकत्वकल्पने लुप्तप्रतिसन्धानेनैव वा तद्बोधकल्पनेऽपि तौल्यमेवेतिचेन्न, एकत्र निर्णीतस्य शास्त्रार्थस्यान्यत्रापि सञ्चारणीयत्वेन विकरणानुत्पत्तिस्थले लिडादौ विकरणानां कर्त्राद्यभिधायकत्वकल्पनानुदयेनान्यत्रापि तेषां समभिव्याहृतनिष्ठशक्त्युद्बोधकत्वरूपद्योतकत्वस्य वा प्रयोगसाधुतामात्रप्रयोजकत्वस्यैव वा कल्पनीयत्वात्, अतएव "सार्वधातुके य"गिति सूत्रभाष्ये विकरणानां सार्थकतां नानुमेने पतञ्जलिरित्यादिशङ्कानां नात्रावतारः। नच—तथापि कथञ्चिच्छाब्दबोधौपयिकत्वमात्रेण शबादेः सार्थकत्वाभिधानं मूलकृतोऽनुचितम्, देवदत्त इत्यादावपि विसर्गसहिताकारस्य तदधीनशाब्दबोधौपयिकतया वदितुं शक्यत्वेन तादृशसार्थकत्वस्याव्यावर्तकत्वादिति—वाच्यम्, यतः सार्थकत्वं निवेशयितुं प्रवृत्तस्य भवत एव शिरस्येव प्रहारः स्यात्। नहि वृत्त्या बोधकत्वं वृत्तिमत्त्वं शक्तत्वं वेह सार्थकत्वं शक्यनिवेशम्, सुबाद्यन्तसमुदायस्य पदत्वेनाभिधित्सितस्य तथात्वे मानाभावात्केवलप्रकृत्यादेरेव शक्तत्वाभ्युपगमात्। एवञ्च देवदत्तोगच्छतीत्यादिसमुदायेऽव्याप्तिः। तथा च सार्थकत्वनिवेशोऽकिञ्चित्कर एवेति भावः। अतएव तत्परित्यज्यैवाशङ्कते यत्रेति।

तन्मध्यपतितत्वाच्छ्ववकारोऽपि गृह्यते इति चेत्, तर्हि यत्र विभक्तिर्विधीयते तच्च तद्विभक्तिमध्यपतितञ्च पदमिति वा विवक्षितं यत्र विभक्तिर्विधीयते तत्तद्विभक्तिमध्यवर्तिसहितं पदमिति वा, आद्ये शवकारस्यापि पृथगेव पदत्वप्रसङ्गः, लक्षणस्य चाव्यापकत्वात् । द्वितीये देवदत्तइत्यस्यापदत्वप्रसङ्गः, मध्यवर्तिनोऽभावेन मध्यवर्तिसहितविशेषणाभावात् । क्वचिन्मध्यवर्तिसहितस्य क्वचित्केवलस्येति यथासम्भवमिति चेन्न, एकानुगतरूपानभिधाने लक्षणस्याव्यापकतापत्तेर्दुर्निवारत्वात् । किञ्च 'देवदत्त-

---

यदुद्दिश्येत्यर्थः । तदिति । विभक्तिसहितं तदित्यर्थः । पदमित्यनुषज्यते । तथाचोक्तसम्बन्धत्रयेण स्वघटकयत्किञ्चिदुद्देश्यकत्वसम्बन्धेन च विभक्तिवृत्तित्वविवक्षायां देवदत्त इत्यादावकारादिं भवतीत्यादौ च शबादिकमुद्दिश्य विभक्तेरविहितत्वेन नोक्तदोष इति भावः । पदत्वेति । 'भू + ति' इत्यस्येत्यादिः । लोके तन्मात्रे पदत्वव्यवहाराभावेन नेष्टप्रसङ्गः । गृह्यत इति । पदत्वव्यवहारायेत्यादिः । शप आगमत्वाभावेन यदागमपरिभाषामूला हि नेयमाशङ्का, अपि तु पदलक्षणे किञ्चिद्विशेषणोपादित्सया, अतएव तर्हीत्यादिना विकल्पनं सङ्गच्छते । तच्चेति । विभक्तिसहितमित्यादिः । एवञ्च प्रोक्तसम्बन्धचतुष्टयेन विभक्तिवृत्ति पदमित्येकं लक्षणम् । तद्विभक्तिमध्येति । तच्च विभक्तिश्च तद्विभक्ती, तयोर्मध्येत्यर्थः । "त्यदादीनि सर्वैर्नित्य"मिति प्राप्तोऽप्येकशेषो न स्पष्टप्रतिपत्तये कृतः । प्रकृतिप्रत्ययमध्यपातित्वमिति द्वितीयं लक्षणमित्यर्थः । सहितमिति । विभक्तिसाहित्यं स्वयगन्तव्यमेव, एवञ्चोक्तसम्बन्धेषु तुरीयसम्बन्धस्थाने स्ववृत्तित्वं प्रवेश्यम्, तच्च स्वनिष्ठविधेयताकोद्देश्यताश्रयोद्देश्यकत्वेतरघटितत्वसम्बन्धेन । भवति च भवतीत्यादौ विभक्तीनिष्ठविधेयताकोद्देश्यताश्रयभ्वादिधातूद्देश्यको विभक्तीतरश्च शबादिरिति तदघटिते नातिप्रसङ्ग इति भावः । पृथगेवेत्यनेन प्रकृत्यादिविनिर्मुक्तत्वलाभः । ननु तद्विभक्तिमध्यपतितञ्च पदमित्येतदभिधाननिबन्धनोऽयं प्रसङ्ग इति न तथाऽभिधास्यते इत्याशङ्क्य किमेतावता, 'भू + ति' इत्येतावन्मात्रेऽतिप्रसङ्गस्य तथाऽभिधानानभिधानयोस्तादवस्थ्यादित्याह लक्षणस्येति । स्वघटकोद्देश्यकत्वसम्बन्धघटितलक्षणस्येत्यर्थः । चाव्यापकत्वात् = उक्तातिप्रसङ्गाभावं व्याहुमसामर्थ्याच्च, उक्तातिप्रसङ्गवारणेऽसामर्थ्याच्चेति यावत् । अव्ययेषु दधीत्यादिसुबन्तेषु चोक्तरीत्याऽव्याप्तिसत्त्वेऽपि प्रकृतदोषतादवस्थ्यं परित्यज्य तत्परताग्रन्थस्य नादृता, सन्दर्भापरिशुद्धिप्रसङ्गादित्यवधातव्यम् । देवदत्त इति । बभूव, अस्तीत्यादेरप्युपलक्षणमिदम् । सहितविशेषणेति । साहित्यरूपविशेषणेत्यर्थः । स्वनिष्ठविधेयताकेत्यादिसम्बन्धेति यावत् । क्वचित् = भवतीत्यादौ, मध्यवर्तिसहितस्य = स्वनिष्ठविधेयताकेत्यादिसम्बन्धघटितस्य, पदलक्षणत्वमिति शेषः । क्वचित् = देवदत्तइत्यादौ, केवलस्य = उक्तसम्बन्धाघटितस्य स्वघटकोद्देश्यकत्वसम्बन्धघटितस्य । यद्यपि लक्षणयोरनयोः प्रत्येकमव्याप्तिः, तत्समनियतलक्ष्यतावच्छेदकानिरूपणात्, पदत्वस्य च तदसमनैयत्यात्, तथापि लक्षणस्यैव लक्ष्यतावच्छेदकत्वमास्थेयमित्यभिमानः । लक्ष्यतावच्छेदकं विदुष एव लक्षणवाक्यप्रतिपाद्यत्वेन यादृशस्य लक्ष्यतावच्छेदकत्वं न तादृशस्यैव तस्य लक्षणत्वम्, अजिज्ञासिताभिधानापत्तेः, अतएवानुमितित्वस्य लक्षणत्वलक्ष्यतावच्छेदकत्वे रूपभेदेनोपपादिते अनुमितिगादाधर्याम् दृश्यते च पदत्वव्यवहारोऽनुगत एवेत्यभिप्रायेणोक्ताभिमानं शातयन्नाह एकानुगतेति । अनुगतानतिप्रसक्तेत्यर्थः । नन्वस्तु विकरणघटितपदत्वतदघटितपदत्वयोर्लक्ष्यतावच्छेदकता, पदव्यवहारे च शब्दानुगमो नत्वर्थानुगमः, केवलप्रकृत्यादावपि शक्तत्वनिबन्धनपदत्वव्यवहारस्य केषाञ्चिद्दर्शनात्, दृश्यते च "स्वादिष्वसर्व-

स्वि'त्यपि पदं स्यात्। अथापशब्दोऽयं पदत्वे सति रुत्वादेर्विधानस्यावश्यम्भावित्वादिति चेन्न, यत एवायमपशब्दोऽत एव भवतो दोषः प्रसज्यते अपशब्देऽपि लक्षणं गतमिति। तस्मात्पाणिनिनाचार्येण शब्दसिद्धयर्थं पदसंज्ञेयं रुत्वादिविध्यनुरोधेनापशब्ददशायामन्यैव कृता नदीसञ्ज्ञावन्न लौकिकपदव्यवहारसिद्धयर्थं साधुशब्दविशेषे, ततश्च तस्यान्यदेव लक्षणं वाच्यम्, अन्यथा दाक्षीनन्दनोदीरितनदीसंज्ञाप्रत्यभिज्ञायां पाथः प्रार्थयमानः काननस्थलीमलीकाभिमानी भवानीहेत।

अथोच्यते विभक्त्यन्तमेव सर्वलक्षणप्रवृत्त्या निष्पन्नं व्यावहारिकं पदमिति पदलक्षणमस्तु; मैवम्, सर्वलक्षणप्रवृत्तेः सर्वत्रासम्भवात्। सम्भवत्सर्वलक्षणप्रवृत्त्येति

---

नामस्थाने" इत्यनुशासननिबन्धनोऽपि पदत्वव्यवहारः सुब्वर्जितस्येत्यत आह किञ्चेति। वस्तुतस्तु सुप्त्वघटितकरणत्वमपि निरसनीयम्। न च प्रकृतिप्रत्ययमध्यपातित्वं तत्, प्रकृतित्वप्रत्ययत्वयोरपि तन्न्यायेनैव दुर्वचत्वादिति न लक्ष्यतावच्छेदकतोक्तरूपयोः सम्भवति, तस्मादभ्युपेत्यैवेदम्। देवदत्तस्त्विति। प्रथमान्तमिति शेषः। बभूवेत्यादावकृतद्वित्वादिकार्यस्य भवतीत्यादौ च कृतगुणादिकार्यस्यापि प्रत्ययान्तस्योपलक्षणमिदम्। पदं स्यात् = लौकिकपदव्यवहारविषयः स्यात्, तादृशव्यवहारनियामकस्यैव पदत्वस्य निर्वचनाय पर्यनुयुक्तोऽसीति भावः। इयम् = सुप्तिङन्तकविभक्त्यन्तत्वप्रयुक्ता। अन्यैव। लौकिकपदव्यवहारानुपयोगिन्येव। नदीसञ्ज्ञा यूस्त्र्याख्यावितिविहिता। तस्य = लौकिकपदव्यवहारविषयस्य। अन्यथा = पाणिनिपरिभाषितसञ्ज्ञानामपि लौकिकव्यवहारोपयोगित्वोपगमे। दाक्षीनन्दनः = पाणिनिः। पाथः = जलम्। काननस्थलीमिति। काननस्थलीशब्दस्य नदीसञ्ज्ञकत्वादिति भावः। अलीकाभिमानी = अनर्थां नदीत्वप्रकारकज्ञानवान्। ईहेत = लिप्सेत। यद्यपि पाणिनिना शब्दस्य नदीसंज्ञा विहिता नत्वर्थस्य, येन तत्र प्रवृत्त्यापादनं घटेत, न च काननस्थलीमित्यस्य काननस्थलीतिशब्दमित्यर्थः, तथा च पिपासोर्नदीसञ्ज्ञकशब्दोच्चारणमापद्येतेति भावइति वाच्यम्, तथासति पाथोविरहिप्रदेशबोधककाननस्थलीशब्दपर्यन्तानुधावनं विफलतामालम्बेत नदीशब्दोच्चरणस्यैव शक्यापादनत्वात्। तथापि नदीकाननस्थलीशब्दयोर्नदीसंज्ञकत्वाविशेषान्नदीशब्दाभिधेयस्येव काननस्थलीशब्दाभिधेयस्यापि नदीत्वं मत्वा पाणिनीयेन भवता प्रवर्तनीयं स्यादिति भावः।

विभक्त्यन्तमेवेति। इदं लक्षणे नोपादेयम्, प्रयोजनाभावात्, एवञ्चाव्ययानां दधीत्यादीनाञ्च सङ्ग्रहसम्भवः देवदत्तस्त्वित्यादौ तु न सर्वलक्षणप्रवृत्तिरिति नातिव्याप्तिः। देवदत्तइत्यादौ विसर्गादिसहिताकारादौ पदैकदेशेऽपि न प्रसङ्गः, नहि तत्रैकदेशे लक्षणानां प्रवृत्तिः, अपि तु समुदाये इति भावः। लक्षणञ्चात्र सूत्रं व्याकरणशास्त्रविधिरितियावत्। व्यावहारिकं साधु परिनिष्ठितमित्यनर्थान्तरम्। पदमितिपदलक्षणम् = पदमित्यन्तवाक्येन लक्षणतया बोधितं पदलक्षणमित्यर्थः। तेन लक्ष्यभागविनिर्मुक्तस्यैव पदत्वलाभः। अत्र यदि सर्वलक्षणप्रवृत्त्या निष्पन्नमित्यनेन प्रवृत्तसर्वलक्षणकत्वं विवक्षितं तदा निराकरोति मैवमित्यादिना। यदि तु निष्पन्नत्वं विध्युद्देश्यतावच्छेदकानाक्रान्तत्वम्, न च सेद्धेत्यादेः 'स्वरतिसूति'त्यादिवैकल्पिकेड्विध्युद्देश्यतावच्छेदकाक्रान्ततयाऽसाधुत्वप्रसङ्ग इति वाच्यम्, विधौ नित्यत्वस्य विवक्षणीयत्वात्, न च तथापि देवदत्तो भवतीत्यादौ 'तिङ्ङतिङ' इति निघाते सत्यतिङन्तपदपरतिङन्तत्वरूपोद्देश्यतावच्छेदकसद्भावादसाधुत्वप्रसक्तिरितिदेश्यम्, विधात्र प्रवृत्तत्वस्यापि वक्तव्यत्वात्। एवञ्चैतस्यैव लक्षणत्वसम्भवे सर्वलक्षणप्रवृत्त्येति तत्प्रयोजकप्रदर्शनमात्रपरं न तु लक्षणघटकसमर्थकमित्युच्यते, तदाप्यनुपदं प्रतिविधास्यत इति। सम्भवदित्यादि।

चेन्न, सम्भवत्त्वं तत्काले कालान्तरे वा विवक्षितम्, आद्ये देवदत्तविंत्यपि पदं स्यात्। रुत्वविधानकाले विसर्गस्यासम्भावितत्वात्। कालान्तरेऽपीति पक्षे देवदत्त इत्यपि पदं न स्यात्, "इत्या"दिपदपूर्वकालभाविनो यत्वयलोपादेरकरणात्। शब्दान्तरसन्निधिव्यतिरेकेण यद्भाविलक्षणं तद्विवक्षितमितिचेन्न, जीविकाकृत्य व्याचष्टे इत्यर्थे जीविकां कृत्वा व्याचष्टे इति प्रयुज्यमानं वाक्यं स्यात्, एकार्थावच्छिन्नपदसमुदायत्वस्य तत्रापि गतत्वात्, कृत्वेत्यनेन सम्बद्धस्य जीविकामित्यस्योक्तपदलक्षणेन सङ्गृहीतत्वात्। यदुपाधिका यल्लक्षणप्रवृत्तिस्तदुपाधिसम्पत्तौ तेन निष्पन्नं तथेति चेन्न, यत्र नास्त्युपाधिसम्पत्तिस्तत्र केवले 'तस्यां सत्या'मित्यस्याभावादपदत्वापत्तेः। यस्यामवस्थायां यस्य लक्षणस्योपनिपातस्तत्सर्वसम्पत्तौ विभक्त्यन्तं पदमिति

---

प्रवृत्तस्वसम्बन्ध्युद्देश्यतावच्छेदककसर्वनित्यविधिकत्वमित्यर्थः। स्वं पदत्वेन विवक्षितम्। प्रवृत्तत्वं विधावन्वेति, एवमग्रेऽपि। सम्भवत्त्वं = स्वसम्बन्ध्युद्देश्यतावच्छेदककत्वं। तत्काले = एकविधिप्रवृत्तिकाले। इत्यादिपदपूर्वकालभाविन इति। इत्यादिपदात्पूर्ववर्तितादशायां जातोद्देश्यतावच्छेदककत्वेत्यर्थः। रुत्वे सति "भोभगो"इतियत्वविधेरुद्देश्यतावच्छेदकं, तस्मिंश्च सति "लोपः शाकल्यस्य" इतियलोपविधेरुद्देश्यतावच्छेदकं निष्पद्यते इति भावः। लघूच्चारणयत्वं भवतीत्यादिशब्दसमभिव्याहारे उत्वञ्चादिपदार्थः। शब्दान्तरेत्यादि। प्रवृत्तस्वेतरशब्दसन्निध्यभावकालीनस्वसम्बन्ध्युद्देश्यतावच्छेदककसर्वनित्यविधिकत्वमित्यर्थः। यत्वादेरुद्देश्यतावच्छेदकं तु स्वेतरशब्दसन्निधिकालिकमेवेत्यदोषः। जीविकाकृत्वेति। औपम्यविवक्षायां कृञ्योगे "जीविकोपनिषदौ" इत्यनेन नित्यं गतिसञ्ज्ञायां "कुगतिप्रादय" इति नित्यसमासे "समासेऽनञ्पूर्वे" इति क्त्वो ल्यपि "ह्रस्वस्य पिति"ति तुकि जीविकामिव कृत्वेत्यर्थे जीविकाकृत्येत्येव रूपं साधु, न तु जीविकां कृत्वेतिभावः। ननु कृत्वेत्यस्य पदत्वेऽपि तत्समभिव्याहारे जीविकाशब्दस्यौपम्यविवक्षायामुक्तविध्युद्देश्यतावच्छेदकाक्रान्ततया तस्य चाप्रवृत्ततया कथं परिनिष्ठितपदत्वम्, एवञ्च क्त्वान्तस्यापि न तथात्वमिति न वाक्यलक्षणातिव्याप्तिरित्यत आह कृत्वेत्यनेनेति। सम्बद्धस्य = समभिव्याहृतस्यापि। उक्तपदलक्षणेति। कृत्वेति शब्दसन्निध्यभावकालीनजीविकाशब्दसम्बन्ध्युद्देश्यतावच्छेदकको यो यो विधिस्तस्यात्र प्रवृत्तत्वादिति भावः। 'देवदत्तः इति' इति प्रकृतस्थले एवातिव्याप्तिदानस्यानया रीत्या सम्भवेऽपि पदसंस्कारपक्षे तस्य लक्ष्यतासम्भवमभिप्रेत्य तद्दानादरः। यदुपाधिका यल्लक्षणप्रवृत्तिरिति। यत्पर्याप्तावच्छेदकताका यद्विध्युद्देश्यतेत्यर्थः। तत्तदवच्छेदकसम्पत्तौ तेन निष्पन्नं = प्रवृत्ततत्तत्सकलविधिकं परिनिष्ठितपदम्। एवञ्चोक्तस्थले गतिसंज्ञायुद्देश्यतावच्छेदकतापर्याप्त्यधिकरणधर्मस्य सम्पन्नत्वेऽपि गतिसंज्ञादेरप्रवृत्तत्वेन नातिव्याप्तिः। एवं विसर्गान्तदेवदत्तेऽपि नाव्याप्तिः, यत्वाद्युद्देश्यतावच्छेदकतापर्याप्त्यधिकरणधर्मस्येत्यादिपदासमभिव्याहारदशायामनिष्पत्तेरिति भावः। अत्रोद्देश्यतावच्छेदकतापर्याप्त्यधिकरणधर्मो विशिष्य विवक्षितः सामान्यतो वा, तत्राद्ये तादृशधर्मविशेषस्य सर्वत्रासम्भवेन न लक्ष्यमात्रसङ्ग्रह इत्याह यत्रेति। उपाधिसम्पत्तिः = तादृशधर्मविशेषसम्पत्तिः। केवलेइति। तादृशधर्मविशेषविनिर्मुक्तत्वमेव कैवल्यम्, न तु तादृशधर्मसामान्यविनिर्मुक्तत्वम्, असम्भवात्। द्वितीयाभिप्रायेणाशङ्कते यस्यामवस्थायामिति। यद्धर्मवैशिष्ट्यदशायामित्यर्थः। यस्य लक्षणस्य = यद्विधेः। निरूपितत्वं षष्ठ्यर्थं उद्देश्यतायामन्वेति। उपनिपातः = उद्देश्यतावच्छेदकतापर्याप्त्यधिकरणधर्माक्रान्तता। तत्सर्वसम्पत्तावित्यादि। प्रवृत्ततत्तत्सकलनित्यविधिकमित्येवार्थः। विभक्त्य-

चेन्न, 'यस्यामवस्थाया'मित्यवस्थानां भिन्नभिन्नाकारेण परामर्शे लक्षणस्याननुगमादव्यापकतादोषः । अवस्थानामैक्यमविवक्षितमसम्भावितञ्च, सर्वदा सर्वावस्थाविषये लक्षणप्रसङ्गादिति, स च भवति भवति भवतीति, भवत्यस्तीति, पटः पटाविति, पटं पट इति चेत्यतिव्याप्तिः ।

---

न्तत्वनिवेशस्य निष्प्रयोजनतादेरुक्तत्वात् । पदं = परिनिष्ठितपदम् । प्रत्यक्षखण्डने यत्त्वादेरननुगमस्योदीरितत्वेनासम्भवदुक्तिकानुगमकानां सामान्यतस्तादृशधर्माणामुपादानासम्भवेनोक्तमेव दूषणं स्थापयति यस्यामित्यादिना । इतिपदं लुप्ततृतीयान्तम् । परामर्शे = परामर्शस्यावश्यकत्वे । अथोद्देश्यतावच्छेदकतापर्याप्त्यधिकरणत्वेन धर्माणां निवेशोऽस्तु, न चैवं तेन रूपेण तत्तद्धर्माणामुद्देश्यतावच्छेदकत्वे सर्वविधिनिषेधसाङ्कर्यप्रसङ्गः, व्याकरणशास्त्रोपमर्दापत्तिरिति यावदिति वाच्यम्, अत्र तेन रूपेण निवेशेऽपि विधौ विशेषरूपेणैव निवेशादितिचेन्न नहि शब्दानुगममात्रेणानुगतैकार्थसिद्धिरपि स्वैकरूप्यानुभवेन, अतएव गोष्वनुगतैकार्थसिद्धिरसिद्धिश्च पाशविभीतिकादौ, तत्राक्षशब्दस्यैवानुगमात्, नच तत्तद्विधीनामुद्देश्यतावच्छेदकतापर्याप्त्यधिकरणधर्मेषु किञ्चिदनतिप्रसक्तमैकरूप्यमानुभविकम्, न वा तेषां सर्वथैवाभेदोऽपि, येनाननुगमो न स्यादित्याह अवस्थानामिति । तादृशधर्माणामित्यर्थः । ऐक्यं = अभेदः । चो हेतौ । यतोऽसम्भावितं ततो विवक्षितुमशक्यमित्यर्थः । यदि चानुभवमवधीर्यैव क्वचिदभेदोऽभ्युपेयते, तदाऽपरिनिष्ठितावस्थानामिव परिनिष्ठितावस्थानामपि सोऽस्त्विति घटइत्यस्य पटइत्यर्थेऽपि पदत्वप्रसङ्गः, नच समानप्रकृतिकत्वं नियामकम्, पटमित्यर्थे पट इत्यस्यापि पदताया अनिष्टत्वात्, नच समानविभक्तिकत्वमपि तन्त्रम्, पट इत्यर्थे पटावित्यस्यापि पदताया अनिष्टत्वात् । नच समानविभक्तिकत्वसमानवचनकत्वयोर्मिलितयोरतिप्रसङ्गनिवारकत्वम्, उत्पत्त्याद्यर्थकभवतीत्याद्यर्थेऽस्तीत्यादेः पदत्वप्रसङ्गस्य तथापि तादवस्थ्यात्, नच समानप्रकृतिकत्वसहितयोस्तयोः भवतीत्याद्यर्थे भवत्वित्यादेः पदत्वप्रसक्तेस्तथापि जागरूकत्वात् । अथ किं भूरिभाषया, समानानुपूर्वीकत्वमेवार्थविशेषनियन्त्रितपदत्वे नियामकतापदेऽभिषिच्यतामिति चेत्तथापि भवतीत्यानुपूर्व्यवतां तिङन्तसप्तम्यन्तसम्बुद्ध्यन्तानामेकार्थपदत्वापत्तेः, एवमश्वस्त्वम्, अश्वो धावति, अजापयः पिब, अजापयः शत्रूनित्यादावपि । तस्मादवस्थानामैक्यं न स्वप्नेऽपि शङ्कनीयम् । तदेतत्सर्वमभिप्रेत्याह सर्वदेति । एतस्यैव व्याख्यानं सर्वावस्थाविषये इति । लक्षणप्रसङ्गात् = पदलक्षणप्रसङ्गात्, एकार्थे पदत्वप्रसङ्गादिति यावत् । स च = प्रसङ्गश्च । अतिव्याप्तिरिति सम्बन्धः । इतिपदं सर्वत्र लुप्तसप्तमीकम् । उक्तरीत्योदाहरणान्तरस्याप्युपलक्षणमेतत् । व्युत्क्रमेण व्याख्यानं स्वौचित्यादादृतम् । इदमुपलक्षणम्, प्रवृत्तसकलविधिकत्वमित्यत्र विधिप्रवृत्तेः साधुत्वाघटिताया दुर्वचतयाऽऽश्रयात्, विधित्वेन च यदि विधीनां प्रवेशस्तदा तस्यापि साक्षाल्लक्ष्यसंस्कारकसाधुत्वप्रकारकबोधजनकत्वरूपतया साधुत्वघटिततयाऽऽश्रयः जनकतावच्छेदकस्य दुर्वचता च । यदि च सर्वान् विधीन् विशिष्योपादाय तदन्यतमत्वेन लक्षणे प्रवेशः तदा तस्य विशिष्यानुयोगिप्रतियोगिविधया सकलप्रपञ्चघटितत्वावश्यम्भावेनासर्वज्ञाज्ञेयतापातः । सूत्रत्वेन तेषामुपग्रहस्तु नैवानुमोदनीयः, तस्य सुप्त्वादिखण्डनन्यायेनोक्तेन क्षारीकृतत्वात् । "लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च"इत्यादिनोक्तं तु नेह सूत्रत्वं विवक्षाक्षमम्, पदत्वस्याप्यनिरुक्तेः, व्याकरणसूत्राणामेव चेहोपादेयतया व्याकरणे पाणिनीयत्वस्य व्याकरणप्रणेतृपुरुषान्तरीयत्वस्य वा निवेशस्याविनिगम्यत्वात्, सामान्यतश्च व्याकरणत्वं शब्दसाधुत्वान्वाख्यानस्वरूपतया प्रसभमस्यात्माश्रयम्,

साधुत्वस्यैव विचार्यमाणत्वात् । किञ्च हरिः गच्छतीत्यत्र विसर्गान्तहरिशब्दस्य परिनिष्ठितत्वापत्तिः, यद्विधेरत्रोद्देश्यतावच्छेदकमभवत्तस्यात्र प्रवृत्तत्वात्, नचेष्टापत्तिः, "विसर्जनीयस्य सः" इति सूत्रस्थ रनङ्कलिरामाणेन तत्र रेफान्तहरिशब्दस्यैव साधुतायाः "अकृतव्यूहा" इति परिभाषा-व्याख्यानेषु वैयाकरणैर्निर्णीतत्वात् । किञ्च तत्तदुद्देश्यतावच्छेदकापरिचयेऽपि साधुत्वव्यवहारदर्शनमुक्तलक्षणस्य साधुत्वं प्रतिरुणद्धि । एतेन—अप्रवृत्तनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वं परिनिष्ठितत्वम्, न च—स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकस्वरूपप्रत्ययत्वशरीरे प्रकृतित्वस्य प्रत्ययविधायुद्देश्यतावच्छेदकाक्रान्तत्वरूपप्रकृतित्वशरीरे च प्रत्ययत्वस्य प्रविष्टत्वात्परस्पराश्रय इति वाच्यम्, आगमभिन्न आदेशभिन्नश्च यस्तृतीयचतुर्थपञ्चमाध्यायविधेयस्तन्निष्ठविधेयतानिरूपितोद्देश्यताश्रयत्वमिति प्रकृतित्वस्य, अवध्यंशे नित्यसाकाङ्क्षं यद्रूपं तद्रूपावच्छिन्नतृतीयचतुर्थपञ्चमाध्यायघटकपदप्रयोज्यविधेयताश्रयत्वमिति प्रत्ययत्वस्य वा परिष्कारेणादोषात् । न च तथापि सर्वत्र सर्वपुरुषापेक्षयाऽप्रवृत्तत्वस्यासम्भवात् क्वचित्किञ्चित्पुरुषापेक्षयाऽप्रवृत्तत्वमादाय देवदत्तो गच्छतीत्यादौ सत्यपि निपातेऽपरिनिष्ठितत्वप्रसङ्ग इति वाच्यम्, 'लक्ष्ये लक्षणं सकृदेव प्रवर्तते' इति न्यायेन स्वप्रवृत्त्युत्तरं स्वीयोद्देश्यतावच्छेदकाक्रान्तेरभावादेवाप्रवृत्तत्वनिवेशस्यानादरणीयतया तन्निवेशप्रयुक्तदोषानवकाशात्, न च—तथापि 'सुधी + उपास्य' इत्यस्यापि परिनिष्ठितत्वप्रसङ्गः, तिर्यादिनित्यविध्युद्देश्यतावच्छेदकानाक्रान्तेः सद्भावादिति—वाच्यम्, नित्यविध्युद्देश्यतावच्छेदकाक्रान्तत्वं नास्तीति प्रतीतिसाक्षिकसामान्याभावस्य विवक्षणीयत्वादित्यप्यनवकाशीकृतम् । 'विधित्वेन च यदि विधीनां प्रवेश' इत्यादिनोक्तानां सर्वेषामेव दूषणानामिह सत्वात् । किञ्च भवतीत्याद्येकदेशानां वतीत्यादीनां परिनिष्ठितत्वप्रसङ्गः, नहि तत्र नित्यविध्युद्देश्यतावच्छेदकाक्रान्तिः, सार्थकत्वनिवेशेन तु न निस्तार इत्यावेदितम् । नचैकदेशभेदो निवेशमर्हति, लक्ष्यस्यापि वाक्यैकदेशत्वात्, पदैकदेशभेदस्तु पदत्वस्यैवानिरुक्त्या निरास्यः । न च स्वैकदेशभिन्नत्वे सति नित्यविध्युद्देश्यतावच्छेदकानाक्रान्तत्वं वाच्यम्, अतिव्याप्तिस्थलस्यापि स्वैकदेशभिन्नत्वात्, समुदायसमुदायिनोर्भेदस्यानभ्युपगमे तु लक्ष्यस्यापि स्वैकदेशभेदाभावात्, भेदाभेदेन समाधानं तु समानम् । न च विध्युद्देश्यतावच्छेदकाक्रान्तिपूर्विका नित्यविध्युद्देश्यतावच्छेदकानाक्रान्तिर्विवक्षितेति नैकदेशेऽतिप्रसङ्ग इति वाच्यम् . यस्य हि पूर्वं विध्युद्देश्यतावच्छेदकाक्रान्तिस्तस्यैवोत्तरं नित्यविध्युद्देश्यतावच्छेदकानाक्रान्तिरित्यस्योन्मत्तप्रलापत्वात्, परिनिष्ठितापरिनिष्ठितयोरैक्यप्रसङ्गात् । किञ्च विधौ नित्यत्वस्याव्यवस्थितत्वम्, वाकारार्थस्य दुर्वचतया तदघटितत्वस्यासङ्गतत्वात् । विकल्पस्य नित्यत्वपरिचेयत्वात् । किञ्च प्रकृतित्वप्रत्ययत्वयोः परस्परघटितत्वनिबन्धनोऽन्योन्याश्रयोऽपि दुर्वार एव । आगमत्वादेः पारिभाषिकतया सुप्त्वनिरासावतारभाजनतया, अवध्यंशे नित्यसाकाङ्क्षरूपस्यैकत्वे निर्वक्तव्यतापत्तिः, अनेकत्वे च प्रत्येकमिलितविकल्पानुपपत्तिरिति दोषग्रस्ततया, तत्तदध्यायानां पाणिनीयानामेव निवेशस्य विनिगमनाविरहावहेलिततया च "आगमभिन्न" इत्यादिनिर्वचनयोरनादरणीयत्वात् सामान्याभावस्तु खण्डित एव स्मृत्यन्यत्वखण्डनेऽधस्तादिति "सुधी + उपास्य" इत्यादेरपि परिनिष्ठितत्वप्रसङ्गोऽस्त्येव । प्रयुज्यमानशब्दनिष्ठपुण्यजनकतावच्छेदको व्याकरणव्यङ्ग्यो जातिविशेषः साधुत्वमित्यपि न साधु, जातिमात्रस्य निरस्तत्वात्, व्याकरणत्वस्य साधुत्वघटिततयाऽऽत्माश्रयाच्च । अतएव शिष्टप्रयोगार्हत्वं न साधुत्वम्, योग्यतातदवच्छेदकयोरैक्यप्रसङ्गात्, शिष्टत्वस्य तत्तद्दर्शनभेदेनाव्यवस्थितत्वाच्च, साध्वसाधुशब्दविभागज्ञत्वरूपस्य च तस्यात्माश्रयापादकत्वात् । शक्तिभ्रमानधीनशाब्दबोधजनकत्वं साधुत्वमित्यपि न, जनकतातदवच्छेदकयोरैक्यापत्तेरेव, रूपभेदेन समाधानं तु बहुशोऽपहस्तितम्, असाधुशब्दानामपि "वाचकत्वाविशेषेऽपि नियमः

एतेनापौरुषेयं वाक्यं तदित्यपि निरस्तम् । इति शब्दप्रमाणखण्डनप्रकरणम् ।

पुण्यपापयो"रित्यादिवदद्भिः शक्ततया अन्यत्र व्यवस्थापितत्वेन शक्तिभ्रमानधीनशाब्दजनकतया तेष्वतिप्रसक्तेश्चेतिदिक् ।

एतेनेति । उक्तरीत्या वाक्यत्वखण्डनेनेत्यर्थः । तदिति । शब्दप्रमाणमिति नार्थः, तथा सति स्मृत्यादेरपि लक्ष्यतापत्त्या तत्राव्याप्तेः, नापि नित्यं शब्दप्रमाणमित्यर्थः, वर्णात्मना शब्दात्मना वा नित्यतायाः स्मृत्यादावपि सद्भावात्, "चैतन्यं सर्वभूतानां शब्दब्रह्मेति मे मति"रिति सिद्धान्तात् । वाक्यात्मना नित्यतायाश्च वेदेऽप्यभावात्, वाक्यत्वं ह्यानुपूर्वीविशिष्टानामेव, आनुपूर्वी चानित्यैव, नित्यवर्णवादे एकवर्णाधिकरणक्षणध्वंसाधिकरणक्षणध्वंसाधिकरणक्षणस्य प्रसिद्धावपि तद्वृत्तित्वस्यापरत्र वर्णेऽप्रसिद्ध्या तादृशावृत्तित्वघटिताव्यवहितोत्तरत्वघटितानुपूर्व्या असम्भवात्, अनित्यवर्णवादे तत्सम्भवेऽपि वर्णानित्यतयैव तदनित्यताया आवश्यकत्वात् । तदुच्चारणोत्तरोच्चारणकत्वरूपायास्तज्ज्ञानोत्तरज्ञानकत्वरूपाया वा तु तस्या उच्चारणादिनाऽनित्येन घटिततयाऽनित्यत्वध्रौव्यात् । नचानुपूर्वी वेदस्य नित्यैव शब्दसमवेतपदार्थान्तरमिति मतं युक्तम्, मानाभावात् । अपौरुषेयवाक्यमित्यपि नार्थः, लक्ष्यतावच्छेदकप्रतीतेः प्रागेवापेक्षणीयत्वात् । अपितु वेदात्मकं प्रमाणमित्यर्थः । वस्तुतस्तु वेदत्वमपि दुर्वचमेव, तथाहि—वेद इत्याकारकाभियुक्तप्रयोगविषयत्वमेव वेदत्वमिति केचित्, तन्न चारु, वेदत्वप्रतीतौ 'अयं वेदः' इति प्रयोगः, तस्मिंश्च सति तद्घटितवेदत्वप्रतीतिरित्यन्योन्याश्रयात्, प्रयोगप्रवाहानादित्वेन समाधानेऽपि यं धर्मं धर्मितावच्छेदकीकृत्य तादृशविषयत्वं ज्ञेयं तस्य वक्तव्यत्वापातात्, नहि तदेव तत्, आत्माश्रयात्, सर्वपुरुषदृष्ट्याऽभियुक्तत्वस्य क्वचिदप्यभावेन पुरुषविशेषदृष्ट्याऽभियुक्तेन केनचिद्वेद इति प्रयोगविषयीकृते शरीरविशेषादावतिप्रसक्तेश्च । अतएव शक्तिसम्बन्धेन वेदपदवत्त्वमित्यपि न, शरीरविशेषादेरपि तथात्वसम्भवात्, शक्तिविशेषस्य सम्बन्धताविवक्षायाञ्च तत्र वेदत्वस्य प्रवेशापत्त्याऽऽत्माश्रयात्, नह्यर्थविशेषनियन्त्रितत्वातिरिक्तः कश्चिद्विशेषः शक्तौ । शक्तेः स्वावच्छेदकतापाताच्च, वेदत्वं हि वेदपदशक्यतावच्छेदकं तच्च शक्तिघटितं त्वया कृतम् । शक्तेर्निरस्तत्वाच्च । अथास्ति तावद्व्यवहारादनुगतं वेदत्वम्, तस्य तु यद्यपि प्रत्येकवर्णग्रहे वेदत्वव्यवहारविरहेण प्रत्येकवर्णपर्याप्तत्वस्य वक्तुमशक्यत्वेन; यावद्वर्णग्रहे वेदत्वव्यवहारः प्रामाणिकस्तावत्सु व्यासज्यवृत्तितया वक्तव्यतया न जातित्वसम्भवः, जातेर्व्यासज्यवृत्तित्वाभावात्, तारत्वादिना कत्वखत्वादिना च साङ्कर्याच्च, तथाप्यखण्डोपाधित्वं निराबाधमिति चेन्न, वेदत्वानिरुक्तौ 'यावद्वर्णग्रहे वेदत्वव्यवहारः प्रामाणिक' इत्युक्तेरनौचित्यात्, अनुगतधर्ममात्रस्य निरस्तत्वाच्च, अखण्डोपाधेः प्रतीतिविशेषसाक्षिकतया निरूपणीयत्वेनान्योन्याश्रयाच्च । एतेन ऋग्यजुःसामान्यतमत्वं वेदत्वमित्यपि—पराकृतम्, ऋक्त्वादेरप्यनयैव रीत्या निरसनीयत्वात्, अन्यतमत्वघटनाऽसङ्गतेरुक्तत्वाच्च । ननु शब्दतदुपजीविप्रमाणातिरिक्तजन्यज्ञानाविषयविषयकशाब्दबोधजनकत्वे सति शब्दाजन्यज्ञानजन्यप्रमाणशब्दत्वं वेदत्वम् । अत्र वेदजन्यज्ञानजन्ये स्मृत्यादावतिव्याप्तिवारणाय शब्दाजन्येति । अनुमानादिजन्येश्वरादिज्ञानविषयकशाब्दजनकत्वस्य वेदे सत्त्वेनासम्भवभङ्गायातिरिक्तान्तम्, तादृशानुमानादेः शब्दोपजीवित्वात्, तच्चादृष्टाद्वारकशब्दमूलकत्वम्, तेन जन्यमात्रस्यादृष्टद्वारा विधिवाक्यमूलकत्वेऽपि न क्षतिः, शब्दोपजीविप्रमाणस्यैव भेदस्तु न निवेशितः, वेदजन्यप्रमितिविषयार्थकतामादायासम्भवप्रसङ्गात्, अधिकमन्यत्रानुसन्धेयमिति चेन्न, पौरुषेयत्ववादे एव शब्दाजन्यज्ञानजन्यत्वदलस्य वेदे सम्भवेनैतल्लक्षणस्य प्रकृतानुपयोगित्वात्, वेदान्तिसम्मतापौरुषेयत्ववादे च शब्दाजन्यब्रह्मात्मकज्ञानजन्यत्वस्य वेदे इव स्मृत्यादावपि सद्भावात् । अथापौरुषेयत्ववादे

ज्ञानाजन्यप्रमाणशब्दत्वं विशेष्यदलार्थः, नच वाक्यभावमापन्नस्यैव प्रमाणशब्दत्वादुक्तरीत्या च तस्यानित्यत्वादानुपूर्वीज्ञानजन्यत्वमादायासम्भव इति वाच्यम्, ज्ञानपदेन स्वप्रतिपाद्यार्थविषयकज्ञानस्य विवक्षितत्वादिति चेन्न, गुरुमुखाद्वेदार्थमवगत्य शिष्येण तदुच्चारणदर्शनेनासम्भवतादवस्थ्यात् । न च गुरुशिष्यपरम्पराविच्छेदानभ्युपगमपक्षे कश्चिदादिवेदो येन तस्यैव ज्ञानाजन्यत्वमादायासम्भवव्युदासः सम्भवेत् । सर्गस्वीकर्तृनये चेश्वरीयमायावृत्त्याद्यात्मकज्ञानजन्यत्वमादावपि वेदे इति न दोषवारणम् । एतेन–तार्किकमते जन्यज्ञानाजन्यजातीयत्वं विशेष्यदलार्थः, आद्यवेदस्य जन्यज्ञानाजन्यत्वेन तज्जातीयत्वस्यानुपूर्व्येदानीन्तनवेदे सम्भवः, नचैतन्मते वर्णानामप्यनित्यतयाऽऽनुपूर्व्याः सुतरां नाभेद इति कथं तया प्राक्तनेदानीन्तनवेदयोः साजात्योपपत्तिरिति वाच्यम्, कत्वखत्वादिना वर्णानामानुपूर्व्यां प्रवेशे तदेकत्वोपपत्तेरिति --परास्तम्; सर्गादौ सम्प्रदायप्रवर्तनवेलासु भगवदुक्तवेदव्याख्यानेऽतिव्याप्तेः, जन्यज्ञानाजन्ये तत्र तज्जातीयत्वस्यावश्यम्भावात् । यत्तु—अदृष्टजनकाध्ययनविषयतावच्छेदकावच्छिन्नत्वे सतीत्यपि वक्तव्यम्, वेदव्याख्यानस्य तु न तथात्वमिति, तदसम्यक्, लक्ष्ये तादृशविषयतावच्छेदकं यदि वेदत्वम्, तदा न तदद्यापि निरुक्तमिति कथं तदादाय लक्षणसमन्वयः । यदि तत्तन्मन्त्राद्यानुपूर्वी, तदा प्रत्येकमिलितत्रिकल्पानुपपत्तिः, यद्यात्मादिप्रतिपादकवाक्यत्वम्, तदा वेदव्याख्यानसाधारण्यमेवेति । किञ्च, आनुपूर्व्या वर्णविशेषघटितत्वे तत्त्वस्याप्यननुगततया तेन रूपेण निवेशस्यानिस्तारकत्वेन साजात्ये यत्किञ्चिन्मन्त्रादेरानुपूर्व्याः प्रवेशः, मन्त्रब्राह्मणात्मकवेदराशेर्वा, आद्येऽपरमन्त्रादेरवेदत्वापत्तिः, द्वितीये च प्रत्येकमन्त्रादौ वेदत्वव्यवहारानुपपत्तिः, परिशिष्टांशवैयर्थ्यञ्च तादृशानुपूर्व्या एव लक्षणत्वसम्भवात्, निखिलवेदानुपूर्वीज्ञानं विनाऽपि वेदव्यवहारदर्शनेनासम्भवश्चेति । पौरुषेयत्वापौरुषेयत्वोभयमतसाधारणं त्वव्याप्तिरूपं दूषणमत्र द्रष्टव्यमेव, "वायुर्वै क्षेपिष्ठा देवता" "अग्निर्हिमस्य भेषजम्" इत्यादिवाक्यानां शब्दतदुपजीविप्रमाणातिरिक्तनयनादिजन्यप्रमितिविषयार्थकत्वस्यैव सत्त्वेन सत्यन्तदलस्याभावात् । नच विधिवाक्यैकवाक्यतापन्नस्यैव तस्य वेदत्वम्, तादृशे च तत्र सत्यन्तदलं सूपपादमिति वाच्यम्, विधिवाक्यैकवाक्यतामनापन्नस्यापि तस्य प्रामाणिकवेदत्वव्यवहारविषयत्वादिति । इदन्तु तत्त्वम् । वाक्यार्थगोचरयथार्थज्ञानवदुक्तत्वरूपाप्तोक्तत्वनिश्चयस्य शाब्दधीहेतुत्वमितिप्राचीनप्राभाकरमते पौरुषेयवाक्यमात्रस्य गृहीतग्राहितयाऽप्रमाणताऽभ्युपगमेन तत्पदेन शब्दप्रमाणमात्रपरामर्शेऽपि न क्षतिः, न वा वेदमात्रस्याप्रस्तुतत्वेऽप्यसङ्गतिः । शाब्दबोधात्पूर्वं वाक्यार्थस्योपस्थितिनियमाभावेन तद्घटिताप्तोक्तत्वनिश्चयस्य शाब्दबोधहेतुत्वासम्भवेन तादृशमतस्याप्यसाङ्गत्यमित्यन्यत् । निरस्तमिति । अपौरुषेयत्वदुर्वचत्वमपीह द्रष्टव्यम्, तथाहि—यादृशं पौरुषेयत्वं तार्किकैरुच्यते तादृशस्यैवाभावः परैः प्रसाध्यः, अन्यथा सिद्धसाधनाद्यापत्तेः, तार्किकास्तु—स्वसमानजातीयवाक्योच्चारणाप्रयोज्यप्रयत्नजन्यजातीयत्वं पौरुषेयत्वम्, स्वसमानजातीयत्वं तादृशप्रयत्नजन्यजातीयत्वं चानुपूर्व्या विवक्षितम्, भारतादेर्वेदजातीयवेदज्ञानप्रयोज्यत्वेऽपि स्वसमानजातीयभारतज्ञानाप्रयोज्यत्वान्न तस्य पौरुषेयत्वहानिः, पठ्यमानवेदादेः स्वसमानजातीयगुरुवाक्योच्चारणप्रयोज्यशिष्यप्रयत्नजन्यत्वेऽपि तादृशोच्चारणाप्रयोज्यप्रयत्नजन्याद्यवेदजातीयत्वमस्त्येवेत्याहुः, तदिदमसारम्, वाक्यत्वस्य निरस्तत्वात्, अपि च शब्दमात्रेणानुगमासम्भवेनानुपूर्वीत्वेनाप्यानुपूर्व्या निवेशे कृतकृत्यताया अनुपपत्तेः साजात्ये आनुपूर्वीविशेषो वा निविशते यावत्यो वाऽऽनुपूर्व्यः, आद्येऽव्याप्तिः, द्वितीये चासम्भवः, प्रत्येकवाक्ये पौरुषेयत्वव्यवहारानुपपत्तिश्चेत्यादिदूषणस्यानुपदोक्तरीत्या दुर्वारत्वात् । न च—तादृशप्रयत्नजन्यत्वमित्येव वाच्यम्, आद्यवेदादेः पठ्यमानवेदादेश्च प्रत्यभिज्ञाबलादभेद इति मताश्रयणे तादृशजन्यजातीयत्वनिवेशे प्रयोजनाभावादिति—वदितुं युक्तम्,

युक्तिविरोधे प्रत्यभिज्ञायाः साजात्यमात्रावलम्बित्वात्, उपपादितं हि वाक्यत्वेन रूपेणानित्यत्वम्। स्वसमानजातीयेत्यस्य त्यक्तुमशक्यत्वेनात्रैवोक्तविकल्पप्रयुक्तदूषणस्य दुर्वारत्वाच्च। किञ्च तादृशजन्यत्वं कं धर्मं धर्मितावच्छेदकीकृत्य प्रत्येतव्यमिति वक्तव्यम्, न च सर्वपौरुषेयसाधारणोऽस्ति कोऽपि धर्मो ऽनतिप्रसक्तो यस्तदवच्छिन्द्यात्। तथा च तत्तदानुपूर्वीविशेषाणामेव तथात्वं वाच्यमिति तादृशे जन्यतावच्छेदकधर्मावच्छिन्नत्वमित्यत्रापि प्रत्येकमिलितविकल्पानुपपत्तिः पृष्ठारूढैव। न च तादृशजन्यतावच्छेदकत्वेन निवेशे नेदृशविकल्पप्रसरः स्यात्; स्यादेवं यदि तादृशजन्यतानुगमः स्यात्, तदनुगमस्तु तदवच्छेदकानुगमाधीनः, स्वत्वस्याप्यननुगमाच्च । नचागत्योपगन्तव्योऽननुगमः; एवं सति प्रतियोगितावच्छेदकस्यानुगतस्यालाभेनानन्तपौरुषेयत्वाभावकूटस्यैवापौरुषेयत्वरूपतापर्यवसानेनासर्वज्ञदुर्ज्ञेयत्वप्रसङ्गात् । एतेन—शब्दज्ञानाप्रयोज्यस्ववाक्यार्थगोचरयथार्थज्ञानजन्यत्वं पौरुषेयत्वम्, तत्त्वप्रदीपिकाद्युक्तस्य मानान्तरेणार्थमुपलभ्य विरचितत्वरूपपौरुषेयत्वस्याप्यत्रैव पर्यवसानम्, अन्यथा स्वातिरिक्तमानप्रयोज्यस्ववाक्यार्थगोचरयथार्थज्ञानजन्यत्वस्य तदर्थत्वे गुरुशिष्यवाक्ययोर्भेदेन मानपदेन मनसोऽपि ग्रहीतुं शक्यत्वेन च मीमांसकेन सिद्धसाधनोद्भावनापत्तेः, स्वविभिन्नानुपूर्वीकवाक्यप्रयोज्यस्ववाक्यार्थगोचरयथार्थज्ञानजन्यत्वस्य तदर्थत्वे तु तदभावसाधने तार्किकेण सिद्धसाधनोद्भावनापत्तेः, नहि स वेदे तादृशवाक्यप्रयोज्यज्ञानजन्यतामनुमनुते। आनुपूर्वीयथार्थज्ञानजन्यतामादाय सिद्धसाधनादिवारणाय स्ववाक्यार्थेति। गुरुशिष्यपरम्परायां शब्दज्ञानप्रयोज्यस्ववाक्यार्थगोचरयथार्थज्ञानजन्यताया वेदे परैरपि स्वीकारेण शब्दज्ञानाप्रयोज्येति। न च बाधितार्थकवाक्ये तादृशयथार्थज्ञानजन्यत्वाभावेनापौरुषेयत्वव्यवहारापत्तिरिति वक्तव्यम्, प्रमाणशब्दत्वसमानाधिकरणमेव हि पौरुषेयत्वमिह निरुक्तं, तदभावेन चापौरुषेयत्वव्यवहारो बाधितार्थकेऽपि भवन्न कामपि क्षतिमावहति, अनुपादेयं वा ज्ञाने याथार्थ्यमिति—निरस्तम्, पठ्यमानवेदस्य शब्दज्ञानप्रयोज्यस्वार्थज्ञानजन्यतया तत्राव्याप्तेर्वारणाय तादृशजन्यजातीयताविवक्षायां साजात्ये आनुपूर्वीविशेषादिप्रवेशप्रयुक्तोक्तदोषावकाशात् । अदृष्टार्थकभारतादौ तथाप्यव्याप्तेश्च। एवञ्च पठ्यमानाद्यवेदयोरभेदाभ्युपगमेऽपि न निस्तारः। यदि च भारतादेः पठ्यमानस्य च वेदस्य शब्दज्ञानाप्रयोज्यस्वार्थविषयकेश्वरीयज्ञानेनापि जन्यत्वान्न तत्राव्याप्तिरित्युच्यते, तदापि जन्यतावच्छेदकेऽपि प्रत्येकमिलितविकल्पानुपपत्तिस्तथैव। वस्तुतस्तु भारतादौ स्वार्थविषयकव्यासादिनिष्ठज्ञानजन्यतयैव पौरुषेयत्वव्यवहारस्तादृशं च ज्ञानं शब्दज्ञानप्रयोज्यमेवादृष्टार्थविषयकमिति नेश्वरीयज्ञानजन्यतामादायाव्याप्तिवारणमनुमोदामहे इति कृतमतिपल्लवैरिति।

इति खण्डनशारदायां शब्दप्रमाणखण्डनप्रकरणम्।



# अर्थापत्तिखण्डनप्रकरणम्

का पुनरर्थापत्तिरपि ?। अन्यथाऽनुपपत्तिरिति चेन्न, यतोऽन्यत्वं तत्सिद्धेरग्रे तदसिद्धेः। सिद्धेनानुपपत्तिरिति चेन्न, विशेषणव्यवच्छेद्याप्रतीतौ तद्वैयर्थ्येन तदनुपादाने सर्वथाऽनुपपत्त्यर्थतायां फलविरोधात्, केनाप्यनुपपत्त्यर्थत्वे साध्यसिद्ध्यपर्यवसानात्।

---

केति। प्रश्नगर्भीभूतास्वाक्षेपा वक्ष्यमाणा एव। प्रमाणविशेषान्तरखण्डनेनार्थापत्तिखण्डनं समुच्चेतुं पुनश्शब्द इति तदर्थो वाक्यार्थान्वयी 'किञ्चे'त्येवमभिनेतव्यो वाक्यारम्भे। अपिस्तु प्रत्यक्षादिकं दृष्टान्तीकर्तुम्। एवञ्च प्रत्यक्षादिवदर्थापत्तिरपि दुर्वचैवेति तात्पर्यार्थः। अर्थापत्तिपदञ्च करणपरम्, अर्थस्यापत्तिः = कल्पना येनेति व्युत्पत्तेः। सुवचत्वाभिमानी परः प्रतिब्रूते अन्यथानुपपत्तिरिति। तज्ज्ञानमित्यर्थः। करणस्य सव्यापारकत्वनियमानभ्युपगमेन व्यापारगवेषणायासो न विधेयः। अन्यथेत्यत्रान्यत्वं प्रविष्टं तत्प्रतियोगि चोपपादकम्, न च प्रतियोगितावच्छेदकप्रकारकज्ञानं विनाऽभावज्ञानसम्भवइत्युपपादकस्य देवदत्तीयबहिः सत्त्वस्य तत्त्वेन ज्ञानं प्रागेवापेक्षणीयमापतति, तदन्यप्रकारेण जीविदेवदत्तीयगृहासत्त्वस्यानुपपत्तेः, तादृशज्ञानञ्चान्यथानुपपत्तिज्ञानाद्वा, प्रमाणान्तराद्वा, आद्येऽन्योन्याश्रयः, देवदत्तबहिःसत्त्वज्ञानेऽन्यथानुपपत्तिज्ञानम्, अन्यथानुपपत्तिज्ञाने च देवदत्तबहिःसत्त्वज्ञानमिति, द्वितीये तु प्रमाणान्तरेणैवार्थापत्तेर्वैयर्थ्यमित्याह यतोऽन्यत्वमिति। यद्धर्मावच्छिन्नप्रतियोगिताकान्यत्वमन्यथानुपपत्तिघटकमित्यर्थः। तत्सिद्धेरग्रे = तद्धर्मावच्छिन्नप्रकारकज्ञानात्पूर्वं तदसिद्धेः = अन्यथानुपपत्तिज्ञानासम्भवात्। सिद्धेनानुपपत्तिरिति। प्राक्प्रतीतेन बहिःसत्त्वेनैव विनाऽनुपपत्तिज्ञानं करणमित्यर्थः। एवञ्च देवदत्तीयबहिःसत्त्वज्ञानस्य प्रथममनपेक्षणीयत्वेन नोक्तदोषौ। अत्र बहिःसत्त्वमात्रस्यैवोपपादकविधया ज्ञानमर्थनीयमित्यर्थे पर्यवसानं दोषान्तराभिधित्सुर्हेत्वन्तराभिधानेन द्रढयन्नाह विशेषणेति। विशेषणं = देवदत्तीयत्वं तद्व्यवच्छेद्यं बहिःसत्त्वं तयोरप्रतीतौ, देवदत्तीयत्वविशिष्टबहिःसत्त्वस्य प्रागप्रतीततयेति यावत्, तद्वैयर्थ्येन = देवदत्तीयत्वनिवेशस्याकिञ्चित्करत्वेनोक्तदोषावहत्वेन च तदनुपादाने = देवदत्तीयत्वस्यानुपादाने सर्वथानुपपत्त्यर्थतायां = निखिलबहिःसत्त्वं विनाऽनुपपत्तिज्ञानस्य करणत्वविवक्षायां फलविरोधात् = देवदत्तीयत्वविशिष्टबहिःसत्त्वकल्पनाविलोपात्, तथासति निखिलबहिःसत्त्वकल्पनाया एव फलत्वापत्तेरिति भावः। केनाप्यनुपपत्त्यर्थत्वे = येन केनचिद्बहिःसत्त्वेन विनाऽनुपपत्तिज्ञानस्य करणताया विवक्षितत्वे, बहिःसत्त्वत्वावच्छिन्नेन विनाऽनुपपत्तिज्ञानस्य करणताया विवक्षितत्वेऽपीति यावत्, साध्यसिद्धेः = देवदत्तीयत्वविशिष्टबहिःसत्त्वसिसिद्धेरलाभात्, तथासति बहिःसत्त्वत्वावच्छिन्नसिद्धेरेव लभ्यत्वात्। अत्र—सिद्धेनेत्यस्यासिद्धदेवदत्तीयबहिःसत्त्वव्यवच्छेदार्थतया व्यवच्छेद्यस्य प्रसिद्धौ पूर्वोक्तदोषः, अप्रसिद्धौ तु सिद्धेनेत्यस्य वैयर्थ्यम्, तदनुपादाने त्वनुपपत्तिमात्रज्ञानस्य करणतापर्यवसानेन सर्वथैवानुपपन्नस्योपपादककल्पनानवकाश इति केषाञ्चिद्व्याख्यानं तुच्छत्वादुपेक्षितम्, वस्तुगत्या यत्सिद्धं तस्योपपादकविधया ज्ञानापेक्षाशङ्कायां सिद्धत्वविशेषणव्यावर्त्यप्रतीत्यप्रतीतिचिन्ताया हि कोऽवसरः ? सिद्धत्वेनोपपादकज्ञानमपेक्ष्यमितिपराभिप्राय इत्यभिमत्य चिन्ता तादृशीतिचेन्न, सिद्धत्वप्रकारकज्ञानस्यासिद्धत्वावच्छिन्नव्यावृत्तिमितिफलकतया वस्तुतोऽसिद्धस्यापि देवदत्तीयबहिःसत्त्वस्य तत्त्वेन ज्ञानानपेक्षणात्पूर्वोक्तदोषाभिधानासङ्गतेरिति।

प्रमाणयो विरोधोऽनुपपत्तिरिति चेन्न, असिद्धत्वात् । प्रमाणत्वेनाभिमन्यमान-

नन्वु बहिः सत्त्वत्वेनैवोपपादकज्ञानस्य कारणत्वे देवदत्तीयत्वविशिष्टबहिःसत्त्वं न सिद्ध्येत्तः। यदा पक्षधर्मतावलं नोपासनीयं भवेत्, तदुपासने तु यस्य जीवतो गृहासत्त्वमनुपपन्नं तस्यैव बहिः सत्त्वं कल्पयतीति देवदत्तीयत्वेन बहिः सत्त्वस्य प्रागज्ञानेऽपि न क्षतिः, नहि वह्नित्वावच्छिन्नव्याप्यतया धूमस्य पर्वते ज्ञानं पर्वतो वह्निमानितिधियमर्जयन्न पर्वतीयवह्निसिद्धौ पर्यवस्यतीति चेन्न, पक्षधर्मताबलस्यानुमानखण्डने निवेदितनिरासत्वादित्याशयात् । किञ्च तेन विनेदमनुपपन्नमिति ज्ञानं तदभावव्यापकीभूताभावप्रतियोगित्वमिदम्पदार्थेऽवगाहमानमर्थापत्तौ कारणमिति व्याप्तिज्ञा-नोपायखण्डनमपि प्रागुक्तमिह सावकाशम् । एवमर्थापत्तेरनुमानान्यत्वानन्यत्वाभ्यां दुर्वचत्वमपि, तथाहि—देवदत्तस्याप्रत्यक्षत्वेऽपि 'गृहे देवदत्तस्याभाव' इति प्रत्यक्षेण गृहवृत्त्यभावप्रतियोगित्वस्य देवदत्तेऽवगाहनात् जीवित्वस्य च ज्योतिर्विदा प्रतिपादितत्वात्, 'देवदत्तो बहिर्वर्तते जीवित्वे सति गृहनिष्ठाभावप्रतियोगित्वा'दिति व्यतिरेकिसम्भवो यद्यपि, तथापि लिङ्गविशेष्यकस्य पक्षविशेष्यकस्य वा परामर्शस्यानुमितिहेतुतयोपनीतस्य च विशेषणतयैव भानस्य नियततया देवदत्तवत्तद्धर्मस्यापि तादृशप्रतियोगित्वस्यासन्निकृष्टतया च तादृशपरामर्शासम्भवात्, साध्याभाववदवृत्तित्वग्रहस्यैवानुमिति-कारणतया लाघवात्क्लृप्तत्वाच्चानुपपत्तिमतिप्रसूतमतौ 'अनुमिनोमी'त्यनुव्यवसायस्याभावेनार्था-पयामीत्यनुव्यवसायस्यैव च सद्भावेनार्थापत्तित्वस्य जातिविशेषस्यानुमितित्वातिरिक्तस्य तद्व्याप्यस्यैव च मन्तव्यत्वाच्च न तादृशमतेरनुमित्यन्तर्भावसम्भवः, अर्थापत्तौ तु गुरोरपि व्यतिरेकव्याप्तिग्रहस्य हेतुताया अगत्याऽन्यस्याभावेनाभ्युपेतव्यत्वादिति केचित्प्रतिपेदिरे । अपरे पुनरन्वयव्याप्तिमविदुषोऽपि व्यतिरेकव्याप्तिग्रहोत्तरभाविनि ग्रहेऽनुमिनोमीत्यप्यनुभवेन व्यतिरेकव्याप्तिग्रहस्याप्यनुमितिकारणतायां ग्राह्याभावानवगाहिनोऽपि तस्य मणिमन्त्रादिन्यायेन साध्याभाववदवृत्तित्वरूपव्यभिचारग्रहं प्रति प्रतिरोधितायाश्च स्वीकार्यत्वादर्थापत्तेरनुमितित्वमेव, अर्थापत्तित्वस्य चानुमितित्वव्याप्यत्वमेव, नहि 'धूमाभावो वह्न्यभावव्यापक' इति व्यतिरेकव्याप्तिप्रतीतौ सत्यां धूमे तादृशव्यभिचारमतिरुदेतीत्यानु-भविकम्, एवञ्च तत्तद्व्याप्तिज्ञानानां व्यभिचारधीप्रतिबन्धकतावच्छेदकविषयिताशालित्वेनैवानुमिति-जनकतोपेतव्योपनीतस्य च विशेषणतयैव भानमिति न राज्ञामाज्ञेत्यनुमेनिरे । तदिदं मतद्वयं परस्परविरुद्धानुभवेन प्रत्यवस्थितमविश्वसनीयतामापद्यानिर्वाच्यतामेव तृतीयां सरणिं पुष्णाति, तां विनाऽनुभवमूलककलहस्य दुर्निवारत्वादिति नात्राधिकं वक्तव्यम् । अर्थापत्तिरियं जातिरिति तु जातिसामान्यखण्डनेन प्रतिविहितम् ।

मतान्तरमुत्थापयति प्रमाणयोरिति । जीवी देवदत्तः क्वचिदस्तीति क्वचित्त्वेन गेहमपि विषयीकुर्वतः प्रमाणस्य देवदत्तो गेहे नास्तीति प्रमाणस्य च विरुद्धविषयकत्वमेवानुपपत्तिः तज्ज्ञानं चार्थापत्तिकरणमित्यर्थः, ज्ञायमानस्य न करणत्वमपि तु ज्ञानस्येत्यनुमानवद्द्रष्टव्यम् । क्वचिदित्यस्य गेहातिरिक्तविषयकत्वकल्पना तु फलमविरोधोपपादकम्, अत्र चोक्तरीत्याऽनुमानेन गतार्थत्वशङ्काऽपि नास्तीत्यभिप्रायः । तदुक्तं पार्थसारथिमिश्रैः—"प्रमाणसिद्धयोर्द्वयोरर्थयोः परस्परं प्रतिघातोऽर्थान्तरकल्पनया समाधेयत्वेनालोच्यमानोऽर्थापत्तिकरण"-मिति । असिद्धत्वादिति । प्रमाणयोर्विरुद्धविषयकत्वस्येत्यादिः । प्रमाणाभ्यामेकत्रोपनीतयो र्हि धर्मयो र्न विरोधोऽपि तु वस्तुनो द्वैरूप्यम्, नो चेत्तयोरेकतरस्याप्रमाणत्वमेव विरुद्धार्थग्राहकत्वादित्यर्थः। प्रमाणत्वेनाभिमन्यमानयोरिति । विरुद्धविषयकत्वमनुपपत्तिरिति शेषः । वस्तुगत्यैकतरस्याप्रमाण-

योरिति चेन्न, अभिमते भ्रमार्थत्वेऽतिप्रसङ्गात्। ज्ञानार्थत्वेऽप्युक्तदोषानिवृत्तिरेव । अनिर्णीयमानप्रामाण्याप्रामाण्ययोरित्यत्रापि तथैव, तथाहि—सत्प्रतिपक्षेऽपि तस्य तदुपपादकप्रमाफलकत्वापत्तेः । तत्र विरोधे व्याहत्यैकाप्रामाण्यनिश्चयो यत्र तु नैवं तद्विवक्षितमिति चेन्न, एवं सत्प्रतिपक्षवदन्यत्रापि विरोधार्थत्वेनैवाभासत्वाविशेषात् । तर्कयोर्वि-

---

त्वेऽपि प्रमाणत्वाभिमानविषयत्वसम्भव इति भावः । भ्रमार्थत्वे इति । एवञ्चार्थापत्तिप्रमोच्छेदो मा भूदित्येकस्य वस्तुनोऽप्रमाणतया अन्यस्य च प्रमाणतया अवश्यं विवक्षणीयतया प्रमाणत्वेनाभिमन्यमानस्य प्रमाणत्वेन प्रमितस्य च द्वयोर्विरुद्धविषयकत्वानुसन्धानमर्थापत्तिकरणमिति पराभिप्रायो द्रष्टव्यः, ज्ञानस्यैकत्वेऽप्यांशिकभ्रमत्वप्रमात्वयोरुपपत्तिः । अतिप्रसङ्गादिति । तथाहीत्यादिनाऽनुपदं वदिष्यत्यतिप्रसङ्गम् । उक्तदोषोऽपि वक्ष्यमाणोऽतिप्रसङ्गः । अनिर्णीयमानेति । अनिर्णीयमाने प्रामाण्याप्रामाण्ये ययोस्तयोर्विरुद्धविषयकत्वमनुपपत्तिरित्यर्थः । तथैव = अतिप्रसङ्ग एव । सत्प्रतिपक्षे = तुल्यबलत्वेनानुसंहितविरोधिपरामर्शद्वयस्थले । तस्य = तादृशपरामर्शयोर्विरुद्धविषयकत्वज्ञानस्य । तदुपपादकप्रमेति । तादृशपरामर्शद्वयसमर्पितयोरुपपादकविषयकप्रमेत्यर्थः । तादृशभ्रमोपधायकत्वस्य कदाचिदिष्टत्वात्प्रमेत्युक्तम् । विशेषादर्शनेन तुल्यबलत्वेन प्रतिसंहिततया विशिष्य प्रामाण्याप्रामाण्ययोस्तत्रानिर्णयेऽप्यनयोरेकतरमप्रमाणमपरञ्च प्रमाणमिति सामान्यतो द्वयोः प्रमाणत्वेन निर्णयस्यापि सत्त्वात्तस्यैकत्र भ्रमत्वमपरत्र च प्रमात्वमस्त्येवेति भ्रमार्थत्वपक्षसाधारण्यसम्भवोऽस्य ग्रन्थस्य, ज्ञानसामान्यार्थत्वपक्षे तु प्रमाणत्वसंशयमादायापि । एवञ्च वायुर्बहिरिन्द्रियाविषयोऽरूपिद्रव्यत्वात्कालवत्, वायुः प्रत्यक्षः प्रत्यक्षस्पर्शाश्रयत्वाद्घटवदित्यादौ परामर्शयो विरुद्धविषयकत्वज्ञानसद्भावाद्द्वयोः प्रत्यक्षत्वाप्रत्यक्षत्वयोः कालादिभेदं परिकल्प्य विरोधः समाधेयः स्यादिति भावः । शङ्कते तत्रेति । सत्प्रतिपक्षस्थल इत्यर्थः । विरोधे = विरुद्धार्थविषयकत्वनिश्चये सति । व्याहत्या = विरुद्धार्थविषयकत्वेन लिङ्गेन, एकाप्रामाण्यनिश्चयः = अनयोरेकतरं बाध्यं विरुद्धार्थग्राहित्वादित्येकतरपरामर्शस्याप्रामाण्यानुमितिः । यत्र = यादृशविरुद्धार्थविषयकत्वनिश्चयस्थले नैवम् = नैकतरस्याप्रामाण्यानुमितिः, तद्विवक्षितम् = तादृशो विरुद्धार्थविषयकत्वनिश्चयोऽर्थापत्तिकरणत्वेन विवक्षितः । अयम्भावः—वायुर्यदि प्रत्यक्षायोग्यस्तर्हि कालान्तरे देशान्तरेऽपि वा न प्रत्यक्षविषयतामासादयितुमीष्टे, न च प्रत्यक्षयोग्यत्वायोग्यत्वयोः कालादिभेदेन सम्भवः, एवं हि विरुद्धधर्माध्यासेन पवनवैजात्यं स्यात्, अनुभूयमान एव च पवनोविवादाध्यासितः, तस्मात्तत्रैकतरपरामर्शाप्रमाणता प्रामाणिकी, क्वाचित्कसत्त्वगृहासत्त्वयोस्तु बहिर्भावकल्पनयापि सति सम्भवे न तद्ग्राहिणोरन्यतरस्याप्रामाण्यावधारणं युज्यते, औत्सर्गिकप्रामाण्यस्य कथमप्युपपादनसम्भवे त्यक्तुमनौचित्यात्, तस्मात्सम्भवत्प्रमाणभावयोर्विरुद्धार्थविषयकत्वनिश्चयोऽर्थापत्तिप्रमाकरणमिति । एवमित्यस्यैव व्याख्यानं सत्प्रतिपक्षवदिति । अन्यत्रापि = क्वाचित्कसत्त्वगृहासत्त्वग्राहकयोरपि । विरोधार्थत्वेनैव = विरुद्धार्थविषयकत्वेनैव । आभासत्वाविशेषात् = एकतरस्याप्रामाण्यानुमितिसम्भवात् । अयम्भावः—उक्तग्राहकयो विरुद्धार्थविषयकत्वमस्ति न वा, अस्ति चेदेकतराप्रामाण्यानुमितिं कश्चिद्वारयिता, न चार्थापत्तिशतमपि विरुद्धार्थविषयकयोः प्रामाण्यमुपपादयितुं शक्नोति तथा च विरुद्धयोरप्यविरोध इति विरोधो दत्तजलाञ्जलिः स्यात्, नहि गोत्वाश्वत्वयोः कदाचिदविरोधः, क्वचित्वेन गेहेऽपि देवदत्तसत्त्वावगाहि ज्ञानं यदजनि, न तत्पुनर्गेहातिरिक्त एव देवदत्तसत्त्वं विपर्यीकर्तुं क्षमम्, विरम्यव्यापारासम्भवात्, ज्ञानान्तरं तु गेहातिरिक्त एव देवदत्तसत्त्वमवगाहते चेदवगाहतां नैतावता पूर्वज्ञानस्य भ्रमत्वं शक्यं वारयितुम्, तस्मात्सम्भवत्प्रमाणभावयोरित्यभिधानमनुपपन्नमेव । द्वितीये तु विरुद्धार्थविषयकत्वानुसन्धानस्य भ्रमत्वादेव तत्करणिकाऽर्थापत्ति र्न प्रमा-

रोधोऽपेक्षित इति चेन्न, मिथोविरोधे तर्कयोरप्याभासत्वात्।

विशेषप्रवृत्तप्रमाणार्थप्रतिक्षेपविषयत्वसंशयोऽविशेषप्रवृत्ततद्विपरीतार्थप्रमाणस्य स इति चेन्न, विशेषविषयप्रमाणबोधितवैपरीत्ये सति तद्विरुद्धार्थांशे संशयस्य दुर्बलस्यानवकाशत्वेनाविशेषप्रवृत्तप्रमाणविषयतां तदीयां गोचरयितुमप्यसामर्थ्यादेव।

---

स्यात्, भवन्मते दोषप्रयुक्तज्ञानत्वस्य भ्रमत्वसमनियतत्वात्, अन्यथा मृतस्यापि देवदत्तस्य क्वचित्सत्त्वगृहासत्त्वयोः प्रतिपादकवचसो विरुद्धविषयकत्वं निश्चित्य बहिःसत्त्वमर्थापयन् प्रमाता स्यात् कथमन्यथा मीमांसकानां वस्तुतो वह्निमत्यपि पर्वते भ्रमात्मकपरामर्शजन्यवह्न्यनुमितेर्भ्रमत्वाभ्युपगम उपपद्येत, विवेचितञ्चैतत्तत्त्वानुभवस्वखण्डनशेष इति। तर्कयोरिति। यदि देवदत्तः क्वचिन्नेदानीं स्यान्नेदानीं जीवित्वेन प्रमितः स्यादिति क्वचित्सत्त्वपर्यवसायी तर्कः, उपलब्धियोग्यो देवदत्तो यद्युपलब्धियोग्यत्वे सति गृहवृत्तिः स्यात् गृहे उपलभ्येतेति गृहासत्त्वपर्यवसायी. तयोरित्यर्थः। विरोधः = विरुद्धविषयकत्वम्, अपेक्षितः = अनुपपत्तितया विवक्षितः। प्रमाणयोर्विरुद्धविषयकत्वासम्भवेऽपि तर्कयोस्तत्सम्भव इत्यभिमानः। तर्कयोर्विरुद्धविषयकत्वं हि पर्यवसितार्थमादायैव, स च तर्कानुगृहीतप्रमाणगृहीत एवेति प्रमाणयोर्विरुद्धविषयकत्वानुपपत्तौ तर्कयोरपि तदनुपपत्तिरेवेत्याशयेनाह मिथोविरोधे इति। मिथोविरुद्धविषयकत्व इत्यर्थः। तर्कयोरिति। एकतरस्येति शेषः। आभासत्वात् = बाधितार्थकत्वात्। तथाच 'तथाही' त्यादिनोदितदोषोन्मेष इहापीति भावः।

सामान्यविषयकप्रमाणं विशेषविषयकप्रमाणविरुद्धार्थविषयकं नवेति संशयोऽर्थापत्तिकरणमित्युक्तदोषपरिजिहीर्षुराशङ्कते विशेषेति। अत्र प्रमाणविषययोर्विशिष्यैव निवेशो युक्तः, अन्यथा किञ्चिदपेक्ष्य सामान्यस्यापि विशेषत्वं विशेषस्यापि च सामान्यत्वमित्यसङ्गतिः परस्परं सामान्यविशेषभावस्तु विशिष्यैव पर्यवस्यति, परस्परत्वस्याननुगमात्। तथाच विशेषप्रवृत्तं = विशेषविषयकं प्रमाणं = प्रमा देवदत्तो गेहे नास्तीति, तदर्थप्रतिक्षेपविषयत्वसंशयः = तद्विषयविरुद्धगृहवृत्तित्वविषयकत्वकोटिकसंशयः, सः = विरोधशब्देन विवक्षितः, अर्थापत्तिकरणतया विवक्षित इति यावत्। तादृशसंशयः किंधर्मिक इत्याकाङ्क्षायामाह अविशेषेति। अविशेषप्रवृत्तं = सामान्यविषयकं, तद्धि क्वचित्त्वेन गेहमप्यवगाहमानतया वस्तुतस्तद्विपरीतार्थं = विशेषविषयकप्रमाणविषयविरुद्धविषयकं प्रमाणं = जीवी देवदत्तः क्वचिदस्तीतिप्रमा, तद्धर्मिक इत्यर्थः। विशेषविषयकप्रमाणार्थविपरीतार्थत्वेन तु न तस्योक्तकोटिकसंशयं प्रति धर्मितासम्भव इत्यतो वस्तुत इत्युक्तम्, धर्मितावच्छेदकांशे निश्चयत्वस्य नियतत्वात्। सामान्यविषयकप्रमाणस्य बहिःसत्त्वमात्रविषयकत्वकल्पनया तादृशसंशयसंशम इति भावः। यद्यपि तादृशकल्पनया तादृशसंशयस्य प्रतिबन्धसम्भवेऽपि तस्यां तस्य सामर्थ्योपदर्शनासम्भवेन करणत्वासम्भवः, न च—गेहे नास्तीत्यस्य प्रकारान्तरेण प्रामाण्योपपादनस्यासम्भवः, सम्भवस्तु गेहातिरिक्तविषयकत्वकल्पनेन जीवी क्वचिदस्तीत्यस्येति प्रतिसन्धानसहकारेणोक्तसंशयस्य तादृशकल्पनायां सामर्थ्यमिति—वाच्यम्, एवं सति प्रागेव गेहातिरिक्तवृत्तित्वप्रतीतावर्थापत्तेरनवकाशापातात्, तथाप्युपेत्यैव तादृशसंशयस्यैवासम्भवमाह विशेषेति। बोधितं यत् सामान्यविषयकप्रमाणार्थस्य गृहवृत्तित्वस्य वैपरीत्यम् = अभावः, तस्मिन् सति, विशिष्य गृहवृत्तित्वाभावस्यागृहीताप्रामाण्यकनिश्चये सतीति यावत्, अप्रामाण्यग्रहाभावस्तु तत्कारणाभावात्, देवदत्तः क्वचिदस्तीतिज्ञानं तु न तत्कारणम्, तथासत्यप्रामाण्यसन्देहाहितसन्देहस्य विषयेऽपि सम्भवेन तत्सन्देहासम्भवाभिधानस्यासङ्गतेः। तद्विरुद्धार्थांशे = गृहवृत्तित्वाभावविरुद्धगृहवृत्तित्वांशे। दुर्बलस्य = कारणात्मकबलरहितस्य, विशेषादर्शनरूपस्य कारणस्याभावादिति यावत्। देवदत्तो गेहे नास्तीतिविशेषदर्शनमेव हि प्रकृते।

अविशेषप्रवृत्तप्रमाणस्य तद्विपरीतार्थविशेषविषयप्रमाणदर्शनं तदितरविशेषविषयप्रमाफलकं तथेति चेन्न, अविशेषप्रवृत्तस्य प्रमाणस्य तद्विपरीतार्थविशेषविषयस्य च प्रमाणस्य विषययोस्तद्विपरीतत्वविशेषणप्रतीत्यङ्गीकारलब्धायां परस्परविरुद्धत्वप्रतीतौ धर्मिणोर्विरुद्धधर्माध्यासस्य भेदस्य विरोधविवेचनस्फुटतद्गर्भप्रवेशतया तत्सहज्ञेयस्य

---

अनवकाशत्वेन = असम्भवदुत्पत्तिकत्वेन । अन्यथाऽनुभवविरोधादिति भावः । एतच्च देवदत्तः क्वचिदस्तीति प्रमाणं देवदत्तो गेहे नास्तीतिप्रमाणविषयविरुद्धविषयकं नवेति संशयासम्भवं द्रढयितुम्, अस्य संशयस्य देवदत्तस्य गेहसत्त्वं प्रमितं नवेत्यत्र पर्यवसन्नत्वेन तत्सत्त्वे देवदत्तो गेहेऽस्ति नवेत्यपि संशयः स्यात्, न चायमनुभूयते इति न तादृशसंशयोऽपीति । तदीयां = तदीयत्वेन = तादृशविरुद्धार्थगृहवृत्तित्वनिष्ठत्वेन, तथा च गृहवृत्तित्वविषयकत्वकोटिकः संशयः पर्यवसन्नः, तादृशसंशयस्यैवासम्भवेऽर्थापत्तिप्रमोत्पादकत्वं तस्य दूरोत्सारितमिति सूचयितुमपिशब्दः । अविशेषेति । प्रमाणस्येति षष्ठ्यर्थो विशेष्यत्वं 'प्रमाफलक'मित्यत्र प्रमायामन्वेति । तदितरविशेषः = विशेषप्रमाणविषयगेहातिरिक्तदेशविशेषः, तद्विषयकत्वप्रकारकप्रमेत्यर्थः, तन्निरूपितवृत्तित्वविषयकत्वप्रकारकप्रमेति तु फलितार्थः । तद्विपरीतेति । तद्विपरीतार्थत्वेन=सामान्यविषयकप्रमाविषयविरुद्धविषयकत्वेन विशेषविषयकप्रमाया दर्शनमित्यर्थः, वस्तुसतो विरुद्धविषयकत्वस्याकिञ्चित्करत्वात् । तथा = अर्थापत्तिकरणतया विवक्षितः । एवञ्च 'देवदत्तः क्वचिदस्तीतिप्रमा गेहातिरिक्तदेशवृत्तित्वविषयिके'ति प्रमैवार्थापत्तिः, तत्करणं तु देवदत्तः क्वचिदस्तीतिप्रमितिविरुद्धविषयिका देवदत्तो गेहे नास्तीति प्रमितिरिति निश्चय इत्यर्थः । शब्दैक्यादरे तु सामान्यविशेषविषयकप्रमात्वेन निश्चितयोरेकस्यापरविषयविरुद्धविषयकत्वनिश्चयोऽर्थापत्तिकरणमित्यर्थः । सत्प्रतिपक्षस्थले तु न दोषः, सामान्यविशेषविषयकत्वेन परामर्शयोरप्रतीतत्वादितिभावः । विषययोरिति प्रतीतिद्वयेऽन्वेति । परस्परविरुद्धत्वप्रतीतौ सत्यां धर्मिणो भेदस्यान्यतएव प्राप्तेरित्यन्वयः । धर्मिणौ देवदत्ततदभावाश्रयौ । अन्यत इत्यर्थापत्तिव्यतिरिक्तं ब्रूते। विरुद्धधर्माध्यासस्येति भेदस्येत्यनेन समानाधिकरणम् । "अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चे"ति ताम्त्रिकप्रवादात्। भेदहेतुः = भेदसमनियतः, भेदज्ञापको वा, न हि भेदोजन्यः । तत्सहज्ञेयस्य = विरोधविषयकप्रतीतिविषयस्य । अत्र हेतुमाह विरोधविवेचनेत्यादि । विरोधनिर्वचने सति स्फुटो विरोधगर्भे प्रवेशो यस्य, तथात्वादित्यर्थः । ननु यदि भिन्नाधिकरणकत्वमत्र विरोधोऽभिमतस्तदा देवदत्ताभावाधिकरणगेहातिरिक्तरूपबहिःपदार्थाधिकरणकदेवदत्तसत्ताविषयकत्वनिश्चयस्यार्थापत्तिकरणतापर्यवसानेन तेनैव बहिर्देवदत्तसत्त्वविषयीकरणेऽर्थापत्तेर्वैयर्थ्यं स्यादिति मूलतात्पर्यं वक्तव्यम्, किन्त्वेवं भेदस्य विरुद्धधर्माध्यासरूपताभिधानमकिञ्चित्करम्, उक्तरीतेर्भेदान्तरसाधारण्यात् । यदि तु भिन्नाधिकरणकत्वं न विरोधः, अन्यथा घटपटयोः कदाचित्सामानाधिकरण्यवतोरपि विरोधापत्तेः, अपि तु सहानवस्थानं = परस्पराभावव्याप्यत्वं तद्वद्वृत्तित्वं तद्विरुद्धत्वमिति यावत्, यथा गोत्वाश्वत्वादौ, तदा देवदत्ततदभावयोस्तद्भावेऽपि तदधिकरणयोर्भेदान्तरस्येव विरुद्धधर्माध्यासरूपस्य भेदस्यापि भानं कथं स्यादिति चेन्न, उक्तविरोधभाने विरुद्धधर्माध्यासभानस्यातिस्फुटत्वात्, विरुद्धधर्माध्यासो नाम तद्वृत्तिधर्मवत्त्वं वैधर्म्यशब्देन प्रसिद्धम्, तादृशधर्मौ तु देवदत्ततदभावौ स्वाधिकरणयोः, विरोधस्य सप्रतियोगिकत्वेन च तयोस्तत्र तत्तया प्रवेशोऽस्त्येव, एवञ्च देवदत्ततदभावभानमेव तदधिकरणयोर्भेदभानमिति सुष्ठूक्तं विरुद्धधर्माध्यासस्य भेदस्येति । अतिरिक्तभेदस्य तत्र भानासम्भवात् । नन्वेवमर्थापत्तिकरणी-

तन्नान्तरीयकस्य वाऽन्यत्रैवान्यत एव प्राप्तेः।

किञ्च, अविशेषप्रवृत्तस्यैव तस्य किं विशेषविषयत्वम्? अथ सामान्यतः प्रवृत्तस्य नान्तरीयकतया प्रागेव विशेषविषयस्य विशेषविषयत्वेनाज्ञातस्य विशेषविषयत्वम्?

---

भूतोक्तनिश्चये देवदत्ताभावाधिकरणगेहावृत्तितया देवदत्तस्य देवदत्तवदवृत्तितया देवदत्ताभावस्य वा भानेऽपि देवदत्तस्य च बहिःपदार्थीयभेदत्वेऽपि गेहातिरिक्तवृत्तिर्देवदत्त इत्यभीष्टभानानिर्वाह एवेति तन्निर्वाहिकाऽर्थापत्ति नं विफलेत्यस्वरसादाह तन्नान्तरीयकस्येति। भेदस्येत्यनुपज्यते। वाकारः समुच्चये। नान्तरीयकत्वं व्यापकत्वं तच्चातिरिक्ते धर्मिभेदे धर्मयोर्विरोधनिरूपितमिव वैधर्म्यनिरूपितमपीति तत्पदेन विरोधस्येव विरुद्धधर्माध्यासस्यापि परामर्शे न काचित्क्षतिः। अन्यत्र = गवाश्वादौ। एवञ्चार्थापत्तिकरणरूपनिश्चयेनाभीष्टभानानिर्वहणेऽपि देवदत्तो गेहे नास्तीति ग्रहकालीनेन 'देवदत्तः क्वचिदस्ती'ति प्रतीतिविषयीभूतमधिकरणं देवदत्ताभाववद्भिन्नं देवदत्तवत्त्वादित्यनेन देवदत्तः स्वाभावाधिकरणभिन्नाधिकरणकः स्वाभाववदवृत्तित्वादित्यनेन वाऽनुमानेन तन्निर्वाहः सम्भवत्येवेतिकृतमतिरिक्तार्थापत्तिकल्पनादुर्व्यसनेन।

एतेन यदाहुः प्राभाकराः—संशयकरणिकैवार्थापत्तिरिति न निश्चयकरणकानुमानान्तर्भावशङ्कालवोऽपि, तथाहि—यदा ज्योतिश्शास्त्रोक्तलिङ्गेन देवदत्तः शतवर्षजीवित्वेन निश्चितः, प्रायशश्च तस्य गृह एवावलोकनेन जीवन् सन् स गृह एवेत्यवधारितम्, पश्चात्तस्य गृहेऽभावग्रहे जीवनसंशयस्यावश्यम्भावित्वात्तस्यैव बहिःसत्त्वकल्पनाकारणत्वम्, मरणकल्पनयाऽपि जीवनसंशयोच्छेदसम्भवेऽपि लाघवाद्बहिःसत्त्वमेव कल्प्यते, तथा सति जीवी गृहे एवेत्यस्यैव निश्चयस्य बाधात्, मरणकल्पने तु शतवर्षजीवित्वनिश्चयस्यापि बाधप्रसङ्गात्, अभावरूपमरणापेक्षया जीवनस्य भावात्मकस्य शरीरेऽपि लघुत्वाच्च। नच— देवदत्तः शतवर्षजीवी, देवदत्तो गृहे एवेति निश्चययोरेको बाध्यो विरुद्धार्थग्राहकत्वादित्यनुमानेन सामान्यत एकाप्रामाण्यसिद्धौ पुनरनुसन्धीयमानेन तेनैवोक्तलाघवानुसन्धानसहकारेण देवदत्तो गृह एवेति नियमग्राहकमप्रमाणमितिबुद्धिजननसम्भवे जीवित्वनिश्चये सति देवदत्तो बहिरस्ति जीवित्वे सति गृहावृत्तित्वादिति लिङ्गेन बहिःसत्त्वसिद्धावसिद्धाऽर्थापत्तिरिति—देशनीयम्, उक्तलिङ्गस्य पुनरनुसन्धानमन्तरेणापि निर्वर्णितसंशयानन्तरमुक्तलाघवज्ञानेन बहिःसत्त्वनिश्चयस्यानुभविकत्वादिति। तदपि निरस्तम्। देवदत्तो जीवनमरणान्यतरप्रतियोगी प्राणित्वादित्यनुमानस्यैवोक्तलाघवसहकारेण जीवनसाधकत्वात्, तर्कस्यातिरिक्तप्रमाणसहकारित्वकल्पनामपेक्ष्य क्लृप्तानुमानसहकारित्वस्यैव कल्पयितुमुचितत्वात्, प्राणित्वानुसन्धानं च भवतोऽप्यावश्यकम्, केन्द्रस्थबृहस्पतिकप्राणित्वेनैव शतवर्षजीवित्वस्य निश्चेयत्वात्, जीवनग्रहस्यैव प्राणित्वविषयकत्वाच्च, एवं च जीवननिश्चये जीवित्वविशिष्टगृहावृत्तित्वेन बहिर्वृत्तित्वानुमानसम्भव इत्यन्यत्र विस्तरः। अर्थापयामीत्यनुव्यवसायमहिम्ना नार्थापत्त्यतिरेको यथा, तथोक्तम्।

अविशेषप्रवृत्तस्यैवेति। विशेषाविषयकत्वे सति सामान्यविषयकत्वं नार्थः, असम्भवात्, नापि गेहाविषयकत्वे सति देशसामान्यविषयकत्वम्, विरुद्धविषयकत्वेन निश्चयद्वयप्रतीत्यसम्भवात्, अग्रिमदूषणपरग्रन्थासङ्गतेश्च, क्वचित्त्वेन गेहाविषयकज्ञाने बहिर्देशविषयकत्वज्ञानस्य भ्रमत्वात्। अपि तु बहिर्देशाविषयकत्वे सति देशसामान्यविषयकत्वम्, बहिर्देशातिरिक्तदेशमन्तर्भाव्यापि सामान्यविषयकत्वोपपत्तेरिति। विशेषविषयत्वमिति। 'इदानीं प्रतीयते' इति चतुर्थकल्पीयमिहापि सम्बध्यते। एवं द्वितीयतृतीययोरपि, अर्थापत्तिविषय इति तदर्थः। सामान्यतः प्रवृत्तस्य = क्वचित्त्वेन देशसामान्यविषयकस्य। नान्तरीयकतयेति। विशेषाग्रहे सामान्याग्रहात्, तथा च

अथवा सामान्यस्य तद्विषयस्य विशेषः ? उत तद्विषयीकृतविशेषगतं किमपि धर्मान्तरमिदानीं प्रतीयते ? । नाद्यः, अर्थापत्ते र्भ्रमकरणत्वापत्तेः । न द्वितीयः, तदनुव्यवसायोत्पत्तेस्तद्विषयाप्रतीत्यसम्भवात् । न तृतीयः, सामान्यस्यानन्तर्भावितान्नयस्य प्रत्येतुमशक्यत्वात् प्रागेव तत्सिद्धेः । नापि चतुर्थः, तद्धि प्रतीयमानविरोधिव्यतिरिक्तत्वमन्यद्वा स्यात् । नान्त्यः; तत्प्रतीतौ सामर्थ्यानुपदर्शनेनानियमप्रसङ्गात्, न प्रथमः, अनुगताननुगतजातिव्यक्तिचाक्षुषाचाक्षुषादिव्यक्तिगन्धादितादात्म्यवादिनये तदुभयप्रमातादात्म्यविषयताव्युदासं विना विरोधासिद्धया तद्गमनिकाबलस्यैवासिद्धेः,

---

विशेषविषयकत्वस्य सामान्यविषयकत्वव्यापकतयेत्यर्थः । तद्विषयस्य = क्वचिदस्ति देवदत्त इति ग्रहविषयस्य । किमपीति । स्वयं वक्ष्यति । भ्रमेति । बहिर्देशाविषयकं ज्ञानं बहिर्देशवृत्तित्वविषयकमिति हीदानीं फलीभूतार्थापत्तिरितिभावः । तदनुव्यवसायेति । तत्पदद्वयेन सामान्यप्रतीतिपरामर्शः । अनुव्यवसायपदं ज्ञानमात्रपरम्, भट्टमते तस्यानुमितिरूपत्वात्, प्रभाकरमते च व्यवसायात्मकत्वात् । सामान्यविशेषप्रतीत्योर्विरुद्धविषयकत्वप्रतीतये च तादृशप्रतीतिविषयकप्रतीतिरवश्यमर्थनीयेति भावः । तद्विषयाप्रतीत्यसम्भवात् = तदीयविशेषविषयत्वविषयकाप्रतीत्यसम्भवात् । नन्वेवं क्वचित्त्वेन बहिर्देशविषयत्वं प्रतीयेत, न तु बहिर्देशत्वेनेति कथं नार्थापत्तिरर्थवतीति चेत्सत्यम्, तथापि येन जीवित्वेन लिङ्गेन क्वचिदस्तित्वनिश्चयस्तेनैव गृहावृत्तित्वविशिष्टेन बहिर्देशवृत्तित्वप्रतीतौ सिद्धं समीहितमिति नार्थोऽर्थापत्तेः । अथ क्वचिदस्तित्वनिश्चयस्य बहिर्देशवृत्तित्वविषयकत्वधीरर्थापत्तिरत्राभिमतेति चेत्तस्या अपि 'तादृशनिश्चयो बहिर्देशवृत्तित्वविषयको गेहेऽवर्तमानस्य वर्तमानत्वविषयकप्रमात्वा'दित्यनुमानसाध्यत्वात् । प्रागेवेति । अर्थापत्त्यभिमतबुद्धेः प्रागेवेत्यर्थः । तत्सिद्धेः = विशेषसिद्धेः । अत्रापि क्वचित्त्वेनैवं प्रतीतिः स्यान्नतु बहिर्देशत्वेनेत्याशङ्कायां दत्तमुत्तरम् । तद्धि = सामान्यनिश्चयविषयीभूतविशेषगतं धर्मान्तरं हि । विरोधिपदं विरोध्यधिकरणपरम्, प्रतीयमानो हि विरोधी गेहे देवदत्ताभावः तदधिकरणगेहातिरिक्तत्वं बहिर्देशरूपे क्वचित्त्वेन सामान्यनिश्चयविषयीभूतविशेषे इति । अन्यत् = अधिकरणत्वप्रमेयत्वादि । तत्प्रतीतौ = तत्प्रतीत्यौपयिकस्य सामान्यविशेषनिश्चययोर्विरुद्धविषयकत्वग्रहनिष्ठसामर्थ्यस्योपदर्शनासम्भवेऽपि तत्प्रतीत्यभ्युपगमे विरोधसमाधायककल्पनानियमो न स्यात्, यस्य कस्यापि कल्पनाप्रसङ्गात् । अनुगताननुगतेति जातिव्यक्त्योः, चाक्षुषाचाक्षुषादीति च व्यक्तिगन्धाद्योः क्रमेणान्वयि । आदिमेनाऽऽदिपदेन स्पार्शनादिर्व्यक्तिः, द्वितीयेन चास्पार्शनादिर्गृह्यते रूपादिः । घटादितदभावयोरपि चाक्षुषाचाक्षुषत्वादिना सङ्ग्रहः, अनुपलब्धिप्रमाणवादिमतेऽभावस्याचाक्षुषत्वात् । तादात्म्यं भेदाभेदः । तदुभयेति । भावोभावोभयप्रमाया अभिन्नविषयकत्वनिरासं विनेत्यर्थः । अभिन्नविषयकत्वमविरुद्धविषयकत्वे पर्यवस्यति । विरोधासिद्धयेति । भावाभावयोरित्यादिः । तद्गमनिकाबलस्य = प्रतीयमानविरोध्यधिकरणव्यतिरिक्तत्वप्रतीत्यौपयिकसामर्थ्यस्यैवार्थापत्तिप्रमाकरणत्वेनाभिमतेऽसिद्धेः, तादृशव्यतिरिक्तत्वस्य विरोधघटितत्वात्, इदमुपलक्षणम् प्रतीत्योर्विरुद्धविषयकत्वनिश्चयस्यैवार्थापत्तिकरणतया तस्यापि भावाभावविरोधाभावे प्रमात्मकस्यासम्भवः । यद्यपि भावाभावयोरविरोधोऽभावस्यानुयोगिप्रतियोगिभ्यामभेदनिरूपणपरानुपलब्धिप्रकरणस्थभट्टवार्तिकादितो लभ्यत एव, किं बहुना "इहानैकान्तिकं वस्त्वित्येवं ज्ञानं सुनिश्चित"मिति ग्रन्थेन वस्तुमात्रस्य भिन्नाभिन्नत्वमुक्तम्, तच्च रूपभेदेनेत्यन्यत्, स एव च प्रकृतेऽभिधातव्यः, तथाप्यनुगतत्वाननुगतत्वादिना विरुद्धानां जातिव्यक्त्यादीनामविरोधाभ्युपगमाभिधानं भावाभावयोरविरोधाभ्युपगमदृढताप्रतिपत्तये ।

तदुभयप्रतीतौ च तदवधारणे प्रागेव तत्प्रतीत्याऽर्थापत्त्यनुवादतापत्तेः । इत्यर्थापत्तिखण्डनप्रकरणम् ।

यदि तु भट्टमतं नाङ्गीक्रियते, अङ्गीकारेऽपि या भावत्वाभावत्वादिना विरोधमनुमत्य तस्यैव प्रकृते विवक्षाऽऽद्रियते तदा पूर्वोक्तं स्मारयन्नाह तदुभयप्रतीतौ चेति । भावाभावोभयस्य विरुद्धत्वेनाभ्युपगमे चेत्यर्थः । तदवधारणे = विरोधावधारणे सति । प्रागेवेति मध्यमणिन्यायेनान्वयि । सामान्यविशेषप्रतीत्योर्विरुद्धविषयकत्वनिश्चयस्यार्थापत्तिकरणतयाऽपेक्ष्यत्वादिति भावः । तत्प्रतीत्या = भावस्य देवदत्तादेर्बहिर्देशनिरूपितवृत्तितया प्रतीत्या । इदं 'तत्सहज्ञेयस्ये'ति पूर्वोक्तकल्पानुसारेणोक्तम्, वस्तुतस्त्वनुमानेनैव चरितार्थाऽर्थापत्तिरिति तत्रैवोक्तमिति शम् ।

इति खण्डनशारदायामर्थापत्तिखण्डनप्रकरणम् ।



## अनुपलब्धिखण्डनप्रकरणम्

योग्यानुपलम्भोऽभावप्रमाकरणमित्यप्ययुक्तम्, प्रमाणाभावस्य तथात्वे विभ्रमानुदयप्रसङ्गात्, उपलम्भाभावमात्रस्य तथात्वे शङ्खधवलिमप्रतिसन्धानवतः पीत-

---

अथेन्द्रियं नाभावस्य ग्राहकं तेनासन्निकृष्टत्वात्, न च विशेषणता सन्निकर्षः, मानाभावात्, नचाभावे इन्द्रियग्राह्यत्वेन तत्सिद्धिः, अन्योन्याश्रयात्, विशेषणतासन्निकर्षसिद्धिं विनाऽभावे इन्द्रियग्राह्यत्वासिद्धेः। किञ्च विशेषणताऽतिरिक्ता वाऽनतिरिक्ता वा. आद्ये सम्बन्धानवस्था, द्वितीये च स्वं न स्वीयमित्यनुभवबाधेन सम्बन्ध्यात्मनः सम्बन्धत्वमप्रामाणिकम्, रूपभेदेन समाधाने च रूपविशेषविशिष्टस्य वाचोयुक्त्यन्तरेणातिरेकितैवोपगतेत्युक्तदोषः। वस्तुतस्तु घटाभाववद्भूतलमितिमितेः सम्बन्धस्तावदभावस्याधिकरणेन कश्चिदुपेय एव, सा च मा भूद्विशेषणता भट्टमते, भेदाभेदरूपं तादात्म्यं तु स्वीकृतमेवेति व्यक्तमनुपलब्धिप्रकरणस्थवार्तिके, एवञ्चास्तु संयुक्ततादात्म्यस्यैवाभावग्राहकत्वमिति न सन्निकर्षासम्भवापराधेनेन्द्रिये क्लृप्तसमानभावेऽभावप्रमाणता न मन्तुमुचिता, किन्तु प्राङ्नास्तितामताविन्द्रियस्य करणताया असम्भवदुक्तिकतया लिङ्गादेश्चानिरूपणेन मानान्तरस्येहाप्रसरतयाऽनुपलब्धेरेव करणत्वम्, एवञ्च क्लृप्ततयेन्द्रियसन्निकृष्टाधिकरणस्थलेऽपि। व्यापारवत्त्वञ्च करणतायामप्रयोजकमेव, एवं भावत्वमपि। घटाभावस्यानुपलब्ध्या समर्पणेऽपि घटाभाववद्भूतलमितिमतेरैन्द्रियकत्वव्यवहारस्तु विशेष्यपक्षपातात्, घटाभावस्य विशेष्यत्वे त्वनुपलब्धिगम्यत्वव्यवहार एवेति प्रत्यक्षविजातीयैव स्मृतिवदभावधीरिति भट्टमतं निराकर्तुमाह योग्यानुपलम्भइति। वस्तुतस्तु प्राङ्नास्तितामतिरानुमानिक्येवेति वक्ष्यते इति क्लृप्ततामादाय नानुपलब्धेरभावप्रमाणत्वसम्भवइति। केचित्तु —योग्यानुपलम्भस्य सर्वत्र लिङ्गविधयैव गमकत्वसम्भवेन घटाभाववद्भूतलमित्यादिकेन्द्रियसन्निकृष्टाधिकरणस्थलीयाप्यभावधीरानुमानिक्येव, न च—लिङ्गस्याज्ञातस्याकरणत्वेन तज्ज्ञानापेक्षायामनवस्था, अनुपलम्भस्याभावरूपत्वादिति—वाच्यम्, स्वतःसिद्धसाक्षिस्वीकारेणैवानवस्थापरिहारादिति वदन्ति। योग्यानुपलम्भइत्यभावप्रमाकरणलक्षणलक्ष्यम्। योग्यस्यानुपलम्भ इति नार्थः, स्तम्भे पिशाचभेदस्य षष्ठप्रमाणागम्यत्वापत्तेः, नापि योग्येऽनुपलम्भः, नयनायोग्ये महति वायौ रूपाभावस्य तथात्वापत्तेः, अपि तु योग्यश्चासावनुपलम्भः, अन्धकारादिदशायामभावग्रहवारणाय योग्यत्वं, तच्च वक्ष्यति। अनुपलम्भस्तु यत्राधिकरणे यत्सम्बन्धावच्छिन्नप्रतियोगिताकयदभावो ग्राह्यस्तत्र तत्सम्बन्धावच्छिन्नतत्प्रकारकोपलम्भस्य विषयतासम्बन्धावच्छिन्नप्रतियोगिताको भेदभिन्नाभावो बोध्यः, तेन प्रतियोगितावच्छेदकप्रकारकप्रतियोगिज्ञानस्य प्राक्सत्त्वेऽपि, एकसम्बन्धेन घटोपलम्भकालेऽपरसम्बन्धेन घटाभावबुद्ध्युदयेऽपि च नोपलम्भाभावस्य कारणत्वासम्भवः। आरोपस्याभावबुद्धिहेतुत्वे तु न मानमिति न तमादायाप्यसम्भवः। ध्वंसादेः प्रतियोगितायाः सम्बन्धानवच्छिन्नतया तद्ग्रहे हेतोरनुपलम्भस्य का गतिरिति तु प्रतिविधास्यते। अभावप्रमाकरणमिति। प्रमायां ज्ञानाकरणकत्वं वक्तव्यम्, तेनाभावविषयकानुमित्यादिकरणे नातिप्रसङ्गः। उपलम्भशब्देन प्रमिति र्वा विवक्षिता ज्ञानत्वावच्छिन्नं वेति विकल्प्य निराकरोति प्रमाणाभावस्येति। प्रमाणं = प्रमा, तथात्वे = उपलम्भाभावत्वे। विभ्रमेति। शुक्तौ रजतत्वज्ञानमवधूय रजतत्वाभावप्रमैव स्यात्, नहि तत्पूर्वं रजतत्वप्रमापेक्षिता, न वा शुक्तौ, न वा तदभावो न योग्यः, रजतत्वतद्व्याप्येतररजतत्वोपलम्भकानां सत्त्वात्, अन्यथा रजतत्वभ्रमोऽपि न स्यात्। प्रतियोगिसत्त्वप्रसञ्जनप्रयुक्तप्रसञ्जनयोग्यप्रतियोगिकत्वरूपाऽपि योग्यता तत्राक्षतैव, प्रसञ्जनस्यानपेक्षणीयत्वात्, तद्योग्यत्वस्य

भ्रमानुदयप्रसङ्गात् । कालभेदात्तत्राविरोध इति चेन्न, तथापि संसृष्टयोरन्योन्याभावा-

---

च प्रतियोगितद्व्याप्येतरसकलतदुपलम्भकसमवधानरूपतयोक्तोपलम्भकसत्त्वेनानिवार्यत्वात् । अथ रजतत्वभ्रान्तेरप्यस्ति सामग्रीति साऽपि कुतो न भवेदिति चेत्प्रमात्वस्यौत्सर्गिकत्वेन रजतत्वाभावप्रमाया उत्पत्तुमौचित्यात् । दोषघटिता सामग्री प्रबलेत्यवश्योपेयमिति चेत्, तर्हि दोषस्य प्रमानुत्पत्तिप्रयोजकत्वमित्यायातम्, एवञ्चानुपलम्भस्याभावधीहेतुतायां न मानमिति गतं षष्ठप्रमाणेन; तथाहि—घटाधिकरणे एव भूतले घटानुपलम्भदशायां प्रतियोगिज्ञानादिसत्त्वेऽपि घटाभावधीः कदाचिन्नोदेतीति तत्र को हेतुः ? अभावधीविषयो नास्तीति चेदेवं तर्हि विषयस्याभावधीहेतुत्वं प्राप्तं न तूपलम्भाभावस्य, व्यभिचारात्, न च—घटाभाववति घटभ्रमवतो घटाभावमतेरनुदयादनुपलम्भस्यापि हेतुतेति—वाच्यम्, तत्र भ्रमजनकदोषस्यैवाभावप्रमित्यनुत्पत्तिप्रयोजकताया वक्तुं शक्यत्वादिति नानुपलम्भो हेतुः, यत्तु-विनश्यदवस्थदोषाधत्र भ्रमस्तत्र भ्रमद्वितीयक्षणेऽभावबुद्ध्यापत्तिः, आद्यक्षणे दोषस्यासत्त्वेन तस्य प्रतिबन्धकताया असम्भवदुक्तिकत्वादित्यनुपलम्भो हेतुर्वक्तव्य एवेति; तदसत्, प्राभाकरवत्कारणमात्रस्य कार्यसहवर्तित्वनियमोपगमात्, समवायिकारणे तथा दृष्टत्वात्, अतएवाभावमुखपातिततया क्षणिकस्य न कारणत्वमित्याहुः । नचाप्रयोजकत्वम्, अनौपाधिकत्वस्यैव प्रयोजकत्वात्, समवायिकारणत्वादेः पक्षमात्रव्यावर्तकत्वात् । नचैवं ध्वंसस्य प्रतियोगिजन्यत्वेन तत्कालेऽपि प्रतियोगी स्यात्; सत्कार्यवादाभ्युपगमेन ध्वंसस्य प्रतियोगिसूक्ष्मावस्थारूपतयेष्टापादनात् । दोषत्वदुर्विवेकतायाः प्रमात्वखण्डने निवेदितत्वाच्चेति भावः । उपलम्भाभावमात्रस्य = ज्ञानसामान्याभावस्य । अधिकरणविशेषसम्बन्धविशेषादेस्तूक्तरीत्या निवेशोविवक्षणीय एव । पूर्वकल्पोक्तदोषस्यात्र कल्पेऽप्रोक्तदोषस्य च पूर्वकल्पे समानत्वेऽपि विभज्य तदभिधानमुक्तिवैचित्र्यमात्रमिति द्रष्टव्यम् । शङ्खधवलिमप्रतिसन्धानवत इति । तादृशप्रतिसन्धानं पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञाने उपयुज्यते । अतएव शङ्खे पीतत्वज्ञानसामान्यविरहिण इत्यर्थः । योग्यताप्युरीत्यास्त्येवेति पीतत्वभ्रममभिभूय पीतत्वाभावप्रमैवोदियादिति भावः । अधिकं प्राग्वत् । इदन्तु बोध्यम्, शङ्खधवलिमप्रतिसन्धानवत इत्यभिधानमकिञ्चित्करम्, शङ्खे पीतत्वभ्रमात्प्राक् पीतत्वज्ञानसामान्याभावस्य विषयतासम्बन्धावच्छिन्नप्रतियोगिताकस्य शङ्खे आवश्यकत्वात् । धारावाहिभ्रमस्थले नैवमिति तु न वाच्यम्, प्राथमिकभ्रमस्यैवोक्तरीत्याऽनुत्पत्तिप्रदर्शने धारावहनस्यैवानुपपत्तेः । न वा पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञानस्य शङ्खे पीतत्वज्ञानप्रतिबन्धकताऽपि परस्य सम्मता, लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानस्यैव प्रतिबध्यतोपगमात् । शङ्खे पीतत्वस्मृतिः प्रतिबध्यतावच्छेदकाक्रान्तेतिमत्वा तदभावोपदर्शनाय तथाभिधानमिति यदि कश्चिद्ब्रूयात्, तदपि न, तस्या भ्रममूलकत्वेन तदसम्भवेऽसम्भवादिति ।

प्रतिबध्यप्रतिबन्धकभावं स्वीकृत्य शङ्कते कालभेदादिति । पीतत्वाभावव्याप्यशङ्खत्ववत्ताज्ञानस्य शङ्खे पीतत्वज्ञानस्य च कालभेदकल्पनात् तत्र = उक्तशङ्खत्ववत्ताज्ञाने, अविरोधः = अप्रतिबन्धकता । मा जनिष्ट तादृशशङ्खत्ववत्ताज्ञानसमये तत्प्रतिबध्यं शङ्खे पीतिमज्ञानम्, तदनन्तरन्तूत्पत्तुं प्रभवत्येवेति तयोर्मध्ये शङ्खे पीतत्वप्रकारकस्य ज्ञानान्तरस्य कल्पने पीतत्वोपलम्भसामान्याभावस्यासत्त्वेन न पीतत्वाभावप्रमोदयइत्यभिमानः । अत्रेदं त्वयाऽन्तराले ज्ञानं कल्पितं तस्यापि भ्रमत्वात्तदभिभवेन पीतत्वाभावप्रमोदयापादने कः प्रतीकारः ? नहि ततः पूर्वमपि तादृशं ज्ञानान्तरं शक्यं कल्पयितुमनवस्थानादिति दूषणं स्फुटत्वादुपेक्ष्य दूषणान्तरमाह तथापीति । संसृष्टयोः = विशिष्टधीविषययोः, तथा च घटप्रकारकोपलम्भस्य भूतले विषयतासम्बन्धेन सत्त्वाद्भूतलं घटो नेति भेदग्रहो न स्यादित्यर्थः । ननु

ग्रहणप्रसङ्गात्, तादात्म्यस्य स्वरूपमात्रानतिरेकात्, अभावस्फुरणे च तत्प्रतिभानस्य ध्रौव्यात्।

किञ्च योग्यता हि तत्तद्विनाभूतान्यप्रतियोगिप्रमापकसाकल्यमिष्यते तथा सति

---

भेदो हि तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोऽभावः, स च प्रकृते ग्राह्यः, तत्र च तादात्म्यसम्बन्धावच्छिन्नघटप्रकारताकोपलम्भस्य विरहो भूतलेऽपेक्षणीयोऽस्त्येवेत्यत आह तादात्म्यस्येति। अभावस्फुरणे = प्रतियोगिविशेषितरूपेणाभावभानात्प्राक्। तत्प्रतिभानस्य = प्रतियोगिस्वरूपतादात्म्यभानस्य। ध्रौव्यादिति। तथा च घटतादात्म्यस्य घटरूपत्वे भूतले घटभाने तत्र भातं तेन सम्बन्धेन वा घटो न भात इतिपरिभाषामात्रमिति भावः। नन्वास्तां तादात्म्यस्यातिरेकः, तस्य घटादिस्वरूपत्वेऽपि सम्बन्धत्वेनान्यथा वाऽतिरेकिताया अवश्योपेयत्वात्, अन्यथा घटस्य निष्प्रतियोगिकतया तद्रूपस्य तस्य सप्रतियोगिकत्वं व्याहतं स्यात्, तथा च तादात्म्येन घटप्रकारकोपलम्भविरहस्य सत्तया तद्भेदग्रहोपपत्तिरिति चेन्न, तादात्म्येन नायं घट इत्यप्रयोगेन तादात्म्यस्य भेदीयप्रतियोगितावच्छेदकताया अमानकत्वेन तदवच्छिन्नप्रतियोगिताकाभावस्य प्रकृतेऽग्राह्यतया तत्सम्बन्धावच्छिन्नघटप्रकारताकोपलम्भविरहोपपादनस्याकिञ्चित्करत्वात्।

अथैवं भेदत्वमखण्डोपाधिरित्यभ्युपेयम्, किन्तु तद्विशिष्टग्रहं प्रत्यपि तादात्म्येन प्रतियोगिप्रकारकोपलम्भस्य प्रतिबन्धकतया तादृशोपलम्भविरह एवापेक्षणीयः, स च प्रकृतेऽस्त्येवेति नोक्तदोषः, एवं ध्वंसप्रागभावप्रतियोगितयोरपि सम्बन्धानवच्छिन्नत्वेऽपि समवायेन सम्बन्धमात्रेण वा प्रतियोग्युपलम्भस्य ध्वंसप्रागभावयोर्ग्रहे प्रतिबन्धकतया तादृशोपलम्भविरह एव तद्ग्रहे हेतुरिति तद्ग्रहणमपि नापादनीयमित्यस्वरसादाह किञ्चेति। तदा प्रतियोगिपरामर्शः, प्रतियोगिव्याप्यस्तत्सन्निकर्षादिः, तदन्येषां प्रतियोगिप्रमाकारणानां साकल्यम्, तद्विशिष्टत्वमनुपलम्भे योग्यता, प्रमापदेन लौकिकप्रत्यक्षप्रमा विवक्षिता, तेनातीन्द्रियप्रतियोगिकाभावस्य न षष्ठप्रमाणेन ग्रहणापत्तिः, दोषस्य सकलान्तःपातवारणाय प्रमात्वविवक्षा, प्रतियोगितत्सन्निकर्षयोरपि प्रतियोगिविषयकतादृशप्रमाकारणतया तादृशप्रमाकारणसाकल्यस्य सर्वत्राभावग्रहात्प्रागसम्भवितया तदन्यत्वं निवेशितम्। न च प्रतियोगिव्याप्यत्वस्य प्रतियोगिन्यपि सत्त्वात्प्रतियोग्यन्यत्वस्य पार्थक्येन निवेशो विफल इति वाच्यम्, वह्निर्वह्निं व्याप्नोतीत्यप्रतीतेः स्वव्याप्यत्वस्य स्वस्मिन् प्राचीनैरनुमवैकपक्षशातिभिरनभ्युपगमात् व्याप्यत्वस्य भेदघटितस्यैव विवक्षितत्वात्। यद्यपि प्रतियोगिनोऽभावे तद्व्याप्यस्याप्यभाव आवश्यकः, तथापि प्रतियोगिनोऽभावकाले तद्व्यतिरिक्तसकलप्रतियोग्युपलब्धिहेतुसमवधानमसम्भवि, प्रतियोगिव्याप्यसन्निकर्षादेरपि सकलान्तर्गतत्वात्। साकल्यं तु घटाद्यभावग्रहस्यान्धकारादौ वारणायोक्तम्। यद्यप्यतीतानागतालोकादिव्यक्तीनामपि कदाचित् प्रतियोगिप्रमापकतया सकलतादृशप्रतियोगिप्रमापकसमवधानासम्भवः। न च यत्किञ्चित्तादृशप्रमाजनकत्वविवक्षया निस्तारः; अभावग्रहात्प्राक् प्रतियोगिप्रमितेरनुत्पत्त्या जनकत्वस्योपधानरूपस्य विवक्षितुमशक्यतया जनकतावच्छेदकधर्मावच्छिन्नत्वस्यैव विवक्षणीयतया यत्किञ्चित्त्वनिवेशस्याकिञ्चित्करत्वात्, तथापि साकल्यं जनकतावच्छेदके विवक्षणीयं तदाश्रयसमवधानं च योग्यता। एवञ्च प्रमात्वन्यूनवृत्तिप्रतियोगिविषयकसाक्षात्कारित्वावच्छिन्नकार्यतानिरूपितकारणतावच्छेदकं यद्यत्तत्तदाश्रयस्य प्रतियोगितद्व्याप्यान्यस्य समवधानं प्रतियोगितद्व्याप्यासमवधानकालीनं योग्यतेति पर्यवसन्नम्, एवं च प्रमात्वस्यार्थसमाजग्रस्ततया कार्यतानवच्छेदकत्वेऽपि न क्षतिः, साक्षात्कारित्वं तु लौकिकप्रत्यक्ष एव। प्रतियोगिसत्त्वप्रसञ्जनप्रयुक्तप्रसञ्जनयोग्यप्रतियोगिकत्वरूपा योग्यता तु नात्राशङ्किता, तत्र प्रसञ्जनयोग्यतावच्छेदकतयोक्तकारणसाकल्यघटितयोग्यताया एवानुसरणीयत्वादिति ध्येयम्। अत्र प्रतियोगितद्व्याप्यासमवधानकालीनत्वाविवक्षायां दोषमाह तथासतीति। यत्र = भूतलादौ।

च यत्र भावोपलम्भस्तत्राप्यभावप्रमा स्यात् । नहि तत्र हेतुव्यतिरेकेणैव वा सत्येव वा भावप्रमोत्पद्यते । तत्तदविनाभूतविरहसहितः स तथेति चेन्न, तदविनाभूतव्यतिरेकस्य तद्व्यतिरेकेणैवान्यथासिद्धसन्निधेरपि हेतुत्वाङ्गीकारे प्रमाणाभावात् । अत एवालोकस्याध्यक्षणे आलोकान्तरवत्ताऽवयवेनावयविना वाऽऽलोकेनान्यथासिद्धसन्निधिरहेतुरित्यालोकाभावग्रहे सा नापेक्ष्यते । अर्थात्तयोगस्तु नार्थव्याप्तोऽशत ऐक्यात् । तद्विरहसहितः स तथेति चेन्न, इन्द्रियसन्निकर्षस्य हि प्रतियोग्युपलम्भे तावद्धेतुताङ्गीक्रि-

---

भूतलं घटवत्तदभाववच्चेतिरीत्या समूहालम्बनं ज्ञानं सर्वत्र स्यात् । प्रमेति । यद्यपि भ्रमोऽपि नेष्टः सर्वत्र तादृशः, प्रमा तु प्रागेव, तथापि योग्यानुपलम्भस्याभावप्रमाविशेषं प्रत्येव कारणतया प्रमात्वोक्तिः । ननु घटभानप्रयोजकसामग्रीसत्त्वेऽपि तदभावभानप्रयोजको योग्यानुपलम्भः कथमत आह नहीति । तत्र = भूतलादौ । विषयतासम्बन्धेनेति शेषः । भावप्रमोत्पद्यते इत्यन्वयः । तत्र प्रतियोगितद्व्याप्ययोः सत्त्वेऽपि तदन्यप्रतियोगिप्रमापकसत्त्वं निर्बाधमेवेति योग्यत्वं स्वस्थम् । सत्येवेति । तथा च घटोपलम्भाभावोऽपि विषयतासम्बन्धावच्छिन्नप्रतियोगिताको घटोपलम्भः प्रागस्त्येव, प्रागभावस्य सम्बन्धानवच्छिन्नप्रतियोगिताकत्वेऽपि तदधिकरणेऽत्यन्ताभावस्याप्युपगमेन तस्य विषयतासम्बन्धावच्छिन्नप्रतियोगिताकत्वादिति भावः । प्रतियोगितद्व्याप्यासमवधानकालीनत्वविवक्षाभिप्रायेणाशङ्कते तत्तदिति । सः = योग्यानुपलम्भः । योग्यतायां तादृशकालीनत्वविवक्षणेऽपि फलतो न कश्चिद्विशेषः । तथा = ज्ञानाकरणकाभावप्रमाकरणम् । अन्यथासिद्धेति । व्यापकाभावे व्याप्याभावस्यावर्जनीयसन्निधिकत्वादिति भावः । हेतुतेति । तदविनाभूतविरहसहित इत्यनेन यद्यपि प्रतियोगिव्याप्याभावस्य हेतुतावच्छेदकत्वं प्रतीयते तथापि विशेष्यविशेषणभावस्याविनिगम्यतया तत्कार्यकारिण एव तत्सहकारितया च तस्य हेतुतापि पर्यवसन्नैवेति भावः । अध्यक्षणे इति । अहेतुरित्यन्वयः । अध्यक्षविषयो यद्यालोकावयवी तदाऽऽलोकान्तरमवयवः, यदि त्वालोकावयवस्तदाऽवयवीत्याह अवयवेनावयविना वेति । सा = आलोकान्तरवत्ता । प्रतियोग्यात्मकालोकवत्ता तु नापेक्षणीयैव, अभावबुद्धेर्भ्रमत्वापत्तेः प्रतियोगितद्व्याप्यातिरिक्तानामेव योग्यताघटकत्वादिति भावः । ननु प्रतियोगिव्याप्यासमवधानस्यैवं कारणत्वाभावेऽपि कारणतावच्छेदकता स्यात्, आदिमान्यथासिद्धे दण्डत्वादौ तथा दर्शनात्; आलोकान्तरवत्ता तु नैवमित्यत आह अर्थात्तयोगरित्यति । तुश्चार्थे दोषान्तरसमुच्चयाय किञ्चेत्येवमभिनेयः । अंशतः = व्याप्यांशस्य, व्यापकेनेति शेषः । ऐक्यात् = ऐक्यप्रसक्तेः । अथवाऽर्थस्यार्थाक्षयोगांशात्मकत्वादित्यर्थः । एकत्र व्याप्यव्यापकभावस्तावन्नेष्टस्तथापि, अन्यथा प्रतियोगिव्याप्यान्यत्वेनैव चरितार्थस्य प्रतियोग्यन्यत्वस्य निवेशस्य विफलतापातादित्युक्तम्, एवं च स्वस्वघटितस्यापि न स्वव्याप्यत्वम्, एकत्र कार्यकारणभावाद्यभावे स्वस्वघटितयोरपि तददर्शनात्, अग्निरग्निं व्याप्नोतीतिवदग्निरग्निविशिष्टं व्याप्नोतीत्यप्रतीतेश्च । न चेन्द्रियसन्निकर्षमात्रं घटादिव्याप्तम्, व्यभिचारात्, अपि तु घटादीन्द्रियसन्निकर्ष एवेति विवक्षितप्रतियोगीन्द्रियसन्निकर्षाव्यवच्छेदकत्वादुभयत्र प्रतियोगिव्याप्यनिवेशो व्यर्थः । ननु व्याप्तित्वेन प्रवेशमनादृत्य प्रतियोग्यभाववद्वृत्तित्वत्वेन प्रवेशोऽस्तु; एवञ्चोक्तप्रतीतिर्न विरुणद्धि प्रतियोगीन्द्रियसन्निकर्षस्य तथात्वमिति चेन्न, प्रतियोग्यभाववतीन्द्रियेऽपि प्रतियोगीन्द्रियसन्निकर्षस्य वृत्तेस्तावतापि तस्य ग्रहणानुपपत्तेरित्यभिप्रायात् । व्यर्थांशमपास्य शङ्कते तद्विरहेति । प्रतियोगिविरहेत्यर्थः । स तथेति प्राग्वत् । यद्यप्येवं तत्तदविनाभूतान्यस्यापि तदन्येत्येव वाच्यमिति प्रतियोगिसन्निकर्षघटितस्य प्रतियोगिभिन्नतदुपलम्भकारणकूटस्य प्रति-

यते, तत्र किं सन्निकर्षव्यतिरेके कार्यानुदयोदाहरणमेष्टव्यं न वा, न यदि, तदा सन्निकर्षस्य हेतुतैव कुतो मन्तव्या, अन्यथैव कार्योत्पत्त्युपपत्तेः। एष्टव्यं चेत्तर्हि तत्रैवोदाहरणे व्यवधायकेनेन्द्रियसन्निकर्षशून्ये परमार्थतश्चाभाववत्युक्तकारणसम्पत्तेरभावप्रमा स्यात्। तत्र व्यवधायकाभावः प्रतियोग्युपलम्भको नास्तीति चेन्न, सन्निकर्षव्यतिरेकस्य प्रमाव्यतिरेकप्रयोजकत्वावधारणोदाहरणमेव तर्हि तत्र स्यात्। व्यवधायकस्य सन्निकर्षविरोधेनैव प्रमाविरोधित्वमिति चेत्तर्हि व्यवधायकाभावः सन्निकर्षोत्पत्तौ कारणं न त्वभावप्रमाविशेषोत्पत्तावितिस्थिते स प्रसङ्गस्तदवस्थ एव। न च सन्निकर्षाभावादेव तदानीमुक्तकारणासम्पत्तिः; प्रतियोगिसन्निकर्षस्याभावप्रमोत्पादकत्वे नित्यं तदनुत्पत्त्या-

योग्यभावकालेऽसम्भवितया योग्यतालक्षणासम्भवः। न च—प्रतियोग्युपलम्भासाधारणकारणान्यत्वमेवान्यान्तेन विवक्षणीयम्, प्रतियोगीन्द्रियसन्निकर्षस्तु प्रतियोग्युपलम्भासाधारणकारणमेवेति न तस्योक्तकूटघटकत्वसम्भवः. अत एव—घटसंयोगाभावस्य योग्यानुपलब्ध्या ग्रहणं न स्यात्, तत्काले घटसंयोगेतरतदुपलम्भककूटस्य घटसन्निकर्षघटितस्यासम्भवादित्यपि—नाशङ्कनीयम्, घटसन्निकर्षस्य घटसंयोगोपलम्भासाधारणकारणान्यत्वाभावेन तादृशकूटघटकत्वानुपपत्तेरिति—वाच्यम्; आलोकादेरपि घटोपलम्भासाधारणकारणत्वेन तदभावदशायामपि घटाभावोपलम्भापत्त्या योग्यतानिवेशवैफल्यापत्तेः। एतेन—तद्विरहसहित इति पृथङ्न वाच्यम्, अपि तु प्रतियोग्युपलम्भासाधारणकारणासमवधानकालीनानि यावन्ति प्रतियोग्युपलम्भकारणानि तावत्समवधानं योग्यतेत्यस्त्वित्यपि—नाशङ्क्यम्, तथापि प्रतियोग्यभावकालीनानि यावन्ति प्रतियोग्युपलब्धिकारणानि तावत्समवधानमेव योग्यता विवक्षणीयेत्याशयः। सन्निकर्षस्य = लौकिकसन्निकर्षस्य। प्रतियोग्युपलम्भे = प्रतियोगिलौकिकप्रत्यक्षे। परमार्थतश्चाभाववतीति। नन्वेवमिन्द्रियसन्निकर्षस्य प्रतियोगिप्रत्यक्षकारणताग्राहको नायं व्यतिरेकः स्यात्, तदितरसकलकारणसमवधानकालीनस्य कार्यानुत्पादस्य प्रयोजकीभूताभावप्रतियोगिस्वरूपकेवलव्यतिरेको हि कारणतां ग्राहयति न तु व्यतिरेकमात्रम्, प्रकृते च सन्निकर्षातिरिक्तं कारणं विषयोऽपि, तदभावे च न सन्निकर्षेतरसकलकारणसमवधानमिति चेन्न, विषयेन्द्रियसन्निकर्षस्य प्रत्यक्षकारणतासिद्धिं विना विषये तत्कारणताया असम्भवदुक्तिकत्वेन विषयेन्द्रियसन्निकर्षस्य कारणताग्राहकोक्तव्यतिरेके कारणतया विषयस्योपादातुमशक्यत्वात्, नहि विषयाभावस्य विषयेतरसकलकारणसमवधानकालीनं कार्यानुत्पादं प्रति प्रयोजकत्वं येन स्वातन्त्र्येण तस्य कारणता शक्यग्रहा स्यात्, विषयाभावदशायां तादृशसकलकारणान्तर्गतसन्निकर्षस्यैवानिवृत्तेः; तादृशसन्निकर्षव्यतिरेकः पुनर्विषयाद्यभावनिबन्धनो वा, सत्यपि विषयादौ कुड्यादिव्यवधाननिबन्धनो वा उभयनिबन्धनो वेत्यन्यदिति भावः। प्रमेति। लौकिकप्रत्यक्षेत्यर्थः। न स्यादिति। सन्निकर्षेतरसकलकारणानामुक्तरीत्यापेक्षणीयानामभावादिति भावः। व्यवधायकस्येति। विरोधोऽनुत्पादप्रयोजकत्वम्। तथा चापेक्षणीयोऽपि व्यवधायकाभावः सन्निकर्षेतरकारणकूटे न पततीति सन्निकर्षकारणताग्राहककेवलव्यतिरेकसम्भव इति भावः। अन्यथासिद्धस्यापि प्रयोजकतयाऽपेक्षणीयत्वमस्तु नाम, तथापि प्रतियोगिप्रत्यक्षकारणत्वाभावे तदभावोपलब्धिहेतुतापि न सम्भवति व्यवधायकाभावस्येति 'व्यवधायकाभावः प्रतियोग्युपलम्भको नास्ती'ति स्वदभिधानं योग्यतायां तन्निवेशाभिप्रायकमसङ्गतमेवेत्याह तर्हीति। प्रमाविशेषो योग्यानुपलब्धिजन्यः। स प्रसङ्गः = व्यवहिताभावग्रहप्रसङ्गः। उक्तेति। विवक्षणीयेत्यर्थः। तथा चाभावप्रमाविशेषे सन्निकर्षोऽपि हेतुः, स च न व्यवधानस्थले इति नासौ प्रसङ्गः। सन्निकर्षः किं प्रतियोगिना, किंवाऽभावेन, आहोस्विदभावाश्रयेण, आद्ये प्रतियोगिसन्नि-

पत्तेः । अतएव नाव्यवधानमधिकं कारणमेष्टव्यम्, इन्द्रियसन्निकर्ष एव तदुपपत्तेः । न चाश्रयसाक्षात्कारोऽपि; प्राङ्नास्तितताग्रहादौ व्यभिचारात् । ननु व्यवधायकसद्भावे यत्र परमार्थतोऽस्त्यभावस्तत्रोक्तकारणादभावावधारणमस्त्येव, को विरोधः ? न तावद्भावयोगिन्यपि तावता तद्विरहप्रमा प्रसज्यते । तर्हि प्रतियोग्यभावसहितोऽनुपलम्भ एवाभावप्रमाणमस्तु, जहिहि योग्यताविशेषणनिवेशव्यसनम् । योग्यताविशेषणाप्रक्षेपेऽनुपलम्भमात्रतो वस्तुगत्या प्रतियोग्यभाववत्यपि नाभावनिश्चयः, कदाचित्तु संशयो जायते, तत्कथं तथाङ्गीक्रियेतेति चेत्तर्हि व्यवधानेऽप्येवमेवेति योग्यताविशेषणप्रक्षेपेऽपि तुल्यम् ।

अपि च मेयस्य वास्तवं सत्त्वं प्रमाणकोटावनिवेशार्हमेव, मेयवस्तुसत्त्वासत्त्व-

---

कर्षस्येति । अतएवेति । वक्ष्यमाणादित्यर्थः । अव्यवधानमभावेनेन्द्रियस्य । एवं प्रतियोग्युपलम्भकतयाऽभावप्रमाविशेषेऽप्यपेक्षणीयतयाऽव्यवधानमाशङ्कितमिह तु स्वातन्त्र्येणाभावप्रमाविशेषे हेतुतयेति बोध्यम् । इन्द्रियसन्निकर्ष एव = इन्द्रियसन्निकर्षस्याभावप्रमाविशेषकारणत्वे एव । तदुपपत्तेः = इन्द्रियसन्निकर्षप्रयोजकतयाऽव्यवधानस्यापेक्षणीयतोपपत्तेः, कारणत्वं त्वेवं सति न सम्भवतीत्युक्तम् । इन्द्रियसन्निकर्षस्वभावेन न तत्प्रमाविशेषस्य कारणं सम्भवति, तथासति तस्य प्रत्यक्षान्तर्भावेनातिरिक्तत्वानुपपत्त्याऽपसिद्धान्तापातात् । एतेन द्वितीयो निराकृतः । तृतीयाभिप्रायकं निराकरोति नचेति । साक्षात्कारोऽपि, अभावप्रमाविशेषकारणमितिशेषः । प्राङ्नास्तितेति । पूर्वकालीनोऽभावः, एतद्ग्रहो योग्यानुपलब्धिजन्यतया भट्टैः स्वीकृतः, यदाहुः—"स्वरूपमात्रं दृष्टं हि वेश्माद्यर्थं स्मरन्नथ । तत्रान्येनास्तितां पृष्टस्तदैव प्रतिपद्यते । गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् । मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षये"ति । स्मरन्निति । गृहान्निर्गत इति शेषः । तथा च तत्राभावाश्रयेण नाक्षसन्निकर्ष इति भावः । एवं सन्निकर्षस्याभावप्रमाविशेषहेतुत्वासम्भवमभ्युपगम्याशङ्कते नन्विति । न तावद्विति । नहीत्यर्थः । भावयोगिनि = घटादिमति । प्रसज्यते इति । प्रतियोगिविरहस्य योग्यताघटकस्य तत्राभावादिति शेषः । परिहरति तर्हीति । जहिहीति । त्यजेत्यर्थः । ओहाक् त्यागे इति स्मरणात्, "आ च हौ" विति साधु, तत्र चकारेणेदीतोरनुपक्षात् । व्यवहिताभावोऽपि षष्ठप्रमाणगम्यो यथास्थितस्तदाऽऽलोकाद्यभावस्थलीयोऽप्यभावस्तथाऽस्तु, को निर्बन्धः? इति भावः । शङ्कते योग्यतेति । तथा = प्रतियोग्यभावसहितानुपलम्भमात्रस्याभावप्रमाविशेषकारणत्वम् । एवमेवेति । अभावनिश्चयो न भवति, अपि तु संशय एव कदाचिदित्यर्थः । तुल्यमिति । योग्यानुपलम्भस्य हेतुत्वेऽपि व्यवधानस्थलेऽभावनिश्चयस्य प्रसक्तत्वादनुपलम्भमात्रस्येव योग्यताविशिष्टस्यापि तस्य हेतुत्वाभावस्तुल्य इति भावः ।

ननु प्रतियोग्यभावकालीनानि प्रतियोग्युपलब्धिकारणानि यावन्ति, तावत्समवधानं योग्यतेत्यत्र प्रतियोग्युपलब्धिशब्देन प्रतियोगिमत्तोपलब्धिर्विवक्षिता, उपलब्धिश्च लौकिकं प्रत्यक्षमित्युक्तम्, एवञ्चाश्रयसन्निकर्षोऽपि तादृशकारणान्तर्गत इति योग्यताविशेषणपक्षे न व्यवहिताभावग्रहप्रसङ्ग इत्यरुचेराह अपि चेति । मेयस्येति । प्रकृते मेयोऽभावः, तदीयसत्त्वं च प्रतियोग्यभावकालीनानीत्यनेन योग्यतायां निविष्टं सा च प्रमाणकोटिः, तद्घटकत्वादिति भावः । ननु मानाधीना तावन्मेयसिद्धिः, यदा तु मानमपि मेयाधीनसिद्धिकं तदा मेयं कथं साधयेदन्योन्याश्रयादिति हि नचाभिप्रायः, स च तदा सङ्गच्छेत यदि प्रकृते मानस्य ज्ञानमपेक्षणीयं स्यात्, वस्तुगत्या प्रतियोग्यभावकाले सम्भवन्ति प्रतियोगिमत्तालौकिकप्रत्यक्षकारणानि ह्यभावप्रमाविशेषेऽपेक्ष्यन्ते न तु तद्रूपयोग्यताज्ञानम्, येन तद्घट-

निर्धारणार्थमेव हि प्रमाणाप्रमाणविवेचनं विचारकाणाम्, अन्यथाऽनुमाने व्याप्तावुपाधिनिरासायासो व्यर्थः स्यात्, व्याप्तपक्षधर्मताज्ञानमात्रस्यैव कारणत्वाङ्गीकारेण सौस्थ्यात्, प्राङ्नास्तिताप्रमितौ च यद्यभावप्रमाणतां मन्यसे तर्हि सा न स्यात्, तत्रेदानींजायमानाभावप्रमोत्पत्तावभाववास्तवसत्ताविरहस्यापीदानीं क्वचित्सम्भवात्। फलविषयकालिकाभावोपलक्षिताश्रयादेः कारणकोटिप्रवेशे विशेषाभावात्, तदुपलक्षितत्वस्यैव विशेषणस्य विशेषत्वेऽतिप्रसङ्गात्। तथापि सामान्यतो विशेषाभावोऽसि-

---

कप्रतियोग्यभावज्ञानमपि प्रागेवापेक्षणीयं स्यादित्याशङ्कयोक्तं प्रमाणाप्रमाणविवेचनं विचारकाणामिति। विचारकाः = कथकाः, तथा च परं प्रति कथादशायां योग्यानुपलम्भेन कस्यचित्क्वचिदभावो न शक्योऽवगमयितुम्, अभावप्रतिपादनं विना निरुक्तयोग्यताविशिष्टानुपलम्भप्रतिपादनानुपपत्तेरित्याशयः। अन्यथा = प्रमाणप्रतिपादनं विना प्रमेयप्रतिपादनोपगमे। अनुमाने = परार्थानुमानस्थले। व्याप्तौ = व्याप्तिमति। साधनाव्यापकस्योपाधित्वेन साधने उपाधिभानं व्यभिचरितत्वसम्बन्धेन। उपाधीति। उपाधिग्रहेत्यर्थः। तन्निरासस्य लिङ्गे प्रमाणत्वप्रतिपत्तिफलकत्वादिति भावः। इदमुपलक्षणं हेत्वादिप्रयोगवैयर्थ्यस्यापि। व्याप्तस्य = वस्तुतो व्याप्तिमतः। नन्वयं योग्यानुपलम्भः स्वार्थे एवाभावप्रमाविशेषे हेतुः स्वरूपसन्, अन्यथाऽनवस्थाया अप्यापत्तेः, षष्ठप्रमाणासिद्ध्यापत्तेश्च, परं प्रति कस्यचिदभावप्रतिपादनस्य व्यापकाभावादिना लिङ्गेन सम्भवात्, नह्यभावःषष्ठप्रमाणगम्य एवेति कस्यचिन्मतमित्यरुचेराह प्राङ्नास्तितेति। यद्यभावेति। योग्यानुपलम्भेत्यर्थः। भट्टैस्तत्र तस्य करणताभ्युपगमेऽपि तार्किकैरनभ्युपगमात् यदीत्युक्तम्। सा प्राङ्नास्तितामतिः प्रमिताविति पूर्वमुक्तत्वात्प्रमाणपदं करणमात्रपरम्। तत्रेदानीमभाववास्तवसत्ताविरहस्य क्वचित्सम्भवादित्यन्वयः। तत्रेदानीमित्यस्यैव विवरणं जायमानाभावप्रमोत्पत्ताविदानीमिति। इदानीमिति प्रत्ययोज्यम्, तथाचेदानीं जायमाना = एतत्कालीना याऽभावप्रमा, तदुत्पत्तौ भाविन्यां, तदुत्पत्तेरव्यवहितप्राक्क्षणे इति यावत्। उक्तक्षणेऽपेक्षणीया हि योग्यता, सा च प्रतियोग्यभावकालीनत्वघटितेति कारणान्तराणामिवाभावस्यापि तदा सत्वमपेक्षणीयमापतति, तदानीं च तत्सत्वं न नियतमिति भावः। ननु नास्तितायाः प्राक्कालिकत्वेऽपि तदानीन्तनानामुक्तकारणानामुक्तक्षणेऽपि सम्भवान्न दोषः, न च यावतां न तदा सम्भवः; यावत्त्वस्य कारणतावच्छेदके निवेशनीयतया उक्तत्वेन यावत्तादृशकारणतावच्छेदकाश्रयाणां व्यक्त्यन्तराणामेव सम्भवात्, न च तथाप्यभावस्येदानीमभावे तत्कालवृत्तित्वविशिष्टानां कारणानामुक्तक्षणेऽसम्भवतादवस्थ्यमेव, अभावकालवृत्तित्वोपलक्षितत्वस्य निवेशनीयत्वादित्यभिप्रायकमाशङ्कयाह फलविषयेति। फलीभूतप्रमितिविषयीभूतकालवृत्त्यभावोपलक्षिताश्रयादेरित्यर्थः। फलविषये काले भव इत्यर्थे युगपद्वृत्तिद्वयेन शिवभागवतादिवदुक्तप्रयोगः साधुः। अभावे तादृशकालवृत्तित्वोक्तिर्वस्तुगत्याऽभावस्य यः कालस्तन्निवेशसूचनाय, अन्यथा निरुच्यमानप्रमाणफलीभूतप्रमितेर्निवेशयितुमनौचित्यात्, एवञ्चाभावान्तेनाभावकालस्य वृत्तित्वसम्बन्धेनोपलक्षणत्वलाभ इति दर्शिताभिप्रायपर्यवसानम्। आश्रयादेरिति च प्रतियोगिमत्तालौकिकप्रत्यक्षकारणमात्रोपदर्शकम्, तादृशप्रत्यक्षस्य विषयविधयाऽऽश्रयेणापि जन्यत्वात्। कारणकोटिनिवेशे = कारणकूटान्तर्भावे। विशेषाभावादिति। उपलक्षितत्वस्य स्वरूपमात्रत्वेन प्रतियोगिमत्तालौकिकप्रत्यक्षकारणकूटस्यैव योग्यतारूपतापर्यवसानम्, तथाचासम्भवः, नहि तादृशकूटसत्वेऽभावबुद्धिरुत्पत्तुं प्रभवतीति भावः। उपलक्षितत्वं नोपलक्ष्यस्य स्वरूपमात्रमपि तु विशेषणमिति नोक्तदोष इत्याशङ्कयाह तदुपलक्षितत्वस्येति। अतिप्रसङ्गादिति। उपलक्षितत्वमात्रस्य विशेषणतोक्तयोक्तासम्भवतादवस्थ्यात्तदुपलक्षितत्वे प्रतियो-

द्धइति चेन्न, तस्य सत्त्वे निर्वचनापातात् । इत्यनुपलब्धिखण्डनप्रकरणम् ।

---

थभावकालवृत्तित्वस्य विशेषणत्वेव वाच्या, एवं वृत्तित्वे कालस्य, तत्र चाभावस्येति विद्यमानस्यैव विशेषणत्वेन प्रतियोग्यभावस्य स्वप्रमाविशेषाव्यवहितप्राक्क्षणे सत्त्वं नियतमपेक्ष्यं स्यादिति प्राङ्नास्तितामतेर्दुर्गतिरेव । एवमुपलक्षितत्वस्य विशेषणत्वे तद्विशिष्टकारणकूटनिवेशेन वैशिष्ट्यं स्वरूपमात्रं वा विशेषणं वा, आद्येऽसम्भवः, स्वरूपमात्रस्याव्यावर्तकत्वात्, द्वितीये त्वनवस्था, वैशिष्ट्यविशिष्टतायामप्येवं वक्तव्यत्वादिति भावः । सामान्यतो विशेषाभावः = विशेषसामान्याभावः । तादृशकालवृत्तित्वस्य प्रोक्तकारणकूटे उपलक्षणतोक्तौ तत्र विशेषस्य व्यावृत्तत्वरूपस्य धीस्तावदानुभविकीति नापह्नोतव्योऽसौ स्वरूपमात्रत्वादिविकल्पैरपि तु समर्थनीयो भवतापीति भावः । नापह्नुमहे किञ्चिदपि तु व्यवहारसिद्धस्यानिर्वचनीयतामेवाचक्ष्महे इत्याह तस्येति । विशेषस्येत्यर्थः । उपलक्षितत्वस्य विशेषकतयाऽभिमतस्य दुर्वचत्वे विशेषस्यापि तथात्वादितिभावः । इदमुपलक्षणम्, अभावप्रमाविशेषाविदूरक्षणेषु भवन्त्या आलोकादिव्यक्तेरभावकालवृत्त्यभावप्रतियोगिन्या अभावकालवृत्तित्वोपलक्षितत्वोक्तयापि सङ्ग्रहासम्भवात्, एवमाश्रयसन्निकर्षस्यापि कथितरीत्या तादृशकारणकूटान्तर्गतत्वेन प्राङ्नास्तितामतेरुपपादिका नासौ योग्यतेति । अद्धा, इयं योग्यता क्वचित्क्येव, अतीन्द्रियप्रतियोगिकान्योन्याभावस्यापि षष्ठप्रमाणगम्यत्वेनातीन्द्रियस्य च लौकिकप्रत्यक्षाप्रसिद्धया तदधिकरणीयत्वप्रसञ्जनप्रसञ्जितप्रतियोगिकत्वस्यैव तत्रानुपलम्भे योग्यताया वाच्यत्वात्, एवञ्च प्राङ्नास्तितास्थलेऽपि यत्र यदीयतादृशानुभवविषयतामापन्नस्य यस्य स्मृतिविषयत्वनियमस्तत्र तदीयतादृशानुभवजन्यतत्स्मृतिकालीनत्वमेव तत्र तदीयस्मृतिविरहरूपेऽनुपलम्भे योग्यता, अतएव यदि प्रातश्चैत्रो गेहेऽनुभूतः स्यात्तदा वस्त्वन्तरवत्तत्र स्मर्येतेत्यनुभव इति चेदस्त्वेवमननुगमकदर्थना, तथापि तद्गेहं प्रातःकालीनचैत्राभाववत् मया प्रातःकालीनतया चैत्रवत्त्वेनास्मर्यमाणत्वादिति मनसा साक्षिणा वा सुग्रहेण लिङ्गेनैव सिद्धा प्राङ्नास्तितेति न योग्यानुपलम्भो मानान्तरम्, अन्यत्राक्षव्यापारेणैव चारितार्थ्यादिति निवेदितमिति कृतं पल्लवैः । इति खण्डनशारदायामनुपलब्धिखण्डनप्रकरणम् ।

समाप्तोऽयं प्रमाणखण्डनभागः ।



# हेत्वाभासखण्डनप्रकरणम् ।

## असिद्धिखण्डनम् ।

कश्चायमसिद्धो नाम ? तथाहि—व्याप्तिपक्षधर्मत्वाभ्यामप्रमितोऽसिद्ध इत्यलक्ष-

अथ कथायामुद्भावितहेत्वाभासाहितानाप्रामाण्यग्रहविघटकतया विजयौपयिकत्वाद्व्यवहारबलादसद्विलक्षणतामुपेयुषि हेत्वाभासे सद्विलक्षणतोपनायकतया मिथ्यात्वपर्यवसायित्वाच्च तत्खण्डनं प्रस्तौति कश्चेति । नन्वेवं प्रसङ्गादनुमानखण्डनानन्तरमेवैतत्खण्डनं कुतो न कृतम्, न च—नेदं हेत्वाभासमात्रखण्डनमपि तु प्रमाणसामान्याभासखण्डनम्, तथाहि—"स्वरूपासिद्धिरिव सर्वप्रमाणाना"मिति प्रत्यक्षखण्डने स्वरूपासिद्धेः सर्वप्रमाणदोषत्वं स्वयमुक्तम्, "स्वरूपासिद्धिः सर्वप्रमाणसाधारणो दोष" इति चात्रैव प्रकरणे वक्ष्यति, स्थाणुत्वाभावस्य तद्व्याप्यस्य वा निश्चये स्थाणुत्वविषयकप्रत्यक्षादेरनुदयेन बाधसत्प्रतिपक्षयोरपि प्रमाणान्तरसाधारण्यं स्फुटमेवेति—वाच्यम्, तेषां प्रमाणान्तरसाधारण्येऽप्यत्र हेतुदोषतयैव निरसिष्यमाणत्वात्, अन्यथा प्रत्यक्षाभासादौ बाधादिलक्षणस्यातिव्याप्त्युद्भावनासङ्गतेः, प्रमाणान्तराभासानामार्थिकं खण्डनं तु समं प्रकृतेऽपि, नहि व्याप्तिपक्षधर्मतयोरनुमाननिराकरणोक्तनिराकरणेन तद्विरहस्य न निराकरणमायाति । किं वा वस्तु प्रमाणानां निरासे न निरस्तं भवति, सर्वस्यापि तदधीनसिद्धिकत्वात्, तस्माद्विशिष्य हेत्वाभासा एव तार्किकैर्महता प्रबन्धेन निरूपिता इत्येतावतैव विशिष्य तेषामेव खण्डनान्तराभिधानं समर्थनीयम्, एवञ्च सत्यनुमानखण्डनानन्तरभावो न कथमस्य सन्दर्भस्य रोचित इति चेदत्रोच्यते, प्रमाणखण्डनस्य प्रमेयमात्रमिथ्यात्वप्रतिपत्तिफलकतयाधिकोपयोगित्वेनोत्कटजिज्ञासाविषयतयाऽनुमानप्रमाणखण्डने सत्युपमानप्रमाणनिरासविषयिण्या शिष्यस्य तादृशजिज्ञासया प्रतिबन्धात्तत्र निरूपणमनर्हतो हेत्वाभासनिरासस्यात्रैव सावसरं निरूपणीयत्वादिति । अयमसिद्ध इति । "विशेषाभावोऽसिद्ध" इति पूर्वोक्तवाक्यघटकासिद्धपदार्थतावच्छेदिकाऽसिद्धिरित्यर्थः । एतेन—सव्यभिचारविरुद्धेत्यादिक्रमेणैव हेत्वाभासानां परैरभिधानात्सव्यभिचारस्यैव प्रथमं निरसनौचित्यमिति—नादेशनीयम् । असिद्धशब्दस्य भावप्रधानतया दोषपरत्वादस्तु दोषाणामेव निरासस्यौचित्यमनुमत्य । नहि स्वयमेव प्रयुक्तो हेतुः स्वयं निरस्यते, अपि तु परेण तत्रोद्भावितो दोषः, तावतैव हि विजयलाभः, अन्यथा तु मौढ्यमेव । मिथ्यात्वलाभोऽपि दुष्टस्य दोषमिथ्यात्वादेवेति । ननु यथा प्रमाणसामान्यलक्षणं निराकृत्य प्रमाणविशेषलक्षणं निराकृतम्, तथा हेत्वाभाससामान्यलक्षणं निराकृत्यैव हेत्वाभासविशेषलक्षणनिराकरणं युज्यते; अथ विशेषजिज्ञासायाः सामान्यप्रतीतिपुरस्सरत्वात्सामान्यलक्षणं निरूप्य विशेषलक्षणनिरूपणं घटते ग्रन्थकृताम्, सामान्यलक्षणखण्डनापेक्षं तु न विशेषखण्डनम्, येन सामान्यखण्डनस्य पूर्वभावितानियमः स्यात्, प्रत्युत विशेषाणामभावे सामान्यमसम्भवदुक्तिकमेवेतिचेत्तथापि हेत्वाभासखण्डने प्रवृत्तस्य तत्सामान्यलक्षणाखण्डने न्यूनताऽस्त्येव, विशेषाणां खण्डनादेव सामान्यखण्डनं तु प्रमाणसामान्यखण्डनेऽपि समानं समानसमाधानञ्चेति चेन्न, विशेषान्यतमत्वघटितस्यैव हेत्वाभाससामान्यलक्षणत्वेन तन्निरासस्यापि विशेषनिरासमुखेन क्रियमाणत्वात् । प्रकारान्तरासम्भवस्तु तार्किकैरपि पर्यालोचितः, तथाहि—यादृशविशिष्टविषयकनिश्चयत्वव्यापकोऽसाधारण्याविषयकत्वानुमित्यप्रतिबन्धकत्वोभयाभावस्तादृशत्वम्, साध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यनिश्चये पक्षे हेतुमत्ताज्ञानाभावकालीनेऽनुमित्यप्रतिबन्धकत्वसत्त्वेऽपि प्रथमा-

भावप्रयुक्त उभयाभाव इति न तत्राव्याप्तिः, अनुमितिस्तु 'पक्षः साध्यव्याप्यहेतुमान् साध्यवा'नित्याकारेति सर्वदोषसङ्ग्रह इति कल्पे निर्वह्निः पर्वतो वह्निमानित्यादिस्थलीयदोषेऽव्याप्तिः, अनुमितेरनाहार्यत्वनियमात्, अनुमितिपरामर्शोभयविचक्षणेऽप्यनुमित्यप्रसिद्धिरेव, अनाहार्यपरामर्शस्यैवानुमितिजनकत्वात्, न च तेषामलक्ष्यता, निर्वह्नित्वेन पर्वते वह्निसाधने धूमो दुष्ट इति व्यवहारानुपपत्तिप्रसङ्गादित्यालक्ष्य यद्रूपावच्छिन्ननिश्चयाव्यवहितोत्तरानुमितिस्तव्द्यापकं विरोधिविषयताप्रयुक्तोभयाभाववत्त्वं तत्त्वमिति कल्पोऽनुसृतः, उभयं तु पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यवत्तावगाहित्वं तादृशसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्तावगाहित्वञ्च, अत्रोदासीनानुमितिमादाय लक्षणसमन्वयेन नोक्तस्थलीयाश्रयासिद्ध्यादिदोषेऽव्याप्तिः । यदि च क्वचिद्दोषविषयकनिश्चयाव्यवहितोत्तरमनुमितिरप्रसिद्धा, तदा तदव्यवहितोत्तरदोषाजन्यज्ञानस्वव्यापकत्वमेव विवक्षणीयम्, एवञ्च नाहं गौर इति निश्चयानन्तरं दोषविशेषमहिम्नाऽहं गौर इति ज्ञानस्योत्पत्तावपि 'अहं गौर आत्मत्वा'दित्यादिस्थलीयबाधादेर्नासङ्ग्रहइति । किन्त्वत्रापि सर्वत्र सर्ववस्तूनां भ्रमस्याप्रामाणिकत्वाद्यत्र साध्यस्य साध्यव्याप्यवत्त्वस्य वा भ्रमो न क्वचित्प्रसिद्धस्तत्स्थलीयदोषासङ्ग्रहः, तादृशस्थलस्य सन्दिग्धत्वेऽपि लक्षणासिद्धिरेव, दोषसंशयात्, एवं निर्वह्निः पर्वतो वह्निमानित्यादावाश्रयासिद्ध्यादौ लक्षणसमन्वयेऽपि तत्रत्यबाधादौ निर्वह्निर्वह्निमानित्यादिस्थलीयनिर्वह्निनिष्ठवह्न्यभावादिरूपबाधादौ चाव्याप्तिरेव, आहार्यस्याप्रतिबध्यत्वेन तद्ग्रहस्याप्रतिबन्धकतया तदीयविषयताया विरोधिविषयतयोपादानासम्भवादित्याकलय्य यादृशपक्षकयादृशसाध्यकयादृशहेतौ यावन्तो दोषाः सम्भवन्ति तावदन्यान्यत्वमित्येव कल्पे निर्भर आदृतः, एकमात्रदोषस्थले च तत्त्वमेव हेत्वाभासत्वमित्युक्तम्, एवञ्चैतन्निरासो विशेषनिरासायत्त एवेति ।

## सामान्यनिरुक्तिखण्डनम् ।

इदम्पुनरिहावधेयम्—सर्वभाकाशवदित्यादावाकाशाभावविशिष्टसर्वाविरूपबाधान्यत्वस्याप्रसिद्धेस्तत्तद्विशिष्टनिरूपितविषयितान्यतमविषयितानिरूपकतावच्छेदकधर्मवत्त्वं विवक्षणीयम्, तथा च तादृशधर्माणां नानात्वाद्यत्किञ्चित्तादृशधर्मवत्त्वं वा निखिलतादृशधर्मवत्त्वं वा विकल्प्याव्याप्तिरसम्भवो वा प्रसञ्जनीयः । न च तादृशनिरूपकतावच्छेदकत्वेन तादृशधर्माणामनुगमः; तस्यापि स्वरूपसम्बन्धविशेषात्मकतयाऽननुगतत्वात्, अनतिरिक्तवृत्तित्वात्मकत्वेऽपि वृत्तित्वस्य स्वरूपसम्बन्धविशेषरूपत्वात्तदवच्छिन्नाभावानामानन्त्यात् प्रत्येकमिलितविकल्पावकाशात्, धर्ममात्रस्यानुगमासम्भवस्योपपादितत्वाच्च, असर्वज्ञदुर्ज्ञेयत्वापादकत्वं स्वन्यतमत्वघटनाया अनुयोगिप्रतियोगिविधया सकलप्रपञ्चप्रवेशप्रसक्त्या भूयो निवेदितमेव । यथा च तस्याखण्डत्वेऽपि व्यासज्यवृत्तित्वाव्यासज्यवृत्तित्वाभ्यां दोषस्तथोक्तं परामर्शखण्डनशारदायाम् । एवं निर्वह्नित्वविशिष्टे वह्निसाधने धूमो दुष्ट इति व्यवहारस्योक्तान्यतमत्वाद्यप्रतिसन्धानदशायामपि सद्भावेनोक्तलक्षणासम्भवः, तत्र दुष्टपदस्यैतल्लक्षणवादिमते वह्न्यभावविशिष्टनिर्वह्नित्वाद्यवच्छिन्नान्यतमवदर्थकतया निर्वह्नित्वविशिष्टे वह्निसाधने इत्यस्यानन्वयप्रसङ्गश्च । न च निर्वह्नित्वविशिष्टविशेष्यकवह्न्यनुमितिप्रयोजकत्वं तदर्थस्तस्य च धूमेऽन्वयसम्भव इति वाच्यम्, अनुमितेरनाहार्यतया तादृशानुमित्यप्रसिद्धेः । ननु किमेतावता, उक्तरूपस्य व्यावृत्त्यौपयिकत्वमेव, व्यवहारौपयिकत्वं स्वन्यस्यैव स्यादिति चेन्न, तस्यापि दुर्वचत्वात् । यत्तु—अभावप्रयोजकभ्रमान्यवृत्तिविषयितानिरूपकत्वस्य दोषपदप्रवृत्तिनिमित्ततां साध्यनिष्ठायाः

प्रकारतायास्तन्निरूपितव्याप्तिप्रकारतानिरूपितधूमत्वाद्यवच्छिन्नप्रकारतायाश्च साधनपदार्थतामुपगम्य निर्वह्नित्वविशिष्टविशेष्यतानिरूपितवह्निप्रकारतानिरूपकत्वस्य तादृशविशेष्यतानिरूपिता या वह्नि- प्रकारतानिरूपितव्याप्तिप्रकारतानिरूपितधूमत्वावच्छिन्नप्रकारता तन्निरूपकत्वस्य च द्वयोरभावप्रयोजक- त्रमान्यवृत्तिविषयितानिरूपकवत्ताया धूमेऽवगाहनेन तादृशव्यवहारोपपादनम्, तदतितुच्छम्, व्यवहारो ह्युपपाद्य इति तस्य को विषय इत्यत्र व्यवहर्तार एव साक्षिण,ः न च परिष्कर्ता एव व्यवहर्ता, न वा परिष्कारानुसन्धानसमसमय एव व्यवहारः, तादृशपरिष्काराविष्कारात्पूर्वं तादृशव्यवहारलोपापत्तेः, धूमसाधने वह्निर्दुष्टइत्यादिवच्च साधनशब्देनोक्तस्थलेऽप्यनुमितिरेव प्रतीयते इति सार्वजनीनम्, तस्मा- दनुभवविरुद्धविषयकत्वस्य तादृशव्यवहारे कल्पनापेक्षया वरं तस्यानुपपन्नतास्वीकार इति, यदाहु- रात्मतत्त्वविवेके उदयनाचार्याः—अप्रामाणिके ह्यर्थे मूकबावदूकयोर्मूक एव श्रेयानिति। किञ्चात्रवदन्ति- कल्पमाश्रित्योक्तसाधनादिपदार्थोपवर्णनम्, स एव स्वसम्भवेनावश्यमास्कन्दनीयः, तथाहि—तत्र विरो- धिविषयताप्रयुक्तत्वं यद्रूपावच्छिन्ननिश्चयाव्यवहितोत्तरानुमितिसामान्यस्य पक्षे साध्यावगाहित्वसाध्य- व्याप्यहेत्ववगाहित्वद्वयाभाववत्त्वे निवेशितम्, तस्य तत्रानिवेशे निर्वह्निः पर्वतो वह्निमानित्यादावुदासी- न घटादावतिव्याप्तिः स्यात्, तन्निश्चयाव्यवहितोत्तरमपि तादृशावगाहिताद्वयशालिनोऽनाहार्यस्यानुत्पत्तेः, परन्तु व्यधिकरणतया स्वनिष्ठप्रतिबन्धकतावच्छेदकधर्मस्य स्वानन्तरोत्पन्नज्ञाननिष्ठप्रतिबध्यतावच्छेदक- धर्माभावप्रयोजकत्वे मानाभावेन विरोधिविषयताप्रयुक्तत्वं क्वापि तादृशावगाहितोभयाभावे नास्ति । न चात्र व्यधिकरणयोरपि प्रयोज्यप्रयोजकभावः कल्पनीयः, अन्यथा प्रतिबन्धकतावच्छेदकाक्रान्तज्ञान- सत्त्वेऽपि प्रतिबध्यतावच्छेदकाक्रान्तं ज्ञानं कदाचिदुत्पद्येतेति वाच्यम्, यत आहार्यं वा ज्ञानमापाद्येत, अनाहार्यं वा. आद्यं नेच्छादिघटितसामग्र्यसत्त्वदशायां शक्यमापादयितुम्, तत्सत्त्वदशायां त्विष्टापत्तिरेव, द्वितीयेऽपि चेत्थमेव, इच्छाविरहेऽपि शाब्दादेर्बाधग्रहदशायामानुभविकत्वात्, अत्यन्तासत्यपीति न्यायात् । अनुमितिस्तावन्न तदानीं कथमप्युत्पद्यत इति चेत्, प्रत्युक्तमेतत्, अनुमितित्वविवक्षाया दोषविषयकनिश्चयाव्यवहितोत्तरानुमित्यप्रसिद्धिस्थलेऽव्याप्तिसम्पादकत्वात् । अभ्युपेत्य चेदम्, स्वप्नादौ बाधग्रहदशायामनुमितेरपि सम्भवात्, जाग्रतीव तत्राप्यनुमिनोमीत्यनुव्यवसायस्यैवानुमितित्वे प्रमाणत्वात्, उपवर्णितञ्चैतत्सम्यक्त्वखण्डने । अत्यल्पञ्चेदमुक्तम्, "प्रत्यक्षादौ बाधेन न ज्ञानं प्रतिबध्यते किन्तूत्पन्नज्ञानेऽप्रामाण्यं ज्ञाप्यते" इति मण्युक्त्या प्रत्यक्षादौ कुत्रचिदनुमितावप्युत्पन्नायामप्रामाण्यमेव ज्ञाप्यते न तूत्पत्तिरपि प्रतिबध्यते इत्येव वक्तव्यम्, अनुमितेरुत्पत्तिरेव प्रतिबध्यते न तु प्रत्यक्षादेरिति तु शपथैकप्रमाणकमेव । एवञ्च सति प्रतिबध्यप्रतिबन्धकभावघटितकल्पान्तरेऽप्यसम्भव एव पर्यवसन्नः ।

किञ्च निर्वह्निः पर्वतो वह्निमानित्यादिस्थलीयदोषसङ्ग्रहायात्रवदन्तिकल्पानुसरणम्, न च तदनुसरणेऽपि तत्रत्यस्य कस्यापि दोषस्य सङ्ग्रहसम्भवः । न च तत्र पर्वतत्वसामानाधिकरण्येन वह्न्य- भावादिमत्त्वस्य पक्षतावच्छेदकघटकत्वे दोषासङ्ग्रहेऽपि पर्वतत्वावच्छेदेन तस्य पक्षतावच्छेदकघटकत्वे वह्निमत्पर्वतरूपाश्रयासिद्धिसङ्ग्रहसम्भव इति वाच्यम्, वह्निमान् पर्वत इति विरोधिज्ञानासत्त्वेऽपि निर्वह्निमान् पर्वतो वह्निमानित्यनाहार्यं ज्ञानं नोत्पद्यते इति विरोधिविषयित्वस्य न निर्व- ह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वाभावप्रयोजकत्वमपि त्विच्छादिघटिततादृशाहार्यज्ञानसामग्रीविरहस्यै- वेति नोक्ताश्रयासिद्धिसङ्ग्रहोऽपि। ननु—यद्यप्यधिकरणभेदेनाभावो न भिद्यते, तथा सत्यभावानामधि- करणसमसङ्ख्यतया लाघवावकाशेनातिरिक्ताभावसिद्धिरेव न स्यात्, तथाप्यधिकरणभेदेनाधिकरणता भिद्यते एव, तत्रैव च विरोधिविषयिताप्रयुक्तत्वं निवेश्यम्, तथा सति विरोधिज्ञानानन्तरोत्पन्नज्ञाने

पक्षादौ साध्यादिवैशिष्ट्यावगाहित्वाद्यभावाधिकरणतायां पूर्वज्ञानीयविरोधिविषयितायाः अपि त्रिनिगमकाभावेन प्रयोजकत्वेनोक्ताश्रयासिद्धिसङ्ग्रहः सम्भवत्येवेति चेन्न, तादृशाधिकरणतायाः पूर्वं दोषावगाहिज्ञानस्य सद्भावमात्रेण तदीयविषयितायास्तत्र प्रयोजकताकल्पने मानाभावात्, अन्यथाऽन्यथासिद्धस्यापि तत्र तत्र कारणताभ्युपगमापत्तेः, तज्जातीयव्यक्त्यन्तरेऽक्लृप्तत्वेन प्रत्यवस्थानं तु समानमेव, अनाहार्यज्ञाने निर्वह्नित्वविशिष्टे वह्निवैशिष्ट्यावगाहित्वाभावजातीयमिव तदधिकरणताजातीयमपि प्रति विरोधिविषयितायाः प्रयोजकत्वस्य क्वाप्यक्लृप्तत्वात् । अधिकरणभेदेनाधिकरणताभेदाभ्युपगमेऽपि च भवतो रुचिरेव नियन्त्री धर्मिभेदस्य धर्मभेदप्रयोजकत्वेऽनुगतधर्ममात्रोच्छेदस्य भवतामनिष्टस्यैव प्रसङ्गः, अधिकरणतावच्छेदकभेदस्य निरूपकादिभेदस्य वाऽधिकरणताभेदप्रयोजकत्वे तु प्रकृतेऽधिकरणताभेदोपपादनासम्भवेन नोक्तसङ्ग्रहप्रकारः शक्यशङ्कोऽपीत्यपि द्रष्टव्यम् ।

ननु मा भून्निर्वह्नित्वविशिष्टे वह्निसाधने धूमो दुष्ट इति व्यवहारस्योपपत्तिः, निर्वह्निः पर्वतो वह्निमानित्यादिप्रयोक्तुस्स्वपार्थकतयैव निग्रहसम्भवात्, शाब्दमतेराहार्यत्वोपगमेऽपि तत्र बाधितार्थाभिधायकतयैव निग्रहोपपत्तेः, एवञ्च यद्रूपविशिष्टविषयकनिश्चयत्वव्यापकोऽसाधारण्याविषयकत्वानुमित्यप्रतिबन्धकत्वोभयाभावस्तद्रूपवत्त्वमेव दोषत्वमित्यस्तु; मैवम्, उक्तव्यवहारो नैवास्तीति न तावदर्वाग्दृशा शक्यं वक्तुम्, तस्मात्तस्य प्रामाणिकत्वं वा प्रामाणिकत्वेन सांशयिकत्वं वोभयथापि तदनुपपादनं दोष एव । किञ्च यद्रूपविशिष्टविषयकनिश्चयत्वव्यापकत्वमनुमितिप्रतिबन्धकतायां तद्रूपविशिष्टमादाय दुष्टत्वव्यवहारस्य स्वारसिकत्वेऽपि हेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यसङ्ग्रहमात्रसिद्धये उक्तोभयाभावघटितनिरुक्त्यादरस्य दुष्टत्वव्यवहारे पारिभाषिकत्वप्रसञ्जकत्वात्, हेत्वाभासविभागो हि भवतां भवतु पारिभाषिको न तु दुष्टत्वव्यवहारोऽपि, अन्यथेदानीन्तननिर्वचनापरिचितानां पूर्वतनानामिदानीन्तनानां च तादृशो दुष्टत्वव्यवहारानापत्तेः । किञ्च साध्याभाववद्वृत्तिसाधनादिकं न व्यभिचारः, अपि तु व्यभिचारि, व्यभिचारस्तु साधने वर्तमानं साध्याभाववद्वृत्तित्वादिकमेव, एवञ्च व्यभिचारिणो दोषलक्षणालक्ष्यत्वात्साध्याभाववद्वृत्तिसाधनादावतिव्याप्तिः, लक्षणानुरोधेन लक्ष्यान्यथानयने तु मौढ्यमेव, प्रामाणिकव्यवहारस्यैव लक्षणैरनुगम्यत्वात् । एवं च सति यदि साध्याभाववद्वृत्तित्वमेव व्यभिचारो न तु व्यभिचारिविशेषितं तत्, तत्रा तत्राव्याप्तिरपि, तद्विषयकनिश्चयसामान्यस्य साध्यव्याप्यहेतुमत्ताग्रहाविरोधित्वात् । किञ्च बाधादिस्थले कथं हेतोर्दुष्टत्वव्यवहारोपपत्तिः; स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेनेति तु नौचैर्वाच्यम्, तथाभूतानामसम्बन्धतायाः शब्दखण्डनशारदादावसकृदावेदितत्वात्, साध्याभाववद्वृत्तित्वादिकं यथा साधने प्रतीत्य तत्र दुष्टत्वव्यवहारस्ततो मात्रयाऽपि बाधादिस्थले न्यूनाधिकभावे तयोरेकतरस्मिन् दुष्टत्वव्यवहारस्यानुपपन्नताया अवश्योपेयत्वाच्च, एवञ्च सति साध्याभाववत्पक्षादिमात्रस्य बाधादिरूपतोपगमो नौचितीं चुम्बति । न चैतद्दोषपरिजिहीर्षया साध्याभाववत्पक्षकत्वादेर्बाधादिरूपतोपेयतामिति क्षिप्यते; तस्य साध्याभाववत्पक्षादिरूपविशिष्टान्तरघटितत्वेन लक्ष्यतायास्यक्तत्वात् । किञ्च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धस्य दुष्टत्वव्यवहारनियामकत्वोपगमेऽपि वह्निमान् द्रव्यादित्यत्र वह्निसाधने द्रव्यं दुष्टमितिवद् वह्निसाधने धूमो दुष्ट इत्यस्यापि व्यवहारस्यापत्तिः, द्रव्यत्वस्य प्रकृतहेतुतावच्छेदकस्य धूमे सद्भावात् । न च स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वसम्बन्धेन दोषवत्तां प्रकृतहेतुतावच्छेदकावच्छेदेनैव स्वीकृत्यातिप्रसङ्गो वारणीयः; निमित्तस्यैवानत्यापत्तिद्वारस्य कल्पनीयत्वात्, उक्तसम्बन्धस्य चातिप्रसक्तत्वात् । प्रकृतान्वयितावच्छेदकाभिन्नस्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वं सम्बन्ध इत्यपि न शोभनम्, स्वज्ञानविषयप्रकृत-

हेतुतावच्छेदकत्वसम्बन्धेन प्रकृतहेतुतावच्छेदकस्येव तदन्यस्यापि दुष्टत्वव्यवहारान्वयितावच्छेदकत्वं किमिति न स्यादित्यत्रोक्तापादनस्य पर्यवसाने हेतुतावच्छेदकेऽन्वयितावच्छेदकाभेदनिवेशस्य तदपरिहारत्वात्, प्रकृतान्वयित्वावच्छेदकत्वस्य ज्ञानस्य चानुपस्थितावपि दुष्टत्वव्यवहाराच्च; न च संसर्गस्य पूर्वमुपस्थिति र्नापेक्षणीया; दुष्टत्वव्यवहारस्यापि तद्विषयत्वानियमात् । यत्र प्रमेयवतो हेतुत्वं तत्र घटो दुष्ट इत्यादिव्यवहारस्याप्यापत्तेश्च, अन्वयितावच्छेदकहेतुतावच्छेदकाभेदात् । न चान्वयितावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकावच्छिन्नप्रकृतहेतुतावच्छेदकतात्वावच्छिन्नपर्याप्त्यनुयोगितावच्छेदकधर्मस्य सम्बन्धघटकता; पर्याप्तेर्निरस्तत्वात् । वह्निमान् काञ्चनमयधूमादित्यत्र काञ्चनमयत्वेन धूमो दुष्ट इत्यस्यानापत्तेश्च, कथञ्चित्प्रकारान्तरानुसरणे च तस्य व्यवहारविषयताया बाधितत्वमेवेति ।

किञ्च वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिव्याप्तिवारणाय विशिष्टद्वयाघटितत्वं निवेश्यते, एवं सति प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षस्य सत्प्रतिपक्षरूपत्वमस्ति न वा? नेतीति न वाच्यम्, प्राचीनानां तथा व्यवहारदर्शनात्, व्यवहारश्च परिष्कर्तृभिरनुगमनीयो न त्वन्यथयितव्य इति नूक्तमेव, अथ व्यवहारोऽसौ न युक्त इतितदननुगमेऽपि न क्षतिः; तर्हि लक्षणसत्त्वासत्त्वाभ्यां व्यवहारसदसत्त्वयोर्निर्णयः, व्यवहारसदसत्त्वाभ्याञ्च लक्षणसदसत्त्वयोर्निर्णय इति परस्पराश्रयः । न च - लोकोत्तरधीमतां व्यवहारो न लक्षणज्ञानायत्तोऽपि तु स्वतन्त्रः, तद्व्यवहारानुगमकलक्षणप्रहायत्तस्तु मन्दमतीनां व्यवहार इति कान्योन्याश्रय इति —वाच्यम्, प्रतिवादिनं प्रति स्वातन्त्र्योक्त्ययुक्तेः, निमित्तस्यावश्यं वक्तव्यत्वात्, अन्यथा व्यवहारस्याश्रद्धेयतापत्तेः । न च प्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकधर्मवत्त्वं दोषव्यवहारनिमित्तम्; अवच्छेदकधर्मदर्शनविधया प्रतिबन्धके जलवद्ध्रदादावतिप्रसक्तेः; प्रतिबन्धकतानतिरिक्तवृत्तित्वं प्रतिबन्धकतावच्छेदकत्वञ्चेत्तदापि वह्न्यभाववज्जलवद्वृत्तिजलवद्ध्रदेऽतिप्रसक्तेः; प्रतिबन्धकतानवच्छेदकविषयितानिरूपकाघटितधर्मवत्त्वञ्चेत्तदाऽसम्भव एव, वह्न्यभाववान् ह्रद इत्यादिज्ञाने निरवच्छिन्नह्रदत्वप्रकारतातन्निरूपितविशेष्यतादीनां प्रकृतानुमितिप्रतिबन्धकतानवच्छेदकत्वात्तदाश्रयाणां दोषघटकानां प्रतिबन्धकतानवच्छेदकविषयितानिरूपकत्वात् । अथ प्रतिबन्धकतानवच्छेदकत्वमत्र प्रतिबन्धकतावच्छेदकविषयताविशिष्टान्यत्वम्, वैशिष्ट्यञ्च स्वतादात्म्यस्वावच्छेद्यत्वान्यतरसम्बन्धेन, उक्तनिरवच्छिन्नविषयतानाञ्च स्वसमानाधिकरणप्रतिबन्धकतावच्छेदकीभूतविषयतावच्छेद्यत्वात् । नचैवमपि वह्निरवृत्तिरित्यत्र बाधे वह्निमत्त्वव्याप्तिः, तज्ज्ञानस्य वह्नित्वावच्छिन्नप्रकारताशालिनिश्चयत्वेन प्रतिबन्धकतया वह्न्याश्रयनिष्ठविशेष्यताया प्रतिबन्धकतावच्छेदकविषयतानात्मकत्वात् तदनवच्छिन्नत्वाच्च तादृशविषयताविशिष्टान्यतयोक्तबाधस्य तदाश्रयघटितत्वादिति वाच्यम्, स्वनिरूपितत्वस्यापि तृतीयसम्बन्धस्य वक्तव्यत्वात् । ननु तथापि वह्न्यभाववान् ह्रद इति ज्ञानस्यावच्छिन्नप्रतियोगित्वसम्बन्धावच्छिन्नवह्नित्वनिष्ठप्रकारतानिरूपिताभावत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितह्रदत्वावच्छिन्नविषयताशालिनिश्चयत्वेन लाघवात् प्रतिबन्धकत्वे वह्निविषयताया उक्तान्यतमसम्बन्धेन तादृशविषयताविशिष्टत्वाभावात्तदाश्रयघटितत्वाच्च वह्न्यभाववद्ध्रदेऽव्याप्तिः, नचोक्तरूपेण प्रतिबन्धकत्वे बाधत्वमपि वह्नित्वयद्भाववद्ध्रदस्यैवेति वाच्यम्, वह्न्यभाववान् ह्रद इतिज्ञानस्यैवोक्तरूपेण प्रतिबन्धकतया वह्न्यभाववद्ध्रदस्यैव दोषत्वात्, भग्नैवाभावे स्वरूपतो वह्नित्वस्य प्रकारतासम्भवात्, अन्यथा सकलवह्न्यादिघटितवह्नित्वत्वानुपस्थितिदशायां बाधग्रहस्याप्रतिबन्धकतापत्तेः, तद्व्यक्तेरपि तद्व्यक्तित्वेन भानौचित्याद्वह्नित्वरूपतद्व्यक्तिप्रकारकज्ञानस्यापि स्वरूपतो वह्नित्वप्रकारकत्वाभावादिति चेन्न, स्वावच्छेद्यनिरूपितत्वस्याप्यन्यतमकोटौ प्रवेश्यत्वात्, उक्तबोधीयवह्निविषयतायाः प्रति-

बन्धकतावच्छेदकाभावत्वावच्छिन्नप्रकारतावच्छेद्याभावत्वावच्छिन्नविशेष्यतानिरूपितत्वेन तादृशविषयताविशिष्टान्यत्वाभावेन नाव्याप्तिरिति चेन्न, धूमाभाववद्वृत्तिर्वह्निर्द्रव्यमितिज्ञानविषये द्रव्यत्वविशिष्टे धूमाभाववद्वृत्तिवह्नावतिव्याप्तेः; द्रव्यत्वनिष्ठप्रकारतायाः प्रतिबन्धकतावच्छेदकीभूतया धूमाभाववद्वृत्तित्वनिष्ठप्रकारतानिरूपितवह्नित्वावच्छिन्नविशेष्यतयाऽवच्छिन्ना या वह्नित्वावच्छिन्नविशेष्यता तन्निरूपितत्वात् । न च विशिष्टान्तराघटितत्वमपि विवक्षणीयमुक्तरूपं तु विशिष्टान्तरघटितमिति वाच्यम्, विशिष्टान्तरादिघटितस्यापि कुतो न दोषत्वमिति जिज्ञासायां भवता तद्व्यावृत्तं दोषत्वप्रयोजकं निर्वाच्यम्, एवञ्च तत्र विशिष्टान्तराद्यघटितत्वं न निवेशनीयम्; तद्व्यावृत्तप्रयोजकनिर्णयात्पूर्वं विशिष्टान्तरादिघटिते दोषत्वस्य सांशयिकत्वात्, एवञ्चान्योन्याश्रयोऽपि, तद्व्यावृत्तदोषत्वप्रयोजकनिर्णये तस्यादोषत्वनिर्णयः, तस्यादोषत्वनिर्णये तु तद्भेदघटितस्य तद्व्यावृत्तदोषत्वप्रयोजकस्य निर्णय इति । तदित्थं दोषत्वव्यवहारनिमित्तमपि यदा न निर्वक्तुं शक्यं तदा का कथा तदवच्छेदेन प्रवर्तनीयानां लक्षणानां निर्वक्तुमशक्यतायाः ।

नन्वेवं प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षव्यावृत्तदोषत्वप्रयोजकानवधारणेऽस्तु कथञ्चित्प्राचीनव्यवहारबलात्तस्य सत्प्रतिपक्षरूपत्वमित्याद्यः पक्ष इति चेन्न, विशिष्टद्वयघटितत्वेन तत्राव्याप्तेर्दोषत्वापत्तेः । ननु सत्प्रतिपक्षघटकविशिष्टद्वयविषयताभिन्नविशिष्टद्वयविषयताशून्यप्रतीतिविषयत्वं विशिष्टद्वयाघटितत्वपदार्थः, नचैवमपि विशिष्टान्तराघटितत्वस्यापि लक्षणे निविष्टत्वेनोक्तसत्प्रतिपक्षस्य च विशिष्टान्तरघटिततयाऽव्याप्तिः, जलव्यापकवह्न्यभावसमानाधिकरणजलवान् ह्रदद्वयस्येव जलव्यापकवह्न्यभावाधिकरणनिरूपितवज्जलवान् ह्रद इत्यस्यापि ज्ञानस्य ज्ञानविशिष्टज्ञानत्वेन प्रतिबन्धकतया तादृशनिरूपितवज्जलवद्ध्रदत्वविशिष्टस्य विशिष्टान्तरत्वात्, विशिष्टान्तरविषयतायामपि सत्प्रतिपक्षविषयताभेदोक्तौ तु मेयत्वविशिष्टतादृशसत्प्रतिपक्षेऽतिव्याप्तेः, शुद्धसत्प्रतिपक्षस्य विशिष्टान्तरत्वेऽपि तदीयविषयतायां तदीयविषयताभिन्नत्वाभावादिति वाच्यम्, सत्प्रतिपक्षविषयित्वाव्यापकविषयिताशून्यज्ञानीयसत्प्रतिपक्षविषयिताभेदस्य विशिष्टान्तरविषयितायां वक्तव्यत्वात्, मेयत्वविशिष्टसत्प्रतिपक्षविषयकज्ञानीयसत्प्रतिपक्षविषयितायां सत्प्रतिपक्षविषयित्वाव्यापकविषयिताशून्यशुद्धसत्प्रतिपक्षज्ञानीयतद्विषयिताभेदस्य सत्त्वान्नातिव्याप्तिः, अत्र मनःप्रत्ययाभावे तु स्वानवच्छेदकविषयिताशून्यज्ञानीयत्वसम्बन्धेन साध्याभावानुमितिजनकताविशिष्टान्यत्वं विशिष्टान्तरविषयितायां वक्तव्यम्, उक्तनिरूपितवज्जलवद्ध्रदविषयिता तु जनकताविशिष्टैवेति चेन्न, पर्वतो धूमवान् वह्नेरित्यादौ सत्प्रतिपक्षाप्रसिद्धया तत्र व्यभिचारादावव्याप्तेः । न च शब्दैक्यस्याकिञ्चित्करत्वात्सत्प्रतिपक्षाप्रसिद्धिस्थले तद्विषयिताभिन्नत्वं नोपादेयमिति वाच्यम्, अर्थानुगमासम्भवेऽपि शब्दविशेषितव्यवहारस्यानुगतस्यैवोपलब्ध्या शब्दैक्यस्याकिञ्चित्करत्वोक्तेरकिञ्चित्करत्वात्, कथमन्यथा धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ व्यभिचारघटितबाधादौ विशिष्टान्तरघटिते महता प्रबन्धेनाव्याप्त्युपपादनतत्परिहारौ सङ्गच्छेयाताम्, तत्र विशिष्टान्तराघटितत्वानिवेशस्यैव सरलसरणित्वात्, तस्माच्छब्दतोऽनुगतस्यापि व्यवहारस्यानुरोधनं विधेयमेव । न चास्त्वेवं सति प्रतिहेतुविषयतानिरूपिताधिकरणविषयतानिरूपितवृत्तित्वविषयतानिरूपितेत्यादिक्रमेण वैज्ञानिकसत्प्रतिपक्षविषयिताभेदनिवेश इति वाच्यम्, यादृशस्थलविषये सत्प्रतिपक्षभ्रमोऽपि नास्ति तत्रागतेः, अव्याप्तिसन्देहेऽपि लक्षणासिद्धिरेव । एतेन विशिष्टद्वयाघटितत्वमनिवेश्य ज्ञानवैशिष्ट्यावच्छिन्नत्वसत्प्रतिपक्षविषयत्वानवच्छिन्नत्वोभयाभाववत्त्वनैव प्रतिबन्धकतायां निवेशनीयम्, वस्तुतस्तु प्रकृतहेतुनिष्ठसाध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यस्यापि सत्प्रदायासाधारण्यविषयितानवच्छिन्नत्व-

घटितत्रितयाभाव एव वक्तव्य इत्यपि नाशङ्कनीयम्, यत्रासाधारण्यभ्रमस्याप्यप्रसिद्धिस्तत्राप्यव्याप्तेश्च । प्रतिहेतुव्यापकसाध्याभावकालीनप्रतिहेतुमत्पक्षेऽतिव्याप्तेश्च, तन्निश्चये प्रतिहेतुव्यापकसाध्याभावसमानाधिकरणप्रतिहेतुमत्पक्षनिश्चये चैकस्या एव प्रतिबन्धकतायाः सत्त्वात्तस्याश्च सत्प्रतिपक्षविषयत्वावच्छिन्नत्वात् ।

किञ्च विशिष्टद्वयाघटितत्वमिदं यद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयविशिष्टयद्रूपावच्छिन्नविषयत्वाव्यापकविषयताशून्ययद्रूपावच्छिन्नविषयताशालिनिश्चयत्वं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयताशून्यप्रतीतिविषयत्वम्, जातिमद्वान् वह्न्यभाववानितिनिश्चयविशिष्टस्य जलवान् ह्रद इति निश्चयस्य जलवान् वह्न्यभाववानितिनिश्चयविशिष्टस्य जातिमाञ्जलवानितिनिश्चयस्य चाप्रतिबन्धकत्वेन तयोर्वारणायाव्यापकविषयताशून्यत्वोक्तिः, अधिकं त्वन्यत्रानुसन्धेयम्, किन्त्वत्र सर्वत्र यद्रूपपदेन वह्न्यभाववद्ध्रदत्वादिकस्योपादानसम्भवेन तद्रूपावच्छिन्नविषयताविशिष्टतद्रूपावच्छिन्नविषयताशून्यत्वस्य वह्न्यभाववद्ध्रदादिप्रतीतावभावेनासम्भववारणाय विशिष्टद्वयविषयतायां प्रकृतानुमितिप्रतिबन्धकतातिरिक्तवृत्तित्वमपि प्रवेष्टव्यम्, परस्परत्वावच्छिन्नविषयताशून्यज्ञानीयत्वं वा निवेशनीयम्, परस्परत्वस्य दुर्वचत्वेन तन्निवेशप्रणाली पुनरवसेया, तथाहि—प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताविशिष्टरूपवत्त्वं लक्षणम्, वैशिष्ट्यं तु स्वनिष्ठो यः किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयत्वव्यापकत्वरूपोऽभावस्तत्प्रतियोगितानिरूपितपरम्परीयावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वस्वाभाववत्प्रतीतिविषयितानिरूपकतावच्छेदकत्वाभ्याम् अभावीयप्रतियोगितावच्छेदकसम्बन्धस्तु स्वनिष्ठो यः किञ्चिद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशून्यकिञ्चिद्रूपावच्छिन्नविषयिताशालिनिश्चयविशिष्टतादृशनिश्चयत्वव्यापकत्वरूपोऽभावस्तदीयप्रतियोगितानिरूपितपरम्परीयनिश्चयनिष्ठावच्छेदकताविशिष्टविषयितारूपः, अत्रोभयत्र किञ्चिद्रूपावच्छिन्नविषयिताशून्यत्वेन परस्परावच्छिन्नविषयिताशून्यत्वमुक्तम् विषयितायामवच्छेदकतावैशिष्ट्यन्तु स्वविशिष्टरूपावच्छिन्नत्वस्वविशिष्टरूपावच्छिन्नविषयितासामानाधिकरण्योभयसम्बन्धेन, स्वं हि द्वितीयनिश्चयनिष्ठावच्छेदकता । आद्यं वैशिष्ट्यं स्वनिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपिततद्वशिष्टभेदप्रतियोगितावच्छेदकत्वरूपाव्यापकत्वगर्भीभूताधिकरणनिष्ठपरम्परीयावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नप्रथमनिश्चयनिष्ठावच्छेदकतानिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्वेति संसर्गत्रयेण । द्वितीयं वैशिष्ट्यं तु स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयित्वनिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व—स्वनिरूपितसामानाधिकरण्यसम्बन्धावच्छिन्नावच्छेदकतावत्त्वेति सम्बन्धद्वयेन । अवच्छेदकतावत्ता च स्वनिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतावत्त्व-स्वनिरूपितशून्यत्वनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपिततद्वशिष्टभेदप्रतियोगितावच्छेदकत्वरूपाव्यापकत्वघटकाधिकरणनिष्ठावच्छेदकतानिरूपितविषयितानिष्ठावच्छेदकतानिरूपितावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकत्वोभयसम्बन्धेनेति । परन्त्वेवं गगनाभाववदभाववत्कालीनः घटो गगनवान्, रूपं नीलरूपवदित्यादिस्थलेष्वभाववत्तादृशघटनीलरूपाभाववन्नीलादावतिव्याप्तिः; तत्र विशिष्टद्वयविषयितायाः प्रतिबन्धकतातिरिक्तवृत्तित्वाभावात्, परस्परत्वावच्छिन्नविषयिताशून्यज्ञा-

नीयत्वाभावाच्च । न च यद्रूपावच्छिन्नविषयितायामभाववत्तादृशघटत्वाद्यवच्छिन्नविषयिताभेदा निवेश्या इति वक्तव्यम्, गगनाभाववद्भाववत्कालीनघटोऽभावाभाववानित्यादावभाववत्तादृशघटादेर्दोषतया लक्ष्यत्वेन तत्राव्याप्त्यापत्तेः । न च शब्दैक्यमकिञ्चित्करमिति यत्र तस्य लक्ष्यत्वं तत्र तद्विषयिताभेदा न निवेशनीया इति साम्प्रतम्, दत्तोत्तरत्वात् । यदि तु परस्परस्वावच्छिन्नविषयिताशून्यत्वमुपेक्ष्योक्तरीत्या प्राप्तस्यासम्भवस्य भङ्गाय केनचित्प्रकारान्तरेण परिष्क्रियते, तदाऽभावो गगनत्ववानाधेयत्वादित्यत्रासाधारण्येऽव्याप्तिः, तद्घटकव्यापकत्वे हेतुमत्पक्षप्रवेशेन तन्निश्चये तादृशविशिष्टद्वयविषयिताशून्यत्वाभावात् । विशिष्टद्वयविषयितायामसाधारण्यविषयिताभिन्नत्वनिवेशे तु सत्प्रतिपक्षविषयिताभिन्नत्वनिवेशवद्दूषणम् । एवं यत्रावच्छेदकधर्मदर्शनविधया प्रतिबन्धकं विशिष्टद्वयस्य समूहालम्बनमिव प्रत्येकं ज्ञानद्वयमपि न जातमिति सम्भाव्यते, तत्राव्याप्तिसम्भावनापि दोष एव ।

एवं प्रमेयत्वविशिष्टव्यभिचारादेरलक्ष्यतां स्वीकृत्य विशिष्टान्तराघटितत्वं निवेश्यते, धूमव्यभिचारिवह्निमान् धूमवान् वह्नेरित्यादौ व्यभिचारघटितबाधादेरपि व्यभिचाराद्यात्मकविशिष्टान्तरघटितत्वेन तत्राव्याप्तिवारणाय तु स्वावच्छिन्नानिरूपितयत्किञ्चिद्विशिष्टविषयित्वावच्छेद्यत्वाभाववत्प्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यत्त्वं तद्वत्त्वमनुमितिप्रतिबन्धकताघटितकल्पे विवक्ष्यते, तथासति व्यभिचारघटितबाधत्वावच्छिन्नानिरूपितव्यभिचारविषयितावच्छेद्यताभाववती तादृशबाधग्रहनिष्ठानुमितिनिरूपितप्रतिबन्धकतेत्यदोषः । नच सर्वं गगनवदित्यत्र गगनाभाववद्घटत्वावच्छिन्नानिरूपितगगनाभाववत्पटादिविषयित्वावच्छेद्यप्रतिबन्धकतायामेव गगनाभाववद्घटत्वावच्छिन्नविषयिताऽवच्छेदिकेत्यव्याप्तिरिति वाच्यम्, स्वावच्छिन्नानिरूपितविषयितायां स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्य विवक्षणीयत्वात्, एवञ्च तादृशज्ञानीयविषयिता बाधैकदेशविषयितेति तदनवच्छिन्नत्वमस्ति बाधप्रतिबन्धकतायामित्यदोषः । न च जातिमद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयतादृशह्रदत्वावच्छिन्नानिरूपितवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितासामान्यानवच्छेद्यप्रतिबन्धकतावच्छेदकत्वमेव जातिमद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायामिति तत्रातिव्याप्तिः, नहि जातिमान् वह्न्यभाववानितिज्ञानीयवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितायां जातिमान् वह्न्यभाववान् ह्रद इति ज्ञाननिष्ठप्रतिबन्धकतावच्छेदकत्वं वर्तत इति वाच्यम्, यद्रूपावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वस्यापि स्वावच्छिन्नानिरूपितविषयितायां वक्तव्यत्वात्, एवं सति वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीया वह्न्यभाववद्ध्रदत्वावच्छिन्ना विषयिता जातिमान् वह्न्यभाववानितिज्ञानव्यावृत्तैव, तत्सामान्यावच्छेद्यायामेव बन्धप्रतिबन्धकतायां जातिमद्वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयिताया अवच्छेदकत्वमिति नातिव्याप्तिरिति वदन्ति । अत्रेदं वक्तव्यम्, तादृशावच्छेद्यत्वाभावो विशेषाभावो वा विवक्षितः सामान्याभावो वा, नाद्यः, मेयत्वविशिष्टव्यभिचाराद्यावतिव्याप्तितादवस्थ्यात्, तत्त्वावच्छिन्नानिरूपितव्यभिचारीयैकदेशविषयित्वानवच्छेद्यत्वस्य तज्ज्ञाननिष्ठप्रतिबन्धकतायां सत्त्वात् । न द्वितीयः, तस्य स्मृत्यन्यत्वखण्डनशारदायां भूयो निरस्तत्वात् । एतेन—अनुमित्यप्रतिबन्धकत्वघटिताव्यवदन्तिकल्पे विशिष्टान्तरविषयित्वाप्रयोज्यत्वविषयिताप्रयोज्यसाध्यावगाहित्वाद्युभयाभावप्रयोजकाभावाधिकरणताकत्वमेव विशिष्टान्तराघटितत्वं वक्तव्यम्, यत्किञ्चिद्विशिष्टान्तरविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वं त्वप्रयोज्यान्तार्थः, व्यभिचारघटितबाधादिस्थले च शुद्धव्यभिचारविषयितात्वमेव तादृशं रूपम्, एवञ्च तद्घटकव्यभिचारादिविषयिताया बाधविषयितान्तःपातिविषयितामात्रवृत्तिरूपेण पक्षे साध्यावगाहिताविरहवत्ताप्रयोजकत्वेऽपि नाव्याप्तितादवस्थ्यम् । सर्वं गगनवदिति ज्ञानं प्रति गगनाभाववद्घटपटादिनि-

श्रयानां गगनाभावत्वावच्छिन्नप्रकारतानिरूपितावच्छिन्नविशेष्यताशालिनिश्चयत्वेनानुगतरूपेणैव प्रतिबन्धकतया गगनाभाववद्घटत्वावच्छिन्नविषयिताप्रयोज्यायां तादृशोभयाभावप्रयोजिकायां पक्षे साध्यवत्त्वावगाहित्वाभावाधिकरणतायां गगनाभाववत्पटादिरूपविशिष्टान्तरविषयितायास्तद्व्यापकगगनाभावत्वावच्छिन्नप्रकारतानिरूपितावच्छिन्नविशेष्यतात्वावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यतायाः सत्त्वात्स्वपदेन गगनाभाववद्घटादेर्धर्तुमशक्यत्वादव्याप्तिवारणाय तु विशिष्टान्तरविषयितायां स्वावच्छिन्नविषयित्वाव्यापकविषयिताशून्यज्ञानीयत्वमुपादेयमधिकं त्वन्यत्रानुसन्धेयमिति परास्तम् । अत्र यदि स्वावच्छिन्नविषयकप्रतीतिविषयतावच्छेदकत्वसमानाधिकरणावच्छिन्नत्वसम्बन्धावच्छिन्नावच्छेदकतानिरूपकविषयतानिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगितानिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभावद्रूपावच्छिन्नप्रयोजकतानिरूपितप्रयोज्यता नास्तीतिधीसिद्धः सामान्याभावो विवक्षितस्तदा स्मृत्यन्यत्वखण्डनसञ्चारः, यदि तु विशेषाभावः, तदा मेयत्वविशिष्टव्यभिचारत्वावच्छिन्नविषयिताप्रयोज्यायां तादृशोभयाभावप्रयोजकहेतुधर्मिकव्याप्त्यवगाहित्वाभावाधिकरणतायां तादृशव्यभिचारत्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकबाधत्वावच्छिन्नविषयितात्वव्यापकरूपावच्छिन्नाप्रयोज्यत्वसत्त्वेनातिव्याप्तितादवस्थ्यम् ।

एतेन जातिमान् वह्न्यभाववानित्यादिज्ञानस्यापि वह्न्यभाववद्ध्रदत्वाद्यवच्छिन्नविषयकत्वात् ह्रदो वह्निमानित्याद्यनुमित्यप्रतिबन्धकत्वाच्चासम्भवोऽपि समर्थितः । न च यद्रूपावच्छिन्नविषयितात्वं यद्रूपविशिष्टविषयकत्वसमानाधिकरणाभावप्रतियोगितावच्छेदकं तद्रूपावच्छिन्नविषयित्वशून्ययद्रूपविशिष्टविषयकनिश्चयत्वं प्रकृतानुमितिप्रतिबन्धकतानतिरिक्तवृत्ति तद्रूपवत्त्वं विवक्षणीयम्, वह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयितात्वं वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितासमानाधिकरणाभावप्रतियोगितावच्छेदकमिति तदवच्छिन्नविषयिताशून्यमेव ज्ञानं ग्राह्यमिति वाच्यम्, ज्ञानविशेषवृत्तित्वविशिष्टवह्न्यभाववद्ध्रदत्वावच्छिन्नविषयित्वाभावस्यापि वह्न्यभाववद्ध्रदत्वावच्छिन्नविषयितासमानाधिकरणत्वात्तथाप्यसम्भवात् । एवं तज्ज्ञानवृत्तित्वविशिष्टवह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयित्वशून्यत्वस्य जातिमान् वह्न्यभाववानितिज्ञानेऽपि सत्त्वेन तस्य चाप्रतिबन्धकत्वेनाप्यसम्भवात् । यदि तु यद्रूपावच्छिन्नविषयितावद्वृत्तियः किञ्चिद्रूपावच्छिन्नविषयिता नास्तीतिप्रतीतिसिद्धः किञ्चिद्रूपनिष्ठावच्छेदकताभिन्नावच्छिन्नतात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकतादृशावच्छेदकतानिरूपकावच्छिन्नत्वनिष्ठावच्छेदकताभिन्नविषयितात्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकप्रतियोगिताकोऽभावस्तदीयप्रतियोगिविषयिता नास्तीति प्रतीतिसिद्धाभावं तद्व्यक्तित्वेनोपादाय तन्निष्ठावच्छेदकताभिन्ना सती यद्रूपावच्छिन्नविषयितानिष्ठावच्छेदकताभिन्ना तादृशनिश्चयत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपकेत्यादिरीत्या निश्चयनिष्ठावच्छेदकतानिरूपकवृत्तित्वनिष्ठावच्छेदकतानिरूपकभेदनिष्ठावच्छेदकतानिरूपकप्रतियोगित्वनिष्ठावच्छेदकतानिरूपकावच्छेदकतात्वावच्छिन्नप्रतियोगिताकाभावः प्रतिबन्धकतायां निवेश्यते, तदापि स्मृत्यन्यत्वखण्डनोक्तरीत्या तत्तदवच्छेदकतानिरूपकेऽपि तत्तदवच्छेदकतानिरूपकत्वाभावः सम्पाद्य इत्यसम्भवः, ह्रदो जात्यभाववानित्यादौ जातिमद्ध्रदेऽव्याप्तिश्च, जातिमान् जातिमानित्यप्रतिबन्धकीभूतज्ञानावारणात्, जातिमज्जातिमत्त्वस्य जातिमत्त्वानतिरिक्ततया तदवच्छिन्नविषयत्वस्याव्यापकत्वानुपपत्तेः । यदि तु यद्रूपावच्छिन्नविषयितात्वमित्यादेर्यद्रूपावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयितात्वं यादृशसमुदायवृत्तिसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकनिरूपकताकविषयित्वसमानाधिकरणाभावप्रतियोगितावच्छेदकमित्यादिकोऽर्थ उच्यते, तदापि समुदायत्वस्य धीविशेषविषयत्वरूपतया तत्क्षणवृत्तित्वविशिष्टवह्न्यभाववद्ध्रदत्वगतसमुदायत्वावच्छिन्नत्वादिघटितविषयत्वाभावस्य

वह्न्यभाववद्भ्रदत्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयितासमानाधिकरणत्वादसम्भवः, एवं तल्लक्षणवृत्तित्वविशिष्टवह्न्यभाववज्जातिमत्त्वगतसमुदायत्वावच्छिन्नानुयोगिताकपर्याप्तिकावच्छेदकताकविषयित्वाभावस्य वह्न्यभाववज्जातिमत्त्वावच्छिन्नविषयताकज्ञाने सत्त्वयाऽप्यसम्भवः। अत्रापीतरवारकप्रकारानुसरणे चोक्तरीत्यैवासम्भवः, अन्यथा त्वनवस्थेति। एतच्च विशिष्टान्तराघटितत्वविशिष्टद्वयाघटितत्वयोरप्युक्तरीत्याऽव्यापकीभूतविषयिताशून्यत्वनिवेशस्यावश्यकत्वेन तत्रापि सर्वं समानमिति। एवं तत्र तत्र प्रविष्टानतिरिक्तवृत्तित्वादावपि समानोऽयं चर्च इति। एवं च ह्रदत्वादेरभावरूपतोपगन्तृसौगतदृष्ट्याऽभावत्वेन ह्रदत्वावगाहिनि वह्न्यभाववानभाववानितिज्ञाने वह्न्यभाववद्भ्रदत्वावच्छिन्नविषयत्वस्य सद्भावेनाव्यापकीभूतविषयिताशून्यत्वस्यापि च तत्र सत्त्वेनासम्भवः प्रसञ्जनीयः, सर्वांशे प्रमात्वादिविवक्षायां तु पूर्वोदितं तत्खण्डनमवतारणीयम्। एवमत्र व्यापकतादेरपि प्रविष्टस्य दुर्ग्रहत्वमनुमानखण्डनोक्तरीत्याऽनुसन्धेयम्। प्रतिबध्यप्रतिबन्धकभावस्याप्रामाणिकत्वनिबन्धनस्त्वसम्भवः प्रागुक्त एव। एवं तद्रूपवत्त्वं दोषत्वमित्यत्रापि प्रत्येकमिलितविकल्पानुपपत्तिरन्यतमत्वघटितकल्पवद्द्रष्टव्या, एकधर्मावच्छिन्नपक्षसाध्यहेतुकस्थलीयानां यावतां दोषाणामेकैकेरवश्याद्रर्तव्यत्वात्, अन्यथाऽनुमितिपदस्यानुमितितत्कारणज्ञानोभयपरत्वोक्तिः समूहालम्बनानुमितिपरत्वोक्तिर्वोन्मत्तकृत्यतामालम्ब्येत। दोषनिश्चयेऽनाहार्यत्वाप्रामाण्यज्ञानानास्कन्दितत्वाव्याप्यवृत्तित्वज्ञानानास्कन्दितत्वनिवेशनिबन्धनाश्च दोषाः स्मृत्यन्यत्वखण्डनोक्तप्रणाल्यैवानुसन्धेयाः।

ननु तथापि सरलया सरण्या निष्कृष्टलक्षणेषु को दोष इत्युच्यतामिति चेत्सर्वं एव, अन्यथा निष्कृष्टलक्षणेषु दोष इति सप्तम्या सम्बन्धभानानुपपत्तेः, तस्यालीकत्वेऽसत्ख्यात्यापत्तेः, सदसदुपरागासम्भवाच्च, सत्त्वे चास्मदभीष्टसिद्धेः, सत्त्वासत्त्वाभ्यां सन्दिग्धत्वेऽपि दोषसंशये लक्षणत्वानुपपत्तिरेव। न च लक्षणनिष्ठविषयतानिरूपितदोषनिष्ठविषयताशालिज्ञानजननेऽनुयोगः; विषययोः सम्बन्धाभाने विषयितयोर्निरूप्यनिरूपकभावानुपपत्तेः। ननु तादृशधीविषयः संसर्गोऽपि सन्नेव किन्तु नासौ दोषलक्षणयोः, अपि त्वन्यत्रैव प्रसिद्धः, न चैवं तस्य संसर्गस्यापि संसर्गेण ज्ञानविषयताऽऽसादनीयेति दोषप्रतियोगिकसम्बन्धानुयोगित्वस्य लक्षणेषु भाने तस्य लक्षणेषु सत्त्वासत्त्वादिनोक्तविकल्पदोषप्रसर इति वाच्यम्, सम्बन्धसम्बन्धाग्रहेऽपि विशिष्टबुद्धेः सम्भवादिति चेन्न, सम्बन्धो हि किञ्चित्प्रतियोगिकः किञ्चिदनुयोगिक एव चानुभूयत इति सार्वजनीनम्, तथा च कथं न प्रतियोगित्वानुयोगित्वयोर्विशिष्टधीविषयतेति। न च भूतले घटस्य संयोग इत्यादिबुद्धौ प्रतियोगित्वानुयोगित्वयोर्भानेऽपि संयोगादेः संसर्गतया भानस्थले न तयोर्भानम्, नहि संयोगेन घटादिप्रकारिका धीरवगाहते ते इति वाच्यम्, संसर्गतया भासमानस्य सम्बन्धो न भासते इत्यस्य परिभाषामात्रत्वात्, नहीदं सर्वलोकसाक्षिकम्, तार्किकविशेषानुभवस्तु व्युत्पत्त्यनुसारित्वान्न वस्तुव्यवस्थापनायादरार्हः। अन्यथा घटादौ विशेषणतादिकमपि न भायात्, न वा भवेत्, तस्य संसर्गीयप्रतियोगित्वादिरूपत्वात्, अतिरिक्तपदार्थत्वे मानाभावात्, प्रकारतात्वादेः सम्बन्धविषयतानिरूपितप्रतियोगित्वविषयतानिरूपितविषयतात्वादिरूपतापक्षेऽपि प्रतियोगित्वादिभानं ध्रुवमेव। नो चेत् 'संयोगो न रूपप्रतियोगिकः' 'संयोगो न प्रतियोगिततयाऽनुयोगितया वा रूपविशिष्टः' 'रूपं न प्रतियोगितया संयोगविशिष्ट'मित्यादिधीदशायामपि संयोगेन रूपादिप्रकारकबुद्धेरनुभवविरुद्धाया आपत्तेः। तस्माद्दोषसम्बन्धानुयोगित्वस्य लक्षणेषु भाने तस्य सत्त्वासत्त्वादिविकल्पः सावकाश एवेति। तदेतत्सर्वं सामान्यलक्षणखण्डनं नव्यपरिष्कृतहेत्वाभासविशेषलक्षणसाधारणमेवेति तत्र तत्रातिदेक्ष्यत इति शिवम्।

हेत्वाभाससमाभासबुभुत्सूनां कृते कृतः। सामान्यलक्षणाक्षेपसंक्षेपोऽयं विजृम्भताम्॥

इति खण्डनशारदायां सामान्यनिरुक्तिखण्डनम्।

णम्, हेत्वाभासान्तराणामपि ह्यसिद्धप्रवेश एवं सति स्यात्, व्याप्तिं पक्षधर्मतां तत्प्रमितिं वा न विरुन्धतां हेतुदोषत्वासम्भवात्।

## हेत्वाभासपाञ्चविध्योपपादनम्।

नेदमीदृशम्, तथाहि—केचिद्दोषा व्याप्तिपक्षधर्मतातत्प्रमितिविरहात्मानः,

---

किमा कृतमाक्षेपमुपपादयति तथाहीत्यादिना। व्याप्तीत्यादि। प्रकृतसाध्यव्याप्तिप्रकृतपक्षधर्मताप्रकारकप्रमितेर्विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाभावोऽसिद्धिरित्यर्थः। ज्ञायमानस्येव स्वरूपसतोऽपि प्रतिबन्धकस्य हेत्वाभासत्वे न काचिक्षतिरिति प्राचामाशयः। नहि ज्ञानगर्भमेव तल्लक्षणमिति राज्ञामाज्ञा। आत्ममनोयोगाभावकामिनीजिज्ञासासिष्याद्देरपि हेत्वाभासत्वव्यवहारस्तु नैवमापद्यते, हेत्वाभासलक्षणानुगमासम्भवे वक्ष्यमाणनीत्या व्याप्तिपक्षधर्मताविरहादेरसिद्ध्यात्मकत्वासम्भवे च तादृशप्रमितिविरहस्यैवान्यस्य च हेत्वाभासत्वव्यवहारविषयस्यान्यतमत्वेन हेत्वाभाससामान्यलक्षणे निवेशनीयत्वात्। इष्टं च सिद्धेर्हेत्वाभासत्वं प्राचामित्यनुपदं व्यक्तीभविष्यति। वस्तुगत्याऽव्याप्येऽपक्षधर्मे वा व्याप्यत्वेन पक्षधर्मत्वेन वा निश्चितेऽव्याप्तिवारणाय प्रमितिस्थाने निश्चयो नोक्तः। सद्धेतोस्तादृशप्रमित्यविषयत्वदशायामसिद्धत्वं स्पष्टमेव, एवञ्च कालविशेषपुरुषविशेषनियन्त्रितत्वमसिद्धेरापन्नमित्यन्यत्। अन्यत्तुपरिष्टाद्वक्ष्यते। हेत्वाभासेति। हेतुवदाभासा इति व्युत्पत्त्या दोषपरम्। असिद्धप्रवेशः = असिद्धिप्रवेशः। ननु कोऽयमसिद्धिप्रवेशः, असिद्धिरूपत्वं वा, असिद्धिव्याप्यत्वं वा, नाद्यः, साध्याभाववत्पक्षादिरूपबाधादेरुक्तासिद्ध्यनात्मकत्वात्, न द्वितीयः, इष्टापत्तेः, बाधादिस्थलेऽसिद्धेरावश्यकत्वात्, गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादावपि कालिकव्याप्त्यप्रमितेः सत्त्वात्, तद्देशकालावच्छिन्नसाध्यानुमितिं प्रति च साधने तद्देशकालावच्छेदेनैव साध्यसामानाधिकरण्यग्रहस्य हेतुत्वात्, विरोधिपरामर्शदशायां सद्धेतोरपि सत्प्रतिपक्षत्वव्यवहारेऽपि तस्य दुष्टत्वाभावात्, साध्याभावव्याप्यवत्पक्षाभावादित्याशङ्क्याह व्याप्तिमिति। वाकारः समुच्चये। न विरुन्धतामिति। नञ्समासनियता न प्रामाणिकीतिभावः। विरुद्धत्वमभावव्याप्यत्वम्। अत्र द्वितीयान्तार्थस्य व्याप्त्यादिप्रतियोगिकत्वस्यान्वयः। व्याप्तिपक्षधर्मताप्रमित्यभावव्याप्यत्वाभिधानस्यैव प्रकृते उचितत्वेऽपि तद्दृढतायै व्याप्तिपक्षधर्मताऽभावव्याप्यत्वाभिधानमिति द्रष्टव्यम्. प्रमित्यभावस्य विषयाभावप्रयोज्यत्वात्। तथा चासिद्धेः सार्वत्रिकत्वे सैवैका हेत्वाभासोऽस्तु, तत्पञ्चत्वं तु पञ्चत्वमेव गतमस्त्विति भावः।

नेदमीदृशमिति। असिद्धिरेव हेत्वाभासः स्यादिति त्वदभिप्रेतं न युक्तमित्यर्थः। असिद्धेर्व्यापकत्वेऽपि तदुद्भावनेन वादिनिवृत्तिविजयौ विपरीतकोटिसाधकहेतौ प्रामाण्यग्रहविघटनद्वारा तत्त्वनिश्चयश्च यथा, तथा लिङ्गविधया तज्ज्ञापकतया तदुपजीव्यस्य व्यभिचारादेः साक्षादनुमितिप्रतिबन्धकस्य सत्प्रतिपक्षादेश्चोद्भावनेनापीति पञ्चानामेव हेत्वाभासत्वं युक्तमिति भावः। एतदेव विशदयन्नाह तथाहीति। केचित् = असिद्धिशब्दिता व्यभिचाराद्युपजीवकाः। अत्रानुमितिकारणविरहरूपतया, तत्प्रयोजकतया, अनुमितिप्रतिबन्धकतया च दोषाणां विभागमभिप्रेत्य राशित्रयकरणम्, एवञ्च सति व्याप्तिपक्षधर्मताप्रमितेरिव प्रमीयमाणव्याप्तिपक्षधर्मतयोरपि कारणतायाः 'विशिष्टे कारणताग्राहकमानेन विशेषणेऽपि कारणता गृह्यत' इतिन्यायेनानुमन्तव्यतया व्याप्तिपक्षधर्मताप्रमितिविरहस्येव तद्विषयविरहस्याप्यसिद्धिरूपत्वमौचित्यादर्जितमिति 'तत्प्रमितिविरहे'त्यत्र तत्पदस्य नासङ्गतिः। न च प्रमितिविरहं प्रति विषयविरहस्य प्रयोजकत्वात्तस्यैवासिद्धित्वमुचितम्,

केचित्तु व्याप्त्यादिभङ्गे लिङ्गभूताः, प्रतिबन्धकतयाऽनुमित्युत्पत्तिं निरुन्धानाश्च केचिद्दोषभूयं भजन्ते । तत्र प्रथमे तावदसिद्धिमध्यमध्यासते, तद्यथा व्याप्यत्वासिद्धः सोपाधिरूपः, अनौपाधिकसम्बन्धिता हि व्याप्तिः, सोपाधिता चानुपाधितावि रहरूपैव;

---

एवञ्च सद्धेतोः कदाचिदसिद्धत्वमपि नापद्यते, 'तत्प्रमिती'ति स्वज्ञानरूपासिद्धिसङ्ग्रहायेत्यस्तु, प्रमितिपदं च निश्चयपरम्, भ्रमप्रमासाधारणनिश्चयत्वेनैवानुमितिकारणत्वादिति वाच्यम्, यतः प्रमितिपदस्य निश्चयसामान्यपरता तावन्नात्र सन्दर्भेऽभिप्रेता, तथा सति व्याप्त्यादिविरहसत्त्वेऽपि तन्निश्चयस्य सम्भवेन 'यत्र व्याप्त्यादिव्यतिरेक उपन्यस्यते तत्र वस्तुगत्या व्याप्तत्वप्रमितेर्व्यतिरेकोऽस्तु नामे'त्यग्रिमग्रन्थासङ्गतेः, 'नच व्याप्तिपक्षधर्मते तत्प्रमितिञ्च विहायान्यत्तदुत्पत्तिकारणमस्ती'त्यत्र विपयस्य कारणताऽभिधानासङ्गतेश्च, वक्ष्यति च 'व्याप्तिपक्षधर्मतोपेतलिङ्गप्रमितिसाध्याऽनुमिति'रिति। व्याप्त्यादिनिश्चयविरहस्य तु ज्ञानगर्भहेत्वाभासत्वोपगन्तृमते इवोक्तमतेऽपि हेत्वाभासातिरिक्तनिग्रहस्थानत्वसम्भवाद्, दुष्टहेतौ व्याप्त्यादिनिश्चयस्योक्तप्रमितिविरहेऽपि सम्भवेनाज्ञानरूपासिद्धेरुक्तप्रमितिविरहानात्मकत्वात्, प्रयोजकत्वं त्वप्रयोजकमेव, व्याप्तिपक्षधर्मताविरहस्येव तत्प्रमितिविरहस्याप्युद्भावनेन वादिनिवृत्त्यादिदर्शनात्, तस्मात्प्रमात्मकानुमितिकारणं व्याप्तिपक्षधर्मताप्रमितिस्तद्विपयश्चेत्यभिप्रायेणैवायं ग्रन्थ इति वास्तविक्येवासिद्धिर्निरूप्यते । न च व्याप्तिपक्षधर्मताभ्रमेणापि कदाचिदनुमितिः प्रमात्मिका भवत्येवेति वाच्यम्, तदीयविशेष्ये वस्तुतः साध्यसत्त्वेऽपि दोषजन्यत्वान्यथानुपपत्त्या तस्या विशेष्यावृत्तिप्रकारकत्वस्यापि सम्भाव्यत्वेन तदीयप्रमात्वस्य विवादगोचरत्वात्, व्याप्त्यादेः प्रमात्वस्य चानुगमासम्भवेन स्थलविशेषाभिप्रायेणैव मूलयोजनसम्भवाच्चेति ।

केचित् = असिद्ध्युपजीव्या विरोधव्यभिचाराः, स्थलभेदेन बहुत्वमभिप्रेत्य बहुवचनम्, एवमग्रेऽपि । उदयनाचार्याणां मते तु बाधोऽप्यत्रैव प्रविशति, तस्य व्याप्तिविरहज्ञापकतायास्तन्मते वक्ष्यमाणत्वात् असाधारण्यस्य तु मतभेदेनात्र वाऽग्रिमराशौ वाऽन्तर्भाव इति वक्ष्यते । व्याप्त्यादीत्यादिना व्याप्तिप्रमितिर्ग्राह्या । प्रतिबन्धकतया = अनुमितिकारणीभूताभावप्रतियोगितया, अनुमित्युत्पत्तिं निरुन्धानाः = अनुमित्यनुत्पादप्रयोजकाः । उत्पन्नानुमितेरप्रामाण्यज्ञापकता केषाञ्चित्सम्मता प्रतिबन्धकतापदेन मा ग्राहीत्येतावतैवैतावदुक्तिः । केचित् = सत्प्रतिपक्षाः । नव्यमते बाधस्यात्रैवान्तर्भाव इति वक्ष्यते । दोषभूयं = दोषत्वं, भुवो भावे क्यबिति ह्यनुशासनम् । व्याप्यत्वासिद्धः सोपाधिरूपः = व्याप्यत्वासिद्धिः सोपाधितारूपा । इदञ्चोदयनाचार्याणां प्राभाकराणाञ्च मते सङ्गच्छते, तैरुपाधिविरहस्य व्याप्तित्वोपगमेन तदभावस्योपाधेर्व्याप्यत्वासिद्धित्वौचित्यात् । वस्तुतस्तु साध्यव्यापकसाधनाव्यापकधर्मस्यैवोपाधित्वेन सद्धेतौ च प्रकृतसाध्यव्यापकत्वे सति प्रकृतसाधनाव्यापकधर्मस्याप्रसिद्ध्यैव निषेद्धुमशक्यत्वेनाप्रकृतसाध्यव्यापकसाधनाव्यापकविरहस्य चासद्धेतुसाधारणत्वेन प्रकृतसाधनाव्यापके प्रकृतसाध्यव्यापकतापा निषेधतात्पर्येण यो यावतां व्यभिचारी तावतां व्यभिचारिणा साध्येन तस्य सामानाधिकरण्यमिति पारिभाषिकमेवानौपाधिकत्वं विवक्षणीयमिति नोपाधेर्व्याप्यत्वासिद्धावन्तर्भावसम्भवः, नापि हेत्वाभासान्तरत्वम्, उपाधिज्ञानस्य व्यभिचारधीजननद्वारा व्याप्यत्वासिद्धिज्ञानप्रयोजकतयाऽनुमितौ तत्कारणीभूतज्ञाने वा साक्षादविरोधित्वादिति मतमेव युक्तम्, यदाहुः—"उपाधिः परमुखनिरीक्षकतया सिद्धसाधनवन्न पृथग्दूषण"मिति । एवञ्च सोपाधितानाम्नापि व्याप्यत्वासिद्धिर्व्याप्तिविरहरूपा तु सा व्यभिचारिस्थलमात्रसाधारणी, हेतौ हेतुतावच्छेदकस्य साध्ये च साध्यतावच्छेदकस्याभावरूपा तु सा

एवमधिकरणासिद्धिरप्यसिद्धावेवान्तर्भविष्णुः, पक्षपदोपात्तस्याश्रयस्य व्यतिरेकरूपा हि सा; सिद्धसाधनमपि तथैव, सिषाधयिषितधर्मविशिष्टो हि पक्ष उच्यते, यच्च सिद्धं न तत्र सिषाधयिषाऽस्ति, ततो विशेषणाभावायत्तो विशिष्टपक्षरूपस्य तत्राभावः। न च वाच्यम्—यथा सव्यभिचारत्वाद्भग्नव्याप्तिकमिति पृथगेव सव्यभिचारत्वस्य दोषत्वम्,

---

काञ्चनमयवह्निमान् काञ्चनमयधूमादित्यादौ सुप्रतीतैव। वह्निमान् नीलधूमादिति व्यर्थविशेषणस्थले तु पुरुषस्य निग्रहस्थानान्तरमेव, नतु हेत्वाभासः, व्यर्थविशेषणत्वज्ञानस्यानुमितितत्कारणपरामर्शान्यतराविरोधित्वादिति। आश्रयस्य व्यतिरेकरूपेति। तथा च पक्षधर्मताविरहोऽपि तत्राक्षत इति भावः। वस्तुतस्तु व्योमारविन्दं सुरभीत्यादौ सिद्ध्यसिद्धिभ्यां व्योमारविन्दनिषेधस्य व्याहतत्वेनाश्रयपदमाश्रयतावच्छेदकपरम्, तथा च काञ्चनमयः पर्वतो वह्निमानित्यादौ पर्वते काञ्चनमयत्वाद्यभाव एवाश्रयासिद्धिरिति काञ्चनमयत्वेन पर्वतस्याभावनिबन्धन एव पक्षधर्मताविरहस्तत्रेति भावः। इदञ्च विशिष्टस्यानतिरिक्तत्वमभिप्रेत्य, अन्यथा पक्षधर्मतारूपविशिष्टाभावस्य तत्र सत्त्वेऽपि पक्षात्मकविशेषणस्य पक्षतावच्छेदकरूपावच्छिन्नप्रतियोगिताकाभावस्य पक्षधर्मताविरहात्मत्वासम्भवादेवमग्रेऽपि। किन्त्वेवं पक्षधर्मताविरहोऽभावत्रये एव पर्यवस्यति पक्षतातदवच्छेदकपक्षवृत्तित्वप्रतियोगिके। विशिष्टस्यातिरिक्तत्वे तु पक्षधर्मताविरहस्यैकत्वेऽपि तत्प्रयोजकतयाऽसिद्ध्युपजीव्यत्वमेव स्यादाश्रयासिद्धेरेवं वक्ष्यमाणसिद्धसाधनस्यापीति ध्येयम्। सिद्धसाधनं = पक्षे साध्यवत्त्वनिश्चयः। तथैव = उक्तरीत्या पक्षधर्मताविरहात्मा। तत्र हि पक्षताऽभावरूपः पक्षधर्मताविरहइत्याह सिषाधयिषितेत्यादि। साध्यवत्त्वेन सिषाधयिषित इत्यर्थः। तेनेदानीं साध्याभावेऽपि यत्रानुमितिस्तत्र नाव्याप्तिर्नवा सपक्षेऽतिव्याप्तिः। सिद्धमिति। साध्यवत्त्वेनेत्यादिः। सिषाधयिषेति। साध्यवत्त्वेनेत्यादिः। सिद्धित्वावच्छिन्नेच्छां सिषाधयिषाशब्देन विवक्षित्वेदमुक्तम्। यद्यपि सिद्ध्युत्तरानुमितावेव सिषाधयिषायाः पक्षतात्वं न तु सर्वत्र सिद्ध्यभावस्थले तां विनाप्यनुमितिदर्शनात्, एवञ्च साऽनुमित्सारूपैव वाच्या न तु सिद्धित्वावच्छिन्नेच्छारूपेति सिद्धिसत्त्वेऽपीच्छाविषयतावच्छेदकरूपेण तदभावेनानुमित्सा सम्भवत्येवेति कथमेतद्ग्रन्थसङ्गतिः, तथापि सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्य पक्षतात्वे सिषाधयिषां विना सिद्धिसत्तया प्रयुक्त एव तादृशपक्षत्वाभावः, सिषाधयिषासत्त्वे तु सिद्धिरदोष एवेत्यत्रैव तात्पर्यमवगन्तव्यम्। तथा च 'न तत्र सिषाधयिषास्ती'त्यस्य न तत्र सिषाधयिषाविरहविशिष्टसिद्ध्यभावोऽस्तीत्यर्थः। अतएव सिद्धेः पक्षत्वाभावरूपतयोक्तरीत्या पक्षधर्मताविरहरूपताप्युपपद्यते, अन्यथा तु पक्षधर्मताविरहपदस्य पक्षधर्मताविघटकपरताऽपि वक्तव्या स्यात्। किन्त्वेवं सिद्धेरनुमितिकारणीभूताभावप्रतियोगितया हेत्वाभासतृतीयराशावप्यन्तर्भावसम्भव इति। विशेषणाभावेति। उक्तपक्षत्वाभावेत्यर्थः। स्वरूपसतोऽपि प्रतिबन्धकस्य हेत्वाभासत्वसम्भवस्तु निवेदितः। न च वाच्यमिति। अन्तर्भावः स्यादित्यन्तेन सम्बन्धः। यथेति। लिङ्गत्वेनाभिमतमिति शेषः। इतीति। इतिरीत्या व्याप्तिभङ्गज्ञापकत्वादित्यर्थः। अत्र प्रघट्टके व्यभिचारादिज्ञानस्य व्याप्तिविरहानुमितिजननद्वारा व्याप्तिग्रहप्रतिबन्धकत्वं विवक्षितं क्षणविवेकस्य दुर्ज्ञेयत्वात्तदभावव्याप्यरूपविशेषदर्शनस्यापि तदभावज्ञानमुत्पाद्यैव प्रतिबन्धकताऽङ्गीकार्येति भावः, तावताऽपि व्यभिचारादेर्हेत्वाभासत्वं तु नार्पेति, यद्विषयकज्ञानस्य साक्षादनुमितिपरामर्शान्यतरप्रतिबन्धकत्वं तस्यैव हेत्वाभासत्वमित्यनभ्युपगमात्, तदभ्युपगन्तृमते तु भ्रमे विशेषदर्शनमिव व्याप्यभावव्याप्यव्यभिचारादिज्ञानं साक्षादेव व्याप्तिग्रहविरोधि, अतएवैतन्मते उपाधिर्नहेत्वाभास

तथा सिद्धत्वात्तत्र सिषाधयिषा नास्तीति सिद्धत्वस्यापि पृथगेव दोषत्वं प्राप्नोति, लिङ्गद्वारेणासिद्धिपर्यवसायित्वात्, अन्यथा व्याप्त्यादिविरहपर्यवसिततामात्रेण सव्यभिचारत्वादीनामप्यसिद्धावेवान्तर्भावः स्यादिति; यतः सिषाधयिषाऽभावो न प्रतिपत्तुः सिद्धत्वाल्लिङ्गाद्गम्यते, किं नामेच्छाऽभावस्य तस्य यथादर्शनं प्रत्यक्षादेरेवाधिगमः, इच्छैव तु तत्र यन्नास्ति, तत्र सिद्धत्वं प्रयोजकमित्येतावन्मात्रेण सिद्धत्वमुपन्यस्यते सिद्धसाधने, नत्विच्छाऽभावमनुमातुं लिङ्गतयेति । एवं स्वरूपासिद्धिरपि पक्षधर्मताविरहरूपैव ।

---

इत्युक्तम्, मूले निरुच्यमानमते तूक्तरीत्योपाधेर्व्याप्यत्वासिद्धिरूपतया अप्रामाणिकत्वेऽपि हेत्वाभासान्तरत्वमापद्यते एव, परम्परयाऽनुमितिव्याप्तिधीविरोधिनोऽपि हेत्वाभासत्वाभ्युपगमादिति ध्येयम् । सिषाधयिषा नास्तीति । सिद्धित्वप्रकारकेच्छा पक्षतेति यथाश्रुताभिप्रायेणेदम्, एवमुत्तरपक्षग्रन्थोऽपि । पक्षधर्मताविरहपदं तु पक्षधर्मताविरहतत्प्रयोजकोभयपरं वक्तव्यमेवेति भावः । न चैवं सिषाधयिषाविघटनद्वाराऽनुमितिप्रतिबन्धिका सिद्धिरिति तृतीयराशावन्तर्भावः स्यात्; साक्षादनुमितिप्रतिबन्धकस्यैव तत्रान्तर्भावात् । लिङ्गद्वारा = लिङ्गतया । पर्यवसायित्वात् = बोधकत्वात् । अन्यथा = असिद्ध्यनुमापकस्याप्यसिद्ध्यन्तर्भावे । सव्यभिचारत्वादीनामिति । आदिना विरोधबाधौ । वह्निरनुष्णः कृतकत्वादित्यादौ हेतुमत्पक्षे बाधस्थले व्याप्त्यादिविरहोन्नयनात् । सिषाधयिषाविरहोन्नायकत्वं तु न बाधस्य, तत्सत्त्वेऽपि सिषाधयिषायां बाधकाभावात्, अन्यथा बाधकालीनजिज्ञासाधीनाहार्यज्ञानविलोपापातात् । एवञ्च व्याप्त्यादीत्यादिना व्याप्तिप्रमितिरेव ग्रहणार्हा । पर्यवसितता त्वनुमापकतैव, विरोधादौ व्याप्तिविरहरूपतया असम्भवात् । न च वाच्यमित्यत्र हेतुमाह यत इति । प्रतिपत्तुरिति । यस्य सिषाधयिषाविघटिका सिद्धिरस्ति तेनेत्यर्थः । गम्यते इति । स्वस्मिन्नित्यादिः । इच्छाभावस्य तस्य = इच्छाऽभावरूपसिषाधयिषाऽभावस्य । यथादर्शनमिति । भट्टमतेऽनुपलब्ध्या तार्किकमते प्रत्यक्षेण मानसेन वेदान्तिमते साक्षिणेत्यर्थः । एवकारस्तु व्याप्तिज्ञानस्यासार्वत्रिकत्वात्, लौकिकप्रत्यक्षस्य तत्स्थानीयज्ञानान्तरस्य वा सामग्र्याः सत्त्वाच्च सिद्धत्वलिङ्गकानुमितिं व्यवच्छेत्तुम् । अधिगम इति । यद्यपि सिद्धिप्रयुक्तः सिषाधयिषारूपकारणविरहः स्वरूपसन्नेव विरुन्धेऽनुमितिमिति न तदधिगमापेक्षा, तथापि वस्तूत्कीर्तनमेवेदम् । इच्छैवेति । तत्र = सिद्धिमति यन्नास्ति सेच्छैवेति योजना, इच्छा च प्रत्यक्षेति प्रतियोगियोग्यतायाः संसर्गाभावप्रत्यक्षापेक्षणीयायाः सद्भावोऽस्त्येवेति भावः । ननु सिषाधयिषाऽभावस्याधिगमसत्त्वे परं प्रति स एव कुतो नोद्भाव्यते इत्यत आह तत्रेति । सिषाधयिषाविरहे इत्यर्थः । प्रयोजकमिति । प्रयोज्यस्योद्भावने तत्र कथन्तायां प्रयोजकस्याप्युद्भावनप्रसङ्गे गौरवापत्तेरिति भावः । सिद्धसाधने = तद्दशायाम् । लिङ्गतयेति । स्वयमपेक्ष्यते इति शेषः । उपन्यस्यत इत्यनुषङ्गस्तु न युज्यते, परेण सिषाधयिषाविरहानुमाने प्रयोजकोपन्यासवैयर्थ्यात् । तथा च वस्तुगत्या सिद्धेरसिद्धिव्याप्यत्वेऽपि सा तथात्वेन ज्ञाता नानुमितिकारणविघटिका, अपि तु स्वरूपसत्येव, वस्तुस्वाभाव्यात्, व्यभिचारादिस्तु व्याप्तिविरहरूपासिद्धिव्याप्यत्वेन ज्ञात एवानुमितिकारणं विघटयतीति वैषम्यमभिप्रेत्य द्वितीयराशौ नान्तर्भावः सिद्धेरात इति भावः । नव्यमते तु स्वरूपसत्प्रतिबन्धकत्वाच्च सिद्धिर्हेत्वाभासः, नापि तद्विषयस्तथा, साध्यवत्पक्षविषयकत्वस्यानुमित्साकालीननिश्चयेऽपि सत्त्वेन प्रतिबन्धकतातिरिक्तवृत्तित्वात् यादृशविशिष्टविषयकनिश्चयत्वमनुमितिपरामर्शान्यतरप्रतिबन्धकतानतिरिक्तवृत्ति तादृशत्वमिति लक्षणायोगादित्यवधेयम् । एवमिति । हेतौ हेतुतावच्छेदकस्य साध्ये साध्यतावच्छेदकस्य चाभावौ तु विशिष्टाभावस्य

ये तु व्याप्तिपक्षधर्मताविरहलिङ्गभूतास्तेऽसिद्धितः पृथगेव हेत्वाभासाः, तद्यथा विरुद्धः साध्यविपरीतव्याप्तः, तत्र साध्यव्यतिरेकव्याप्तता हेतो र्न साध्यव्याप्तताऽभावः, किन्नाम साध्यव्यतिरेकेण सहानौपाधिकः सम्बन्धोऽन्य एवासौ । इत्थमेव पक्षधर्मताविरहात्माऽपि नायम्, किन्नाम ? ततः साध्यव्यतिरेकेण सह निरुपाधिसम्बन्धवत्त्वात्साध्यव्याप्तिरस्य नास्तीत्यनुमीयते, तथा सति च साध्यव्याप्तिव्यतिरेकलिङ्गं सद्विरुद्धः पृथगेव हेत्वाभासो भवति । एवमनैकान्तिकोऽपि न व्याप्तिव्यतिरेकरूपः, किन्तु तल्लिङ्गमेव, तथा हि—हेतोरन्वयस्य व्यतिरेकस्य वा व्यभिचारो न साध्यसाधन-

---

विशेषणाभावाद्यात्मकताया उक्तत्वेन यो यावता व्यभिचारी तावता व्यभिचारिणा साध्येन सामानाधिकरण्यमिति हेतुतासाध्यतावच्छेदकावच्छिन्नघटितव्याप्तिविरहात्मानाविति न तयोरसङ्ग्रहः । व्याप्तिविरहपदस्य व्याप्तिविरहतत्प्रयोजकोभयपरतामादाय तु तयोः सङ्ग्रहो नादर्तव्यः, तथा सति व्यभिचारादेरपि पृथक्त्वं न स्यादित्यवधेयम् । तत्त्वं तु खण्डनवेलायां वक्ष्यते ।

व्याप्तिपक्षधर्मताविरहेति । व्याप्तिविरहलिङ्गभूतस्य विरोधादेर्व्याप्तिविशिष्टपक्षधर्मताविरहलिङ्गत्वमपि सम्भवति, व्यापकांशे वैयर्थ्यस्यादोषत्वादितिभावः । असिद्धतः = असिद्धितः । साध्यविपरीतः = साध्याभावः । कृतकत्वं यावता व्यभिचारि तावता व्यभिचारि न नित्यत्वमपि तु नित्यत्वाभाव इति तेन कृतकत्वस्य सामानाधिकरण्यं विरोधः, न चासौ यावत्साध्यव्यापकव्यापकत्वाभावस्वाव्यापकव्यापकसाध्यकत्वादिरूपसाध्यव्याप्तिविरहरूप इति नासिद्ध्यन्तर्भावशङ्केतिभावः । नायं = न विरोधः । तत इत्यस्यैव विवरणं साध्यव्यतिरेकेणेत्यादि पञ्चम्यन्तेन । अस्य = विरुद्धस्य । विरुद्धः = विरोधः । पक्षवृत्तिहेतौ साध्याभावव्याप्यत्वग्रहे पक्षे साध्याभावग्रहध्रौव्येऽपि नित्यः कृतकत्वादिति प्रयोगेऽपार्थकत्वसद्भावेऽपि च तयोर्ग्रहस्य विरोधग्रहोपजीवकत्वाद्विरोधस्य हेत्वाभासस्य सतः पार्थक्यमिति द्रष्टव्यम् । तल्लिङ्गमेवेति । तद्भिन्नं सत्तद्व्याप्यमित्यर्थः । हेतोरन्वयस्य व्यतिरेकस्य वा व्यभिचारो हेतोरन्वयव्याप्तेर्व्यतिरेकव्याप्तेर्वा विरोधिव्यभिचारः, स च हेतुमन्निष्ठात्यन्ताभावप्रतियोगितावच्छेदकसाध्यतावच्छेदकरूपः साध्याभाववद्वृत्तित्वादिरूपश्च । नेत्यादि । यावत्साध्यव्यापकव्यापकत्वरूपमनौपाधिकत्वमुक्तरूपं वा साध्यव्याप्तिः साधने इति भावः । साध्याभाववद्वृत्तित्वं स्वव्यापकसामानाधिकरण्यं वा नात्र व्याप्तितयाऽभिप्रेतम् । न च सोपाधित्वं नाम व्यभिचारित्वसम्बन्धेन साध्यव्यापकवत्त्वं तच्च न साध्यव्यभिचारित्वादिलिङ्गेन साधयितुं शक्यम्, साध्यस्योपाधिव्याप्यत्वेन व्याप्यव्यभिचारस्य व्यापकव्यभिचाराव्याप्यत्वात्, कृतकत्वव्यभिचारवतोऽपि नित्यत्वस्य कृतकत्वव्यापकप्रमेयत्वादिव्यभिचारादर्शनादिति वाच्यम्, साध्यस्ययावन्ति व्यापकानि तद्वत्त्वं हि न व्यभिचारित्वसम्बन्धेन सिषाधयिषितम्, अपि तु यत्किञ्चिद्व्यापकवत्त्वं तच्च साध्यवत्तामप्यन्तत आदाय वाक्यसमन्वयम्, स्वसमानाधिकरणाभावाप्रतियोगित्वरूपव्यापकत्वस्य स्वसाधारण्यादिति । अत्रासाधारण्यस्यानुपसंहारित्वस्य च व्याप्तिविरहोन्नायकत्वं नोक्तम्, प्राचीनमते सपक्षत्वविपक्षत्वयोर्निश्चयघटितत्वेन सर्वसपक्षविपक्षव्यावृत्तत्वरूपासाधारण्यस्य पक्षतादशायां सद्धेतुसाधारण्यात्, सर्वं प्रमेयमभिधेयत्वादित्यादौ व्याप्तिसत्त्वेऽपि साध्यसन्देहाक्रान्तविपक्षकत्वरूपानुपसंहारित्वाभ्युपगमाच्च । सर्वसाध्यतदभाववद्व्यावृत्तत्वस्यासाधारण्यरूपतामते तु हेतुतावच्छेदकसम्बन्धेनावर्तमानस्यैवाकाशादेरसाधारणत्वेन व्याप्तिविरहप्रमापकत्वं तस्य सम्भवत्येव, एवं साध्यव्यापकीभूताभावप्रतियोगित्वस्यासाधारण्यात्मतामतेऽपि । अत्यन्ताभावाप्रतियोगिसाध्यकत्वादेरनुसंहारितामते तु तस्य व्यतिरेकव्याप्ति-

व्याप्तिविरहात्मा, किन्नाम ? व्यभिचारो हेतोः साध्यव्याप्तिविरहं विना न सम्भवतीति लिङ्गभावेन व्याप्तिभङ्गं बोधयते, यदि हि निरुपाधिः साध्येन सम्बन्धोऽस्य भवेत् कथं व्यभिचरितुं शक्नुयात्, तस्माद्व्याप्तिविरहलिङ्गं व्यभिचारो न तु व्याप्तिविरहः। पक्षधर्मताविरहरूपता त्वनैकान्तिकस्यासम्भावितैव।

सत्प्रतिपक्षतायाञ्चानवगम्यमानविशेषप्रतिपक्षप्रतिरुद्धतया यत्साध्यनिश्चयाजनकत्वं हेतोः स प्रतिबन्धकसद्भावे कार्याजनकत्वमितरकारणसाधारणो वस्तुस्वभावः।

---

विरहप्रमापकत्वसम्भव इति। एतच्च व्याप्तिविरहोन्नयनद्वारा व्यभिचारादेर्दूषकत्वमिति मूलानुसारेणोक्तम्। विशेषदर्शनविधया तद्ग्रहस्य व्याप्तिग्रहप्रतिबन्धकतामते तु प्रथमोक्तासाधारण्यद्वयवादिमते साध्यतद्विरहोभयव्याप्तिग्रहप्रतिबन्धकतयैवासाधारण्यस्य दूषकता, तृतीये मते तु साध्यव्यापकीभूताभावप्रतियोगित्वस्य साध्याभावव्यतिरेकव्याप्तितया साध्याभावव्याप्यवत्ताज्ञानमुद्रयाऽनुमितिप्रतिबन्धकतैव। एवं प्रथमोक्तस्यानुपसंहारित्वस्यान्वयव्यतिरेकोभयव्याप्तिग्रहं प्रति चरमोक्तस्य तु व्यतिरेकव्याप्तिमात्रग्रहं प्रति प्रतिबन्धकतेति द्रष्टव्यम्, सर्वथाऽप्यसिद्धिरूपता तु न सम्भवत्येवेति।

सत्प्रतिपक्षतायामिति। विरोधिपरामर्शदशायामित्यर्थः। निश्चयाजनकत्वमित्यन्वयः। अनवगम्यमानो विशेषो न्यूनाधिकबलभावो यस्य प्रतिपक्षस्य = विरोधिपरामर्शस्य, तेन प्रतिरुद्धतया = विशिष्टतया, तत्कालीनपरामर्शविषयतयेतियावत्, हेतोरित्यनेनान्वयः, तत्प्रतिरुद्धत्वस्यात्र तत्प्रयुक्तकार्यानुपधायकत्वरूपत्वे साध्यनिश्चयाजनकत्वमित्यनेन पौनरुक्त्यापत्तेः। सद्भावः = दैशिकं कालिकञ्च सामानाधिकरण्यम्। इतरकारणसाधारण इति। एतेन यथासम्भवं प्रतिबध्यप्रतिबन्धकभावस्याननुगमाभ्युपगमं सूचयता साक्षात्कारित्वाख्यविलक्षणविषयताशालिनो लौकिकसन्निकर्षदोषविशेषजन्यज्ञानस्य तदभावव्याप्यवत्तादर्शनाप्रतिबध्यत्वेऽपि तादृशविषयताशून्यतद्वत्ताबुद्धौ तदभावव्याप्यवत्तानिश्चयस्य प्रतिबन्धकतैका कल्पनीयेति सूचितम्। एवञ्च प्रतिबध्यप्रतिबन्धकभावाननुगमसवधीयं सत्प्रतिपक्षस्थले तुल्यबलतया परामर्शयोः परस्परविरोधितामननुमत्य संशयात्मानुमित्युत्पादकत्वाभ्युपगमः केषाञ्चिदनुचित इत्युक्तप्रायम्। विस्तरस्त्वन्यत्रानुसन्धेयः। वस्तुतस्त्वियं करटरदनपरीक्षैव, अन्ततस्तत्तादिघटितत्वेनापि प्रतिबध्यप्रतिबन्धकभावानामननुगमस्यावश्यकतया संशयात्माऽनुमितिरुत्पद्यते नैवेत्यत्रानुभवस्याबद्धपरिकरतया चानिर्वचनीयतैव वस्तुस्थितिः। न च—तत्पदस्य तद्धर्मावच्छिन्नपरत्वाद्वह्नित्वविशिष्टवत्ताज्ञानं प्रति वह्नित्वावच्छिन्नाभावव्याप्यवत्तादर्शनस्य प्रतिबन्धकत्वे लाघवम्, अन्यथा व्यक्तिभेदेनानन्तप्रतिबध्यप्रतिबन्धकभावप्रसङ्गात्, एवञ्च संशयात्मकानुमितेः सांशयिकत्वेन ज्ञानत्वस्य विरोधिपरामर्शाभावजन्यतावच्छेदकताया व्यभिचारसंशयेनासम्भवदुक्तिकत्वं न शङ्कास्पदम्, लाघवप्रतिसन्धाने व्यभिचारसंशयस्याकिञ्चित्करत्वादिति—वाच्यम्, वह्नित्वावच्छिन्नाभावव्याप्यवत्तानिश्चये सत्यप्यसत्यामपि चेच्छायां वह्निमत्ताशाब्दस्यात्यन्तासत्यपीतिन्यायेनोत्पत्तेरानुभविकत्वेन ज्ञानत्वस्य प्रतिबध्यतावच्छेदकताया वक्तुमशक्यत्वात्. अतएव विशेषदर्शनकाले स्मृत्युपमित्योरनुत्पत्त्या तत्साधारण्यानुरोधेन ज्ञानत्वस्यैव प्रतिबध्यतावच्छेदकत्वं कल्पनीयमिति परास्तम्, शाब्दे व्यभिचारनिश्चयात्। वस्तुतस्तु सत्यपि लाघवप्रतिसन्धाने व्यभिचारे संशयानस्य चार्वाकादेः धूमत्ववह्नित्वादिना कार्यकारणभावग्रहानुदयदर्शनेन व्यभिचारसंशयोऽपि न लाघवप्रतिसन्धानदशायामकिञ्चित्कर इति प्रत्यक्षत्वस्मृतित्वोपमितित्वानामेव विशेषदर्शनप्रतिबध्यतावच्छेदकत्वं न तु ज्ञानत्वस्येति नैवं संशयात्मानुमितिनिरासम्भव इत्यवधेयम्। केचित्तु—प्राग्वाभावव्याप्यवत्ताज्ञानस्य सामान्यतः

तस्य व्याप्तिपक्षधर्मताविरहरूपताऽसम्भावितैव । बाधस्तु साधनवति पक्षे साध्याभावबोधनात्मा भवन्नपि न व्याप्तिविरहावगमरूपः, सामान्यतोऽनौपाधिकसम्बन्धरूपा

---

प्रतिबन्धकत्वाभ्युपगमेऽपि तत्राव्याप्यवृत्तित्वज्ञानस्योत्तेजकत्वं ध्रुवम्, अवच्छेदकावच्छेदेन ग्राह्याभावव्याप्यवत्ताज्ञानस्य ह्यवच्छेदकावच्छेदेन ग्राह्यविशिष्टबुद्धिं प्रति प्रतिबन्धकत्वं ग्राह्याभावधर्मिकाव्याप्यवृत्तित्वग्रहे सति न सम्भवति, ग्राह्याभावस्याव्याप्यवृत्तित्वे ग्राह्याभाववति ग्राह्यावच्छेदकावच्छेदेन वर्तमानस्यापि ग्राह्याभावव्याप्यत्वसम्भवात्, एवञ्च कपिसंयोगतदभावयोर्देशिकाव्याप्यवृत्तित्वग्रहे पक्षतावच्छेदकशाखादिरूपैकावच्छेदेन तदुभयकोटिताका संशयानुमितिः सम्भवत्येवेति स्थलविशेषे संशयानुमितिं समर्थयन्ते इत्यन्यत्र विस्तरः । तस्य = अनवगम्यमानविशेषविरोधिपरामर्शकालीनपरामर्शविषयत्वस्य । एतदेव हि सत्प्रतिपक्षव्यवहारनियामकमिति साध्याभावव्याप्यवतः पक्षस्य सत्प्रतिपक्षदोषतास्वीकर्त्रापि स्वीकार्यमेव, तथापि तादृशपक्षस्य दोषतोपगमे तु तस्यापि व्याप्तिपक्षधर्मताविरहात्मकता नैवास्तीति न प्रकृते काऽपि हानिरिति भावः । अत्र विरोधिपरामर्शयोर्विरुद्धार्थग्राहकत्वेनान्यतरहेतोर्व्याप्त्यादिभङ्गज्ञानेऽपि तस्य साध्यतदभावव्याप्यप्रकारकपरामर्शोत्तरत्वमेवेत्युपजीव्यतया सत्प्रतिपक्षस्य पृथग्घेत्वाभासत्वमिति द्रष्टव्यम् । बाधस्त्विति । बाधग्रहस्त्वित्यर्थः, तेन बाधस्य बोधात्मकत्वे व्याप्त्यादिविरहात्मकतायाः सम्भावनाया अप्यभावेन तदनात्मकताव्युत्पादनायासस्य न वैफल्यम् । साधनवतीति । इदमुदयनाचार्यमतमनुसृत्य, तन्मते हि ह्रदो वह्निमान् धूमादित्यादावसिद्धिरेव, बाधस्तु वह्निरनुष्णः कृतकत्वादित्यादौ पक्षस्य साधनवत्त्वे एव, अतएव "निरुपाधेर्बाधानवकाशात्" "बाधेन वोपाधिरुन्नीयतेऽन्यथा वा," "बाधेन व्याप्तेरेवाहत्य विघटना"दिति तत्र तत्र तेषामुक्तिः सङ्गच्छते, अन्यथा ह्रदो वह्निमान् धूमादित्यादौ सत्यपि बाधे ऽपाधेरभावेन स्थलविशेषमनादाय प्रवृत्ता तदुक्तिरसङ्गतैव स्यात्, अत एव यथाहेत्यादिना तदुक्तिमेवोदाहरिष्यति, अतएव "बाधे पक्षधर्महेतौ व्याप्तिबाधः फल"मिति तन्मतनिरूपणपरसत्प्रतिपक्षमणिपङ्क्तिव्याख्यानावसरे मथुरानाथेन प्रकृतपक्षधर्मत्वे सति प्रकृतसाध्यव्याप्यभावोन्नायकरूपवत्त्वं प्रकृतपक्षसाध्यबाधितत्वमित्युक्तम्, सत्प्रतिपक्षदीधित्यादौ पुनरुक्तपङ्क्तेर्व्याहारादिना हेतौ व्याप्तिपक्षधर्मताऽन्यतरभङ्गः फलमित्यर्थकतया व्याख्यातेत्यन्यत् । बोधनात्मा = बोधात्मा । भवन्नपीत्यनेन विशेषणविशेष्यभावस्याविनिगम्यत्वेन साधने साध्याभाववदवृत्तित्वस्य साधनवन्निष्ठात्यन्ताभावाप्रतियोगितया साध्यघटितस्य वा व्याप्तित्वे उक्तबाधबोधस्य तादृशव्याप्त्यभावविषयकत्वसम्भवेन बाधस्य तद्रूपत्वे सम्भावनोक्ता, अतएव तद्विषयकप्रतीत्यविषयस्य तदनात्मकतेत्याशयेन बोधमादाय विषयभेदोपपादनमादृतम् । नन्वस्तु बाधकाभावेन सा सम्भावनैव स्वविषयनिश्चयपर्यवसायिनीत्याशङ्क्य केवलान्वय्यनुपग्राहकतया साध्याभाववदवृत्तित्वं न व्याप्तिरिति साध्याभाववदवृत्तित्वं न व्याप्तिविरहः, नापि साधनवन्निष्ठात्यन्ताभावप्रतियोगिसाध्यम्, हेतुत्वेनाभिमतेऽवर्तमानत्वात्, व्याप्तिविरहस्य च प्रतीतिबलात्तत्रैव व्यवस्थाप्यत्वात्, परम्परासम्बन्धे च मानाभावादित्यभिप्रायेणाह सामान्यतइति । सामान्यतः सम्बन्धो विशिष्याधिकरणमनन्तर्भाव्य सामानाधिकरण्यम्, तथा च यो यावतां व्यभिचारी तावतां व्यभिचारिणा तस्य सामानाधिकरण्यं व्याप्तिरित्यर्थः । सोपाधिता = व्यभिचारित्वसम्बन्धेन साध्यव्यापकवत्ता, अनुपाधिता तु व्याप्यत्वसम्बन्धेन यावत्साध्यव्यापकवत्तारूपतया न निरुक्ता, व्याप्यत्वस्यानौपाधिकतारूपत्वेनानवस्थापत्तेः । एतच्च सोपाधित्वस्य व्याप्तिविरहरूपत्वाभिमानेन, वस्तुतस्तु नैवं सम्भवतीत्युक्तम् । तस्याः = उक्तसोपाधितायाः, साध्यव्याप्तिविरोधित्वेऽपि न साध्यविरोधित्वं धूमव्यापकस्यार्द्रेन्धनसंयोगस्य व्यभिचारि-

हि व्याप्तिः, साधनवति च पक्षे साध्यविरहो न सोपाधिता, साध्याविरोधिस्वभावत्वात्तस्याः। नाप्यसौ सामान्यतः साध्यसाधनसम्बन्धस्य विरहरूपः, बाधे सत्यपि सामान्येन साध्यसाधनयोः सम्बन्धस्य दृष्टान्तावगतस्यानपलापात्, बाधस्य किञ्चिद्विशेषविषयत्वात्, सामान्याकारपरिगृहीतस्य सम्बन्धस्य विशेषान्तरमादाय पर्यवसानाविरोधात्, तस्माद्विशेषबाधेन सामान्यतः सम्बन्धस्य सोपाधिताऽनुमीयते, निरुपाधित्वे बाधानुपपत्तेः, यथाह "बाधाद्वोपाधिरुन्नीयतेऽन्यथा वेति न कश्चिद्विशेष"

---

त्वसम्बन्धेन वह्नौ सत्त्वेऽपि सामानाधिकरण्यसम्बन्धेन धूमस्य साध्यस्यापि महानसाद्यवच्छेदेन सत्त्वादिति दूरे साध्याभावरूपत्वं तस्या इति भावः। ननु विशिष्टाभावस्य विशेषणाभावाद्यात्मकताया उक्तत्वेन तादृशव्याप्तिरूपविशिष्टाभावः सामान्यतः सामानाधिकरण्याभावरूपोऽपि सम्भवतीति तद्रूपतया बाधस्य व्याप्तिविरहात्मकतयाऽसिद्धित्वमस्तु, तत्राह—नापीति। असौ = बाधावगमः। विरहरूपः = विरहावगमरूपः। तेन सामानाधिकरण्याभावसाध्याभावयोरैक्यस्य भिन्नप्रतियोगिकतयाऽसम्भाव्यत्वेऽपि न क्षतिः, अधिकरणविशेषमनन्तर्भाव्य सामानाधिकरण्यविरहविषयकत्वस्य बाधबोधे निराकरणे तु बाधस्य तदनात्मकत्वं पूर्वोक्तन्यायेनायाति। बाधावगमस्तु कृतकत्वाधिकरणे वह्नौ नानुष्णतेत्यपि सम्भवति युक्तश्चेत्थमेव तदाकारः, साधनवान् पक्षः साध्याभाववानिति ज्ञानस्य तु व्यभिचारावगाहितयाऽपि दूषकता सम्भवति, साधने साध्याभावसामानाधिकरण्यस्य व्यभिचारत्वात्। एवञ्च साध्यस्य साधनाधिकरणवृत्तित्वाभावावगमस्थले बाधस्य स्वातन्त्र्येण व्याप्तिविरहानुमापकतया दूषकत्वमिति। बाधे = बाधावगमे। सम्बन्धस्यानपलापात् = सम्बन्धाभावस्य तेनाविषयीकरणात्। बाधस्य = बाधावगमस्य। कृतकत्वाधिकरणवह्निनिरूपितवृत्तित्वाभावस्यानुष्णतायां बाधावगमेनावगाहनेऽपि सामान्यतः कृतकत्वाधिकरणनिरूपितवृत्तित्वाभावो नावगाहित इति भावः। नन्वेवं बाधबोधानन्तरं कृतकत्वसमानाधिकरणमनुष्णत्वमिति धीरुत्पद्येतेत्याशङ्क्येष्टापत्तिमाह सामान्याकारपरिगृहीतस्येति। विशिष्याधिकरणमनन्तर्भाव्य गृहीतस्यानुष्णत्वे कृतकत्वसमानाधिकरणत्वस्येत्यर्थः। कृतकत्वाधिकरणत्वावच्छेदेन हि नानुष्णत्ववृत्तित्वमुक्तव्याप्तिविशेष्यतया प्रविष्टमपि तु कृतकत्वाधिकरणत्वसामानाधिकरण्येन, न च सामानाधिकरण्येन विशिष्टबाधबुद्ध्योर्बाध्यबाधकभाव इति भावः। विशेषान्तरं = घटादिकं। पर्यवसानाविरोधात् = उपपन्नत्वात्। सोपाधिता = वह्निभेदरूपोपाधिप्रयुक्तता। बाधे पक्षेतरत्वस्याप्युपाधितोपगमात्। अनुमानं तु कृतकत्वं वह्निभेदावच्छेदेनानुष्णत्वसमानाधिकरणं वह्न्यवच्छेदेनोष्णत्वसमानाधिकरणत्वादिति, वह्न्यवच्छेदेनेति च सामान्यतोव्याप्तिलाभार्थम्, अन्यथोष्णत्वसामानाधिकरण्यस्यान्यावच्छेदेनासम्भवेन वैयर्थ्यात्। एवं कृतकत्वं व्यभिचारित्वसम्बन्धेनानुष्णत्वव्यापकवत्, अनुष्णत्वव्याप्तिविरहवत्त्वा, स्वाधिकरणवृत्तित्वाभाववदनुष्णताकत्वादित्यपि। निरुपाधित्वे इति। पक्षधर्महेतोरित्यादिः। गन्धप्रागभावकालावच्छिन्नो घटो गन्धवान् पृथिवीत्वादित्यादावव्याप्यक्षणानवच्छिन्नत्वादिकमुपाधिः। अन्यथा = विपक्षबाधकविरहादिना। यदि तु ह्रदो वह्निमान् धूमादित्यादावव्याप्यसिद्धिरिव बाधोऽपि, एवञ्च बाधलक्षणे पक्षे साधनवत्त्वं नोपादेयम्, तदा सर्वत्र बाधस्योपाधेरुन्नापकतया दूषकत्वं न सम्भवति, तत्र बाधग्रहस्य साक्षादनुमितिप्रतिबन्धकत्वं यदि स्वीक्रियते तदाऽन्यत्रापि तथाऽस्तु विरोधिनिश्चयत्वेन प्रतिबन्धकत्वम्। तथा च दोषविशेषलौकिकसन्निकर्षाजन्यज्ञानसामान्यं प्रति विरोधिनिश्चयत्वेन प्रतिबन्धकत्वम्। न च साध्यस्य पक्षवृत्तित्वाभावावगाहिनो बाधबोधस्य नानुमितिप्रतिबन्धकता भिन्नाकारत्वादिति वाच्यम्, अनुभवानुसारेण तस्यापि प्रतिबन्धकत्वात्, न वा पक्षविशेष्यकत्वम-

इति । अन्यस्तु—सत्प्रतिपक्षवद्वाधस्यापि प्रतिबन्धकत्वमेव, तेन बाधे सति प्रतिबद्धत्वान्निश्चयं न करोति हेतुरिति व्याप्तिपक्षधर्मतादोषमनालोच्यान्यथैव बाधस्य दोषत्वमित्याह । तस्माद्व्याप्तिपक्षधर्मताप्रमितत्वानां यत्र साक्षादेव विरहस्योद्भावनं तत्रासिद्धः, यत्र तु व्याप्त्यादिविरहलिङ्गोपन्यासः सत्प्रतिपक्षोपन्यासो वा तत्रान्यो हेत्वाभासः ।

ननु सोपाधित्वादयोऽपि यतोऽवगम्यन्ते तत्कुतः पृथग्दूषणं न भवति, अनैका-

---

प्यनुमितेर्नियतमित्यभिप्रेतवतो मतमाह अन्यस्त्विति । आहेत्यग्रिमेणान्वयः । प्रतिबद्धत्वात् = विरोधिनिश्चयविशिष्टत्वात् । निश्चयं न करोति = अनुमितिं नार्जयति । हेतुः = तत्परामर्शः एतेन तत्र परामर्शस्य सद्भावसूचनेन तद्विरोधितया दूषकतामुपेयुषां न तत्रानुमित्यनुत्पादप्रयोजकत्वमपि तु बाधग्रहस्यैवेति बाधस्य साक्षादनुमितिप्रतिबन्धकतया हेत्वाभासत्वं ध्रुवमिति ध्वनितम् । दोषं = विरहम्, अनालोच्य = अनुन्नीय, अप्रयोज्य च, साधकबाधकमानाभावरूपपक्षताविरहप्रयोजकतयापि दूषकता प्रसक्तासीदिति नाप्रसक्तप्रतिषेधः, विशिष्टविरहस्यापि चोद्भावनसम्भव एवेत्युक्तम् । अन्यथैव = साक्षादनुमितिविरोधितयैव । आहेत्यत्रास्वरसः, स च—सत्यपि बाधग्रहे "अत्यन्तासत्यपी"ति-न्यायेन स्वविषयकेच्छां विनैव शाब्दबोधस्यानुभविकत्वेन दोषविशेषाद्यजन्यज्ञानसामान्यं प्रति विरोधिनिश्चयस्य प्रतिबन्धकत्वे मानाभाव इति । अनुभूतेस्त्वत्र मौनितैव, अतएव प्रत्यक्षादाविवोप-ल्लानुमित्यादावप्यप्रामाण्यमेव विरोधिनिश्चयेनागृहीताप्रामाण्यकेन ज्ञाप्यते इत्येके वदन्तीति । प्रमितत्वानामिति । प्रमितत्वं प्रत्यासत्त्या व्याप्तिपक्षधर्मतयोरेव ग्राह्यम् । साक्षात् = व्यभिचारादि-कमनुद्भाव्य । उद्भावनमिति परार्थस्थलाभिप्रायेण । असिद्धः = असिद्धया दुष्टत्वव्यवहारः । सत्प्रतिपक्षेति । मतान्तरे बाधस्याप्युपलक्षणम् । यद्यपि राशित्रयस्यैवं करणे व्याप्तिविरहलिङ्गत्वेन व्यभिचारविरोधयोः साक्षात्प्रतिबन्धकत्वेन च बाधसत्प्रतिपक्षयोः सङ्ग्रहेण हेत्वाभासानां त्रिविध-त्वेनापि विभागसम्भवः, अवान्तरविभागादरे तु व्यभिचारादेरपि बहुविधत्वादिना हेत्वाभासानां पञ्चाधिक्यमेव, तथापि स्वतन्त्रेच्छो मुनिरिति नैवानुयोक्तव्य इति श्रद्धालुतया समर्थ्यन्ते ।

सोपाधित्वादयोऽपीति । यद्यप्येतेन ग्रन्थेन व्याप्तिविरहात्मकता सोपाधित्वस्य प्रतीयते, स्फुटतरश्चोत्तरपक्षग्रन्थेन, तथा च सन्दर्भविरोधः, अथ कोऽत्रातिभारः, सिद्ध्यसिद्धिव्याघातेनानौपा-धिकत्वस्य पारिभाषिकस्यैवोक्तत्वेन सोपाधित्वस्य तद्विरहानात्मकत्वमेवोचितमिति निष्कृष्टमतानुसारेणै-वात्र व्याख्यानं दत्तपदमस्तु; न च तथाप्यसङ्गतिरेव, सोपाधित्वस्य व्याप्तिविरहानात्मकस्यापि व्यभि-चारादिना लिङ्गेनावगन्तुं शक्यत्वात्, तस्य च पार्थक्यस्य व्यवस्थापितत्वादिति वाच्यम्, सोपाधित्वादयो-व्यभिचारादिव्यतिरिक्तादपि यतोऽवगम्यन्ते इत्यध्याहृत्य व्याख्यानेऽदोषादिति चेन्न, अध्याहारस्तावदयं प्रथमः क्लेशः, स कथञ्चित्सह्येतापि, 'सोपाधित्वादेस्तु प्रत्यक्षादपि प्रतीते'रित्युत्तरग्रन्थासङ्गमस्तु द्वितीयः क्लेशः कथमिव सोढव्यः, 'न तु लिङ्गभावनियतं तत्र प्रतिपादकं किञ्चिदस्ती'त्युक्त्यसाङ्गत्यस्य तृतीयस्य तु का वार्ता, व्युत्पादितं ह्यवस्ताद्व्यापकताया अतीन्द्रियत्वमिति तद्घटितं सोपाधित्वं कथं प्रत्यक्षविषय-ताऽऽलम्बनस्य प्रभवेत् । न च पक्षधर्मताविरहस्य प्रत्यक्षेणाधिगमसम्भव इति सोपाधित्वादेरित्यत-द्गुणसंविज्ञानबहुव्रीहिणा व्याख्यायतामिति वाच्यम्, 'तान्युपाधिलिङ्गानि नार्थवशादि'त्यग्रिमग्रन्थ-विरोधात् । अथ व्यापकताऽतीन्द्रियत्वमजानानस्येयमुक्तिः, तथापि व्यभिचारादेरनुपदं सोपाधितालिङ्ग-भावाभिधानस्य न स्मरत्ययं 'न तु लिङ्गभावनियतं तत्र प्रतिपादकं किञ्चि'दिति वदन् कथमपि क्षन्त-

न्तिकत्वादिवदिति; मैवम्, अनैकान्तिकत्वादेर्व्याप्तिविरहबोधने लिङ्गभावनियमात्पृथगुपन्यासः। सोपाधित्वादेस्तु प्रत्यक्षादपि प्रतीते र्न तु लिङ्गभावनियतं तत्र प्रतिपादकं किञ्चिदस्ति। न च वाच्यम्—यत्र लिङ्गात्सोपाधितादेः प्रतीतिरतीन्द्रियप्रभृतिविषये तत्र लिङ्गं पृथगेव दूषणतयाऽभिधीयताम्, नह्यनैकान्तिकत्वादिकमपि सार्वत्रिकं व्याप्तिविरहलिङ्गमिति हेत्वाभासाधिक्यमापन्नमिति; अनैकान्तिकत्वादि-

---

व्यापराधः स्यात्; अथोपाधित्वमनन्तर्भाव्यार्द्रेन्धनत्वादिनैवात्रोपाधे विवक्षास्तु. तथा च सोपाधित्वादयोऽपीत्यस्यार्द्रेन्धनादयोऽपीत्यर्थः, उपाधित्वेन तत्प्रत्यायनं तु व्यभिचारादिज्ञानायत्त इति 'अनैकान्तिकत्वव'दित्यस्य नासङ्गतिः, आर्द्रेन्धनत्वादिना तत्प्रतीतिस्तु प्रत्यक्षादिनापीति 'प्रत्यक्षादपी'त्यस्यापि नासङ्गतिः, युज्यते चैवं लिङ्गानामानन्त्याभिधानमपि, तत्तदुपाधीनामनन्तत्वेन तल्लिङ्गानामपि तथात्वादिति चेन्न, आर्द्रेन्धनत्वादिना केवलेनोपाधिप्रतीतेरकिञ्चित्करत्वाच्छङ्काया अतिनिर्दलत्वापत्तेः, साध्यव्यापकत्वेनेव चोपाधेरार्द्रेन्धनत्वादिनापि व्यभिचारित्वसम्बन्धेनैव साधनाभिमते साधनीयतया तत्र व्यापकव्यभिचारादेरेव लिङ्गतायाः सम्भवेन तेषां च शब्दानुगमस्य सम्भवदुक्तिकत्वेन लिङ्गानामभिधानासम्भवाभिधानस्यासङ्गतेस्तादवस्थ्याच्च, अर्थानुगमस्तु न व्यभिचारविरोधादेरपि. साध्यादिभेदभिन्नमूर्तिकत्वादित्यलमकमिदम्; तथापि कथञ्चिद्व्याख्यायते—सोपाधित्वादय इति। उपाधित्वेनाभिमता धर्माः। आदिपदेन स्वरूपासिद्ध्यादिकम्। यतः = प्रत्यक्षाच्छब्दाल्लिङ्गाद्वा। अवगम्यन्तेइति। आर्द्रेन्धनत्वादिना रूपेणेत्यादिः। साध्यव्यापकत्वस्योपाधित्वघटकस्य प्रतीत्यर्थं तदवच्छेदकप्रतीतेरपेक्षणीयत्वात्, एवञ्च व्यभिचारित्वेन संसर्गेण साध्यव्यापकवत्ताप्रतीत्यौपयिकत्वेन व्यभिचारादेरिव तस्यापि पृथग्दोषत्वं प्रसज्यते। उपन्यासः = प्रतिवादिनिवृत्त्यादिफलकं दोषनयोद्भावनम्, अत एव पृथग्दोषत्वमपि। सोपाधित्वादेस्तु = उपाध्यभिमतधर्मादेस्तु। प्रत्यक्षादपि = प्रत्यक्षादितोऽपि। अपिरेवार्थे, तथा च लिङ्गव्यावृत्तिः। अन्यथा व्याप्तिविरहस्यापि शब्दादिना प्रतीतेर्व्यभिचारादेरप्यदोषतापत्तेः। साक्षादनुमित्यप्रतिबन्धके कारणाभावानात्मनि च लिङ्गविधया कारणाभावप्रतिपत्त्यौपयिकतयैव हेत्वाभासताभ्युपगमः, कथायां प्रत्यक्षादेरुपन्यासानर्हत्वादिति भावः। ननु कस्याप्युपाधे र्न लिङ्गगम्यत्वमिति वक्तुमशक्यमेवेत्यत आह नत्वियति। लिङ्गभावनियतं प्रतिपादकं = लिङ्गविधयैव प्रतिपादकम्। तत्रेति। उपाधित्वेनाभिमतधर्मे इत्यर्थः। सर्वत्रेति शेषः। विषयत्वं ससम्बन्धित्वसार्थः प्रतिपत्तावन्वेति। यथा निखिलव्याप्तिविरहनिरूपितव्याप्तिव्यभिचारत्वेनावच्छिद्यते इत्यर्थः प्रतिपत्तावन्वेति। यथा निखिलव्याप्तिविरहनिरूपितव्याप्तिव्यभिचारत्वेनावच्छिद्यते इति

व्याप्तिविरहप्रतीत्यर्थं व्यभिचारत्वावच्छिन्नस्योद्भावनम्, नैवं निखिलोपाधिधर्मव्याप्तिः केनचिदनुगतानतिप्रसक्तेन धर्मेणावच्छिन्ना, यं पुरस्कृत्य सा ज्ञायेतोपाधिश्चोद्भाव्येतेत्यर्थः। ननु सर्वत्र व्याप्तिभङ्गस्थले व्यभिचारस्य सत्त्वेन व्यभिचारत्वस्य निखिलव्याप्तिविरहव्याप्यतावच्छेदकत्वेऽपि सर्वत्र व्यभिचारस्य व्याप्तिविरहानुमित्युपधायकत्वाभावेन सन्नपि सोऽकिञ्चित्कर एव, विरोधादिनापि तादृशानुमितेरित्याशङ्कां निराचष्टे नचेति। लिङ्गात् व्यभिचारितासम्बन्धेन श्यामत्वादेः। सोपाधितादेः = शाकपाकसामग्रीजत्वादेः। प्रभृतिपदेनैन्द्रियकमपीन्द्रियासन्निकृष्टं ग्राह्यम्। विषये = व्यभिचारित्वसम्बन्धेन तत्स्थले मित्रातनयत्वादौ। ननु व्यभिचारस्य सर्वत्र तादृशानुमितिनिरूपितोपधायकत्वाभावेऽपि तत्सिद्धनिखिलव्याप्तिविरहनिरूपितव्याप्तिव्यभिचारत्वमनुगतमवच्छेदकीकृत्य गृह्यत एव, नत्वेवमुपाधित्वस्याशङ्क्यानैकान्तिकत्वादिकमित्यादिपदमुपात्तम्। तथा च व्यभिचारसाम्येन प्रत्यवस्थानं मा भूत्. विरोधादिसाम्येन तु स्यादेव, सर्वत्र व्याप्तिभङ्गस्थले तदभावेन विरोधत्वादेः सर्वव्याप्तिविरहव्याप्यतानवच्छेदक-

यत्तेषां लिङ्गानामैकरूप्येण निर्देष्टुमशक्यत्वात् पृथक्पृथगेवाभिधानमशक्यमपरिसङ्ख्येयत्वादिति । वक्ष्यामश्चाग्रे हेतुं तदनभिधानस्य । नन्वनुचितमुच्यते—व्याप्त्यादिविरहलिङ्गतयाऽनैकान्तिकत्वादीनां पृथग्दूषणत्वमिति, यतो व्याप्तिपक्षधर्मतोपेतलिङ्गप्रमितिसाध्यानुमितिस्तद्वैकल्याच्च भवेत्, यतश्च सा न भवति तदेव तस्यां दूषणं वक्तुं युक्तम्, 'इदमनुमित्युत्पत्तिकारणमिह नास्ती'ति, न च व्याप्तिपक्षधर्मते तत्प्रमितिश्च विहायान्यत्तदुत्पत्तिकारणमस्ति व्यतिरेकोपदर्शनयोग्यम्, तस्मादनुमितिदोषप्रतीतिकारणत्वमनैकान्तिकत्वादीनां न तु साक्षाद्दोषत्वम्, दोषप्रतिपादकतयाऽपि च दोषत्वं साक्षाद्दोषमनुपजीव्याशक्याभिधानमिति प्रधानदोषस्यैव दोषतयोद्भावनं युक्तं न सव्यभिचारत्वादीनामिति विभागसूत्रमनर्थकमिति। सत्यमेतत्—साक्षाद्दोषत्वं प्रतिबन्धकस्य व्याप्त्यादिविरहस्य वा, विरुद्धत्वादीनां तु तत्प्रमापकतया यद्यपि दोषपक्षनिक्षेपः, तथापि

---

त्वादिति भावः । स्वरूपासिद्ध्यादिव्याप्यस्य स्वसिद्ध्यन्तर्भाव इष्ट एवेति द्रष्टव्यम् । अपरिसङ्ख्येयत्वादिति । स्थलभेदेनानन्त्यादित्यर्थः । ननु व्यभिचारादेरपि साध्यादिभेदभिन्नमूर्तिकतयाऽऽनन्त्यमेव, अत एव व्यभिचारत्वादिकमित्यपि शब्दानुगममात्रम्, व्यापकव्यभिचारत्वादिना च शब्दानुगमः प्रकृतेऽपि सम्भवति, श्यामत्वादेः शाकपाकजत्वादिव्यापकत्वादित्याशङ्क्याह वक्ष्याम इति । अनुपदमिति शेषः । तदनभिधानस्येति । कथायां दूषणतयेत्यादिः । व्यभिचारादेर्व्याप्तिविरहव्याप्यत्वमुभयवादिसम्प्रतिपन्नमिति तदुद्भावने लाघवम्, सामान्यतो व्यापकव्यभिचारस्य व्याप्यव्यभिचारव्याप्यतायास्तु सम्प्रतिपन्नत्वेऽपि व्यभिचारनिरूपकयोः श्यामत्वशाकपाकजत्वाद्यो र्विशिष्य व्याप्यव्यापकभावस्यासम्प्रतिपन्नत्वसम्भवेन न श्यामत्वादिव्यभिचारोद्भावनमात्रेण वादिनिवृत्त्यादि, ततश्च तयोर्व्याप्यव्यापकभावस्यापि प्रतिपादनापेक्षेति गौरवमितिभावः । इदमापाततः, एवं हि परार्थे तदुद्भावनं मास्तु, स्वार्थे तु दोषत्वं स्यादेव गौरवमधिमूशता च कदाचिदुद्भावनस्यापि कथायां सम्भवात् । वस्तुतस्तु न कथञ्चिदुपाध्याद्यवगमकस्य हेत्वाभासत्वमपि तु साक्षादुपाधित्वादिना तदवगमकस्यैव, तत्त्वं च व्यभिचारादेरेव, अन्यथा साध्यव्यापकत्वसाधनाव्यापकत्वयोर्ग्राहकस्यापि हेत्वाभासत्वं कुतो न शङ्कितम्, परम्परया सोपाधित्वप्रतीतौ तस्याप्युपयुक्तत्वादिति । एतदपि प्राचीनमतानुसारेण, नव्यमते तु व्यभिचारादेरपि नोपाध्याद्यवगमकतया दूषकत्वमित्युक्तमेवेति । अनौचित्ये हेतुमाह यत इति । प्रमितिसाध्यानुमितिः = प्रमितिजन्या प्रमात्मकानुमितिः । अत्र यद्वक्तव्यं तदुक्तमेव । तद्वैकल्यात् = कारणीभूतप्रमित्यभावात् । साक्षात्प्रतिबन्धकयोर्बाधसत्प्रतिपक्षयोरप्युपलक्षणमिदम् । यतश्चेति । एवञ्च यत इत्यर्थः । सा = प्रमानुमितिः । व्याप्तिपक्षधर्मते इति । एतयोर्यथा कारणत्वमायाति तथोक्तम् । विहायेति । बाधसत्प्रतिपक्षाभावौ चेत्यादिः । व्यतिरेकोपदर्शनयोग्यमिति । कारणान्तरसमवधाने यदभावप्रयुक्तः कार्याभावस्तादृशमित्यर्थः । बाधादिविरहे व्याप्तिपक्षधर्मताप्रमितौ चानुमितेरावश्यकत्वेन व्यभिचारादिबुद्धेरकिञ्चित्करत्वादिति भावः । नन्वनुमितिदोषप्रतीतिकारणतयैव दोषत्वमस्तु, तत्राह दोषेति । अनुपजीव्येति । व्यभिचारादिनिर्वाह्या ह्यसिद्धिः, निर्वाह्यस्य दोषत्वाभावे च निर्वाहकस्य दोषत्वमसम्भवदुक्तिकमेवेति बलवत्तया निर्वाह्यमप्युपजीव्यमेवेति भावः । विभागसूत्रमिति । "सव्यभिचारविरुद्धप्रकरणसमसाध्यसमातीतकाला हेत्वाभासा" इति सूत्रम्, परीक्षैकवाक्यतापन्नमिति शेषः, तादृशस्यैव तस्य न्यूनाधिकसङ्ख्याव्यवच्छेदबोधकत्वोपगमात्, अन्यथा न्यायशास्त्रस्य युक्तिशास्त्रत्वानुपपत्तेः । अनर्थकमयुक्तार्थप्रतिपादकम्, हेत्वाभासत्रयस्यैव प्रतिपादनौचित्यात् । तत्प्रमापकतया = व्याप्तिविरह-

विरुद्धत्वादयो यद्दोषप्रतिपादकतयोक्तास्तदुद्भावनलाघवानुरोधात्। व्याप्त्यादिविरहे तत्रोद्भाव्यमाने न हेतुर्गन्तुं शक्यते, अनैकान्तिकत्वादौ तूद्भाविते व्याप्त्यादिविरहोऽर्थाद्गम्यते, व्याप्त्यादिविरहव्यतिरेकेणानैकान्तिकत्वादेरनुपपन्नत्वात्, यथा तस्माद्दीर्घोऽयमित्युक्ते सोऽस्माद्ध्रस्व इत्यर्थाद्गम्यते, न तु तत्र प्रतिपाद्यान्तरापेक्षा, तथेहापि निरग्नौ धूमोऽस्तीति प्रतिपादितेऽग्निनाऽसौ न व्याप्त इत्यर्थाद्गम्यते, न हि सम्भवत्यग्निना च व्याप्तोऽनग्नौ चास्तीति, अतएवानन्त्यादतीन्द्रियोपाध्यादिलिङ्गानां येषां पूर्वमनभिधानं समर्थितं तेषामनभिधानेऽयमपि हेतुः—तान्युपाधिलिङ्गानि नार्थवशादुपाधिमनपेक्षाणि गमयन्ति, येन तेषां व्याप्तिर्नावधारिता तं प्रति तत्प्रतिपादनमन्तरेणाप्रतिपादकत्वस्यापि सम्भवात्, अनैकान्तिकत्वाद्यवगतौ तु व्याप्त्यादिविरहबोधनाय न प्रतिपादनीयान्तरापेक्षा कस्यचित्सचेतसः सम्भवतीति पूर्वपक्षसङ्क्षेपः। इति हेत्वाभासपाञ्चविध्योपपादनम्।

एवमसिद्धलक्षणे व्यवस्थितेन बाधोऽयमभिधीयते—एतेन कीदृशमसिद्धलक्षणं व्यवस्थापितमायुष्मता भवति, व्याप्तत्वपक्षधर्मत्वाभ्यामप्रमितोऽसिद्ध इति तावद्विरुद्धादिषु लक्षणं किमस्ति किं वाऽस्ति, यदि नास्ति, तदा व्याप्तिपक्षधर्मताभ्यां प्रमिता विरुद्धादयः प्राप्नुवन्ति, अथास्ति तदा तेऽप्यसिद्धभेदाः प्राप्ताः, अथैतस्मिंल्लक्षणे

---

प्रमापकतया। तदुद्भावनलाघवानुरोधादिति। तत्प्रतीतिजनने लाघवानुरोधादित्यर्थः, विरुद्धत्वादीनां दोषतयोद्भावनमिति शेषः। विरोधादिप्रतिपादने व्याप्तिविरहप्रतीतिः परस्यौचित्यादर्जितेति नाधिकं किञ्चिद्वक्तव्यमिति लाघवम्. व्याप्तिविरहस्य साक्षादुद्भावने तु तत्र कथन्तायां विरोधादिरपि यथासम्भवमुद्भाव्य इति गौरवं स्यात्, तस्माज्झटितिवादिनिग्रहाद्यादिफलकत्वात्तस्य दोषत्वमुचितमेवेति भावः। एतदेवाह व्याप्त्यादिविरहे इति। हीति शेषः। हेतुः = व्याप्त्यादिविरहप्रयोजकः। गन्तुं = अवगन्तुम्, गौरवमनाकलयता वा मानान्तरेण व्याप्तिविरहमवगच्छता वा क्वचित्साक्षादपि तदुद्भावनमिति न तदनवकाशनाऽपीति द्रष्टव्यम्। धूमो गगनादिगतः। अतएवेति। यतोऽर्थप्राप्तस्यैवाभिधानमनपेक्षम्, न स्वर्थादप्राप्तस्यापि, तस्मादित्यर्थः। अनपेक्षाणि = उपाधिव्याप्तिप्रतिपादनानपेक्षाणि। अर्थवशादित्यस्यैव विवरणमिदम्। तत्प्रतिपादनं = व्याप्तिप्रतिपादनम्। अप्रतिपादकत्वस्यापि = उपाध्यप्रतिपादकत्वस्यापि। तेषामित्यनुपज्यते। व्याप्त्यादिविरहबोधनायेति। नव्यमते तु व्याप्त्यादिविरहनिश्चयं विनैव व्याप्तिविरहव्याप्यतया ज्ञातयोर्व्यभिचारविरोधयोर्दूषकत्वमित्युक्तमेव। सचेतस इति। कथाधिकारिण इत्यर्थः। एवञ्च मन्दस्य कस्यचित्तादृशापेक्षासत्त्वेऽपि न क्षतिः, तस्य कथानधिकारित्वादिति भावः। इति खण्डनशारदायां हेत्वाभासपाञ्चविध्योपपादनम्।

असिद्धलक्षणमसिद्धिः। आयुष्मतेति निन्दायां मतुप्। आस्तामेवं दोषाणां पञ्चविधत्वम्, प्रतिविधास्यते हि तत्, दुष्टानां तथात्वस्य तु भवता नियन्धेपूक्तस्य का गतिरित्यभिप्रायः। एतेन विरुद्धादिष्वसिद्धिसद्भावस्य पूर्वपक्षिणापि प्राक्स्वीकृतत्वेन 'किं नास्ती'ति विकल्पासङ्गतिर्निदर्शनीया, दुष्टविभागाभिप्रायेण पूर्वपक्षिणा तथाऽस्वीकारात्। प्राप्नुवन्तीति। तथा च विरुद्धादीनां स्वसाध्यप्रमापकत्वापत्तिरिति भावः। असिद्धभेदा इति। तथा च सव्यभिचारविरुद्धसत्प्रतिपक्षासिद्धेष्वसा-

सत्यपि ते नासिद्धान्तर्भूताः, तर्हि लक्षणमिदमतिव्यापकमापन्नम् । अथ यत्र व्याप्तिपक्षधर्मत्वाप्रमितत्वं साक्षादुद्भाव्यते तदसिद्धमित्युच्यते तर्हि लक्षणान्तरमिदमुक्तं स्यात्, नचैतदपि युक्तम्, यत्र व्याप्तिविरहमात्रमुद्भाव्यते तत्र व्याप्तिपक्षधर्मताप्रमितत्वानां हानं मिलितं नोद्भाव्यत इति नासावसिद्धः स्यात् । एवं सर्वत्रासिद्धविशेषमुदाहृत्य प्रसङ्गो विधातव्यः । अथ प्रत्येकमिदं लक्षणं व्याप्त्यप्रमिततया साक्षादुद्भाव्योऽसिद्धः पक्षधर्मत्वाप्रमिततया चेति, तर्ह्यन्योन्योदाहरणाव्याप्तिरित्यव्यापकत्वमुभयोः। अथोभयोरप्यसिद्धविशेषलक्षणत्वादन्योन्यविषयाव्यापकता न दोषायेति मन्यसे; न,

---

दिना दुष्टविभागो भवतामसङ्गतः. असिद्धस्यैव तु सव्यभिचारविरुद्धसत्प्रतिपक्षबाधितेतिचातुर्विध्यं वक्तुं युक्तम्, अवान्तरधर्मपुरस्कारेणैव विभागादिति भावः। यद्यप्यत्र—दोषाणामेव विभागोऽस्माकमभिप्रेतइत्येव वक्तुमुचितम्. तथापि दुष्टविभागस्याप्युपपादनेक्षमोऽहमित्यभिमानेन परः प्रतिब्रूते अथेति। व्याप्तिपक्षधर्मत्वाप्रमितत्वमिति । व्याप्तिपक्षधर्मताप्रकारकप्रमितिविरहइत्यर्थः । व्याप्तिः प्रकृतसाध्यनिरूपिता, पक्षश्च प्रकृतः, यत्तत्पदे च यत्तद्रूपावच्छिन्नपरे, एवमग्रेऽपि । व्याप्तिपक्षधर्मतयोर्विरहस्याप्युपलक्षणमिदम्, तेन यत्र व्याप्त्यादिप्रमितिविरहो नोपन्यस्तोऽपि तु व्याप्त्यादिविरहस्तत्र नाव्याप्तिः । नवा 'व्याप्तिपक्षधर्मताप्रमितत्वानां हानं मिलितमि'त्युत्तरग्रन्थासङ्गतिः, अभावत्रयलाभात् । उद्भाव्यते = बोध्यते, एतेनार्थप्राप्तस्याभिधानरूपमुद्भावनं नास्तीति साक्षादित्यस्य वैयर्थ्यमिति नाशङ्कनीयम् । विरोधादिबोधनद्वारा व्याप्त्यादिविरहबोधनं विरुद्धादावपीत्यतः साक्षादिति । शब्देनेत्यर्थः । तथा च व्याप्तिपक्षधर्मतातत्प्रमितिविरहवत्तया शाब्दविषयोऽसिद्ध इत्यर्थलाभाद्विरुद्धादौ तादृशविरहवत्तया विरोधादिनानुमीयमाने नातिप्रसङ्गइत्यभिमानः । साक्षात्पदार्थं स्वयं तु विकल्पयिष्यति। स्यादिति । तथा च परोक्तदूषणोद्दिधीर्षया लक्षणात्मकेतरभेदानुमापकहेतौ विशेषणान्तरप्रक्षेपाद्धेत्वन्तरं नाम निग्रहस्थानमापन्नमिति भावः । ननु यत्रेदमेव लक्षणं प्रथममुच्यते तत्र किं वाच्यमिति बुभुत्सुं प्रत्याह नचेदमिति । यद्यपि कृतकत्वं न नित्यत्वव्याप्यमित्यादि विरुद्धादिस्थलेऽपि वक्तुं शक्यम्, तत्र लिङ्गाभिधानं तु कथन्तायामसिद्धेऽपि तुल्यमित्यतिप्रसङ्गो दुर्वारस्तथाप्यतिप्रसङ्गापेक्षयाऽप्रसङ्गस्य प्रबलदोषतया तमेवाह यत्रेति । पर्वतो धूमवान् वह्नेरित्यादौ । उद्भाव्यते = अभिधीयते । मिलितं हानं = अभावत्रयम् । प्रसङ्गइति । असिद्धत्वाभावप्रसङ्गः, अव्याप्तिरिति यावत् । ह्रदोवह्निमान्धूमादित्यादौ पक्षधर्मताविरहमात्रोद्भावनात्, उक्तस्थलद्वयेऽपि व्याप्तिपक्षधर्मताप्रकारकप्रमितिविरहस्यैव कदाचिदुद्भावनाच्च, उक्तविरहत्रितयान्यतमत्वघटनाया अपि विरुद्धादावतिप्रसक्तेश्चेति भावः । असम्भवस्तु नोक्तः ह्रदोधूमवान् वह्नेरित्यादौ कदाचिदभावत्रयस्याप्युद्भावनसम्भवात् । नचैवं कादाचित्कतादृशशाब्दविषयत्वादानेन नाव्याप्तिरपीति वाच्यम्, सर्वत्र तादृशशाब्दविषयत्वे मानाभावेन दोषसंशयेनापि लक्षणानुपपत्तेः । यदि तु भेदस्याव्याप्यवृत्तितामुपगम्य यदा तादृशशाब्दविषयत्वं तदाऽसिद्धत्वमिति विरुद्धादेः कदाचित्तथात्वेऽपि कदाचिद्विरुद्धत्वादिना विभागसङ्गतिः, अतएवमूले 'उद्भाव्यते' इति वर्तमानप्रयोगः कृतइत्युच्यते, तदा तादृशशाब्दविषयत्वाभावदशायामसिद्धत्वव्यवहारानापत्तिः स्पष्टैव । यद्वक्ष्यति 'स्वार्थानुमित्यसिद्धाव्याप्तिश्चे'ति । व्याप्त्यप्रमिततया = व्याप्त्यभाववत्तया । पक्षधर्मत्वाप्रमिततया = पक्षधर्मत्वाभाववत्तया । चकारेण च व्याप्तिपक्षधर्मताप्रकारकप्रमितिविरहस्यापि समुच्चयः । एवञ्च तादृशप्रमितिविरहस्यैव यत्रोद्भावनं तस्य नासङ्ग्रहो न वा पूर्वग्रन्थविरोधः । अग्रे उभयोरित्यभिधानं तु त्रितयपरमेव । असिद्धविशेषेति । तथा च लक्ष्यस्यापि सङ्कोच इति भावः ।

सामान्यलक्षणे निर्वक्तुमशक्ये कथमिदं विशेषलक्षणमपि घटेत। अथानुमितेरसाधारणहेतुव्यतिरेकोद्भावनं सामान्यलक्षणमस्तु; मैवम्, सत्प्रतिपक्षोद्भावनं तथेत्यतिव्याप्तेः, भावरूपतया हेतुविशेषणे च निरुपाधित्वव्यतिरेकोद्भावनाव्याप्तेः, स्वरूपासिद्धिः सर्वप्रमाणसाधारणो दोष इति तदुद्भावनाव्याप्तेश्च। अथोच्यते व्याप्तत्वपक्षधर्मत्वाभ्यां

---

घटेतेति। उक्तलक्षणत्रये असिद्धविशेष इत्येवं लक्ष्यं निर्देशनीयम्, उत व्याप्यत्वासिद्धः, स्वरूपासिद्ध इत्यादिक्रमेण, आद्ये तत्रासिद्धत्वस्य प्रवेशेन तज्ज्ञानमपेक्ष्यमेवेति सामान्यलक्षणं निरूपणीयम्, एवमेव द्वितीयेऽपि, तत्तच्छब्दार्थत्वेन च लक्ष्यतायामन्योन्याश्रयः, शक्यतावच्छेदकप्रतीतिं विना तदप्रतीतेः। व्याप्तिविरहपक्षधर्मताविरहयोश्च लक्ष्यस्य व्याप्तिपक्षधर्मताप्रकारकप्रमितिविरहलक्ष्यतापीति चालनीन्यायेनाव्याप्तिस्तदवस्था चेति भावः। आश्रयासिद्धिसाध्याप्रसिद्धिहेत्वप्रसिद्धिविशिष्टेष्वव्याप्तिस्तु वक्ष्यते। असाधारणहेत्विति। व्याप्तिपक्षधर्मतातत्प्रमितिष्वनुगतमनुमित्यसाधारणहेतुत्वमित्यभिमानः। तथा चानुमित्यसाधारणकारणप्रतियोगिकाभाववत्तया शाब्दविषयोऽसिद्ध इत्यर्थ इति व्याप्त्यादिप्रत्येकाभाववत्तयोद्भाविते नाव्याप्तिः। अत्र यद्यसाधारणकारणत्वं कार्यमात्राकारणतामात्रेण, तदाह सत्प्रतिपक्षेति। साध्याभावव्याप्यवत्पक्षज्ञानेत्यर्थः। इदं साध्याभाववत्पक्षरूपबाधग्रहस्यापि मतविशेष उपलक्षणम्। तदभावयोः कार्यसामान्याकारणतयाऽनुमित्यसाधारणकारणत्वादिति भावः। अतिव्याप्तेरिति। नेयं सर्वत्र सत्प्रतिपक्षिते बाधिते वा, साध्याभावव्याप्यवान् पक्षः साध्याभाववान् पक्षश्च तत्र तत्रोद्भाव्यते, न तु तज्ज्ञानमपि, अपि तु तज्ज्ञानोद्भावनस्थले, सम्भवति हि क्वचिदिह साध्याभावव्याप्यवन्तं पक्षं जानामीत्यादिरीत्याऽप्युद्भावनम्, तादृशपक्षवत्ता तु वृत्तिमत्त्वादिना येन केनचित्सम्बन्धेन हेतौ। निरुपाधित्वेति। यथाश्रुतमिदं ज्ञायमानमनौपाधिकत्वमुपाध्यभावरूपमनुमित्यसाधारणकारणं तदभावश्चोपाधिरसिद्ध्यन्तर्गतो हेत्वाभास इति प्राचीनपथमनुक्रामति। प्रागुक्तरीत्या तस्यानादरणीयत्वे तु निरुपाधित्वम् = उपाधिज्ञानाभावः, स चानुमित्यसाधारणकारणम्, उपाधिज्ञाने सति व्याप्तिज्ञानानुत्पादेनानुमित्यनुत्पत्तेः, तस्य व्यतिरेक उपाधिज्ञानं तदुद्भावनमिह हेतावुपाधिं जानामीत्येवम्, तद्विषयतादशायां भावरूपकारणव्यतिरेकवत्तयोद्भावनविषयत्वविरहसम्भवेनाव्याप्तिरिति कथञ्चिद्व्याख्येयम्। वस्तुतस्तु नैतदपि मनोरमम्, उपाधिज्ञानाभावस्य व्याप्तिज्ञानकारणत्वेऽप्यनुमितिकारणत्वे मानाभावात्। तस्मादभावस्य विशेषणेऽपि वक्ष्यमाण एव दोषो बोद्धव्यः। नन्वनुमित्यसाधारणकारणत्वं नामानुमितित्वावच्छिन्नकार्यतानिरूपितकारणत्वम् एवञ्च भावत्वं न देयम्, बाधग्रहाभावादेस्तु विशिष्टबुद्धित्वावच्छिन्नं प्रति कारणतया नातिव्याप्तिरित्यत आह स्वरूपासिद्धिरिति। तत्तत्प्रमाणे तत्तद्देशवृत्तित्वाभाव इत्यर्थः। तत्तद्देशस्तु प्रत्यक्षे गोलकमनुमितौ पक्ष इत्येवं विशिष्य बोध्यः। साधारण इति। तथा च स्वरूपासिद्धिरपि नोक्तकारणतावतीति भावः। ननु स्वरूपासिद्धतया बोध्यमाने हेतौ नासिद्धत्वानुपपत्तिः, स्वरूपासिद्धेरनुगतत्वाभावेन पक्षसत्त्वरूपायास्तस्या ज्ञायमानाया उक्तकारणत्वाश्रयत्वादिति चेन्न, तादृशकारणता हि साध्यव्याप्यवान् पक्ष इति निश्चये, प्राचीनमते च साध्यव्याप्यो हेतुः पक्षवृत्तिरिति निश्चयेऽपि, एकत्र व्याप्तिपक्षधर्मतोभयवैशिष्ट्यावगाहनस्यैवापेक्षणीयत्वात्, न तु तादृशप्रमितावेव, तादृशभ्रमेणाप्यनुमितिजननात्, एवञ्च भ्रमविषयस्य विशिष्टस्याप्रसिद्धत्वेन 'विशिष्टे कारणताग्राहकमानेन विशेषणेऽपि सा गृह्यते' इतिन्यायेन निश्चयस्य कारणत्वे तद्विषयस्यापि कारणताया असम्भवदुक्तिकत्वेन व्याप्तिविरहवत्तया पक्षधर्मताविरहवत्तया च प्रतिपाद्यमानेऽसिद्धत्वव्यवहारानुपपत्तेर्दुर्वारत्वात्, एतच्च भावत्वविशेषणेऽपि तुल्यम्। अज्ञानरूपाऽसिद्धिमानपि न सर्वदैवं सङ्गृह्यते, उद्भावनस्यासार्वदिकत्वात्, तदनुपादाने च विरुद्धादिकमप्य-

प्रमितत्वस्य व्यतिरेको यत्र साक्षादुपन्यस्यते सोऽसिद्ध इति; इदमप्यलक्षणमव्यापकत्वात्—यत्र व्याप्त्यादिव्यतिरेक उपन्यस्यते तत्र वस्तुगत्या व्याप्तत्वप्रमितेर्व्यतिरेकोऽस्तु नाम, नतूपन्यस्यतेऽपि. प्रयोजनाभावात्, व्याप्तिव्यतिरेकदर्शनादेवानुमानाङ्गवैकल्यात्मनो दोषस्योद्भावनपर्यवसानात्, तस्मादत्र प्रमितत्वव्यतिरेकोद्भावनं नास्तीत्यव्यापकत्वं दोषः । ननु विशेषणाद्यभावोऽपि वस्तुतो विशिष्टाभाव एवेति नोक्तदोषः; न, यदि विशेषणाद्यधिको विशिष्टस्तदा तदभावभेदोऽपि स्यात्, अथ नाधिकस्तदा विशेषणाभावत्वान्नान्याऽस्य विशिष्टाभावतेति विशेष्याभावस्यापि तथात्वे पृथक् पृथगेव विशिष्टाभावार्थस्तयोरित्यननुगम एव । स्वार्थानुमित्यसिद्धाव्याप्तिश्च, अनुद्भावनादिति ।

अथ ब्रूषे—यत्र व्याप्तत्वपक्षधर्मत्वप्रमितेर्व्यतिरेकः साक्षाच्छक्योपन्यासस्तदसिद्धम्, शक्योपन्यासत्वस्यानुपन्यस्तेऽपि सम्भवान्नास्त्यव्यापकतेति; नैतदपि

---

सिद्धमेवेति न दुष्टविभागोपपादनसम्भव इति भावः । व्याप्तिपक्षधर्मतातत्प्रमितिविरहत्रयं प्रवेश्य न सामान्यलक्षणं विधेयम्, येनोक्तरीत्या प्रत्येकमिलितविकल्पानुपपत्तिः स्यात्, अपि तु व्याप्तिपक्षधर्मताप्रकारकप्रमितिविरहमेकमेव प्रवेशयेत्याशङ्कते अथेति । व्याप्त्यादीत्यादिनाऽऽश्रयासिद्धिहेत्वसिद्धिसाध्यासिद्धिस्वरूपासिद्धयो ग्राह्याः । व्याप्तत्वप्रमितेः = व्याप्तत्वादिप्रमितेः । व्याप्तीति । व्याप्त्यादीत्यर्थः । नन्विति । विषयतासम्बन्धेन व्याप्तिपक्षधर्मतयोः प्रमितिविशेषणत्वम् । यद्यप्येवं तयोरन्यतरस्य तदुभयस्य वाऽभावस्य विशिष्टप्रमित्यभावरूपत्वं स्यात्, अस्तु, किं तेन, विशिष्टप्रमित्यभावस्य बोधस्वार्थिक एव व्यभिचारादिसाधारणो न तु साक्षादित्यनुभवानुसारिणा परेणापि वक्तव्यम्. एवं च बोधवैचित्र्ये सति पारिभाषिकोऽयमभेदो भेदे पर्यवस्यतीति परं प्रत्युपालम्भ्यमित्यन्यत्, प्रकृते तु साक्षाद्बोध एव विवक्षितस्तथापि स्फुटत्वादेवैतदुपेक्ष्याह यदीति । विशेषणाद्यधिकः = विशेषणविशेष्याभ्यां संसृष्टाभ्यां भिन्नः । तदभावेति । 'दण्डो नास्ति' 'पुरुषो नास्ति' 'दण्डी नास्ती' त्यादिप्रतीतिसाक्षिकाभावेत्यर्थः । स्यादिति । तथा सति प्रतियोगितावच्छेदकभेदात्, सत्यपि विशेषणे विशेष्याभावप्रयुक्तोऽस्ति विशिष्टाभावः, सत्यपि च विशेष्येऽस्ति विशेषणाभावप्रयुक्तः स, न तु विशेषणाभावो विशेष्याभावो वेतिविरुद्धधर्माध्यासाच्चेति भावः । भिन्नप्रतियोगिकत्वेनाभावभेदस्तु न विवक्षणीयः, एकस्य सामान्याभावादेर्दर्शनात् । विशिष्टस्यानतिरिक्तत्वमते तु विशेषणाधिकरणे विशिष्टाभावव्यवहारस्य विषयो विशेष्याभाव एव, विशेष्याधिकरणे च विशेषणाभाव एव, तयोश्च भेदोऽस्त्येव विरुद्धधर्माध्यासाधीन इत्यभिप्रायेणाह अथेत्यादि । अस्य = विशिष्टाभावव्यवहारविषयस्य । तयोः = विशेष्याभावस्थले विशेषणाभावस्थले चेत्यर्थः । अननुगमः = चालनीन्यायेनाव्याप्तिः । इयञ्चाश्रयासिद्धिहेत्वसिद्ध्यादौ व्याप्तिपक्षधर्मताव्यतिरेकयोः पार्थक्येनोपादानपक्षेऽपि समाना. आश्रयासिद्ध्याद्युद्भावने विशिष्टाभावबोधस्यार्थिकत्वात्, पक्षादौ पक्षतावच्छेदकाद्यभावानामपि पार्थक्येन निवेशे तु प्रत्येकमिलितविकल्पानुपपत्तिः ।

अव्यापकतेति । उक्ताव्यापकताद्वयमेव निषिध्यते । साध्याप्रसिद्ध्यादिस्थलेऽपि साध्यतावच्छेदकादिना साध्यादिघटितव्याप्त्यादिप्रमितिविरहस्योपन्यासयोग्यत्वादिति भावः । इदन्त्ववधेयम्—सिद्धसाधनस्य लक्ष्यतामते न तस्य कथमपि सङ्ग्रहसम्भवः, पक्षतायास्तादृशप्रमित्यविषयत्वेन तद्विरहस्थले तादृशप्रमितिविरहस्याशक्योपन्यासत्वादिति । अत्र योग्यतावच्छेदकदुर्निरूपत्वसत्त्वे एवाह तथाहीति ।

युक्तम्, तथाहि—शक्योपन्यासत्वं किं शक्यस्वरूपनिर्देशत्वमात्रम्, उत शक्यप्रमापणत्वम्, आद्येऽनैकान्तिकादावपि व्याप्तिशून्यत्वं शक्यप्रतिज्ञं भवत्येव, द्वितीयेऽपि यदि साक्षादिति प्रत्यक्षेणेत्यर्थस्तदा प्रत्यक्षेण प्रमापणीयत्वं व्याप्तिपक्षधर्मताप्रमितिविरहस्य प्रत्यक्षप्रतियोगिकाभावप्रत्यक्षतावादिमते विरुद्धादावप्यस्तीत्यव्याप्तिः। अन्यमते न क्वचिदपीति सर्वाव्याप्तिः। अथ व्याप्तिपक्षधर्मताविरहस्यापि प्रत्यक्षप्रमापणीयता विवक्षिता; सा न युक्ता, उक्तलक्षणवाक्यस्य व्याप्तिपक्षधर्मताविरहानभिधायित्वात्, तद्विरहेऽपि तात्पर्याभ्युपगमे प्रत्येकसमुदितलक्षणताविकल्पेनाव्यापकतापातात्। अतीन्द्रियपक्षादिविरहे च विषये तदभावादव्यापकतापत्तेः। एतेन यदि लिङ्गानपेक्षत्वं साक्षादर्थः सोऽपि निरस्तः। अथोच्यते—यत्र व्याप्तत्वपक्षधर्मत्वप्रमितेर्व्यतिरेकः

---

स्वरूपनिर्देशः = प्रतिज्ञा। भवत्येवेति। अत्र पक्षे साक्षात्त्वनिवेशवैयर्थ्यम्, नहि प्रतिज्ञाऽपि क्वचित्परस्परयेत्यपि द्रष्टव्यम्। यदि साक्षादिति। वक्तव्यकल्पं मनसि निधाय यदीत्युक्तम्। प्रत्यक्षेण प्रमापणीयत्वमिति। व्यर्थानन्तर्भावेन प्रत्यक्षप्रमितिविषयतायोग्यत्वघटितं तु लक्षणान्तरं स्यात्। प्रतियोगिस्मारणादिना चान्यदीयप्रत्यक्षप्रमितावपि परस्य व्यापारः सम्भवति। पकाराघटितस्तु पाठः क्काचित्को युक्ततरः। अन्यमते = षष्ठप्रमाणवादिभट्टमते। तन्मतेऽभावस्य योग्यप्रतियोगिकस्यापि न प्रत्यक्षता, प्रागेव त्वतीन्द्रियत्वेनाभिमतज्ञानाभावस्य। वेदान्तिना षष्ठप्रमाणगम्यस्यापि प्रत्यक्षत्वाभ्युपगमेऽपि न तस्यात्र पूर्वपक्षिता। तथात्वेऽपि वा नैयायिकवदेवातिव्याप्तिः। विरहस्यापीति। नैयायिकमतेनैवेदं लक्षणमित्यभिप्रायः। विरुद्धादौ तादृशविरहो न प्रत्यक्षेण शक्यप्रमापणोऽपि तु विरोधादिलिङ्गेनैवेत्यभिमानः। वस्तुतस्त्विह प्रत्यक्षयोग्यतायाः प्रविष्टत्वेन सा यद्यस्ति तर्हि विरुद्धादावपि व्याप्त्यादिविरहे, नास्ति चेन्न क्कापीति दशाविशेषमादायापि न दुष्टासङ्कीर्णतोपपादनसम्भव इति स्फुटमेवेति। यत्तु व्याप्तिपक्षधर्मताविरहस्य भट्टमतेऽपि प्रत्यक्षत्वात्तन्मतेऽसम्भववारणफलेयमाशङ्केति, तद्भ्रान्तिमात्रविजृम्भितम्, तन्मतेऽभावस्य क्वचिच्छब्दादिवेद्यत्वेऽपि प्रत्यक्षवेद्यत्वाभावात्, अन्यथा वल्लसतयाऽन्यत्रापि प्रत्यक्षवेद्यत्वोपपत्तौ षष्ठप्रमाणस्यैवासिद्ध्यपत्तेरिति। उक्तेति। अथ यपे इत्यादिनोक्तेत्यर्थः। विरहानभिधायित्वादिति। इतरेतरद्वन्द्वे प्रमितेरित्यत्र बहुवचनस्य समाहारे क्लीबत्वस्य सहितेतिमध्यमपदलोपित्वे प्रमितिविषयालाभस्य प्रमितिपदस्य व्याप्तिपक्षधर्मताविषयकप्रमितिलाक्षणिकत्वे वादिवाक्ये निरूढलक्षणातिरिक्तलक्षणाया अप्रामाणिक्याश्चापत्तेरिति भावः। लक्षणामभ्युपेत्याह तद्विरहेऽपीति। प्रत्येकेति। ह्रदो वह्निमान् धूमादित्यादौ पर्वतो धूमवान् वह्नेरित्यादौ चांशिकभ्रमतया व्याप्तिपक्षधर्मताप्रकारकप्रमिते विरहस्य शक्यप्रमापणत्वेऽपि प्रथमे व्याप्तेर्द्वितीये च पक्षधर्मताया विरहस्य न तथात्वमिति भावः। अतीन्द्रियपक्षादिविरहे च विषये इति। धर्मः परमेश्वरः परमाणोरित्याद्यतीन्द्रियपक्षसाध्यादिघटितविरहस्थले इत्यर्थः। तदभावात् = प्रत्यक्षेण प्रमापणीयत्वाभावात्। न च तादृशविरहत्रयान्यतमस्य प्रत्यक्षप्रमापणयोग्यत्वं विवक्षणीयम्, तथा च तत्र पक्षधर्मताविरहस्य व्याप्तिविरहस्य च तथात्वाभावेऽपि व्याप्तिपक्षधर्मताप्रमितिविरहस्य प्रत्यक्षप्रतियोगिकतया तथात्वसम्भवेन नाव्यापकता, नापि पूर्वोक्ता प्रत्येकमिलितविकल्पानुपपत्तिरिति वाच्यम्, विरुद्धादौ तथात्वेऽतिव्याप्तेः। एतेन = विरुद्धेऽतिव्यापकत्वेन। लिङ्गानपेक्षत्वं = लिङ्गज्ञानानधीनत्वं, साक्षादर्थः = साक्षात्पदेन विवक्षितम्। तथाचोक्ताभावत्रयान्यतमस्य यत्र लिङ्गज्ञानानपेक्षप्रमापणयोग्यता सोऽसिद्ध इत्यर्थः। उक्तान्यतमस्य व्याप्त्यादिप्रमितिविरहस्य विरुद्धादावपि तादृशयोग्यताऽऽविष्टत्वादिति निरासाभिप्रायः।

प्रतिपादनीयान्तरानपेक्षतया तत्प्रमापकस्य लिङ्गस्योपन्यासमन्तरेण शक्योद्भावनस्तदसिद्धमिति; नैतदप्युपपन्नम्, अतिव्यापकत्वात्, तथाहि—विरुद्धादावपि शक्यते तावद्विपक्षवृत्तिदण्डभूततर्काभावात्सोपाधित्वाऽवगन्तुम्, यदाह "यत्रानुकूलस्तर्को नास्ति सोऽप्रयोजक" इति, तस्मात्तेषामप्येवंलक्षणयोगित्वादसिद्धत्वप्रसङ्गः। न च तादृशतर्काविषयत्वमपि प्रतिपादनीयान्तरानपेक्षतया व्याप्तिपक्षधर्मताप्रमितिविरहप्रमापकलिङ्गभूतमेवेति वाच्यम्; तथा सति विरुद्धत्वादिवत्तस्य हेत्वाभासान्तरत्वप्रसङ्गात्।

---

व्याप्त्यादिविरहस्यापि विरुद्धादौ तथात्वं तूक्तमेव। प्रतिपादनीयान्तरानपेक्षतयेत्यस्य प्रमापकत्वेऽन्वयः। तात्पर्येण व्यतिरेकपरामर्शः। व्याप्तिपक्षधर्मताप्रकारकप्रमितेर्विशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाभावो यत्र स्वनिरूपितव्याप्तिमत्त्वेनाप्रतिपादितस्वलिङ्गज्ञापनानपेक्षप्रमापणयोग्यस्तदसिद्धम्, अत्र च प्रत्येकमिलितविकल्पानुपपत्तेरनवसर एव। विरोधादौ तादृशाभावनिरूपितव्याप्तेः स्फुटतया तद्वत्त्वेनाप्रतिपादितविरोधादिलिङ्गज्ञापनापेक्षस्यैव प्रमापणस्य योग्यता तादृशाभावविषयकस्य विरुद्धादौ। अतीन्द्रियपक्षकादिस्थलीयतादृशाभावनिरूपितव्याप्तेस्तु विरोधाद्यतिरिक्ते तल्लिङ्गेऽस्फुटत्वेन प्रतिपादनीयतया लिङ्गज्ञापनानपेक्षप्रमापणयोग्यत्वस्य तादृशाभावेऽसत्त्वेऽपि तादृशव्याप्तिमत्त्वेनाप्रतिपादितलिङ्गज्ञापनानपेक्षप्रमापणयोग्यताऽस्त्येव। तादृशव्याप्तिमत्त्वेनाप्रतिपादितस्वलिङ्गज्ञापनं तु तादृशव्याप्तिवैशिष्ट्यविषयत्वानिरूपितस्वलिङ्गविषयताकज्ञानजननम्। नन्वतीन्द्रियपक्षकादिस्थलीयतादृशाभावस्य कदाचिदाप्तेनापि प्रमापणसम्भवेन लिङ्गज्ञापनानपेक्षप्रमापणयोग्यत्वस्य तत्रावश्यकतया तत्सङ्ग्रहानुरोधेन तादृशव्याप्तिवैशिष्ट्यविषयत्वानिरूपितत्वनिवेशो निष्फलः। अथ प्रतिवादिकर्तृकं प्रमापणमिह विवक्षितम्, तस्य च लिङ्गज्ञापनापेक्षस्यैव योग्यता तत्रेति तादृशविषयत्वानिरूपितत्वनिवेश आवश्यकः, न च प्रतिवादिनः प्रतिज्ञावाक्येनापि शाब्दप्रमाया जननीयतया प्रतिवादिकर्तृकस्यापि प्रमापणस्य लिङ्गज्ञापनानपेक्षस्य योग्यता तत्रास्त्येवेति वाच्यम्, प्रमापणघटकप्रमाऽत्राप्रामाण्यशङ्कानास्कन्दिता विवक्षणीया, अप्रामाण्यशङ्काकवलिततादृशव्यतिरेकप्रमासत्त्वेऽसिद्धत्वाव्यवहारात्, तथा च प्रतिवादिवाक्येन प्रमाया जननेऽपि तस्या अप्रामाण्यशङ्काकवलिततया तदकवलितप्रमाजननस्य प्रतिवादिकर्तृकस्य लिङ्गज्ञापनानपेक्षस्य योग्यता न तत्रेति चेत्स्यादेवं यदि प्रतिवादिकर्तृकत्वनिवेशे किञ्चित्प्रयोजनं भवेदिति चेत्सत्यम्। स्वरूपोत्कीर्तनमात्रमिदम्, विरोधादिलिङ्गस्य प्रतिपादनीयान्तरानपेक्षतया तादृशव्यतिरेकप्रमापकतायाः स्वयमुक्तत्वात्। एवं च 'एतेन यदि लिङ्गानपेक्षत्वं साक्षादर्थः सोऽपि निरस्त' इति पङ्क्तिरेवात्र पूर्वपक्षोत्तरपक्षाभ्यां विवृतेति द्रष्टव्यम्। विपक्षवृत्तिदण्डभूतेति। विपक्षवृत्तित्वशङ्कानिवर्तकेत्यर्थः। सोपाधिनेति। व्याप्तिविरहवदित्यर्थः। सच प्राचीनमते साध्यव्यापकव्यभिचारितारूपसोपाधिता, नव्यमते स्वन्यद्दत्यन्यत्। तत्त्वं सूक्ष्मम्। अप्रयोजक इति। निरुक्तसोपाधित्वमेवाप्रयोजकत्वं व्यवह्रियते यदि तत्र साध्याभाववद्वृत्तित्वरूपो व्यभिचारः प्रविशति। यदि तु साध्याव्यापकीभूताभावप्रतियोगित्वरूपोव्यभिचारस्तदाऽन्यथासिद्धत्वं व्यवह्रियते, एवञ्च सोपाधितारूपत्वादनयोः प्राचीनमते हेत्वाभासत्वम्, न तु नव्यमते। तेषां = विरुद्धादीनाम्। एवमिति। अनुकूलतर्काभावस्य वक्तव्यापत्या लिङ्गतायाः स्वयाऽवचनीयतया लिङ्गज्ञापनानपेक्षमेव व्याप्तिप्रमितिविरहप्रमापणं तत्र शक्यमिति स्वयाऽऽस्थयेमिति भावः। तथासति = व्याप्तिविरहोन्नायकत्वे सति। तस्य = अनुकूलतर्काभावस्य, प्रतिकूलतर्कस्येत्यपि बोध्यम्। हेत्वाभासान्तरत्वप्रसङ्गादिति। तयोरसिद्ध्यन्तर्भावमभ्युपेत्य हेत्वाभासत्वस्य

अथोच्यते—तथोपन्यस्यमानं तदसिद्धं भवतु, साध्यविपरीतव्याप्तत्वादिना तु दूष्यमाणं विरुद्धाद्येव तत्, उपन्यासप्रकारभेदाच्च भेदव्यवस्था हेत्वाभासानाम्, नह्यत्र गोत्वाश्वत्वादिवदत्यन्तासङ्कर इष्यते, किन्नाम प्रमाणप्रमेयभाववत्प्रकारासङ्करमात्रमिति; तदप्ययुक्ताभिधानम्, वक्तव्यं हि केन प्रकारेणासिद्धत्वं भवति, न तावदुक्तलक्षणेन, तथाशक्योद्भावनत्वस्य विरुद्धोचितप्रकारेणोपन्यस्यमानस्य सम्भवात्, सर्वथा निष्प्रकारकस्यासिद्धधर्मिणस्तदुद्भावनस्याशक्यत्वात्। न च तथा शक्योद्भावनत्वम-

---

प्राचीनानामिष्टत्वाद्धेत्वाभासान्तरत्वं प्रसञ्जितम्, व्याप्तिविरहोन्नायकतया हेत्वाभासत्वव्यवहारप्रसङ्गादिति तदर्थः, तेन न सिद्ध्यसिद्धिव्याहतिः । नव्यमते तु तयोः स्वरूपसतोरेव व्याप्तिग्रहप्रतिबन्धकतया ज्ञायमानप्रतिबन्धकताघटितं हेत्वाभासत्वमेव न, प्रागेव स्वसिद्धिरूपत्वमिति। वस्तुतस्तु कारणाभावस्यैव कार्यानुत्पादप्रयोजकतया तज्ज्ञानस्य कार्यप्रतिबन्धेऽनपेक्षणीयत्वेऽपि सोपाधितावगमकता न स्वरूपसतः सम्भवतीति प्रतिकूलतर्कस्यानुकूलतर्काभावस्य च लिङ्गता सम्भवत्येव. व्याप्तिविरहव्याप्ततया ज्ञातत्वात्, एवं सत्यपि न पार्थक्यमपि स्वसिद्ध्यन्तर्भाव इति तु प्राचीनाभ्युपगमः परिभाषामात्रमेव भवेत्, भवतु नाम, तथापि विरुद्धादौ व्याप्तिप्रमितिविरहस्य लिङ्गज्ञापनानपेक्षप्रमापणयोग्यता निर्बाधैव, अन्यथा हि न क्वचिदपि सा स्यादित्युक्तमेवेत्यतिप्रसङ्गोऽतिस्फुट एवेति । एवं दुष्टविभागमुपपादयितुमशक्तो दोषविभागाभिप्रायेणोपधेयसाङ्कर्येऽप्युपाधीनामसाङ्कर्यमित्याशङ्कते अथेति । तथोपन्यस्यमानं = असिद्धिमत्तयावगम्यमानं, तद् = विरुद्धादि, असिद्धम्भवतु = असिद्धव्यवहारं भजतु । विरुद्धाद्येव तत् = विरुद्धत्वादिनैव व्यवह्रियते तत् । उपन्यासप्रकारः = दुष्टतावगमप्रकारो दोषः । चकार एवार्थे । न तु धर्मिभेदादित्यर्थः । हेत्वाभासानां = दुष्टानामपि भेदव्यवस्था = भेदव्यवहारः । अत्र = दोषेषु । अत्यन्तासङ्करः = असामानाधिकरण्यम् । प्रमाणेत्यादि । यथा प्रमाणत्वप्रमेयत्वयोः स्वरूपभेदो न त्वसामानाधिकरण्यम्, प्रमाणस्यापीन्द्रियादेः प्रमेयत्वादित्युक्तं "प्रमेया च तुले"ति सूत्रे, तथा प्रकृतेऽपीति भावः । अत्र यदि तुलाया यदा सुवर्णादिगुरुत्वपरिच्छेदकतया प्रमाणत्वव्यवहारस्तदा तदीयगुरुत्वस्य तुलान्तरेणापरिच्छेद्यतया न प्रमेयत्वव्यवहारोऽपि तु तत्प्रामाण्यस्य सन्दिग्धतादशायामेवमिन्द्रियादेरपि दशाभेदेनैव प्रमाणत्वप्रमेयत्वव्यवहार इति प्रकृतेऽपि दोषाणां भिन्नानां दशाभेदेनैव सामानाधिकरण्यमेकत्रव्यवहारश्चेत्यर्थोऽभिप्रेतः, अतएव 'तथोपन्यस्यमानमित्यादि विरुद्धाद्येव त'दित्यन्तं यथाश्रुतमपि साधु सङ्गच्छते, तदा परिहरति वक्तव्यमित्यादिना । असिद्धत्वं = असिद्धं । विरुद्धोचितप्रकारेण = विरुद्धादिव्यवहारनियामकविरोधादिमत्तया । उपन्यस्यमानस्य = अवगम्यमानस्य । सम्भवादिति । तथा च दशाभेदेनैव नैकत्रावस्थितिर्व्यवहारश्च भिन्नदोषाणामपि तु दशैक्येऽपीति भावः । ननु विरोधाद्यसमानाधिकरणं तथाशक्योद्भावनत्वमसिद्धिरस्त्वित्याशङ्क्याह सर्वथा निष्प्रकारकस्येति। विरोधादिरहितस्येत्यर्थः। अयोगोलकं वह्निमद् धूमादित्याद्यतिरिक्तस्थले इत्यादिः । असिद्धधर्मिणः = येन केनचित्सम्बन्धेनासिद्धिसम्बन्धिनः । विशेष्यत्वं षष्ठ्यर्थ उद्भावनेऽन्वेति । तदुद्भावनस्य = व्याप्त्यादिप्रमितिविरहोद्भावनस्य । अशक्यत्वादिति । तथा च भूरिलक्ष्यासङ्ग्रह इति भावः । ननु तथाशक्योद्भावनत्वोद्भावनमेवासिद्धिरस्तु, विरोधादिस्थले तु न तदुद्भावनम्, अनुमितिप्रतिबन्धादिरूपप्रयोजनाभावादित्याशङ्क्यैवं सत्यसम्भवो विरोधादेरसिद्धित्वेन व्याप्तित्वप्रमित्यादिविरहस्य वा तत्र तत्रोद्भावनादित्याह । नचेत्यादि । यदि स्वसम्भववारणाय व्याप्त्यादिप्रमितिविरहस्योद्भावनमेवासिद्धिः, तस्य सप्रयोजनतया क्वचित्सम्भवादित्युच्यते, तदा विरोधादिस्थलेऽपि तत्सम्भव इति न दशाभेदेन समावेशोपपत्तिरित्यभिप्रेत्य प्रोक्तं स्मार-

प्युद्भाव्यतेऽसिद्धेः, येन प्रकारभेदव्यवस्थितिरनेन भवेत्। न च शक्योद्भावनपदस्थाने उद्भाव्यमानत्वमिति कृते निस्तारः; सोपाधितायुद्भावने प्रमित्यभावोद्भावनं व्यर्थत्वान्न क्रियत इति तदव्यापकत्वं प्रसज्येतेति प्रागेवोक्तत्वादिति। एतेनासिद्धः साध्यसम इति प्रत्युक्तम्, यथाकथञ्चित्साध्यसाम्यस्य सर्वसाधारणत्वात्, साम्यविशेषस्य चोक्तप्रकारपर्यवसानव्यतिरेकेणान्यस्यासम्भवात्। लक्षणान्तरेषु चोक्तदूषणप्रकारा यथासम्भवमिह योजनीया इत्यलं विस्तरेणेति। इत्यसिद्धिखण्डनम्।

---

यत्राह नचेति । निस्तारः = निर्दोषता । तदव्यापकत्वमिति स्वार्थस्थलीयाव्यापकत्वस्याप्युपलक्षणम्, तस्यापि प्रागुक्तत्वादिति। वस्तुतस्तु तुलायाः प्रमाणत्वदशायामेव योग्यतामादाय प्रमेयत्वव्यवहारे न काचित्क्षतिः, एवमिन्द्रियादेरपि, किञ्च तस्य सर्वदैव प्रमेयत्वम्, अन्ततो भगवत एव तत्प्रमातृत्वात्, स्वकरणकप्रमाविषयताऽपि कदाचिदुपनीतभानेन तत्र सम्भवत्येव, एवञ्चासिद्धिविरोधादीनां तद्व्यवहाराणां वा कालभेदेन समावेशो नेह निरूपणीयोऽपि तु भेदमात्रमिति। किन्त्वेवमतिव्याप्तेरभावेनोद्भावनादेरनिवेशनीयत्वेन व्याप्तिपक्षधर्मताप्रमितिसामान्यविरह इत्येवासिद्धिलक्षणं स्यात्, तच्चानुपदं विवेचयिष्यते इति । न्यायसूत्रोक्तं लक्षणं निराचष्टे एतेनेति । यथाकथञ्चित् = प्रमेयत्वादिना । सर्वसाधारणत्वादिति । तथा च सद्धेतोरपि स्यादसिद्धता । साधनीयत्वेन साध्यसाम्यविवक्षायां तु ह्रदो वह्निमान् धूमादित्यादिस्वरूपासिद्धस्यैव स्यात्सङ्ग्रहो न तु व्याप्यत्वासिद्धादेरित्यपि द्रष्टव्यम्। असम्भवादिति। ननु यथा साध्यस्य साधनीयत्वं न तु प्रमितत्वमेवं हेतोरपि व्याप्तिपक्षधर्मताभ्यां साधनीयत्वमेव न तु प्रमितत्वमित्यर्थाद्व्याप्तिपक्षधर्मताभ्यां प्रमितिसामान्यविरहस्य लक्षणता लभ्यते, तेन रूपेण च विरुद्धादेरपि लक्ष्यतेत्युक्तम् । व्याप्यभावस्य पक्षतावच्छेदकाभाववत्पक्षादेश्चासिद्धिरूपत्वाभावेऽपि तद्वतो हेतो दुष्टत्वमुक्तप्रमितिविरहेणैवोपपद्यते एव । नच काञ्चनमयत्वादिना पर्वतवह्न्यादेः पक्षतासाध्यतादिस्थले प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितव्याप्त्यादिप्रमितेरप्रसिद्धया तदभावोऽसम्भवीति वाच्यम्, तादृशव्याप्त्यादिप्रतीतेः प्रमीयविशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य विवक्षितत्वात्; नच स्वरूपसत एव तस्य प्रतिबन्धकत्वेन ज्ञानगर्भहेत्वाभासत्वानुपपत्तिः; अन्यतमत्वघटितस्यैव हेत्वाभासत्वस्योक्तत्वादिति चेन्न, प्रमात्वस्याननुगतत्वेन सम्बन्धकोटौ प्रकृतव्याप्त्यादिघटितस्य तस्यानुप्रवेशे सिद्ध्यसिद्धिव्याघाततादवस्थ्यात्, उदासीनव्याप्त्यादिप्रमीयविशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाभावस्य च सद्धेतुसाधारण्यात् । एतेन भ्रमानिरूपितविशेष्यतासम्बन्धावच्छिन्नप्रतियोगिताकाभावविवक्षा पराकृता, भ्रमत्वस्याप्यननुगतत्वेनोदासीनव्याप्त्यादिघटितस्य तस्य प्रवेशे तादृशाभावाप्रसिद्धिः, प्रकृतव्याप्त्यादिघटितस्य प्रवेशेऽपि ज्ञानभेदेन विषयताभेदे मानाभावेन विशेष्यतायां भ्रमानिरूपितत्वाप्रसिद्धिरेव । किञ्च स्वरूपसतस्तादृशाभावस्य प्रतिबन्धकत्वं कारणाभावविधयाऽन्यथा वा, नाद्यः, प्रमितेरेवानुमितिकारणत्वे मानाभावात्, नापि द्वितीयः, असम्भवात्। परार्थे च तादृशाभावस्य विषयाभावेनैव निरूपणे तस्यैव हेत्वाभासत्वमुचितम्। अथास्त्वेवमेव, केवलव्याप्यभाववति केवलपक्षधर्मत्वाभाववति च व्याप्तिविशिष्टपक्षधर्मत्वाभावोऽनुगत एवेति चेन्न, प्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यनिरूपितव्याप्त्यादेरप्रसिद्धिस्थले तादृशाभावाप्रसिद्ध्या हेतोर्दुष्टत्वव्यवहारानुपपत्तेः । न च काञ्चनमयत्वेन पर्वतवृत्तित्वं वह्निव्याप्तिर्वा नास्तीति प्रतीतिमादाय समन्वयः शक्यः, विवदन्ते हि व्यधिकरणधर्मावच्छिन्नावच्छेदकताकप्रतियोगिताकाभावे । यदा च व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावोऽपि न प्रामाणिक इत्यावेदितं व्याप्तिखण्डनेऽधस्तात्, तदोक्ताभावस्य प्रामाणिकतायाः का

कथा, तस्याः सन्दिग्धत्वेऽपि दोषसंशयेन लक्षणानुपपत्तिरेव. अप्रसिद्धप्रतियोगिकाभाववादिनोऽपि नेह पराक्रमः, अलीकानलीकयोः संसर्गासम्भवेन तादृशाभावस्याप्यलीकत्वापत्तेः। अथास्तु व्याप्तिपक्षधर्मताप्रकारकनिश्चयाभाव एवासिद्धिरिति नोक्तदोषाणामवकाश इति चेन्न, व्याप्तिपक्षधर्मतावतोऽपि तादृशनिश्चयाभावसम्भवेनासद्धेतुत्वस्य व्याप्तिपक्षधर्मताविरहिणोऽपि तादृशनिश्चयसम्भवेन सद्धेतुत्वस्य चाप्रामाणिकत्वापत्तेः, सद्धेतोस्तादृशनिश्चयाभावदशायामनुमित्यजनकत्वेनैव क्वचिदाभासत्वव्यवहारः प्रामाणिको न तु दोषवत्तयाऽपि, यदाह—"निर्युक्तिकस्तु प्रवादो न श्रद्धेय" इति। ननु परामर्शविषयाभावत्वमसिद्धित्वम्, एतच्चाननुगमकमात्रम्, दोषत्वं त्वाश्रयासिद्ध्यादेः प्रत्येकमेव, न च विशेषाभावविवक्षायामुभयाभावादिकमादायातिप्रसङ्गः, सामान्याभावविवक्षायां त्वप्रसिद्धिः, परामर्शविषयीभूतस्य व्याप्त्यादिघटकाभावस्य केवलान्वयित्वादिति वाच्यम्, परामर्शविरोधितावच्छेदकरूपवत्त्वस्य विवक्षितत्वात्, न च दोषैकदेशेऽतिप्रसक्तिः; अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टयादृशविशिष्टविषयित्वावच्छिन्नभेदप्रतियोगितावच्छेदकतासामान्याभावः परामर्शप्रतिबन्धकतायां तादृशविशिष्टत्वस्य विवक्षितत्वात्। साधारणत्वानुपसंहारित्वविरुद्धत्वानिरूपितत्वं तु विषयतायां वक्तव्यम्, अन्यथाऽतिव्याप्तेः। साध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यग्रहस्यानुमितेरेव प्रतिबन्धकः। यत्र साधारण्यादिकमप्रसिद्धं यथा काञ्चनमयः पर्वतो वह्निमान् धूमादित्यादौ, यत्र वा साधारण्यादिकमाश्रयासिद्ध्यादिरूपं यथा वह्निव्याप्यमेयत्ववान् पर्वतो वह्निमान् मेयत्वादित्यादौ, तत्र तादृशानिरूपितत्वमनुपादेयम्, शब्दैक्यस्याकिञ्चित्करत्वात्, विशिष्टान्तराघटितत्वादिकं तु सामान्यलक्षणवदिति चेन्न, पर्वतान्यः पर्वतो दहनान्यदहनवान् धूमान्यधूमादित्यादिस्थलीयासिद्धिसङ्ग्रहाय यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानाहार्यज्ञानसामान्यस्य विरोधिविषयिताप्रयुक्तः पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टसाध्यनिरूपितव्याप्तिविशिष्टहेतुतावच्छेदकविशिष्टहेतुमत्त्वावगाहित्वाभावस्तद्रूपावच्छिन्नत्वमसिद्धित्वमिति विवक्षाया आवश्यकतया यत्स्थलीयदोषविषयकनिश्चयाव्यवहितोत्तरक्षणेऽनाहार्यज्ञानमेव न जातम्, यत्र वा तादृशावगाहित्वमेव न प्रसिद्धं तत्राव्याप्तेस्तत्सम्भावनाया वा दुर्वारत्वात्, दोषसंशयेनापि लक्षणस्यानुपपत्तेः, असम्भवस्त्वव्याप्त्यसमाधिरेवेति तु हेत्वाभाससामान्यलक्षणखण्डनन्यायेन द्रष्टव्यम्, एवं प्रतिबध्यप्रतिबन्धकभावाप्रामाणिकत्वादिकमपि तत्रोक्तमेव। एतेन—आश्रयासिद्धिस्वरूपासिद्धिव्याप्यत्वासिद्ध्यन्यतमत्वमसिद्धित्वम्. नचाश्रयासिद्ध्यादेरेव दुर्वचत्वे कथमेतदपि घटतामिति वाच्यम्, अनाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टं यादृशविशिष्टविषयकत्वं पक्षतावच्छेदकविषयकत्वावच्छिन्नपक्षग्रहनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकत्वव्यापकं तादृशविशिष्टत्वमाश्रयासिद्धित्वम्, विशिष्टान्तराघटितत्वादिकं तु सामान्यलक्षणवत्, एवं पक्षे साधनवैशिष्ट्यांशे प्रतिबन्धकतां प्रवेश्य स्वरूपासिद्धित्वमपि निर्वाच्यम्। आश्रयासिद्धिस्वरूपासिद्ध्यात्मकविशिष्टानिरूपितत्वं विशिष्टविषयितायां प्रवेश्य परामर्शप्रतिबन्धकताघटितं तु व्याप्यत्वासिद्धित्वं वक्तव्यम्, साधारण्यविरोधानुपसंहारित्वानां प्रसिद्धिस्थले तु तेषां ग्रहस्यापि परामर्शप्रतिबन्धकतया तत्रातिव्याप्तिवारणाय तदनिरूपितत्वमपि विषयितायां विवक्षितव्यम्, पर्वतान्यः पर्वत इत्यादिस्थलानुरोधे तु यद्रूपविशिष्टविषयकनिश्चयाव्यवहितोत्तरानाहार्यज्ञानसामान्यस्य विरोधिविषयिताप्रयुक्तः पक्षे पक्षतावच्छेदकावगाहित्वाभावइत्यादिरीत्या निर्वचनीयमिति—निरस्तम्, अन्यतमत्वघटनाऽसाङ्कर्यं च बहुशो निवेदितम्। तदेतत्सर्वं पिशुनयन्नाह लक्षणान्तरेऽपीति। इह चोक्तदूषणप्रकारा लक्षणान्तरेष्वपि यथासम्भवं योजनीया इत्यन्वयः। इति खण्डनशारदायामसिद्धिखण्डनम्।

## विरोधखण्डनम् ।

अपि चासिद्धलक्षणविशेषणेषु प्रमाणव्यवच्छेदकव्यतिरेकेण यद्व्यवच्छेद्यं किं तत्? केन चिद्विरुद्धं केनचिदन्यदिति चेत्, विरुद्धमेव किमुच्यते, तथाहि—साध्यविपरीतव्याप्तो विरुद्ध इत्याहुः, तन्न, साध्यव्यतिरेकेण हि व्याप्तिः कार्त्स्न्येन वाऽनौपाधिको वा स्वाभाविको वा सम्बन्ध इत्याद्युक्तिभिः सविशेषणः सहभाव एव निरुच्यते, तथा सति च साध्यव्यतिरेकेण सामानाधिकरण्यमेव विशेषणविशेषयुक्तं विरुद्धत्वमित्युक्तं स्यात्,

न परमुक्तदोषैरेव, अपि तु व्यवच्छेद्यानिरुक्तौ तत्तद्व्यावृत्तिफलकविशेषणवैयर्थ्येनाप्यसिद्धेर्दुर्निरूपत्वमित्यभिसन्धानेनाह अपि चेति । प्रमाणं = सद्धेतुः । व्यतिरेकेण = व्यतिरिक्तेन । विरुद्धमिति । एतच्च व्याप्तिपक्षधर्मताप्रमितेर्व्यतिरेको यत्र लिङ्गोपन्यासमन्तरेण शक्योद्भावन इति यथाश्रुताभिप्रायेण, तत्र व्यतिरेकान्तेन सद्धेतोरिव लिङ्गोपन्यासमन्तरेणेत्यनेन विरुद्धादेर्व्यवच्छेद्यत्वात् । एवं च विरुद्धमित्यस्य विरुद्धादिकमित्यर्थः । केनचिदन्यदिति तु शक्योद्भावनत्वस्य स्वार्थानुमानाद्यसिद्धेऽव्यापकत्वव्यवच्छेदकताभिप्रायेण नेतव्यम् । व्याप्तिपक्षधर्मताप्रमितिविरहादिलक्षणेषु तु विरुद्धादेरपि तेनोपाधिना लक्ष्यत्वेनाव्यवच्छेद्यत्वेऽपि विरोधादेर्निरसनीयस्यैव व्यवच्छेद्यतोपाध्यसाङ्कर्यावश्यम्भाविनीति नासङ्गतिः। साध्यविपरीतःसाध्याभावः, तस्य च प्रतियोग्यनधिकरणवृत्तित्वं वक्तव्यम्, तेन संयोगी द्रव्यत्वादित्यादौ नातिप्रसङ्ग इत्यभिमानः वस्तुतस्तु भेदमभावस्याधिकरणभेदेनोपगम्यैव गुणवृत्तिसंयोगाभावाव्याप्यतया न द्रव्यत्वेऽतिप्रसङ्ग इति शक्यते वक्तुम्, परन्त्वधिकरणभेदेनाभावभेदोपगमेऽधिकरणातिरिक्ताभावसिद्धिरेव न सम्भवति, अनन्ताधिकरणेषु घटाद्यभावत्वस्य कल्पनापेक्षयाऽतिरिक्तैकव्यक्तौ तत्कल्पनायां लाघवमित्यस्येदानीं वक्तुमशक्यत्वात्, अभावत्वप्रकारकप्रतीतेः प्रमात्वरक्षार्थं तु न तदतिरिक्तत्वसिद्धिः, भावाधिकरणकस्याप्यभावमात्रप्रतियोगिकाभावस्याधिकरणरूपतायाः भवद्भिरभ्युपगमेन भावस्याप्यभावत्वप्रकारकप्रमोपपादकतायाः क्लृप्तत्वात्, तथाभ्युपगमत्यागेऽपि चाभावत्वस्य भावाभावोभयसाधारण्यमभ्युपगच्छन्तं प्रति भावेऽभावत्वप्रतीतेर्भ्रमत्वं न शक्यमापादयितुम्, अन्यथा तस्य भावव्यावृत्तत्वसिद्धिं विना भावे तत्प्रतीतेर्भ्रमत्वसिद्ध्यसम्भवेनान्योन्याश्रयस्य दुष्परिहरत्वात् । असाधकतानुमापकस्यैव रूपस्य विभाजकतौचित्यमित्यभिप्रायेण विरुद्धत्वेन लिङ्गेनासाधकतासाधने व्यर्थविशेषणतां वक्तुं व्याप्तिस्वरूपं दर्शयति साध्यव्यतिरेकेणेत्यादिना । व्याप्तिः = तत्पदार्थः, निरुच्यत इति सम्बन्धः । कार्त्स्न्येनेति । हेतुतावच्छेदकावच्छेदेनेत्यर्थः । वैशिष्ट्यं तृतीयार्थः । एतच्च लीलावतीकारमतम् । द्वितीयं तूदयनाचार्याणाम्, तृतीयं तु वाचस्पतिमिश्राणाम् । आदिपदेनाव्यभिचरितः सम्बन्ध इति न्यायवार्तिककारमतं ग्राह्यम् । सम्बन्धः = सामानाधिकरण्यम् । सविशेषणः = सामानाधिकरण्येन कार्त्स्न्यादिविशिष्टः । सहभावः = सामानाधिकरण्यम् । एवञ्च गौरश्वत्वादित्यादावश्वत्वं गोत्वासाधकं स्ववृत्तिधर्मावच्छेदेन गोत्वाभावसमानाधिकरणत्वात्, स्वव्यापकगोत्वाभावसमानाधिकरणत्वात्, स्वव्यापकगोत्वाभावकत्वे सति गोत्वाभावसमानाधिकरणत्वाद्वेत्याद्ये। यावद्गोत्वाभावव्यापकव्यापककत्वे सति गोत्वाभावसमानाधिकरणत्वादिति द्वितीये, गोत्वाभावस्वभावप्रयुक्तत्वे सति गोत्वाभावसमानाधिकरणत्वादिति तृतीये, गोत्वासमानाधिकरणत्वे सति गोत्वाभावसमानाधिकरणत्वादिति च चतुर्थे हेतुर्विवक्षित इति स्वसमानाधिकरणलघुव्याप्यतावच्छेदकधर्मान्तरघटितत्वमनायाससिद्धम् । स्वभावप्रयुक्तत्वं तु प्रतीतिसाक्षिकं द्रष्टव्यम्, अन्यथाऽनौपाधिकत्वकल्पान्तर्भावापत्तेः । सामानाधिकरण्यमेवेति । एतेन सर्वकल्पसाधारण्यानुरोधेन विशिष्टव्यवच्छेद एवोचितः, द्वितीयचतुर्थयोः

यदा चैवं तदा साध्यव्यतिरेकेण सामानाधिकरण्यमेव हेतोरगमकत्वे समर्थमिति तन्मात्रमुक्ताव्यम्, वृथा विशेषणप्रक्षेपः, तथा चानैकान्तिक एवायं स्यात्। ननु साध्यव्यतिरेकसम्बन्धो यद्यपि विरुद्धानैकान्तिकयोर्द्वयोरप्यस्ति तथाऽपि वस्तुगत्या स्वाभाविकोऽसौ विरुद्धे एवेत्येतावन्मात्रविशेषविवक्षया विरुद्धस्यानैकान्तिकाद्भेदोपन्यासः, मैवम्, दत्तोत्तरत्वात्, वस्तुगत्या सन्नप्ययं विशेषो नोद्भावनार्ह इत्युपेक्षणीय इत्युक्तम्, तथाहि—नेदमस्य साधकमेतत्साध्यं प्रति विरुद्धत्वादित्यभिधीयमाने विरुद्धशब्दार्थनिरुक्तौ विशेषणाधिक्यस्योक्तन्यायेन दुष्परिहरत्वात् । अत एवानैकान्तिके सन्देहेन प्रत्यवस्थानं विरुद्धे तु व्यतिरेकनिश्चयेनेति विशेषादनयोर्भेदोपन्यास इत्यप्यनवकाशम् । अनुमितिहेतुव्यतिरेको हि हेतुदोषः, अनुमितिहेतुश्चैको व्याप्तिः, ततस्तदभावस्य दोषत्वा-

---

कथञ्चिच्च तृतीये विशेषणस्यापि व्यर्थविशेषणत्वासम्भवेन समर्थत्वात् । यदि तु गोत्वाभावोऽपि यावद्गोत्वाभावव्यापकान्तर्गत इति तद्व्यापकत्वमश्वत्वे स्वव्यापकतत्सामानाधिकरण्यमेवेतिमन्येत, तदा द्वितीयेऽपि न विशेषणस्य सामर्थ्यमिति द्रष्टव्यम् । अगमकत्वे समर्थम्=असाधकताव्याप्यम् । अनैकान्तिकः = साधारणः । अयं = विरुद्धः । उक्ताभिप्रायमजानानः शङ्कते नन्विति । अग्रेयमाशङ्केत्यर्थः । भेदोपन्यासः = भेदेन विभजनम् । साधकत्वं सिद्धिजननयोग्यत्वम् । एतत्साध्यं प्रति विरुद्धत्वादिति । एतत्साध्याभावव्याप्तत्वादित्यर्थः । अत एवेति । वक्ष्यमाणादित्यर्थः । अनवकाशमित्यन्वयः । सन्देहेनेति । साध्यतदभावोभयकोटिकसन्देहेनेत्यर्थः । तेन प्रत्यवस्थानं च परपक्षाक्षेपाय तत्प्रतिपादनम् । कोटिद्वयमुपस्थापयता हि साधारणासाधारणधर्मवद्धर्मिज्ञानेन संशयो जन्यते, अस्ति च साधारणस्य हेतोः साध्यतदभावोभयसाहचर्यज्ञानमसाधारणस्य च साध्यतदभावोभयव्यावृत्तत्वज्ञानम्, सर्वमनित्यं प्रमेयत्वादित्यनुपसंहारिण्यपि पक्षे एव साध्यतदभावोभयसाहचर्यग्रहेण साधारणधर्मज्ञानविधयैव कोटिद्वयोपस्थापकत्वम्, यद्यप्यसौ साध्यसन्देहाक्रान्तविधकस्तथापि संशयनिश्चयसाधारणमेव साध्यतदभावसाहचर्यग्रहो हेतुः, अनुभूतिकलहश्चायं यत्साहचर्यनिश्चयस्यैव कोटिद्वयोपस्थापकत्वमिति, भवतु वा साहचर्यनिश्चयस्यैव तथात्वम्, तथापि साधारणस्य तत्त्वेन ज्ञातस्य संशायकत्वस्यावश्यकतया तदन्तर्भावस्य विरुद्धे निराससम्भवेन न मूलासङ्गतिः, अनैकान्तिकपदस्य केवलसाधारणपरत्वसम्भवात् । विरुद्धे तु व्यतिरेकेति । साध्याभावेत्यर्थः । बाधिते साध्याभावनिश्चयेऽपि नासौ प्रकृतहेतुना, विरुद्धे तु तेनैवेति विशेषः । अनयोः = विरुद्धसाधारणयोः । भेदोपन्यास इत्युक्तार्थम् । हेतुदोष इति । साक्षादित्यादिः । कारणाभावस्य साक्षात् विरुद्धादेस्तु तत्प्रतिपादकतया दोषतेति प्रागुक्तत्वात् । ज्ञायमानप्रतिबन्धकस्य दोषत्वमते तु तदभावस्य कारणताया अपि सम्भवेनानुमितिहेत्विस्यस्यानुमितिपरामर्शान्यतरहेत्वित्यर्थः स्यात् । वस्तुतस्तु ज्ञायमानदोषाभावस्य कारणता दोषज्ञानाभावे एव पर्यवस्यति, दोषज्ञानं च न हेतुदोष इति । अथवा हेतुदोष इत्यस्य हेतुदोषतयाऽनुमत एवेत्यर्थः । एवं च कारणाभावातिरिक्ते दोषताव्यावृत्तिर्नात्राभिप्रेतेति । व्याप्तिरिति । प्रमीयमाणा व्याप्तिः व्याप्तिप्रमितिर्वेत्यर्थः । एतच्चानुमितिपदस्यानुमितिप्रमाविशेषपरत्वाभिप्रायेण । अन्यथा तु व्याप्तिरित्यस्य व्याप्तिनिश्चय इत्येवार्थः । व्याप्तेस्तत्प्रमितेश्चेव्याप्तिनिश्चय इत्यर्थः । अग्रे व्याप्तिप्रमितीत्यस्यापि व्याप्तिनिश्चय इत्येवार्थः । न च व्याप्तिनिश्चयव्यतिरेकलिङ्गत्वं विपक्षसम्बन्धस्यापि च व्याप्तिनिश्चये एव तात्पर्यसम्भवः । न च व्याप्तिनिश्चयव्यतिरेकलिङ्गत्वं विपक्षसम्बन्धस्यास्यापि च व्याप्तिनिश्चये एव तात्पर्यसम्भवः । न च व्याप्तिनिश्चयव्यतिरेकलिङ्गत्वं विपक्षसम्बन्धेऽसम्भवि भ्रमात्मकव्याप्तिनिश्चयस्य सम्भवादिति वाच्यम्, लिङ्गत्वादित्यस्य प्रयोजकज्ञानविषयत्वार्थकतया सामञ्जस्यात्, विपक्षसम्बन्धज्ञानस्य व्याप्तिनिश्चयविरहप्रयोजकत्वात् । तावन्मात्रं =

त्तावन्मात्रं ज्ञाप्यम्, तच्च हेतुविपक्षसम्बन्धोद्भावनमात्रादेव गम्यते, तस्मादनुमितिहेतुव्याप्तिप्रमितिव्यतिरेकबोधनाय संशये व्यतिरेकनिश्चये वोद्भाव्यमानेऽपि 'कुतस्तावेवे'त्यत्र विपक्षसम्बन्धमात्रनियततत्सम्बन्धावश्योपन्यास्याविति विपक्षसम्बन्धमात्रमेवास्तु व्याप्तेस्तत्प्रमितेश्च व्यतिरेकस्य लिङ्गत्वादुद्भाव्यम्, कृतमितराभ्यामिति ।

लकारभेदप्रयोगे तैस्तैर्लकारैः कालविशेषप्रतिपादनवद्भिभक्तिभिर्लिङ्गसङ्ख्याज्ञापनवत्पर्वतोऽग्निमानित्यादौ धर्म्यादिप्रतिपादनवच्च नेदं घटते, तत्र तेषामतात्पर्यविषयाणामपि पदप्रयोगे विशिष्टबोधने वाऽन्यथासिद्धानां यथा बोधनम्, तथा यद्यत्रापि व्याप्तेरतात्पर्यविषयत्वं तदाऽनैकान्तिकसाधारण्यादेव, अन्यथोक्तदोषापरिहारादेवेति । अनैकान्तिकत्वञ्चानुद्भावयताऽनधिगच्छता च विरुद्धत्वमशक्योद्भावनमशक्यावगमनञ्चेति तदुपजीवित्वान्न पृथग्दूषणम्, विशेष्यप्रतिपादनं विशेष्यावगमञ्च विना

---

व्याप्यभावमात्रं व्याप्तिनिश्चयाभावमात्रं वा । ज्ञाप्यमिति । विरोधोद्भावनेनेत्यादिः । तेन कारणान्तराभावस्यापि क्वचिज्ज्ञाप्यत्वेऽपि न मात्रपदासङ्गतिः । हेतुविपक्षसम्बन्धेति । हेतोः साध्याभावसामानाधिकरण्येत्यर्थः । संशयेति । साध्यस्येत्यर्थः । तावेवेति । एवेन साध्यनिश्चयव्यवच्छेदः । इत्यत्रेति । इत्यस्मिन् पर्यनुयोगे उत्पत्स्यमाने उत्पन्ने वेत्यर्थः । नियततत्सम्बन्धो विपक्षेणैव सम्बन्ध इति साध्यासमानाधिकरणत्वे सति साध्याभावसामानाधिकरण्यलाभः । अवश्येति । एतेन प्रथममेव साध्याभावसामानाधिकरण्याद्युद्भावनस्यौचित्यं सूचितम्, प्रयोज्यमुद्भाव्य प्रयोजकोद्भावने गौरवात् प्रयोजकस्य प्रागुद्भावने तु प्रयोज्यस्यार्थात्प्रतीतिसम्भवेन प्रतिपादनानपेक्षत्वादित्युक्तत्वात् । अस्त्वति । उद्भाव्यमित्यनेनान्वयः । लिङ्गत्वादिति । लाघवात्क्लृप्तत्वादावश्यकत्वाच्चेत्यपि द्रष्टव्यम्, तत्रावश्यकत्वं तु स्वयमेव वक्ष्यति 'अनैकान्तिकत्वञ्चानुद्भावयते'त्यादिना । इतराभ्यामिति । साध्यसंशयसाध्याभावनिश्चयाभ्यामित्यर्थः । उद्भाव्यमानाभ्यामिति शेषः ।

ननु कथायां साध्याभावव्याप्यत्वाभिधानेऽपि साध्याभावसामानाधिकरण्यांश एव विवक्षित इति न वैयर्थ्यशङ्का, दृश्यन्ते हि तत्तदर्थशक्तपदानामभिधानानि तत्तदर्थाविवक्षायामपि, नहि कालविशेषाविवक्षायामपि भवतीत्यादिकं पुंस्त्वादिलिङ्गसङ्ख्याविशेषाविवक्षायामपि जलमानयेत्यादिकं केवलस्य विशेष्यस्य विशेषणस्य वाऽविवक्षायामपि पर्वतोऽग्निमानित्यादिकं न प्रयुञ्जत इत्यत आह लकारभेदेति । लकारविशेषेत्यर्थः । बुद्धिवैशद्यायानेकदृष्टान्तोपन्यासः । नेदं घटते = अविवक्षितस्य व्याप्त्यंशस्याभिधानं नोपपद्यते । तत्र = उक्तदृष्टान्तेषु तेषां = कालविशेषादीनाम् । आद्यदृष्टान्तद्वयमभिप्रेत्य पदप्रयोगे इति । तृतीयमभिप्रेत्य विशिष्टबोधने इति । पदप्रयोगेऽन्यथासिद्धत्वं = स्वाभिधायकाविनाभाविपदप्रयोगकत्वम्, विशिष्टबोधनेऽन्यथासिद्धत्वं तु स्वबोधनाविनाभाविविशिष्टबोधनकत्वम्, अरदं न प्रयुञ्जीतेतिनिषेधेन काललिङ्गसङ्ख्याविशेषाभिधायकौ तिङ्सुपावपास्य प्रयोगेऽसाधुतापत्तेस्तयोः प्रयोगो नान्तरीयको भवनादिमात्रप्रतिपिपादयिषायाम् । एवं विशेष्यविशेषणयोर्बोधनं विना विशिष्टबोधनं न सम्भवतीति तदभिधायकशब्दप्रयोगोऽपि नान्तरीयकः । प्रकृते तु व्याप्त्यंशाभिधानं विनाऽपि साध्याभावसामानाधिकरण्यं शक्यमभिधातुमिति न व्याप्तेः स्वबोधनाविनाभाविताद‍ृशसामानाधिकरण्यबोधनकत्वम्, केवलं तात्पर्याविषयत्वं तु कदाचित्स्यात्, तत्राह तथेति । अत्रापि व्याप्तेरिति । विरोधघटकव्याप्तेरपीत्यर्थः । उक्तेति । व्यर्थविशेषणतेत्यर्थः । अनैकान्तिकत्वं = साध्याभावसामानाधिकरण्यम् । तदुपजीवित्वात् = उक्तानैकान्तिकत्वप्रतिपत्त्यनुकूलव्यापारव्याप्यत्वप्रतिपत्त्यनुकूलव्यापारकत्वात्, तद्विषयिताव्याप्यविषयिताकत्वाच्च । इह विशेष्यावगमप्रतिपादनयोर्विशिष्टावगम-

विशिष्टप्रतिपादनस्य विशिष्टावगमस्य चाशक्यत्वात् । एवमन्यत्रापि विशेषणस्याप्रयोजकता विशेष्यस्य सामर्थ्यं स्वयमूहनीया, तद्यथा—इदमसाधकं साधारणानैकान्तिकत्वादित्यत्र साधारणेति विशेषणे, सपक्षविपक्षगतत्वादित्यत्र सपक्षगतत्वे सतीत्युद्भाव्यमाने, एवमसाधारणेऽपीति, इदमसाधकं जातित्वादिति जातित्वविवेचने स्वव्याघातकमुत्तरं जातिरिति स्वव्याघातकत्वस्यैव सर्वमसज्ज्ञेयत्वदित्याद्यजातिजातिसाधारणस्य दूषणसमर्थत्वेनोत्तराभिधाने इति ।

---

प्रतिपादनकारणता हि नाभिप्रेता मानाभावात्, अपि तूक्तव्याप्यव्यापकभाव एव । पृथगिति । विरुद्धत्वमित्यनुपपद्यते । एतेन साध्याभावप्रमितिजनकत्वं विरोधइत्यपि प्रत्याख्यातम्, तादृशजनकत्वस्य कौतस्त्याकाङ्क्षायां साध्याभावव्याप्यत्वस्य ज्ञेयत्वे साध्याभावसामानाधिकरण्यग्रहस्यावश्यकत्वात्, अनुमितितत्कारणान्यतरप्रतिबन्धकज्ञानविषयस्य हेत्वाभासत्वमते तु तादृशजनकत्वस्य न हेत्वाभासत्वमपि, प्रागेव तु तद्विशेषविरोधत्वमिति । ननु तथापि विरुद्धस्य न साधारणान्तर्भावसम्भवः, सपक्षवृत्तित्वे सति साध्याभावसमानाधिकरणस्य हि साधारण्यम्, विरोधे च न सत्यन्तं प्रविशतीत्यत आह एवमन्यत्रापीति । अप्रयोजकता = वैयर्थ्यम् । सामर्थ्यं = असाधकताव्याप्यत्वे सति । इदमुपलक्षणमनुमितितत्कारणान्यतरप्रतिबन्धौपयिकत्वस्यापि । साधारणानैकान्तिकत्वात् = साध्यसन्देहजनककोटिद्वयोपस्थितिजनकतावच्छेदकसाधारण्यात् । साधारणेतिविशेषणे = साधारण्यस्य विशेषणे तादृशजनकतावच्छेदकत्वे, अप्रयोजकतेत्यनुपपद्यते, साध्याभावसामानाधिकरण्यरूपसाधारण्यस्य तादृशसामानाधिकरण्यत्वेनैवासाधकतागमकत्वसम्भवेनानैकान्तिकत्वस्य साधारणतादृशजनकतावच्छेदकत्वघटितरूपेण व्यर्थविशेषणतयाऽनथात्वात् । साधारण्येऽपि यदि सपक्षवृत्तित्वं प्रवेश्यते तदा तस्यापि व्यर्थतेत्याशयेन विशेषणनिष्प्रयोजनताया उदाहरणान्तरमाह सपक्षेति । विशेषणतास्फुटीकरणाय सत्यन्तेन विवरणम् । उद्भाव्यमाने = प्रयुज्यमाने, अप्रयोजकतेत्यनुषङ्गः । सपक्षगतत्वं हि साधकताया अनुकूलं नत्वसाधकताया इति तस्य साधारण्ये प्रवेशो नोचित इति भावः । अथवा साधारणानैकान्तिकत्वादित्यस्य साधारणत्वादित्येवार्थः, तथा च सपक्षविपक्षगतत्वादित्येतदर्थकसाधारणत्वादितिहेतुवाक्यबोध्यसाधारण्यविशेषणे सपक्षगतत्वे सतीत्येवं विध्रियमाणेऽप्रयोजकतेत्यर्थः, तथाचैकमेवोदाहरणम् । एवमिति । तादृशजनकतावच्छेदकताविशिष्टासाधारण्यस्य हेतुत्वेऽसाधारण्यस्य सपक्षविपक्षव्यावृत्तत्वरूपत्वे वोक्तरीत्यैव वैयर्थ्यम्, विपक्षव्यावृत्तत्वस्य साधकतानुकूलत्वादिति भावः । प्राग्वदेकमेवोदाहरणम् । विशेष्यवैयर्थ्यमपि क्वचिदित्युदाहरति इदमिति । इतीति । लुप्तसप्तमीकमिदम्, उत्तराभिधाने ऽप्रयोजकतेति सम्बन्धः । स्वव्याघातकत्वं अभिधीयमानोत्तरांशे इत्यर्थं । स्वव्याघातकत्वस्यैव दूषणसमर्थत्वेनेत्यन्वयः । यदा स्थापनाहेतुत्वेन सर्वमसज्ज्ञेयत्वादिति प्रयुज्यते, तदा न तत्र स्ववक्तुरभिमतस्य विरहप्रसञ्जकत्वं । यदा तु सर्वं जातित्वाभ्युपगम इति भावेन तस्याजातित्वमप्युक्तम्, अतएव लक्षणे उत्तरत्वनिवेशोऽपि, यदा तु सर्वं सज्ज्ञेयत्वादिति स्थापनाहेतुप्रयोगानन्तरं तथा प्रयोगस्तदा तस्य जातित्वम्, यदाह वात्स्यायनः "जातयः स्थापनाहेतौ प्रयुक्ते प्रतिषेधहेतव" इति । आदिशब्देन सर्वमसाधकं वस्तुत्वादित्यादि ग्राह्यम्, सर्वस्यासत्त्वेऽलीकत्वरूपेऽसाधकत्वे वा ज्ञेयत्वादेरपि तथात्वेन स्ववक्त्रुपगतविरहप्रसञ्जकत्वं स्थापनाप्रतिषेधयोस्तुल्यमित्यर्थः । वस्तुतस्तूत्तरत्वांशनिवेशोऽकिञ्चित्कर एव, तादृशविरहप्रसञ्जकत्वस्यैव दुष्टिबीजत्वादितिनिवेदितमनिर्वाच्यत्वनिरुक्तावधस्तात् ।

किञ्च साध्यविपरीतेति साध्याभावेत्यर्थे यदाऽभावात्मैव साध्यः क्वचिद्भवति तत्र तद्विपरीतस्य भावत्वात्तदव्यापकत्वं लक्षणस्य । न च विपरीतशब्दस्य विरोधिमात्रार्थत्वेन भावाभावोभयव्याप्तिरिति वाच्यम्, सहानवस्थानं हि भावाभावयो र्विरोधोऽभ्युपेयते, अनवस्थानं च संसर्गनिषेधः, स च भावाभावयोरन्योन्यस्यानवस्थानमेव,

नन्वेतावता विरुद्धस्य साधारणान्तर्भावोऽभिहितः, भवतु किं तेन, लक्षणनिराकृतिस्तु न कृता; किञ्चासाधकतानुमापकमेव विभाजकमिति न परमेश्वरानुशासनम्; किञ्च व्यर्थविशेषणत्वं न व्याप्तिविघटकम् व्याप्तिलक्षणे व्याप्यतावच्छेदकान्तरघटितान्यहेतुतावच्छेदकस्यानिवेशनीयत्वात्, अत एव नीलधूमादावपि व्याप्तिरस्त्येव, तत्प्रयोक्तुस्तु तत्राधिकेनैव निग्रहः अशक्तिविशेषज्ञापकतया व्यर्थविशेषणत्वस्य स्वातन्त्र्येण निग्रहस्थानत्वाद्वा, सर्वथाऽपि तत्र हेत्वाभासत्वं नैवास्ति । एवञ्च निग्रहभयेऽसाधकता विरुद्धे साध्याभावसामानाधिकरण्येनैव परार्थे साध्यताम्, असाधकतासिद्धियोग्यता तु स्वार्थपरार्थसाधारणी तत्र निर्बाधा; किञ्चासाधकतासाधकत्वाभावेऽप्यशक्तिविशेषोन्नायकतयैव पार्थक्यसम्भवः, असाधकतासाधकत्वाशक्तिविशेषोन्नायकत्वान्यतरस्यैवापेक्षणीयत्वात्, अनैकान्तिके हि साध्यसामानाधिकरण्यसत्त्वेनाव्यभिचरांशे एव भ्रमः, विरुद्धे तु साध्यसामानाधिकरण्यस्यासत्त्वेन तदंशेऽपि स इति सम्भवत्ययमन्यो विशेषः, एवञ्च व्याप्तिविरहोन्नायकस्य व्याप्तिग्रहानुत्पादप्रयोजकस्य वा रूपस्य साध्याभावसामानाधिकरण्यस्य समत्वेऽपि न तयोः पृथक्परिगणनासङ्गतिरित्यस्वरसादाह किञ्चेति । अत्रेदम्बोध्यम्—प्रमेयत्वविशिष्टव्यभिचाराद्देहदो वह्निमान् ह्रदत्वादित्यादौ वह्न्यभाववद्ह्रदरूपबाधविशिष्टवह्न्यभाववद्वृत्तिह्रदत्वादिरूपव्यभिचारादेश्च दोषतावारणाय विशिष्टान्तराविषयकत्वं प्रतिबन्धकनिश्चये निवेशनीयम्, स्वावच्छिन्नाविषयकप्रतीतिविषयतावच्छेदकं प्रकृतानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकं यद्रूपं तदवच्छिन्नञ्च विशिष्टान्तरम्, स्वं प्रमेयत्वविशिष्टव्यभिचारत्वादिकम्, एवञ्च निरुक्तविरोधानामपि साध्याभावसामानाधिकरण्यादिरूपविशिष्टान्तरविषयकनिश्चयविषयतया न दोषत्वसम्भवः । अधिकं तु हेत्वाभाससामान्यलक्षणखण्डने द्रष्टव्यम्। क्वचित् = सत्ताऽभाववान् द्रव्यत्वादित्यादौ । भावत्वादिति । अन्यथा स्वाभावविरहात्मत्वं वस्तुनः प्रतियोगितेत्यस्यासङ्गतेः । तदव्यापकत्वमिति । सत्तायामभावत्वस्य बाधेन तद्व्याप्यत्वं न साध्याभावव्याप्यत्वम् । सहानवस्थानमिति । ननु सहानवस्थानं नाम परस्पराभावव्याप्यत्वम्, तच्च नेह विवक्षितम्, तथा सति साध्याभावव्याप्यमित्यस्य साध्याभावव्याप्यव्याप्यमित्यर्थकत्वेनान्तिमव्याप्यत्वांशनैष्फल्यात्, तत्रापि साध्याभावपदस्य साध्याभावव्याप्यपरताया वक्तव्यत्वे लक्षणस्वरूपापर्यवसानाच्च, एवं च परस्परविरहव्याप्यतारूपविरोधस्यासामानाधिकरण्यपर्यवसन्नस्यैव वा तद्व्याप्यस्य परस्परविरहात्मतालक्षणस्यैव वा निवेश आदरणीय इत्यत आह अनवस्थानञ्चेत्यादि । संसर्गनिषेधः = वृत्तित्वनिषेधः, अत एव सहानवस्थानमसामानाधिकरण्यमाहुः । अन्योन्यस्यानवस्थानमेव = परस्पराभावस्वरूपत्वमेव । ननु परस्पराधिकरणवृत्तित्वाभावस्य कथं परस्पराभावस्वरूपता घटताम्, गोत्वाश्वत्वयोस्तादृशवृत्तित्वाभावसद्भावेऽपि परस्पराभावत्वाभावेन तयोरसमनैयत्यादित्याशङ्क्य गोत्वाश्वत्वादिविरोधविलक्षणस्य भावाभावयोः परस्पराभावात्मतालक्षणविरोधस्यानुभवबलात् क्लृप्ततया तदात्मकत्वमेव तत्र परस्पराधिकरणवृत्तित्वाभावलक्षणविरोधस्य लाघवादुचितमित्यभिप्रेत्याह परस्परेति । एतच्च सव्यभिचारखण्डनेऽपि वक्ष्यति । एवञ्च स्वकीयविवक्षैव मयैतावता निर्वाहितेतिभावः । वस्तुतस्तु साध्याभावव्याप्यमित्यत्र साध्याभावस्य साध्यासमानाधिकरणतयोपादाने तावन्मात्रस्यैव विरुद्धलक्षणतौचित्यम्, निरास्यञ्च तदपि । परस्परविरहात्मतालक्षणविरोधोपादाने

परस्परप्रतिषेधरूपत्वात्तयोः, तथा च सति भावाभावयोः स्वरूपस्यानुपसङ्ग्रहे प्रत्येकमव्याप्तिर्मिलितस्यासम्भव एवेति । वक्ष्यामश्च भावाभावयोर्विरोधनिरुक्तिनिराकरणमुपरिष्टादिति । इति विरोधखण्डनम् ।

---

च न लक्षणैकरूप्यसम्भवः, परस्परस्यानुगमाच्च, एवञ्च परस्परासामानाधिकरण्यस्य परस्परविरहात्मकत्वरूपत्वाभावेऽपि न प्रकृते काचित्क्षतिः । तथा च सतीति । साध्यविरोधिपदस्य विशिष्यैव क्वचिद्भावार्थकत्वे क्वचिच्चाभावार्थकत्वे सतीत्यर्थः । अनुपसङ्ग्रहे = अनुगमासम्भवे । प्रत्येकमिति । भावरूपविरोधिनिवेशे भावसाध्यकविरुद्धासङ्ग्रहः, अभावरूपविरोधिनिवेशे त्वभावसाध्यकविरुद्धासङ्ग्रहः, उभयात्मकविरोधिनस्तु निवेशे न स भावस्य साध्यस्य न वाऽभावस्येत्यसम्भव इति भावः । अथ साध्यप्रतियोगिकत्वेन भावाभावयोर्द्वयोरप्यनुगमसम्भव इति चेत्, भावस्य सप्रतियोगिकत्वं किं भावत्वेन, अथवाऽभावाभावत्वेन, नाद्यः, अनुभवविरोधात्, घटत्वेन घटज्ञानस्यापि घटाभावज्ञानाधीनत्वापत्तेश्च । न द्वितीयः, तथाहि—सप्रतियोगिकत्वमित्यस्य यद्यभावाभावत्वमित्यर्थः, तदाऽभावाभावत्वेनाभावाभावत्वमितिमन्दस्यैवालापः, आत्माश्रयात्, यदि तु स्वरूपसम्बन्धविशेषरूपप्रतियोगितानिरूपकत्वमित्यर्थः, युक्तश्चैतत्, स्वाभावविरहात्मत्वस्य षष्ठ्यर्थप्रतियोगिताघटितस्य प्रतियोगितारूपत्वे आत्माश्रयापत्तेः, उक्तञ्चाधिकं भेदसंसर्गाभावयोर्वैधर्म्यखण्डनेऽधस्तात्, तदा स्वरूपसम्बन्धस्य प्रतिव्यक्तिभिन्नतया द्वयोः कथमनुगमः, प्रतियोगितात्वेन प्रतियोगिताऽनुगतेति तु न वाच्यम्, तस्यापि स्वरूपसम्बन्धरूपत्वेऽनुगमकत्वासम्भवात्, स्वं न स्वीयमित्यनुभवबाधाच्च, रूपभेदेन स्वस्य स्वीयत्वोपपादनेऽतिरिक्ततापक्षे एव पर्यवसानात्, अतिरिक्तत्वे च तदीयलक्षणं निर्वक्तुमशक्यम्, नह्यखण्डोपाधिरित्येतावतैव लक्षणमनपेक्षणीयं स्यात्, अलीकत्वापत्तेः, तदेतदभिप्रेत्याह वक्ष्यामश्चेति । उपरिष्टादिति । चतुर्थपरिच्छेदे इत्यर्थः । अभावत्वनिरासोऽपि तत्र वक्ष्यते इति तस्याप्युपलक्षणमिदम् । तदभावव्याप्यत्वस्य तदभावाभावात्मकत्वस्य च तद्विरोधस्य स्वज्ञप्त्यधीनज्ञप्तिकत्वम्, अन्यथा तदभावेऽस्याप्यसङ्गतेरित्यभिप्रायः । एतेनाभावत्वप्रकारकप्रतीतेः प्रमात्वानुरोधेनाभावाभावस्यातिरिक्ततया सत्ताऽभाववान् द्रव्यत्वादित्यादावव्याप्तिशङ्काया उन्मीलनमेव नेति परास्तम् । तत्रापि लक्षणे प्रतियोगिताप्रवेशस्यावश्यकत्वेन तत्खण्डनस्य सावकाशत्वात्, अभावत्वप्रकारकप्रतीतेःप्रमात्वानुरोधेनाभावाभावातिरिक्तताया अनुपदोक्तन्यायेनासम्भवाच्च । नचानन्तघटादिषु घटाद्यभावत्वकल्पनामपेक्ष्यातिरिक्ते एकस्मिन् घटाद्यभावाभावत्वकल्पना लघ्वीत्यभावाभावातिरेकसिद्धिरिति वाच्यम्, भवताऽतिरिक्तोधर्मी तत्राभावाभावत्वं तयोः सम्बन्धश्चेति त्रयं कल्प्यम्, अन्येन तु क्लृप्तेषु घटादिषु क्लृप्तेनैव स्वरूपसम्बन्धेन घटाद्यभावाभावत्वमात्रं कल्प्यमिति भवत एव गौरवात् । घटाभावाभावत्वमनुयोगितावि‍शेषो घटनिष्ठघटाभावीयप्रतियोगितातो नातिरिक्तः, प्रतियोगिता च सा क्लृप्तैवेति न गौरवमित्यपि केचित् । किञ्च—साध्यप्रतियोगिकव्याप्यत्वं सद्धेतुमात्रेऽतिप्रसक्तम्, उभयाभावादेः सार्वत्रिकत्वात्, साध्यतावच्छेदकमात्रावच्छिन्नप्रतियोगिताकत्वविवक्षायामपि व्यधिकरणीभूतसाध्यतावच्छेदकधर्मावच्छिन्नप्रतियोगिताकाभावस्य दुर्वारत्वात्, व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य सांशयिकत्वेऽपि तन्निबन्धनदोषसंशयात्, प्रतियोगितायां साध्यनिष्ठत्वस्याप्युक्तावपि मात्रपदात्साध्यतावच्छेदकेतरानवच्छिन्नत्वस्य प्रतीतत्वेन साध्यतदितरोभयाभावीयप्रतियोगितायामपि तस्य साध्यतावच्छेदकेतरावच्छिन्नत्वघटोभयाभावमादाय सत्वेन तादृशप्रतियोगिताकाभावव्याप्यत्वमादायातिप्रसङ्गस्य दुरुद्धरत्वात् । अधिकं स्मृत्यनुपलब्धिखण्डनोक्तदिशावसेयम् । यदपि—साध्याभाव-

## व्यभिचारखण्डनम् ।

किञ्च व्याप्तिपदेन लक्षणप्रविष्टेन किं व्यवच्छेद्यम् ? अनैकान्तिकमिति चेत्, किं तदनैकान्तिकमिति ? तथाहि—अनैकान्तिकः सव्यभिचार इत्यलक्षणम्, सव्यभिचारत्वं हि यदि विपक्षवृत्तिता, तदानीं विरुद्धे प्रसङ्गः, असाधारणानैकान्तिकाव्याप्तिश्च, अथ सपक्षविपक्षगताभावता, तदा साधारणोदाहरणाव्यापकत्वम् । अथोच्यते सव्यभिचा-

---

व्याप्यत्वमित्यत्र साध्याभाववद्वृत्तित्वरूपव्याप्तिप्रवेशे साध्यासामानाधिकरण्यमेव विरोधः पर्यवस्यति, तत्र च न व्यर्थविशेषणतावकाशः, न चैवं विरोधस्यासाधारण्याभेदः, असाधारण्ये विपक्षव्यावृत्तत्वस्य दूषणतानौपयिकस्यानिवेशनीयत्वात् सकलसाध्यवद्व्यावृत्तत्वमात्रस्य चोक्तविरोधरूपत्वादिति वाच्यम्, साध्याभावव्याप्यत्वमित्यत्र व्यतिरेकव्याप्तिविवक्षायां साध्यव्यापकीभूताभावप्रतियोगित्वस्य पर्यवसानेन तस्यैवासाधारण्यरूपत्वाभ्युपगमात्, यद्यपि तादृशाभावप्रतियोगित्वं साध्यासमानाधिकरणस्यैव, तथाप्येकाज्ञानेऽप्यपरज्ञानस्य दूषकत्वेन द्वयोरेव पृथग्दोषत्वम्, न चावृत्तिगगनादावपि साध्यासामानाधिकरण्यमिति तत्रातिप्रसङ्गः; तस्य लक्ष्यत्वात्; एवञ्चाव्यभिचरितसामानाधिकरण्यरूपव्याप्तेरव्यभिचारांशग्रहः साधारण्यग्रहेण सामानाधिकरण्यांशग्रहस्तु विरोधग्रहेण प्रतिबध्यते. पूर्वोक्तासाधारण्यज्ञानं तु पक्षे हेतुमत्ताग्रहकालीनमनुमितिमेव प्रतिबध्नातीति विवेक इति; तदप्येतेन परास्तम्, उक्तरीत्या प्रतियोगित्वादेर्दुर्वचत्वात्साध्यसामानाधिकरण्यप्रतियोगिकाभावस्य सद्धेतावतिप्रसक्तत्वाच्च, यदि च साध्ये साधनासामानाधिकरण्यमपि विरोधः, तदा साध्यासामानाधिकरण्यं तदसङ्ग्राहकमेवेति साध्यसाधनोभयसामानाधिकरण्यग्रहप्रतिबन्धकताघटितमेव लक्षणं कर्तुमुचितम् न च तत्सम्भवतीतिवक्ष्यतेऽसाधारण्यखण्डने इति संक्षेपः । इति खण्डनशारदायां विरोधखण्डनम् ।

किञ्चेति । व्यवच्छेद्यनिरासस्याभिसन्धानं पूर्ववत् । अनैकान्तिकमिति । अनैकान्तिकविशेषः साधारण इत्यर्थः । तेन साधारणासाधारणानुपसंहारित्रयस्याव्यवच्छेद्यत्वेऽपि न क्षतिः । असाधारणस्तावल्लक्ष्य एवेत्युक्तमनुपदम्, अनुपसंहारिणस्तु क्वचिद् यदि साध्याभावसामानाधिकरण्यं न तु साध्याभावव्याप्यत्वं तदा साधारणसमानयोगक्षेमत्वमेवेति । अनैकान्तिकमेव तावद्दुर्वचम्, प्रागेव तु तद्विशेष इत्यभिप्रायेणाह किमिति । अनैकान्तिक इति । अस्मिन्न्यायसूत्रेऽनैकान्तिकपदं लक्ष्यपरमित्याशयेनेदम् । साध्येनैव साध्याभावेनैव वा सामानाधिकरण्यं समीचीनस्य विरुद्धस्य वा हेतोरेकान्तः, तद्राहित्यमनैकान्तिकत्वम्, एतच्च शब्दयोजनामात्रम् । वस्तुतस्तु साधारणासाधारणानुपसंहारित्रितयान्यतमत्वमेव तत्, अन्यथा नव्यनये साध्याभावेनैव समानाधिकरणस्यासाधारणतया तस्य सव्यभिचारलक्षणालक्ष्यतापत्तेः । विपक्षवृत्तितेति । सपक्षवृत्तिता तु नोक्ता, दूषकतायामनुपयुक्तत्वात् । विपक्षश्च साध्याभाववान्, न तु निश्चितसाध्याभाववान्, निश्चयांशस्याकिञ्चित्करत्वात् । विरुद्धे = गगनादिभिन्ने विरुद्धे । ननु विपक्षवृत्तित्वेन विरुद्धस्यापि सव्यभिचारत्वमेव, उपधेयसङ्करेऽप्युपाध्यसङ्करादित्यरुचेराह असाधारणेति । सर्वसपक्षविपक्षव्यावृत्तोऽसाधारण इति मतेनेदम्, विपक्षव्यावृत्तत्वस्य दूषकतानौपयिकत्वेन सर्वसपक्षव्यावृत्तत्वस्यैव साध्यव्यापकीभूताभावप्रतियोगित्वपर्यवसन्नस्यासाधारण्यरूपत्वमितिमतेऽसाधारणस्यापि विपक्षवृत्तेः सङ्ग्रहेऽपि विपक्षावृत्तेरसङ्ग्रह एव, स्वीचक्रु र्हि केचिद्गगनादेरप्यसाधारण्यम् । अत्यन्ताभावाप्रतियोगिसाध्यके चानुपसंहार्ये विपक्षाप्रसिद्ध्याऽव्याप्तिरस्त्येव । सपक्षेत्यादि । बहुव्रीहेस्तल्लि सपक्षविपक्षवृत्त्यभावप्रतियोगित्वलाभः, विपक्षवृत्त्यभावप्रतियोगित्वस्य दूषकतानौपयिकत्वात्तु सकलसपक्षवृत्त्यभावप्रतियोगित्वमेव विवक्षार्हम्, एवं च यत्किञ्चित्सपक्षव्यावृत्ते धूमादौ

रत्वं हि सपक्षविपक्षसाधारणताऽभिप्रेता, सा चान्वयेन साधारणस्य व्यतिरेकेणासाधारणस्यानैकान्तिकस्य सङ्ग्राहिका, सपक्षविपक्षसाधारणताऽन्वयेन व्यतिरेकेण चेति विशेषवत्तया न विवक्षिता, अतः साधारणासाधारणानैकान्तिकयोरुभयोरपि सङ्ग्रहः, विवादाध्यासितं क्षणिकं सत्त्वादित्यादेरनुपसंहार्यस्यापि सपक्षविपक्षशून्यत्वादेव सपक्षविपक्षगतत्वाभावेन साम्यमिति । विचार्यमेतद्व्याख्यानं परमस्तु तावदापाततः, तथापि व्यतिरेकेण सपक्षविपक्षसाधारणतायाः सपक्षाव्यापके सद्धेतौ धूमविशेषादौ गतत्वेनातिव्यापकत्वम् । यदि त्वस्य दोषस्य परिहारार्थं सर्वसपक्षविपक्षसाधारणमनैकान्तिकमिति ब्रूषे, तदा व्यतिरेकमात्रेण सर्वसपक्षविपक्षसाधारणता धूमानुमानादिगामिनो न भवतु नाम, अन्वयेन तु सर्वसपक्षविपक्षसाधारणता विपक्षसपक्षैकदेशगामिनं साधारणानैकान्तिकं शब्दो न नित्यः प्रत्यक्षग्राह्यत्वादित्यादिकं न सङ्गृह्णातीत्य-

---

न प्रसङ्गः, असाधारणस्य च निखिलस्यापि सङ्ग्रहः, शब्दोऽनित्यः शब्दत्वादित्यस्य सद्धेतुत्वात् । तदेति । अनुपसंहार्येप्यव्याप्तिर्द्रष्टव्या । साध्यसन्देहाक्रान्तविपक्षकत्वादिकमपि न सव्यभिचारत्वम्, अनुपसंहारिभिन्नसव्यभिचारासङ्ग्राहकत्वादित्यपि बोद्धव्यम् । दूषकतौपयिकमेव त्रितयानुगतरूपमाशङ्कते अथेति । सपक्षविपक्षसाधारणता = सपक्षविपक्षवैशिष्ट्यम्, अन्वयेन = स्ववृत्तित्वसम्बन्धेन, व्यतिरेकेण = स्ववृत्त्यभावप्रतियोगित्वसम्बन्धेन । वृत्तित्वप्रतियोगित्वे हेतुतावच्छेदकसम्बन्धावच्छिन्ने ग्राह्ये, तेन सद्धेतौ नातिप्रसक्तिः । नन्वेतदुभयसम्बन्धेन यदि वैशिष्ट्यं विवक्षितं तदाऽसम्भवः, यदि प्रथमेनैव, तदा साधारणस्यैव सङ्ग्रहः, यदि तु द्वितीयेनैव तदाऽसाधारणस्यैवेत्याशङ्क्योभयान्यतरसम्बन्धेन वैशिष्ट्यं विवक्षितमित्याह सपक्षेति । अन्वयेन = अन्वयेनैव । व्यतिरेकेण = व्यतिरेकेणैव, उक्तोभयेनैवेत्यपि द्रष्टव्यम् । ननु प्राचीनमते केवलान्वयिधर्मावच्छिन्नसपक्षकस्यैवानुपसंहारितया सपक्षत्वविपक्षत्वयोश्च निश्चयघटिततया साध्यसन्देहाक्रान्तविपक्षके तस्मिन् सपक्षविपक्षयोरप्रसिद्धिरिति तद्वैशिष्ट्यं सुतरामप्रसिद्धमिति तत्राव्याप्तिरित्यत आह विवादेति । सर्वमित्यर्थः । उपसंहारः साध्यसहचारनिश्चयस्तद्विषयत्वाभाववान् हेतुरनुपसंहार्योऽनुपसंहारी वेति शब्दस्वरसः । शून्यत्वादेरिति । सपक्षत्वादेर्निश्चयाघटितत्वे तु क्षणिकत्ववतः सामग्र्यादेस्तदभाववतश्च घटादेः प्रसिद्ध्या न सपक्षविपक्षशून्यत्वम्, किन्त्वत्यन्ताभावाप्रतियोगिसाध्यकानुपसंहार्ये तदिति तत्रैव शङ्कासमाधाने अवधेये । साम्यमिति । उक्तान्यतरसम्बन्धेन सपक्षविपक्षवैशिष्ट्यमित्यर्थः । एतच्चापातत एवेत्यग्रे व्यक्तीकरिष्यति । विचार्यं = सुन्दरं, सुन्दरस्यैव विचारयोग्यत्वात्, परं = केवलम्, तथा चैतद्व्याख्यानमापातत एव सुन्दरमस्त्वित्यर्थः । सपक्षाव्यापके = अयोगोलकादिरूपयत्किञ्चित्सपक्षनिष्ठाभावप्रतियोगिनि । अन्तरिक्षगतो धूमोऽपि वह्निं व्यभिचरत्येवेत्याशयेन विशेषपदं वह्निमदनुयोगिकत्वस्यावच्छिन्नत्वादेर्वा लाभार्थम् । सर्वेति । अत्र सर्वत्वं विपक्षेऽन्वेति नवेति विचारयिष्यति । मात्रेणेति । अन्वयव्यतिरेकाभ्यां सर्वसपक्षविपक्षवैशिष्ट्यमादाय दोषतादवस्थ्यस्य वक्ष्यमाणत्वान्मात्रपदम् । धूमानुमानेति । अनुमानपदं सद्धेतुत्वाभिधित्सया । न भवत्विति । धूमस्य महानसाद्यात्मकयत्किञ्चित्सपक्षवृत्तितया स्वनिष्ठाभावप्रतियोगित्वसम्बन्धेन सकलसपक्षविशिष्टत्वाभावादिति भावः । अन्वयेनेति । स्ववृत्तित्वसम्बन्धेनैव हि वैशिष्ट्यमादाय साधारणे लक्षणं समन्वेतव्यमिति भावः । सपक्षैकदेशेति । घटादौ हि सपक्षे प्रत्यक्षग्राह्यत्वं न तु द्व्यणुकादावितिभावः । एकमतिव्यापकत्वं सन्धित्सतः = परिहर्तुमिच्छतः, तत्परिहाराय सर्वेति विशेषणमुपाददत इति यावत् । अपरं = अपरदो-

व्याप्तिरित्येकं सन्धित्सतोऽपरं प्रच्यवते । अपि चान्वयव्यतिरेकाभ्यां सर्वसपक्षविपक्षगतत्वाद्धूमानुमानादौ स एव प्रसङ्गः विशेषरूपेण तयोरविवक्षितत्वात् । किञ्च सर्वसपक्षविपक्षसाधारणमनैकान्तिकमिति वाक्ये यदि सर्वेति विपक्षस्यापि विशेषणम्, तदा विपक्षैकदेशवृत्तेः सपक्षव्यापिनः साधारणानैकान्तिकस्य त्रसरेणुः कार्यावयवको महत्त्वात् पटवदित्यादेरव्यापकं लक्षणमिदम् । अथ सर्वेति न विपक्षस्य विशेषणं तदा व्यतिरेकमादाय विपक्षसर्वसपक्षसाधारणमनैकान्तिकमित्येतद्विपक्षैकदेशमात्रवृत्तौ विरुद्धे क्षितिर्नित्या सावयवत्वादित्यादौ गतत्वादतिव्याप्तकमिति । का चेयं वाचोयुक्तिः सपक्ष

पाभावः प्रच्यवते, दोषान्तरमापद्यत इति यावत् । ननु घटादिरूपसपक्षवैशिष्ट्यं स्ववृत्तित्वेन द्व्यणुकादिसपक्षवैशिष्ट्यं तु स्ववृत्त्यभावप्रतियोगित्वसम्बन्धेनेति सर्वसपक्षवैशिष्ट्यसम्पत्त्या नेयमव्याप्तिरित्यत आह अपिचेति । गतत्वात् = विशिष्टत्वात् । विपक्षवैशिष्ट्यं तावद्धूमे स्वनिष्ठाभावप्रतियोगित्वसम्बन्धनाक्षतमेव, एतेनैव च सम्बन्धेनायोगोलकादिरूपसपक्षवैशिष्ट्यमपि, महानसादिरूपसपक्षवैशिष्ट्यं तु स्ववृत्तित्वसम्बन्धेनेति सर्वसपक्षवैशिष्ट्यमप्यायातमिति कथं सर्वस्योपादानेनातिव्याप्तेरपि वारणमिति भावः । यदि तु प्रोक्तान्यतरसम्बन्धेन सर्वसपक्षवैशिष्ट्योक्तौ शब्दमर्यादयैकेनैव सम्बन्धेन सर्वसपक्षवैशिष्ट्यं सम्पाद्यमिति प्रतिभाति, तत्तद्व्यक्तित्वावच्छिन्नानुयोगिताकपर्याप्तिको हि धर्मोऽन्यतरत्वम्, तेन तेन च सम्बन्धेन तत्तत्सपक्षवैशिष्ट्येऽपि सर्वसपक्षवैशिष्ट्यस्य केनापि सम्बन्धेनाभावादिति न धूमादावतिव्याप्तिरित्युच्यते, तदोक्ताव्याप्ति नं शक्या वारयितुमित्यभिप्रायेणाह विशेषरूपेण तयोरिति उक्तसम्बन्धयोरेकैकस्यैव यावत्सपक्षविपक्षीयत्वेनेत्यर्थः । उक्ताव्याप्तिं वारयितुकामस्येति शेषः । अविवक्षितत्वात्–विवक्षानर्हत्वात् । विपक्षैकदेशवृत्तेरिति । कार्यावयवकत्वाभाववत्यात्मादावस्ति महत्त्वं न तु परमाण्वादावित्यर्थः । एवं च स्ववृत्तित्वसम्बन्धेन सर्वसपक्षविशिष्टत्वेऽपि न तेन सर्वविपक्षविशिष्टत्वमिति भावः । व्यतिरेकमादाय = स्वनिष्ठाभावप्रतियोगित्वसम्बन्धेन वैशिष्ट्यमादाय, अतिव्याप्तकमिति सम्बन्धः । विपक्षैकदेशेति । नित्यत्वाभाववति घटादावस्ति सावयवत्वं न तु गुणादाविति भावः । अतिव्याप्तकमिति । सर्वविपक्षसर्वसपक्षव्यावृत्तस्यैवासाधारणतया लक्ष्यतेति भावेनेदम् । यदा तु सर्वविपक्षव्यावृत्तत्वमस्तु मा वा, सर्वसपक्षव्यावृत्तस्यैवासाधारणतया लक्ष्यतेति विरुद्धोऽप्यनेनोपाधिना सङ्ग्राह्य एव तदा नातिव्याप्तिः, अतएव शब्दो नित्यः शब्दत्वादित्यस्यापि सङ्ग्रहः । नित्यः कृतकत्वादित्यपि सर्वसपक्षव्यावृत्तं प्रागभावरूपयत्किञ्चिद्विपक्षव्यावृत्तमेव । यद्यपि साधारणतयाऽपि विरुद्धः सङ्ग्राह्यस्तथापि सर्वसपक्षवृत्तित्वाभावेन स्ववृत्तित्वसम्बन्धमादाय न प्रकृतलक्षणसमन्वयसम्भवः एवञ्च सपक्षैकदेशगामिनि पूर्वोक्ताव्याप्तिरेव दूषणं युक्तम्, एवमेकव्यक्तिकसपक्षकेऽप्यव्याप्तिर्दूषणम् । न चा तदपि, सर्वत्वस्य सपक्षेऽप्यनुपादेयत्वात्, न चैवं सद्धेतौ धूमादावतिप्रसङ्गो न परिहृतः स्यादिति वाच्यम्, हेत्वाभासत्वेन विशेषणीयत्वात् । अथ साधारणत्वादिज्ञानात्पूर्वं न हेत्वाभासत्वज्ञानमिति चेत्किमेतावता, नहि दूषकतौपयिकमिदं रूपं निरुच्यते, सपक्षवृत्तित्वविपक्षव्यावृत्तत्वयोरप्यप्रवेशापत्तेः । अपि तु साधारणादित्रयस्यानुगममात्रं क्रियते, तादृशं तु रूपं साधारणत्वादि प्रत्येकमेव, न च—तथापि ह्रदो वह्निमान् धूमादित्यत्राभासे धूमे स्वनिष्ठाभावप्रतियोगित्वसम्बन्धेन सपक्षविपक्षवैशिष्ट्यमादाय सव्यभिचारत्वव्यवहारप्रसङ्गः, पक्षवृत्तित्वे सतीतिनिवेश्य तु तद्वारणं न युज्यते, ह्रदे धूमसाधने वह्निर्व्यभिचारीतिव्यवहारानापत्तेरिति—वाच्यम्, धूमसाधने वह्निर्व्यभिचारीति व्यवहारस्यैवेष्यत्वात्, ह्रदे धूमसाधने वह्नि दुष्ट इति व्यवहारस्य सत्त्वे तु तदप्रसिद्धयादिकमादायैवोपपाद्यत्वादित्यरुचेराह केति । कुत्सायामिदम् बाधितेत्यर्थः । 'वेती'त्यन्तेन वाचोयुक्तिरनूद्यते ।

विपक्षसाधारणमनैकान्तिकमित्युक्ते सर्वं सङ्गृह्यते अन्वयेन व्यतिरेकेण चेति, कथमनुपसंहार्यस्यासत्सपक्षविपक्षस्य सपक्षे विपक्षे चान्वयेन व्यतिरेकेण वा साधारण्यं स्यात्, तयोरेवाभावात्। यदि सपक्षे विपक्षे च साधारणत्वमुभयत्र स्वरूपानुगमो विवक्षितस्तदानीमसाधारणानैकान्तिकासङ्ग्रहः, अथोभयस्मिन्नसत्त्वं तद्विवक्षितम्, तदा सर्वाव्याप्तिः, तदसत्त्वस्यातद्धर्मत्वात्। अथ तदुभयगताभावप्रतियोगित्वं तदुभयसम्बन्धस्य योऽभावस्तदाश्रयत्वं वाऽभिप्रेतम्, तदा साधारणोदाहरणाव्याप्तिः। अथ मन्यसे तदुभयसाधारण्यं नामैकस्मिन् याद्रूप्यं हेतोः सत्त्वमसत्त्वं वा ताद्रूप्यमपरस्मिन्नपि यत्तदुच्यते, तथा सति नाव्यापकता दोष इति; मैवम्, मुख्यस्तावद्वचनार्थो नोपपद्यते हेतोरैकरूप्यस्य सपक्षविपक्षावाश्रय इति, किन्नाम? ऐकरूप्यवतो हेतोस्तावाश्रयाविति स्यात, तदा चासाधारणाव्याप्तिः, तत्र सपक्षे विपक्षे च हेतोरसत्त्वेन तदाश्रयत्वासम्भवात्, तस्मात्सपक्षे विपक्षे च साधारणत्वं हेतोरनैकान्तिकत्वमित्यनुपपन्नमेव, असत्त्वपक्षे

---

असत्सपक्षविपक्षस्येति। साध्यसन्देहाक्रान्तविश्वकस्येत्यर्थः। अन्यथा सिद्ध्यसिद्धिव्याघातात्।'सपक्षे विपक्षे चेति ससम्यर्थोनिरूपितत्वं वैशिष्ट्येऽन्वेति, साधारण्यं = वैशिष्ट्यम्। तयोः = सपक्षविपक्षयोः। अभावादिति। तथा च तन्निष्ठाभावस्तदीयप्रतियोगित्वं च दूरोत्सारितम्, अत एव केवलव्यतिरेकिणः सद्धेतुत्वोपपत्तिः, अन्यथा तत्र सपक्षविपक्षयोरभावादेव तद्व्यावृत्तत्वमागतमिति मन्द्रोक्तिर्निष्प्रतिक्रियैव स्यादिति भावः। ननु सपक्षत्वादिकं न निश्चयघटितं वाच्यम्. एवञ्च साध्यसन्देहाक्रान्तविश्वकेऽपि सर्वं क्षणिकं सत्त्वादित्यादौ वस्तुतः साध्याभाववद्वृत्तित्वमादाय लक्षणसमन्वयसम्भवः, नचैवमपि साध्याभाववतोऽप्रसिद्ध्या सर्वं प्रमेयमभिधेयत्वादित्यादावव्याप्तिर्दुर्वारैवेतिवाच्यम् तस्य सद्धेतुत्वात्. अत्यन्ताभावाप्रतियोगिसाध्यकत्वग्रहदशायां तत्र व्यतिरेकव्याप्तिग्रहप्रतिबन्धेऽपि व्यापकसामानाधिकरण्यरूपान्वयव्याप्तिग्रहाद्वैवानुमितिसम्भवादित्यस्वरसादाह यद्वीति ; शब्दप्रमाणखण्डनशारदोदितदिशा स्वनिष्ठाभावप्रतियोगित्वादेः सम्बन्धत्वमसम्भवदुक्तिकमित्याकूतमत्र, सति चैवमीदृशविकल्पप्रसरावसर इति। स्वरूपानुगमः = सत्त्वम्। तत् = सपक्षविपक्षसाधारणत्वम्। तदसत्त्वस्येति। यद्यपि घटासत्त्वमपि घटधर्म एव घटे घटो नास्तीतिप्रतीतेः, अन्यथाऽऽत्माश्रयात्, तथापि सपक्षविपक्षयोर्हेतुप्रतियोगिकाभावो न हेतुधर्मः, अधिकरणभेदेनाभावभेदोपगमात्, तदनुपगमेपि सपक्षविपक्षगताभावस्य न स्वरूपसम्बन्धेन लक्षणता, सपक्षविपक्षयोरेवातिप्रसक्तेः अपि तु प्रतियोगितासम्बन्धेन. तथाचाग्रिमकल्प एवान्तर्भाव इति भावः। एकस्मिन् = सपक्षे विपक्षे वा। याद्रूप्यमिति। सत्त्वासत्त्वयोर्याद्रूप्यतया लक्षणे न प्रवेशः, यद्रूपपदेनान्योपादानवारणाय विशिष्य सत्त्वासत्त्वयोर्निवेशनोयत्वात्। हेतोरिति। हेतुत्वं न लक्षणघटकम्, व्याप्तिविशिष्टपक्षधर्मतारूपस्य तस्य हेत्वाभासेऽसम्भवात्। तदुच्यते = तत्सव्यभिचारत्वेन विवक्षितम्। अत्र यस्य सत्त्वं यस्य चासत्त्वं सपक्षविपक्षवृत्ति तयोः सव्यभिचारत्वमित्यक्षरलभ्यार्थः। तंप्रत्याचष्टे मुख्य इति। शक्तिलभ्य इत्यर्थः। आश्रय इतीति। एतत्पर्यन्तं मुख्यार्थानुवादः। वह्निः सन्, वह्निरसन्निति प्रतीत्या सत्त्वासत्त्वयोर्हेतुत्वाभिमतनिष्ठत्वं न तु सपक्षविपक्षनिष्ठत्वम्, एवञ्च सत्त्वासत्त्वे वृत्तित्वाभावप्रतियोगित्वे इत्यन्यदिति भावः। स्यादिति। हेतुत्वाभिमतनिरूपिताश्रयत्वविवक्षायां सत्त्वघटितमेव लक्षणं वाच्यम्, तत्रासत आश्रयत्वस्य तत्रानुपपत्तेः, एवञ्च सपक्षविपक्षवृत्तित्वमेव लक्षणं स्यात्तच्च नासाधारणं व्याप्नोतीति भावः। मन्द्रानुग्रहायोक्तार्थं संक्षिप्याह असत्त्वपक्षे इति। सपक्षविपक्षयोरसत इति यावत्। तदाश्रयकत्वेति। सपक्ष-

हेतोस्तदाश्रयकत्वानुपपत्त्या सपक्षे विपक्षे चेति सप्तमीनिर्देशस्यासङ्गतत्वात्, तदभावापेक्षया चैश्रयत्वस्योपपत्तौ हेतोस्तदाश्रयत्वे किमायातम्। आयातु वा किञ्चित्तथापि साधारणोदाहरणेषु हेत्वभावापेक्षया सपक्षविपक्षयोर्नाश्रयता सप्तम्यर्थः, किन्तु हेत्वपेक्षयैवेत्यनेकार्थपर्यवसायित्वे वाक्यस्य लक्षणाव्यापकतापत्तिरेव। किञ्च सपक्षविपक्षसाधारणत्वं यदि सामान्यतो लक्षणं साधारणासाधारणानैकान्तिकभेदद्वयसङ्ग्रहार्थमुच्यते तदा सपक्षविपक्षयोरन्यत्वादिभिर्हेतोः साधारण्यमस्त्यन्यत्रापीत्यतिव्याप्तिः। अथातिव्याप्तिपरिजिहीर्षयाऽन्वयव्यतिरेकाभ्यां सपक्षविपक्षसाधारणमनैकान्तिकमित्युच्यते; तदाऽन्वयव्यतिरेकयोः प्रत्येकमिलितविकल्पानुपपत्त्याऽव्यापकतापातः।

---

विपक्षाश्रयकत्वेत्यर्थः। निर्देशस्येति तादृशनिर्देशलभ्यस्य सपक्षविपक्षवृत्तित्वस्यानुपपत्तेरित्यर्थः। तदभावापेक्षया चेति। तदभावनिरूपितस्य चेत्यर्थः। आयातु वेति। स्वाभाववत्त्वसम्बन्धेन सपक्षविपक्षवृत्तित्वस्य वा सपक्षविपक्षवृत्त्यभावप्रतियोगित्वस्य वा विवक्षायामित्यादिः। हेत्वभावापेक्षया = हेत्वभावनिरूपिता। हेत्वपेक्षया = हेतुनिरूपिता। वाक्यस्य = लक्षणवाक्यस्य, इदं पूर्वान्वयि। ननु किमेतया विकल्पनया, सपक्षविपक्षसाधारणत्वमित्येतावन्मात्रं लक्षणम्, वृत्तित्वादिकं तु न विवक्षणीयमित्याशङ्क्याह किञ्चेति। भेदेति। विशेषेत्यर्थः। अत्रानुपसंहार्यानुपादानबीजं निवेदितपूर्वम्। सपक्षविपक्षयोरिति। सपक्षविपक्षयोः साधारण्यं हेतोरन्यत्राप्यस्तीति सम्बन्धः। हेतोः = साधारणादितः। अन्यत्र = सद्धेतौ। साधारण्यप्रयोजकमन्यत्वादिकम्, तस्य सार्वत्रिकत्वात्। आदिना प्रमेयत्वादिकम्। यदि स्वेतद्दोषभीत्याऽन्वयव्यतिरेकावादाय साधारण्यं सम्पाद्यम्, तदा घट्टकुट्यां प्रभातायितम्, कथितसकलदोषप्रसरादित्याहाथेत्यादिना। अव्यापकत्वापात इति। अव्यापकत्वपदमव्याप्त्यसम्भवोभयपरम्। स्ववृत्तित्वस्वनिष्ठाभावप्रतियोगित्वयोरेकैकस्य साधारण्यनियामकत्वाविवक्षायां चालनीन्यायेन साधारणासाधारणयोरव्याप्तिः, उभयोर्विवक्षायां त्वसम्भव इति। ननु सपक्षविपक्षवृत्तित्वतद्वृत्त्यभावप्रतियोगित्वान्यतरत्वविवक्षायां किं दूषणम्। हेत्वाभासत्वस्यानुपादाने धूमादिसद्धेतावतिप्रसङ्गाय सपक्षविपक्षवृत्त्यभावप्रतियोगित्वं सपक्षवृत्तित्वत्वावच्छिन्नाभावविपक्षवृत्तित्वत्वावच्छिन्नाभावोभयात्मकं वक्तव्यम्. एवञ्च सपक्षे साकल्यस्यानुपादानेन तद्रूपादिसाध्यके सकलसपक्षाद्यप्रसिद्धिनिबन्धनो नाप्रसङ्गः, इदञ्च न दूषकतौपयिकमपि तु ग्रितयानुगममात्रमिति तूक्तमेव, अस्तु वा विपक्षवृत्तित्वसपक्षवृत्तित्वत्वावच्छिन्नाभावान्यतरत्वमेव लक्षणम्, विपक्षस्तु साध्याभाववान् सपक्षश्च साध्यवान्, एतेन—पक्षातिरिक्तसाध्यवतः सपक्षत्वे एतद्भिन्नं प्रमेयत्वात्, सर्वमनित्यं सत्त्वादित्याद्यसङ्ग्रहः; साध्यवतः सपक्षत्वे तु गगनादिकमेवासाधारणं सङ्गृह्येत न तु शब्दो नित्यः शब्दत्वादित्यादिकम्, वृत्तिमतः साध्यतदभाववदन्यतरवृत्तित्वनियमादिति—नाशङ्कनीयमिति चेदन्यतरत्वं तावन्नाखण्डम्, प्रतीतिविशेषमादायैव तस्य निरूपणीयत्वेन परस्पराश्रयापत्तेः. विपक्षवृत्तित्वभिन्नं सपक्षवृत्तित्वत्वावच्छिन्नाभावभिन्नं तदन्यत्वमित्येवमन्यतरत्वनिर्वचनं तु नासर्वज्ञग्राह्यम्, तादृशभेदद्वयानुयोगितावच्छेदकताया आत्माश्रयेण तादृशभेदद्वयेऽसम्भवेन विशिष्यानन्तानुयोगितावच्छेदकज्ञानस्यापेक्षणीयत्वात् सामान्याभावस्य निराकृतत्वेनोक्तान्यत्वं सपक्षवृत्तित्वादावादाय सद्धेतावतिप्रसक्तेश्च, एवं सपक्षवृत्तित्वत्वावच्छिन्नप्रतियोगिताकमुभयाभावादिकमादायापि। न च हेत्वाभासत्वविशेषणेन तद्वारणम्; इत्थमेव तस्याप्यतिप्रसक्तेरुक्तत्वात्।

स्यादेतत्—स्वस्वाभावविरोधाश्रयाश्रितसपक्षविपक्षत्वं सपक्षविपक्षसाधारण्यं विवक्षितम्, एवं नाव्याप्त्यतिव्याप्ती इति; तदप्यसत्, तथाहि—अस्तु तावत्सर्वपदविशेषणोपादानानुपादानपक्षोक्तदोषपातः, सर्वशब्दोपादाने धूमानुमानादौ प्रसङ्गश्च, स्वस्वाभावविरोधशब्दार्थस्याप्येकस्यानुगतस्यासम्भवेन लक्षणानुगमाभावो दोषः, तत्तदभावयो र्हि विरोधः सहानवस्थानम्, अनवस्थानं चावस्थानप्रतिषेधः, न च तदभावस्याभावस्वरूपादन्यत्, नचाभावस्यानवस्थानं भावस्वरूपादन्यत्, किन्तु तदेव भावस्वरूपम्, तत्र स्वस्वाभावविरोधाश्रय इत्यस्य नार्थक्यं किञ्चिन्मृग्यमाणमवाप्यते ।

---

स्वेत्यादि । स्वं लक्ष्यत्वेनाभिमतम् । स्वविरोधाश्रयः स्वाभावः, स्वाभावविरोधाश्रयश्च स्वं ताभ्यामाश्रितौ सपक्षविपक्षौ यस्य, यदीयसाध्यत्वेनाभिमतस्य सत्त्वासत्त्वयोर्निरूपकौ तत्त्वम्, स्वस्वाभावाश्रितसपक्षविपक्षकत्वोक्तौ स्वस्वाभावोभयं वा विवक्षितं स्वं स्वाभावश्चेति प्रत्येकं वा तदन्यतरद्वेति विकल्पावकाशेन प्रागुदितदोषाः प्रादुःष्युः, स्वस्वाभावविरोधाश्रयत्वेन तु तयोरनुगमान्नोक्तविकल्पावकाशः, विरोधाश्रयस्तु यत्किञ्चित्त्वेन विशेषणीयः, अन्यथा भावाभावोभयाश्रितसपक्षविपक्षकत्वस्यासम्भवात् । किञ्चिद्विरोधाश्रयाश्रितसपक्षविपक्षकत्वस्य सद्धेतुसाधारण्याद्विरोधः पारस्परिकः स्वस्वाभावप्रतियोगिकत्वेन विशेषितः । नाव्याप्तीति । स्वस्वाभावयोरेकैकस्य प्रवेशेऽव्याप्तिप्रसक्तिः, अतिव्याप्त्यभावस्तु यथाश्रुते द्रव्यं विशिष्टसत्त्वादित्यादौ साध्यसमव्याप्ते द्रष्टव्यः । पात इति । सपक्षे यावत्त्वानुपादाने विषमव्याप्तधूमादावतिव्याप्तिः, तदभावस्य विपक्षे इव यत्किञ्चित्सपक्षेऽपि सद्भावात्, तदुपादाने तु पूर्वोक्ते सपक्षैकदेशगामिनि साधारणेऽव्याप्तिः । क्वचित्सपक्षे स्वाश्रयत्वं क्वचिच्च स्वाभावाश्रयत्वमादाय तद्वारणे तु धूमादावतिव्याप्तितादवस्थ्यमित्याह सर्वशब्दोपादाने इति । सर्वशब्दोपादानेऽपीत्यर्थः । यदि तु नैवं विरोधाश्रये यत्किञ्चित्त्वविशेषणस्य स्वरसः, तस्य प्रतिव्यक्तिविश्रान्तत्वादित्युच्यते तदोक्तसाधारणेऽव्याप्तिर्दुरुद्धरेति भावः । यदि तु यावत्त्वमनुपादेयमिति नेयमव्याप्तिः, हेत्वाभासत्वेन विशेषणे च धूमादावनतिप्रसङ्ग इत्यादिकं प्रागुक्तरीत्यैवोच्यते, अनुपसंहार्येऽपि चोक्तरीत्यैव नाव्याप्तिरिति, तदाप्याह स्वस्वाभावेति । लक्षणानुगमाभावः = लक्षणस्य सर्वलक्ष्यसाधारण्याभावः । तं व्युत्पादयति तत्तदभावयोरिति । अवस्थानप्रतिषेधः = वृत्तित्वप्रतिषेधः, अतएव सहानवस्थानमसामानाधिकरण्यम् । सामानाधिकरण्ये च क्वचिदवच्छेदकविशेषोऽपि निविशते, अन्यथाऽव्याप्यवृत्तिभावाभावयोर्विरोधो न स्यात् । तद् = उक्तानवस्थानम् । अभावस्वरूपात् = अभावत्वात्, एवञ्च तदाश्रयत्वेनाभावसङ्ग्रहसम्भवः । भावसामानाधिकरण्याभावस्याभावत्वेन समनैयत्याभावेऽपि लाघवात्तद्रूपत्वमेवेति भावः । एवं परतोऽपि । भावस्वरूपात् = भावत्वात् । भावस्वरूपम् = भावत्वम् । वस्तुतस्तु परस्परविरहात्मता तावद्भावाभावयोः प्राचीनैरभ्युपेयत एव, अन्यैस्तदनभ्युपगमेऽपि प्रकृते न काचित् क्षतिः, स्वस्वाभावविरोधाश्रयत्वेन भावाभावयोरनुगमस्य कथमप्यसम्भवात्; तथाहि—स्वस्वाभावोभयप्रतियोगिकविरोधो नेह विवक्षणीयः, असम्भवात्, अवृत्तिपदार्थ एव वा सम्भवात्, अपि तु स्वस्वाभावयोः परस्परं विरोधः, परस्परत्वञ्च नानुगतमिति स्वविरोधाश्रयत्वस्वाभावविरोधाश्रयत्वयोर्द्वयोरेव पर्यवसानम्, एवञ्च ताभ्यां रूपाभ्यां वा लाघवेनौचित्येन च स्वस्वाभावत्वाभ्यामेव वा स्वस्वाभावौ विवक्षणीयौ, तत्र च प्रत्येकमिलितविकल्पः सावसरः, अन्यतरत्वनिवेशस्यापहस्तितत्वात्, उक्तरीत्यैव प्रमेयत्वादेरपि तादृशान्यतरत्वसम्भवेन तदाश्रितसपक्षविपक्षकत्वमादाय सद्धेतावतिप्रसक्तेः, स्वस्वाभावविरोधाश्रययत्किञ्चित्त्वेन

स्वस्वाभावविरोधाश्रय इति वचनं विचारमर्हति, स्वस्वाभावयोर्विरोधविशेषणतयाऽऽधेयकोटिनिवेशाद्विशेषणघटितमूर्त्तित्वाद्विशिष्टपदार्थस्य तदाधारत्वानुपपत्तेः। अतिव्यापकता च स्यात्, अन्वयमादाय सपक्षे व्यतिरेकमादाय विपक्षे वर्तमानस्याप्युक्तलक्षणोपेतत्वात्, स्वस्वाभावाविशेषितस्य तु विरोधस्याश्रयेऽभिधीयमाने सर्वानुमानव्यापकत्वमनैकान्तिकलक्षणस्यापतेत्। न च वाच्यम्—स्वस्वाभावोपलक्षितो विरोधोऽभिमतः, तेन विशेषणपक्षोक्तदोषस्यानवकाश इति; यतः स्वस्वाभावाभ्यां विरोधमात्रं वा लक्ष्यते तद्व्यक्तिर्वा काचित्. आद्ये यदेव स्वस्वाभावाभ्यां लक्षितं विरोधमात्रं तदेवान्यत्रापीत्युक्तातिप्रसक्तिस्तदवस्थैव, स्वस्वाभावपदोपादानवैयर्थ्यं च। अथ द्वितीयस्तदा लक्षणाननुगमः एकस्य विरोधव्यक्तिविशेषस्यात्र परिगृहीतस्यापरविरोधव्यक्त्यनात्मत्वात्। अथ यावत्योऽपेक्षिता विरोधव्यक्तयस्ता उपलक्ष्यन्त इत्युच्यते; किन्नोपलक्ष्यन्ते, किन्तु केनचिदनुगतेन रूपेण, उत प्रतिस्वं व्यावृत्तेनात्मना, प्रथमे तदेवोच्यताम्, किमुपलक्षणोपन्यासप्रयासेन, न च तत्सम्भवति, विरोधमात्रादेरतिप्रसञ्जकत्वात्, प्रतिस्वं व्यावृत्तेन व्यक्तीनामात्मनोपलक्ष्यत्वे तथैव तासां लक्षणप्रवेश इति मिलितानां लक्षणत्वे सर्वाव्याप्तिः, प्रत्येकं लक्षणत्वे परस्परोदाहरणाव्याप्तिरिति।

---

निवेशो हि तादृशविरोधाश्रयत्वस्यानुगतत्वे एव युज्यते, स्वस्वाभावयोर्येन केनचिदाश्रितसपक्षविपक्षकत्वं नु स्वस्वाभावान्यतराश्रितसपक्षविपक्षकत्वान्नान्यत्। एवञ्चैकधर्मावच्छिन्नसाध्यकस्थलेऽपि न लक्षणैक्यसम्भवः। विशेषणतयेति। विशेषगता निरूपितत्वसम्बन्धावच्छिन्ना। आधेयकोटिनिवेशात् = विरोधनिष्ठाधेयतायामवच्छेदकत्वात्। विशेषणघटितमूर्त्तित्वात् = विशेषणानन्वितविधेयानन्वयित्वात्। विधेयान्वयित्वञ्चैकजातीयेनैव सम्बन्धेन विशेष्यविशेषणयोः, दण्डिनं पश्येत्यादौ तथा दर्शनादिति भावः। विपर्ययेऽनन्वयस्तात्। तदाधारत्वानुपपत्तेः = स्वस्वाभावयोः स्वविशिष्टविरोधाधारत्वानुपपत्तेः, अंशतः आत्माश्रयात्। स्वस्वाभावयोर्विरोधोपाधित्वविवक्षायां नेदं दूषणमत आह अतिव्यापकतेति। अन्वयमादाय = स्वाश्रयतया व्यतिरेकमादाय = स्वव्यतिरेकाश्रयतया वर्तमानस्य वह्निसाध्यकधूमादेः। एतच्च यथाश्रुते कथञ्चित्, नत्वन्यतरत्वघटिते हेत्वाभासत्वेन च विशेषिते कल्पे। सर्वानुमानेति। यत्किञ्चिद्विरोधाश्रयत्वं क नामनेति भावः। दोषस्य = आत्माश्रयस्य। लक्ष्यते = उपलक्ष्यते। वैयर्थ्यमिति। प्रतियोग्यविशेषितस्य विरोधमात्रस्य लिप्सितस्य तादृशपदोपादानं विनैव लाभात्। वस्तुतस्त्वेवं विरोधादेरप्यव्यावर्तकत्वेन वैयर्थ्यमेव। तदा लक्षणाननुगमइति। विरोधपदविवेचनेन प्रागननुगम एकधर्मावच्छिन्नसाध्यकस्थलेऽप्युक्तः, इदानीं तु प्रकारान्तरेण तत्रैव स उच्यते, स्वनिष्ठविरोधव्यक्तेः स्वाभावनिष्ठविरोधव्यक्तेश्च भेदात्, अग्रे यावत्य इत्यादिपदं तु स्थलभेदाभिप्रायेण द्रष्टव्यम्। एतेन स्वस्वस्यानुगमासम्भवात् सपक्षत्वादेश्च साध्यादिभेदभिन्नत्वादननुगमो न कल्पान्तरेऽपीति 'तदे'त्यभिधानमसङ्गतमिति नाशङ्कनीयम्। किमिति। उपलक्ष्यत्वासम्भवो हि यावतीनां साध्यतदभावनिष्ठविरोधव्यक्तीनां न मयोच्यते, अपि त्वनुगतानतिप्रसक्तरूपेण तदसम्भव इति भावः। अनुगतेन = अनुगतानतिप्रसक्तेन। विरोधमात्रादेः = विरोधत्वादेः। आदिना सप्रतियोगित्वादिकम्। अतिप्रसञ्जकत्वादिति। सर्वानुमानव्यापकत्वमतिप्रसङ्गोऽनुपदमुक्तः। लक्षणत्वे = लक्षणघटकत्वे। सर्वाव्याप्तिरिति। भावाभावीयविरोधद्वयाश्रयत्वं न साध्ये न वा तदभावे इति भावः। परस्परेति। स्वाधिकरणसपक्षविपक्षकत्वस्वाभावाधिकरणसपक्षविपक्षकत्वयोः प्रत्येकमेव लक्षणत्वपर्यवसानादिति भावः। उपाधित्वविवक्षायां तु नेत्थं दोषावकाश इत्यवधेयम्।

स्यादेतत्, सपक्षे एव विपक्षे एव च वर्तते न यः सोऽनैकान्तिक इति लक्षणमस्तु, तेन साधारणासाधारणानैकान्तिकोदाहरणव्याप्तिर्भवतीति; एतदप्यलक्षणम्, सद्धेतौ धूमादावपि गतत्वात्, नह्यसौ विपक्षे एव वर्तते, सर्वथा तत्रावृत्तेः, नापि सपक्षे एव, पक्षेऽपि वर्तमानत्वात्। अथ पक्षवृत्तिरितिविशेषयसि; तथापि सद्धेतोरपरित्यागः, पक्षवृत्तित्वादेव सपक्षे एव वृत्तेरभावात् । असिद्धानैकान्तिकसङ्कराव्याप्तिश्च। अथ पक्षव्यतिरिक्त इति प्रक्षिपसि, तदानीमप्रसक्तव्यावर्तनमनुपपन्नम्. नहि पक्षाव्यतिरिक्तः सपक्षो विपक्षो वा सम्भवतीति सपक्षस्य विपक्षस्य च कुतश्चिद्व्यावर्तकं विशेषणमेवेदं तयोः कथं घटेत। अथ पक्षव्यतिरिक्ते वर्तमान इति विशेषयसि; तदानीमसाधारणाव्याप्तिः.

---

सपक्षे एवेति। सपक्षमात्रवृत्त्यन्यत्वे सति विपक्षमात्रवृत्त्यन्यत्वमित्यर्थः। आद्यं दलं सद्धेतौ द्वितीयञ्च विरुद्धेऽतिव्याप्तिवारणाय। व्याप्तिः = सङ्ग्रहः। सर्वं क्षणिकं सत्त्वादित्यादौ साध्यसन्देहाक्रान्तविश्वकेऽनुपसंहारिणि तु न लक्षणसमन्वयः, सपक्षविपक्षत्वयोर्निश्चयघटितयोस्तत्राप्रसिद्धेः। एवञ्च यावतां सङ्ग्रहसम्भवस्तावतामेव स कर्तव्यः। शब्दोऽनित्यः शब्दत्वात्, शब्दो नित्यः शब्दत्वादित्यनयोर्व्याप्यविरुद्धयोर्दशाविशेषेऽसाधारणयोरपि न सपक्षविपक्षमात्रवृत्तित्वम्, पक्षमात्रवृत्तित्वादेवेति। सपक्षत्वविपक्षत्वयोर्निश्चयाघटितत्वे यद्यप्युक्तानुपसंहारिणोऽपि सङ्ग्रहसम्भवः, साध्यतदभाववदुभयवृत्तित्वात्, उक्तव्याप्यविरुद्धयोश्चालक्ष्यतयाऽव्याप्तिवारणसम्भवः, तथापि नैवमग्रिमग्रन्थसामञ्जस्यम्। यद्यपि विरुद्धस्य साधारणासाधारणान्तर्भावेन तद्व्यावर्तकं विशेषणमसङ्गतम्, न वा व्यावृत्तिरपि, शब्दो नित्यः कृतकत्वादित्यादौ नित्यत्वाभावव्याप्यत्वस्य कृतकत्वेऽबोधावस्थायां साध्यसन्देहकाले निश्चितसाध्याभाववन्मात्रवृत्तित्वाभावात्, तथापि सत्त्वे एवैतस्मिन् दोषान्तरमाह एतदपीति। धूमादाविति। एतद्रूपवानेतद्रसादित्यादौ निश्चितसाध्यवन्मात्रवृत्तौ समन्वयासम्भव इति भावः। पक्षेऽपीति। साध्यवत्तया संशयनिश्चययोरविषयस्यापि वस्तुतः साध्यवत उपलक्षणमिदम्। पक्षवृत्तिरिति। वह्न्यव्यभिचार्यपि धूमो ह्रदो वह्निमान् धूमादित्यादौ न पक्षवृत्तिरितिभावः। ह्रदादिपक्षकस्थले नातिव्याप्तिरुद्भाविता, अपि तु पर्वतादिपक्षकस्थले इत्यभिप्रायेणाह तथापीति। ननु सकलेषु साध्यवत्तया सन्दिग्धेषु वृत्तिर्विवक्षिता, सम्भवति च ह्रदादेरपि कदाचित्तथा सन्दिग्धता, न च धूमस्य तत्र वृत्तिरत आह असिद्धानैकान्तिकसङ्करेति। असिद्धाभिन्नानैकान्तिकेत्यर्थः। पर्वतो धूमवान् वह्नेरित्यादौ पक्षवृत्तित्वेऽपि ह्रदादिपक्षकस्थले न तथात्वमिति भावः। पक्षव्यतिरिक्ते इति। पक्षवृत्तित्वं तावत्सोढव्यम्, एवञ्च पक्षव्यतिरिक्ते चेद्वर्तते सद्धेतुः, तर्हि सपक्ष एव न तु विपक्षे, विरुद्धस्तु पक्षव्यतिरिक्ते चेद्वर्तते तर्हि विपक्षे एव नतु सपक्षे इति भावः। अग्रेतादृशभावलाभाय शब्दरचना कीदृशीति चिन्तायां पक्षव्यतिरिक्तत्वं यदि सपक्षविपक्षयोर्विशेषणं विवक्षितम्, तदाऽऽह तदानीमिति। विषयतया साध्यसन्देहविशिष्टो हि पक्ष इति तस्माद्विषयतया साध्यतदभावनिश्चयविशिष्टयोः सपक्षविपक्षयोर्भेद एव, "अविरुद्धविशेषणद्वयप्रभवत्वेऽपि विशिष्टयोर्द्वयोः, घटते न यदैकता तदा सुतरां तद्विपरीतरूपयो"रितिन्यायात्। तदनभ्युपगमे तु स्वयैव पक्षव्यतिरिक्तत्वं पक्षताऽत्यन्ताभावरूपमेव विवक्षित्वा सपक्षविपक्षयोः सत्यापम्, तच्चाव्यभिचरितमेव तयोरिति भावः। अव्यावर्तकमिदं कथं तयोर्विशेषणं घटेतेत्यन्वयः। ह्रदमुपलक्षणम्, सपक्षविपक्षयोः पक्षव्यतिरिक्तत्वोपादानमात्रेण नोक्तभावलाभसम्भवोऽपीति स्वाभिप्रायोद्घाटनेऽप्यसामर्थ्यमिति परकीयाकौशलोन्मीलनमेवेदम्। एवमग्रेऽपि 'अपास्त'मितिग्रन्थपर्यन्तं द्रष्टव्यम्। असाधारणाव्याप्तिरिति। असाधारणाव्याप्तिरपीत्यर्थः। एवञ्चातिव्याप्तिवैयर्थ्ययोरपि

नासौ पक्षव्यतिरिक्ते वर्तमानः। अथ पक्षव्यतिरेकेणेति विशेषणमुपादत्से; तदापि पक्षव्यतिरेकस्य पक्षविरहरूपस्योपलक्षणत्वं हेतुत्वं वा द्वयमपि पक्षमात्रवृत्तावसाधारणानैकान्तिके न सम्भवति, पक्षविरहस्य तत्रासम्भवादेव। निषेध्यविशेषणत्वे त्वस्य सद्धेतौ गमनं स्यात्। एतेन पक्षं विना पक्षमन्तरेणेत्याद्यक्षरैर्विशेषाभिधानमपास्तम्। अथ–यदि पक्षव्यतिरिक्ते वर्तेत तदा सपक्षे एव विपक्षे एव वर्तते न यः सोऽनैकान्तिकः, तथा सत्यसाधारणस्यापि व्याप्तिः, सद्धेतौ चाप्रसक्तिरिति मन्यसे; तदा भ्रान्तोऽसितराम्, एवं हि सति नोभयस्यापि सङ्ग्रहः, असाधारणे तावद् 'यदि पक्षव्यतिरिक्ते वर्तेत' इत्येतन्न सम्भवति, तस्य पक्षमात्रवृत्तेः कदाचिदपि पक्षव्यतिरिक्तवृत्तिसम्भावनानुपपत्तेः; साधारणेऽपि निश्चितसपक्षविपक्षवृत्तौ यद्यर्थं न पश्यामः, 'यदि पक्षव्यतिरिक्ते वर्तेत' इति, नहि निश्चितवृक्षभावायां शिंशपायां प्रयुज्यते 'यदि शिंशपा वृक्षः स्या'दिति, तत्कस्य हेतोः ? संशयोपस्थापितात्कोटिद्वयादेकस्यां कोटौ तदाश्रये किञ्चिद्धर्मोपदर्शना-

---

समुच्चयः। धूमादेरपि पक्षव्यतिरिक्तवृत्तित्वात्। नासौ = नह्यसौ। पक्षव्यतिरेकेणेति। पक्ष इहानिश्चितसाध्यतदभावको बोध्यः। पक्षव्यतिरेकेण सपक्षविपक्षमात्रवृत्त्यन्यत्वमित्यर्थः। पक्षव्यतिरिक्तवृत्तित्वानुपादानाच्चासाधारणासङ्ग्रहः। विरुद्धः पक्षव्यतिरेकेण विपक्षमात्रवृत्तिरेव। सद्धेतुश्च पक्षव्यतिरेकेण सपक्षमात्रवृत्तिरेवेत्याभासः। पक्षव्यतिरेकेणेति तृतीयेत्थम्भूतलक्षणे वा हेतौ वा स्यादित्याशयेनाह तदापीति। विरहरूपस्य = भेदरूपस्य। तत्रेति। सामानाधिकरण्येनेति शेषः। एतेन सम्बन्धेन पक्षभेदस्यासाधारणोपलक्षणत्वं नासाधारणस्य पक्षभिन्नवृत्तित्वं विना निर्वहति, पक्षभिन्नवृत्तित्वञ्च तस्यासाधारण्यभङ्गं प्रसञ्जयति। अतिव्याप्तिवैयर्थ्ये त्वत्राप्यनुसन्धेये। स्वरूपसम्बन्धेन पक्षभेदस्य उपलक्षणत्वे तु शब्दो नित्यः शब्दादिति तादात्म्येनासाधारणेऽव्याप्तिः, वृक्षः शिंशपाया इत्यादावतिव्याप्तिविरहेऽपि धूमादावतिव्याप्तिश्च। पक्षभेदजन्यत्वाभावस्तु स्पष्ट एव। ननु लक्षणीभूततादृशान्यत्वानुयोगिनि पक्षव्यतिरेकेणेत्यस्य विशेषणतामादाय दोषदानमनुचितम्, तादृशान्यत्वप्रतियोगिन्येव तस्य विशेषणताया व्याप्यविरुद्धयोरतिव्याप्तिवारणाय विवक्षितत्वादित्यत आह निषेध्यविशेषणत्वे इति। तादृशान्यत्वप्रतियोगिविशेषणत्वेपीत्यर्थः। सद्धेताविति विरुद्धस्याप्युपलक्षणम्। सामानाधिकरण्येन स्वरूपसम्बन्धेन वा पक्षभेदोपलक्षितोऽपि व्याप्यादि नं सपक्षादिमात्रवृत्तिरिति भावः। इदानीं परः स्वाभिप्रायमुचितमुन्मीलयति अथेति। वर्तेत न यः सोऽनैकान्तिक इति। वर्तेत योयस्तद्भिन्नोऽनैकान्तिक इत्यर्थः। पक्षोऽनिश्चितसाध्यतदभावको न तु सन्दिग्धसाध्यकः, तथा सति सन्दिग्धसाध्यकव्यतिरिक्ते वर्तमानः सद्धेतु नं निश्चितसाध्यके एव वर्तते, अनिश्चितसाध्यके वस्तुतः साध्यवत्यपि वर्तमानत्वादिति तत्रातिव्याप्तिः स्यात्। एवं विरुद्धेऽपि। व्याप्तिः = सङ्ग्रहः। अनुयोगिनि पक्षव्यतिरिक्तवृत्तितासम्भावनाया अनपेक्षणीयत्वादिति भावः। यथाश्रुतलक्षणवाक्यमनुसृत्यानुयोगिन्येव तस्या अपेक्षणीयत्वाभिमानेन परः पराकरोति तदेति। पक्षमात्रवृत्तेः = पक्षमात्रवृत्तित्वेन गृहीतस्य यद्यर्थं = यदिपदार्थं सम्भावनाम्। संशयोपस्थापितात् = संशयविषयीकृतात्कोटिद्वयात्, निःसृतायामितिशेषः। तथा चार्थात्कोटिद्वयान्तर्गतत्वलाभः, अन्यथा निर्धारणे पञ्चम्यसङ्गतेः। एकस्यामिति। व्याप्यीभूतायामितिशेषः। किञ्चिद्धर्मोपदर्शनार्थं = व्यापकारोपार्थम्। आरोप्यमाणायां = आरोपणीयायाम्, तदीयारोपविषयतात्मकसम्भावनाबोधकतयेति शेषः। अयं यदि निर्वह्निः स्यान्निर्धूमः स्यादित्यादौ हि निर्वह्नित्वारोपविषयताप्रयोज्यनिर्धूमत्वारोपविषयताश्रयत्वभानम्।

र्थमारोप्यमाणायां यदीति प्रयुज्यते न तु निश्चिते एव वस्तुनि । तस्मादसाधारणानैकान्तिकसङ्ग्रहाय यदीत्याद्युपात्तं तत्र साधारणमपि समग्रहीत् । अथ विपक्षे एव सपक्षे एव न वर्तते यो हेत्वाभासः सोऽनैकान्तिक इति लक्षणं मन्यसे; तदप्यनुपपन्नम्, अनैकान्तिकत्वमनिश्चित्याग्रत एव हेत्वाभासत्वावधारणे तत एव हेतोरसाधकत्वं सिद्धमिति कृतं तदुपजीविनाऽनैकान्तिकत्वोपन्यासेन, अथाग्रतो हेत्वाभासत्वं नावधार्यते तदा लक्षणस्य दुरवधारणत्वम्, विशेषणस्य हेत्वाभासत्वस्यानवधारणात् ।

अथ अपे—असिद्धविरुद्धप्रकरणसमकालात्ययापदिष्टादन्यो हेत्वाभासोऽनैका-

---

न तु निश्चिते इति । तथा च निश्चितारोपबोधकं प्रयुज्यमानमपि वाक्यमप्रमाणमेवेति भावः । ननु व्याख्यातरीत्याऽनुयोगिनि पक्षव्यतिरिक्तवृत्तित्वसम्भावना नापेक्षणीयेति नायं दोष इति चेत्तथाप्यसाधारण्योत्तीर्णतादशायां शब्दोऽनित्यः शब्दत्वादित्यादावतिप्रसक्तिः, पक्षव्यतिरिक्तवृत्तित्वसम्भावनाविरहेण प्रतियोगिकुक्ष्यनन्तर्भावात् । एवं पक्षव्यतिरिक्तवृत्तित्वेन निश्चितयोर्व्याप्यविरुद्धयोरपि । हेत्वाभास इति । तथा च सद्धेतौ निश्चितसाध्यवन्मात्रवृत्तित्वाभावेऽपि नातिव्याप्तिरिति भावः । विरुद्धस्यापि व्यावर्तनीयतायाः पराभिमतत्वेन तत्रातिव्याप्तिसत्त्वे एवाह अनैकान्तिकत्वमिति । साधारणत्वाद्यन्यतममित्यर्थः । असाधकत्वमिति । अनुमितितत्कारणान्यतरप्रतिबन्धस्याप्युपलक्षणम् । ननु नेदं दूषकतौपयिकं लक्षणमपि त्वनुगममात्रमिति नेदं दूषणमिति चेत्तथापि निश्चितसाध्यवन्मात्रवृत्तेर्भेदनिवेशो व्यर्थ एव, तस्यापि सद्धेतुतया हेत्वाभासत्वदलेनैव व्यावृत्तिसम्भवात्, एवं विरुद्धवारकत्वेनाभिमतदलस्यापि वैयर्थ्यमित्युक्तमेव । एतेन—सपक्षविपक्षत्वे न निश्चयघटिते, एवञ्च साध्यवन्मात्रवृत्त्यन्यत्वे सति साध्याभाववन्मात्रवृत्त्यन्यत्वं लक्षणम्, अत्र च व्याप्यविरुद्धयो दलद्वयेन व्यावृत्तिः । सर्वं क्षणिकं सत्त्वादित्याद्यनुपसंहार्यस्यापि चैवं सङ्ग्रह एवेत्युक्तम् । नच—गगनादेरवृत्तितया तत्रातिप्रसङ्गः, हेत्वाभासत्वनिवेशेन तद्व्यावृत्तिस्तु नाशङ्कनीया, स्वरूपासिद्धतया तस्य हेत्वाभासत्वादेवेति—वाच्यम्, असाधारण्याक्रान्ततया तस्य लक्ष्यत्वसम्भवात्, शब्दोऽनित्यः शब्दत्वात्, शब्दोनित्यः शब्दत्वादित्येतयोस्तु न लक्ष्यतेति नाव्याप्तिः, पक्षतादशायामसाधारणतया तयोः सङ्ग्राह्यत्वादरेऽपि पक्षातिरिक्तसाध्यवन्मात्रवृत्त्यन्यत्वे सति पक्षातिरिक्तसाध्याभाववन्मात्रवृत्त्यन्यत्वं वक्तव्यम्, उक्तासाधारणयोस्तु पक्षमात्रवृत्तितया न पक्षातिरिक्तसाध्यतदभाववन्मात्रवृत्तित्वम्, नच—तथापि धूमादिव्याप्यविरुद्धयोरतिप्रसङ्गः, नहि तौ पक्षातिरिक्ते साध्यतदभाववत्येव वर्तेते पक्षेऽपि वर्तमानत्वादिति—वाच्यम् पक्षातिरिक्तवृत्ति यत्साध्यवन्मात्रवृत्ति साध्याभाववन्मात्रवृत्ति च तदन्यत्वस्य विवक्षणीयत्वादित्यपि—नाशङ्कनीयम्, विरुद्धस्य सव्यभिचारभिन्नत्वे मानाभावेन तद्वारकदलवैयर्थ्यात्, पक्षातिरिक्ताप्रसिद्ध्या सर्वं क्षणिकं सत्त्वादित्यस्य सङ्ग्रहीतुमशक्यत्वाच्च भेदकूटस्याबद्धपनिवेद्यत्वेनासर्वज्ञदुर्ग्रहत्वाच्च, सामान्याभावस्यापि निरस्तत्वाच्च ।

असिद्धेति । असिद्धादेः प्रत्येकं भेदप्रतियोगित्वम्, तेन व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकभेदमादाय नातिप्रसङ्गः । असिद्धपदञ्च व्याप्यत्वासिद्धातिरिक्तासिद्धपरम्, तेन व्यभिचारिमात्रस्य व्याप्यत्वासिद्धत्वेऽपि न क्षतिः । प्रकरणसमः = सत्प्रतिपक्षः । कालात्ययापदिष्टो = बाधितः । हेत्वाभास इति । उदासीने घटादावतिव्याप्तिं निवारयितुमिदम् । न च तस्यापि क्वचिदनैकान्तिकत्वमिति वाच्यम्, एवं सत्यनैकान्तिकस्यापि क्वचिदसिद्धादित्वेन तद्भिन्नत्वस्य तत्रासम्भवेन लक्षणमसम्भवि स्यात्, अननुगममाश्रित्य स्थलविशेषानुसरणेन समाधानं तु समानम्, घटादेरपि स्थलविशे-

न्तिक इति; तदप्युक्तन्यायेनैव निरस्तम् । किञ्चैवमप्यसिद्धादिसङ्कीर्णस्यानैकान्तिकस्यासङ्ग्रहः स्यात् । न च तदसिद्धत्वादेवाहेतुर्भविष्यतीति वाच्यम्, इतरानैकान्तिकवद्विपक्षगतत्वादिनाप्युद्भावने दोषत्वसम्भवात् । अथ मन्यसे साधारणत्वासाधारणत्वयोर्व्यतिरेकाभ्यां मिलिताभ्यां विशिष्टादन्यत्वं साधारणासाधारणानैकान्तिकव्यापि सामान्यलक्षणमस्तु; मैवम्, यदि व्यतिरेकद्वयविशिष्टादन्यत्वं तर्हि तस्य विशिष्टस्य विशेष्ये विशेषणे चेदमस्तीत्यतिव्याप्तिः । यदि व्यतिरेकद्वयवत्तोपलक्षणं तदोपलक्ष्य-

---

पेऽलक्ष्यत्वादिति । उक्तन्यायेनेति । हेत्वाभासत्वस्य प्रथमतो दुरवधारणत्वेनेत्यर्थः । अस्य दूषकतानौपयिकत्वेन नायं दोष इत्यरुचेराह किञ्चेति । असिद्धादिसङ्कीर्णस्य = ह्रदो धूमवान् वह्नेरित्यादावसिद्धादिरूपस्य । इतरेति । पर्वतो धूमवान् वह्नेरित्यादावसिद्धाद्यनात्मकेत्यर्थः । विपक्षगतत्वादिनेत्यादिना सपक्षव्यावृत्तत्वादिकं ग्राह्यम् । असिद्धादौ प्रकृतासिद्ध्यादिनिवेशे तदप्रसिद्धिस्थलीयानैकान्तिकासङ्ग्रहः, उदासीनासिद्ध्यादिनिवेशे तु तत्तदसिद्धादिभेदस्य सद्धेतौ सत्त्वेऽपि हेत्वाभासत्वदलेन तत्रातिव्याप्त्यभावेऽपि भेदकूटस्य निवेशनीयत्वेनासर्वज्ञाज्ञेयत्वमस्त्येव, प्रतियोगिनामनुगमकाभावादित्यपि द्रष्टव्यम् । व्यतिरेकाभ्यां = अत्यन्ताभावाभ्याम् । द्विवचनबलादभावद्वयवैशिष्ट्यलाभेऽपि मिलिताभ्यामित्यभिधानं स्वरूपसम्बन्धेनैवैकेन वैशिष्ट्यलाभाय, अन्यथाऽसाधारणेऽसाधारणत्वात्यन्ताभावस्य साधारणे च साधारणत्वात्यन्ताभावस्य कालिकादिना सत्त्वेन तदन्यत्वस्य तयोरभावेनासम्भवापत्तेः । निश्चयघटितसपक्षत्वादिघटितलक्षणानामनुपसंहारिसाधारण्यासम्भवेऽपि रीत्यैतयाऽनुपसंहारिणोऽपि सङ्ग्रहे बाधकाभावेनानुपसंहारित्वव्यतिरेकस्याप्युपलक्षणमिदम्, अग्रे च व्यतिरेकद्वयपदं व्यतिरेकत्रयपरमेव द्रष्टव्यम् । एतच्च साधारणभेदविशिष्टं सदसाधारणभेदविशिष्टं सदनुपसंहारिभेदविशिष्टं यत्तदन्यत्वमिति भेदघटितान्यतमत्वनिरुक्तेरप्युपलक्षणम्, वक्ष्यदोषाणां तत्साधारण्यात् । विशिष्टादिति यथाश्रुतं वोपलक्षितपरं वेत्याशयेन यदीति । अन्यत्वमिति । विवक्षितमिति शेषः । विशेष्ये = सद्धेतौ । विशेषणे = साधारणत्वाद्यत्यन्ताभावत्रये साधारणादिभेदत्रये च । इदमस्तीति । साधारणत्वाद्यत्यन्ताभावे साधारणत्वादिकं नास्तीति प्रतीतावप्यात्माश्रयापत्त्या तादृशात्यन्ताभाववैशिष्ट्यस्यानिर्वचनीयवादिनं प्रति न शक्यवचनता, एवञ्च विशेषणे विशिष्टभेदोऽस्त्येव, विशेष्येऽपि च स 'इदानीमयं दण्डी ने'ति प्रतीत्या मन्तव्य एव । वस्तुतस्तु दण्डी पुरुष इति समानविभक्त्यन्तनामद्वयाभिलप्यप्रमीयविषयत्वान्यथानुपपत्त्यैव स मन्तव्य एव, घटो घट इत्यदर्शनेनात्यन्ताभेदे तादृशविषयत्वानुपपत्तेः; अधिकं तु "नातत्तन्मन्यसे ताव"दित्यादिकारिकादिव्याख्यायामावेदितमधस्तात् । इदन्तु बोध्यम्—साधारणत्वाद्यत्यन्ताभावस्य साध्याद्यात्मकविपक्षवृत्तितया साधारणत्वेन सम्भवल्लक्ष्यभावतया तत्रातिव्याप्त्युक्ति र्नोपपद्यते इति । उपलक्षणमिति । उपलक्ष्यं हि शुद्धमेवेति सद्धेतौ न प्रसङ्गः, उपलक्षणे तूक्तरीत्या लक्ष्यताया एव सम्भव इति । इदन्तु बोध्यम्—अविद्यमानत्वगर्भमुपलक्षणत्वमिह न शक्यशङ्कम्, सद्धेतौ साधारणत्वाद्यत्यन्ताभावस्य विद्यमानत्वादेव, नह्यसाधारण्यस्यानित्यदोषत्वपक्षः क्षोदक्षमो येन तदत्यन्ताभावो न कदाचित्सद्धेतौ स्यात्, अपि तु परिचायकत्वरूपमेव तच्छङ्कनीयम्, तद्धि विधेयानन्वयिनो विद्यमानस्यैवेतिशुद्धोपहितयोरभेदाभिप्रायेणेयमाशङ्केति । भेदेनैव = विशिष्टभिन्नतायाः सत्त्वे एव, एवञ्चाभेदोऽपि न वारित इति 'व्यतिरेकोऽपी'त्यपेनास्वरसः । एवं शुद्धे विशेष्येऽतिव्याप्तिं मा प्रसाङ्क्षीत्, विशिष्टे तूपहितान्यत्ववति सा प्रसक्तैवेत्याह तदेति । वस्तुतस्तूक्तयुक्त्योपहितान्यत्वस्य शुद्धे आवश्यकत्वाद्धूमत्वादिना सद्धेतावप्यतिप्रसक्तिरस्त्येवेति ।

स्वरूपाणां यदि भेदेनैवोपलक्ष्यता तदा व्यतिरेकोऽपि विशिष्टे तस्मिन्नस्ति, नहि यदेवाविशिष्टं तन्मात्रं विशिष्टम् । एवमभेदेनापि । भेदाभेदात्तदेवातदपीति चेन्न, अतदपीति प्रसक्ततादवस्थ्यात् । ततोऽत्यन्तान्यत्वं लक्षणमिति चेन्न; असिद्धादिसङ्की-

व्यतिरेकोऽपि = साधारणत्वाद्यत्यन्ताभावत्रयोपलक्षितान्यत्वमपि । विशिष्टे = उक्ताभावत्रयविशिष्टे । तस्मिन् = सद्धेतौ । अविशिष्टे इति पाठे तु तादृशाभावत्रयोपलक्षिते इत्यर्थः । व्यतिरेक इत्यस्य च तादृशाभावत्रयविशिष्टभेद इत्यर्थः, एवञ्च विशिष्ट उपलक्षितभेदस्यार्थाल्लाभः । धूमत्वेन सद्धेतावति-प्रसक्तिस्त्वत्र पाठे शब्दतो लभ्येत, यदि भेदेनैवोपलक्ष्यतेत्यस्य शुद्धभेदे सत्येवोपहिततेत्यर्थःस्यादिति । पूर्वोक्तयुक्तिमभिप्रेत्याह नहीति । अभेदेनापीति । विशिष्टाभिन्नत्वेनाप्युपलक्ष्यतोपगमे व्यतिरेकत्रय-विशिष्टेऽतिव्याप्तिः, अत्यन्ताभेदस्य वक्तुमशक्यत्वात्, अन्यथोक्तप्रमीयविषयत्वानुपपत्तेरिति भावः । अभावत्रयस्य विशेषणत्वपक्षेऽपि विशिष्टशुद्धयोर्भेदाभेदोपगमे भेदमादायातिप्रसङ्गसम्भवः । केचित्तु—भेदेनैव = अननुगतरूपेणैव, अभेदेनापीत्यप्यनुगतरूपाभिप्रायेण, एवं चानुगतरूपेण वाऽननुगतरूपेण वोपलक्ष्यता, उभयथापि दूषणं तदेत्यादिनोक्तम्, उपलक्ष्यतावच्छेदकस्यानुगतस्यासम्भवः, प्रातिस्विक-रूपेण चोपलक्ष्यता दुर्ग्रहेति तु पक्षद्वये प्रत्येकं दूषणमिति व्याचक्षुः । भेदाभेदोभयसत्त्वेऽभेदमादाय प्रसङ्गः सुपरिहर इत्यभिमानेनाशङ्कते भेदाभेदादिति । भेदसमानाधिकरणाभेदादित्यर्थः । अतदपि तदेवेत्य-न्वयः । भेदासहिष्णोरेवाभेदस्योक्तातिप्रसङ्गभञ्जकत्वम्, स च न प्रकृते, यस्त्वस्ति, स नातिप्र-सङ्गवारक इत्यभिप्रायेणोक्ताभिमानं निराकरोति अतदपीति । तत इति । साधारणत्वाद्यत्य-न्ताभावत्रयोपलक्षितप्रतियोगिकाभेदराहित्ये सति तत्प्रतियोगिकभेदवत्त्वमित्यर्थः । विशेषणमेव तु पर्याप्तम् । एतच्च साधारणादावेवेति भावः । असिद्धादीति । ह्रदो वह्निमान् धूमादित्यादाव-सिद्धस्य साधारणत्वाद्यत्यन्ताभावत्रयोपलक्षिततयाऽसिद्धादीत्यनेन तदुपलक्षितमात्रं विवक्षणीयम्, प्रमेयत्वादिना च येन केनचिद्रूपेण तद्भिन्नतयाऽनैकान्तिकोदाहरणानां सत्यन्ताभावादसम्भवः, भेदाभेदवादिमतेऽवच्छेदकभेदेनैव तयोः प्राग्व्यवस्थापितत्वात् । एकावच्छेदेन तदुपगन्तृमतेऽपि प्रमेयत्वादिना भेदस्यापि वक्तव्यत्वात्, अन्यथा सामानाधिकरण्यबुद्ध्यनुपपत्तेः । नच व्याप्यत्वेनाभेद-विवक्षा युक्तिमती; प्रतिविधास्यमाने पर्यवसानात् । अतएव व्याप्यतावच्छेदकरूपेणापि नाभेदो विवक्षाक्षमः । यथाश्रुतं तु नोपादेयम्, ह्रदो धूमवान् वह्नेरित्याद्यनैकान्तिकस्यासिद्धाद्यभिन्न-त्वेपि साधारणत्वाद्यत्यन्ताभावत्रयोपलक्षितत्वासम्भवात् । ननु साधारणत्वाद्यत्यन्ताभावत्रयोपलक्षिता-न्यत्वमेव लक्षणम्, उपलक्षितत्वञ्चोपहितत्वपर्यवसन्नमिहेत्युक्तम्, एवञ्च तादृशाभावत्रयविशिष्टे नातिप्रसङ्गः, विशिष्टशुद्धयोर्भेदाभेदेऽपि तादृशाभावत्रयेण विशिष्टोपहितयोरभेदस्यैवाभ्युपगमे बाधकाभावात्, घटो घट इतिवत्सामानाधिकरण्यधियस्तयोरभावेन तस्या अनुपपादनीयत्वात्, न च तथाऽपि शुद्धेऽतिप्रसङ्गतादवस्थ्यम्, उपहितानुपहितयोर्भेदाभेदस्य भेदाभेदवादिमतसिद्ध-त्वादिति वाच्यम्, सद्धेतौ यावत्सत्त्वं साधारणत्वाद्यत्यन्ताभावस्य सद्भावेन तदनुपहितत्वस्य तद्वि-शिष्टत्वस्य वाऽसम्भवात् । न च तथापि धूमत्वादिना सद्धेतोरतिप्रसक्तिस्थलत्वं स्यात्, तत्र सामानाधिकरण्यधिय उपपाद्यत्वाद्भेदाभेदयोः सत्त्वादिति वाच्यम्, अवच्छिन्नवृत्तिकान्यस्य नञ्पदाभि-लप्यत्वविशिष्टस्य वाऽन्यत्वस्य वक्तव्यत्वात्, घटो न पट इत्यादिधीसिद्धो हि भेदस्तादृशः, नत्वभेदसहिष्णुरपि, अन्यथा भेदाभेदवादिमते विशिष्टसत्ता न सत्तेतिमतेः प्रमात्वस्य दुर्वारत्वापत्तेः । एवञ्चानुयोगितावच्छेदकीभूतत त्तद्धर्मावच्छिन्नवृत्तिकत्वस्य सत्त्वेऽपि तद्व्याप्यवृत्तावच्छेदकतायाश्च दुर्वचत्वेऽपि

णानैकान्तिकोदाहरणाव्यापनात् । स्वरूपाणां चानन्त्येन तत्प्रतियोगिकान्यत्वावधारणस्याशक्यता, तेषामानन्त्यात्, तन्मध्यपतितकतिपयान्यत्वे चान्यत्र कतिपये प्रसङ्गतादवस्थ्यात् । उपलक्षणत्वे चोभयव्यतिरेकस्यान्यत्वप्रतियोगिकोटयप्रवेशेन तत्सङ्ग्रही-

न क्षतिः । अथैवं प्रमेयत्वाद्युदासीनरूपेणाभेदस्य सत्त्वेन तादृशाभिलप्यत्वविशिष्टत्वं न क्वापि भेदे इति घटो न पट इत्यपि न स्यात्, नञ्पदसमभिव्याहृतपदोपस्थापितरूपेणैवाभेदस्य तादृशधीविरोधित्वे तु भेदस्याप्यभेदस्येव तथोपस्थापितरूपेणैव सामानाधिकरण्यमप्युपपादकत्वं वाच्यम्, अन्यथोदासीनरूपेण भेदमादाय घटः कलश इत्यप्यापत्तेः, तथा च विरोधः, प्रतीयमानयो रूपयोरन्यतररूपेण भेदस्यापरतररूपेण चाभेदस्यापेक्षणीयत्वे तु नीलो घट इत्यपि न स्वहस्तितम्, अत्र गुणगुणिनोर्नीलत्वघटत्वाभ्यामुभाभ्यामेव भेदाभेदयोर्योग्यत्वात्, यदि च रूपद्वयोपस्थितिरेवादरणीया, तदा तयैव सामानाधिकरण्यबुद्ध्युपपत्तौ किं विभिन्नरूपाभ्यां रूपिभेदाभ्युपगमव्यसनेनेति चेन्न, रूपयोर्भेदे ताभ्यां रूपिभेदस्यानुभवसिद्धत्वात्, अभेदस्तु यदि ताभ्यामेव रूपाभ्यामनुभूयते, तदा विरोधोऽनुभवेनैवापास्तः नोचेद्धर्मिमात्राश्रितोऽसौ निरवच्छिन्नानुयोगितामप्रतियोगिताक एवास्तु । अभिलप्यत्वं स्वभिलापयोग्यत्वमित्यभिलापाभावदशायां देशनीया नाव्याप्तिरित्यस्वरसादाह स्वरूपाणाञ्चेति । उपलक्ष्यस्वरूपाणामित्यर्थः । तेषां = उक्तान्यत्वानाम् । उपलक्ष्यतावच्छेदकस्यानुगतानतिप्रसक्तस्याभावेन सामान्याभावस्यैकस्य निवेशो नात्र सम्भवति, अनैकान्तिकत्वस्यैव निरूप्यमाणत्वेन तदवच्छिन्नभिन्नत्वस्य तथात्वानुपपत्तेः । न च - व्याप्यत्वमेवोपलक्ष्यतावच्छेदकम्, विरुद्धोऽप्यसाधारणत्वादिना लक्ष्यएवेति व्याप्यान्यत्वं पर्यवसन्नं नातिप्रसक्तम्, न च साध्यादिभेदभिन्नमूर्तिकतया व्याप्तिर्नानुगता, साधारणत्वादेरप्येतादृशत्वात्, न च तथापि भेदकूटनिवेशः प्रसक्त एव; व्याप्यतावच्छेदकावच्छिन्नप्रतियोगिताकभेदस्य निवेशनीयत्वात्, व्याप्यतावच्छेदकानामपि यद्यपि नानात्वं तथापि व्याप्यतावच्छेदकत्वेनानुगम इति—वाच्यम्, एवं सत्येतावन्मात्रमेव लक्षणमस्तु, कृतं परिशिष्टेन, नवैतदपि, व्याप्यत्वादेः सामान्याभावस्य च वितत्य निरस्तत्वादिति । तन्मध्येत्यादि । साधारणत्वाद्यभावत्रयोपलक्षितव्यक्त्यन्तःपातिकतिपयव्यक्त्यन्यत्वविवक्षायाञ्चेत्यर्थः । तथा सति नानात्वनिबन्धना दुरवधारणतेति भावः । कतिपये सद्धेतौ प्रसङ्गोऽतिव्याप्तिः । दोषान्तरमाह उपलक्षणत्वे चेति । उभयव्यतिरेकस्येति । मध्यमणिन्यायेनान्वेति । साधारणत्वाद्यत्यन्ताभावत्रयस्येत्यर्थः । अन्यत्वप्रतियोगिकोट्यप्रवेशेनेति । अन्यत्वाप्रतियोगित्वेनेति नार्थः, तादृशाभावत्रयस्य विशेषणत्वेऽपि तस्य समानत्वात्, विशेषणस्य विशेष्यान्वय्यन्वयित्वनियमोपगमेन विशिष्टप्रतियोगिकभेदप्रतियोगित्वोपगमे च विशिष्टप्रतियोगिकभेदं विशेषणे आदाय पूर्वमतिव्याप्त्यभिधानस्यासङ्गतिः, अनुभवविरोधश्च, स्वावच्छिन्नप्रतियोगिताकत्वसंसर्गेणैव प्रतियोगिविशेषणस्याभावेऽन्वयानुभवो न तु स्वनिष्ठप्रतियोगिताकत्वसंसर्गेण; अथोक्तलक्षणेऽन्यत्वप्रतियोगितया यदप्रविष्टं तदनात्मकत्वेनेत्यर्थः । 'उपलक्षणत्वे चे' त्यस्य तूपलक्षणत्वेऽपीत्यर्थः, न तु चस्त्वर्थः । एवञ्च विशेषणत्वपक्षे इवोपलक्षणत्वपक्षेऽप्यतिव्याप्तिः, विशिष्टाद्विशेषणस्येवोपलक्षितादुपलक्षणस्यापि भेदादितिचेन्न, साधारणत्वाद्यभावत्रयस्य विपक्षवृत्तितया लक्ष्यत्वात्तत्रातिव्याप्तिदानानौचित्यात् । अथान्यत्वप्रतियोगितानवच्छेदकत्वेनेत्यर्थः, अभावप्रतियोगितावच्छेदककुक्षावुपलक्षणविधया प्रविष्टस्य प्रतियोगितावच्छेदकत्वाभावात्, तथाहि—प्रतियोगिनस्तावन्नोपलक्षणत्वम्, कदाचित्प्रतियोगिविनिर्मुक्तस्याप्यभावत्वेन प्रतीत्यापत्तेः, अपि तु विशेषणत्वमेव, प्रतियोगिविशेषिताभावधीश्च विशिष्टवैशिष्ट्यबोधमर्यादालम्बिनीति प्रतियोग्यंशे विशेषणतया भासमानस्यैव विशेषणतावच्छेदकविधया प्रतियोगितावच्छेदकत्वं न तूपलक्षण-

तद्व्यतिरेकपक्षतापातात् । एवञ्चादृष्टवत्त्वादिना गोत्वादेवम्भूताद्वाणादिविषाणित्वानु-

तया भासमानस्य, अन्यथा विशिष्टस्य प्रतियोगिनोऽभावे वैशिष्ट्यं न स्यात् । तथा चोक्ताभावत्रयस्य प्रतियोगितानवच्छेदकतया प्रातिस्विकरूपेण चोपलक्षितानामज्ञेयतया प्रतियोगीकर्तुमशक्यतयाऽन्यत्व-मात्रमेव लक्षणमवशिष्टं तच्च केवलान्वयीति क्व नामानैकान्तिकत्वस्य न प्रसङ्ग इत्यभिप्रायेणाह तत्सङ्गृहीतव्यतिरेकपक्षतापातादिति । अन्यत्वात्मकोक्तलक्षणेन सङ्गृहीतानां व्यतिरेकाणां = भेदानां धर्मितापातात्, उक्तलक्षणाश्रयत्वापातादिति यावत्, पञ्चम्यन्तमनुपपद्यते, तच्च वस्तुमात्रोपल-क्षणम् । एवञ्च सद्धेतावेव मासाप्रासविवेकन्यायेनातिप्रसङ्गपर्यवसानम् । तथा च तत्रानैकान्तिकत्वेन व्यवहार्यतापि सिद्ध्येत्, अनैकान्तिकेतरभेदश्च, एतदप्युक्तं तत्सङ्गृहीतेत्यादिना, उक्तलक्षणेन लिङ्गवि-धया सङ्गृहीतस्य = स्वाश्रये बोधितस्येतरभेदस्याश्रयत्वापातादित्यर्थः, नचेष्टापत्तिः, बाणवत्त्वादिकं विषाणि गोपदवाच्यत्वात्सम्प्रतिपन्नगोवदित्याभाससमानयोगक्षेमत्वादित्याह एवञ्चेति । बाणादिदर्शने तत्र विषाणित्वाभावग्रहेणैवानुमितिः स्यात्प्रतिबद्धेत्याशयेनादृष्टवत्त्वादिनेति । जनेनेति शेषः । वस्तुगत्या साध्याभाववत्त्वं तु प्रकृतेऽपि समानम् । गोत्वात् = गोपदवाच्यत्वात् । एवम्भूतात् = अन्यत्ववदनेकसङ्ग्राहकात्, औचित्यं = प्रमाणत्वमित्येवं व्याख्यायतामिति चेन्न, विशिष्टवैशिष्ट्य-बोधेत्यत्र विशिष्टस्य वैशिष्ट्यमिति नार्थः, संयोगेन रूपवान् घट इत्यादिप्रमाणामपि विशिष्टवैशिष्ट्यबो-धत्वव्यवहारात्, तत्र च रूपत्वविशिष्टप्रतियोगिकसंयोगात्मकवैशिष्ट्याप्रसिद्धेः, अपि तु विशेषणविशेष-णताच्छेदकोभयसम्बन्धावगाहित्वमर्थः, एवञ्च विशेषणतावच्छेदकस्य विशेषणत्वं न नियम्रितम्, अपि तु स्वाश्रयद्वारा स्वाश्रयान्वयत्वयान्वयित्वम्, एतच्च स्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाभावे प्रतियोगिन्यु-पलक्षणतया भासमानस्याप्यन्वयितायामुपपद्यते । वस्तुतस्त्वविद्यमानस्योपलक्षणस्य मा नामास्तु कथमपि प्रतियोगितावच्छेदकत्वम्, विद्यमानस्योपाधिरूपोपलक्षणस्य तु तत्कुतो न स्यात्, अस्ति हि साधारणत्वाद्यत्यन्ताभावत्रयस्य विद्यमानत्वम्, एवञ्चान्यत्वप्रतियोगितानवच्छेदकत्वेनेत्यर्थः कथं सङ्गच्छते, प्रसिद्धाभासस्थलं विहायैवञ्चादृष्टवत्त्वादिनेत्याद्यभिधानञ्च कथं युज्यत इति । इत्थं तु व्याख्यानं स्यात्—उपलक्षणत्वे चेति । विशेषणत्वे इवोपलक्षणत्वेऽपीत्यर्थः । अन्यत्वप्रतियोगितया यत्प्रविष्टं तदनात्मकत्वेनेति तृतीयान्तार्थः । विशिष्टाद्विशेषणस्येवोपलक्षितादुपलक्षणस्यापि भेदात् । उक्तलक्षणेन सङ्गृहीतस्य = लिङ्गविधया स्वाश्रये बोधितस्येतरभेदस्याश्रयत्वापातादिति पञ्चम्यन्तार्थः । सङ्गृहीतपदस्य यथाश्रुतार्थपरतामादायोक्तलक्षणाश्रयत्वापातादितितात्पर्येण व्याख्याने तु तत्पक्षतापाता-दित्येव वक्तव्यं स्यात् । अतिव्याप्त्यभिधानञ्चेदमापतत एव पूर्ववत् । तद्दीयलक्ष्यतासम्भवादित्य-रुचेस्त्वाह एवञ्चेति । किञ्चैवमित्यर्थः । एवं = अन्यतमत्वघटितलक्षणादरे इत्यर्थः । अदृष्टवत्त्वादिने-त्युक्तफलकम् । एवम्भूतात्—अन्यतमत्वमापन्नात्, तथा च सुरभित्वबाणत्वाद्यन्यतमवत्त्वाल्लिङ्गादित्यर्थः । औचित्यं तूत्पत्तेः । तथा च सुरभित्वाद्वाणादिरत्वाद्देत्येवं प्रतीतस्य लिङ्गस्य यथा नैरूप्यं नवौचित्यमेव-मनुभवानुसारिणामुक्ताभिलापविषयतया सम्मतस्य सुरभित्वाद्यन्यतमवत्त्वादित्यस्यापीति स्वपाऽपि वाच्यम्, अन्यतमत्वस्याखण्डतया अप्रामाणिकत्वात्, शब्दैक्येन च लिङ्गैक्यासम्भवात्, तत्तद्भिन्नभिन्न-त्वेनानुगमाभिधानस्य च्छलमात्रत्वात्, तेन रूपेणापि बहूनां प्रत्येकं वा मिलितानां वा हेतुतेति विकल्पस्य सावकाशत्वात्, धूमत्वादिना हेतुतास्थलेऽपि विकल्प एव सावसर इत्यस्य तु बाधेऽदृष्टेऽन्यसाधारिक-मितिन्यायेन परिहरणीयत्वात् । किञ्च भिन्नत्वं स्वरूपसम्बन्धेन भेदवत्त्वम्, स्वरूपसम्बन्धश्च प्रतिव्य-क्तिविश्रान्त इति तेन भेदवत्त्वमपि तथैवेति नोक्तरूपस्य नुगतत्वशङ्काऽपि । न च सम्बन्धस्य भेदमात्र-

मानौचित्यापातात् । हेत्वाभासान्तरमप्येवं किञ्च समग्राहीति वासनायां यदेवानयोरितरेभ्यो वैधर्म्यं वाच्यं तस्यैव लक्षणस्य निर्वचनापत्तिरिति । असिद्धत्वादिप्रकारादन्येन प्रकारेण हेत्वाभासोऽनैकान्तिक इति चेत्; वाच्यस्तर्हि स प्रकारः, कस्यान्यथा ततस्ततोऽन्यत्वं ज्ञेयम् । किञ्चैवं तर्ह्यसिद्धादन्यदनैकान्तिकमिति कृत्वा विरुद्धादीनामनैकान्तिकत्वेनैव सङ्ग्रहे शक्ये विरुद्धादिवद्रूपान्तरासङ्ग्राह्ययोः साधारणासाधारणयोरेव यदनेन प्रकारेण सङ्ग्रहमकार्षीस्तत्र नियतं रुचिरेव भवतो नियन्त्री । यदा चासिद्धादिव्यतिरिक्ततयाऽनैकान्तिकं लक्षयसि तदाऽसिद्धादिभेदकं प्रकारमनवगम्य तदन्यत्वमशक्यावधारणमिति तदभिधाने प्रसक्ते तदाश्रया दोषा ये दर्शितास्तैः स्मृति-

---

स्वरूपत्वे नायं दोषः, तस्य नानाधिकरणसाधारणत्वादिति वाच्यम्, भेदस्वरूपमात्रस्य सम्बन्धत्वे स्वप्रतियोगिन्यपि स्वरूपसम्बन्धेन भेदापत्तेः । एवं च प्रकृतेऽपीतरभेदादिसाधने लक्षणस्य प्रत्येकं त्रितयपर्यवसायिनो भागासिद्धत्वम्, पक्षतावच्छेदकस्याप्यननुगमे च तदभावेऽपि त्रितयसङ्ग्रहासम्भव एव । केचित्तु—यदि साधारणत्वादिव्यतिरेकद्वयविशिष्टान्यत्वमनैकान्तिकलक्षणं तदा येन पुरुषेण सुरभिभिन्नं गोपदवाच्यं न दृष्टं तस्य गोपदवाच्यत्वेन बाणादेरपि विषाणित्वानुमितिः स्यात्, गोत्वस्याभासत्वेनाग्रहात्, न हि गोत्वं साधारणत्वेन गृहीतम्, बाणादेरदर्शनेन तद्विपक्षत्वस्यानिश्चयात्, नाप्यसाधारणतया, शबलादेः सपक्षादव्यावृत्तेः, न च बाधग्रहादेवायमहेतुः, पक्षस्यादृष्टत्वेन साध्याभाववत्तयाऽप्रमितेः, सपक्षगतत्वावगमाच्च न विरुद्धत्वावगमोऽपीति—व्याचख्युः । तदसुन्दरम्, अनैकान्तिकस्यान्यादृशलक्षणेऽप्येवमाभासत्वाग्रहस्य सम्भवेनान्यतमत्वघटितलक्षणमुपष्टभ्य तदभिधानस्यासौष्ठवादिति । नन्वन्यतमत्वनिरासस्य पुरा बहुशोनिवेदितत्वेनास्तु तदनिर्वाच्यम्, परन्तु बाधाद्यग्रहेऽपि बाणादावुक्तान्यतमत्वलिङ्गेन न विषाणित्वानुमितिरुदेति, मन्दस्यापि तत्राप्रयोजकत्वग्रहोदयात्, साधारणाद्यन्यतमत्वेन त्वितरभेदानुमितिरुत्पद्यत एव, अप्रयोजकत्वग्रहाभावादिति वैषम्यमिति नेत्थं प्रतिबन्दिः शोभतेतरामिति चेन्न, असम्प्रतिपत्तेः, बाधाद्यग्रहेऽप्रयोजकत्वग्रहो यद्यस्ति तर्ह्युभयत्रैव, नो चेन्न क्वापीति । किञ्च यद्यन्यतमत्वघटनैव कार्या, तदा साधारणासाधारणानुपसंहारिविरुद्धाद्यन्यतमत्वमेवानैकान्तिकत्वं किमिति नोच्यते, साधारणादित्रयस्यैवेत्थं सङ्ग्रहे बीजाभावात्, न च संशयजनककोट्युपस्थापकरूपवत्त्वादिकमेव बीजम्, तद्धि विरुद्धादिव्यावृत्तमिति वाच्यम्, तस्य निरसिष्यमाणत्वात्, एवञ्च विभागोऽयं स्वप्रदर्शकानामकौशलमेवावद्योतयतीत्यभिप्रेत्याह हेत्वाभासान्तरमिति । समग्राहि = सङ्गृहीतम् । वासनायां = आकाङ्क्षानिवृत्तये । अनयोः = साधारणादित्रितयस्य । प्रकारेणेति तृतीयार्थोवैशिष्ट्यम् । तथा चासिद्धत्वाद्यन्यदूषकतावच्छेदकरूपवत्त्वमर्थः । ततस्ततः = असिद्धत्वादितः । केचित्प्रकारा निरस्ताः, अपरे च निरसिष्यन्ते इति भावः । तर्हीति । हेत्वाभासत्वे सतीति शेषः । प्रागुपपादितसाक्षाद्दोषत्वमभिप्रेत्यासिद्धस्य प्रतियोगिकोटावन्तर्भावः । पूर्वपक्षे धर्मभेदस्योक्तत्वेऽपि धर्मिभेदस्यात्र कथनं पर्यवसितार्थमादाय । एवं 'यदा चे'त्याद्युपरितनग्रन्थेऽपि । वस्तुतस्त्वसिद्धसङ्कीर्णानैकान्तिकसङ्ग्रहानुरोधेनासिद्धत्वान्यदूषकतावच्छेदकरूपवत्त्वे एव तात्पर्यम् । रूपान्तरासङ्ग्राह्ययोः = प्रकारान्तरेण सङ्ग्रहीतुमशक्ययोः । विरुद्धादिवदिति व्यतिरेकी । साधारणेत्यादि । अनुपसंहारिण अप्युपलक्षणम् । रुचिरेवेति । प्रकारान्तरेण सङ्ग्रहीतुमशक्यत्वं हि न विनिगमकम्, पृथक्पृथगेव दूषकस्य साधारणादेः गणनाया अपि तथैवौचित्यादिति भावः । ननु पारिभाषिक एव विभागइति नेह निर्बन्धइत्याशङ्क्य 'वाच्यस्तर्हि'त्युक्तदोषसत्त्वे एवाह यदेति । दर्शिताइति । असिद्धत्वादेर्निरस्तत्वात् ।

व्यतिरिक्तत्वोक्तदोषैश्च निराकर्तव्योऽसि ।

साध्येनाव्याप्तत्वे सति तदभावाव्याप्तोऽनैकान्तिक इत्यपि न, साध्याविशिष्टेऽपि गतत्वात् । विशेषणीभूतसाध्याव्याप्यत्वावगमाच्च प्राथमिकव्याप्यत्वासिद्धिरेवोपजीव्या दूषणं स्यात् । विशेषणांशस्यैव चासाधकत्वसाधनसामर्थ्याद्व्यर्थविशेष्यतापि । वस्तुगतिव्यापकवन्मात्रपर्यवसायिनि तदभाववन्मात्रपर्यवसायिनि वा तत्कालसन्दिह्यमानान्यतरव्यापकत्वे शब्दोऽनित्यः श्रोत्रविशेषगुणत्वादित्यादावसाधारणे व्यावृत्त-

---

निरसिष्यमाणसत्प्रतिपक्षितत्वादेरप्युपलक्षणमिदम् । स्मृतिव्यतिरिक्तत्वेति । स्मृत्यन्यत्वखण्डनप्रकरणेत्यर्थः । विशेषाभावस्येव सामान्याभावस्याप्युभयाभावादिकमादायातिप्रसक्तत्वादित्यादिकं तत्र द्रष्टव्यम् ।

साध्येनेति । सद्धेतुविरुद्धयोर्वारणाय दलद्वयम् । साध्याविशिष्टे इति । असिद्धविशेषे क्षितिः सकर्तृका सकर्तृकत्वादित्यादौ, न तु व्याप्यत्वासिद्धेऽपि धूमवान् वह्नेरित्यादौ, तस्य लक्ष्यत्वात् । स्वं न स्वात्मानं व्याप्नोतीतिप्रतीतेरभेदे व्याप्यव्यापकभावासम्भवादिति भावः । ननु सत्यन्तस्थाने साध्याभाववदवृत्तित्वं वक्तव्यम्, तच्च स्वसाधारणमिति नोक्तातिव्याप्तिरतो दोषान्तरमाह विशेषणीभूतेति । विशिष्टधीकारणीभूतधीविषयत्वसूचनाय विशेषणीभूतत्वाभिधानम् । साध्याव्याप्यत्वावगमाच्च = साध्याव्याप्यत्वावगमस्यावश्यापेक्षणीयत्वाच्च । प्राथमिकेति । प्रथमोपस्थितिकेत्यर्थः । विशिष्टबुद्धौ विशेषणज्ञानस्याकारणत्वेऽपि विशेष्यतयाऽपि लक्षणे साध्याव्याप्यत्वस्य निवेशसम्भवेन विशेषणत्वानैयत्येऽपि च वलृप्तत्वाद्व्याप्यत्वासिद्धेरेव दूषणत्वमुचितमित्यभिप्रायः । ननु साधारणत्वादेः प्रत्येकमेव दूषकत्वेऽपि त्रितयानुगमकमेवोक्तरूपं ननु दूषकतौपयिकमित्याशङ्क्यासाधकतासाधकस्यैव विभाजकत्वमुचितमिति मत्वाह विशेषणांशस्यैवेति । साध्याव्याप्यत्वस्यैवेत्यर्थः । विरुद्धस्य साधारणासाधारणपार्थक्ये मानाभावेनेतरभेदानुमानेऽपि वैयर्थ्यं द्रष्टव्यम् । नन्वसाधकतासाधकमेव विभाजकमिति नियमोऽप्रयोजकः, विभागस्य पुमिच्छाधीनत्वादन्यथा शास्त्रे परिभाषोच्छेदापत्तेरित्याशङ्क्य व्याप्यविरुद्धयोर्दशाविशेषेऽसाधारणतया प्राचीनैरुक्तयोरव्याप्तिं दोषान्तरमाह वस्तुगतीति । एतेन व्यापकवन्मात्रवृत्तित्वस्य वैज्ञानिकत्वं व्यावर्तितम् । तथाचैवं साध्यव्याप्यत्वं लब्धम् । तदभावेति । व्यापकाभावेत्यर्थः, अत्रापि वस्तुगत्येति वक्तव्यम्, तथाचैतेन साध्याभावव्याप्यत्वमुक्तम् । तत्कालेति । व्यापकत्वं यस्य = यन्निरूपितं तस्मिन्नित्यर्थः । तथा प्रयोगकाले सन्दिह्यमानं साध्यतदभावान्यतरनिष्ठं
च पक्षतादशायां निश्चितसाध्यतदभाववद्व्यावृत्ततया श्रोत्रविशेषगुणत्वं नित्यत्वेऽनित्यत्वे वा साध्येऽसाधारणम्, तार्किकमते चानित्यत्वव्याप्यम्, नित्यत्वसाध्ये च विरुद्धमिति तत्राव्याप्तिः । मीमांसकमतेऽपि शब्दस्य नित्यत्वेऽपि तस्य द्रव्यत्वाच्छ्रोत्रविशेषगुणत्वं न नित्यत्वव्याप्यम् । शब्दोनित्योऽनित्यो वा शब्दत्वादित्याद्युदाहरणस्याप्युपलक्षणमिदम् । असाधारणे व्यावृत्तत्वात् = असाधारणनिष्ठाभावप्रतियोगित्वात् । ननु साध्यव्याप्यत्वेनानिश्चीयमानत्वे सति साध्याभावव्याप्यत्वेनानिश्चीयमानत्वं वक्तव्यम्, तथा च वस्तुगत्या साध्यतदभावान्यतरव्याप्येऽसाधारण्यदशायां तथात्वेनानिश्चीयमानत्वसत्त्वान्नाव्याप्तिः, नचैवं साधारणे साध्यतदभावान्यतरव्याप्यत्वभ्रमदशायामव्याप्तिः, नित्यदोषतायाः साधारण्ये सर्वसम्मतत्वादिष्टापत्त्यनवकाशादिति वाच्यम्, निश्चयस्थले प्रमाया विलक्षणीयत्वादित्यस्वरसादाह वस्तुत इति

त्वाच्च। वस्तुतः साध्यव्याप्ते तत्कालेऽपि च सत्प्रतिपक्षतयाऽनिर्द्धारितसाध्यव्याप्तिके प्रकरणसमे गतत्वाच्च । एतेनानैकान्तिकः सव्यभिचार इति प्रत्युक्तं वेदितव्यम्; सव्यभिचारस्योक्तप्रकाराधिकस्य निर्वक्तुमशक्यत्वादिति। इति व्यभिचारखण्डनम्।

---

साध्यव्याप्ते इति। एतेन यथाश्रुते तत्रातिव्याप्तिविरहः सूचितः। तत्काले = प्रयोगकाले । अपीति तु सम्पातायातम्, साध्यव्याप्तेऽपीति व्युत्क्रमेणान्वयेऽपि चकारासङ्गतिः, इदानीं तु चकारस्त्वर्थे । यथास्थानस्थितयोस्तु तयोः समुच्चयपरता तदैव युज्येत यदि कालान्तरेऽनिर्द्धारितसाध्यव्याप्तिकत्वं पूर्वमुक्तं भवेत्, नत्वेवम्। 'वस्तुतः साध्याव्याप्ते' इति नञ्घटितपाठे तु यथाश्रुतलक्षणे एवातिव्याप्तिर्निरूप्येत, परन्तु साध्याव्याप्यस्य लक्ष्यतया सा न युज्यते। न च—साध्यव्याप्यस्याप्यसाधारणतया लक्ष्यत्वसम्भवः, सत्प्रतिपक्षतादशायां पक्षताया विघटनाभावात्—इति वाच्यम्, शब्दोऽनित्यः कृतकत्वादित्यादावसाधारण्यासम्भवात्। न च कृतकत्वेऽनित्यत्वव्याप्तेः स्फुटतयाऽनिर्द्धारितत्वासम्भवः; दशाविशेषे तत्सम्भवात्, घटशब्दान्यतरत्वादावेव वाऽतिव्याप्तेर्वक्तव्यत्वात्। एवं 'अनिर्द्धारितसाध्यव्याप्तिके' इत्यभिधानमपि नोक्तपाठे सफलं स्यात्। सत्प्रतिपक्षतया = अगृहीताप्रामाण्यकविरोधिपरामर्शकालीनतया। अनिर्द्धारितेति। तथा चाप्रमीयमाणत्वं सुतरामिति भावः। न च परामर्शस्य निश्चयात्मकत्वेन सद्धेतुविषयकस्य च तस्य व्याप्यंशे प्रमात्वस्याप्यावश्यकत्वेनेदमसङ्गतम्, नहि परामर्शद्वयसम्वलनं विना सत्प्रतिपक्षतेति वाच्यम्, विरोधिपरामर्शद्वयानन्तरं विरुद्धार्थग्राहकत्वेनान्यतरत्वेनोभयत्र व्याप्त्यादिविरहप्रतीतौ व्याप्त्यादिनिश्चयानुत्पत्त्या तादृशप्रतीत्यनन्तरमेवाप्रमीयमाणव्याप्तिकत्वमादाय दोषस्य दिदिसितत्वात्। एवञ्च पूर्वं परामर्शद्वयसम्वलनाभावस्थलेऽपि सद्धेतौ विरुद्धे च साध्यतदभावव्याप्यत्वेनाप्रमीयमाणत्वदशायामतिव्याप्तेरुपलक्षणमिदम्। न च कस्यचित्तथाप्रमीयमाणत्वं तदाऽप्यस्तीति वाच्यम्, एवं सति सद्धेतुविरुद्धयोर्दशाविशेषेऽसाधारणयोरसङ्ग्रहतादवस्थ्यात्। 'अनैकान्तिकः सव्यभिचार' इति लक्षणनिरसनमुपक्रान्तमुपसंहरति एतेनेति। निर्वक्तुमशक्यत्वादिति। अत्राहुः—

साध्यतदभावव्याप्यत्वग्रहविरोधिरूपवत्त्वं विवक्षितम्, तेन व्याप्यविरुद्धयोर्दशाविशेषेऽसाधारण्यवतो र्नाव्याप्तिः, गगनादिगतेऽवृत्तित्वेऽसिद्ध्यात्मकेऽतिव्याप्तिवारणाय तु वृत्तिमत्त्वग्रहाविरोधित्वमपि तादृशरूपे निवेश्यम्। अथ साध्याभाववद्वृत्तित्वरूपसाधारण्यस्य साध्यासामानाधिकरण्यरूपासाधारण्यस्य च साध्यव्याप्यत्वग्रहविरोधित्वेऽपि साध्याभावव्याप्तिग्रहविरोधित्वाभावेन कथं सङ्ग्रहः, न च—साध्यतदभाववद्वृत्तित्वं साधारण्यम्, तच्च साध्यवद्वृत्तित्वांशमादाय साध्याभावव्याप्तिग्रहविरोधि, एवं निश्चितसाध्यतदभाववद्व्यावृत्तत्वमसाधारण्यम्, तच्च साध्याभाववद्व्यावृत्तत्वांशमादाय साध्याभावसामानाधिकरण्यघटितसाध्याभावव्याप्तिग्रहविरोधीति—वाच्यम्; साध्यवद्वृत्तित्वांशस्य दूषकतानौपयिकतया साध्याभाववद्वृत्तित्वस्यैव साधारण्यत्वात्, निश्चितत्वनिवेशस्यासाधारण्यग्रहस्याप्रतिबन्धकत्वप्रसञ्जकत्वाच्च, साध्यवद्व्यावृत्तत्वस्यैव दूषकतौपयिकत्वेन साध्याभाववद्व्यावृत्तत्वघटनाया अप्यनौचित्याच्चेति चेन्न, एवं सति साध्यव्याप्तिग्रहविरोधिरूपवत्त्वस्यैव विवक्षणीयत्वात्, एतेन—विरोधावृत्तित्वयोर्व्यभिचारपदार्थबहिष्करणस्याप्रामाणिकत्वेन तद्वारकविशेषणवैयर्थ्यमित्यपि—नाशङ्कनीयम्, यद्यपि साध्यसाधनयोरप्रसिद्धेरपि व्याप्तिग्रहविरोधित्वम्, तथापि साध्यतावच्छेदकरूपेण साध्यस्य साधनतावच्छेदकरूपेण च साधनस्य ग्रहं प्रत्यविरोधित्वमपि वक्तव्यम्। न चैवमिदं द्रव्यं द्रव्यत्वाव्यभिचारिसत्त्वादित्यादौ व्यभिचारस्य साधनतावच्छेदकरूपेण साधनग्रहविरोधिनोऽसङ्ग्रह

इति वाच्यम्, अगत्या तस्यासिद्धावेवान्तर्भावनीयत्वात्। व्याप्यत्वासिद्धिस्तु व्यभिचार एवेति तत्र नाति-
व्याप्तिः। न चात्यन्ताभावघटितव्याप्तिग्रहविवक्षायामन्योन्याभावघटितव्यभिचाराव्याप्तिरिति वाच्यम्,
नानाविधव्याप्तिविषयकस्य समूलालम्बनस्य निवेशनीयत्वात्। न च तथापि साध्यव्यापकीभूताभावप्रति-
योगित्वरूपासाधारण्येऽव्याप्तिः, तस्य साध्याभावव्यतिरेकव्याप्तिरूपतया पक्षधर्मताज्ञानदशायां तद्ग्रह-
स्यानुमितिं प्रत्येव विरोधित्वेन व्याप्तिग्रहाप्रतिबन्धकत्वादिति वाच्यम्, एतल्लक्षणवादिमते तादृशप्रति-
योगित्वस्यासाधारण्यात्मकताया अनभ्युपगमनीयत्वादिति। तदेतन्निरस्तप्रायम्। प्रतिबध्यप्रतिबन्ध-
कभावमात्रस्य स्वप्ने व्यभिचारस्य निवेदितत्वेनोक्तलक्षणस्यासम्भवदुष्टिकत्वात्, तादृशग्रहत्वावच्छिन्न-
प्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकत्वेन साधारणत्वादेरनुगमेऽपि
तेनापि रूपेण प्रत्येकमिलितविकल्पप्रसरस्यावश्यकत्वाच्च, उक्तनिरूपकतावच्छेदकतायाः स्वरूपसम्बन्धा-
त्मिकाया अवच्छेदकभेदभिन्नत्वेनोक्तरूपस्याप्यननुगमाच्च, अवच्छेदकतात्वस्यापि स्वरूपसम्बन्धविशेषत्वे
तेनाप्यवच्छेदकतानामनुगमासम्भवाच्च, अखण्डोपाधित्वे तु स्फुटमनिर्वाच्यवादनगरप्रवेशाच्च, सामा-
न्याभावस्य निरस्तत्वेनोभयाभावादिकमादाय साधारण्यादिविषयतानामपि प्रतिबन्धकतातिरिक्तवृत्तित्वा-
च्चेति। धूमान्यधूमवान् वह्नेः, नित्यान्यनित्यः शब्दत्वात्, धूमवान् धूमव्यभिचारिवह्नेरित्यादौ
व्याप्तिग्रहस्याहार्यत्वेनाप्रतिबध्यतया तन्निबन्धनदूषणानि विशिष्टान्तराघटितत्वादेरपीह निवेशनीयत्वेन
तन्निबन्धनदूषणानि च हेत्वाभाससामान्यलक्षणखण्डनोक्तरीत्या द्रष्टव्यानि।

यत्तु—यद्धर्मिवृत्तित्वं हेतोर्ज्ञायते तत्र तत्रैवानुमितिविरोधि यद्रूपं तद्वत्वं
सव्यभिचारत्वम्, एवञ्च साध्यव्यापकीभूताभावप्रतियोगित्वरूपासाधारण्यत्वमतेऽपि नाव्याप्तिः,
तद्धर्मिकहेतुमत्ताज्ञानकालीनस्योक्तासाधारण्यग्रहस्य तद्धर्मिकानुमितिप्रतिबन्धकत्वात्, अनुमितिस्तु
साध्यव्याप्यो हेतुः साध्यवांश्च पक्ष इति ग्राह्या, एवञ्च व्याप्तिग्रहविरोधिनः साधा-
रण्यस्य साध्यासामानाधिकरण्यरूपासाधारण्यस्य च सङ्ग्रहः, स्वरूपासिद्धौ च न प्रसङ्गः,
हेतुवैशिष्ट्यावगाह्यनुमितेरनिवेशात्। पर्वतादिवृत्तित्वस्य धूमादौ ज्ञानेऽपि ह्रदो वह्निमा-
नित्यादिस्थलीयबाधादेः पर्वतादिधर्मिकानुमितिप्रतिबन्धकत्वाभावेन न तत्रातिव्याप्तिः, एवञ्च
सधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनयादृशविशिष्टविषयकनिश्चयसामान्यं स्वसमानकालीनहेतु-
मत्तानिश्चयसमानधर्मितावच्छेदककानुमितिसामान्यप्रतिबन्धकं तादृशधर्मवत्त्वमर्थः, साध्यसाधनाप्रसि-
द्ध्यादावतिव्याप्तिवारणाय तु साध्यतावच्छेदकरूपेण साध्यस्य हेतुतावच्छेदकरूपेण हेतोश्च सामानाधि-
धिकरण्यग्रहाविरोधित्वमपि यादृशविशिष्टे निवेशनीयम्, एवञ्च सर्वमाकाशवत्प्रमेयत्वादित्यादिस्थलीयबाध-
सत्प्रतिपक्षयोर्निश्चयस्योक्तानुमितिसामान्यप्रतिबन्धकत्वेऽपि साध्यत्वघटितसाध्यसामानाधिकरण्यग्रहं
प्रत्यपि प्रतिबन्धकत्वान्न तयोरतिव्याप्तिः, अधिकमन्यत्रानुसन्धेयमिति। तदप्युक्तसकलदोषभाजनतये-
वानुपादेयम्, निश्चयेऽनाहार्याप्रामाण्यज्ञानानास्कन्दितत्वस्यासम्भववारणायावश्यनिवेश्यत्वेन तन्निबन्ध-
नदोषा अपि प्रागुक्ता इहानुसन्धेयाः। किञ्चोदासीनपदार्थविषयकनिश्चयस्यापि दोषविषयकनिश्चया-
त्मनोऽनुमितिप्रतिबन्धकतयोदासीनेऽतिव्याप्तेर्वारणाय सामान्यपदोपादानम्, परन्तु स्वत्वस्याननुगतत्वेन
स्वसमानकालीनेत्यत्र स्वपदेन निश्चयविशेषस्यैवोपादेयत्वेनातिव्याप्तितादवस्थ्यमेव। न च—स्वना-
दात्म्य, सधर्मितावच्छेदककहेतुमत्तानिश्चयकालीनत्वावच्छिन्नविषयकनिश्चयत्वव्यापकत्वाभ्यां धर्मविशि-
ष्टधर्मवत्त्वं वक्तव्यम्, व्यापकता च वृत्तितासम्बन्धेन, वृत्तिता च स्वसमानकालीनहेतुमत्तानिश्चयधर्मिता-
वच्छेदकावच्छिन्नधर्मिताकप्रकृतसाध्यविधेयताकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छे-
दकविषयितानिरूपकतावच्छेदकत्वसम्बन्धावच्छिन्ना, अत्र स्वमुक्तत्वावच्छिन्नविषयकनिश्चय इति न

स्वत्वाननुगमनिबन्धनो दोष इति–वाच्यम्, परम्पराणां संसर्गताया अप्रामाणिकत्वात्। यत्तु साधारण्यादिविशिष्टधर्मवत्ताज्ञानस्य संशायकतामते धर्मितावच्छेदकविशिष्टे धर्मिणि यद्रूपविशिष्टज्ञानं साध्यसन्देहजनकं तद्रूपवत्त्वं सव्यभिचारत्वम्, फलीभूतसंशयधर्मितावच्छेदकतापर्याप्त्यधिकरणधर्मश्च धर्मितावच्छेदकतयोपादेयः, अन्यथा धूमवान् पर्वतो वह्निमान्नवेति संशयं प्रति धर्मितावच्छेदकप्रकारकज्ञानमुद्रया पर्वतत्वाद्यवच्छिन्नविशेष्यकधूमत्वादिविशिष्टवत्ताज्ञानस्य जनकतया यद्रूपपदेन धूमत्वादिमत्त्वमादायातिप्रसङ्गात्। एवञ्च तद्धर्मपर्याप्तधर्मितावच्छेदकताकयत्किञ्चित्सन्देहनिरूपितायां जनकतायामवच्छेदकीभूता या या तद्धर्मनिष्ठधर्मितावच्छेदकतानिरूपितप्रकारता तन्निरूपितावच्छेदकतापर्याप्त्यधिकरणधर्मवत्त्वं पर्यवसन्नम्। तादृशप्रकारता हि साध्यतदभाववद्वृत्तित्वविशिष्टहेतुमान् पक्ष इत्यादिज्ञानीया हेतुनिष्ठा। यत्किञ्चित्संशयनिवेशात्साधारण्यविशिष्टहेतुमत्ताज्ञानजन्यसंशयमादाय साधारणेऽसाधारण्यविशिष्टहेतुमत्ताज्ञानजन्यसंशयमादाय चासाधारणे लक्षणसमन्वयः। अनुपसंहारिण्यपि वस्तुगत्या साध्यतदभाववद्वृत्तित्वमक्षतमेवेति नाव्याप्तिरिति; तदप्यचारु। पर्वतत्ववृत्तित्वविशिष्टावच्छेदकतायाः पर्वतत्वे एव पर्याप्तत्वेन तद्धर्मितावच्छेदकतानिरूपकोक्तसंशयजनकतावच्छेदकशुद्धधूमनिष्ठप्रकारतावच्छेदकतापर्याप्त्यधिकरणधूमत्ववत्तामादायातिव्याप्तितादवस्थ्यात्। अधिकं चात्र स्मृत्यन्यत्वखण्डने निवेदितम्। किञ्चेदं शब्दानुगममात्रम्, नत्वर्थतोऽपि साधारणादित्रयसङ्ग्राहकम्, यत्किञ्चित्संशयस्यैव निविष्टत्वात्, अन्यथा तादृशधर्माणां नानात्वेन प्रत्येकमिलितविकल्पानुपपत्तेरिहापि निर्दिष्टदिशा जागरूकत्वात्। किञ्च साध्यतदभावसमानाधिकरणाभावप्रतियोगित्वरूपमसाधारण्यं साध्यसन्देहप्रयोजकम्, तच्च धूमादिसद्धेतावपि वर्तते, तदभावस्यायोगोलकाद्यवच्छेदेन वह्निसमानाधिकरणस्य ह्रदाद्यवच्छेदेन वह्न्यभावसमानाधिकरणत्वादित्यतिव्याप्तिः। अन्यादृशञ्चासाधारण्यं न साध्यसन्देहप्रयोजकम्, न च निश्चितसाध्यतदभाववद्वृत्तित्वाभावरूपं तत्तथा, तथासति निश्चितसाध्यतदभाववद्वृत्तित्वस्यापि साध्यसन्देहप्रयोजकत्वस्य प्रसक्तया सद्धेतुमति कदाचित्साध्याभावनिश्चयस्य भ्रमात्मकस्य सम्भवेनातिव्याप्तेः, वस्तुगत्या साध्याभावादिमत्त्वस्य हि संशयप्रयोजकरूपघटकत्वमप्रामाणिकमित्यपि प्राहुः। अथ मास्तु त्रितयानुगमो विभागेऽनादरेण पञ्चाधिक्येऽपि क्षत्यभावादिति चेन्न, साधारणत्वादेः प्रत्येकमपि दुर्वचत्वात्, तथाहि—साध्यात्यन्ताभाववद्वृत्तित्वसाध्यवदन्यवृत्तित्वादेः परस्परासङ्ग्राहकत्वेनानाहार्याप्रामाण्यज्ञानानास्कन्दितनिश्चयवृत्तित्वविशिष्टं यादृशविशिष्टविषयकत्वं प्रकृतहेतुधर्मिकप्रकृतसाध्याभाववद्वृत्तित्वग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्ति तद्वत्त्वं साधारण्यं वक्तव्यम्, साध्याप्रसिद्धावतिव्याप्तिवारणाय तु साध्यतावच्छेदकविषयतानिरूपितसाध्यविषयताकग्रहाविरोधित्वमपि निश्चये निवेशनीयम्। एवं साध्ये साधनासामानाधिकरण्यस्य साधने साध्यासामानाधिकरण्यस्य च परस्पराव्यापकत्वेन तादृशनिश्चयवृत्तित्वविशिष्टं यादृशविशिष्टविषयकत्वं प्रकृतसाध्यसाधनोभयसामानाधिकरण्यग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्ति तद्वत्त्वमसाधारण्यम्, अत्र च निश्चये साधनतावच्छेदकप्रकारकसाधनग्रहाविरोधित्वमपि विशेषणीयम्। एवमनुपसंहारित्वमपि तादृशनिश्चयवृत्तित्वविशिष्टं यादृशविशिष्टविषयकत्वं व्यतिरेकव्याप्तिग्रहत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानतिरिक्तवृत्ति तद्वत्त्वं वाच्यम्, तादृशविशिष्टञ्च साध्येऽत्यन्ताभावाप्रतियोगित्वं साधनेऽत्यन्ताभावाप्रतियोगित्वं साधनाभावे साध्याभावाव्यापकत्वञ्चेति; तदेतत्सर्वमपि लक्षणजातं व्याप्तिग्रहत्वावच्छिन्नप्रतिबध्यताघटितलक्षणेऽनुपदोदितदोषजालानुल्लङ्घ्यैवेति शिवम्। इति खण्डनशारदायां व्यभिचारखण्डनम्।

## सत्प्रतिपक्षखण्डनम् ।

अपि चोक्तलक्षणविशेषणेन प्रमाणव्यवच्छेदकादन्येन किं व्यवच्छेद्यम् ? केनचित्सत्प्रतिपक्षः केनचिदन्य इति चेत्, कः पुनः सत्प्रतिपक्षः ? तथाहि—सत्प्रतिपक्षलक्षणमनुयुक्तो यदाह.—समानबलेन बोधितसाध्यविपर्ययको हेतुत्वेनाभिमतः सत्प्रतिपक्ष इति, तन्न, तथाहि–किमिह बलं विवक्षितम् ? सामर्थ्यमिति चेत्, तत्कुत्र कार्येऽभिमतम् ? न तावत्सर्वस्मिन्कार्ये, सत्प्रतिपक्षहेत्वोर्भिन्नविषयबुद्ध्यादिजनकतया सर्वकार्ये समशक्तिताया असम्भवात् । नापि यत्र क्वचित्कार्ये, प्रकृतं साध्यं प्रति प्रतीयमानासिद्धत्वादिदोषेणापि प्रमेयत्वप्रतिपादनादौ समर्थेन प्रतिहेतुना सत्प्रतिपक्षताप्रसक्त्या सर्वहेतूनां

---

अपिचेत्याद्युक्ताभिप्रायकम् । उक्तलक्षणेत्यस्य बहुवचनान्ततायां समासो द्रष्टव्यः, अन्यथा साध्याव्याप्यत्वे सतीत्यादिसमनन्तरोक्तलक्षणे विशेष्यदलेन विरुद्धस्यैव व्यवच्छेद्यत्वेन 'केनचित्सत्प्रतिपक्ष' इत्यस्यासङ्गतेः, विरुद्धस्यापि क्वचित्सत्प्रतिपक्षत्वेऽपि 'केनचिदन्य' इत्यस्यासङ्गतिरेव । सत्प्रतिपक्षभेदघटितलक्षणं तु निरस्तलक्षणान्तर्गतमेवेत्यदोषः । एकवचनान्ततायां समासेऽपि समनन्तरोक्तलक्षणं विहायोक्तलक्षणपदेन सत्प्रतिपक्षभेदघटितलक्षणपरामर्शो न सन्दर्भसाङ्गत्यमातनोति । प्रमाणपदं सद्धेतुपरम्, यद्यपि सद्धेतुरपि क्वचित्सत्प्रतिपक्षितत्वेन व्यवह्रियते, बाधित एव सत्प्रतिपक्षित इति हि न प्राचीनैरुररीकृतम्, न वा सत्प्रतिपक्षत्वव्यवहारप्रयोजकं विरोधिपरामर्शसम्वलनं बाधिते एव, तादृशव्यवहारप्रयोजकमेव च लक्षणमिह मूले निराकरणीयम् । तथापि सद्धेतोः सद्धेतुत्वेनैव व्यवच्छेद्यतेत्यदोषः । समानेत्यादि । स्वसमानबलहेत्वन्तराधीनबोधविषयसाध्याभावकहेतुत्वं सत्प्रतिपक्षत्वमिति नार्थः, सत्प्रतिपक्षितहेतुना बोधाजननात्, अतएव 'स्वसाध्यसाधकत्वापत्ते'रित्यग्रिमग्रन्थसङ्गतिः, यदि तु स्वीयसाध्यत्वेनाभिमतप्रतियोगिकाभावानुमितिजननयोग्यस्वसमानबलहेत्वन्तरकत्वम्, तदा हेत्वन्तरे विवक्षणीयबलस्य योग्यान्तेनैव लाभसम्भवेन समानबलत्वाभिधानमकिञ्चित्करम्, स्वपदेनानेयहेतौ विवक्षितुमुचितायाः प्रकृतसाध्यानुमितिजननयोग्यताया हेत्वन्तरेऽभावेन तया समानबलत्वासम्भवात् । यदि तु प्रकृतसाध्यव्याप्यतया परामृश्यमानत्वे सति प्रकृतसाध्याभावव्याप्यतया परामृश्यमानस्वसमानबलहेत्वन्तरकत्वमर्थः, तदाह तथाहीत्यादि । अत्रेदमवधेयम्—उक्तार्थेऽपि स्वसमानबलत्वनिवेशः किमर्थः, विरोधिपरामर्शद्वयेनैव चारितार्थ्यात् । तत्राऽगृहीताप्रामाण्यकत्वलाभार्थं यदि, अप्रामाण्यग्रहे सत्प्रतिपक्षाभावात्, हेत्वोश्च समानबलतायाः परामर्शद्वारकत्वात्, तदा लाघवाद्विरोधिपरामर्शे साक्षादेवाऽगृहीताप्रामाण्यकत्वनिवेशः समुचितः, तादृशहेत्वन्तरकत्वमित्यत्र बहुव्रीह्यर्थस्यापि परामर्शद्वयघटितस्यैव वक्तव्यत्वेन च निष्फलं गौरवं न सोढुमुचितम्, एवञ्चाऽगृहीताप्रामाण्यकविरोधिपरामर्शकालीनपरामर्शविषयत्वे एव पर्यवसानम्, तच्चाग्रे निराकरिष्यते इति । इदं पुनरिहावधेयम्—विरोधिपरामर्शद्वयसम्वलनस्थले संशयरूपानुमितिस्वीकर्तृनये 'बोधिते'ति यथाश्रुतमेव सम्यक्, स्वसाध्यसाधकत्वापत्ते'रित्यस्य तु स्वसाध्यनिश्चायकत्वापत्तेरित्यर्थकताया सम्भवेन न तद्विरोधः, अत्र चाधिकं हेत्वाभासपाञ्चविध्योपपादनवेलायामुदीरितमिति । सामर्थ्यं = मीमांसकसम्मतः शक्तिविशेषः, तार्किकसाधारणी योग्यता वा । सत्प्रतिपक्षेति । सत्प्रतिपक्षितेत्यर्थः । सन् विद्यमानः प्रतिपक्षो यस्येति व्युत्पत्तेः । जनकतया = जननयोग्यतया । सर्वकार्ये इति । स्वकीये स्वकीयेऽपीत्यादिः । प्रकृतमित्यादि । प्रकृतसाध्यस्य तदभावस्य वा साधनेऽसिद्धत्वादिना दुष्टतया निश्चितेनापीत्यर्थः । समबलत्वेन प्रतिसंहितयोरेव प्रतिरुद्धानुमितिकतया सत्प्रतिपक्षितत्वव्यवहारेणान्यतरस्यासिद्ध्यादिनिश्चये च तथाप्रतिसन्धानाभावेन सत्प्रतिपक्षताप्रसङ्गे इष्टापत्तिं परिहर्तुमिदमुक्तम् । समर्थेनेति ।

शक्यप्रकरणसमहेत्वाभासत्वापत्तेः। नापि पूर्वहेतुसाध्याभावबोधनरूपे कार्ये, उत्तरहेतोरेवमसत्प्रतिपक्षत्वे स्वसाध्यसाधकत्वापत्तेः। प्रतिहेतोरिति चेन्न, तत्र तत्प्रतिहेतोरसामर्थ्यादेव समशक्तिकत्वानुपपत्तेः। इत्थमेव न हेतुसाध्यस्य विपर्ययबोधनेऽपि। अथो-

---

प्रमेयत्वादेः केवलान्वयित्वेन तत्साधने कस्यापि व्यभिचारित्वाद्यभावात्, क्वचित्स्वरूपासिद्धस्याप्यन्यत्र तदनुमापनसमर्थत्वात्। एतच्च स्थापनाहेतावपीति समशक्तिकत्वं न व्याहतम्। शक्येत्यादि। विरोधिपरामर्शविषये हेतौ दोषविशेषस्य विशिष्य निश्चयदशायामपि प्रतिरुद्धानुमितिकत्वापत्तेरित्यर्थः। पूर्वेत्यादि। पूर्वप्रयुक्तहेतो यत्साध्यत्वेनाभिमतं तदभावबोधनसमर्थपरामर्शविषयहेत्वन्तरकत्वं विशेष्यदलार्थः, समानत्वं हि नेदानीं शक्यविवक्षम्। सिद्धिविषयत्वरूपस्य वा व्यापकतापर्यवसन्नस्य तद्योग्यत्वरूपस्य वा साध्यत्वस्य केवलान्वयितयाऽव्यावर्तकत्वेन पूर्वप्रयुक्तहेतोरित्युक्तम्। उत्तरहेतोरिति। असत्प्रतिपक्षत्वे = असत्प्रतिपक्षितत्वे उक्तहेत्वन्तरकत्वं हि पूर्वप्रयुक्तहेतावेव सम्भवति, तादृशसामर्थ्यवता तादृशसामर्थ्यविरहिण एव सत्प्रतिपक्षितत्वात्। यदि तु लाघवादौचित्याच्च स्वसमवायिसमवेतत्वस्वसमानकालिकत्वाभ्यां तादृशपरामर्शविशिष्टो यः पूर्वप्रयुक्तहेतोः साध्यत्वेनाभिमतस्य सिद्धिसमर्थपरामर्शस्तद्विषयत्वं विवक्ष्यते, तदाप्युत्तरहेतोरसत्प्रतिपक्षितत्वापत्तिः स्फुटैव। पत्तेरिति। उत्तरहेतोः सत्प्रतिपक्षितत्वव्यवहारानुपपत्तेरिति तु परमार्थः। प्रतिहेतोरिति। प्रतिहेतोर्यत्साध्यत्वेनाभिमतं तदभावबोधनसमर्थपरामर्शविशिष्टोक्तसाध्यबोधनसमर्थपरामर्शविषयत्वं वक्तव्यम्, एवञ्च द्वयोरपि परस्परं प्रतिहेतुत्वेन नोक्तदोष इति भावः। तत्र = एकहेतोः साध्यत्वेनाभिमतविषयकबोधे। तत्प्रतिहेतोः = उक्तसाध्याभावसाधकतयोपन्यस्तहेतोः। समशक्तिकत्वेति। परस्परानुमितिप्रतिबन्धौपयिकरूपवत्त्वेत्यर्थः। प्रतिहेतुर्हि स्थापनाहेतुर्वा खण्डनाहेतुर्वा विशिष्यैवोपादेयो न तु प्रतिहेतुत्वेन, तस्य प्रकृतसाध्यनिरूपितव्याप्त्यादिघटितत्वेन तच्छून्यस्य सत्प्रतिपक्षत्वानुपपत्तेः, हेतुविधयोपन्यस्तयोरेव सत्प्रतिपक्षितत्वव्यवहारानुरोधेन प्रातीतिकहेतुत्वस्य विवक्षणीयत्वे तु विरोधिपरामर्शद्वयघटितलक्षणे एव पर्यवसानाच्च, प्रतिपक्षबोध्यप्रतिद्वन्द्वितायाः परस्परनिरूपिताया एव वक्तव्यत्वेन व्यक्तिविशेषविश्रान्तेरावश्यकत्वाच्च, नहि परस्परत्वं किञ्चिदनुगतमित्यवोचाम। एवञ्च हेतुद्वये सत्प्रतिपक्षितत्वव्यवहारानुपपत्तिरेव। इत्थमेवेति। उक्तानुपपत्तेरेवेत्यर्थः। हेतोरेव हि साध्यत्वेनाभिमतं स्यादिति सामान्यतो हेतुत्वमव्यावर्तकम्, अन्यथा त्वननुगम इति न हेतुद्वयसङ्ग्रहसम्भव इति भावः। हेतुसाध्यस्य = हेतोर्यत्साध्यत्वेनाभिमतं तस्य। बोधनेऽपीति। सामर्थ्यमित्यनुपज्यते। एतेन—प्रकृतसाध्याभावबोधनसमर्थपरामर्शविशिष्टप्रकृतसाध्यबोधनसमर्थपरामर्शविषयत्वं सत्प्रतिपक्षत्वम्, न च समूहालम्बनपरामर्शविषयत्वमादायोदासीनेऽतिप्रसङ्गः; प्रकृतानुमितिजनकतावच्छेदकविषयताया एव विवक्षणीयत्वात्, न च—विरोधिपरामर्शस्याप्रामाण्यग्रहे तस्यानुमित्यप्रतिरोधकतया तद्विशिष्टपरामर्शविषयत्वमादायातिव्याप्तिः, तदानीमपि विरोधिपरामर्शस्य प्रकृतसाध्याभावबोधनसामर्थ्यं स्वक्षतमेव, विरोधिव्याप्त्यादिविषयत्वेनैव तथात्वात्, अगृहीताप्रामाण्यकत्वविशिष्टतादृशविषयत्वघटितरूपेण हि न तथात्वम्, विशेष्यविशेषणभावे कामचारेण गुरुतरकार्यकारणभावद्वयप्रसङ्गात्, एवञ्चाप्रामाण्यग्रहाभावस्य स्वातन्त्र्येणैवानुमितिहेतुत्वमिति—वाच्यम्, प्रकृतसाध्यसिद्धिसमर्थपरामर्शे प्रतिरुद्धकार्यकत्वस्यापि विशेषणीयत्वात्, तच्च स्वजन्यानुमित्यभावविशिष्टत्वरूपं नोक्तस्थले सम्भवति, अनुमितेरुत्पन्नत्वात्। न च तथापि प्रकृतसाध्यसिद्धिसमर्थपरामर्शस्य प्रकृतसाध्याभावसाध्यकपरामर्शविरोधितयोक्तस्थले प्रकृतसाध्याभावसाधकहेतोः सत्प्रतिपक्षितत्वापत्तिः; प्रकृतसाध्याभावबोधनसमर्थपरामर्शेऽपि स्वजन्या-

च्यते—स्वकीये स्वकीये प्रकृतसाध्ये यत्सामर्थ्यं पक्षसपक्षसत्त्वविपक्षव्यावृत्तत्वाबाधितविषयत्वलक्षणं तत्सत्प्रतिपक्षहेत्वोस्तुल्यम्, तदभिप्रायेणेदं समबलत्वाभिधानम्, तेनेदमुक्तं भवति—पक्षसपक्षसत्त्वविपक्षव्यावृत्तत्वाबाधितविषयत्वैस्तुल्येन बोधितसाध्य-

---

नुमित्यभावविशिष्टत्वस्य वक्तव्यत्वात्, नचैवमपि प्रकृतहेतुपरामर्शस्य गृहीताप्रामाण्यकत्वदशायां प्रतिहेतुपरामर्शस्य चागृहीताप्रामाण्यकत्वदशायां सिद्ध्यादिप्रतिबन्धकवशाद्विरोध्यनुमित्यनुत्पाददशायामतिप्रसङ्ग इति वाच्यम्, उक्ताभावविशिष्टत्वस्य विरोधिपरामर्शे प्रकृतहेतुपरामर्शप्रयुक्तस्यैव विवक्षणीयत्वात्, गृहीताप्रामाण्यकस्तु प्रकृतहेतुपरामर्शो न प्रतिहेतुकार्यप्रतिरोधकः, यद्यपि व्याप्त्याद्यंशे गृहीताप्रामाण्यकस्यापि सिद्ध्यात्मनः प्रकृतहेतुपरामर्शस्य प्रतिहेतुकार्यप्रतिरोधप्रयोजकत्वमक्षतमेव, तथापि विवक्षणीयं व्याप्त्यादिविषयकत्वेन प्रयोजकत्वं तच्च नास्तीति—निरस्तम्। प्रकृतसाध्यपदेन वह्नेरुपादाने धूमे एव सत्प्रतिपक्षितत्वव्यवहारः स्यान्नतु वह्न्यभावबोधनसमर्थपरामर्शविषये पाषाणमयत्वादौ, वह्न्यभावस्योपादाने तु पाषाणमयत्वादौ स स्यान्नतु धूमे। न च प्रकृतसाध्यबोधनसमर्थपरामर्शविषयप्रकृतसाध्याभावबोधनसमर्थपरामर्शविषयत्वमपि वक्तव्यम्, अन्यतरत्वेन चानुगम इति चालनीन्यायेन नाव्याप्तिरिति वाच्यम्, अन्यतरत्वेनानुगमस्य बहुशोऽपहस्तितत्वात्। प्रतिरुद्धकार्यकत्वस्थानेऽप्रामाण्यग्रहानास्कन्दितत्वपक्षे तु दोषान्तरमपि द्रष्टव्यम्, तथाहि—व्यतिरेकव्याप्त्यंशेऽप्रामाण्यग्रहाभावस्यानिवेशनिवेशेऽन्वयव्याप्त्यंशे गृहीताप्रामाण्यकान्वयव्याप्तिमात्रविषयकपरामर्शस्य सत्प्रतिपक्षितत्वप्रयोजकतापत्तिः, अन्वयव्याप्त्यंशे तथानिवेशे च व्यतिरेकव्याप्तिमात्रविषयकस्य तदंशे गृहीताप्रामाण्यकपरामर्शस्य तथात्वापत्तिः। उभयांशेऽप्रामाण्यग्रहानास्कन्दितत्वोक्तौ चैकव्याप्त्यंशेऽगृहीताप्रामाण्यकस्याप्यपरव्याप्त्यंशे गृहीताप्रामाण्यकस्योभयव्याप्तिविषयकपरामर्शस्य सत्प्रतिपक्षताप्रयोजकतानापत्तिः। अथ स्वीययत्किञ्चिद्विषयताप्रयोज्यानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताश्रयज्ञानसामान्याभावो विवक्षणीयः, स्वं परामर्शः। यद्यपि विरोधिपरामर्शोऽपि तादृशप्रतिबन्धकताश्रय इत्यसम्भवः तथापि निश्चयत्वानवच्छिन्ना प्रतिबन्धकतेह विवक्षणीया, अप्रामाण्यग्रहस्य हि संशयसाधारणी प्रतिबन्धकता निश्चयत्वानवच्छिन्नैव, परामर्शस्य तु प्रतिबन्धकता न तथेत्यदोषः, उभयव्याप्तिविषयकपरामर्शे तु यादृशव्याप्तिविषयकत्वावच्छेदेनाप्रामाण्यज्ञानं नास्ति तादृशव्याप्तिविषयताप्रयोज्यानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकताश्रयज्ञानसामान्याभावोऽस्त्येवेति नोक्तानुपपत्तिरिति चेन्न, यथाश्रुते तावदसम्भव एव, कस्याप्यप्रामाण्यग्रहस्य प्रतिबन्धकतायास्तादृशानुमितित्वव्यापकप्रतिबध्यताकत्वाभावात्, नहि देवदत्तीयाप्रामाण्यग्रहस्य निखिलयज्ञदत्तीयतादृशानुमितिं प्रतिबध्नाति, प्रतिबन्धकतावच्छेदकं तु यदि किञ्चिदनुगतानतिप्रसक्तं स्यात्तदा तेन रूपेण प्रतिबन्धकतायास्तादृशानुमितित्वव्यापकप्रतिबध्यताकत्वमपि शक्यते वक्तुम्, न च तत्सम्भवति, अप्रामाण्यग्रहेऽप्रामाण्यग्रहसत्त्वे तस्याप्रतिबन्धकत्वेनाप्रामाण्यग्रहत्वस्य प्रतिबन्धकतावच्छेदकत्वासम्भवात्, अत एवागृहीताप्रामाण्यकाप्रामाण्यग्रहत्वस्यापि न तथात्वम्, अप्रामाण्यग्रहधर्मिकाप्रामाण्यग्रहेऽप्रामाण्यग्रहसद्भावे तस्य प्रतिबन्धकतानापत्तेः, अगृहीताप्रामाण्यकाप्रामाण्यग्रहानास्कन्दिताप्रामाण्यग्रहत्वस्य तथात्वे पूर्वोक्तस्यैव दोषापत्तेः परिहारायैवमेव निवेशेऽनवस्थापत्तेः। यदा चाप्रामाण्यमपि भ्रमत्वप्रमात्वाभावप्रमाभेदाद्यनेकात्मकं तदा नोक्तरूपेणानुगमशङ्काया उन्मीलनमपि, भ्रमत्वमपि च विशेष्यावृत्तिप्रकारकत्वविशेष्यनिष्ठभेदप्रतियोगितावच्छेदकप्रकारकत्वाद्यनेकात्मकमेव, प्रमात्वविरोधित्वेन त्वनुगमः प्रमात्वस्यानुगमे एव स्यात्स च न कथमप्यनुगतमित्युक्तं प्रमात्वखण्डनेऽस्माभिः। प्रतिरुद्धकार्यकत्वघटितलक्षणेऽपि चैतद्दोषावकाश एव अप्रामाण्याग्रहस्य पृथक्कारणताया आवश्यकत्वात्। तुल्येन बोधितेति। तुल्यबलत्वेऽनुमित्यनुत्पादकत्वेनापि

व्यतिरेकः सत्प्रतिपक्ष इति; नैतदपि युक्तम्, प्रतीयमानभागासिद्धत्वेनापि प्रतिहेतुना सत्प्रतिपक्षत्वप्रसङ्गात्; कियत्यपि पक्षे सत्त्वेनास्य पक्षसत्त्वभावात्। न चैतद्व्यमेव भागासिद्धेनापि सत्प्रतिपक्षत्वम्; प्रतीयमानदोषान्तरेणापि तथा सति सत्प्रतिपक्षत्वस्यैव व्यत्वापत्तेः, हेत्वाभासत्वाविशेषात्। न च सर्वपक्षे इति कृते नायं दोष इति वाच्यम्, यत्रैक एव पक्षः प्रतिहेतौ, तस्य सत्प्रतिपक्षस्याव्यापनात्, तत्र पक्षस्य सर्वशब्दार्थत्वाभावादेव सर्वपक्षसत्त्वाभावेनोक्तलक्षणानुपपत्तेः, एतेन यावदित्यपि पक्षविशेषणे दोष उक्तप्रायः। किञ्चान्वयव्यतिरेकिणः केवलव्यतिरेकिणा केवलव्यतिरेकिणश्चान्वयव्यतिरेकिणा सत्प्रतिपक्षे लक्षणमिदं नास्ति, सपक्षसत्त्वया तुल्यतायास्तत्राभावात्। न च सपक्षसत्त्वया तुल्येनेति लक्षणे तदनुरोधेन न कर्तव्यमेव; तथा सति असाधारणानैकान्तिकतया निश्चितेनापि सत्प्रतिपक्षत्वप्रसङ्गात्। न चान्वयव्यतिरेकिणैवान्वयव्यतिरेकिणः केवलव्यतिरेकिणैव केवलव्यतिरेकिणः सत्प्रतिपक्षता न व्यायासेनापीतिनियमो-

---

प्रकृतसाध्याभावानुमितिजननयोग्यबलवत्त्वं हेत्वन्तरे विवक्षणीयम्, स्थापनाहेतौ तु प्रकृतसाध्यानुमितिजननयोग्यबलवत्त्वम्, एवञ्च प्रकृतसाध्यतावच्छेदकविशिष्टहेतुत्वं सत्प्रतिपक्षत्वम्, वैशिष्ट्यञ्च स्वावच्छिन्नसाध्यकानुमितिजननयोग्यबलवत्त्वस्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नसाध्यकानुमितिजननयोग्यबलवद्धेतुविशिष्टत्वाभ्याम्। पक्षसत्त्वादित्रयात्मकबलस्य ज्ञायमानस्यानुमितिजननयोग्यत्वम्, अबाधितत्वस्य तु साध्यवत्पक्षकत्वरूपस्य स्वरूपसत इव ज्ञायमानस्यापि न तथात्वं यद्यपि तथापि बाधग्रहाभावरूपस्य तस्य स्वरूपसतस्तथात्वसम्भवः, सत्प्रतिपक्षस्थले च तदवदयम्भावः, अन्यथा बाधग्रहेणैव न्यूनबलस्यानुमितिप्रतिबन्धादिति भावः। अत्र यद्यपि द्वितीयसम्बन्धघटकवैशिष्ट्यं न स्वसमानकालिकत्वस्वभिन्नत्वाभ्याम्, अनित्ययो र्विभिन्नकालीनयोरपि सत्प्रतिपक्षितत्वसम्भवात्, प्रमेयादिप्रतिहेतुनापि सत्प्रतिपक्षाच्च, तथापि स्वज्ञानविशिष्टज्ञानविषयत्वस्वविषयित्वाव्यापकविषयिताकत्वाभ्यां तत्सम्भवः, अत्र वैशिष्ट्यं स्वसमवायिसमवेतत्वस्वसमानकालीनत्वाभ्याम्। यद्यप्यत्रापि हेतुद्वये सत्प्रतिपक्षितत्वव्यवहारानुपपत्तिरस्त्येव, तथापि तत्सत्त्वे एवाह प्रतीयमानेत्यादि। सर्वपक्षे इति। सत्त्वमितिशेषः। यत्रेति। गगनं नित्यं विभुत्वात्, गगनमनित्यं विशेषगुणवत्त्वादित्यादौ। प्रतिहेतौ = प्रतिहेतुद्वये। ननु सर्वपक्षसत्त्वं पक्षतावच्छेदकावच्छेदेन सत्त्वं पक्षताव्यापकत्वं वेति नोक्तदोष इत्यरुचेराह किञ्चेति। अन्वयेति। व्यतिरेकिसाध्यककेवलान्वयिनि दोषान्तरस्य स्फुटत्वम्, केवलान्वयिसाध्यककेवलान्वयिनस्तु प्रतिहेतुत्वे तत्प्रतिहेतोः स्फुटदोषान्तरत्वमित्यनवगम्यमानविशेषत्वस्य सत्प्रतिपक्षताप्रयोजकस्यासम्भवेन केवलान्वय्यनुपादानम्। अथवाऽन्वयव्यतिरेकिपदेन केवलव्यतिरेकिपदेन च केवलान्वय्यपि ग्राह्यः। अभावादिति। केवलव्यतिरेकिणि सपक्षाप्रसिद्धेरिति भावः, केवलान्वयिसाध्यके विपक्षाप्रसिद्ध्या विपक्षावृत्तित्वेनापि तुल्यत्वासम्भवस्योपलक्षणमिदम्, सर्वत्र चैकहेतौ पक्षसत्त्वविपक्षासत्त्वयोरेकतराभावस्यावश्यकत्वेन तन्निबन्धनतुल्यत्वाभावस्यापि। तुल्येनेति। पक्षसत्त्वविपक्षासत्त्वाभ्यां तुल्येनेत्यपि द्रष्टव्यम्। असाधारणेति। साधारणतया स्वरूपासिद्धतया चेत्यस्याप्युपलक्षणमिदम्। नचेत्यादि। केवलान्वयिनैव केवलान्वयिनः, स्वरूपासिद्धेनैव स्वरूपासिद्धस्य, साधारणेनैव साधारणस्येत्यस्याप्युपलक्षणमिदम्। एतादृशनियमसत्त्वे सपक्षसत्त्वादिना तौल्यं न सार्वत्रिकं विवक्षणीयमपितु यथासम्भवमित्यभिप्रायः। सत्प्रतिपक्षदूषकताबीजस्यान्यत्रापि सम्भवेन 'अन्वयव्यतिरेकिणैवे' त्यादिनियमोऽप्रयो-

ऽभ्युपगन्तुं शक्यः; उभयोरप्यनवगम्यमानदोषान्तरत्वदशायामेकसम्बन्धिनो दोषस्यावश्यम्भावितयैकतरस्य व्याप्यत्वपक्षधर्मत्वावगमो मे भ्रान्तिरिति बुद्धिमाधाय प्रतिपत्तृनिश्चयोत्पत्तिप्रतिबन्धमाधातुं केवलव्यतिरेकिण्यन्वयव्यतिरेकिणोऽन्वयव्यतिरेकिणि च केवलव्यतिरेकिणः प्रतिहेतोः समर्थत्वस्य दुरपवादत्वात् । एतदेव च सत्प्रतिपक्षस्य दोषत्वाभ्युपगमे मूलं यन्नाम व्याप्तिपक्षधर्मताप्रमितिरस्मिन् सति न भवितुमर्हतीति ।

---

जक इत्यभिप्रायेण परिहरति उभयोरिति । दशायामित्यस्य बुद्धिमाधायेत्यन्वयः । बुद्धिविषयमाह एकसम्बन्धिन इत्यादि । अवश्यम्भावितयेति । अन्यथा वस्तुनो द्वैरूप्यापत्तेरिति भावः । एकतरस्य = एकतरविशेष्यकः । भ्रान्तिरिति । विरुद्धार्थग्राहकत्वस्य भ्रान्तित्वव्याप्यत्वादितिभावः । आधाय = उत्पाद्य । निश्चयेति । 'एतदेव च' त्यग्रिमग्रन्थानुरोधादत्र निश्चयपदेनानुमिति नं ग्राह्या, अपितु तदुपधानक्षमोऽगृहीताप्रामाण्यकः परामर्शः, पूर्वमुत्पन्ने तु परामर्शेऽन्यतरत्वेनाप्रामाण्यं गृहीतम् । प्रतिबन्धमाधातुं = अभावं प्रयोजयितुम् । समर्थत्वस्येत्यन्वयः । केवलव्यतिरेकिणीत्यादि 'केवलान्वयिनैव केवलान्वयिन' इत्यादिनियमव्यत्यासस्याप्युपलक्षणम् । ननु सत्प्रतिपक्षस्यानुमितिप्रतिबन्धकतया हेत्वाभासत्वं प्राग्व्यवस्थापितमित्यत्र किमिति परामर्शप्रतिबन्धकतोच्यत इत्यत आह एतदेवेति । सत्प्रतिपक्षस्य = विरोधिपरामर्शसम्वलनस्य । दोषत्वाभ्युपगमे = अनुमितिप्रतिबन्धकताभ्युपगमे । प्रमितिः = निश्चयः । भवितुं = उत्पत्तुम् । विरोधिपरामर्शद्वयसम्वलनानन्तरं विरुद्धार्थविषयकत्वेन तयोरन्यतरस्य बाध्यताग्रहेऽन्यतरत्वेन व्याप्त्याद्यभावज्ञानस्याप्यौचित्यावर्जितत्वात्तद्द्वारैव सत्प्रतिपक्षस्यानुमितिप्रतिबन्धकत्वम्, तस्मिन् सति पूर्वोत्पन्नपरामर्शस्याकिञ्चित्करत्वात्संशयात्मकानुमितेरनुभवासिद्धत्वेन गृहीताप्रामाण्यकपरामर्शस्य तत्कारणतायां मानाभावादन्यपरामर्शस्य चोत्पत्तुमप्रभुत्वादनुमित्युत्पत्तेरसम्भवात्, परमुक्तनिरीक्षकत्वेऽपि च सिद्धसाधनादिवत्प्राचीनमते हेत्वाभासत्वसम्भव इतिभावः । अनुमितिं तत्कारणं वा प्रति साक्षात्प्रतिबन्धकस्यैव हेत्वाभासत्वम्, व्याप्त्यादिभङ्गज्ञानद्वारा तु व्याप्त्यादिग्रहं प्रत्यपि प्रतिबन्धकत्वं न साक्षात्प्रागेव त्वनुमितिं प्रति, पश्चादन्यतरत्वेनाप्रामाण्यग्रहेऽपि प्रथममगृहीताप्रामाण्यकतया विरोधिपरामर्शसम्वलनेनानुमित्यनुत्पादस्यानुभविकतया तु साक्षादेवानुमितिप्रतिबन्धकत्वं तस्यमन्तुमुचितम्, अन्यथा व्याप्त्यादिभङ्गज्ञानात्प्रागनुमित्यापत्तेरिति नव्यमतादरेऽपि न प्रकृते काचित्क्षतिः, तादृशदूषकताप्रयोजकस्य सद्भावादिति । ननु सपक्षकेवलव्यतिरेक्याद्यन्वयव्यतिरेक्यादेः प्रतिहेतुत्वेऽपि सत्त्वादेवलत्वासम्भवेऽपि व्याप्त्यादिघटकतत्तत्पदार्थीयपरस्परनिरूप्यनिरूपकभावापन्नविषयिताशालिनो व्याप्तिपक्षधर्मताज्ञानस्य विषयत्वमेव बलमस्तु, नचान्वयव्यतिरेकव्याप्त्योरेकोपादानेऽपरविषयकज्ञानासङ्ग्रह इति वाच्यम्, साध्यवत्ताज्ञानविरोध्यनुमितिसमर्थत्वेनान्वयव्याप्त्यादिज्ञानानुगमादिति चेन्न, एवं सति प्रकृतसाध्याभावबोधनसमर्थपरामर्शविशिष्टेत्यादिनिरस्तलक्षणे एव पर्यवसानादिति ।

अबाधितविषयत्वं बाधग्रहाभावः । अत्र तुल्यत्वांशानुपादानमिति पूर्वस्माद्विशेषः । एवञ्चान्वयव्यतिरेक्यादिना केवलव्यतिरेक्यादावपि सत्प्रतिपक्षितत्वसम्भवः, तत्प्रतिहेतावेव सपक्षसत्त्वादेरपेक्षणीयत्वात् । किन्त्वेवमपि केवलव्यतिरेक्यादिनाऽपरस्य सत्प्रतिपक्षितत्वासम्भवस्तदवस्थ एवेति स्वयमेवोत्तरे वक्ष्यति । यद्यप्येवं स्वावच्छिन्नप्रतियोगिताकाभावत्वावच्छिन्नसाध्यकानुमितिजननयोग्यबलवद्धेतुविशिष्टत्वसम्बन्धेन प्रकृतसाध्यतावच्छेदकविशिष्टहेतुत्वमेव पर्यवसन्नम्, हेतुविशिष्टत्वञ्च पूर्ववत्, एवञ्चाधिकबलेनापि न्यूनबलस्य सत्प्रतिपक्षितत्वप्रसङ्गो दुर्वारः, अयञ्च परतः शङ्क्यमानकल्पेष्वपि समान एव, यद्वक्ष्यति 'सर्वेषामेवैषां लक्षणानां धर्म्यादिग्राहकानुमानबाधितेऽपि गतत्वादतिव्यापकत्व'मिति । कथञ्चि-

अथाभिधत्से—पक्षसपक्षसत्त्वविपक्षव्यावृत्त्यबाधितविषयत्वयोगिना बोधितसाध्यविपर्ययः सत्प्रतिपक्ष इति; न, निरस्तप्रायत्वात्, पक्षपदे सर्वशब्दविशेषणप्रक्षेपाप्रक्षेपपक्षोक्तदूषणस्य केवलव्यतिरेकिण्यव्यापकत्वस्यापि भावात्। किञ्च सोपाधिकमसिद्धभेदं वदतां मते सोपाधितया निश्चीयमानेऽपि सर्वं यथोक्तमिदं लक्षणमस्तीति तेनापि सत्प्रतिपक्षता स्यात्। अथ अन्ये—असिद्धत्वानैकान्तिकत्वबाधितविषयत्वहीनेन बोधितसाध्याभावः प्रकरणसम इति; नैतदपि सुस्थम्, आपाततोऽस्फुरद्दोषेण वस्तुगत्या चासिद्धयादिदोषवता सत्प्रतिपक्षतास्वीकारात्तदव्यापकत्वात्। किञ्च विरुद्धार्थगोचरयोः सत्प्रतिपक्षहेत्वोर्मध्येऽवश्यमन्यतरस्यासिद्धयादिदोषेण भवितव्यम्, अन्यथा धर्मिणो विरुद्धधर्माध्यासप्रसङ्गात्, तमेकस्य व्यवच्छिद्य दोषानिश्चयात् प्रतिहेतावव्य-

---

त्त्वहारणे च निरस्ते एव प्रकारे पर्यवसानम्, तथापीदानीमनुपदोदितदोषमेव स्मारयन्नाह निरस्तेति। पक्षपदे = पक्षपदार्थे। सर्वशब्देति। सर्वशब्दार्थेत्यर्थः। अप्रक्षेपे प्रतीयमानभागासिद्धिकेनापि सत्प्रतिपक्षितत्वप्रसङ्गः। प्रक्षेपे तु गगनादिपक्षकसत्प्रतिपक्षासङ्ग्रहः। पक्षत्वव्यापकत्वोक्तौ तु नायं दोष इत्यत आह केवलव्यतिरेकिणीति। केवलव्यतिरेक्यादिना सत्प्रतिपक्षिते इत्यर्थः। इदञ्च ज्ञायमानपक्षसत्त्वादेरिव पक्षसत्त्वादिज्ञानस्यापि बलत्वे तुल्यम्। किञ्चेत्यादिदूषणं तु पक्षसत्त्वादिज्ञानस्य बलत्वे एव, सोपाधिके विपक्षव्यावृत्तेरसम्भवात्। असिद्धभेदं = व्याप्यत्वासिद्धम्। अनौपाधिकत्वस्योपाधिविरहरूपस्य व्याप्तित्वमते सोपाधित्वस्य व्याप्तिविरहरूपतयैव दूषकत्वं न तु व्यभिचारोन्नायकतयेति तन्निश्चयसत्त्वे विपक्षव्यावृत्त्यभिधानसम्भव इत्याशयेन मतविशेषोपष्टम्भः। सिद्ध्यसिद्धिव्याघातेन प्रकृतसाध्यव्यापकप्रकृतसाधनाव्यापकधर्मविरहस्य व्याप्तित्वासम्भवेनोपाधेर्न व्याप्तिविरहतया दूषणत्वम्, नापि तदभावेन साध्याभावोन्नयनमिति सत्प्रतिपक्षविधया, सत्प्रतिपक्षे सत्प्रतिपक्षान्तरस्य विफलत्वेन तत्रोपाध्यनुद्भावनापत्तेः, अपि तु व्यभिचारोन्नायकतयेति मते उपाधिग्रहे विपक्षवृत्तित्वग्रहस्यावश्यकत्वेन न विपक्षव्यावृत्तत्वग्रहसम्भव इति भावः। वस्तुतस्तूपाधेर्व्याप्तिविरहतया दूषकत्वोपगमेऽपि व्यभिचारे सोपाधित्वव्याप्यताप्रतिसन्धानदशायां सोपाधित्वग्रहे विपक्षवृत्तित्वग्रहोऽस्त्येव, तथा प्रतिसन्धानाभावे च मतान्तरेऽपि न तद्ग्रह इति मतविशेषोपष्टम्भोऽकिञ्चित्कर एव स्यादित्थम्, तस्माद्व्यभिचारग्रहोऽस्तु मा वा सोपाधित्वस्य व्याप्यभावत्वेन दूषकत्वे तन्निश्चयदशायां सत्प्रतिपक्षता कथमपि वैष्टव्या, व्यभिचारोन्नायकतयैव दूषकत्वे तु व्यभिचाराग्रहदशायां सोपाधित्वेन निश्चितेनापि सत्प्रतिपक्षितत्वं शक्यते इष्टिनिर्याकर्तुमिति मत्वैव मतविशेषानुसरणम्, परन्तु सचेतसः सोपाधित्वनिश्चये सति व्यभिचाराग्रहो दुर्लभ इत्यन्यत्। यथोक्तमिति। पक्षसत्त्वादिना गृहीतत्वं बाधग्राह्यविषयत्वञ्चेत्यर्थः। लक्षणं = लक्षणघटकम्। सपक्षसत्त्वविपक्षासत्त्वस्थाने व्याप्तिमत्त्वविवक्षायामेतद्दोषाभावेऽपि दोषान्तरमुक्तमेव। असिद्धत्वेति। प्रकृतसाध्याभावानुमितिजननयोग्यासिद्ध्यादिहीनहेत्वन्तरकत्वमर्थः। दोषत्वं हेत्वन्तरे। बाधितविषयत्वं = साध्याभावप्रत्यक्षकत्वं, सोपाधिकेऽतिप्रसङ्गाभावः स्फुट एव, असिद्ध्यानैकान्तिकत्वयोस्तत्रावश्यकत्वात्, सपक्षाप्रसिद्धिनिबन्धनश्च न केवलव्यतिरेकिणि दोषः। विरुद्धत्वादेः साध्याभावघटितत्वात्तु तदप्रसिद्धिनिबन्धनोऽप्रसङ्गः केवलान्वयिनि जागरूकः। तदव्यापकत्वादिति। असिद्ध्यादिहीनतया गृह्यमाणस्यासिद्ध्यादिमत्त्वेनागृह्यमाणस्य वा विवक्षा तु निरसिष्यति। अध्यासः = सम्बन्धः। व्यवच्छिद्य = विशिष्य, तेनान्यतरत्वेन दुष्टत्वनिश्चयेऽपि न क्षतिः। तयोरिति

सिद्धत्वादिशङ्कायामपि तस्यामसिद्ध्यादिहीनेनेति लक्षणांशस्यानिश्चयात् लक्षणस्य दुरवधारणत्वम् । न च वाच्यम्—किमर्थं सत्प्रतिपक्षहेत्वोरन्यतरस्यासिद्ध्यादिकमवश्यमभ्युपेयम्, सत्प्रतिपक्षतालक्षणदोषदुष्टत्वादेव तयोर्न धर्मिणो विरुद्धधर्माभ्यस्तत्त्वमापत्स्यत इति; यतोऽवश्यं दुष्टे हेतौ व्याप्तेः पक्षधर्मताया वाऽभावेन भवितव्यम्, तत्सत्ताभ्युपगमे साध्यसत्ताया अप्यभ्युपगमप्रसङ्गात् । बाधादीनामप्युपाधिख्यापनद्वारा व्याप्त्यादिभङ्ग एव पर्यवसानात् । सत्प्रतिपक्षत्वादुद्भाव्यमानाऽपि व्याप्तिपक्षधर्मताभङ्गो न विशिष्यैकस्मिन् हेतौ निर्णेतुं शक्यः, अन्यतरस्मिन् व्याप्त्यादिभङ्गेनापि सत्प्रतिपक्षत्वस्योपपत्तेः, अतोऽविशेषनिष्ठतया तदुन्नयने स्थिते यदि साक्षादसावनधार्यते तदानीमसिद्धिः, अथ लिङ्गेनोन्नीयते तदाऽनैकान्तिकादेरन्यतमं दूषणं वस्तुगत्याऽस्ति सत्प्रतिपक्षे, तत्कथमसिद्ध्याद्यन्यतमं नाभ्युपेयं तत्र, तस्मात्तस्य दोषस्य कुत्र द्वयोर्मध्येऽस्तित्वमस्तीत्यन्यतरानिर्धारणे प्रतिहेतावपि तच्छङ्कायां सत्या 'मसिद्ध्यादिहीनेने'ति लक्षणांशस्य दुरवधारणत्वं दुष्परिहरमेव । स्यादेतत्—अस्तु लक्षणांशस्यासिद्ध्यादिहीनत्वस्यानिश्चयः संशयोऽपि तावदस्ति, न तत्संशयेन शङ्कितसत्प्रतिपक्षतादोषग्रस्तत्वादेवासाधकत्वं दूष्यानुमानस्य, शङ्कितोपाधावेवासिद्धिशङ्कया । न च यामसिद्ध्यादिशङ्कामुपजीव्य सत्प्रतिपक्षताशङ्का दोषः स्यात् सैव तदा दोष इति वाच्यम्, असिद्ध्यादिशङ्काया एव तादृशप्रतिहेतुदर्शनमूलकतया तदुपजीवकत्वादिति;

---

पूर्वान्वयि । उपाधिख्यापनेति । विपर्ययप्रसिद्धमवस्नात् । व्याप्त्यादीति । व्याप्तिमात्रभङ्गेऽपि व्याप्तिविशिष्टपक्षधर्मताभङ्गोऽप्यक्षत एवेति नाशिष्टासङ्गतिः । ननु विशिष्यैकस्मिन् व्याप्त्यादिभङ्गोऽन्यनेऽसिद्ध्यादिहीनेनेतिलक्षणांशोऽपरत्र निश्चेष्यत इत्यत आह सदित्यादि । सत्प्रतिपक्षत्वात् = विरोधिपरामर्शसंवलनबलात् । प्रकृतपरामर्शद्वयं पक्षीकृत्य व्याप्तिपक्षधर्मतांशे भ्रमत्वमन्यतरकात्मेकत्र मिथोविरुद्धधर्मद्वयव्याप्तिविशिष्टतया धर्मद्वयावगाहित्वात्साधनीयमिति फलतोऽन्यतरत्वेनैवोभयत्र व्याप्त्यादिभङ्गसिद्धिर्न तु विशिष्यैकत्र । अविशेषनिष्ठतया = अन्यतरत्वेन । साक्षात् = व्यभिचारादिरूपलिङ्गानुसन्धानं विना । असौ = व्याप्त्यादिभङ्गः । असिद्धिः = असिद्धतया व्यवहार्यः । अन्यथा तथाऽवधारणाभावेऽप्यसिद्धिसम्भवेनासङ्गतिः । तथावधारणस्थले चासिद्धत्वव्यवहार इति प्रागुक्तहेत्वाभासपार्थक्यविध्योपपादने । लिङ्गेन = व्यभिचारादिना । तत्र = तत्रापि । अन्यतरानिर्धारणे इति । विशिष्येत्यादिः । संशयोऽपि = असिद्ध्यादिहीनत्वस्य संशयस्तु । असाधकत्वं = अनुमित्यनुपधायकत्वम् । शङ्कितोपाधिः = शाकपाकजत्वादिः । असिद्धिशङ्कया = व्याप्त्यासिद्धिशङ्कया दूष्यानुमानस्यासाधकत्वमित्यनुषङ्गः । यद्यपि सत्प्रतिपक्षशङ्काया एवं दोषत्वं स्यात्तु सत्प्रतिपक्षस्य, तथाप्युपाधिसन्देहस्य दोषत्वे तन्निरूपकतया सन्दिग्धोपाधेरिवात्रापि सत्प्रतिपक्षसन्देहनिरूपकतया सन्दिग्धसत्प्रतिपक्षस्य दोषत्वव्यवहारः कथञ्चित्समर्थनीयः । सैवेति । उपजीव्यत्वादिति भावः । तदा = विरोधिपरामर्शदशायाम् । तादृशेति । सत्प्रतिपक्षतया शङ्क्यमानेत्यर्थः । तदुपजीवकत्वात् = विरोधिपरामर्शात्मकप्रतिहेतुदर्शनोपजीवकत्वात् । एवञ्च सत्प्रतिपक्षताशङ्कायाः स्वातन्त्र्येण दोषत्वं न मन्महे अपि तु तथाशङ्क्यमानप्रतिहेतुपरामर्शस्यैव, अत एवोभयोर्हेत्वोरेकत्र निश्चयानन्तरमन्यतरव्याप्तिसंशय इत्युपजीव्यत्वेन विरोधिपरामर्शस्य हेत्वाभासान्तरत्वमिति मर्यादकम् । परन्त्वेवं सत्प्रतिपक्षव्यवहारनियामकत्वमपि विरोधिपरामर्शस्य दलघटितलक्षणस्यैव युक्तमिति किं

मैवम्, यतः शङ्कितोपाधिनाऽसिद्धेनाप्येवं सत्प्रतिपक्षता प्रसज्येत। ननु भवत्वेवमपि तेन किन्नाम भवेत्?; तस्यासिद्धतया हीनबलस्य सिद्धयादिमता पक्षबाधं विधूय न किञ्चिदन्यत्। बाधादेव तर्हि न तेन सत्प्रतिपक्षतेति चेन्न, सन्दिह्यमानासिद्धतया सत्प्रतिपक्षहेतोरपि तर्हि कथं परहेत्वसाधकत्वप्रसाधकत्वं भविष्यति, हेत्वाभासत्वाविशेषात्। हेत्वाभासान्तरं न दोषसंशयापादकमतो नैवमिति चेन्न, तर्हि यमुपाधिमुपादाय न्यूनबलतया बाध्यता तमादायैव तथाविधोपाधेर्दोषसंशयक्षमत्वादेव। किञ्च क्वचित्सत्प्रतिपक्षत्वनिश्चयाभावे संशयानुपपत्तिः।

अथान्यथाकारं लक्षणमभिधत्से—असिद्धिविरोधव्यभिचारकालात्ययापदेशविरहितया प्रतीयमानेन बोधितो यदीयसाध्यस्य विपर्ययः स प्रकरणसम इति; एतदपि न

---

प्रस्तुतलक्षणेनेति ध्येयम्। असिद्धेन = व्याप्यत्वासिद्धेन। एवं = शङ्क्यमानासिद्ध्यादिकेन विरोधिपरामर्शविषयेण सत्प्रतिपक्षतोपगमे। एवमपि = शङ्कितोपाधिकेनापि सत्प्रतिपक्षत्वम्। परिहरति तस्येति। शङ्कितोपाधिकस्येत्यर्थः। असिद्धतया = व्याप्यत्वासिद्धतया गृहीततया, हीनेतिन्यूनपरम्। बलस्येति बाधपदार्थघटकसाध्यत्वेऽन्वेति। सिद्ध्यादिमता = परामृश्यमानेन हेत्वन्तरेण। इदं बाधपदार्थघटके ग्रहेऽन्वेति। पक्षबाधं = पक्षे साध्यत्वेनाभिमताभावग्रहम्। प्रबलस्य हि दुर्बलेन न सत्प्रतिपक्षितत्वम्, यन्नाहुः "नहि भवति तरक्षुः सत्प्रतिपक्षो हरिणशावकस्ये"ति। शङ्कते बाधादिति। तेन = बाधितेन न सत्प्रतिपक्षता, बाधितविषयत्वराहित्यरूपविशेषणाभावादिति भावः। सन्दिह्यमानासिद्धतया = सन्दिह्यमानासिद्धिकतया। विशेषणसन्देहाधेयोऽत्र विशिष्टसन्देहः। सत्प्रतिपक्षहेतोः = प्रकृतसाध्याभावानुमितिजननयोग्यासिद्ध्यादिरहितहेत्वन्तरकहेतोः। तर्हि = शङ्कितोपाधिकस्यासिद्धत्वात्स्वसाध्याननुमापकत्वोपगमे। भविष्यतीति। तथा च शङ्कितसत्प्रतिपक्षताया दोषत्वं कथं समर्थनीयम्। हेत्वाभासत्वाविशेषात् = शङ्कितोपाधिकेन मित्रातनयत्वादिना सन्दिग्धासिद्धिकस्य सत्प्रतिपक्षितत्वस्य दुष्टत्वसाम्यात्। शङ्कते हेत्वाभासान्तरमिति। सत्प्रतिपक्षितत्वातिरिक्तो हेत्वाभासइत्यर्थः। नैवम् = सत्प्रतिपक्षितत्वस्य परहेत्वसाधकत्वाप्रसाधकत्वेऽपि दोषत्वाभावो न। सत्प्रतिपक्षदशायां द्वयोरन्यतरत्वेन दुष्टतानिश्चयेऽपि विशिष्योभयोरेव व्यभिचारादिदोषसंशयः, सन्दिग्धोपाधिकस्य तु परेण बाधो न तु परस्मिन्नपि दोषसंशयाधायकत्वमिति मा नामास्यास्तु स्वसाध्यानुमित्युत्पादकत्वम्, मा चोक्तसत्प्रतिपक्षितत्वस्यापि सन्दिग्धतया भूदसाधकत्वप्रसाधकत्वम्, तथापि प्रतिद्वन्द्विहेतौ दोषसन्देहाधायकतयाऽनुमानुत्पादप्रयोजकत्वं निर्बाधमेव, तावतैव च सत्प्रतिपक्षतानिर्वाह इति भावः। तर्हि = दोषसन्देहाधानेन सत्प्रतिपक्षतानिर्वाहोररीकारे। तं स्वात्मानमादायैव दोषसंशयः = स्वात्मकदोषस्यैव संशयः। तथा च शङ्कितोपाधिकेनापि सत्प्रतिपक्षता स्यादिति। ननु परहेतौ दोषसंशयाधानं सत्प्रतिपक्षतानिर्वाहकं ब्रूमः, शङ्कितोपाधिकस्य तु न तथात्वम्, अन्यथा परहेतुना शङ्कितोपाधिकस्य बाध्यताभिधानं भवदीयमुन्मत्तप्रलापायितं भवेदित्यस्वरसादाह किञ्चेति। निश्चयं विना हि न सन्देहजननी कोटिद्वयोपस्थितिरिति भावः। वस्तुतस्तु—असिद्ध्यादिहीनत्वांशसंशयप्रयुक्त एवात्र सत्प्रतिपक्षतासंशयस्तच्च निश्चितमेव सद्धेतौ सत्प्रतिपक्षाभावदशायामिति नानुपपत्तिः।

प्रतीयमानेनेति। वस्तुगत्याऽसिद्ध्यादिमत्यपि तदभावप्रतीतिसम्भवः। संशयसाधारणप्रतीतिविवक्षणे च न पूर्ववद्दुरवधारणत्वमिति। शिष्टं प्राग्वत्। जानत इति। अल्पप्रज्ञस्येव प्रौढ-

विचारसहम्, केन तथा प्रतीयमानत्वमभिमतम्? किं प्रत्यनुमानप्रयोक्त्रा, अथ प्रथमानुमानवादिना, द्वाभ्यामपि वा, येन केनचिद्वा, न तावदाद्यः, स्वयं दोषं जानतोऽपि दूषणान्तरापरिस्फूर्तौ 'यद्ययं दोषं न प्रतिसन्धास्यति तदाऽभीष्टमेव, अथ प्रतिसन्धास्यति तदानीमन्यथाऽपि ममाऽस्फुरद्दोषान्तरस्य पराजयेऽनेन कक्षान्तरारूढायां कथायां शाखान्तरं सङ्क्रमितुमवकाशमासादयिष्यामी'त्यभिप्रायवतोऽल्पप्रज्ञस्य 'मयि वदत्यसत्पक्षोऽपि निर्वहती'ति लोके प्रकर्षप्रदर्शनार्थं कथमपि ग्रन्थकारादिभिरुक्तस्य वा तथाविधप्रतिहेतौ निर्वाहार्थमन्यानुयुक्तस्य प्रौढप्रज्ञस्य स्फुरद्दोषेणापि प्रतिहेतुना सत्प्रतिपक्षकरणदर्शनात्, तत्र परेण दोषानुद्भावने जयस्यापि भावात्। किञ्च प्रतीयमानता यदि निश्चीयमानता विवक्षिता तदानीमसम्भव एव, यतो विरुद्धार्थयोरेकस्यावश्यं दोषः, स च कस्यास्तिवति तदा निर्धारयितुमशक्यतया प्रतिहेतावपि तत्संशयात्। अथ सम्भावना प्रतीयमानता, तत्रोद्भावनसम्भावनां दूषयन्तो यद्वक्ष्यामस्तदेव दूषणमतिदेष्टव्यम्। नापि द्वितीयतृतीयचतुर्थाः, परबुद्धेर्दुरवधारणतया 'परस्यासिद्ध्यादिविरहितत्वबुद्धिरत्र भविष्यती'त्यग्रेऽवधारयितुं प्रमाणाभावेनाशक्यत्वात् कथं सत्प्रतिपक्षतां प्रतिज्ञाय

---

प्रज्ञस्यापि विशेषणमिदम्। स्वप्रयोक्तव्यहेताविस्यादिः। दूषणान्तरेति। सत्प्रतिपक्षातिरिक्तदूषणेत्यर्थः। परहेताविस्यादिः। अभीष्टं = विजयः। तदानीमित्यस्यानेनेत्यन्वयः। अन्यथापि = प्रतिहेत्वप्रयोगेऽपि। पराजये भाविनि। अनेन = प्रतिहेतुप्रयोगेण। दोषान्तरमप्रतिपद्यमानस्य प्रतिहेतोरप्रयोगे पराजयोनिश्चितः, तत्प्रयोगे तु जयस्याप्यस्ति सम्भावनेति प्रतिहेतुप्रयोगौचित्यम्। शाखान्तरं = विचारकोट्यन्तरम्। प्रदर्शनार्थं सत्प्रतिपक्षकरणदर्शनादित्यन्वयः। तथाविधेति। वस्तुतो दुष्टेत्यर्थः। तत्र=प्रतिहेतौ। भावादिति। तथा च न निष्फलः प्रतीयमानदोषस्य प्रतिहेतोः प्रयोगो येन तत्र प्रवृत्तिर्न स्यादिति भावः। विरुद्धार्थयोः = विरुद्धसाध्यसाधकयोः। तत्संशयात् = अन्यतरत्वेन निश्चितस्य दोषस्य विशिष्य संशयात् दोषाभावनिश्चयप्रतिबन्धात्। सम्भावना = तद्विषयता। सम्भावना किमुद्भावनात्प्राक्कालिकी, अथोद्भावनसमानकालिकीत्यादिविकल्प्यात्रैव प्रकरणे निरसिष्यति। इदमुपलक्षणम्—उक्तरीत्या प्रत्यनुमानप्रयोक्तुर्दोषनिश्चये तस्य तदभावसम्भावनाऽसम्भवदुक्तिरेव, न च यस्य पुरुषस्य दोषाभावसम्भावना तस्यैव सत्प्रतिपक्षत्वव्यवहारः, दोषं निश्चिन्वानेन प्रतिहेतुप्रयोक्त्रापि भवदीयोहेतुर्मदीयहेतुना सत्प्रतिपक्षित इत्युच्यमानत्वात्। तस्य नानुमितिप्रतिबन्धोऽपीति चेन्न, यस्यानुमितिप्रतिबन्धस्तस्याप्यन्यतरत्वेनोभयत्र दोषनिश्चयसद्भावात्। अथ नेत्थं दोषनिश्चयो दोषाभावसम्भावनां प्रतिबध्नाति, एवं च कस्य दोषाभावसम्भावना विवक्षितेति विकल्पोऽपि न युज्यते, तत्पुरुषीयदोषाभावसम्भावनाविषयप्रकृतसाध्याभावानुमापनयोग्यहेत्वन्तरकत्वं तत्पुरुषापेक्षया सत्प्रतिपक्षितत्वमिति वक्तव्यत्वादिति चेदस्त्वेवम्, इतएवास्वरसात्किञ्चेत्यादिनाऽधिकबलेन सत्प्रतिपक्षितत्वापत्तिं दोषान्तरं दास्यति। वस्तुतस्तु दोषाभाववत्तया सम्भाव्यमानेऽपि हेत्वन्तरेऽपरामृश्यमानतायां न प्रकृतसाध्याभावानुमापनयोग्यतेति प्रकृतसाध्याभावव्याप्यतया परामृश्यमानताया अवश्यादरणीयत्वे तादृशसम्भावनाविषयतानिवेशो निष्फल एवेति। अग्रे = सत्प्रतिपक्षत्वप्रतिज्ञातः पूर्वम्। तत्प्रतिज्ञानन्तरं हि प्रत्यनुमानं प्रयोक्तव्यम्, एवञ्च यद्यपि तत्प्रयोगोत्तरं मदीयो हेतुः परेण दोषरहिततया प्रतीतो दोषवत्त्वेनानुद्भावनादितिरीत्या दोषाभावप्रतीतिरनुमातुं शक्या, न च दोषं जानतोऽपि सभाक्षोभादिना तदनुद्भावनं सम्भवतीति व्यभिचारित्वमुक्तहेतोरिति वाच्यम्, सभाक्षोभादिविरहकालीनतादृशानुमा-

व्युत्पादयेत्। शङ्कान्तरञ्चात्र निरसिष्यामः।

एतेन—असिद्धिविरोधकालात्ययापदेशव्यभिचारवत्तया व्याप्तिपक्षधर्मताविरहवत्तया वाऽगृह्यमाणेन बाधितसाध्यविपर्ययः सत्प्रतिपक्ष—इति निरस्तम्, केनागृह्यमाणत्वमिति निर्वक्तुमशक्यत्वात्। किञ्च सर्वेषामेवैषां लक्षणानां धर्म्यादिग्राहकानुमानबा-

धनस्य हेतुत्वसम्भवात्, तथापि प्रतिहेतुप्रयोगात्पूर्वमेव सत्प्रतिपक्षताघटकपरकीयदोषाभावप्रतीतिविषयकप्रतीतेरपेक्षणीयाया असम्भवः, अत एव भवनीत्यनुक्त्वा भविष्यतीत्युक्तम्। ननु परकीयदोषविरहबुद्धेः पूर्वं प्रत्येतुमशक्यत्वेऽपि स्वार्थानुमाने सत्प्रतिपक्षता निष्प्रत्यूहैव, किञ्च पूर्वं सत्प्रतिपक्षितत्वप्रतिज्ञानमकिञ्चित्करम्, प्रतिहेतुर्यथा प्रयोक्तव्यः, तत्र च यदि परेण दोषो नोद्भावयिष्यते तदा सत्प्रतिपक्षता पदमाधास्यति, तथा च विजेष्य इति सम्भावनया प्रतिहेतुप्रयोगः सम्भवति, स च ह्रदो वह्न्यभाववान् ह्रदत्वादित्येवं प्राचीनतार्किकपद्धतिमनुसृत्य वा ह्रदो वह्न्यभावव्याप्यवानित्येवं नव्यसरणिमनुसृत्य चेत्यन्यत्, तदनन्तरं तु सत्प्रतिपक्षताव्युत्पादनं चेदपेक्षितं तदोक्तानुद्भावनलिङ्गेन परकीयदोषाभावप्रतीतिः शक्या प्रत्येतुमिति नानुपपत्तिरित्यत आह शङ्कान्तरमिति। स्वार्थेऽपि निरुक्तसत्प्रतिपक्षस्यासम्भवस्यानुपदं 'एतेन स्वार्थे'त्यादिनाऽभिधास्यमानत्वात्, सम्भावनायाश्चाग्रेव प्रघट्टके दूषयिष्यमाणत्वादिति भावः।

एतेन = वक्ष्यमाणेन। विरोधादेः साध्याभावघटितत्वात्केवलान्वयिसाध्यकासङ्ग्रहाल्लाघवाच्चाह व्याप्तीत्यादि। कालात्ययापदेशोऽपि पक्षधर्मताविरहो व्याप्तिविरहो वा नियतह्युक्तमेव। एवञ्च प्रकृतसाध्यव्याप्त्यादिविरहवत्तयाऽगृह्यमाणप्रकृतसाध्याभावानुमापनयोग्यहेत्वन्तरकत्वमर्थः। अशक्यत्वादिति। ननूक्तरीत्या सत्प्रतिपक्षितत्वस्य पुरुषविशेषनियन्त्रितत्वोपगमे नायं दोष इत्यस्वरसादाह किञ्चेति। सर्वेषां समानबलत्वघटितलक्षणातिरिक्तानाम्। धर्मिग्राहकमानस्योपजीव्यतयाऽधिकबलत्वेन समानबलत्वाघटितलक्षणस्यातिव्याप्त्यसम्भवात्। धर्म्यादिग्राहकानुमानेति। मानेति नोक्तम्, सुमेरुः पाषाणमयः पर्वतत्वादित्यादौ सुवर्णमयत्वादिना धर्म्यादिग्राहकागमादिबाधिते हि नातिव्याप्तिः, तादृशहेत्वन्तरकयोस्तुल्या विरोधिमाने लिङ्गताया विवक्षितत्वात्, सा च प्रातीतिकीत्यन्यत्। तथैव सत्प्रतिपक्षताव्यवहारात्, विरोध्यागमादिज्ञानस्थलेऽपि साध्याभावव्याप्यवत्तानिर्णयस्यावश्यकत्वाच्चेति। ईश्वरो न कर्ताऽशरीरित्वादित्याद्यनुमानं क्षित्यादि सकर्तृकं कार्यत्वादित्यादिधर्मिग्राहकबाधितम्। रूपं श्रावणं गुणत्वात् शब्दवदित्यस्य शब्दशब्दत्वयोरेव साध्यग्राहकेण मानेन बाधः, शब्दोऽश्रावणो गुणत्वादित्यस्य साध्यप्रतियोगिनः श्रावणत्वस्य शब्दे ग्राहकेण बाधः, मनो विभु ज्ञानासमवायिकारणसंयोगाधारत्वादात्मवदिति मनसि हेतुग्राहकेण बाधितम्, मनसो विभुत्वे विभुनोरात्ममनसोः संयोगानुपपत्त्या विभुत्वाभावनिश्चयात्। इदमुपलक्षणम्—अन्यतरत्वेनोभयत्र व्याप्त्यादिविरहवत्तया निश्चीयमानत्वस्यैव सत्त्वेनोक्तलक्षणेऽसम्भवः, विशिष्य तथाऽनिश्चीयमानत्वविवक्षायामपि हेतौ नानुमापनयोग्यत्वम्, अतीतानागतस्यापि तस्य सम्भवात्, अनुमापनयोग्यपरामर्शविषयत्वविवक्षणेऽपि प्रकृतहेतोरपरामृश्यमानतादशायामतिप्रसङ्गतादवस्थ्यम् अथ प्रकृतसाध्यव्याप्यतया पक्षे गृह्यमाणत्वमिति दलान्तरमपि प्रवेश्यम्, ग्रहे चाप्रामाण्यज्ञानानास्कन्दितत्वमपि विशेषणीयम्, एवं च मूलोक्ताऽधिकबलेन सत्प्रतिपक्षितत्वापत्तिरपि न, प्रकृतहेतुपरामर्शस्यागृहीताप्रामाण्यकत्वे इष्टत्वात्, अन्यथा तु विशेषणस्यैवाभावादिति चेत्तथाप्यन्वयव्याप्त्यादिविरहवत्तयाऽगृह्यमाणत्वविवक्षायां व्यतिरेकव्याप्तिविरहवत्तया ग्रहेऽपि सत्प्रतिपक्षप्रसङ्गः, व्यतिरेकव्याप्त्यादिविरहवत्तयाऽगृह्यमाणत्वोक्तौ चान्वयव्याप्तिविरहवत्तया गृह्यमाणतादशायामपि प्रसङ्गः, प्रकारान्तरानुसरणेऽपि

धितेऽपि गतत्वादतिव्यापकत्वम्। एतेन स्वार्थानुमाने तदाभासेऽपि वा सत्प्रतिपक्षस्य दोषत्वमपोढम्।

अथोच्यते—अगृह्यमाणविशेषेण बोधितसाध्यविपर्ययः प्रकरणसम इति; अस्तु तावत्केनागृह्यमाणत्वमित्यादिविकल्पदोषाभिधानम्, यदि यः कश्चिद्विशेषो विशेषशब्देनाभिप्रेतस्तदा तद्ग्रहणं क्वचिदपि नास्तीति सर्वाव्याप्तिः, अथ हेतुदोषलक्षणो विशेषोऽभिमतस्तदा धर्म्यादिग्राहकानुमानबाधितेऽपि गतत्वादतिव्यापकता, अगृह्यमाणहेतुदोषरूपविशेषेण बोधितसाध्यविपर्ययत्वात्तस्यापि, तत्र हेतुदोषस्याभावादेवागृह्यमाणविशेषत्वात्। न चागृह्यमाणपरमार्थस्थितहेतुदोषरूपविशेषेणेति कृते निस्तारः; तथा सति सत्प्रतिहेतुकः सत्प्रतिपक्षो हेतुर्न व्याप्येत, परमार्थतस्तित्रष्ठतीति च दर्शनीयम्, न च ज्ञेयमिति महती प्रज्ञा। नचागृह्यमाणहेतुदोषहेतुगुणरूपविशेषेणेति विवक्षिते निस्तारः; व्यतिरेकिण्यन्वयव्यतिरेकिणा सत्प्रतिपक्षे हेतुगुणरूपो विशेषः सपक्षसत्त्वलक्षणो गृह्यत इति तदव्यापकत्वापत्तेः। अथागृह्यमाणव्याप्तिपक्षधर्मताभङ्गाभङ्गरूपविशेषेणेति क्रियते, तदा प्रष्टव्यम्, किमपेक्ष्य विशेषत्वमिदमिष्टम्, यदि यत्किञ्चिदपेक्ष्य, तदा प्रसिद्धासिद्ध्यादिभावं हेत्वाभासमपेक्ष्य विशेषो गृह्यते सदनुमानात्मके प्रतिहेताविति

---

निरस्ते एव लक्षणे दुर्वारं पर्यवसानमिति। एतेनेति। उक्तातिव्यापकत्वादेरावश्यकत्वेनेत्यर्थः। स्वार्थानुमाने इति। पूर्वोक्ते प्रतीयमानत्वघटितकल्पे समनन्तरोक्ते चागृह्यमाणत्वघटितकल्पे केन प्रतीयमानत्वं केन वाऽगृह्यमाणत्वमितिविकल्पानुपपत्तिपरिहाराय स्वार्थे एव सत्प्रतिपक्षतासम्भवः केनचिदाशङ्क्येत, तदेदम्। तदाभासे इति। समीचीनहेतुनाऽसद्धेतोः सत्प्रतिपक्षितत्वस्थले दोषाभावप्रतीतिर्दोषत्वेन वाऽप्रतीतिरुत्सर्गसिद्धा, प्रतिहेतौ दोषविरहादित्यभिप्रायेण केनचित्स्वार्थानुमानाभासे एव सत्प्रतिपक्षितत्वं सुरक्षितं मन्येत, तदेदम्। अपोढम् = निरस्तम्। इदमुपलक्षणम्, परार्थस्थले सत्प्रतिपक्षितत्वस्य स्वार्थेऽपि चानाभासेऽपह्नोतुमशक्यत्वादिति।

अगृह्यमाणेत्यादि। अनिश्चितविशेषकप्रकृतसाध्याभावानुमितिजननयोग्यहेत्वन्तरकत्वमर्थः, एवञ्च सत्प्रतिपक्षेऽनुमित्यनुत्पत्तावपि न क्षतिः, अनिश्चितविशेषकनिष्ठविषयतानिरूपितप्रकृतसाध्याभावव्याप्यत्वप्रकृतपक्षधर्मत्वविषयताकपरामर्शविशिष्टयत्किञ्चित्परामर्शीयप्रकृतसाध्यकानुमितिजनकतावच्छेदकविषयताश्रयत्वमिति यावत्, एवञ्च हेतावनुमितिजननयोग्यत्वस्याभावेऽपि न क्षतिः, नवा तादृशहेत्वन्तरकत्वमित्यत्र बहुव्रीह्यर्थकालुष्यम्। वैशिष्ट्यं तु स्वसमवायिसमवेतत्वस्वसमानकालिकत्वाभ्याम्। अस्त्विति। धर्म्यादिग्राहकबाधितस्तु नानिश्चितविशेषक इति न तेन सत्प्रतिपक्षितत्वापत्तिरिति भावः। ननु यत्नादिना पुरुषविशेषनियन्त्रितत्वे नायं दोष इत्यत आह यदीति। सत्प्रतिहेतुकः = समीचीनप्रतिहेतुकः। व्याप्येत = सङ्गृह्येत। उपहसन्नेव सत्प्रतिपक्षत्वव्यवहारासम्भवमाह परमार्थत इति। दर्शनीयमिति। परार्थे सत्प्रतिपक्षताया व्युत्पादनीयत्वात्, अन्यत्रापि च व्यवहारार्थं तस्या ज्ञेयत्वादिति भावः। महतीति। विशिष्टविषयकज्ञानस्य विशेषणविषयकत्वनियमात् परमार्थतस्तिष्ठतो दोषस्य व्युत्पादयितुर्ज्ञानावश्यम्भावादिति भावः। विवक्षिते इति। हेतुगुणो व्याप्त्यादिर्नानिश्चितो धर्म्यादिग्राहकमान इति भावः। अथेत्यादि। व्याप्तिपक्षधर्मताभङ्गो व्याप्त्यादिमत्तया भ्रान्तिविषयत्वम्, तदभङ्गस्तु व्याप्त्यादिमत्तया प्रमितत्वम्, अन्यथा व्याप्तिपक्षधर्मतातद्विरहरूपविशेषेणेत्येव ब्रूयात्। वस्तुतस्तु व्याप्त्यादिमत्तया ... अनिश्चित इति न तद्विरहविवक्षायां दोषोऽपीत्यनुपदं स्फुटीभविष्यति। धर्म्यादिग्राहके तु व्याप्त्याद्यभङ्गो निश्चित इति न

तत्राव्यापकत्वम्। अथ प्रकृतं विरोधिनं हेतुमपेक्ष्य, तदा लक्षणवाक्यमीदृशं पर्यवस्यति व्याप्तिपक्षधर्मताभङ्गाभङ्गरूपः प्रकृतहेतुतो यस्य विशेषो न गृह्यते तेन बोधितो यदीयस्य साध्यस्य व्यतिरेकः स प्रकरणसम इति; ईदृशमप्येतद्वाक्यं विचारमर्हति, तथाहि-व्याप्तिपक्षधर्मतेति मिलितस्य भङ्गाभङ्गपदसम्बन्धे विवक्षिते प्रत्येकोदाहरणातिव्याप्तिः, तद्भङ्गाभङ्गरूपद्वयस्य च मिलितस्य विशेषपदसम्बन्धेऽभिप्रेते सर्वथाऽसम्भवितया सर्वाव्याप्तिः। अपि चैवमप्यस्य वाक्यस्यार्थो वक्तव्यः, व्याप्तिभङ्गरूपो व्याप्त्यभङ्गरूपः पक्षधर्मताभङ्गरूपः पक्षधर्मताभङ्गरूपः प्रकृतहेतुतो विशेषो न गृह्यते यस्य तेन बोधितो यदीयसाध्यस्य व्यतिरेकः स प्रकरणसमः, तथा सति परमाणुर्निरवयवो विश्रान्तपरिमाणतरतमादिभावत्वाद्व्योमवदित्युक्ते परमाणुः सावयवो मूर्तत्वाद्घटवदिति प्रत्यनुमानेन प्रतिवाद्युक्तेन परमाणुधर्मिग्राहिणोऽप्यणुपरिमाणतरतमादिभावः क्वचिद्विश्रान्तः

---

तेन सत्प्रतिपक्षितत्वापत्तिः। सर्वत्रैव सत्प्रतिपक्षे हेतुद्वये व्याप्त्यादिभङ्गस्य निश्चयेऽपि न तस्य क्वचिद्विशेषतया निश्चयोऽपि त्वन्यतरत्वेन साधारणतयैति नासम्भवः, एतदर्थमेव मूले विशेषपदमिति व्यक्तीभविष्यति। तत्राव्यापकत्वम् = तेन सत्प्रतिपक्षितत्वानुपपत्तिः। प्रकृतहेतुत इति। अनिश्चितव्याप्तिपक्षधर्मताभङ्गाभङ्गरूपप्रकृतहेत्वभिमतापेक्षविशेषकनिष्ठविषयतानिरूपितेत्यादि लक्षणं वक्तव्यम्। मिलितस्येति। व्याप्तिपक्षधर्मतोभयांशे प्रमाया विषयत्वस्य तदुभयांशे च भ्रान्तेर्विषयत्वस्य विवक्षायामित्यर्थः। प्रत्येकेति। घटो नित्यो मेयत्वादित्यादौ यत्र व्याप्तिपक्षधर्मतान्यतरांशे भ्रमस्य विषयत्वं निश्चितं तेन सत्प्रतिपक्षता नेष्टा, तुल्यबलत्वप्रतिसन्धानासम्भवात्, उभयांशे भ्रमस्य विषयताया अनिश्चितत्वात्तु सेदानीं स्यादिति। अव्याप्तिस्तु व्याप्तिपक्षधर्मतान्यतरांशे प्रमाया विषयत्वस्य निश्चये एवाशङ्क्येत, तदा सत्प्रतिपक्षत्वानिवृत्तेः, परन्तु तादृशनिश्चयेऽपि व्याप्तिपक्षधर्मतोभयांशे प्रमाविषयत्वस्यानिश्चितत्वमक्षतमेवेति सा न सम्भवति। मूलेऽव्याप्तिरितिपाठस्य प्रामाणिकत्वे तु सन्दिग्धत्वमेवानिश्चितत्वमिति मत्वा तद्व्याख्या स्यात्, एकतरांशे प्रमाया विषयत्वस्य निश्चितत्वेऽपरांशवत्तयैव प्रमितत्वस्य सन्दिग्धत्वसम्भवेनोभयांशवत्तया तस्य स्वरसतः सन्दिग्धत्वासम्भवादिति। ननूभयांशे भ्रमविषयत्वस्य प्रमाविषयत्वस्य च द्वयोरेव प्रकृतहेत्वपेक्षविशेषता विवक्षिता, तयोर्विरुद्धतया चैकत्रासम्भवेन तादृशविशेषत्वानिश्चितत्वाप्रसिद्धेर्नोक्तातिप्रसक्तिरित्याशङ्क्यैवं सत्यसम्भवप्रसक्तिरित्याह तद्भङ्गेति। ननु व्याप्तिपक्षधर्मताभ्रमविषयत्वमित्यत्र भ्रमत्वमुभयांशे वाऽन्यतरांशे वेति विशेषो न विवक्षणीयः, तथा च नोक्तातिप्रसक्तिः, अत एव व्याप्तिपक्षधर्मताभङ्गशब्देन व्याप्तिपक्षधर्मताविरहो न विवक्ष्यते, प्रत्येकाभावस्य परस्परासङ्ग्राहकत्वात्, अभावद्वयस्यैकाभावनिश्चयदशायां सत्प्रतिपक्षताप्रसञ्जकत्वात्, व्याप्त्यादिप्रतियोगिकाभावमात्रस्य त्रितयाभावादिसाधारणतया सत्प्रतिपक्षत्वाव्याप्त्यापादकत्वात्, घटव्याप्तिपक्षधर्मतात्रयाभावस्य निश्चयेऽपि सत्प्रतिपक्षत्वानिवृत्तेः, व्याप्तिपक्षधर्मतोभयत्वावच्छिन्नाभावस्य प्रत्येकाभावोभयाभावसाधारणत्वेऽपि प्रत्येकमात्रवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावनिश्चयेऽप्युभयत्वावच्छिन्नाभावानिश्चयसम्भवेनातिप्रसञ्जकत्वात्, एवमेव व्याप्तिविशिष्टपक्षधर्मत्वाभावविवक्षायामप्यतिप्रसङ्ग इति, प्रमात्वं तूभयांश एव, एकांशे प्रमाया विषयत्वस्य निश्चयेऽपि सत्प्रतिपक्षत्वानिवृत्तेः, तादृशभ्रमप्रमाविषयत्वयोर्विशेषता तु प्रत्येकमेवेति नासम्भवः, तयोरन्यतरस्यापि निश्चितत्वाभावविवक्षणे च न धर्म्यादिग्राहकेण सत्प्रतिपक्षतापातः, तत्र व्याप्त्यादिना प्रमितत्वस्य निश्चयात्, अनिश्चयदशायां च तेन सत्प्रतिपक्षताया इष्टत्वादित्यस्वरसादाह अपि चेति। तरतमादीति। आदिपदं सम्पातायातम्। प्रत्यनुमानेनेति। सत्प्रतिपक्षता स्यादित्यन्वयः। परमाणुधर्मिग्राहिण

परिमाणतरतमादिभावत्वान्महत्परिमाणतरतमादिभाववदित्यादेः सदनुमानतयेष्टस्य पक्षधर्मताबलेन तदीयनिरवयवत्वेऽपि प्रमाणतां गतस्य सत्प्रतिपक्षता स्यात्। यश्चास्य सदनुमानतां न मन्यते तं प्रत्येवमादीनि बहून्युदाहरणानि सन्तीति तेषु प्रसङ्गः। न च सोऽपि तथास्त्येव, तस्य धर्मिसिद्ध्यर्थमुपजीव्यत्वेन बलवत्त्वात्। तद्व्यवच्छेदार्थं स प्रकृतः प्रकरणसम इति कर्तव्यमिति चेत्तथाप्यनुपपत्तिः. अत्र हि यदि 'विशेषो यस्य

---

इति। उपजीव्यत्वेन प्राबल्यस्य सत्प्रतिपक्षताविरोधिनो लाभायेदम्। सत्प्रतिपक्षतापत्तौ नेष्टिः कर्तुं शक्येत्यभिप्रेत्य विशेषणान्तरमाह सदनुमानतयेष्टस्येति। यद्यपि पक्षे साध्याभावव्याप्यवत्त्वभ्रमदशायामनुमितिप्रतिबन्धात्सद्धेतोरपि सत्प्रतिपक्षत्वमिच्छन्ति, तथापि नैतावता तस्य दुष्टत्वमपि यौक्तिकम्, यदाह "निर्युक्तिकस्तु प्रवादो न श्रद्धेय" इति। वस्तुतस्तु प्रकृते सत्प्रतिपक्षताव्यवहारनियामकं निरुच्यते न तु दुष्टतानियामकम्, सत्प्रतिपक्षताव्यवहारश्च सद्धेतुसाधारणोऽगृह्यमाणविशेषतादशायामित्यत्र न कस्यापि विप्रतिपत्तिः, एवञ्च सत्प्रतिपक्षताव्यवहारप्रसङ्गे इष्टापादनपरिहाराय कस्यचित्सद्धेतुत्वाभिधानं नोपयुज्यतेऽपि तु सद्धेतुत्वेन गृहीतत्वस्याप्रकृतत्वस्य वाऽभिधानमिति तत्रैव तात्पर्यं द्रष्टव्यम्, अन्यथा परमाणुर्निरवयवो विश्रान्तपरिमाणतारतम्यादितिप्रकृतहेतोरपि सद्धेतुतया तस्यापि सत्प्रतिपक्षता कुतो नानिष्टा स्यादित्युदासीनानुमानानुसरणं विफलं स्यात्, अत एव 'न च सोऽपी'-त्यादिवक्ष्यमाणं सङ्गच्छते इति। नन्वणुपरिमाणतारतम्यस्य क्वचिद्विश्रान्तिसाध्यकमिदमनुमानं न तु परमाणुनिरवयवत्वसाध्यकमिति प्रकृतसाध्यकानुमितिजनकतावच्छेदकविषयतानाश्रयत्वादेव परिमाणतरतमभावत्वेऽनतिप्रसङ्ग इत्याशङ्कां शमयितुमाह पक्षधर्मतेत्यादि। इतरबाधसहकारेणेतिभावः। व्यापकतावच्छेदकरूपेणैव साध्यस्यानुमितौ भानमिति न नियम इति भावः। अधिकमर्थापत्तिखण्डनशारदायां प्रागावेदितम्। नन्वणुपरिमाणविश्रान्तिधामत्वं त्रुटावेव, तत्रैवापकृष्टपरिमाणनिबन्धनोऽणुत्वव्यवहार इति परमाणुरप्रमाणः, त्रुटिः समवेता चाक्षुषद्रव्यत्वात्, चाक्षुषद्रव्यसमवायिनः समवेताश्चाक्षुषद्रव्यसमवायित्वादित्यनयोरप्रयोजकत्वात्, अन्यथा परमाणुः समवेतचाक्षुषद्रव्यसमवायिसमवायित्वात् कपालिकावदित्याद्यनुमानेनानवस्थितसमवायिपरम्परासिद्ध्यापातात्. तथा च नोक्तानुमानस्य परमाण्वात्मकधर्मिणस्तन्निरवयवत्वस्य च ग्राहकत्वमिति केषाञ्चिन्मतमाशङ्क्याह यश्चेति। सदनुमानतामिति। परमाणुतन्निरवयवत्वयोरित्यादिः। तेन त्रुटितन्निरवयवत्वयोस्तस्य सदनुमानत्वसम्भवेऽपि न क्षतिः। तं प्रति प्रसङ्ग इत्यन्वयः। एवम्प्रायाणि = एवमादीनि। निरवयवत्वे साध्ये त्रुटेःपक्षत्वे उक्तानुमानानामेवोदाहरणत्वसम्भवः। एवमीश्वरः कर्ता बुद्धिमत्त्वादित्युक्ते "नेश्वरो जन्मिनां हेतुरुत्पत्तिविकलत्वतः। गगनाम्भोजवत्सर्वमन्यथा युगपद्भवे"दिति सौगतोक्तेनानुमानेन क्षितिः सकर्तृका कार्यत्वादित्यस्य धर्मिग्राहकतयोपजीव्यस्य सत्प्रतिपक्षितत्वापातः। तथा = सत्प्रतिपक्षितः। बलवत्त्वात् = बलवत्त्वप्रहात्। प्रकृत इति। प्रकृतत्वं बुद्धिस्थत्वम्, तृतीयस्यापि कदाचित्तथात्वम्, प्राथम्योक्तावपि तथैवेति व्यक्तिविशेषे एव तात्पर्यम्, एवञ्चानिश्चितत्वापेक्षविशेषकनिष्ठविषयतानिरूपितेत्यादि वक्तव्यम्, यत्र सत्प्रतिपक्षितत्वं सम्पाद्यं तत्त्वम्। एवञ्च प्रथमहेत्वपेक्षया विशेषस्य द्वितीयहेतावनिश्चयेऽपि तृतीयहेत्वपेक्षया निश्चयेन न तृतीयहेतोर्द्वितीयहेतुना सत्प्रतिपक्षितत्वापत्तिरिति भावः। यद्यप्युक्ततृतीयहेतोः परामर्शदशायां प्रथमहेतोरपि बलवत्त्वप्रहावश्यम्भावेन तदपेक्षयाऽपि कथमनिश्चितविशेषकत्वं द्वितीयहेतोरिति प्रकृतहेत्वपेक्षानिश्चितविशेषकत्वोक्तावपि कथं दोषः, तस्य परामर्शविरहदशायां तु प्रकृतहेत्वपेक्षानिश्चितविशेषकद्वितीयहेतुकपरामर्शविशिष्टपरामर्शविषयत्वस्यैवाभावेन नातिव्याप्तिः, अत एव यथाश्रुतेऽपि न तत्सम्भवः, यदीयसाध्यस्येत्यस्य यल्लिङ्गकपरामर्शविषयीभूतसाध्यस्येत्यर्थक-

न गृह्यते' इति सम्बन्धः, तेन 'यत्सम्बन्धितया न गृह्यते' इत्यर्थो विवक्षितस्तदाऽव्यापकत्वं दोषः, तथाहि—यत्र द्वयोरपि हेत्वोः परमार्थतः साधारणो व्याप्त्यादिभङ्गः सत्प्रतिपक्षतादशायामगृह्यमाणस्तत्र नास्त्येतल्लक्षणम्, नहि तत्र व्याप्त्यादिभङ्गो विशेषः, अपि तु प्रकृतहेतुना सह साधारण एव। नन्वत्यन्तासतो व्याप्त्यादिभङ्गरूपस्य विशेषस्यापि तावत्तत्राग्रहणमस्ति, तदादायैव लक्षणं तद्व्यापि भविष्यति; तर्हि यत्र वादी स्वहेतुसाधारणं व्याप्त्यादिभङ्गदोषं जानन् प्रतिहेतुनिष्ठतया परस्योद्भावयति परश्च परिहर्तुं न शक्नोति, तत्राप्येवं सत्प्रतिपक्षताऽक्षतैव स्यात्, यत उक्तरूपविशेषवत्तया तेनासौ न गृहीतः, उक्तरूपस्य समानतयैव तेन गृहीतत्वात्। तथापि प्रतिहेतुवादिना तावद्विशेषवत्तयैव गृहीतस्तस्य तत्साधारणभावास्फुरणात्, भ्रान्त्यभ्रान्तिसाधारणस्य चात्र ग्रहणमात्रस्य विवक्षितत्वादिति चेन्न, प्रतिहेतुवाद्यभिप्रायेणागृह्यमाणतापक्षस्य प्रागेव निरस्तत्वात्। किञ्च प्रतिहेतुवाद्यपि यदि साधारणतां तस्य दोषस्य तदैव पश्येत्तदा का गतिः। यद्यसौ वादिहेतावपि दोषं पश्येत्तदा तमुद्भावयेत्, तथासति तत्रैव कथासङ्क्रमः स्यात् सत्प्रतिपक्षमुपेक्ष्येति चेन्न, यदि पश्यन्नपि प्रतिवादी तत्र दोषमेवं

---

तायाः एव वक्तव्यत्वेन परामर्शविरहदशायां यत्पदेन तृतीयहेतोरुपादानानुपपत्तेः, तथापि तृतीयहेतोः परामर्शप्राक्क्षणे प्रकृतहेत्वपेक्षानिश्चितविशेषकत्वं द्वितीयहेतावादायातिप्रसङ्गः स्यात्, स्वत्वोपादाने तु परामृश्यमानतृतीयलिङ्गापेक्षानिश्चितविशेषकत्वं न द्वितीये सम्भवतीति न सम्भवत्यतिप्रसङ्ग इति ध्येयम्। यस्येत्यस्य विशेष इत्यनेनान्वय इत्यग्रिमकल्पापेक्षया यदीति प्रयुक्तम्। अत्र यस्येत्यस्य गृह्यते इत्यनेनान्वयः। एवञ्चाग्रिमकल्पेऽनिश्चितस्वापेक्षविशेषकेति यथाश्रुतम्, अत्र तु यत्सम्बन्धितयाऽनिश्चितः स्वापेक्षो विशेषस्तन्निष्ठविषयतानिरूपितेत्यादि वक्तव्यम्। अत्यन्तासत इति। विशेषत्वेनात्यन्तासत्त्वम्, तथा च व्याप्त्यादिभङ्गादिः स्वापेक्षविशेषतया यत्सम्बन्धित्वेनानिश्चितस्तन्निष्ठविषयतानिरूपितेत्यादि विवक्षितमिति भावः। निराचष्टे तर्हीति। न शक्नोतीति। एतेन समबलत्वाप्रतिसन्धानदशामधिशयानतया तत्र सत्प्रतिपक्षत्वाभावो ध्वनितः। उक्तरूपेति। व्याप्त्यादिभङ्गेत्यर्थः। तेन = स्थापनावादिना। असौ = द्वितीयोहेतुः। समानतया = हेतुद्वयवृत्तितया। सत्प्रतिपक्षितत्वस्य पुरुषविशेषनियन्त्रितत्वाभिप्रायेणाशङ्कते तथापीति। भावास्फुरणादिति। स्फुरणे हि हेत्वोः साम्यरक्षार्थं स्थापनाहेतौ स उद्भावयेद्भङ्गं व्याप्त्यादेरिति भावः। ग्रहणमात्रस्येति। नहि दोषदानाय विवक्षाऽपि तु तत्परिहारायेति विशेषतया निश्चयसामान्याभाव एव विवक्षितो न तु प्रमित्यभावः, स च तत्र नास्ति। एवञ्चोक्तस्थले व्याप्त्यादिभङ्गस्य विशेषतया प्रमित्यभावमादाय सत्प्रतिपक्षता तदवस्थेति न वाच्यमिति भावः। निरस्तत्वादिति। स्वप्रयोक्तव्यहेतौ दोषं निश्चिन्वतापि परकीयहेतौ दोषान्तरास्फूर्तौ प्रतिहेतुप्रयोगकरणात्तत्र सत्प्रतिपक्षता न स्यादित्युक्तम्। ननु यदा यत्पुरुषीयतादृशनिश्चयाभावस्तत्पुरुषापेक्षया तदा सत्प्रतिपक्षितत्वे ममाभिप्राय इति नायं दोषो नवा कालान्तरीणतादृशनिश्चयं तदभावञ्चादायापि दोष इत्यस्वरसादाह किञ्चेति। का गतिरिति। वक्ष्यमाणरीत्या वादिहेतौ दोषोद्भावने वा तदनुद्भावने वा प्रतिवादिपराजयस्तावदावश्यकः, भवन्मते तु विशेषत्वेन व्याप्त्यादिभङ्गस्य निश्चयासत्त्वेन सत्प्रतिपक्षतया अक्षतत्वेन स न स्यादिति गूढाभिप्रायः। इमञ्चाजानानः प्रतिवादिपराजयं पर उपपादयति यद्यसाविति। तत्रैव = वादिहेतावुद्भावितदोषसत्त्वासत्त्वे एव। सत्प्रतिपक्षमुपेक्ष्येति। तथा च प्रतिज्ञातसत्प्रतिपक्षतात्यागेनैव प्रतिवादिनः पराजयः,

मन्त्रयेत्—'यदीदानीं सत्प्रतिपक्षतां प्रतिज्ञातां विहाय दोषान्तरमुद्भावयामि तदापि प्रतिज्ञातत्यागान्मम भङ्गः; अथ नोद्भावयामि, तथापि प्रतिज्ञातदोषानिर्वाहान्मम पराजयः'—'तदेवं वृथा दोषान्तरव्युत्पादनायास' इति परामृश्य स तूष्णीमास्ते तदा का गतिः। अथ यस्य विशेष इत्युक्तलक्षणवाक्ये पदसम्बन्धस्तवाभिमतस्तदोक्तस्तावद्दोषः, दोषान्तरञ्च स्यात्, व्याप्त्यभङ्गादेर्विरुद्धार्थहेत्वोः साधारणस्यासम्भवाद्विशेषपदेनाव्यवच्छेदेन सह विशेषणविशेष्यभावानुपपत्तेः।

---

न च परकीयहेतौ दोषोद्भावनं हेत्वोः साम्यप्रतिपत्तिफलकतया सत्प्रतिपक्षताया निर्वाहकमेवेति न प्रतिज्ञातत्यागेन निग्रह इति वाच्यम्, अगृहीताप्रामाण्यकत्वस्य द्वयोः परामर्शयोः सत्त्वे एव सत्प्रतिपक्षतायाः सर्वसम्मतत्वेन प्रकृते च द्वयोरेव विशिष्य दुष्टताग्रहसत्त्वेनाप्रामाण्यग्रहस्यौचित्यावर्जितत्वात्सत्प्रतिपक्षतानिर्वाहासम्भवादिति भावः। खाण्डनिक उक्ताभिप्रायमुद्घाटयति यदीति। दोषं पश्यन्नपीत्यन्वयः। मन्त्रयेत् = चिन्तयेत्। चिन्तामाह यदीत्यादिना व्युत्पादनायास इत्यन्तेन। प्रतिज्ञातत्यागादिति। स्वयं विशिष्याभिहितत्यागरूपेण प्रतिज्ञाहानिसंज्ञकनिग्रहस्थानेनेत्यर्थः। प्रतिज्ञासन्न्यासस्तु नात्र, तस्य प्रतिज्ञातार्थापलापरूपत्वात्। प्रतिज्ञातदोषानिर्वाहादिति। परोद्भावितदोषापरिहारे हि न्यूनबलतया न सत्प्रतिपक्षतेति भावः। अनिर्वाहश्चायं दोषान्तरोद्भावनकल्पेऽपि। प्रतिज्ञाहानिस्तु दोषान्तरानुद्भावनपक्षेऽस्ति न वेति चिन्तनीयम्, यदि स्वयं विशिष्याभिहितस्य परित्यागमात्रं सा, तदा तत्सत्त्वं स्फुटमेव, यदि पराभिहिताभ्यनुज्ञाफलकत्वमप्यपेक्षते, तत्राऽप्यप्रतिषिद्धमनुमतं भवतीति न्यायेन साऽस्त्येव, यदि तु वक्तव्यान्तरमप्यपेक्षते तदा नास्तीति। तूष्णीमास्ते इति। एतेन पराजयध्रौव्यमुक्तम्। कागतिरिति। भवदुक्तसत्प्रतिपक्षतायास्तत्र निर्वाहत्वेन पराजयो न स्यादिति भावः। वस्तुतस्तु पराजयस्य तत्र प्रतिज्ञाहान्यादिनापि सम्भवेन सत्प्रतिपक्षलक्षणातिव्याप्तावेव तात्पर्यम्। यस्य विशेष इति। स्वापेक्षानिश्चितव्याप्तिभङ्गादिविशेषकत्वं यथाश्रुतमेवेत्यर्थः। उक्त इति। अत्रार्थे व्याप्त्यादिभङ्गस्य विशेषस्य सत एव प्रतिहेतावपेक्षणीयत्वेनेत्यर्थः। व्याप्त्यभङ्गादेरिति। व्याप्त्यभङ्गस्य हेतुद्वयसाधारण्यस्थले विशेषत्वासम्भवेनाव्याप्तिरित्यर्थः। व्याप्त्यभङ्गस्य पक्षधर्मत्वाभङ्गस्य चेत्यर्थः। तेन व्याप्त्यादिभङ्गस्य क्वचित्साधारण्यसम्भवेऽपि न क्षतिः। विरुद्धार्थहेत्वोः = विरुद्धार्थधीसमर्थपरामर्शविषयीभूतहेत्वोः। ननु विशेषत्वमविवक्षणीयम्, एवञ्च स्वापेक्षेत्यपि त्याज्यमेव, परामर्शद्वयेऽगृहीताप्रामाण्यकत्वघटितं परस्परप्रयुक्तप्रतिरुद्धकार्यकत्वघटितं वा लक्षणं तु स्यात्, द्वयोरेव दुष्टत्वग्रहे तु न परामर्शयोरप्रामाण्याग्रहो नवा प्रतिरुद्धकार्यकत्वं भवदपि तत्र परस्परप्रयुक्तम्, अपि त्वप्रामाण्यग्रहप्रयुक्तम्, एवञ्च व्यतिरेकव्याप्तिर्वाऽन्वयव्याप्तिर्वा व्याप्त्यादिभङ्गाभङ्गे प्रविष्टेत्यादिविकल्पस्य तयोरन्यतरभङ्गस्य निश्चयदशायामपरतरभङ्गानिश्चयमादाय दोषोऽपि नावतारणीयः, अत एव—विशिष्यानिश्चितव्याप्त्यादिभङ्गादिकप्रकृतसाध्यानुमितियोग्यबलशालित्वे सति विशिष्यानिश्चितव्याप्त्यादिभङ्गादिकप्रकृतसाध्याभावानुमितियोग्यबलशालिहेत्वन्तरकत्वम्, अन्यतरत्वेन भङ्गनिश्चयेन विशिष्येत्युक्तमित्यपि नोच्यते; दोषान्तराणि चेहोक्तप्रायाणीति चेन्न, अगृहीताप्रामाण्यकत्वादिघटितलक्षणस्यापि निरस्तत्वात्।

व्याप्त्यादिभङ्गादिः स्वापेक्षविशेषतया यत्सम्बन्धित्वेनानुद्भावितस्तन्निष्ठविषयतानिरूपिते-त्यादिविवक्षायां व्याप्त्यादिभङ्गस्य हेतुद्वयसाधारण्यावगमस्थले उक्ताया अतिव्याप्तेर्न प्रसरः, तत्र स्वापेक्षविशेषतया प्रतिहेतुसम्बन्धित्वेन व्याप्त्यादिभङ्गस्य निश्चयाभावेऽप्युद्भावनस्य सद्भावादित्यनि-

अथोच्यते—व्याप्तिपक्षधर्मताभङ्गाभङ्गरूपप्रकृतहेत्वपेक्षविशेषवत्तयाऽनुद्भाव्यमानेन बोधितो यदीयसाध्यस्य विपर्ययः स प्रकृतः सत्प्रतिपक्ष इति, तदपि नोपपन्नम्, यदि परः 'त्वदीयोऽयं प्रतिहेतुरित्थं भग्नव्याप्तिक' इत्येवाभिधत्ते न तु 'मद्धेतुतोऽयं विशेष' इत्यपि ब्रूते, आभासत्वव्युत्पादनादेव प्रतिहेतोः सत्प्रतिपक्षताभङ्गात्, तदापीत्थं सत्प्रतिपक्षता न निवर्तेत, तथा सति च प्रतीयमानासिद्ध्यादिनापि सत्प्रतिपक्षीकरणमिति साधु व्युत्पादितं सर्वानुमानानुकूलं स्यात्। किञ्च कस्मिन् काले तथानुद्भाव्यमानत्वमपेक्षितम्? यदि यदा प्रतिहेतूद्भावनेन परहेतुं दूषयति प्रतिवादी तस्मिन् कालेऽनुद्भावनम्, तदा पश्चादुक्तेऽपि प्रतिहेतुदोषे पूर्वकालिकानुद्भावने प्रतीकारो न कश्चिदिति सर्वहेत्वाभासैः सत्प्रतिपक्षीकरणमदुष्टमिति गतमनुमानकथया। अथ प्रतिवादिनाऽभिहिते यदा पुनर्वादिवचनावसरः, तदानुद्भावनमिष्टम्, तर्हि तत्कथमग्रे प्रत्यनुमानवादिनावधारणीयम् 'अयमत्र विशेषतो दोषं नोद्भावयिष्यतो'ति। दोषशून्यत्वात्स्वकीयस्य प्रतिहेतोः समर्थस्तथाऽवधारयितुमिति चेत्, उक्तमत्र प्रतीतदोषेणापि सत्प्रतिपक्षताकरणं सम्भवति, तत्र परेण दोषेऽनुद्भाविते विजयश्च भवतीति। किञ्च विशेषदोषशून्यत्वमपि स्वकीयहेतोः कथमयमवधारयेत्, विरुद्धार्थयोस्तावद्धेत्वोरेकस्यावश्यं दोषेण भाव्यम्, तत्र यथा तेन स्वहेतौ दोषो न दृश्यते तथा परहेतावपि, तद्दर्शने तमेवोद्भावयेत्, कोहि सचेता निश्चितं दोषमुपेक्ष्य सदोषस्य निर्दोषसाम्येन प्रत्यवतिष्ठते, तस्मात्सदोषेऽपि दोषमपश्यन्नयं न स्वेनादर्शनं दोषाभावे प्रमाणयितुमर्ह-

---

प्रायेणाशङ्कते अथेत्यादिना। तदापीति। इदमुपलक्षणम्—स्वार्थे व्याप्यादिभङ्गस्य सर्वथैवोद्भावनं नास्ति, अपि तु प्रतीतिरेवेति तत्राप्यतिव्याप्तेः। सर्वेति परार्थसर्वपरम्, स्वार्थे प्रतीयमानासिद्ध्यादिकहेत्वन्तरोपस्थितेरनियमात्। ननु विशेषतयाऽनुद्भावितत्वं नाम विशेषत्वप्रकारकप्रतीतियोग्योद्भावनविषयत्वाभावः, त्वद्धेतुर्भग्नव्याप्तिक इत्युद्भावनमपि तादृशप्रतीतियोग्यमेवेति नोक्तातिप्रसङ्गः, व्याप्यादिभङ्गस्य हेतुद्वयसाधारण्यग्रहस्थलेऽपि तादृशयोग्यत्वमुद्भावनेऽक्षतमेव, न च तथापि स्वार्थेऽतिप्रसङ्गतादवस्थ्यम्, परार्थस्थलीयसत्प्रतिपक्षताया एवेत्थं निर्वक्तव्यत्वादित्यरुचेराह किञ्चेति। पूर्वकालिकानुद्भावने प्रतीकारः = पूर्वकालिकानुद्भावनविघटकः। अनुमानकथया = परार्थानुमानेन। अग्रे = सत्प्रतिपक्षताप्रतिज्ञातः पूर्वम्। विशेषतः = विशेषत्वप्रकारकप्रतीतियोग्यं यथा स्यात्तथेत्यर्थः। तथा च सत्प्रतिपक्षतां प्रतिज्ञाय तद्व्युत्पादनासम्भव इति भावः। अवधारणोपायमाशङ्कते दोषशून्यत्वादिति। दोषशून्यत्वग्रहादित्यर्थः। यद्यप्यसन्तमपि दोषं कदाचिदुद्भावयति परः, न च तदुद्भावनं दोषस्य विशेषतः प्रत्ययं नार्जयति जने दोषशून्यत्वं गृहीतवतीति वाच्यम्; माऽर्जयतु, योग्यताया अक्षतत्वात्, न हि प्रतिबन्धकसमवधाने योग्यताऽपगच्छति, तथापि स्फुटत्वादेतदुपेक्ष्याह उक्तमत्रेति। सम्भवतीति। इत्थं सत्प्रतिपक्षत्वकरणस्य निष्फलत्वेनाभावमाशङ्क्याह तत्रेति। न केवलं विशिष्य निश्चितदोषेण सत्प्रतिपक्षेऽपि त्वन्यत्रापि सत्प्रतिपक्षे दोषशून्यत्वनिश्चयासम्भव इत्याह किञ्चेति। विशेषेति विशेषतदृश्यर्थकं सत्तात्पर्यतोऽवधारयेदित्यत्रान्वेति। उपेक्ष्य = अनुद्भाव्य। सदोषस्य = सदोषतया निश्चितस्य परकीयहेतोः। निर्दोषसाम्येन प्रत्यवस्थानं निर्दोषतया निश्चितस्वकीयहेतुना साम्यप्रतिपत्तिफलकं सत्प्रतिपक्षीकरणम्। अधिकबलत्वस्य स्वकीये हेतौ बोधनसम्भवे समबलत्वं न बोधयितुमुचितमिति भावः। सदोषेऽपि = सदोषत्वेन सम्भाव्यमानेऽपि परहेतौ। अपश्यन्निति। विशिष्यानिश्चि-

तीति । अथोच्यते—व्याप्तिपक्षधर्मताभङ्गाभङ्गरूपप्रकृतहेत्वपेक्षविशेषवत्त्वेनानुद्भाव्यतया सम्भाव्यमानेन बाधितो यदीयसाध्यस्य विपर्ययः स प्रकृतः प्रकरणसम इति; नैतदपि सुस्थम्. यद्युद्भावनकालात्पूर्वकालिकी सम्भावना विवक्षिता, तदा तात्कालिकानुद्भावनपक्षोक्त एव दोषोऽतिदेष्टव्यः; अथोद्भावनस्य योऽवसरो भविष्यति तात्कालिकतया, तदा सत्प्रतिपक्षताव्युत्पादनकाले सा नास्तीति विशेषणाभावाल्लक्षणाभावः। अथोच्यते-यावत्सम्भावनाऽनुवर्तते तावत्सत्प्रतिपक्षता किं सम्भावनायाः कालनियमगवेषणेन। नैवम्, एवं हि प्रतिहेतौ दोषेऽनुद्भाविते प्रत्युत निर्दोषतयैव स्वीकृते दोषानुद्भावनसम्भावनाया निवृत्तेः सत्प्रतिपक्षता व्यावर्तेत, तथा चेत्थङ्कारमेव वादी सत्प्रतिपक्षतां परिहरेदिति साधु स्यात्, सत्प्रतिहेतोः प्रतिक्षेपमकृत्वा स्वीकृत्यैव तं सत्प्रतिपक्षता प्रतिक्षिप्तव्येति। न च स्वीकारादेव प्रतिहेतोः पराजयः स्यात्; सत्प्रतिपक्षतापरिहारोपायतया स्वीकारस्य करणात्, स्वीकारे सति सम्भावनानिवृत्त्या तल्लक्षणकस्य सत्प्रतिपक्षत्वस्यापि निवृत्तेः, तस्मात्स्वीकारोऽप्ययं परस्यानिष्टार्थं सिद्धसाधने परकीयसाध्यस्वी-

---

न्वत् । एतेन मदीयोहेतुरदुष्टो मया दोषवत्त्वेन विशिष्यानिश्चितत्वादित्यत्र सन्दिग्धानैकान्तिकत्वमुक्तम्। अनुकूलतर्काभावकाले साध्याभावसन्देहवति हेतुनिश्चयेऽपि तस्य दोषत्वात् । अत एव योग्यानुपलब्ध्यापि न दोषविरहावगमः, सदोषत्वसम्भावनायाः सत्त्वात् । अयं = प्रतिहेतुप्रयोक्ता। ननु दोषानुद्भावनस्य प्रथमं निश्चेतुमशक्यत्वेऽपि तत्सम्भावनामादायैव प्रतिहेतुप्रयोगः स्यात्, सत्प्रतिपक्षितत्वप्रतिज्ञानञ्च, मा वा तद्भूत्, तेन विनाऽपि प्रतिहेतुप्रयोगे पश्चात्परेण दोषानुद्भावनेऽभीष्टसिद्धेरित्यभिप्रायेणाशङ्कते अथेत्यादि । सम्भाव्यमानेनेति । यद्यपि सम्भावनाया लक्षणे निवेशं विनापि पूर्वोक्तदोषोद्धारसम्भवः। प्रत्युत तन्निवेशे पूर्वं तद्ग्रहस्याप्यपेक्षणीयतापत्तिः, स्वरूपसत्येव च सोपयुज्यमानौचितीमातनोति, तथापि लक्षणं सम्भावनाघटितमेवेह व्याख्येयमुत्तरग्रन्थसामञ्जस्याय, ज्ञानं हि स्वनिष्ठसम्भावनाया न दुर्लभम्। तथा च व्याप्त्यादिभङ्गादिः स्वापेक्षविशेषतया यत्सम्बन्धित्वेनानुद्भाव्यतया सम्भावितस्तन्निष्ठविषयतानिरूपितेत्यादिलक्षणं द्रष्टव्यम्। उद्भावनकालादिति । स्थापनाहेतुप्रयोग इत्याद्या कक्ष्या, प्रतिहेतूपन्यास इति द्वितीया, प्रतिहेतौ दोषोद्भावनमिति तृतीया, तत्कालादित्यर्थः। तात्कालिकेति। तृतीयकक्ष्याप्राक्कालिकेत्यर्थः। अतिदेष्टव्य इति। तृतीयकक्ष्यायां दोषोद्भावनेऽपि सत्प्रतिपक्षता न निवर्तेत, तत्प्राक्कालिकया दोषानुद्भावनसम्भावनया घटितस्य लक्षणस्य सद्भावादिति भावः। योऽवसर इति। तृतीयकक्ष्येत्यर्थः। तात्कालिकतयेति। दोषानुद्भावनसम्भावना विवक्षितेत्यनुषङ्गः। सत्प्रतिपक्षताव्युत्पादनकाले इति। द्वितीयकक्ष्यायामित्यर्थः। सा = तृतीयकक्ष्याकालिकी सम्भावना। लक्षणाभावः=लक्षणव्युत्पादनासम्भवः। द्वितीयकक्ष्याकाले तृतीयकक्ष्याकालिकसम्भावनासत्त्वस्य निश्चेतुमशक्यत्वादिति भावः। केचित्तु—यत्र स्थापनावादिनोक्तं प्रतिहेतौ दूषणं प्रतिवादिदूष्यस्य सत्प्रतिपक्षत्वमेव द्रढयति तत्र दोषस्योद्भावितत्वात्तदनुद्भावनसम्भावनारूपविशेषणाभावात्सत्प्रतिपक्षलक्षणाव्याप्तिरिति व्याचक्रुः। निवृत्तेरिति। दोषानुद्भावननिश्चयस्य संशयविशेषरूपतत्सम्भावनाप्रतिबन्धकत्वादिति भावः। सत्प्रतिहेतोः = दोषवत्तयाऽप्रतीयमानप्रतिहेतोः । प्रतिक्षेप्तव्येति साधु स्यादित्यन्वयः। एवं प्रतिक्षेपो हि कदापि नेष्टः। स्वीकारादेवेति । निर्दोषतयेत्यादिः। पराजय इति। मतानुज्ञया निग्रह इत्यर्थः। स्थापनावादिन इत्यादिः। सिद्धेति। सिद्धसाधनमभिदधतो न निग्रहोऽपि तु प्रतिवादिन एव, अबुभुत्सितार्थकथनात्। अत एव तस्य पुरुषदोषत्वं न तु प्रमाणदोष-

कारवदुरुगुणाय स्वीकर्तुं नं दोषायेति ।

यदि च सत्प्रतिपक्षो वादिनोः समानबलप्रतिपक्षदर्शनजनितात्स्वहेतावाभासत्व-संशयात्, तदा क्वचिदपि नास्ति सत्प्रतिपक्षता, स्वहेतुपक्षपातेन परहेतावेव दोषः कश्चिदस्ति मया तु न गृह्यते इति ताभ्यां मन्यमानत्वात्, यदाह "निश्चितौ हि वादं कुरुत" इति । अथौचित्यादावर्जितसंशयेन सत्प्रतिपक्षता स्यात्; तदा सर्वत्रैव वादे

---

स्वमिति निष्कर्षानुसारिणः । न दोषायेति । निग्रहो हि न्यग्भावः, विजयफलकं च परमतानुज्ञानं प्रकृत इति न तस्य निग्राहकत्वमिति भावः । यदि तु सत्प्रतिपक्षतापरिहारोपायतया परमतस्वीकरणं वृश्चिक-भिया पलायमानस्याशीविषमुखे सन्निपतनमेव, सत्प्रतिपक्षताकरणं हि परमतसिद्धिविघटनाय, स्थापना-वादिना प्रतिहेतोरेव निर्दोषत्वस्वीकारे तु मा नाम तिष्ठतु सत्प्रतिपक्षता, तया साधनीयं तु सिद्धमेव, अत एव विमतः पाकः पाकपूर्वकालीनः पाकत्वादतीतपाकवदित्यत्र चरमपाके व्यभिचारज्ञानस्य साध्य-सिद्धयुपजीवकतयाऽदोषत्वमाहुः, किञ्च प्रतिहेतोर्निर्दोषत्वस्वीकारे तेनाधिकबलेन बाध एवैष्टव्यः स्थापना-नुमानस्येति सत्प्रतिपक्षतारक्षणं तत्र कस्मै रोचेत । आस्तां वा कथमपि तुल्यायव्ययत्वमेव, सिद्धसाध-नेऽपि पूर्वमस्वीकृतस्य स्वीकारं न निग्रहस्थानान्तरासंस्पर्शिनमोक्षामहे इति नेदं मानसमावर्जयति निरसनम्, तदापि परामर्शद्वयेऽन्यतरस्मिन् वाऽप्रामाण्यग्रहेऽपि कदाचिद्व्याप्त्यादिभङ्गस्यानुद्भाव्यतया सम्भावितत्वसम्भवेनातिप्रसङ्गः, व्याप्तिविशेषप्रवेशनियन्धनोऽप्रामाण्यग्रहप्रवेशनिबन्धनश्च दूषणसमूहः, स्वार्थस्थले सत्प्रतिपक्षतान्तरस्य निर्वचनासम्भवेन तत्रत्यसत्प्रतिपक्षासङ्ग्रहश्चेत्यादिकं द्रष्टव्यम् ।

फलद्वारकं लक्षणं निराकरोति यदीत्यादिना । समानबलेति । समानबलत्वेनेत्यर्थः । प्रतिपक्षः = प्रतिहेतुः, तत्त्वञ्च द्वयोरेव परस्परम् । स्वहेताविति स्वत्वमकिञ्चित्करम्, तथा च हेतुद्वय-लाभः । स्वहेतौ समीचीनत्वस्य परहेतौ चासमीचीनत्वस्याभिमाने हेतुद्वये आभासत्वानाभासत्वसंशया-सम्भवेनाग्रिमग्रन्थसाप्रज्ञस्यात् । आभासत्वसंशयादिति । अनैकान्तिके तु साध्यसंशय इति भावः । सत्प्रतिपक्षो दूषणमित्यध्याहृत्य सम्बन्धः । विरोधिपरामर्शद्वयसम्वलनमनुमित्यनजकमिति तदर्थः । पञ्चम्यर्थप्रयोज्यत्वस्य चानजकत्वेऽन्वयः । यद्यपि 'अनयोर्हेत्वोः कः समीचीन' इति जिज्ञासामेवोदयना-चार्याः सत्प्रतिपक्षफलतयोपवर्णितवन्तः, तथापि सा समीहितोपायतामतिजन्या, समीहितश्च प्रकृते दुःखाभावः, दुःखजनकश्च हेत्वोःसमीचीनत्वासमीचीनत्वसंशय इति स एव प्रथमोपस्थितत्वात्फलत्वेनोक्तः, तथा च प्रकृतहेतुसमीचीनत्वासमीचीनत्वसंशयजनकोपस्थितिः सत्प्रतिपक्ष इत्यर्थः । नास्ति = न स्यात् । पक्षपातेनेति । समीचीनत्वाभिमानेनेत्यर्थः । मन्यमानत्वादिति सम्बन्धः । यदाहेति । तात्पर्यटीकाकृदिति शेषः । वादं = कथाम् । ननु विशिष्यैकतरहेतौ दोषादर्शनदशायां स्यादेव संशयः, सामग्रीसत्त्वात्, अत एव "निश्चिता"वित्यस्य निश्चयवन्ताविति नार्थः, किन्तु निश्चयवत्त्वेन स्वज्ञाप-काविति, अत एव स्वोत्कटताख्यापनार्थं परपक्षमालम्ब्यापि कथायां प्रवृत्तिर्दृश्यते इत्याशयेनाह अथेति । औचित्यादावर्जितेति । स्वसामग्रीवशनिष्पन्नेत्यर्थः । वादे = कथायाम् । स्वार्थे विरोधि-परामर्शात्मकोपस्थित्यनियमादिदमुक्तम् । परार्थे तु यत्र सत्प्रतिपक्षमकृत्वा व्यभिचारादिदोषान्तरेणैव स्थापना येन निरस्यते, तत्रापि तदनन्तरं तेन स्वमतस्थापनाऽपि कार्यैवेति न विरोध्युपस्थितिर्दुर्लभा, किन्त्वेवं वितण्डायां न सम्भव इति तदतिरिक्ततया सर्वपदसङ्कोचः समुचितः, अथ सूक्ष्मविषयेषु विचार-काणां विप्रतिपत्तयो दृश्यन्ते इति कथा अपि तेष्वेव, न स्वनायाससाध्यदुष्टताङ्गसिकेषु, तथा च स्वस्वधीचमत्कारानुसारिणोऽनुमानस्याप्रतिष्ठादौस्थ्यमनुभवतां वादिनां प्रकृतसाध्याभावव्याप्योऽपि

सर्वानुमानानां सत्प्रतिपक्षता दुर्निवारा, तद्यथा शब्दानित्यत्वानुमानेन बुद्धिमद्भिः शतशः शब्दनित्यत्ववादिजयाच्छब्दनित्यत्वानुमानेन च प्राज्ञैः शतशः शब्दानित्यत्ववादिजयाद्द्वयोः पक्षयोरनुमानेषु कतरद्वस्तुतः सदनुमानमित्यर्हतो दोषसंशयस्य दुर्वारत्वादिति।

---

कश्चिदत्र भवेदिति सम्भावना दुर्निवारा, अतएव 'बुद्धिमद्भि' रिति 'प्राज्ञैरि'ति च विशेषणयोरपि स्वरसः साधीयनिति वितण्डायामपि विरोध्युपस्थितिः सम्भवतीति चेत्सत्यम्, तथाप्युपस्थितिरिह न सम्भावनासाधारणी विवक्षणीया, अपि तु निश्चयरूपैवेति कथमेवम्। यद्यपि हेतौ समीचीनत्वासमीचीनत्वसन्देहः परामर्शे प्रामाण्याप्रामाण्यसन्देहे पर्यवसन्नः, स च विषयसन्देहे, तथापि प्रामाण्याप्रामाण्यसन्देहानन्तरमेव विषयसन्देह इति समीचीनत्वासमीचीनत्वसन्देहजनकत्वं निश्चयात्मनः परामर्शस्यैवेति निश्चयत्वविवक्षायामसम्भवो नोद्भावनीय इति। सदनुमानं=समीचीनं, प्रमितव्याप्तिपक्षधर्मताकमिति यावत्। इतीति। इतिजिज्ञासाप्रयोजकस्येत्यर्थः। अर्हतः = औचित्यप्राप्तस्य, स्वसामग्रीवशान्निष्पन्नस्येति यावत्। दोषसंशयस्य = समीचीनत्वासमीचीनत्वसंशयस्य। ननूक्तरीत्या सम्भावनासाधारणोपस्थितेरविवक्षणीयत्वेन विरोधिपरामर्शस्यैवोपस्थितिपदेनोपादेयत्वे तद्दशायां सत्प्रतिपक्षत्वमिष्टमेव, तत्र विशिष्याप्रामाण्यग्रहदशायां हि तन्नेष्टम् तदा च न हेत्वोः समीचीनत्वासमीचीनत्वसंशयोऽपि; अथ—प्रथमोपस्थितत्वाद्यथा जिज्ञासामपास्य संशयस्य फलत्वमुक्तम्, यथा चैकत्र व्याप्त्यादिविरहज्ञानद्वारा विरोधिपरामर्शस्य दूषकतां नानुमन्यन्ते, अनुमितिप्रतिरोधस्य प्रथममावश्यकतया साक्षादेव विरोधिपरामर्शस्य दूषकत्वौचित्यात्, अन्यथा व्याप्तिपक्षधर्मताविरहज्ञानात्पूर्वमनुमित्युत्पत्त्यापत्तेः, तथोक्तसंशयस्यापि फलत्वं नोचितम्, अपि त्वनुमितिप्रतिरोधस्यैव प्राथमिकस्य, न च संशयात्मानुमितिरुत्पद्यते न वेति दुर्निश्चेयमेवेति निवेदितं हेत्वाभासपाञ्चविध्योपपादनेऽधस्तादिति नानुमितिप्रतिरोधस्यापि वक्तुं शक्या फलतेति वाच्यम्, अनुमितिसामान्यप्रतिरोधस्य ह्येवं फलता मा भूत्, निर्णयात्मकानुमितिप्रतिरोधस्य तु सा स्यादेवेतिचेदस्त्वेवम्, तथापि तत्प्रतिरोधप्रयोजकोपस्थितित्वं लक्षणम्, बाधादिग्रहस्याप्यनुमितिप्रतिबन्धकत्वेनातिव्याप्तेः, उक्तसंशयजिज्ञासयोस्तु सत्प्रतिपक्षे आनुभविकतया तत्प्रयोजकत्वघटितलक्षणे न किञ्चिद्दूषणमुक्तमेतावतेति चेन्न; प्रतिबन्धकविशेषसम्भवेन तादृशसंशयजिज्ञासयोरुपधानस्य सर्वत्र सत्प्रतिपक्षेऽनियतत्वेन तद्घटितलक्षणस्याव्याप्तत्वेन स्वरूपयोग्यताया विवक्षणीयत्वे एकतरपरामर्शदशायामपि सत्प्रतिपक्षितत्वापत्तेः, तस्यापि तादृशसंशयजिज्ञासयोः स्वरूपयोग्यत्वात्। नच—यादृशपरामर्शसहकारेण यादृशपरामर्शस्य तादृशसंशयं तादृशजिज्ञासां वा प्रति प्रयोजकत्वं तादृशपरामर्शसहिततादृशपरामर्शो विवक्षणीय इति नोक्तदोषः, न च परामर्शत्वस्य व्याप्त्यादिना घटितत्वेन तस्य चाननुगतत्वेनैकोपादानेऽव्याससङ्ग्रह इति वाच्यम्, परामर्शत्वस्य स्थानेऽनुमितिचरमकारणत्वस्य वक्तव्यत्वादिति—वाच्यम्; साहित्यं तावदेकक्षणावच्छेदेनैकात्मवृत्तित्वं वक्तव्यम्, अन्यथा स्थूलकालमुपादाय दिनान्तरादिवर्तिविरोधिपरामर्शस्यापि सत्प्रतिपक्षताप्रयोजकत्वापातात्, भेदगर्भं च न साहित्यं वाच्यम्, परामर्शयोर्यौगपद्यस्य क्रमिकोत्पत्तिमतोर्धैकक्षणवृत्तित्वस्यासम्भवेन समूहालम्बनात्मकस्यैव हेतुद्वयविषयकपरामर्शस्य प्रतिरोधादिप्रयोजकताया वक्तव्यत्वात्, एवञ्चोक्तरीत्या प्रयोजकत्वस्योपधानरूपस्य विवक्षितुमशक्यत्वेनैकतरपरामर्शेऽपि तादृशप्रयोजकतावति प्रोक्तस्वसाहित्यमादायातिप्रसङ्गः। किञ्च साक्षात्कारित्वखण्डने निवेदितदिशाऽनुगतधर्ममात्रस्य दुर्वचत्वेनानुमितित्वस्य प्रतिव्यक्तिविश्रान्तस्यैव वक्तव्यत्वेनैकानुमितिव्यक्त्युपादानेऽपरव्यक्तिचरमकारणानुपग्रहः, साध्यादिभेदेव्याप्तिप्रकारकपक्षधर्मतानिश्चयजन्यत्वघटितत्वेऽपि तस्यैकव्याप्त्युपादानेऽपरासङ्ग्रह एव,

इति सत्प्रतिपक्षखण्डनम् ।

---

नान्वयव्यतिरेकभेदेन च व्याप्तेर्भिन्नत्वात् । किञ्चानुमितिचरमकारणत्वं नामानुमितिजनकत्वे सत्यनुमितिजनकजनकान्यत्वम्; तच्च सामान्याभावस्याधस्तान्निरस्तत्वेनानुमितिजनकपरामर्शजनकव्याप्तिस्मृत्यादिसाधारणमेवोभयाभावादिकमादायेति परामर्शत्वेनैव निवेशो विधेय इति नानुगमवार्ताऽपीति कृतमतिपल्लवितेन ।

एवं विभाजकमपि लक्षणं निराकार्यम्, तथाहि—साध्याभावव्याप्यवान् पक्षः, साध्यवदन्यत्वव्याप्यवान् पक्षः, पक्षनिष्ठः साध्याभावव्याप्यः, पक्षनिष्ठः साध्यवदन्यत्वव्याप्य इत्येवमादीनां सत्प्रतिपक्षत्वेन तेषामनुगमायेत्थं प्रयस्यते परैः, प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्यतावच्छेदकधर्मावच्छिन्नविधेयताकानुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकता यद्रूपावच्छिन्नविषयित्वव्यापिका तद्रूपवत्त्वे सति प्रकृतपक्षतावच्छेदकविशिष्टपक्षग्रहत्वाव्यापकप्रकृतसाध्यतावच्छेदकविशिष्टसाध्यग्रहत्वाव्यापकप्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रकारताशाल्यनुमितित्वव्यापकप्रतिबध्यतानिरूपितप्रतिबन्धकत्वं यद्रूपावच्छिन्नविषयकत्वव्यापकं तद्रूपावच्छिन्नविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकरूपवत्त्वं सत्प्रतिपक्षत्वम्, अत्र सत्यन्तदलघटिका प्रतिबन्धकतावच्छेदकविषयिता सत्प्रतिपक्षीया, विशेष्यदलघटकानुमितीयविषयिता तु बाधीया, साध्याभावव्याप्यवान् पक्ष इत्यादिसत्प्रतिपक्षप्रत्ययानां साध्याभाववान् पक्ष इत्यादिबाधविषयकानुमितिजनकत्वात् । साध्याभावव्याप्यव्याप्यवत्पक्षादेर्व्युदासाय सत्यन्तम् । पक्षे पक्षतावच्छेदकाभावरूपाश्रयासिद्धेः साध्ये साध्यतावच्छेदकाभावरूपसाध्याप्रसिद्धेश्च विषयिताया अपि पक्षे साध्यवत्तानुमितिप्रतिबन्धकतावच्छेदकतया तयोरुक्तलक्षणेऽतिव्याप्तिवारणाय ग्रहत्वाव्यापकान्तद्वयं प्रतिबध्यताविशेषणमिति । अत्र ह्रदान्यो ह्रदो वह्निमानित्याद्याहार्यत्वेनाप्रतिबन्धे यः सत्प्रतिपक्षस्तत्राव्याप्तेर्वारणाय तु यद्रूपावच्छिन्नविषयकनिश्चयाव्यवहितोत्तरानुमितिसामान्ये विरोधिविषयिताप्रयुक्तः पक्षे साध्यवैशिष्ट्यावगाहित्वाभावस्तद्रूपवत्त्वे सति तादृशरूपावच्छिन्नविषयकानुमितित्वावच्छिन्नजन्यतानिरूपितजनकतानतिरिक्तवृत्तिविषयितानिरूपकतावच्छेदकरूपवत्त्वं वक्तव्यम्, सत्यन्तस्य बाधसाधारण्याद्विशेष्यदलम्, पक्षे पक्षतावच्छेदकवैशिष्ट्यावगाहित्वाभावावृत्तित्वं साध्ये साध्यतावच्छेदकवैशिष्ट्यावगाहित्वाभावावृत्तित्वञ्च विरोधिविषयिताप्रयुक्तत्वे निवेश्यम्, तेनाश्रयासिद्ध्याद्युन्नायके नातिव्याप्तिरिति, अत्र यादृशस्थले दोषनिश्चयाव्यवहितोत्तरक्षणेऽनुमित्यप्रसिद्धिस्तत्राव्याप्तिः, अनुमितिस्थलेऽनाहार्यदोषविशेषाजन्यज्ञानोक्तावपि तथैव, सर्वत्र दोषनिश्चयाव्यवहितोत्तरक्षणे तादृशज्ञानमुत्पद्यते एवेत्यस्यासर्वज्ञेन वक्तुमशक्यत्वात्, निद्रामूर्च्छादिप्रतिबन्धकानां सुप्रसिद्धत्वात् । न च कस्यापि पुंसो यादृशस्थलीयदोषनिश्चयाव्यवहितोत्तरक्षणे उक्तज्ञानाप्रसिद्धिस्तादृशस्थलस्य भवतापि विशिष्य निरूपणासम्भव एवेति वाच्यम्, एवं व्याप्तिनिश्चयो मा भूत्संशयस्तु केन वार्यते, न च सम्भाव्यमानदोषमपि लक्षणं परीक्षकैराद्रियते । प्रतिबध्यप्रतिबन्धकभावमात्रस्य स्वप्ने व्यभिचारितयाऽसम्भवः, प्रत्येकमिलितविकल्पानुपपत्तिः, विशिष्टान्तराघटितत्वादेरिहापि निवेशनीयत्वेन तन्निबन्धनदोषाः, सामान्याभावस्य खण्डितत्वेन पक्षादौ पक्षतावच्छेदकादिवैशिष्ट्यावगाहित्वाभावे वर्तमानेऽपि विरोधिविषयताप्रयुक्तत्वे उभयाभावादिकमादाय तादृशवैशिष्ट्यावगाहित्वाभाववृत्तित्वामात्रस्य सम्पाद्यतयाऽऽश्रयासिद्ध्याद्युन्नायकेऽतिव्याप्तिश्चेत्यादिकं स्वधस्तान्निवेदितदिशैव द्रष्टव्यमिति संक्षेपः । इति खण्डनशारदायां सत्प्रतिपक्षखण्डनम् ।

## बाधखण्डनम् ।

प्रकारभेदाभावाच्च न कालात्ययापदिष्टः पृथक्, तद्यथा बाधितविषयः कालात्ययापदिष्ट इत्यलक्षणम्, तथाहि—बाधितविषयत्वं किं विवक्षितम्? न तावद्बलवता बोधितो विषयविपर्ययो यस्य तत्त्वम्, यथाश्रुतस्य सत्प्रतिपक्षेऽपि गतत्वात् । तत्र प्रत्यनुमानस्य प्रथमानुमानविपर्ययबोधकस्य पक्षधर्मतादिबलसम्भवात् । अथ बलवतेत्यधिकबलेनेति विवक्षितम्, तदापि केवलव्यतिरेकिणोऽन्वयव्यतिरेकिणा स प्रतिपक्षे गतत्वादतिव्यापकत्वम्, तत्रान्वयव्यतिरेकिणः प्रतिहेतोः सपक्षसत्त्वलक्षणबलाधिक्यसम्भवात् । किञ्चैवं प्रत्यक्षेणानुमानाभासबाधो न स्यात्, प्रत्यक्षस्येन्द्रियार्थसन्निकर्षोत्पन्नाभ्रान्तज्ञानकरणत्वमात्रं बलम्, अनुमानस्य तु पक्षधर्मत्वादि भूयिष्ठं बलमिति । अथ मन्यसे—अनन्यथासिद्धत्वं बलं विवक्षित्वेदमुच्यते, तेनानन्यथासिद्धेन बोधितो यदीयसाध्यस्य व्यतिरेकस्तत्त्वं बाधितविषयत्वमिति; मैवम्, तथापि वस्तुतोऽनन्यथा-

---

प्रकारभेदेति । हेत्वाभासान्तरलक्षणभिन्नलक्षणकत्वेत्यर्थः । कालात्ययो मरणम्, पक्षे साध्याभाव इति यावत्, तस्मिन् सत्यपदिष्टः प्रयुक्त इति व्युत्पत्तिनिमित्तम् । न पृथगिति । दुष्टसाङ्कर्यस्येष्टत्वेऽपि तत्तद्दोषवत्त्वेनैकत्रापि भेदव्यवहारो दृश्यत एव, बाधानिरुक्तौ तु तेन रूपेण स बाधिते न समर्थितः स्यात् । यदि च भेदाभेदवादिनामेवैतच्छोभते, तार्किकैस्तु तत्तज्ज्ञानाधर्मवत्त्वेनापि धर्मिभेदो नैष्टव्योऽपि तु तत्तद्धर्माणामेव भेदः, तदापि सोऽपि न बाधात्मकधर्मानिरुक्तौ सङ्गच्छत इति भावः । बलवतेति सत्प्रतिपक्षेऽतिव्याप्तिवारणाय । बोधित इति । प्रकृतधर्मिणीत्यादिः । निश्चयविषयतायोग्यतासाधारणं बोधितत्वं विवक्षितम्, अन्यथा बलवतेत्यस्य वैयर्थ्यात्, सत्प्रतिपक्षे साध्याभावनिश्चयानुत्पत्तेः । एवञ्च सत्प्रतिपक्षेऽतिव्याप्तिदानस्य नासङ्गतिः । विषयः = साध्यत्वेनाभिमतः । बोधकस्य = निश्चायनयोग्यस्य । विवक्षितमिति । भूम्नि वाऽतिशायने वा मतुबिति भावः । ननु गमकतौपयिकं हि रूपं बलं भवति, तच्च सत्प्रतिपक्षतादशायां व्याप्तिपक्षधर्मताज्ञानविषयत्वमादाय द्वयोः समानमेव. केवलव्यतिरेकिणि हि गमकतायां नोपयुज्यते सपक्षसत्त्वम्, अभावादेवेत्यरुचेराह किञ्चेति । प्रत्यक्षेण = अग्न्यादावुष्णत्वादिग्राहिणा । अनुमानाभासोऽग्निरनुष्णः कृतकत्वादित्यादि । प्रत्यक्षस्य = नयनादेः । इन्द्रियार्थसन्निकर्षोत्पन्नं यदभ्रान्तज्ञानं यथार्थप्रत्यक्षमिति यावत्, तत्करणत्वमेव बलम्, अनया च वाचोभङ्ग्या दोषासमवहितत्वमेव यथार्थप्रत्यक्षानुकूलं बलं विवक्षितम्, इन्द्रियस्य स्वरूपसत एव करणत्वात् । उद्भूतरूपवत्त्वादिकं तु प्रत्यक्षेऽपेक्ष्यमाणमपि न तस्य बलम्, विषयगतत्वात् । भूयिष्ठमिति । यद्यपि बाधितेऽबाधितत्वासत्प्रतिपक्षितत्वयोरभावात्पक्षधर्मत्वादीत्यादिना व्याप्तिरेव प्राह्या, एतयोश्च न स्वरूपसतोर्बलत्वं नवा बाधिते सम्भवदुक्तिकत्वम्, तत्रान्यतरभङ्गनियमस्य वक्ष्यमाणत्वात्, अपि तु तयोर्ज्ञानस्यैव बलत्वम्, तच्चैकमेव, ज्ञानेऽगृहीताप्रामाण्यकत्वस्यान्वयादिव्याप्तेश्चानुगमकरूपस्यादरणीयत्वेऽपि गुरुशरीरत्वं परं स्यात्. न तु सङ्ख्याधिक्यम्, तथापि गुरुशरीरत्वाभिप्रायेणैव भूयिष्ठत्वोक्तिः कथञ्चित्सङ्गमनीया । इदमुपलक्षणम्—बलं प्रत्यक्षानुमानादिसाधारण्यनिर्वाहकस्य बलत्वस्य निरूपणासम्भवात्, तदानीं समबलत्वप्रतिसन्धानेऽपीदानीमस्य हेत्वन्तरादधिकबलत्वमवैमीतिविशेषदर्शनकालीनानुभवेन व्याप्तिपक्षधर्मताज्ञानविषयत्वमात्रस्य सत्प्रतिपक्षस्थले बलतया वक्तुमशक्यतया वस्तुतोऽधिकबलवता सत्प्रतिपक्षतासम्भवेनातिव्याप्तेश्चेति । अनन्यथासिद्धत्वं प्रमाणत्वम् । बोधित इति पूर्ववत् । प्रमाणेन न सत्प्रतिपक्ष इत्यभिमानः । तं निराकरोति तथापीति ।

सिद्धेन सत्प्रतिपक्षेऽपि गतत्वादतिव्यापकत्वम् । किञ्चान्यथेत्यन्येन प्रकारेणेत्युच्यते, अनन्यथेतिचानन्येन प्रकारेण, यस्मादन्यत्वं तेनैवेत्यर्थः सम्पद्यते, तथा च वक्तव्यं किं तदन्यताप्रतियोगीति । प्रामाण्यं तदितिचेदहो दुर्वैदग्धी भवतः, प्रामाण्येनेतिवक्तव्ये प्रामाण्याद्योऽन्यः स यो न भवति तेन प्रकारेण यः सिद्धः = उत्पन्नः प्रतीतो वा तेनेति ब्रुवाणस्य ।

तथापि प्रमाणेन बोधितविपर्ययो विषयो यस्य स कालात्ययापदिष्ट इति; न, इदं रजतमिति शुक्तिं विषयीकुर्वति प्रत्यक्षाभासे नेदं रजतमिति प्रमाणेन बाध्यमानेऽपि हेत्वाभासविशेषलक्षणमिदं गच्छदतिव्यापकत्वमापद्येत । एवं बाध्यविषयिण्यामिच्छायामपि गच्छेत् । प्रमाणेन बोधितो यदीयविषयस्यान्यथाभावः स हेतुः कालात्ययापदिष्ट इति चेन्न, यदि मुख्यार्थो हेतुशब्दः, तदा हेत्वाभासत्वव्याघातः, अथामुख्यार्थः, तदा कोऽस्यार्थो यत्रैष व्यवस्थाप्यते इति सोऽभिधातव्यः । प्रमाणेन बोधितो यदीयविषयस्य व्यतिरेकः स हेत्वाभासः कालात्ययापदिष्ट इति चेन्न, यद्यग्रे हेत्वाभासत्वानिश्चयस्तदा लक्षणस्य दुरवधारणत्वम्, अथ कालात्ययापदिष्टत्वेऽनिरूपिते एव

---

नन्वनन्यथासिद्धे निश्चितप्रामाण्यकत्वं विशेषणीयम्, सत्प्रतिपक्षतादशायाञ्च वस्तुतोऽनन्यथासिद्धोऽपि न निश्चितप्रामाण्यकः प्रतिहेतुरिति नातिव्याप्तिरित्यरुचेराह किञ्चेति । इति ब्रुवाणस्य भवतो दुर्वैदग्धीत्यन्वयः । दुर्वैदग्धी कुकौशलम् । उत्पन्न इति । अत्र पक्षे तृतीया वैशिष्ट्ये, तथा च प्रामाण्यविशिष्ट उत्पन्नः, वस्तुतः प्रमाणमिति यावत् । एवं विवक्षायां निश्चितप्रामाण्यकत्वस्यापि पृथङ्निवेशनीयत्वेन गौरवमित्यतो लाघवादाह प्रतीत इति । प्रमित इत्यर्थः । प्रमितप्रामाण्यकत्वञ्च प्रमाण एवेति नित्यदोषत्वरक्षार्थे प्रमाणेनेति पृथङ् न वक्तव्यमिति भावः । ब्रुवाणस्येति । नहि कश्चिदमन्दो घट इति वक्तव्येऽनघट इति ब्रूते इति भावः ।

नन्वन्यथासिद्धशब्देन नञः समासो नत्वन्यथाशब्देनेति नाकौशलम्, एवमप्यनुचितं चेद्गौरवमुद्गिरसि, तर्हि तत्स्थाने शब्दान्तरमेव प्रयोक्ष्यते, कोऽत्र निर्बन्ध इत्याशयेनाशङ्कते तथापीति । प्रमाणेन = प्रमितप्रामाण्यकेन । वस्तुतस्तु बोधितत्वं योग्यतासाधारणं न विवक्षणीयमिति सत्प्रतिपक्षे नातिव्याप्तिशङ्कापि, तत्र साध्याभावनिर्णयानुपपत्तेः सर्वसत्प्रतिपक्षत्वात्, एवञ्च सत्प्रतिपक्षेऽतिव्याप्तिवारणाय न तृतीयान्तमिदानीं वक्तव्यम्, अपि तु सत्यपि साध्याभावग्रहे तत्र प्रमात्वस्यानिश्चयेऽनुमिति र्न प्रतिबध्यत इति मते निश्चितप्रमात्वाश्रयग्रहविषयीभूतप्रकृतधर्मिवृत्त्यभावप्रतियोगिसाध्यकत्वं बाधितत्वं वक्तव्यम्, अगृहीताप्रामाण्यकत्वेनैव साध्याभावनिश्चयस्यानुमितिप्रतिबन्धकत्वमते त्वगृहीताप्रामाण्यकप्रमितिविषयीभूतेत्यादिकम् । हेत्वाभासेति दुष्टपरम्, उक्तप्रत्यक्षाभासो हि स्वलिङ्गकानुमितिस्थले बाधितहेत्वाभासतया व्यवह्रियते नत्वन्यत्रेति भावः । गच्छदिति । सिद्धिविषयत्वरूपं साध्यत्वमक्षतं रजतेऽपि, व्यापकत्वरूपं तु निवेशानर्हम्, ह्रदो धूमवान् वह्नेरित्यादावपि बाधादिति । बाध्यविषयिण्याम् = शुक्त्यादौ रजतादिविषयिकायां भ्रमजन्यायाम् । इच्छापदं कृत्यादेरप्युपलक्षकम् । अन्यथाभावः = अभावः । तथाच निरुक्ताभावप्रतियोगिसाध्यकहेतुत्वं लक्षणम् । मुख्यार्थः = व्याप्तिविशिष्टपक्षधर्मत्वार्थकः । व्याघात इति । बाधेऽपि व्याप्तिपक्षधर्मतान्यतरभङ्गनियमस्य वक्ष्यमाणत्वादिति भावः । एष हेतुशब्दः । व्यवस्थाप्यते = अमुख्यतया विवक्ष्यते । हेत्वाभास एव तस्यामुख्योऽर्थ इत्याह प्रमाणेनेति । अग्रे = उक्तबाधितत्वग्रहात्पूर्वम् । निर्णय इति । व्यभिचारादिग्रहादित्यादिः ।

हेत्वाभासत्वस्य निर्णयस्तदा तत एव दुष्टत्वसिद्धेः कृतं पश्चात्प्रतीतिकस्य कालात्यया-पदेशस्योपन्यासेनेति । तदिदं त्वन्मते लक्षणमस्तु मा वा भूत्, सामुद्रिकप्रमाणेन पुनर्महदेतदलक्षणं कालात्ययापदेशस्य, येनास्य नाम हेत्वाभासभेदपदभ्रंशः प्रासाधि। अथ ब्रूषे हेत्वाभासत्वं हेतुवदाभासमानत्वं हेतुसदृशतया प्रतीयमानत्वं न तु हेतुदोषवत्त्व-मिति; मैवम्, हेतुना तुल्यता ह्यहेतुत्वावगमं विना न शक्यप्रतिपत्तिः, सादृश्यस्य भेदा-धिष्ठानस्य तथैव प्रतीतेः, अन्यथा हेतोरपि हेत्वाभासत्वापातात्, ततश्च हेतुरूपवैकल्य-स्यावश्यं प्रत्येतव्यत्वेन प्रागुक्तदोषानिवृत्तिः । प्रमाणेन बाध्यमानो यदीयपक्षव्यतिरेकः स कालात्ययापदिष्ट इति चेन्न, आश्रयासिद्धव्यापनात् । आश्रयासिद्धव्यतिरिक्त इति विशेषणीयमिति चेन्न, विशेषणाद्यसिद्ध्याऽऽश्रयासिद्धेन सह सङ्कीर्णकालात्ययापदिष्टो-

---

ततः = व्यभिचारादिग्रहात् । दुष्टत्वसिद्धेरिति । अनुमित्यनुत्पादरूपफलसिद्धेरिति नोक्तम्, उक्त-लक्षणज्ञानस्य तादृशफलकत्वानभ्युपगमात्, साध्याभाववत्पक्षादिज्ञानस्यैव तादृशफलकत्वात् । तथा-भ्युपगन्तारं प्रति तूक्तफलसिद्धेरित्यपि वक्तुं शक्यते । उपन्यासेनेति। दोषतया पृथग्गणनेनेत्यर्थः । एवञ्च स्वार्थसाधारण्यनिर्वाहः, उद्भावनस्य परार्थ एव प्रसक्तत्वादिति । येन = उक्तलक्षणेन । अस्य = कालात्ययापदेशस्य । हेत्वाभासभेदो हेत्वाभासस्य भेदको धर्मो हेत्वाभासत्वं तदेव पदं तस्माद्भ्रंशः । यथा मरणापरपर्यायजीवनकालात्ययप्रतिपत्तिहेतो रेखाविशेषस्यालक्षणत्वम्, कुत्सितलक्षणत्वमिति यावत्, तथा कालात्ययापदेशस्य बाधतया प्रसिद्धस्योक्तरीत्या मरणत्वेनाध्यवसितहेत्वाभासत्वपदप्रच्यु-तिबोधकत्वेन प्रस्तुतलक्षणस्याप्यलक्षणत्वमेवेति भावः । न हेतुदोषवत्त्वमिति। तथा च बाधप्र-ज्ञात्पूर्वं दुष्टत्वप्रतीतिनिबन्धनो न दोष इति भावः । भेदाधिष्ठानस्य = अनुयोगिप्रतियोगिभेदघटितस्य । तथैव = तादृशभेदधीपुरस्सरमेव । अन्यथा = सादृश्यस्योक्तभेदाघटितत्वे । हेतुरूपं पक्षसत्त्वसपक्ष-सत्त्वादि । अवश्यमिति । तत्पक्षकतत्साध्यकस्थले नायं हेतुरितिप्रतीतेर्हेतुनाविरोधिस्वरूपासिद्ध्या-दिप्रत्ययं विनानुपपत्तेरिति भावः । प्रागुक्तेति । स्वरूपासिद्ध्यादिनैव दुष्टत्वोपपत्तौ बाधस्य दोषतया स्वातन्त्र्येण परिगणनमनुचितमिति भावः । यदीयपक्षव्यतिरेकः = यदीयसाध्यकस्थलीयपक्षत्वाभावः, तस्य बाधग्रहविषयत्वानियमेऽपि किञ्चित्प्रमाणबोध्यत्वमबाधमेव, आश्रयासिद्धव्यापनादित्यग्रिमग्रन्था-नुरोधेन बाधप्रमितेः प्रमाणपदेनाविवक्षणीयत्वात्, बाधग्रहे च सन्देहतद्योग्यतासिषाधयिषात्मकपक्ष-तानामसम्भवात्तदभावस्य प्रमाणबोध्यत्वं नानुपपन्नम् । यद्यपि बाधग्रहेऽपि सिषाधयिषासम्भवोऽन्यथा-ऽऽहार्यज्ञानानुपपत्तेः, तथाप्यनुमितेरनाहार्यत्वेन तदिच्छा न बाधग्रहे सति सम्भविनी । सिषाधयिषावि-रहविशिष्टसिद्ध्यभावरूपपक्षत्वाभिप्रायेण तु नायं ग्रन्थः, तस्य बाधग्रहे सत्यपि सम्भवात् । प्रत्यक्षा-भासादौ स्वलिङ्गतादशायां पक्षस्याप्रसक्त्या तदभावो न प्रमाणबोध्य इत्याभासः 'यद्यपि तत्र पक्षत्वस्य प्रसक्तिरस्तु मा वा, तदभावोऽनपवादः, केवलमप्रसक्तस्य प्रतिषेधो न क्रियते सचेतसा, तदपि स्वार्थसाधारण्याय परं प्रति प्रमाणज्ञाप्यमानत्वस्य पक्षत्वविरहेऽवि-वानियतमेव, बहुत्र तथा दर्शनात्, स्वार्थसाधारण्याय परं प्रति प्रमाणज्ञाप्यमानत्वस्य पक्षत्वविरहेऽवि-वक्षणीयत्वाच्च, कथमिव चेदं रजतमित्यादिज्ञानीयधर्मिणीदमादौ रजतत्वादिसन्देहादेः प्रसक्तिः कादा-चित्की दुर्लभाऽपि, बाधकाभावात्, न चानुमित्साससत्त्वेऽनुमितिरेव स्यात्; परामर्शविरहे तदसम्भवात् । वस्तुतस्तु बाधग्रहे सत्यप्यनुमित्साया इष्टसाधनताबोधाधीनाया असम्भवं न यौक्तिकं कल्पयामः तथा-प्यभ्युपेत्यैवाह आश्रयासिद्धयेति। पर्वतो वह्निमान् धूमादित्यादावबाधिताश्रयासिद्धेरित्यर्थः, तत्र सिद्धि-दशायां पक्षताविरहस्य प्रामाणिकत्वात् । विशेषणादीति । यद्यपि काञ्चनमयपर्वतो वह्निमान् धूमादि-त्यादावाश्रयविशेषणासिद्धयैवाश्रयासिद्धिमुपयन्ति, अप्रसिद्धप्रतियोगिकाभावानभ्युपगमेन गगनारविन्दं

दाहरणमेवं न व्याप्येत। प्रमाणेन बोध्यमानो यदीयसाध्यस्य व्यतिरेकः स कालात्ययापदिष्ट इति चेन्न, प्रत्यक्षाभासव्यापनात्, तत्रापि हि साध्यस्य ज्ञाप्यरूपस्य व्यतिरेको बोध्यते एव। प्रमाणेन बोध्यमानो यदीयस्य साध्यस्य = व्यापकस्य व्यतिरेकः स कालात्ययापदिष्ट इति चेन्न, प्रमाणेन बोध्यमानाभावस्य प्रकृते हेतुव्यापकत्वासम्भवात्। प्रमाणेन बोध्यमानो यदीयसाध्यस्य प्रतिज्ञातस्याभावः स कालात्ययापदिष्ट इति चेन्न, स्वार्थानुमाने कालात्ययापदिष्टस्यैवमव्यापनात्, तत्र शब्दरूपस्य प्रतिज्ञानस्याभावात्, शब्दस्य परार्थत्वात्। प्रमाणेन बोध्यमानो यदीयसाध्यस्य पक्षनिविष्टस्य व्यतिरेकः स कालात्ययापदिष्ट इति चेन्न तथाभूतस्य पक्षाभासत्वाभ्युपगमेन मुख्यपक्षार्थत्वासम्भवात्, पक्षाभासनिविष्टस्येति क्रियमाणे तु पूर्वं पक्षाभासत्वप्रतीत्यप्रतीतिपक्षयोः पूर्वं हेत्वाभासत्वप्रतीत्यप्रतीतिपक्षोक्तदोषवद्दोषो द्रष्टव्यः। पक्षत्वाभिमतांशभूतस्येति

---

सुरभीत्यादावाश्रयासिद्ध्यनङ्गीकारात्, तत्र निश्चितानन्वयतयाऽनार्थकत्वेनैव निग्रहात्, तथा च विशेष्यपरमादिपदमसङ्गतम्, तथाप्यप्रसिद्धप्रतियोगिकाभावमुपगम्यैव तत्सङ्गमनीयम्। एतेन—पक्षत्वाभावप्रयोजकप्रमाविषयीभूताभावप्रतियोगिसाध्यकत्वं विवक्षणीयमिति नेयमव्याप्तिः, नचाऽबाधिताश्रयासिद्धेऽतिव्याप्तिः, प्रत्यक्षाभासादावपि न सा, तत्र बाधग्रहस्य पक्षत्वाभावाप्रयोजकत्वात्, नचैवं पक्षत्वविरहस्यैव निर्वाह्यस्य दूषणत्वमस्तु क्लृप्तत्वादिति वाच्यम्, बाधग्रहस्योपजीव्यत्वात्साक्षादनुमितिप्रतिबन्धकत्वाच्च दूषणतायाः आवश्यकत्वादिति निरस्तम्, नेदं रजतमित्यादिग्रहस्येदमादौ रजतादिताद्दात्म्यादिसन्देहादिविरहप्रयोजकत्वस्यानिवार्यत्वात्। साध्यस्येति। विषयपदस्थाने साध्यपदं प्रयुक्तं प्रत्यक्षाभासादिविषयस्यासाध्यत्वाभिमानेन। तं निराकरोति प्रत्यक्षाभासेत्यादिना। व्यापकस्येति। प्रत्यक्षाभासादिविषयस्तु न तद्व्यापक इति भावः। बोध्यमानाभावस्येतिबहुव्रीहिः। प्रकृते = बुद्धिस्थे वह्निरनुष्णः कृतकत्वादित्यादौ पक्षधर्मबाधितस्थले, तेन ह्रदो वह्निमान् धूमादित्यादौ हेतुव्यापकत्वस्य साध्ये सम्भवेऽपि न क्षतिः, तथाचाव्याप्तिः। अथ शोद्यनाचार्यमतानुसारेण प्रकृत इति बाधमात्रोदाहरणाभिप्रायकमेव, तैरपक्षधर्मतास्थले बाधानभ्युपगमादिति निवेदितमधस्तात्, तथा चासम्भव एवेति। इदमुपलक्षणम्, प्रकारतावच्छेदकसम्बन्धेन ज्ञानादेः प्रत्यक्षाभासादिव्यापकस्यापि तद्विषयत्वसम्भवेनातिव्याप्तिसम्भवात्। प्रतिज्ञातस्येति। प्रतिज्ञातत्वं न प्रत्यक्षाभासादिविषये इति नातिव्याप्तिरित्यभिमानः। वस्तुतस्तु प्रतिज्ञातत्वं विशेषणं चोपलक्षणं वा, आद्ये प्रायोऽसम्भवः, साध्याभावग्रहपर्यन्तं प्रतिज्ञाया अनवस्थानात्। द्वितीये कालान्तरीणप्रतिज्ञातत्वस्य प्रत्यक्षाभासादिविषयेऽपि क्वचित्सम्भवेनातिव्याप्तिर्दुर्वारेति। शब्दरूपस्येति। प्रकृतन्यायावयवस्य सतः प्रकृतानुमित्यन्यूनानतिरिक्तविषयकशाब्दजनकवाक्यरूपस्येत्यर्थः। परार्थत्वात् = परत्र बोधसङ्क्रान्तये उच्चारणीयत्वात्। पक्षनिविष्टस्येति। पक्षवृत्तेरिति नार्थः, व्याघातात्, अपि तु पक्षवृत्तितया साध्यस्य व्यतिरेकोऽत्र विवक्षितः, स च पक्षाधिकरणके साध्याभावे पर्यवस्यति, एवंत्रापि साध्याभावाधिकरणतया प्रकृतधर्मिनिवेशस्यावश्यकत्वेऽपीह पक्षताऽपि धर्मिणि विवक्षितेति विशेषः। प्रत्यक्षाभासादौ च धर्मिणि न पक्षतेत्यभिमानः। तथाभूतस्य = प्रमितसाध्याभावकस्य। साध्यसन्देहादिरूपपक्षत्वानाक्रान्ततयेति शेषः। क्रियमाणे इति। प्रमाविषयीभूतप्रकृतपक्षाभासनिष्ठाभावप्रतियोगिसाध्यकत्वं वक्तव्यमिति भावः। एवमग्रिमकल्पोऽपि प्रकृतपक्षाभासेत्यस्य स्थाने प्रकृतपक्षत्वाभिमतेत्युक्त्यावसेयः। पूर्वं = उक्तबाधितत्वग्रहात् पूर्वं पक्षाभासत्वप्रतीतावाश्रयासिद्ध्यैव हेतोर्दुष्टत्वसिद्धिरनुमित्यनुत्पादनिर्वाहश्चेति बाधस्य पृथग्दोषत्वमप्रामाणिकम्, पूर्वं तदप्रतीतौ तु लक्षणस्य दुरवधारणत्वमित्याभासः। ननूक्तबाधितत्वज्ञानं नानुमितिप्रतिबन्धकतया-

क्रियमाणे च प्रष्टव्यम्, किं पक्षत्वाभिमतत्वम्? किमु पक्षतयाऽभ्युपगम्यमानत्वम्, अथ पक्षतया प्रमितत्वम्, उत पक्षतया प्रतीतत्वम्, नाद्यः, दूषकं प्रति तदसम्भवात्, तेन बाध्यसाध्यस्य पक्षाभासतयैव प्रत्युताङ्गीकारात्। अनुमानबाद्यपेक्षयाऽपि नियमाभावः, सदनुमानास्फूर्तौ मन्दप्रज्ञेन प्रज्ञाभिमानवता च मयि वदति स्फुटदोषमपि को दूषयितुं शक्त इत्यभिप्रायेण यदृच्छया ज्ञातदोषस्यापि प्रयोगस्य सम्भवात्, तत्रानुमानवादिना पक्षत्वाङ्गीकाराभावेन तथाभूतबाधितानुमानाव्यापकमिदं लक्षणं स्यात्। न च पक्षतयोपन्यस्यमानत्वमङ्गीकारार्थं इति युक्तम्, तथा सति स्वार्थानुमाने कालात्ययापदेशाव्याप्तिः। नापि द्वितीयः, पक्षत्वेन प्रमिते विषये कालात्ययापदेशानवकाशात्। नापि तृतीयः, तदा ह्येवं लक्षणमिदं सम्पद्यते प्रमाणेन बोधितो यदीयसाध्यस्य पक्षप्रतीतिविषयांशस्य व्यतिरेकः स कालात्ययापदिष्ट इति; अस्य च वाक्यार्थस्य न कदाचिदपि सम्भवं पश्यामः, यदा तावत्प्रमाणेन साध्यस्य व्यतिरेकबोधस्तदा पक्षप्रतीति-

---

ऽभिमतम्, साध्याभाववान् पक्ष इत्यादिज्ञानस्यैवागृहीताप्रामाण्यकस्य तथात्वस्वीकारात्, वस्तुगत्या च बाधग्रहस्थले पक्षाभासत्वस्य पक्षताविरहपर्यवसन्नस्य सत्त्वेऽपि तदुपजीव्यतया बाधस्य दोषत्वमित्युक्तमेव, कारणविरह एव च कार्यानुत्पादनिर्वाहको न तु तत्प्रतीतिरपि, साध्यवत्त्वघटितञ्च न पक्षत्वम्, येन पक्षताविरहेणैवान्यथासिद्ध्या बाधस्य पृथग्दूषणत्वासम्भवः शङ्कितुमपि शक्येतेत्यनुपदं व्यक्तीभविष्यति, एवञ्च पक्षाभासत्वप्रतीतावुक्तबाधितत्वव्यवहारे न काचित्क्षतिरिति चेदस्त्वेवम्, तथापि पक्षत्वस्य पक्षाभासत्वस्य वोक्तावपि प्रत्यक्षाभासादावतिव्याप्तिर्दुर्वारैव, धर्मिणि सन्देहादेः कदाचित्सम्भवात्, साध्याभावग्रहकाले च तदभावेन पक्षाभासत्वस्यापि सम्भवात्। पक्षवृत्तित्वप्रतियोगिकाभाववत्साध्यकत्वादिज्ञानादपि बाधितत्वव्यवहारेण तदौपयिकत्वस्य निरुच्यमानबाधितत्वे एव वक्तुमशक्यत्वाच्चेति। दूषकं = बाधोद्भावयितारम्। तदसम्भवात् = पक्षतयाऽभ्युपगमासम्भवात्। बाध्यसाध्यस्येति बहुव्रीहिणा प्रमितसाध्याभावकस्येत्यर्थकम्, बाधग्रहदशायां संशयादेरेव विरहे तद्वत्तयाऽभ्युपगमस्य दूरोत्सारितत्वात्। साध्यवत्त्वनियतपक्षतां स्वीकृत्य तु नायं ग्रन्थो योजनार्हः, तथासति वस्तुतः साध्याभाववति तद्ग्रहदशायामनुमितिर्न स्यात्, पक्षताविरहात्. यद्यपि साध्यसंशयादिकं विनाप्यनुमितेर्दर्शनेन तस्यापि न पक्षतात्वमिति तत्स्वीकारेणापि सन्दर्भस्यास्य प्रवृत्तिरनुचितैव, क्वचित्तस्य पक्षतात्वोपगमस्तु प्रकृतेऽपि समः। तथापि साध्यवत्त्वनियतस्य पक्षत्वस्योपगमे तदभावेनैवानुमित्यनुत्पादनिर्वाहेण बाधप्रमाया हेतुदोषत्वमेव न स्यात्, साध्याभाववद्धर्म्यादिर्दोषत्वेऽपि तस्यासिद्ध्यन्तर्भाव एवोचितःस्यादिति तादृशपक्षत्वोपगमोऽतिशिथिलायते। अनुमानबाद्यपेक्षयेति। स्थापनावादिनि पक्षताप्रस्थापनावादिना पक्षतयाऽभ्युपगम्यमानत्वविवक्षायामित्यर्थः। नियमेति। स्थापनावादिनि पक्षताप्रकारकाभ्युपगमस्येत्यादिः। नियमाभावमुपपादयति सदनुमानेति। मन्दप्रज्ञेनेति। यदृच्छयेत्यादिना सममन्वयः। प्रयोगे दोषज्ञानस्यानपेक्षासूचनाय स्वसामग्रीवशादित्यर्थकं यदृच्छयेत्युक्तम्। ज्ञातदोषस्य = साध्याभाववत्पक्षकत्वेन गृहीतहेतोः। पक्षतयोपन्यस्यमानत्वं प्रतिज्ञोद्देश्यत्वम्, तच्च स्थापनावादिनः प्रतिज्ञानादक्षतमेव। कालात्ययापदेशेति। पक्षे साध्याभावप्रदेत्यर्थः। तत्सत्त्वे तत्प्रतिबध्यतया साध्यसंशयादिकं न स्यात्, तदभावे च पक्षत्वेन प्रमितिरपि कथं भवेत्। न च साध्यसंशयाद्यनन्तरं पक्षे साध्याभावग्रहसम्भवेन ग्रन्थासङ्गतिरिति वाच्यम्, पूर्वोक्ते ज्ञातदोषहेतुप्रयोगस्थले साध्यसंशयाद्यभावेन तथाप्यव्याप्तेः, न च पक्षत्वेन प्रमितत्वायगताबेव बाधितत्वव्यवहार इति निय-

नास्ति विशेषदर्शने स्नमस्यानवकाशात्, ततश्च तदा पक्षप्रतीत्यभावेन तद्विषयत्वाभावा-त्तद्विपर्यांशस्येति विशेषणाभावाधीनो विशिष्टस्य लक्षणात्मनोऽभावः। यदा च प्रमाणेन साध्यव्यतिरेकबोधनं नास्ति तदा तस्यैव लक्षणभागस्याभावाल्लक्षणाभाव इति नित्य-मसत्त्वव्यवस्थितेन लक्षणेन लक्ष्यं व्यवस्थापयन् श्लाघनीयप्रज्ञो भवान्। न च वैशेषिक-प्रक्रियामाश्रित्य विनश्यदवस्थापि पक्षप्रतीतिस्तत्काले सम्भावनीया; तदीयसाध्यव्य-तिरेकावगमनिवर्तनीया हि सा, तत्साध्यव्यतिरेकावगमश्च पूर्वमेव भूत इत्यवश्यमभ्युप-गमनम्, अन्यथा प्रमाणेन बोध्यमानत्वं कथं साध्यव्यतिरेकस्य तदावगम्येत। न च

---

मोऽपि, एवञ्चोक्तस्थले सिषाधयिषाविरहविशिष्टसिद्ध्यभावरूपपक्षतासम्पादनक्लेशोऽप्यनादरणीयः। एतच्च पक्षत्वाभ्युपगमघटितकल्पेऽपि समानमेव, तादृशसिद्ध्यभाववत्तयाऽभ्युपगमसम्भवेऽपि सर्वत्र बाधितत्वव्यवहारस्य तदवगमामूलकत्वात्। एवमुत्तरत्रापि। पक्षप्रतीतिविपर्यांशस्येति पूर्वंतत्पक्षप्रतीति-विषये इत्यर्थे पर्यवसातव्यम्। पक्षप्रतीतिस्तु पक्षताप्रकारकप्रतीतिः। एवमग्रेऽपि। भ्रान्तिरूपा च सा पक्षत्वाभावेऽपि सम्भवतीत्यभिमानः। तदेति। सन्देहाद्यभावेनेति शेषः। विशेषदर्शने इति। विरोधिनीत्यर्थः। तच्च विशेषदर्शनं वाऽन्यद्वेत्यन्यत्। प्रकृते त्वन्यदेव, सन्देहाद्यभावस्य स्वरूपसत एव स्वाधिकरणे स्वप्रतियोगिमत्ताबुद्धिप्रतिबन्धकताया अनुभवबलात् सर्वसम्मतत्वात्, उक्तं च प्रामाण्यवा-दमणौ—"नह्यजानन् जानामीति प्रत्येती"ति। यथाश्रुतं तु तदैव सङ्गच्छेत, यदि सन्दिग्धसाध्यवत्त्वं सिषाधयिषितसाध्यवत्त्वं वा पक्षत्वं भवेत्, तथा सति साध्याभावबोधस्य तदभावावगाहितया विशेष-दर्शनत्वसम्भवात्, परन्तु तादृशपक्षत्वाभ्युपगमो बाधस्य पृथग्घेत्वाभासत्वाभ्युपगन्तु र्न सम्भवतीत्या-वेदितमनुपदम्। न च साध्यसन्देहादेः पक्षत्वेऽपि तद्विघटनमात्रेण साध्याभावबोधस्य पक्षताभ्रमविरो-धित्वं वक्तुं शक्यम्, साध्यसन्देहाभावकाले एव साध्यसन्देहबोधस्य भ्रमतायाः सम्भाव्यत्वात्। विशिष्टसिद्ध्यभावस्य पक्षतात्वे तूक्तमुत्तरम्। नित्यमसत्त्वव्यवस्थितेनेति। असत्त्वं स्वाभावः, तेन व्यवस्थितिः स्वाभावत्वसम्बन्धेन वृत्तिता, तथा च सर्वदैव लक्ष्यावृत्तिनेत्यर्थः। लक्षणेन = लक्षणत्वा-भिमतेन। व्यवस्थापयन् = इतरव्यावृत्ततया प्रमापयितुं प्रवृत्तः। वैशेषिकप्रक्रियामिति। विभुवर्ति-विशेषगुणानां स्वसमानाधिकरणोत्तरवर्तिविशेषगुणनाश्यत्वनियममित्यर्थः। विनश्यदवस्था = द्वितीय-क्षणचुम्बिनी। तत्काले = बाधग्रहकाले। उदीच्यगुणस्य पूर्वगुणनाशकत्वमुत्पन्नस्यैव सम्भवतीति तदु-त्पत्तिक्षणे पूर्वगुणावस्थानसम्भवेन बाधग्रहाद्यक्षणे पूर्वमुत्पन्नायाः पक्षताप्रतीतेः प्रमितिरूपाया एव सत्त्वसम्भवः, बाधग्रहात्पूर्वं संशयाद्युत्पत्तिसम्भवादिति भावः। नचेत्यत्र हेतुमाचष्टे तदीयेत्यादि। प्रकृतपक्षसाध्याभाववैशिष्ट्यावगमप्रयुक्तसाध्यसन्देहाद्यनुत्पादप्रयुक्तानुत्पत्तिकेत्यर्थः। सा = पक्षत्वप्र-तीतिः। तदित्यादि प्रोक्तवैशिष्ट्यावगमपरम्। पूर्वं = साध्याभावे प्रमितत्वावगमात्पूर्वम्। तदा = ताद-शबाधितत्वस्योद्भावनकाले व्यवहारकाले वा। अयम्भावः—पक्षत्वप्रकारकप्रतीतिविषयो वह्निरनुष्णत्वा-भावप्रकारकप्रमितिविषय इति स्वल्लक्षणानुसारेणोद्भावनाकारः स्यात्, साध्याभावप्रमितेः पूर्वमुत्प-न्नावेव च तद्विषयत्वमवगम्योक्तोद्भावनं स्यात्, तदुत्पत्तेः पूर्वमुत्पन्ना च पक्षत्वप्रकारकप्रतीति र्न प्रमितिविषयत्वावगमकालेऽवस्थातुं प्रभवतीति न विशेषणं स्यात्, तस्मात्साध्याभावप्रमित्युत्तरमेव तदुत्पत्तिर्वाच्या, तदा च सन्देहाद्यभावेन सा न सम्भवतीति कथं लक्षणसमन्वयः। वस्तुतस्त्वसाध-कतासाधनेऽनुमितितत्कारणपरामर्शान्यतरप्रतिबन्धे योपयुक्तं रूपमुद्भाव्यते, नचैवं पक्षत्वप्रकारक-प्रतीतिविषयत्वमिति कथं तद्घटितरूपोद्भावनम्, अत एव तद्घटितलक्षणमप्यनुचितमेव, नहि प्रत्य-

वाच्यम्—प्रतीतिविषयत्वमिदं विशेषणं न भवति किन्तूपलक्षणम्, उपलक्षणेन चासतापि व्यवच्छिन्नप्रतीतिरुपजन्यते यथा काकवन्तो देवदत्तगृहा इत्युपलक्षणीभूतया काकवत्तया देवदत्तगृहस्य व्यवहारकाले इति; यतस्तत्रोपलक्ष्यदेवदत्तगृहस्य स्वाभाविको विशेषोऽस्ति व्यवहारकाले, तेन काकवत्ताऽभावेऽपि तमादाय व्यवहारनियमप्रवृत्तिः, न तु तत्राप्यसत उपलक्षणस्य कारणत्वम्, अत्र तु व्यक्तीनामुपलक्ष्यत्वे लक्षणस्याननुगतत्वम्, अनुगतञ्च किञ्चिदुपलक्ष्यं न लक्षयामहे। अत उक्तमेव वाक्यार्थमादाय प्रवर्तमाने लक्षणात्मके साधने विशेषणासिद्धिर्दुर्निवारा। एतेन पूर्वं शङ्कितस्य हेतुरित्यस्य प्रत्यक्षाभासव्यवच्छेदार्थमुपात्तस्य स्थाने हेतुत्वाभिमत इत्येतादृशस्य करणं दूषितप्रायम्।

---

भासादिव्यावृत्तिरप्येतावता सम्भवतीत्युक्तम् येन तद्व्यावृत्तविभाजकमपोदं रूपं भवेदिति। एतेन पक्षत्वप्रकारकस्मृतिविषयत्वनिवेशोऽपि निरस्तः। असतापीति। असत्त्वेनेत्यर्थः। अविद्यमानव्यावर्तकस्यैवोपलक्षणत्वात्, असत्त्वं च व्यावृत्तिधीकाले व्यावृत्त्यधिकरणासम्बद्धत्वम्, तेनोपलक्ष्योपरि भ्राम्यतोऽपि काकादेरुपलक्षणत्वोपगमेन नासङ्गतिः। व्यवच्छिन्नेति भावप्रधानम्, व्यावृत्तिरित्यर्थः। गृहा इतीति। व्यवहारकाले इत्यन्वयः। देवदत्तगृहस्य व्यवच्छिन्नप्रतीतिरुपजन्यत इति सम्बन्धः। प्रकृते च साध्याभावप्रमितेः प्रागुत्पन्ना प्रमितिविषयत्वाद्यवगमकालेऽविद्यमानापि पक्षताप्रतीतिरुपलक्षणं भविष्यतीति भावः। वस्तुतस्त्वेवमपि दुर्वारैवाव्याप्तिः, पूर्वमपि सन्देहादेरेवानियतत्वेन तत्प्रतीतिनियमस्य दूरोत्सारितत्वात्। विशिष्टसिद्ध्यभावस्य कथञ्चिन्नैयत्येऽपि तत्प्रतीतिरनियतैव, अकारणत्वात्, अन्यथा प्रत्यक्षाभासादावपि तथा शक्यकथनत्वेनाव्यावर्तकतापत्तेरिति। परिहरति यत इत्यादिना। स्वाभाविकः = काकवत्तानियतः। स चोत्तृणत्वादिः। काकवत्ता हि काकानां प्रायिकः सम्बन्धः, कादाचित्कस्तूत्तृणत्वादिव्यभिचारी। अभावे इतिच्छेदः। तमादाय = उत्तृणत्वाद्यधीना। व्यवहारनियमप्रवृत्तिः = व्यावृत्तत्वव्यवहारनियामिकाया व्यावृत्तेः प्रमितिः। व्यक्तीनां = तत्तत्पक्षव्यक्तीनाम्। उपलक्षणस्यासत्त्वेन प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकत्वासम्भवेन तज्ज्ञाप्यस्य संस्थानविशेषादेस्तादृशाधिकरणतावच्छेदकत्वम्, तद्द्वारा च व्यक्तीनामुपलक्ष्यत्वम्, ज्ञाप्यधर्मान्तरानुपस्थितिस्थले तु व्यक्तिस्वरूपाणामेव साक्षादुपलक्ष्यत्वमिति भावः। लक्षणस्येति। वह्निरनुष्ण इत्याद्येकधर्मावच्छिन्नपक्षसाध्यकस्थलीयस्यापीति शेषः। उपलक्ष्यं = उत्तृणत्वादिस्थानीयं प्रत्याय्यव्यावृत्त्यधिकरणतावच्छेदकम्। वस्तुतस्त्वनुपदोक्तमेव दूषणं सारम्। एवञ्च पक्षतावच्छेदकादिभेदेन बाधादिभेदस्य कथञ्चिदिष्टत्वेऽपि न क्षतिः, पक्षताया अपि तद्भेदेन भिन्नत्वेन तत्प्रकारकप्रतीतिविषयतोपलक्ष्यतावच्छेदकतायाः वह्नित्वादावेव सुवचत्वादिति ध्येयम्। अतः = उपलक्षणत्वपक्षेऽपि दोषस्य जागरूकत्वे। उक्तवाक्यार्थाभिन्ने लक्षणे इतरभेदानुमौपयिकतयेष्टे इत्यर्थः। वाक्यार्थमादाय लक्षणे साधने प्रवर्तमाने इत्यन्वयः। विशेषणासिद्धिरिति। पक्षताप्रतीतिविषयत्वस्य घटकत्वासम्भवो वैयर्थ्यञ्चेति भावः। दूषितप्रायमिति। अभिमानोऽभ्युपगमो वा प्रमा वा भ्रान्तिर्वा, आद्येऽभ्युपगमो न दूषकस्य, तेनासद्धेतुत्वाभ्युपगमात्, नापि स्थापनावादिनः, तेनापि कदाचित्स्वीयहेतोराभासतां प्रतीत्य स्थापनाप्रयोगात्। उपन्यासस्याभ्युपगमपदार्थत्वे स्वार्थानुमानबाधासङ्ग्रहः। न द्वितीयः, बाधिते व्याप्तिपक्षधर्मतान्यतरभङ्गध्रौव्येण हेतुत्वप्रतीतेरप्रमात्वात्। न तृतीयः, बाधप्रत्यक्षाभासादावपि कदाचिद्धेतुत्वभ्रमसम्भवादिति भावः।

अथ ब्रूषे—प्रमाणेन बोधितो यदीयसाध्यस्याभावः स प्रत्यक्षाभासातिरिक्तः कालात्ययापदिष्ट इति; नैतदपि सुस्थम्, शब्दोपमानाभाससाधारण्यात्। तद्व्यतिरिक्त इत्यपि विशेषणीयमिति चेदेतदपि विचार्यताम्, किं प्रत्यक्षाभासादिव्यतिरिक्तत्वं प्रत्यक्षाभासादिभ्यो वैधर्म्यं किञ्चित्, उत स्वरूपभेदः; अथवाऽन्योऽन्याभावः, न तावदाद्यः, तद्भेदकस्य धर्मस्य निर्वक्तुमशक्यत्वात्। नापि द्वितीयः, स्वरूपस्य परस्परव्यावृत्ततया लक्षणानौपयिकत्वात्। नापि तृतीयः, व्यतिरिक्तत्वस्यान्योन्याभावात्मनः प्रत्यक्षाभासादावपि भावेन तद्व्यवच्छेदकत्वानुपपत्तेः। ननु न व्यतिरिक्तत्वमात्रमन्योन्याभावरूपविशेषणमस्माभिर्निरूपितम्, किन्नाम, प्रत्यक्षाभासादिव्यतिरिक्तत्वम्, नच प्रत्यक्षाभासादयः स्वात्मभ्य एव भिन्नाः; तत्कथमुक्तस्य प्रसङ्गस्यावकाशः। अवगतमिदं त्वद्विवक्षितम्, एतदेव विचार्यते, किं प्रत्यक्षाभासादिभिर्विशेषितोऽन्योन्याभावस्त्वयोच्यते, उत तैरुपलक्षितो यं प्रत्यक्षाभासादिष्वप्रसक्तं मन्यसे, आद्यस्तावन्न सम्भवति, नहि प्रतियोगिरूपविशेषणसहितोऽभावः क्वचिदप्यस्ति ततस्तादृशस्य विवक्षितत्वे सर्वाव्याप्तिः। द्वितीये तु प्रत्यक्षाभासादिभिरुपलक्षणैर्यदुपलक्ष्यमन्योन्याभावस्य स्वरूपमेकं तत्प्रत्यक्षाभासादिषु बाधितानुमानेषु च साधारणमिति कथन्नोक्तदोषप्रसङ्गः। अन्यदस्तु सदात्मकं विशेषणं प्रतियोगी त्वभावस्यासन्नेव तज्ज्ञानस्य विशेष्ये व्यावृत्तबुद्ध्याधानाविरोधाद्विशेषणं भवतीति चेत्; अयुक्तमेतत्, विशिष्टं तावदभावस्य स्वरूपमिहोपात्तम्, तच्च विशेष्यमात्रशरीरं न भवितुमर्हति, तथासति विशेष्यस्वरूपमेवोच्यतां

---

प्रत्यक्षाभासेति। इच्छाद्याभासस्याप्युपलक्षणमिदम्। प्रत्यक्षाभासादिव्यतिरिक्तत्वं प्रत्यक्षाभासत्वादितत्तद्धर्मावच्छिन्नप्रतियोगिताकभेदवत्त्वं प्रत्यक्षाभासादिभेदकूटवत्त्वं वा स्यात्, नाद्यः, सामान्याभावस्य निरस्तत्वात्, प्रत्यक्षाभासादेरपि क्वचिद्बाधितहेत्वाभासतयाऽभ्यासेश्च, प्रत्यक्षाभासत्वादेरननुगतभ्रमत्वादिघटितत्वेनानन्तभेदे पर्यवसानेनासर्वज्ञदुर्ज्ञेयत्वाच्च, अत एव न द्वितीयोऽपीति दूषणं स्फुटत्वादुपेक्ष्याह किमित्यादि। वैधर्म्यमित्यादिमतभेदेन मतैक्येन वा विकल्प इति भेदखण्डनशारदायां प्रागुक्तम्। पृथक्त्वादेस्त्वेतत्तथाविनाभूतत्वान्न पृथक्तया विकल्प इहाद्य इति। तद्भेदकस्य = प्रत्यक्षाभासादिभ्यो भेदकस्य। निर्वक्तुमिति। बाधिते इत्यादिः। अशक्यत्वादिति। बाधात्मकलक्षणानामेव खण्ड्यमानत्वादिति भावः। स्वरूपस्येति। तत्तल्लक्ष्यात्मकानुयोगिस्वरूपस्येत्यर्थः। ह्रदे वह्निसाधने धूमो बाधितः, आलोको बाधित इत्याद्यनुगतव्यवहारानुपपत्तेरिति भावः। इदमुपलक्षणम्, स्वरूपभेदस्य वैधर्म्याविनाभूततया तदनिरूपणेऽसम्भवदुक्तिकत्वादिति। भावेनेति। गूढाभिसन्धेरिदमभिधानम्। तमुद्घाटयति किं प्रत्यक्षाभासादिभिरिति। सहित इति। साहित्यं प्रतियोगितावच्छेदसम्बन्धेन वाऽभावीयान्वयितावच्छेदकसम्बन्धेन वा विवक्षितं चेदम्। एवञ्च प्रतियोगिविशेषिताभावबुद्धेर्भ्रमत्वप्रसक्तिरित्यन्यत्। साधारणमिति। बाधितानुमानप्रत्यक्षाभासाद्योरेक एव भेदः पारस्परिकः लक्षणघटकः पर्यवसन्न इति भावः। शङ्कते अन्यदित्यादिना। असन्नेव विशेषणं भवतीत्यन्वयः। अननुगमस्यावश्यकत्वात्प्रतियोगिगतमभावविशेषणत्वं व्यावृत्तिबुद्ध्याधायकत्वमात्रं वक्तव्यम्, न तु विद्यमानत्वादिगर्भमिति भावः। प्रतियोगिनोऽसत्त्वे व्यावृत्तिबुद्ध्याधायकत्वमपि न सम्भवतीत्याह विशिष्टमित्यादिना विशेषणं भवितुमर्हतीत्यन्तेन। न च सिद्धान्ताविरोधीत्यन्वयः।

वृथा विशेषणपदोपन्यासः, तदनुपन्यासे चान्योन्याभाववत्त्वमात्रमुपन्यस्तं भवेत्, तच्च प्रत्यक्षाभासादेर्व्यवच्छेद्यस्यापि सङ्ग्राहकं ततश्च विशेष्यादन्योन्याभावादधिकं किञ्चिद्वक्तव्यं यद्विशिष्टमुपन्यस्यताम्, स च यदि प्रतियोगी तदीयोऽभिधीयते तर्हि तस्याभावात्तदानीं विशिष्टाभावः प्रसक्तः, विशेष्यमात्रं परिशिष्टम्, तच्च केवलमतिप्रसक्तम्, तस्माद्विशिष्टव्यवहारप्रवर्तनकाले विशेष्यातिरिक्तं किञ्चिदनभ्युपेत्य विशिष्टसत्ता व्यवहर्तुमशक्या, अतः प्रतियोगी नाभावस्य विशेषणं भवितुमर्हति, उपलक्षणं तु स्यात्, तत्र चोक्तमेव । नचान्योन्याभाव एको न भवति, भिन्नप्रतियोगिकौ द्वावभावौ तौ, तथा च प्रतियोगिलक्षितं तत्स्वरूपमन्यदेवेति सिद्धान्ताविरोधि; न च युक्तम्; उभयं ह्यन्यो-

---

अन्योन्याभाव इति । बाधितप्रत्यक्षाभासाद्योः पारस्परिक एक एव भेदो भवेद्यदि तदा बाधितहेतुभिन्नत्वेनाभ्युपगते प्रत्यक्षाभासादौ प्रत्यक्षाभासादिभिन्नत्वस्याप्यावश्यकत्वादतिप्रसक्तिस्तदवस्था स्यात्, यदा तु बाधितप्रतियोगिकत्वविशिष्टोऽन्यः, अन्यश्च प्रत्यक्षाभासादिप्रतियोगिकत्वविशिष्टस्तदाऽऽद्यस्य सत्त्वेऽपि न द्वितीयस्य सत्त्वप्रसङ्गः प्रत्यक्षाभासादौ । ननु स्यादेवं यदि प्रतियोगितानिरूपकत्वसम्बन्धेनानुयोगितासम्बन्धेन वा प्रत्यक्षाभासादिर्विशेषणं भवेत्, नत्वेवं सम्भवति, दण्डविशिष्टं पुरुषमानयेत्यादावेकजातीयेनैव कर्मतासम्बन्धेन दण्डपुरुषयोर्विधेयान्वयित्वदर्शनेन विशेषणस्य विशेष्यीयान्वयितावच्छेदकसम्बन्धेनैव विधेयान्वयित्वनियमकल्पनात्, प्रकृते च सम्बन्धभेदात्, दण्डिनं भोजयेत्यादौ तु विद्यमानस्यापि दण्डस्योपाधित्वं परमस्तु न तु विशेषणत्वमिति; अथ प्रतियोगिनोऽपि भवतूपाधित्वमिति चेन्न, प्रतियोगिनोऽभावे विद्यमानत्वाभावात्, संयोगादिसम्बन्धेन हि विद्यमानताधीरनुभवसिद्धा न त्वनुयोगितादिसम्बन्धेनापि । अथोपलक्षणमपि तावद्यावत्कमेवेति तत्पक्षेऽपि कथमतिप्रसक्तिः, उपलक्ष्यस्यापि बाधितं प्रत्यक्षाभासादिकं नेति प्रतीतिविषयस्यान्यत्वात्, नचैतावता पारस्परिकत्वस्यैकत्र भेदे भङ्ग इति पीडितान्योन्याभावसञ्ज्ञेति वाच्यम् एकानुयोगिकत्वापरप्रतियोगिकत्वाभ्यामेव तदुपपत्तेरिति चेन्न, उपलक्षणत्वे प्रतियोगिनस्तद्विषयकसाक्षात्कारविषयताऽपि कदाचिद्भावेऽनुभूयेतेत्युक्तं भेदखण्डने पुरेति चेन्न, संयोगादितः प्रतियोगितायास्तन्निरूपितानुयोगितायाश्च विलक्षणताया अनुभवसिद्धत्वेन तत्तन्नियन्त्रितविशेषणविशेष्यभावस्यापि विलक्षणत्वात्, न ह्येकस्य यादृशः स्वभावस्तादृशोऽन्यस्यापि, जगद्वैचित्र्यभङ्गप्रसङ्गात्, एवञ्च संयोगादिनाऽस्तु विशेषणतोपाधिता वा विद्यमानस्यैव, प्रतियोगितादिना त्वविद्यमानस्यापि सा केन वार्यते, अन्यथा प्रतियोगिनोऽव्यावर्तकताया अनुभवसिद्धाया अनुपपत्तेरिति भावः । भिन्नप्रतियोगिकाविति । न भिन्नप्रतियोगिकत्वमात्रं द्वित्वसाधकम्, उभयत्वावच्छिन्नाभावैक्यदर्शनात्, अपि तु व्यासज्यवृत्तिधर्मानवच्छिन्नप्रतियोगिताकत्वसहितम् । प्रतियोगिलक्षितं = प्रत्यक्षाभासादिव्यावृत्तम् । तत्स्वरूपं = भेदस्वरूपम् । अन्यत् = बाधितप्रतियोगिकभेदादन्यत् । रिक्तस्य जन्तोरिति न्यायेन सिद्धान्तविरोधस्य दूषणताया द्वितीयपरिच्छेदे वक्ष्यमाणरीत्याऽनुपगमे स्वाह न च युक्तमिति । न वा युक्तमित्यर्थः । युक्तिविरोधो हि न केनापि सोढव्य इति भावः । यद्यपि प्रतियोगित्वादिकं दुर्वचमित्युपपादितं संसर्गाभावान्योन्याभाववैधर्म्यखण्डनेऽधस्तादिति तेन सम्बन्धेनाविद्यमानस्य विशेषणताद्युपपादनं नानिर्वाच्यवादिनि युज्यते, तथाप्युपेत्यैवेदानीं परकीयसिद्धान्तं पिशुनयन् परिहरति उभयमिति । तादात्म्याभावो भेद इति प्राचीनग्रन्थेषूपलभ्यते, तत्र घटपटयोस्तादात्म्यस्य प्रतियोगित्वविवक्षायामलीकप्रतियोगिकत्वापत्त्या भेदस्य प्रमाणागोचरत्वापत्तिः, अलीकस्यापि वा प्रामाणिकत्वापत्तिः, असत्ख्यातेस्तार्किकैरस्वीकारात्, "स्वाभावविरहात्मत्वं वस्तुनः प्रतियोगिता" इत्यत्र वस्तुन इति वदद्भिरुदयनाचार्यैरलीके प्रति-

न्याभावस्यैकात्मतया प्रतियोगि, एकात्मतायाश्च भेदविरोध एव, ततश्च येन रूपेण प्रतियोगित्वं तेन रूपेण भेदानवकाशाद्भिन्नप्रतियोगिकता कुतोन्योन्याभावस्य, येन रूपेण भिन्नता, तेनान्योन्याभावं प्रति प्रतियोगिता नास्ति वस्तुनोः । ननु वस्तुतस्तयोरेकत्वाभावात्कथमेकतया प्रतियोगित्वमन्योन्याभावं प्रति घटते वस्तुनोः ? यथा वस्तुतो भूतलसंसर्गाभावेऽपि घटस्य भूतलसंसृष्टतया भूतलसंसर्गाभावं प्रति, तत्र यथाऽन्यभूतलसंसृष्टतया दृष्टं तथाऽत्रापि तावेव सप्रकारभेदौ तदात्मानौ दृष्टौ, सोऽयं त्वद्दर्शना-

---

योगितायाः स्फुटं निषेधाच्च, प्रतियोगिताश्रयत्वेऽलीकत्वव्याघाताच्च, अलीकस्यैव निषेधेऽनलीकस्य तत्र सत्त्वापत्त्या निषेधं जानतोऽपि तत्र प्रवृत्त्याद्यापत्तेश्च । अत एव—आरोपितमलीकमेव, तस्यैव चात्यन्ताभावप्रतियोगित्वम्, न त्वन्यदेशस्थघटादेरिति—माध्वमतमसङ्गतम्, तत्तानुसन्धाने इह स घटो नास्तीतिप्रतीतिर्भवत्येव, अन्यथा तु घट इह नास्तीति सामान्याभावावगाहिनीति । एवञ्च तार्किकसिद्धान्तोपदर्शनपरोऽयं सन्दर्भोऽभावस्यासत्प्रतियोगिकतया न व्याख्यानार्हः । पटो न घटो घटो न पट इत्यादौ घटतादात्म्यरूपेण पटस्य तेन रूपेण घटस्यैव वा पटे पटतादात्म्यरूपेण च घटस्य तेन रूपेण पटस्यैव वा घटे निषेधोविषय इति तादात्म्याभावो भेद इति वस्तुगतिनिरूपणं प्राचां नानुपपन्नम्, शिखी ध्वस्त इत्यादाविवोक्तनिषेधस्य पटादौ घटतादात्म्यादिनिषेधे पर्यवसन्नत्वात्, पटादेः प्रतियोगित्वानुभवः परमेवमुपपद्यते इति सुष्ठूक्तं 'उभयं ह्यन्योन्याभावस्यैकात्मतया प्रतियोगी'ति । एकात्मतया = तादात्म्यरूपेण । येन रूपेण = तादात्म्येन । भेदानवकाशान् = भेदवत्तानवकाशात् । ननु घटो न पटः, पटो न घट इत्यत्रोभयस्य प्रतियोगितां वदता भिन्नप्रतियोगिकता स्वीकृतैवेति कथं साऽऽक्षिप्यते, तत्राह येन रूपेणेति । घटत्वपटत्वादिनेत्यर्थः । भिन्नता = भेदानुयोगिता, अत्रैव तृतीयार्थावच्छिन्नत्वस्यान्वयो न तु भेदे, अन्यथा यद्धर्मावच्छिन्नं प्रतियोगित्वं तद्धर्मावच्छिन्नप्रतियोगिताको न भेदः, यद्धर्मावच्छिन्नप्रतियोगिताकश्च भेदः, तद्धर्मावच्छिन्नं न प्रतियोगित्वमित्यस्मिन्नर्थे व्याघातापत्तेः । एवञ्च येन रूपेण प्रतियोगिता तदन्यरूपेण भेदवत्तामादाय भिन्नप्रतियोगिकता सम्पाद्यमानाऽपि भेदद्वैतसाधनेऽप्रयोजकतामेवास्कन्दते इति भावः । घटपटयोस्तादात्म्यस्य भेदप्रतियोगितावच्छेदकत्वमुक्तमित्यभिमत्याशङ्कते नन्विति । घटादितादात्म्यं घटादौ प्रसिद्धमेव प्रतियोगितावच्छेदकत्तयोक्तमिति सोदाहरणं परिहारमाह यथेति । घटस्येत्यस्य पूर्वत्राप्यन्वयः । प्रतीति । प्रतियोगितेत्यनुषज्यते । संसृष्टता संयोगः, स च संयोगत्वात्मकसामान्यरूपेणापि वस्तुतो भूतलीय एव संसर्गतया प्रतियोगितावच्छेदकः, अन्यदीयसंयोगेन घटनिषेधज्ञानस्य भूतले घटार्थिप्रवृत्तिविरोधित्वासम्भवादिति भावः । तावेव = घटपटावेव । घटपटयोः परस्परतादात्म्यव्यावृत्त्यर्थमाह । सप्रकारभेदाविति । घटत्वपटत्वप्रकाराभ्यां भेदवन्तावित्यर्थः। ननु सर्वमिदमापातत एव, घटो न पट इत्यादौ व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्यानुभविकत्वेऽसम्प्रतिपत्तेः, विवदन्ते चान्यत्रापि व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकाभावस्य प्रामाणिकत्वे इत्यावेदितमनुमानखण्डनशारदायाम्, घटादितादात्म्यरूपेण घटादेरेव पटादौ निषेधपक्षेऽपि घटात्यन्ताभावपटात्यन्ताभावयोरपि भेदो नैवं स्यात्, घटपटयोः प्रतियोगितानवच्छेदकरूपेण भेदस्याप्रयोजकतायास्त्वयोक्तत्वात्, विरुद्धधर्माध्यासेन यदि तयोर्भेदस्तदा स प्रकृतेऽपि तुल्यः, प्रत्यक्षाभासादौ बाधितं नेति भेदवति प्रत्यक्षाभासादिकं नेति भेदव्यवस्थाव्यवहारात्, बाधिते चानुमाने प्रत्यक्षाभासादिकं नेति भेदवति बाधितं नेति भेदस्याव्यवहारात् । किञ्च घटादितादात्म्यं यदि घटत्वादिरूपं तदा येन रूपेण घटपटयोः परस्परभेदानुयोगित्वं तेनैव प्रतियोगित्वमिति रिक्तमुक्तं 'येन रूपेण भिन्नता तेनान्योन्याभावं प्रति

भिप्रायो नास्माकं निर्वाहार्ह इत्यास्तां विस्तरः । अपि च घटपटयोः स्वरूपभेदेन वैधर्म्यभेदेन वोभयकोटीकृतयोरन्योन्याभावनिरूपणं भवति, अत्र तु प्रत्यक्षाभासादेः प्रत्यक्षाभासत्वादिनैककोटिताऽस्तु नाम, यत्तु प्रत्यक्षाभासादिव्यतिरिक्ततया प्रतिपत्तव्यं तस्य केन रूपेणैककोटीकरणम् ? न तावत्प्रतिव्यक्तिभिन्नेन स्वरूपेण, तेषामनन्ततया बुद्धिस्थीकर्तुमशक्यत्वात् । नापि यद्रूपतयोपात्तं विशेष्यं प्रत्यक्षाभासादिव्यतिरिक्तत्वेन विशेषणेन विशेषणीयं तद्रूपकोडीकृततयैवान्योन्याभावनिरूपणमिति युक्तम्, तस्य स्वरूपस्य प्रत्यक्षाभासादिसङ्ग्राहकतया कोटिद्वैतभङ्गापादकत्वेनान्योन्याभावनिरूपणविरोधात्, तस्मात्स्वरूपभेदं वैधर्म्यभेदं वा कोटिद्वयव्यवस्थापकमप्रतिसन्धायान्योन्याभावनिरूपणमशक्यमिति स्थिते स्वरूपभेदपक्षस्येह दूषितत्वाद्धर्मभेदः कश्चिद्वक्तव्यः, न चासौ वक्तुं शक्यः, शक्यत्वे वा तमादायैव लक्षणव्यवस्थितिरस्तु कृतमन्योन्यव्यतिरिक्तत्वकुयुक्तया । तदनेनान्यत्राप्यतिप्रसक्त्युदाहरणान्यत्वेन व्यावर्तनं

---

प्रतियोगिता नास्ति वस्तुनो'रिति, यदि च घटादितादात्म्यं घटत्वाद्यतिरिक्तं तदा तादात्म्येन नायं घट-
इत्यप्रतीतेस्तादात्म्यस्य प्रतियोगितां प्रति संसर्गविधयेव धर्मविधयाऽप्यवच्छेदकत्वे न मानम्. अत एव
तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वं न भेदलक्षणमितिनिवेदितमधस्तात् । घटो न पट
इत्यादौ घटत्वादेरेव प्रतियोगितावच्छेदकत्वस्यानुभविकत्वाच्च । मतान्तराणां चात्र विषये निरासो भेद-
खण्डनप्रकरणे एवानुसन्धेयः । एवमधिकरणीयसंसर्गेण घटादिनिषेध इत्यपि न नियतम्, गुणादावपि
संयोगेन घटाद्यभावप्रतीतेरित्याशङ्क्याह सोऽयमिति । अस्माकमिति । अनिर्वाच्यवादिनामित्यर्थः ।
नन्वेवं प्रत्यक्षाभासादिनिष्ठप्रतियोगितानिरूपितानुयोगिताविशेषरूपमेव भेदत्वमत्र निवेश्यमिति न
प्रत्यक्षाभासादावतिप्रसङ्ग इत्यतस्तादृशानुयोगितामभ्युपेत्य दोषान्तरमाह अपिचेति । स्वरूपभेदेन =
उभय-
वैधर्म्यालिङ्गितस्वरूपग्रहेण । वैधर्म्यभेदेन वा = केवलघटत्वपटत्वात्मकवैधर्म्यरूपभेदग्रहेण वा ।
कोटीकृतयोः = प्रतियोग्यनुयोगिभावेन प्रतीतयोः । भिन्नत्वेन गृहीतयोरेव प्रतियोग्यनुयोगिभावग्रहः,
प्रतियोग्यनुयोगिभावेन गृहीतयोरेव च भेदग्रहो वक्तव्योऽन्यथा स्वस्मादपि स्वभेदग्रहापत्तेरित्यन्योन्या-
श्रय इत्याशङ्क्यान्योन्याभावात्मकभेदीयप्रतियोग्यनुयोगिभावप्रतीतेः स्वरूपाद्यात्मकभेदग्रहाधीनत्वम-
भिहितम् । एककोटिता = प्रतियोगिताग्रहः । व्यतिरिक्ततया = भेदानुयोगितया । एककोटीकरणं =
अनुयोगिताग्रहः । विशेष्यं = प्रमाविषयीभूतप्रकृतधर्मिवृत्त्यभावप्रतियोगिसाध्यकत्वम् । विशेषणीय-
मित्यन्वयः । तद्रूपकोडीकृततया = तद्रूपावच्छिन्नानुयोगिताग्रहेण । सङ्ग्राहकतया = गततया । कोटि-
द्वैतभङ्गापादकत्वेनेति । यादृशं प्रतियोगितानुयोगितावच्छेदकद्वयमपेक्षितं तदनुपपादकत्वेनेत्यर्थः ।
निरुक्त-
द्रव्यं घटो नेति प्रतीतेरप्रामाणिकतया प्रतियोग्यवृत्तिधर्मस्यैवानुयोगितावच्छेदकतया
निरूपणविरो-
साध्यकत्वस्य प्रतियोगिगतस्यानुयोगितावच्छेदकतयाऽनपेक्षणीयत्वादिति भावः ।
धात् = निरूपकत्वासम्भवात् । कोटिद्वयव्यवस्थापकं = अनुयोगिप्रतियोगिभावोपपादकम् । दूषितत्वा-
दिति । अनन्ततया बुद्धिस्थीकर्तुमशक्यत्वादित्यनुपदमुक्तम्, स्वरूपभेदस्यापि वैधर्म्याविनाभूतत्वा-
दिति भावः । अनेनेति । प्रति-
व्यक्तिभिन्नस्वरूपस्य प्रति-
च्चेत्यपि द्रष्टव्यम् । अस्त्विति । सर्वत्रैव तस्याव्यवहितप्रतिपत्तिकत्वादिति भावः । अनेनेति । प्रति-
योगिव्यावृत्तानुयोगितावच्छेदकनिर्वचनानिर्वचनयोर्लक्षणस्यानौचित्यप्रदर्शनेनेत्यर्थः । निरसनीयमि-
त्यन्वयः । अन्यत्रेति । गुणकर्मान्यत्वे सति सत्तावत्त्वं द्रव्यत्वमित्यादौ, यथा वा शब्दशक्तिप्रकाशि-
कायां "यादृशार्थकप्रकृतिनिपाताभ्यां भिन्नो यादृशार्थे शक्तिनिरूढलक्षणान्यतरात्मकप्रशस्तवृत्तिमान्

लक्षणवादिनो भग्नस्य शरणमस्त्रं निरसनीयम्, अत एव भेदकान्तरं विना तद्व्यतिरिक्तत्वमेव दुर्निरूपमित्यभिप्रायेण तत्तदन्यत्वे सतीति विशेष्यमाणं वैशेषिकहेतुं 'नैतदेवं येन येन व्यभिचारस्तदन्यत्वे सति प्रमेयत्वा'दिति सत्प्रतिपक्षहेतूपन्यासादुपहसन्ति सन्त इति । इति बाधखण्डनम् ।

इति कवितार्किकचक्रचूडामणिश्रीश्रीहर्षप्रणीते खण्डनखण्डखाद्ये प्रमाणतदाभासखण्डनं नाम प्रथमः परिच्छेदः ।

---

यादृशः शब्दः स तादृशार्थकप्रत्यय" इत्यादिलक्षणेषु शक्त्या निरूढलक्षणया च गुणगुणिनोः स्थितिप्रस्थानयोश्च बोधिकानां शुक्लस्थाप्रभृतिप्रकृतीनां शक्त्या समुच्चयादिप्रतिपादकानां च चादिनिपातानां भेदघटितेषु । अत एवेत्यस्य, अभिप्रायेणेत्यस्य, हेतुमित्यस्य, च उपहसन्तीत्यत्रान्वयः । भेदकान्तरं विना = प्रतियोगिव्यावृत्तानुयोगितावच्छेदकनिरूपणं विना । तद्व्यतिरिक्तत्वं = व्यभिचारस्थलान्यत्वम्, वैशेषिकपदं प्रतिवादिमात्रोपलक्षकम् । हेतुं = लक्षणमलक्षणं वा, नहि व्यभिचारस्थलान्यत्वमितरभेदसाध्यकहेतावेव दीयते । एतदिति पक्षः, नैवमिति साध्यम् । यथा द्रव्यं स्वेतरभिन्नं गुणकर्मान्यत्वे सति सत्त्वादिति केनचिदुक्ते द्रव्यं न स्वेतरभिन्नं तत्तद्व्यभिचारस्थलान्यत्वे सति प्रमेयत्वादितिप्रयोगः । यदि भेदकान्तरं विनैव तत्तद्व्यतिरिक्तत्वनिरूपणं स्वीक्रियते तदाऽस्योपहासता । तदन्यत्वे इति । तत्पदस्य बुद्धिस्थपरामर्शकत्वेन वीप्सितयत्पदोपस्थापितनानारूपाणामप्येकेनैव तदा युगपत्परामर्शोपपत्तेस्तत्पदं न वीप्सितम् । सन्त इत्यन्ते सत्पदार्थस्मरणं मङ्गलार्थम् ।

ननु—साध्याभाववत्पक्षादिकं दोषः, न तु साध्याभाववत्पक्षकत्वादिकम्, साध्याभाववत्पक्षादिरूपविशिष्टान्तरघटितत्वात्, एतेन प्रमितत्वघटितस्य तस्य दोषता परास्ता, अगृहीताप्रामाण्यकग्रहस्यैव प्रतिबन्धकतया ग्रहे प्रमात्वनिश्चयस्य प्रतिबन्धकतानौपयिकत्वात्, स्वज्ञानविषयप्रकृतहेतुतावच्छेदकत्वसम्बन्धेन च साध्याभाववत्पक्षादेर्दुष्टताव्यवहारनियामकत्वोपगमेन कालिङ्गतादशायां प्रत्यक्षाभासादौ हेत्वाभासताप्रसङ्गवार्ता, साध्यत्वपक्षत्वादिकं तु नेह विवक्षितम्, वह्न्यभाववद्ध्रदत्वादिनैव दोषत्वात् । न च तथापि बाधो हेत्वाभासपदवीं नाधिरोढुर्माष्टे, प्रत्यक्षादावपि तद्ग्रहस्य प्रतिबन्धकत्वात्, न चानुत्पादप्रयोजकत्वरूपं प्रतिबन्धकत्वमनुमितिं प्रत्येव, प्रत्यक्षस्य तूत्पन्नस्याप्रामाण्यमेव ज्ञाप्यते तेनेति वाच्यम्; अस्य विभागस्य शपथैकप्रमाणकत्वात्, सर्वत्रैवोत्पन्ने ज्ञानेऽप्रामाण्यमेव ज्ञाप्यत इत्यपि वक्तुं शक्यत्वाच्च, शाब्दस्थले तथा क्लृप्तत्वात्, आहार्यशाब्दस्यावश्योपगन्तव्यत्वात्, उपनीतभानं स्मृत्यादिकं च प्रत्यपि त्वया तादृशप्रतिबन्धकताया उपगमेनानुमितिं प्रत्येव तस्या अपि वक्तुमशक्यत्वाच्चेति—वाच्यम्, हेतुदोषतयैव हेत्वाभासत्वव्यवहारसम्भवेन हेत्वतिरिक्तदोषतायामपि क्षत्यभावात्, एतदपि च हेत्वाभासेषु प्राचीनैर्बाधस्य परिगणनं कृतमित्येतावतैवोपपाद्यते, न च परिगणने निर्बन्धः, वस्तुतस्तु बाधस्थले हेतोर्दुष्टत्वव्यवहारे कस्याप्यविप्रतिपत्तिरेवेतीत्थमेव हेत्वाभासतोपपादनीयेति चेन्न; बाधस्थले दोषान्तरसाङ्कर्यस्यावश्यकत्वेन तेनैव हेत्वसाधारणदोषतया क्लृप्तेन हेत्वाभासत्वव्यवहारोपपत्तौ बाधस्य हेत्वाभासतायां मानाभावात्, तथाहि—ह्रदो वह्निमान् धूमादित्यादौ स्वरूपासिद्धिः, ह्रदो धूमवान् वह्नेरित्यादौ वह्निरनुष्णः कृतकत्वादित्यादौ च व्यभिचारः, गन्धप्रागभावावच्छिन्नो घटो गन्धवान् पृथिवीत्वात्, मूलावच्छिन्नो वृक्षः कपिसंयोगी एतद्वृक्षत्वादित्यादावपि यत्र यद्देशकालावच्छेदेन साधनं तत्र तद्देशकालावच्छेदेन साध्यमिति व्याप्तेर्भङ्ग एव । एतेन

घटो गन्धवान् पृथिवीत्वादित्यादेर्बाधासङ्करोदाहरणत्वं सुदूरपराहतम् । किञ्च देशमात्रघटितापि व्याप्तिस्तत्र नास्त्येव, कालविशेषावच्छेदेन देशविशेषावच्छेदेन च साध्याभाववति हेतोर्वृत्तेः, न च प्रतियोग्यसमानाधिकरणसाध्याभावो निरवच्छिन्नविशेषणतासम्बन्धेन साध्याभाववत्त्वं वा व्यभिचारघटकमिति वाच्यम्, एवं सति बाधेऽपि तथैव साध्याभावस्य साध्याभाववत्त्वस्य वा प्रवेशसम्भवादुक्तस्थले बाधोऽपि न स्यात् । पक्षे साध्याभावमात्रनिश्चयसामान्यस्याव्याप्यवृत्तित्वज्ञानाप्रामाण्यज्ञानानास्कन्दितस्य कार्यानुत्पादप्रयोजकत्वदर्शनेन यदि तत्र साध्याभावमात्रघटितस्यैव बाधत्वं तदा साध्याभावमात्रघटितव्यभिचारनिश्चयसामान्यस्यापि तादृशस्य व्याप्तिग्रहप्रतिबन्धकत्वदर्शनेन साध्याभावमात्रघटितस्यैव व्यभिचारत्वमिति तुल्यम् । एवं सत्यपि निर्दिष्टस्थलेषु व्यभिचारित्वव्यवहारो नोपेयते बाधितत्वव्यवहारश्चोपेयते इति परिभाषामात्रमेव, अतएवायं वृक्षः कपिसंयोगीत्यादौ बाधितत्वव्यवहारमनादृत्य कपिसंयोगाभाववद्वृक्षेऽतिव्याप्तिमाशङ्क्याव्याप्यवृत्तित्वभ्रमानास्कन्दितत्वं दोषनिश्चये निवेशितं सामान्यनिरुक्तिविवेचनासु, तथा सति कपिसंयोगाभावो वृक्षेऽव्याप्यवृत्तिरिति ज्ञानस्य प्रमात्वेन तदास्कन्दितस्यापि कपिसंयोगाभाववद्वृक्षज्ञानस्य निश्चयसामान्यान्तर्गतत्वेन नातिव्याप्तिः, तस्याप्रतिबन्धकत्वात् ।

एतेन—माभूद्दुष्टत्वसङ्करो ज्ञानासङ्करस्तु स्यात्, नहि बाधग्रहदशायां नियमतः दोषान्तरग्रहो येन प्रतिबन्धकतायां बाधग्रहोऽन्यथासिद्धः स्यात्; ननु तदा परामर्शोऽस्ति न वा, नचेत्कारणविरहादेवानुमित्यनुत्पादनिर्वाहेण बाधग्रहोऽन्यथासिद्ध एव, अस्ति चेत्, तदापि तथैव, तथाहि—यदि बाधग्रहपरामर्शयोर्भेदस्तदा ताभ्यां व्यभिचारघटकसमर्पणाद्विशिष्टज्ञानसामग्रीसत्त्वात्साध्याभाववद्वृत्तित्वज्ञानोत्पत्तिसम्भवः, अथोत्पद्यतां किं तेन, परामर्शस्य प्रथममेवोत्पन्नत्वात्, तत्प्रतिबन्धकतयैव च तस्य दोषत्वात्, तथा च तत्रानुमितिप्रतिबन्धकत्वं बाधग्रहस्यैवेति चेन्न, उत्पन्ने परामर्शे व्यभिचारग्रहोऽप्रामाण्यग्राहकीभवन्ननुमित्यनुत्पादप्रयोजकीभवेदेव । अथ तयोरभेदः, पक्षः साध्याभाववान् साध्यव्याप्यहेतुमांश्चेत्येकं ज्ञानमिति यावत्, तथा च विशकलितयोः साध्याभाववत्त्वहेतुमत्त्वयोर्न व्यभिचारत्वमिति कथं व्यभिचारग्रहेणान्यथासिद्धिशङ्केति चेन्न, विशिष्टस्य साध्याभाववद्वृत्तित्वादेर्यथा व्यभिचारत्वम्, तथा तद्धर्मिणि साध्याभाववत्त्वादिना सहितस्य तद्धर्मिणि हेतुमत्त्वादिकस्यापि, विशकलिततदुभयज्ञानादप्यनुमितिप्रतिरोधानुभवादेवं च परामर्शेऽप्रामाण्यग्राहकतयैव व्यभिचारग्रहस्य दूषकत्वसम्भवोऽगृहीताप्रामाण्यकस्यैव परामर्शस्यानुमितिजनकत्वादिति चेन्न, व्यभिचारग्रहेण परामर्शेऽप्रामाण्यग्रहो यस्मिन् क्षणे जननीयस्तस्मिन् क्षणेऽनुमित्युत्पत्तेर्बाधग्रहेणैव वारणीयत्वात्, अन्यथा पूर्वक्षणेऽगृहीताप्रामाण्यकपरामर्शसद्भावात्सा स्यादेव, अप्रामाण्याग्रहस्य स्वातन्त्र्येणानुमितिहेतुत्वपक्षेऽपि पूर्ववर्तितयैव हेतुत्वं न तु प्रतिबन्धकाभाववत्कार्यसहवर्तितया, येनानुमित्युत्पत्तिक्षणेऽपि तदपेक्षा स्यात् । एवञ्च बाधग्रहो नान्यथासिद्ध इति । एवं लाघवज्ञानसहकारेण परामर्शविषयतानवच्छेदकरूपेण साध्यानुमितिं तेन रूपेण साध्याभावग्रह एव वारयति । यत्तु—साध्यनिष्ठं धर्म्यवृत्तित्वमपि बाधः, नचैतादृशबाधग्रहे व्यभिचारग्रह आवश्यकः, साध्ये धर्म्यवृत्तित्वस्य व्यभिचाराघटकत्वादिति, तन्न, ह्रदो वह्निमानित्याद्यनुमितावाधाराधेयभावसंसर्गो भासते, ननु तस्यापि संसर्गः, सम्बन्धसम्बन्धस्य विशिष्टबुद्ध्यविषयत्वात्, एवञ्च साध्यनिष्ठधर्म्यवृत्तित्वग्रहस्य नानुमितिप्रतिबन्धकत्वसम्भवः, तस्याधाराधेयभावात्मकसम्बन्धाभावविषयकत्वात्, तदीयतत्संसर्गाभावबुद्धौ च तत्सम्बन्धावच्छिन्नतदभावबुद्धेः प्रतिबन्धकत्वादिति—परास्तम्, एतावता बाधबुद्धिप्रतिबध्यताऽनुमितावायाति न तु बाधस्य लिङ्गीयदोषत्वम्, अनुमितिपरामर्शान्यतरप्रतिबन्धकयथार्थज्ञानविषयत्वमात्रेण

बाधे लिङ्गीयत्वस्यामन्तव्यत्वात्, वह्न्यभावद्ध्रदादेर्लिङ्गसम्बन्धित्वात्, यस्य कस्यचित्सम्बन्धस्यातिप्रसञ्जकत्वात्। स्वज्ञानविषयप्रकृतहेतुतावच्छेदकवत्त्वं सम्बन्ध इति चेन्मन्दोऽसि, बाधे लिङ्गतावच्छेदकविशिष्टीयत्वे विप्रतिपद्यमानं प्रति लिङ्गतावच्छेदकवत्त्वस्य सम्बन्धताया वक्तुमशक्यत्वात्, न ह्यसिद्धमसिद्धेनैव साध्यते इति।

एवं लक्षणमपि दुर्वचमेव, साध्याभाववत्पक्षसाध्यवदन्यपक्षपक्षनिष्ठसाध्याभाववत्त्वादेः प्रत्येकमव्यापकत्वात्। यत्तु—प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्युन्नायकभिन्नत्वे सति प्रकृतपक्षप्रकृतसाध्यग्रहविरोधिभिन्नत्वे च सति प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहप्रतिबन्धकत्वं विभाजकम्, तत्राद्येन सत्यन्तेन सत्प्रतिपक्षवारणम्, द्वितीयेन पक्षसाध्याप्रसिद्ध्योर्वारणम्, विशेष्यदलेन चोदासीनवारणम्। न च साध्याभावविशिष्टपक्षादिरूपबाधे विरोध्युन्नायकात्साध्याभावव्याप्यविशिष्टपक्षादितोऽन्यत्वं नास्तीत्यसम्भवः, विशिष्टपक्षादिग्रहविरोधिपक्षतावच्छेदकाभावविशिष्टपक्षाद्यन्यत्वमपि च पक्षाद्यप्रसिद्धिस्थलीये बाधेऽव्याप्तिकरमिति—वाच्यम्, यादृशविशिष्टनिरूपितविषयिता प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्यनुमितिजनकतानवच्छेदकत्वे सति विशिष्टपक्षग्रहत्वस्य विशिष्टसाध्यग्रहत्वस्य च न्यूनवृत्तिर्या विशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्यग्रहत्वान्यूनवृत्तिः प्रतिबध्यता तन्निरूपितप्रतिबन्धकतावच्छेदिका तादृशत्वस्य विवक्षणीयत्वात्, सत्यन्तेन सत्प्रतिपक्षवारणम्, न्यूनवृत्तित्वनिवेशेन च पक्षसाध्याप्रसिद्ध्योर्वारणम्। अथ वह्निमान् ह्रदो वह्निमानित्यत्राश्रयासिद्ध्यात्मकबाधेऽव्याप्तिः, तद्विषयकत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यताया विशिष्टपक्षग्रहत्वान्यूनवृत्तित्वादितिचेन्नैवम्, उद्देश्यतावच्छेदकताविधेयतावच्छेदकतातिरिक्ता सती या विशिष्टपक्षे विशिष्टसाध्यवैशिष्ट्यबोधीयविषयतान्तःपातिप्रकारता तदवच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वे सति प्रकृतपक्षप्रकृतसाध्यवैशिष्ट्यग्रहविरोध्यनुमितिजनकतानवच्छेदिका यादृशविशिष्टविषयिता तादृशत्वस्य विवक्षितत्वात्, पक्षसाध्याप्रसिद्ध्योर्व्यावृत्तयेऽतिरिक्तान्तम्, तत्रत्यप्रतिबध्यतावच्छेदकीभूतप्रकारताया उद्देश्यतावच्छेदकतादिस्वरूपत्वात्। अथैवमपि पर्वतो वह्न्यभाववह्निव्याप्याभावोभयवानित्यादौ वह्निव्याप्यवत्पर्वतादिरूपबाधेऽव्याप्तिः, तस्य वह्निमत्पर्वतरूपविरोध्युन्नायकत्वादितिचेन्न, उद्देश्यतावच्छेदकताविधेयतावच्छेदकताऽतिरिक्ता या विशिष्टपक्षविशिष्टसाध्यवैशिष्ट्यबोधीयविषयतान्तःपातिप्रकारता तदवच्छिन्नप्रतिबध्यतानिरूपिता सती या स्वनिरूपितप्रतिबध्यतावच्छेदकविषयित्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयित्वावच्छिन्नानुमितिनिष्ठजन्यतानिरूपितजनकतावच्छेदकीभूतविषयित्वानवच्छिन्नप्रतिबन्धकता तदवच्छेदकविषयितानिरूपकतावच्छेदकरूपवत्त्वस्य विवक्षणीयत्वात्, स्वं प्रतिबन्धकता, वह्निव्याप्याभाववत्ताज्ञानत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतानिरूपितप्रतिबध्यतावच्छेदकं न वह्न्यभाववत्पर्वतविषयित्वम्, किन्तु वह्निव्याप्याभाववत्पर्वतविषयित्वमेव, अतस्तादृशप्रतिबन्धकताया वह्निव्याप्याभाववत्पर्वतज्ञानविरोधिवह्निव्याप्यवत्पर्वतोन्नायकतावच्छेदकवह्निव्याप्यव्याप्यवत्पर्वतविषयित्वानवच्छिन्नत्वसत्त्वान्नोक्तबाधासङ्ग्रह इति; तन्न मनोज्ञम्, साध्याभाववत्पक्षत्वसाध्यवदन्यपक्षत्वादीनां प्रोक्तप्रतिबन्धकतावच्छेदकविषयितानिरूपकतावच्छेदकानां नानात्वात्प्रत्येकमिलितविकल्पानुपपत्तेरनिवारणात्, न च तादृशनिरूपकतावच्छेदकत्वेन तेषामनुगमः, तेनापि रूपेण प्रत्येकं वा मिलितानां वा लक्षणत्वमिति शङ्कनीयत्वात्, तादृशनिरूपकतावच्छेदकत्वस्यापि स्वरूपसम्बन्धविशेषरूपतयाननुगमासंस्पर्शित्वाच्च, यद्यद्दोषवारणाय यद्यद्विशेषणमुपात्तं तस्य तस्य तत्तद्विशेषणोपादानेऽपि सत्त्वाच्च, सामान्याभावस्य खण्डितत्वेनोद्देश्यत्वावच्छेदकताद्यतिरिक्तताया उद्देश्यतावच्छेदकतादौ तादृशजनकतावच्छेदकीभूतविषयित्वानवच्छिन्नत्वस्य च तादृशविषयित्वावच्छिन्ने सद्भावात्। एतच्च विशिष्टान्तराघटितत्वादत्रापीहावश्यनिवेशनीये

समानमेव । रीत्यन्तरञ्चेह खण्डनस्यानुसन्धेयम्, तथाहि—उद्देश्यतावच्छेदकताद्यतिरिक्तत्वं तदतिरिक्तत्वेन भ्रान्तिविषयत्वं वा तदतिरिक्तत्वेन प्रमाविषयत्वं वा, वस्तुगत्यैव तदतिरिक्तत्वं वा, आद्येऽतिव्याप्तिः स्पष्टैव, द्वितीयतृतीयौ च सर्वाभेदमिच्छत्यद्वैतवादिन्यव्यवच्छेदकौ, भेदस्य निरस्तत्वात्, अन्योन्याश्रयाच्च, वस्तुगत्याऽतिरिक्तत्वनिर्णयस्य प्रमात्वनिर्णयाधीनत्वात् । प्रतिबध्यप्रतिबन्धकभावमात्रस्याप्रामाणिकत्वं तु स्वप्नादौ व्यभिचारेण प्रागुक्तमेव । ह्रदान्यो ह्रदो वह्निमानित्यादौ चाव्याप्तिरेव, आहार्यस्याप्रतिबध्यत्वात्, अत्रवदन्तिकल्पानुसारेण परिष्कारस्य निरस्तत्वादिति शम् ।

इति खण्डनशारदायां बाधखण्डनं हेत्वाभासखण्डनप्रकरणञ्च ।

हरिहरादिभिरीड्यतया परा सुखतया रचिताखिलमङ्गला ।
वचनसूकलितामलबिन्दुगा जयति कापि कला भुवनेश्वरी ॥

इति श्रीशङ्करचैतन्यभारतीयतिविरचितायां खण्डनखण्डखाद्यशारदायां प्रमाणतदाभासखण्डनं नाम प्रथमः परिच्छेदः ।

श्रीशारदार्पणमस्तु ।



॥ ॐ ॥

श्रीशारदायै नमः।

# खण्डनखण्डखाद्यम् ।

## निग्रहानिरुक्तिर्नाम द्वितीयः परिच्छेदः ।

### प्रतिज्ञाहानिखण्डनम् ।

ननु यदि दुर्लङ्घ्या हेत्वाभासास्तर्हि निग्रहस्थानानि प्रतिज्ञाहान्यादीनि बाधकानि भविष्यन्ति; मैवम्, का पुनः प्रतिज्ञाहानिः ? स्वीकृतोक्तपरित्यागः प्रतिज्ञाहानिरित्यलक्षणम्, तथाहि—झटितिसंवरणेऽनिग्रहस्थानेऽपि गतत्वेन परदूषितेत्यपि विशेषणीयत्वात्। किञ्च स्वीकृतेत्यनेनाभीष्टमात्रं वाऽभिधीयते, अस्तित्वेनेष्टं वा, आद्ये केनचिद्रूपेणेष्टस्य रूपान्तरेण परित्यागः क्व नाम नास्तीत्यतिव्याप्तिः । स्वीकारपूर्वकोऽस्वीकारस्त्यागः,

---

यस्याः प्रसादमासाद्य वैदुषीं सेदुषो यतेः ।
जल्पशिल्पविकल्पाब्धेरल्पताऽऽलीकतामिता ॥
बिन्दुनादकलालीला शान्तिर्विश्वातिशायिनी ।
सत्तातता परा संविच्चिन्त्या सा नः सरस्वती ॥

दुर्लङ्घ्या इति । तथा चानिर्वाच्यत्वान्नाद्वैतव्याघातकत्वं हेत्वाभासानाम् । निर्वाच्यत्वे हि तेषां पारमार्थिकत्वापत्त्या पारमार्थिकाद्वैतव्याघातकत्वं स्यादेवेति भावः । निग्रहस्थानान्तर्गतानामपि हेत्वाभासानां निराकृतत्वादुक्तं प्रतिज्ञाहान्यादीनीति । बाधकानीति । निर्वक्तुं शक्यतया पारमार्थिकत्वेनाद्वैतव्याघातकानीत्यर्थः । केतिनिर्वाच्यत्वाक्षेपः स्वीकृतेत्यादिनोपपादनीयः । इह सामान्यलक्षणमादौ कुतो न निराकृतमिति तु नाशङ्कनीयम्, प्रतिज्ञाहान्याद्यन्यतमत्वस्य सामान्यलक्षणत्वे प्रतिज्ञाहानित्वादिनिरासेनैव तन्निरासात्, उद्देश्यानुगुणसम्यग्ज्ञानाभावलिङ्गत्वस्य तथात्वेऽपि प्रतिज्ञाहानित्वादेरेव लिङ्गतावच्छेदकत्वाल्लिङ्गतायाश्च तदधीनप्रतिपत्तिकत्वात्। विप्रतिपत्त्यप्रतिपत्त्यन्यतरोन्नायकधर्मवत्त्वस्य तथात्वेऽपि तादृशधर्मत्वं प्रतिज्ञाहानित्वादेरेव । अत्राद्येऽन्यतमत्वस्य भेदकूटघटितत्वेनासर्वज्ञाज्ञेयत्वम्, प्रतिज्ञाहान्यादेरननुगमादानन्त्यात् । द्वितीये च लिङ्गतावच्छेदकधर्मवत्त्वस्यावश्यविवक्षणीयत्वेन प्रत्येकमिलितविकल्पानुपपत्तिः । एवं तृतीयेऽपीत्यादिकमपि द्रष्टव्यम् । स्वीकृतेत्यादि । उक्तपदं स्वयं विशिष्योक्तपरम्, एवञ्चापसिद्धान्ते नातिव्याप्तिः, अहं नैयायिक इत्यादिरीत्या सामान्यत एव सिद्धान्तस्य कथायामभिधानात् । परेण विशिष्योक्तस्याप्यन्येनानभ्युपगमो न दोषावह इत्यतः स्वयमिति । एतच्च परित्यागपदस्यात्रानभ्युपगममात्रपरत्वे उक्तम्, नत्वभ्युपगमपूर्वकानभ्युपगमपरत्वे इति । एवं च परमतमनूद्य त्यागेऽतिव्याप्तिवारणफलं स्वीकृतेति । इत्यलक्षणम् = इत्येतद्वाक्यप्रतिपाद्यः परित्यागान्तार्थोऽलक्षणमित्यर्थः, तेन लक्ष्यदलघटितस्यालक्षणतायाः परेणाप्यङ्गीकार्यत्वेऽपि न क्षतिः । झटितिसंवरण इति । परेणादूषित एव स्वोक्ते स्वयमेव दूषणं विभाव्य प्रकारान्तराभिधाने इत्यर्थः । तेन हि स्वदोषः संव्रियत इति तस्य संवरणत्वम् । झटितीति च प्रायोवादः, परेण दूषणं विना विलम्बेनापि कदाचित् स्वयं दूषणं विभाव्य प्रकारान्तराभिधानस्य दुष्टत्वानुपपत्तेः । विशेषणीयत्वादिति । तथा च हेत्वन्तरं नाम निग्रहस्थानमिति भावः । यस्तु पूर्वमेव परदूषितेति विशेषणमुपादायाभिधत्ते तं प्रत्याह किञ्चेति । इष्टपदमभ्युपगतपरम् । केनचित् = नित्यत्वादिना रूपान्तरेण = अनित्यत्वादिना । स्वीकार-

न च रूपान्तरेण तत्र स्वीकारस्ततस्त्याग एवासौ न भवतीति नातिप्रसङ्ग इति चेन्न, स्वीकारस्यापि त्यागपदार्थान्तर्भावे स्वीकृतेति व्यर्थम्, तत्त्यागेऽपि च नाद्यद्वितीयौ, अस्तित्वेनेष्टस्य रूपान्तरेण सर्वत्रैवानिष्टत्वसम्भवात्। संयोगाद्यव्याप्यवृत्तितावादिपक्षे चैकस्यैव संयोगस्यास्तित्वनास्तित्वाभ्यामभ्युपगम्यमानत्वात्। एवञ्च कालदेशादिभेदेन सत्त्वासत्त्वाभ्युपगमेऽतिप्रसङ्गो द्रष्टव्यः। तस्यैव तदैव तत्रैव तेनैव तथैवेष्टत्वानिष्टत्वे विवक्षिते अत्रेति चेत्, एवं तर्हि कालमभ्युपगम्यानभ्युपगच्छतः प्रतिज्ञाहानिर्न स्यात्, तत्र तदेत्युक्तविशेषणस्यासम्भवात्, न हि कालः कालान्तरं स्वात्मानमेव वाऽव्याप्यास्ते, काले तदेतिविशेषणस्य प्रतिक्षेपेऽन्यत्र च प्रक्षेपे लक्षणस्यैकताक्षतिः. कालं प्रति च प्रतिज्ञाहानेरदोषत्वे तद्वदन्यत्राप्यदोषत्वापातः, यदैव स्वीकारस्तदैवास्वीकारासिद्धेश्च।

---

पूर्वकोऽस्वीकारः = तेन रूपेण तद्वस्तुस्वीकारपूर्वकस्तेन रूपेण तद्वस्तुविषयकास्वीकारः। तत्त्यागेऽपि = स्वीकृतपदानुपादानेऽपि। आद्यद्वितीयौ = परित्यागपदार्थघटकीभूतस्वीकारस्याभ्युपगममात्रपरत्वमस्तित्वेनाभ्युपगमपरत्वं वेति विकल्पौ। त्यागपदार्थस्य यथाश्रुतोक्तरूपतायामेवोक्तातिव्याप्तिमुभयविकल्पसाधारण्येनाह अस्तित्वेनेति। रूपान्तरेण = नास्तित्वेन। त्यागपदस्य तेन रूपेणेत्याद्युक्तार्थत्वे उक्तातिव्याप्तिर्नास्तीति दोषान्तरमाह संयोगादीति। आदिपदेन द्रव्यवृत्तिसंयोगाभावविभागज्ञानादिकं ग्राह्यम्। एषामपि कैश्चिदधिकरणस्यावच्छेदकभेदेन भेदमुपगम्य व्याप्यवृत्तित्वमेवोपगतमित्याशयेनोक्तं पक्ष इति। अभ्युपगम्यमानत्वादिति। तथा चास्तित्वेन शाखाद्यवच्छेदेन संयोगविशेषमभिधाय तं मूलावच्छेदेनास्तित्वेनानभ्युपगच्छन् प्रतिज्ञाहान्या न्यग्भूतो भवेदिति भावः। संयोगादेरुक्तरीत्याऽव्याप्यवृत्तितानभ्युपगन्तृमतेऽपि प्रसङ्गमाह एवमिति। कालदेशादीत्यादिपदेन पुरुषो ग्राह्यस्तत्र देशत्वाविवक्षणात्। रूपाद्यैक्यवदधिकरणावच्छेदकपुरुषैक्यमपि विवक्षणीयमित्युक्तदोषपरिजिहीर्षुराह तस्यैवेति। इदन्तु बोध्यम्—यत्र किञ्चिदन्यथाप्रतिज्ञाय तद्विरुद्धं मनसाऽभ्युपगच्छन्नपि प्रतिपादनं प्रतिज्ञानुरूपमेव करोति तत्र प्रतिज्ञाहानिर्नास्तीत्यनभ्युपगमोऽत्र नानाहार्यनिश्चयाभावमात्रमपि तु स्वोक्तस्य साक्षादर्थाद्वाऽभावबोधनमेव वक्तव्यम्, स्वोक्तार्थस्तु पक्षो वा हेतुर्वा साध्यादिको वेत्यन्यत्। शब्दोऽनित्यः कृतकत्वादित्युक्ते प्रत्यभिज्ञाबाधेन परेण तिरस्कृतेऽस्तु तर्हि घट एव पक्ष इत्यभिदधानोऽपि प्रतिज्ञाहानिभागेवेति तत्सङ्ग्रहायार्थादिति। नचैवं प्रतिज्ञान्तरसाङ्कर्यम्; शब्दो नित्य इत्युक्ते ध्वनौ परेण बाधे उद्भाविते वर्णात्मकः शब्दः पक्ष इत्याद्यभिधानं हि तदुदाहरणम्. न चात्र पूर्वोक्तस्याभावोऽर्थादपि बोध्यते, अपि तु सामान्यतोऽभिहितमेव पक्षादि तत्तद्विशेषणविशिष्टतया प्रतिपाद्यते इति। एवं च येन पुरुषेण विशिष्य यद्देशकालावच्छेदेन येन रूपेण यद्यत्राभ्युपेत्योक्तं तेन पुरुषेण तद्देशकालावच्छेदेन तेन रूपेण परदूषितस्य तस्य तत्राभावबोधनं प्रतिज्ञाहानिरित्यर्थः। न च तथापि कथान्तरे तथाभ्युपेत्योक्तिमादाय कथान्तरे तादृशाभावबोधनस्य प्रतिज्ञाहानित्वापत्तिः, तयोरप्येककालावच्छिन्नत्वस्य विवक्षितत्वात्, अत एव "यदैव स्वीकारस्तदैवास्वीकारासिद्धे"रित्युपरितनग्रन्थसङ्गतिरपि। एवमित्यादि। कालशब्दोऽत्र महाकालपरः, तेन खण्डकालस्य कालान्तरवृत्तित्वेऽपि न क्षतिः। असम्भवादिति। यद्यप्यभ्युपगमो न वस्तुगतिमनुरुन्धे, तथापि वस्तुगतिपरिशीलनेन यत्पुरुषीयाभ्युपगमः काले कालावच्छिन्नवृत्तिताविषयकोऽप्रसिद्धस्तत्रैवाव्याप्तौ तात्पर्यम्, एवं च काले देशस्य देशे च कालस्यावच्छेदकत्वसम्भवेऽपि व्याप्यवृत्तिस्थले देशे देशावच्छेदकत्वाभ्युपगमाप्रसिद्धिस्थलेऽप्यव्याप्तिरिति। नन्ववच्छेदकाप्रसिद्धिस्थले तदनुपादेयत्वेनैव, यत्क्षणावच्छेदेनेत्यर्थः। स्वीकारः = तथाऽननुगमस्त्वगत्येदृशः सोऽस्य इत्यभ्युपेत्याह यदैवेति।

तदेति तत्कथाकालो विवक्षित इति चेन्न, तच्छब्दस्यैकव्यक्तिपरत्वे लक्षणाननुगमः, वादादित्वेन साम्ये कदाचिदपि तद्विपरीतवादान्तराकरणप्रसङ्गः, एवं तथैव तस्यैवेत्यादिपदस्य द्रष्टव्यम्, उक्तपदस्य चापसिद्धान्तव्यवच्छेदकस्य विरुद्धन्यायेनासमर्थविशेषणत्वम्। एवं सर्वत्र निग्रहस्थाने द्रष्टव्यमिति सङ्क्षेपः। इति प्रतिज्ञाहानिखण्डनम्।

## प्रतिज्ञान्तरखण्डनम्।

प्रतिज्ञाहान्यादीत्यादिपदेन च किं सङ्गृह्यते? प्रतिज्ञान्तरादीति चेन्न, प्रतिज्ञान्तरमेव निरूपयितुं न शक्यते, तद्यथा स्वोक्तस्य परदूषितस्य साध्यभागस्य पूर्वानुक्तविशेषणव-

---

ऽभ्युपेत्योक्तिः। अस्वीकारः = तथाऽभावबोधनम्। लक्षणाननुगम इति। अन्यादृशोऽयमननुगम इति पूर्वोक्ताननुगमाभ्युपगमस्य नासङ्गतिः। वादादीत्यतद्गुणसंविज्ञानबहुव्रीहिणा जल्पवितण्डापरम्, तेन वादे प्रतिज्ञाहान्युद्भावननियमेऽपि न क्षतिः, वादे हि हेत्वाभासापसिद्धान्तातिरिक्तं निग्रहस्थानं नैवोद्भाव्यते तत्त्वनिर्णयस्यैव तत्रोद्देश्यत्वात्। एवञ्च जल्पवितण्डाभेदेनापि प्रतिज्ञाहानिर्भिद्यते इत्यभिभिसन्धिः। वादान्तरेति। वादाद्यन्तरेत्यर्थः। प्रसङ्ग इति। अन्यथा प्रतिज्ञाहान्यापत्तेरिति शेषः। वस्तुतस्तु विपयभेदभिन्नप्रमात्वादिघटिततत्त्वनिर्णयादिघटितकथात्वमपि नानुगतम्, एवं वादत्वादिकमपीति। एवमिति। तथात्वादेरननुगतत्वात्; अनुगतत्वे वा यादृशप्रकारादेर्यथादिशब्देन ग्रहणम्, तादृशस्यैव तथादिशब्देनेति विनिगमनाशून्यमेव, न च यथादिशब्देन गृहीतस्य बुद्धिस्थत्वादेव तथादिना ग्रहणमिति वाच्यम्, यथादिशब्दाग्राह्यस्यापि कारणवशाद्बुद्धिस्थत्वोपपत्तेरिति यथादिनाऽगृहीमेव तथादिना गृहीत्वा प्रतिज्ञाहान्यापत्तिर्विधेयेति भावः। उक्तपदस्येति। विशिष्योक्तार्थकस्येत्यर्थः। विरुद्धेति। यथा साध्याभावसामानाधिकरण्यस्यैवासाधकतासाधनसमर्थत्वेन साध्याभावव्याप्यत्वमिति लक्षणे व्याप्यत्वांशस्य व्यर्थतोक्ता, तथा स्वीकृतपरित्यागस्यैव कथानुगुणसम्यग्ज्ञानाभावानुमापकत्वसम्भवेनोक्तांशव्यर्थतेति भावः। यदि तु दूषकतौपयिकरूपस्यैवोक्तानुमापकतावच्छेदकरूपस्यैव वा विभाजकतानियमस्याप्रामाणिकत्वेनोक्तांशघटितस्यापि विभाजकत्वमनुमन्यते, तदाप्यपसिद्धान्तेऽतिव्याप्तिर्दुर्वारैव, अहं तार्किको दार्शनिको वेत्याद्यपेक्षयाऽहं नैयायिक इत्यादेरपि विशिष्याभिधानत्वात्। एवं प्रतिज्ञान्तरसाङ्कर्यमपि, शब्दो नित्य इत्यत्र शब्दत्वावच्छेदेन नित्यतासाधने हि ध्वनौ बाधः परेण वाच्योऽन्यथा तस्यैव निग्रहापत्तेः, तदनन्तरं वर्णात्मकः शब्दः पक्ष इत्यभिधाने च शब्दत्वावच्छेदेन नित्यत्वस्य प्राक्प्रतीतस्याभावोऽर्थादवगम्यत एव। वस्तुतश्चाननुगमोऽपि दूषणमेव, व्यवहाराननुगमदर्शनात्। यत्किञ्चिदभ्युपेत्य तत्तदितरोभयाद्यभावबोधनेऽतिप्रसङ्गाच्च, पर्यालोचनैर्निरस्तत्वादिति। सर्वत्रेति। यथा परेण प्रतिषेधे कृते विशेषणान्तरविशिष्टतया हेत्वतिरिक्तार्थस्य कथनं प्रतिज्ञान्तरमित्यत्र हेत्वन्तरभेदकं हेत्वतिरिक्तेति व्यर्थम्, यथा वाऽव्यहिताविकलव्युत्पन्नपरिषत्प्रतिवादिबोधानुकूलोपस्थित्यजनकवाचकवाक्यप्रयोगोऽविज्ञातार्थमित्यत्र निरर्थकापार्थकयो र्व्युदासमात्रफलकं वाचकेति। इति खण्डनशारदायां प्रतिज्ञाहानिखण्डनम्।

स्वोक्तस्येत्यादि। देवदत्तोक्तस्य परदूषितसाध्यभागस्य विशेषणान्तरविशिष्टतया यज्ञदत्तेनाभिधाने प्रतिज्ञान्तरत्वाभावादाद्यं विशेषणम्, झटितिसंवरणव्यावृत्तये द्वितीयम्, स्वोक्त्यनन्तरञ्च परदूषणं विवक्षितम्, दूषितत्वञ्च दूषणवत्तया प्रतीतत्वं न तु दूषणवत्तयोद्भावितत्वम्, परपदवैयर्थ्यात्। हेत्वन्तरव्यवच्छेदाय तृतीयम्, हेत्वतिरिक्तार्थस्येति तदर्थः। तेनोदाहरणोपनयनिगमनान्तराणामपि प्रतिज्ञान्-

तोऽभिधानं प्रतिज्ञान्तरमित्यलक्षणम्। तथाहि—यत्र वादिना प्रथमं सविशेषणः प्रतिज्ञाभागोऽभिहितः, परेण च निर्विशेषणोक्तभ्रान्त्या दूषितस्ततो वादी प्रथममभिहितं सविशेषणमेवोपन्यस्येदृशं मयोक्तं न तु निर्विशेषणमतो निरनुयोज्यानुयोगो भवत इति सदुत्तरमेव ब्रूते, तत्रापि गतत्वाद्तिव्यापकमेतत्। पूर्वानुक्तविशेषणत्वं तत्र नास्ति तत्कथमतिव्याप्तिरिति चेन्न, प्रथमोक्तेः प्रागभावस्य पूर्वं स्थितत्वात्। विशेष्योक्तिरपि तदा नासीदिति चेत्, किमायातं तावता विशेषणानुक्त्यतिप्रसङ्गस्य। विशेष्योक्तिकाले विशेषणानुक्तिर्विवक्षितेति चेन्न, एककर्तृकाया वाचो युगपदसम्भवेन सर्वत्र तथाभावस्यैव भावात्। विशेष्योक्तेरनन्तरकाले इति चेन्न, नीलोत्पलमित्यादौ पूर्वनिपातिविशेषणे तदभावात्। विशेष्योक्तेरव्यवहितपूर्वकाले इति चेन्न, उत्पलं नीलमित्यादौ तदभावात्।

---

रान्तर्भावाभ्युपगमान्नासङ्ग्रहः। पूर्वोक्तविशेषणविशिष्टतयाऽभिधानं व्युदसितुं पूर्वानुक्तेति। यत्रेत्यादि।
वर्णात्मकः शब्दो नित्य इत्युक्ते परेण निर्विशेषणत्वभ्रान्त्या ध्वनौ बाधेऽभिहिते पुनः प्रथमेन वर्णात्मकः
शब्दो नित्य इत्यभिधानस्थले इत्यर्थः। अतिव्यापकमिति। यद्यपि पूर्वोक्तविशेषणविशिष्टतयैवेदमभिधानं
तथापि कदाचिदत्रापि विशेषणे पूर्वानुक्तत्वमस्त्येवेति भावः। इममेव शङ्कोत्तराभ्यां स्फोरयति पूर्वानुक्तेति।
सामान्यतो भ्रमामूलकत्वस्य दूषणे विवक्षणेऽव्याप्तिः, निर्विशेषणत्वभ्रमामूलकत्वोक्तावपि पूर्वानुक्तेरयस्य
यथाश्रुतस्य वैयर्थ्यमेव, पूर्वोक्तेऽपि कदाचित्पूर्वानुक्तत्वसत्त्वादिति भावः। गूढाभिसन्धिराशङ्कते
विशेष्येति। प्रथमोक्तौ विशेष्योक्तित्वमप्यस्ति। अभिसन्धिमुद्घाटयति विशेष्योक्तीति। तथा च
पूर्वानुक्तविशेषणवत इत्यस्य स्वोक्तिकालिकानुक्तिकविशेषणविशिष्टतयेत्यर्थः, स्वं साध्यभागः। उक्तस्थले
च स्वोक्तिकालिकोक्तिकविशेषणविशिष्टतयैवाभिधानम्, विशेष्योक्तिप्रागभावकाले च स्वोक्तिकालिकत्व-
मेव विशेषणानुक्तौ नास्तीति नातिप्रसङ्गः, अनुक्तिर्हि विशेष्योक्तिसमानकर्तृकोक्त्यभावो विवक्षितः।
सर्वत्र विशेष्योक्तिकाले। तथा भावस्य = विशेषणानभिधानस्य। तथा च प्रथमोक्तिप्रागभावकालीनवि-
शेषणानुक्तिमादायातिप्रसङ्गासम्भवेऽपि विशेष्योक्तिमात्रकालीनां तामादाय तत्सम्भवोऽस्त्येव। अनुक्ति-
ध्वंसप्रागभावसाधारणीत्यभिप्रायेण सर्वत्रेत्युक्तम्, अन्यथा नीलोत्पलमित्यादौ विशेषणमभिधाय
विशेष्याभिधानस्थले विशेष्योक्तिकालिकत्वस्य विशेषणोक्तिप्रागभावेऽसम्भवेन तदसङ्गतेः। नहि कथा-
न्तरादावपि विशेषणोक्तिर्भाविनीति नियतम्, प्रागेव तु तस्यामेव कथायाम्। आदरणीयश्च कथाविशेष-
नियन्त्रितत्वम्। वस्तुतस्तु सर्वत्रेति सम्भवस्थलाभिप्रायेणैव योजनीयम्, प्रागभावरूपाया अनुक्तेर्ध्वं-
ससाधारण्यविवक्षायां प्रयोजनानाकलनात्। स्वोक्त्यनन्तरकालिकानुक्तिकविशेषणविशिष्टतयाऽभिधान-
विवक्षायां नोक्तसदुत्तरस्थलेऽतिप्रसङ्गः, तत्रौचित्येन विशेषणस्य विशेष्यानन्तरमेवोक्तत्वादित्यभिमा-
नेनाशङ्कते विशेष्योक्तेरिति। काले इति। विशेषणानुक्तिर्विवक्षितेत्यनुषङ्गः, एवमग्रेऽपि। व्यास-
स्थले विशेष्यस्य पूर्वमेव विधेयविमर्शिनां प्रयोगौचित्येऽपि समासस्थले "विशेषणं विशेष्येण बहुल"मित्यनु-
शासनानतिक्रमेण विशेषणस्य पूर्वप्रयोगेणोक्तस्थलेऽतिव्याप्तितादवस्थ्यमित्यभिप्रेत्याह नीलोत्पलमिति।
वस्तुतस्तु 'अपृक्त एकाल् प्रत्यय' इत्यनेन विधेयस्य प्रथमोक्तेरपि साधुत्वज्ञापनेन कदाचिदसमस्तमपि
सम्भवत्युदाहरणम्, वहिष्ठं तथाप्रयोगात्। तदभावात् = विशेष्योक्त्यनन्तरकाले विशेषणोक्त्यभावात्।
तथाचास्ति ध्वंसरूपाऽनुक्तिः, प्रागभावस्यैव विवक्षायां तु यत्र कथायां पुनर्विशेषणोक्तिः सम्भाविता
तत्रैवातिव्याप्तिर्द्रष्टव्या। स्वोक्त्यव्यवहितप्राक्कालीनानुक्तिकविशेषणविशिष्टतयाऽभिधानविवक्षणं
नोक्तदोष इत्याह विशेष्येति। न चाव्यवहितत्वं व्यर्थम्, प्राक्कालीनत्वोक्त्यैवातिप्रसङ्गवारणादिति वाच्यम्,
प्रकृतविचारात्प्राक्कदाचिद्विशेषणोक्ते विशेष्योक्तिप्राक्कालीनत्वसम्भवेनाव्याप्तिवारकत्वात्। तदभावात् =

अव्यवहिते इति चेन्न, बहुविशेषणके तदभावात्। विशेषणाभिधानोचितकाले इति चेन्न, नानाविशेषणके विशेष्ये क्रमवृत्तित्वाद्वाचः क्रमेणाभिधीयमाने य एकविशेषणाभिधानकालः सोऽपरेषामपि विशेषणाभिधानानां योग्यो भवत्येवेति तदाऽन्येषां क्रमभाविनामभावात्सैवातिव्याप्तिः। सर्वस्मिन् योग्ये काले इति चेन्न, दूषणानन्तरकालस्य योग्यकालत्वाभ्युपगमेऽव्याप्तिः, दूषणपूर्वकालस्य तथाभिमतत्वे च दूषणानन्तरभाविन्या विशेषणोक्तिव्यक्तेस्तदानीमभावात् पूर्ववदतिव्याप्तिः।

सर्वस्यास्तज्जातीयाया विशेषणोक्तेरभावो विवक्षित इति चेन्न, व्यक्तीनामभावप्रतियोगिभूतानां सर्वासां पृथक् पृथक् प्रमाणेन केनाप्यस्मादृशा प्रत्येतुमशक्यतयाऽभावानिरूपणेन लक्षणस्याज्ञानादसिद्धिप्रसङ्गात्। सामान्यप्रत्यासत्त्या व्यक्तयः प्रतिभान्तीति च निरस्तमनुमानखण्डनावसरे। एतेन पूर्वमविशिष्टोक्तस्येतिविशेषणं प्रक्षेप्तव्य-

---

विशेष्योक्त्यव्यवहितप्राक्काले विशेषणोक्त्यभावात्, तथा च निर्विशेषणत्वभ्रान्त्या दूषणोत्तरं पूर्ववदुत्पलं नीलमित्यभिधानेऽतिव्याप्तिः, दूषणादिना व्यवधानादत्र द्वितीयविशेष्योक्त्यव्यवहितपूर्वत्वमपि न विशेषणोक्तौ शक्यं सम्पादयितुम्। अव्यवहिते इति। स्वोक्त्यव्यवहितानुक्तिकविशेषणविशिष्टतयाऽभिधानविवक्षायां विशेषणस्य विशेष्याभिधानात्पूर्वमुत्तरं वाऽभिधाने विशेष्योक्त्यव्यवहितोक्तिकत्वमेवेति नोक्तातिव्याप्तिः। यद्यप्युत्तरगतमव्यवहितत्वं ध्वंसघटितं पूर्वगतञ्च प्रागभावघटितमिति न द्वयोरनुगमः, अन्यतरत्वेन विवक्षायाञ्चोक्तातिव्याप्तिदंत्तपदैव, क्वचिदस्ति विभक्त्या सोढव्यं व्यवधानं क्वचिच्च नेत्येवमप्यननुगमश्च, तथाप्युपेत्यैवाह बहुविशेषणक इति। नीलमुत्पलं विकसितं सुरभीत्यादौ पूर्वमभिहिते दूषणानन्तरञ्च पुनरभिहिते इत्यर्थः। तदभावात् = विशेष्योक्त्यव्यवधानेन सर्वविशेषणोक्त्यभावात्। तथा च सुरभीत्यादेः पूर्वानुक्तत्वलक्षणवत्त्वात्तद्विशिष्टतयाऽभिधानेऽतिव्याप्तिरिति। विशेषणेति। बहुविशेषणकस्थले सत्यपि व्यवधानेऽभिधीयमानस्य विशेषणस्य स्वविषयिकाया नियताया अनियताया वाऽऽकाङ्क्षाया निवृत्तिप्रयोजकत्वेनोचितकालेऽस्यैवाभिधानमिति नोक्तातिप्रसङ्ग इति भावः। सर्वस्मिन्निति। एवञ्चान्येषामपि विशेषणानां योग्यकालेऽभिधानसत्त्वान्नातिप्रसङ्ग इति। कालस्य = कालस्यापि। अव्याप्तिः = असम्भवः। दूषणानन्तरं विशेषणान्तरविशिष्टतयाऽभिधाने हि प्रतिज्ञान्तरमिति न योग्यकाले विशेषणानुक्तिरिति भावः। कालस्य = कालस्यैव। तथा च नोक्तरीत्याऽसम्भवः। न चेदमसङ्गतम्, दूषणोत्तरमपि न विशेषणमात्रमभिधीयतेऽपि तु विशिष्टमिति तत्रापि नियता वाऽनियता वा विशेषणाकाङ्क्षा निवर्तत एवेति तस्यापि विशेषणाभिधानोचितकालत्वमक्षतमिति वाच्यम्, एवं हि प्रतिज्ञान्तरस्य दूषणत्वमेव न स्यात्, तस्मात्तद्व्यावृत्तस्यैव विशेषणाभिधानोचितकालत्वं वाच्यम्। न च तदनुगमय्य वक्तुं शक्यमिति भावः। तदानीं = दूषणप्राक्काले। पूर्ववदिति। सविशेषणे उक्ते परेण च निर्विशेषणत्वभ्रमादिना दूषिते पुनस्तथैवाभिधानेऽतिव्याप्तिरिति।

तज्जातीयाया इति। दूषणानन्तरभाविविशेषणोक्तिजातीयाया इत्यर्थः। तेनानेकविशेषणविशिष्टस्य पक्षादित्वे यत्र किञ्चिद्विशेषणं पूर्वमुक्तमपरञ्च दूषणदानानन्तरं तत्राव्याप्तिरसम्भव एव वा, निर्विशेषणपक्षस्यानभिधेयत्वादिति नाशङ्क्यम्। साजात्यं च तत्तद्विशेषणविषयकत्वेन तत्तत्स्थले विवक्षणीयम्। पूर्वमेव विशिष्टाभिधानस्थले तु न सर्वविशेषणोक्त्यभाव इति भावः। निरस्तमिति। नहि प्रागभावोऽपि सामान्याभावो येन तद्विवक्षा शक्या स्यात्, नवाऽभावान्तरसाधारण्येन तन्निवेशेऽपि निस्तारः, तद्ग्रहकारणीभूतस्य प्रतियोगितावच्छेदकप्रकारकज्ञानस्य सकलव्यक्त्यविषयकत्वेऽपि

मिति निरस्तम् । उत्तरकालवाच्यविशेषणकविशेष्यस्य प्रथममविशिष्टोक्तत्वसम्भवस्य दर्शितत्वात् । किञ्च प्रथममविशिष्टमुक्त्वा भवता यदि विशेषणमिदं प्रक्षिप्यते तदा भवतो हेत्वन्तरं स्यात्तथापि तदभावे वा ममापि कुतः प्रतिज्ञान्तरम् । अथ प्रथममेवेदं विशेषण-मुपादाय ब्रवीषि, तथाप्यव्याप्तिः, प्रथमं सविशेषणमुक्त्वा विशेषणवैयर्थ्यभयेन झटिति-संवरणान्निर्विशेषणेऽभिहिते परेण दूषिते पुनः सविशेषणमभिदधतो नैवं प्रतिज्ञान्तरं स्यादित्यव्याप्तिः । स्वपरसाध्यपूर्वपदानां विवेचने व्यक्तौ पतनादव्याप्तिश्च । प्रकरणादि-लभ्यतया प्रागनुक्तविशेषणस्य भ्रान्तपरदूषितस्य प्रकरणलभ्यविशेषणवत्तयाऽनुवद-

---

प्रतियोगितावच्छेदकस्याप्यननुगमात्, तत्तत्स्थलीयस्य तस्य कथञ्चिदनुगमेऽपि सामान्याभावस्य
निरस्तत्वेनोक्तस्थले एव यत्किञ्चिद्विशेषणप्रतियोगिकाभावस्योपादानेनातिव्याप्तिरित्यपि द्रष्ट-
व्यम् । प्रक्षेप्तव्यमिति । तथा च स्वयं पूर्वं विशेषणविशेष्याविशिष्टतयोक्तस्य हेत्वतिरिक्त-
भागस्य परदूषणानन्तरं विशेषणविशेषविशिष्टतया वचनं प्रतिज्ञान्तरमित्यर्थः । एतेनेत्यस्यातिदेशयामतिव्या-
प्तिमाह उत्तरेति । उत्पलं नीलमित्यादिस्थले इदं द्रष्टव्यम् । ननु यस्मिन्नभिधाने लक्षणं सङ्गमनीयं
तदपेक्षया पूर्वत्वमभिधित्सितम्, एवञ्चोत्पलं नीलमित्यादिद्वितीयाभिधाने नातिव्याप्तिः, ततः पूर्वं विशे-
षणविशेषविशिष्टस्यैवोक्तत्वात्, नीलमित्येतावन्मात्रे तु नातिव्याप्तिशङ्कापीत्यस्वरसादाह किञ्चेति ।
हेत्वन्तरमिति । परोक्तदूषणोद्दिधीर्षया पूर्वोक्तहेतुतावच्छेदकातिरिक्तहेतुतावच्छेदकविशिष्टवचनं ।हि
हेत्वन्तरम्, लक्षणञ्चेतरभेदादिसाधने हेतुतावच्छेदकविशिष्टमिति भावः । ममापीति । यद्यैकेन प्रति-
ज्ञान्तरोद्भावनेऽपरस्तल्लक्षणनिरासेन प्रत्यवतिष्ठते तादृशस्थलाभिप्रायेण ममेत्युक्तम् । ग्रन्थकर्त्रा हि
परस्यापीति वक्तुमुचितम् । ब्रवीषीति । उच्यतेत्युचितोक्तिर्ग्रन्थकर्तुः । कथाप्रस्तावेऽत्र प्रतिवादिना
क्रमेणैव विशेषणान्युपात्तानीति मध्यमपुरुषप्रयोगानौचित्यात् । अत एव 'यस्तु प्रथमत एव स्वविशेष-
णमुपादत्ते' इत्यत्रैव परतो वक्ष्यति । नन्वविशिष्टतयोक्तत्वं यदि विशिष्टतयोक्तत्वाभावो भवेत्तदा स्याद-
व्याप्तिः, उक्तस्थले विशिष्टतयोक्तत्वसद्भावेन तदभावासम्भवात्, अपि तु यथाश्रुतमेव तत्, तच्च
'निर्विशेषणेऽभिहिते' इत्यभिदधता त्वया स्वीकृतमेव, वस्तुतस्तु स्वविशिष्टमभिधानं प्रतिज्ञान्तरम्,
वैशिष्ट्यं स्वतादात्म्य—स्वविशिष्टयत्किञ्चिदुक्तिविशिष्टबोधप्रयोजकत्वाभ्याम्, उक्तौ यत्किञ्चित्त्वनिवेशा-
दुक्तस्थले निर्विशेषणोक्तिमादाय लक्षणसमन्वयसम्भवः, आद्यं वैशिष्ट्यं स्वसमानकर्तृकत्वस्वप्रागुप-
त्तित्व—स्वघटितकथाघटकत्वेति सम्बन्धत्रयेण । द्वितीयं वैशिष्ट्यं स्वप्रयोज्यशाब्दविशिष्टविशेष्यताशालि-
स्वसम्बन्धेन । अत्र वैशिष्ट्यं स्वीयप्रकृतहेत्वतिरिक्तनिष्ठयत्किञ्चिद्विशेष्यतावच्छेदकावच्छिन्नत्वस्वीयविष-
यत्वाभाववन्निष्ठप्रकारताकत्व—स्वविषयसम्बन्धिदोषोद्भावनानन्तरोत्पत्तिकत्वेतिसम्बन्धत्रयेण । प्रमेयत्वेन
हेतुतास्थले तदवच्छिन्नभेदाप्रसिद्ध्या प्रकृतहेत्वतिरिक्तेत्यनेन प्रकृतहेतुवाक्यातिरिक्तार्थेतिविवक्षणीयम्,
न च निर्विशेषणोक्तभ्रान्त्या यत्र दूषणं तस्मिन्नुक्तस्थले स्वीयविषयत्वाभाववन्निष्ठप्रकारताकत्वसम्बन्धस-
त्त्वेऽपि शाब्दावश्यम्भावादित्यस्वरसादाह स्वेति । परपदं यथाश्रुताभिप्रायेण । साध्यपदं हेत्वतिरिक्त-
मन्वयादतिव्याप्तितादवस्थ्यम्, तत्र विशेषणशाब्दोत्पत्तौ निर्विशेषणोक्तत्वभ्रमानुपपत्तेरिति वाच्यम्, कस्य
परम् । व्यक्तौ पतनादिति । लक्षणस्य तत्तद्व्यक्तिपर्यवसायित्वादित्यर्थः । सर्वासां हि तत्तद्व्यक्तीनां
स्वादिपदेनोपादानं न सम्भवति, हेतुत्वमपि साध्यादिभेदभिन्नव्याप्त्यादिघटितत्वेनाननुगतमेव, साध्यत्व-
मपि व्यापकताघटितत्वेन तथैव, हेतुत्वादिनाऽनिवेश्य तत्तद्धर्मविशिष्टत्वेन निवेशेऽप्यननुगम एवेति भावः ।
लक्ष्यतावच्छेदकस्याप्यननुगमेन लक्षणाननुगमो न दोष इतिवदतोऽभिमानमनिराकृत्यैवाह प्रकरणादीनि ।
प्रागनुक्तविशेषणस्येति बहुव्रीहिः । दूषितस्येति । स्वरूपमिति शेषः । तेनानुवदत इत्यस्य नासङ्गतिः ।

तोऽपि सद्वादेऽतिप्रसङ्गः। अनुक्तस्थाने चाप्रतिपादितकरणेऽपि दोषः, परस्मिन्नज्ञातप्रतिपत्तौ प्रतिपादितत्वानुपपत्तेरित्यादि स्वयमूहनीयम्। इति प्रतिज्ञान्तरखण्डनम्।

## प्रतिज्ञाविरोधखण्डनम्।

प्रतिज्ञान्तरादीत्यादिपदेन किमिष्टम्? प्रतिज्ञाविरोधादीति चेन्न, यत एकवक्तृकैकवाक्यांशयोर्मिथो व्याघातः साध्यविपरीतव्याप्तत्वोद्भावनानपेक्षोद्भावनः प्रतिज्ञाविरोधः, तदेतदलक्षणम्, तथाहि—इह भूतले घटो नास्तीत्यादावपि गतत्वेनातिव्यापकमिदम्, वचनयो र्हि व्याघातोऽन्योन्यविरुद्धार्थत्वम्, तच्चेहास्ति, घटोऽस्तीत्यंशस्य घटसत्त्वबोधकत्वान्नकारस्य च तन्निषेधकत्वात्। नन्वयुक्तमिदमुच्यते, नहि घटो नास्तीत्यत्र घटोऽपि विधीयते घटस्य निषेधोऽपि च, येन मिथो व्याघातः स्यात्, किन्तु घटो निषिध्यते, घटनिषेध एव विधीयत इति यावत्, तत्कुतो व्याहतिरिति चेन्मैवम्, घट इत्यस्य तावदंशस्य घटविधिबोधकत्वम्, नास्तीत्यस्यापि तत्प्रतिषेधार्थत्वं भवताऽपि मन्तव्यम्, यदि त्वेवं नाभ्युपैषि तदा तयोरविरुद्धार्थतया घटश्चापेक्षितनिषेधास्तित्वञ्च भूतलाश्रितं

---

सद्वादे इत्यनेनैव वाऽन्वयः, सम्बन्धसामान्ये वा षष्ठी। अनुक्तस्थाने इति। यथाश्रुते विशेषणविशेषविशिष्टतयोक्तो न गृह्येतेति तत्र पूर्वानुक्तत्वं विवक्षार्हमित्याशयः। परस्मिन् = प्रतिवादिनि। न च—प्रतिपादितत्वं न प्रतिपत्त्युपहितव्यापारविषयत्वमपि तु प्रतिपत्तियोग्यव्यापारविषयत्वम्, तच्चास्त्येव प्राकरणिके विशेषणे इति वाच्यम्, प्रकरणादिसाधारणयोग्यतावच्छेदकस्य दुर्वचत्वात्। अत एव प्रकरणादिना लब्धुमयोग्यत्वमपि विशेषणीयमित्यनाशङ्कनीयम्। न च प्रकरणादीनामप्यनुगमकमनतिप्रसक्तं किञ्चिदिति तेषु प्रत्येकमिलितविकल्पानुपपत्तिरपि। स्वीयविषयत्ववत्यपि तदभावसम्पादननिबन्धनाऽतिव्याप्तिस्तु स्पष्टैव। लक्ष्यतावच्छेदकमपि चाननुगतमिति कथमवधारणीयम्, लक्षणाननुगमादिति तु न युज्यते, अन्योन्याश्रयात्। व्यवहारादित्यपि न, तस्य लक्ष्यतावच्छेदकतयोक्तलक्षणस्यैवावगाहकत्वे करणत्वखण्डने 'किञ्च किं तस्य करणत्वमिति लक्ष्यीभूतस्यावश्यं वक्तव्यत्वा'दित्यादिपङ्क्तिव्याख्योक्तरीत्या प्रत्यवस्थानस्यादरणीयत्वात्। अन्यस्यैव तथा समर्पकत्वे तु तस्य निर्वक्तव्यत्वापत्तिः। एवञ्च लक्षणाननुगमोऽपि दोष एव, अन्यथा प्रातिस्विकरूपेण सर्वलक्ष्याणां निवक्तुमशक्यानां सत्यत्वव्यवस्थापनानुपपत्तेरिति भावः। इति खण्डनशारदायां प्रतिज्ञान्तरखण्डनम्।

एकवक्तृकेत्यादि। तत्कथाघटकीभूततत्पुरुषीयवाक्यांशस्य तत्कथाघटकीभूततत्पुरुषीयवाक्यांशविरुद्धार्थकत्वं तत्कथायां तत्पुरुषीयप्रतिज्ञाविरोध इत्यर्थः। अन्यथा मिथःपदार्थानिरुक्तेः। विरोधहेत्वाभासेन साङ्कर्यवारणाय साध्यविपरीतेत्यादिकमुक्तम्। परन्तु माणिक्यमयः पर्वतो वह्निमानित्यादौ माणिक्यमयत्वपर्वतत्वायोर्विरोधात्प्रतिज्ञाविरोधोदाहरणे आश्रयासिद्ध्यादेरावश्यकत्वेनोपधेयसङ्करेऽप्युपाध्यसङ्कर इति पक्षस्यैवादरणीयत्वेन तद्भिन्नप्रयोजनप्रायमेव। असङ्कीर्णमुदाहरणं तु तदीयं पर्वतो वह्निमान् धूमात् यो यो धूमवान् स निरग्निरित्येवमुदाहरणोपनयादिकमाहुः। एवञ्च स्वघटितकथाघटकत्वस्वोत्पादकपुरुषोत्पाद्यत्वस्वार्थविरुद्धार्थकत्वेतिसंसर्गत्रयेण वाक्यविशिष्टवाक्यत्वं लक्षणम्। घटविधीति। घटस्वरूपेत्यर्थः। तस्य घटाभावाभावात्मकतया घटाभावविरुद्धत्वात्। अन्यथा प्रतियोगितया घटस्य नञर्थान्वयानुपपत्तेः। एवं सत्येवाह तदेत्यादि। अपेक्षितनिषेधः = प्रतिपिपादयिषितो निषेधः, स चेदानीं घटस्य न सम्भवतीत्यन्यत्।

द्वयमस्य वाक्यस्य बोधनीयं स्यादिति, तस्माद्विधिरूप एव घट इति, तत्प्रतिक्षेप एव च नेति, किमेतावेकवक्तृकवाक्यांशौ न भवतः परस्परविरुद्धार्थाभिधायकौ वा न भवतो येन लक्षणमिदं भवतस्तत्र न गच्छेत् ।

न मिथो विरोधमात्रं मिथो व्याघातकत्वं किन्त्वेकदेशकालादौ परस्परविरुद्धयोरस्तित्वम्, न च नास्तीत्यनेनैकदेशकालादौ विधिनिषेधौ वर्तमानौ बोध्येते इति चेन्न, उक्तोत्तरत्वात्, देशकालाद्यनन्तर्भावे विरोधस्यैवानुपपत्तेः । किञ्च यद्येकदेशादौ विरुद्धास्तित्वं प्रामाणिकमभ्युपेपि तदा विरुद्धशब्दस्तवायमन्य एव सामयिकार्थः कश्चित्, प्रमाणेन तथाभूतस्य ग्रहणादेव विरुद्धत्वाभ्युपगमशान्तेः । अथ प्रामाणिकं तन्नाभ्युपैपि तदाऽप्रामाणिकं मिथो व्याघातकत्वं क नाम नास्तीत्यतिव्याप्तिः । अथ मन्यसे यथा परेणाभिधीयेते अर्थौ तथा मिथो व्याघातकाविति ब्रूमः, तत्र च प्रमाणं प्रसरत्येवेति; न, कथमपि तत्र प्रमाणप्रसृतौ विरोधभाषापरिभाषामात्रत्वापत्तेः । यथा परेणोक्तोऽर्थस्तथा मिथो व्याघातक इत्यपि क्वचिन्मिथो व्याघातकत्वमप्रमाय न वक्तुं शक्यम् । प्रसज्यते मिथो व्याघातो न प्रसाध्यत इति चेन्न, क्वचिदप्यप्रमितस्य प्रसञ्जयितुमपि भवताऽशक्यत्वात् ।

---

अस्तित्वमिति । लक्षणे तद्विरुद्धार्थकत्वं तद्विरुद्धार्थस्य तदधिकरणे बोधकत्वमित्यर्थः । अधिकरणं तु कालो वा देशो वा यथासम्भवम्, क्वचिच्च तदवच्छेदकसापेक्षमपि । एवञ्च घटत्वपटत्वयोर्विरुद्धत्वेऽपि घटपटयोस्ते बोधयतो वाक्यस्यापि नातिप्रसक्तिस्थलत्वमिति भावः । उक्तमेवाह देशेति । तथा च विरोधात्मकत्वात्प्रतियोगितायास्तयाऽभावे घटान्वयभाने एकदेशादौ विरोधभानमुक्तबुद्धावावश्यकमित्यतिव्याप्तिरित्याभासः । ननु किमेतावता, न ह्यसामानाधिकरण्यात्मकविरोधभानं विरुद्धयोः सामानाधिकरण्यभानम्, येन स्यादतिव्याप्तिः, न वाऽसामानाधिकरण्यात्मकविरोधः प्रतियोगितारूपः, तत्सत्त्वेऽपि गोत्वाश्वत्वादौ परस्परप्रतियोगित्वाव्यवहारात्, तस्यापि प्रतियोगिताघटितत्वेनाभावबुद्धेर्विषयानवस्थानप्रसङ्गाच्च, अत एव स्वाभावविरहात्मत्वं प्रतियोगित्वमित्यपि न तत्त्वं च विरोधांशे विवक्षितं न तु वस्तुतो विरुद्धयोः सृप्यन्त इत्यरुचेराह किञ्चेति । अप्रामाणिकमिति । तत्त्वं च विरोधांशे विवक्षितं न तु वस्तुतो विरुद्धयोः सामानाधिकरण्यांशे, तथा सत्यतिव्याप्तिर्नावकाशः । यथा = सामानाधिकरण्येन । व्याघातकौ = विरोधभञ्जकौ । एवञ्चासमानाधिकरणयोः सामानाधिकरण्यबोधकत्वं बोधयत्प्रमाणं बोधावच्छेदकतया तयोः सामानाधिकरण्यमपि बोधयतीति न प्रतिज्ञाविरोधस्याप्रामाणिकत्वप्रसङ्ग इति भावः । कथमपि = बोधावच्छेदकतयाऽपि । उक्तसामानाधिकरण्यस्यालीकतया प्रमाणेन परम्परयाऽपि तदुल्लेखे तस्यानलीकत्वप्रसङ्गः, प्रमाणस्य वाऽप्रमाणत्वप्रसङ्ग इति भावः । नन्वसमानाधिकरणयोः सामानाधिकरण्यबोधकत्वमित्यस्यासमानाधिकरणयोर्यत्सामानाधिकरण्यं तद्बोधकत्वमिति नार्थो येनोक्तदोषः स्यात्, अपि त्वसमानाधिकरणयोर्यः समानाधिकरणतया बोधस्तज्जनकत्वमिति, एतद्विषयीकुर्वन्त्याः प्रमाया भ्रान्त्यत्र प्रसिद्धभ्रान्तिविषयकप्रमितेरिव नाप्रमात्वप्रसङ्ग इत्यस्वरसादुद्भावनप्रणाली प्रतिज्ञाविरोधस्य निराचष्टे यथेति । शक्यमिति । तथा च ज्ञेयत्वस्य प्रमितत्वव्याप्यत्वव्रादितार्किकमते विरुद्धयोः परस्परविरोधभङ्गोऽपि प्रमित एवैवं सति भवेदिति नेत्थं प्रतिज्ञाविरोधः परं प्रत्युद्भावनीयः । आपत्तौ नापाद्यापादकयोः प्रमितिरङ्गमित्यभिमानी शङ्कते प्रसज्यते इति । तौ यदि समानाधिकरणौ स्यातां भग्नपरस्परविरोधकौ स्यातामित्येवं प्रसङ्गेन प्रतिज्ञाविरोध उद्भाव्य इति । भवतेति । ज्ञेयत्वस्य प्रमितत्वव्याप्यत्ववादिनेत्यर्थः । एतच्चावश्यकम्, असत्ख्यातिनिरासादिति भावः । असत्ख्यातिमभ्युपेत्याशङ्कते

मा प्रमायि, अप्रमयैव तद्व्यवहार इति चेन्न, क्वचिदप्यप्रमितमाभासमात्रोपस्थितं क्व नाम नोपस्थापयितुं शक्यमित्युक्तैवातिव्याप्तिरावर्तते। अनेकत्र नियतयोरेकत्र प्रसञ्जनमिति चेन्न, प्रसञ्जकस्य तद्द्वयस्यैकत्र स्थितिनियतताप्रमितावविरोधस्यानेवम्भावे चानापादकत्वस्यापत्तेः। एकैकव्याप्याभ्यां पृथक्पृथक्तद्द्वयापादनमिति चेन्न, एकैकमव्याघातात्। अर्थाद्द्वयं स्यादितिचेन्न, अर्थापत्त्यर्थत्वेनैवाव्याघातात्। अर्थादापादनं न

---

मेति। तद्व्यवहारः = परस्परविरोधभङ्गप्रसङ्गः। आभासो विकल्पो न तु भ्रमः, तस्यानाहार्यत्वेनासार्वत्रिकत्वात्। एवञ्च घटपटावपि यत्रैकेनैकत्र निरूपितौ तत्रापाद्यव्यतिरेकं विरोधं विकल्पगोचरीकुर्वन्परो घटपटौ यदि समानाधिकरणौ भवेतां भवेतां भग्नपरस्परविरोधकाविति प्रसङ्गमुखेन प्रतिज्ञाविरोधमभिलपन् विजयेतेति भावः। नन्वसत्ख्यात्युपगमेऽपि प्रसङ्गे आपाद्यव्यतिरेकनिश्चयोऽनाहार्य एवाङ्गतयोपगन्तव्यः, अन्यथा तर्काभासस्यापि सत्तर्कतापत्तेः, नहीष्टापत्ति र्न तर्काभासतां प्रयोजयति, अनिष्टस्य तु क्वचिदसतोऽपि सम्भवेन तत्प्रसक्त्युपपादिका तत्प्रसिद्धिरसत्ख्यातिरूपाऽपि भवेत्, क्लिष्टकल्पनया प्रसिद्ध्युपपादनं तु तत्प्रकारमविदुषोऽपि प्रसङ्गदर्शनेनावहेलनीयम्, खण्डशः प्रसिद्धिरपि क्वचिद्भवन्ती विशिष्टस्यासतः प्रसङ्गेऽङ्गमिति नादरार्हम्, अथास्तामेवम्, तथापि विरोधस्यासामानाधिकरण्यरूपतया प्रकृते परस्परविरोधभङ्गापादनं परस्परसामानाधिकरण्यापादने एव पर्यवस्यतीत्यापाद्यापादकयोरैक्यं दुर्वारम्, न वा परस्परत्वमपि किञ्चिदेकम्, येन प्रसङ्गैक्यं भवेदिति चेन्न, द्वाभ्यां प्रसञ्जकाभ्यां विरुद्धयो र्द्वयोरेवैकत्र प्रसञ्जनीयत्वात्, यथा यद्यसौ मातृत्ववन्ध्यात्वोभयवती स्यात्, सन्तानवत्त्वे सति पुंयोगित्वविशिष्टसन्तानविरहवती स्यात्, अत्र चापाद्यापादकयो र्व्यङ्ग्यव्यञ्जकभावो न त्वैक्यम्, अन्यथा पुंयोगात्पूर्वं वन्ध्यात्वसद्भावानुपपत्तेरित्याशयानः शङ्कते अनेकत्र नियतयोरिति। परस्पराभावव्याप्ययोरित्यर्थः, असमानाधिकरणयोरिति यावत्। तद्द्वयस्य = मातृत्ववन्ध्यात्वोभयस्य। प्रसञ्जनीयद्वयेन सहेति शेषः। एकत्र स्थितिनियततेति नियतसामानाधिकरण्यरूपव्याप्तिपरम्। अविरोधस्यापत्तेरित्यन्वयः। अनेवम्भावे = उक्तव्याप्तिप्रमित्यभावे। अयम्भावः-मूलशैथिल्यपरिहारायापादके आपाद्यनिरूपितव्याप्तिस्तावदवश्यं प्रमातव्या, अन्यथाऽऽपादकत्वानुपपत्तेः, परन्तु मिलितं मातृत्ववन्ध्यात्वोभयं तदुभयत्वावच्छिन्नाधिकरणत्वं वेहापादकं तच्च न क्वापि प्रसिद्धम्, एवं मिलितं प्रसञ्जनीयद्वयं तदुभयत्वावच्छिन्नाधिकरणत्वं वाऽपि न प्रसिद्धमिति न तयो र्व्याप्तिप्रमितिसम्भवः, पक्षे ह्यापाद्यापादकयोरारोपो न त्वन्यत्रापि। प्रसिद्ध्यभ्युपगमे च विरोधभङ्गः स्फुट एव। एतेनासत्ख्यातिमभ्युपेत्य प्रत्यवस्थानं निराकृतम्। तद्बलादलीकयोर्भानोपगमेऽपि तयोर्व्याप्तिप्रमितेरवश्यापेक्षणीयाया असम्भवात्। एकैकेति। सन्तानस्य मातृत्वेन पुंयोगित्वे सति सन्तानराहित्यस्य च वन्ध्यात्वेनापादनमिति न मिलितप्रसिद्धिनिबन्धनो दोषः। अव्याघातात् = व्याघातानापादकत्वात्। एकत्र विरुद्धोभयत्वावच्छिन्नापादनं हि व्याघातापादनमिति भावः। अत्र मातृत्वेन सन्तानस्य पृथगापादने इष्टापादनम्, उभयत्वावच्छिन्नापादने तु नांशतोऽपि तत्, मिलितापत्तेरुद्देश्यत्वादित्यपि द्रष्टव्यम्। अर्थादिति। प्रत्येकं विरुद्धद्वयमापाद्यमानं तदुभयत्वावच्छिन्नवत्तामाक्षेप्स्यतीति भावः। अर्थापत्त्यर्थत्वेन = अन्यथानुपपत्तिज्ञानजन्याक्षेपात्मकप्रमाविषयत्वेन। अव्याघातात् = विरुद्धयोः सामानाधिकरण्यालाभात्, सामानाधिकरण्यनिरूपकयोर्विरोधभङ्गादिति यावत्। आपादनमिति। प्रत्येकं विरुद्धद्वयापादनं तदुभयत्वावच्छिन्नवत्तापादने पर्यवस्यति। तच्चारोप एव

साधनमिति चेन्न, मिथो विरोधित्वेन तर्काभासत्वापत्तेः, इष्टापादनाच्च । मिथो व्याघातात्कथं तथा स्यादिति चेन्न, तद्द्वयधर्मिकत्वाद् व्याघातापत्तेर्धर्मिणि प्रमापेक्षायामव्या-

---

न तु प्रमेति न विरोधभङ्ग इति भावः । मिथोविरोधित्वेनेति । मातृत्ववन्ध्यात्वयोरिति शेषः । तथा चापादकयोरेव धर्मिण्यभावे क्वापादनम्, परेण तत्रापादकविरहस्यैवोद्भावनीयत्वात् । तदाह तर्काभासत्वापत्तेरिति । तर्काभासताप्रयोजकोद्भावनादित्यर्थः । ननु मातृत्ववन्ध्यात्वयोः सामानाधिकरण्यानभ्युपगन्तारं प्रति तथापादने उक्तोद्भावनं सम्भवेत्, यदा तु मम माता वन्ध्येति ब्रुवाणं प्रत्येव तथापादनं तदा नापादकविरहोद्भावनसम्भवः, आपादकस्याभ्युपगमेन हि तर्कः प्रवर्तते न तु वस्तुसत्तापि तस्य धर्मिण्यपेक्ष्यते, व्यापकारोपं प्रति व्याप्यारोपस्यैव हेतुत्वात्, अत एव सत्प्रतिपक्षहेत्वोरिवोक्तप्रसङ्गयोरपि मिथोविरोधित्वेनाभासत्वमित्याशयोऽपि न युज्यते, माता यदि वन्ध्या स्यान्मातृत्वाभाववती स्यादित्येतावन्मात्रापादने च न शङ्कातुषोऽपीत्याशङ्क्याहेष्टापादनाच्चेति । यो हि मातृत्ववन्ध्यात्वयोर्विरुद्धयोरेकत्र वृत्तिमभ्युपागमत्, तस्य तद्व्यापकयोरपि विरुद्धयोरेकत्र वृत्त्यभ्युपगमे कः प्रयास इति भावः । मिथो व्याघातात् = सन्तानतद्विरहयोर्भावाभावरूपतयैकत्र वृत्त्यनुपपत्तेः । तथा = इष्टापादनम् । अयम्भावः, एवं सति क्वापि विरोधासम्भवेन सर्वव्यवहारसाङ्कर्येऽसङ्कीर्णव्यवहारव्याघातप्रसङ्ग इति तथेष्टापादनमुन्मत्तस्यैव कृत्यमिति । तद्द्वयधर्मिकत्वात् = अभ्युपगम्यमानमिलितमातृत्ववन्ध्यात्वद्वयाश्रितत्वात्, अभ्युपगम्यमानमिलितसन्तानतद्विरहद्वयधर्मिकत्वाद्वा । व्याघातापत्तेरिति पूर्वान्वयि । सन्तानतद्विरहयोः सामानाधिकरण्यापत्तेरिति असङ्कीर्णव्यवहारानुपपत्त्यापत्तेरिति वा तदर्थः । प्रमापेक्षायामिति । धर्मिणोऽभावे तदाश्रितस्यासम्भवात्तत्र प्रमाणमवश्यं वक्तव्यम् । अव्याघातादिति । विरुद्धयोः सामानाधिकरण्यालाभात्, मातृत्ववन्ध्यात्वयोः सन्तानतद्विरहयोर्वा विरोधस्यासम्भवादिति यावत् । यथा व्याप्यत्वसम्बन्धेन व्यभिचारशङ्कानिष्ठा प्रवृत्त्यनुपपत्तिरिति तदापादने शङ्कायाः प्रामाणिकत्वमिति न प्रवृत्तिव्याघातस्य शङ्कानिवर्तकत्वमिति 'व्याघातो यदि शङ्कास्ती"ति प्रवद्धकेऽनुमानखण्डने उक्तम्, तथाऽत्रापि मिलितभावाभावोभयनिष्ठैव व्याप्यत्वसम्बन्धेनासङ्कीर्णव्यवहारानुपपत्तिः, मिलितमातृत्ववन्ध्यात्वद्वयापेक्षैव च कथञ्चिदापाद्यमाना सन्तानतद्विरहद्वयीति मिलितविरुद्धधर्मद्वयसिद्धिर्दुर्वारेत्याशयः । अधिकं त्वनुमानखण्डनशारदायामावेदितम् । नन्वभ्युपगम्यमानमिलितविरुद्धधर्मद्वयस्याश्रयत्वोक्तिर्विरुद्धधर्मद्वयस्य मेलनाभ्युपगमस्याश्रयत्वे एव पर्यवस्यति, तथा चापेक्षणीयतयाऽभ्युपगमः सिद्ध्यतु स च यं प्रत्यापादनं क्रियते तस्यास्त्येव, न त्वेतावता विरुद्धयोरविरोधसिद्धिरिति चेन्न, विरुद्धधर्मद्वयनिष्ठविषयतानिरूपितमेलननिष्ठविषयताशाल्यभ्युपगमसिद्धौ विरुद्धधर्मयोर्मेलनस्य च सम्बन्धोऽपि सिद्ध एव, अन्यथा तदीयविषयतयोर्निरूप्यनिरूपकभावासङ्गतेः, स च नालीकः, अलीकानलीकयोरुपरागानुपपत्तेः, अपि तु सन्नेव, यथा च तस्याप्यन्यत्रैव प्रसिद्धिमात्रेण न निस्तारस्तथोक्तं हेत्वाभाससामान्यलक्षणाक्षेपदोषे । एवञ्च विरुद्धयोर्मेलनमपि सिद्धमेवेति निगूढाभिप्रायः । अत्र तद्द्वयधर्मकत्वादितिपाठमभिप्रेत्य 'एकं धर्मि विरुद्धधर्मद्वयालिङ्गितं स्या'दित्यापादनं पर्यवसन्नं तच्च विरुद्धधर्मद्वयालिङ्गितत्वप्रमितावेव स्यादिति त्वदभिमतव्याघातस्याव्याघातत्वमिति व्याख्यानं त्वतीवासङ्गतम् । धर्मिणि प्रमापेक्षायामित्यस्योक्तानुमानखण्डनग्रन्थस्य च स्वरसात्तद्द्वयधर्मिकत्वादित्येव पाठस्य युक्तत्वात् । उक्तरीतेः पूर्वपक्षिणा प्रागेव परिहृतत्वाच्चेति । नन्वेतावता लक्षणे किं दूषणमायातम्, त्वदीयं वाक्यं स्वार्थस्याधिकरणे स्वार्थविरुद्धार्थबोधकमित्येवमुद्भावनस्य निर्दोषत्वादिति चेन्न, तथोद्भावनानन्तरं 'किमेतावता'? इति पर्यनुयोगे उक्तरीत्या व्याघात एवापाद-

घातात् । इति प्रतिज्ञाविरोधखण्डनम् ।

## प्रतिबन्दिखण्डनम् ।

एवमादीनां दोषाणां परं प्रत्यभिधाने तवापि सर्वमिदं सुवचमिति चेन्न, तवाप्यन्यत्र दोषो मयाऽऽपाद्यत इति प्रतिबन्दिं गृह्णतः किं परपक्षे दोषापादनमात्रं विवक्षितमुत यस्तत्र त्वया समाधिरभिधेयः स मयापीत्यभिप्रायात्स्वपक्षे समाधिः ? न तावदाद्यः, अप्रस्तुतत्वात्, परोक्तदोषानुद्धारे तावतैव कथायास्तदर्द्धस्य वा पर्यवसानात्, निग्रहापरिहारावधित्वात्तयोः, । द्वितीये तु स एवाभिधीयतां का नो हानिः । भवांस्तावदभिधत्तां कस्तत्र समाधिः,ततो मयाप्यभिधेय इति चेन्न, मया तदभिधानस्य साम्प्रतमप्रस्तुतत्वात्, नहि मया स्वपक्षसाधनं त्वया च दूषणं प्रकृते वक्तुमारब्धमस्ति किन्तु त्वया स्वपक्षो निर्वाह्यस्तद्दूषणं च मयाभिधानीयमिति कथा प्रस्तुता वर्तते, ईदृशि च कथाविभागे मत्पक्षे समाधानाय मां पर्यनुयोक्तुं कुतोऽधिकारो भवतः। अथ विशेषतस्तन्निष्टङ्कने किं प्रयोजनम्, अस्ति तावदेतादृशि चोद्ये परिहारो यतस्त्वयाऽपि स्वपक्षेऽसौ स्वीकार्य इत्याशयस्ते, सोऽपि न युक्तः, नहि मत्पक्षे चेत्समाधिरस्ति तावता त्वत्पक्षेऽपि तेन भवितव्यमित्यत्र प्रमाणमस्ति । साम्यादेयमिति चेन्न, वैषम्यस्याभ्युपगमात्, यदि तद्गतमसाधारणं रूपमादाय मद्दर्शनं प्रतितन्त्रसिद्धान्तं वा तत्र समाधिःस्यात्, अत्र च

---

नीयः, स च विरुद्धयोरविरोधं विना न सम्भवतीति कथं प्रतिज्ञाविरोध इत्याशयात् । एवं तत्तादेरनुगमे पूर्वंतदादिपदेन व्यक्त्यन्तरमुत्तरेण चापरां व्यक्तिं गृहीत्वाऽतिप्रसङ्गः, अननुगमे तु स एव दूषणम्, वाक्यत्वञ्च शब्दखण्डनप्रकरणे निराकृतम्, विरुद्धत्वञ्च सामानाधिकरण्यसामान्याभाव एव वक्तव्य इति पूर्वोक्तसामान्याभावखण्डनभाग्, तद्वद्वृत्तिभिन्नत्वादिरूपोऽपि च स इति विरुद्धखण्डनशारदाद्दर्शितदिशाऽननुगम इत्यादिकमप्यनुसन्धेयमिति । इति खण्डनशारदायां प्रतिज्ञाविरोधखण्डनम् ।

तवापि = त्वां प्रत्यपि । विरोधो द्वैताद्वैतयोरस्ति न वा, आद्ये त्वयाऽपि विरोधो व्यवस्थाप्य इति त्वदुक्तखण्डनं त्वय्यपि सावकाशम्, द्वितीये तु द्वैतखण्डनानवकाश इति प्रतिबन्दिः । किञ्चिदव्यवस्थापयति नायं पर्यनुयोगो युज्यत इति मनसि निधायाह तवेति । अन्यत्र द्वैताद्वैतादिविरोधे । दूषणप्रतिबन्दिर्वा समाधिप्रतिबन्दिर्वा विवक्षितेति विकल्पाशयः । स्वपक्षे समाधिरिति । विवक्षित इत्यनुषङ्गः । अप्रस्तुतत्वात् = त्वत्कर्तृकदोषापादनस्याप्राप्तकालत्वात् । एतदेव स्फुटयति परोक्तेति । वितण्डायाः परपक्षखण्डनमात्ररूपायाः समाप्तिरेव, जल्पस्य त्वर्धं परपक्षदूषणमेव समाप्तं स्वपक्षस्थापनस्यावशिष्टत्वात् । वादस्तु नेह ग्राह्यः, तदर्धस्य परपक्षोपालम्भस्य समाप्तावपि तस्य तत्त्वनिर्णयमात्रफलकत्वेनाप्राप्तकालत्वस्य तत्रानुद्भावनीयत्वात् । निग्रहापरिहारः = परोक्तदोषानुद्धारः। तयोः = जल्पार्धवितण्डयोः । सः = समाधिः । परोऽपि जल्पवादीत्यभिप्रायेणाह भवानिति । अहं वैतण्डिक इत्यभिप्रायेण परःप्रत्याह मयेति । इति कथेति । इति समयबन्धाधीनकथेत्यर्थः । ईदृशि च कथाविभागे = ईदृशसमयबन्धाधीनकथायाम् । तन्निष्टङ्कने = समाधिनिरूपणे । साम्यात् = आवयोर्विरोधाभ्युपगमसाम्यात् । एवं = समाधिसाम्यम् । वैषम्यस्य = समाधिवैषम्यस्य । तद्गतं = समाधिविषयगतम् । प्रतितन्त्रसिद्धान्तरूपं मद्दर्शनं वा, आदायेत्यनुषज्यते । वादिप्रतिवाद्येकतराभ्युपगतोऽर्थः प्रतितन्त्रसिद्धान्तः । ब्रह्मणि गगनादेस्त्रैकालिकात्यन्ताभावोपगमे उत्पत्त्याद्यसम्भवप्रसक्तोऽनुत्पन्नानुपाख्यभिन्नस्वरूपवस्तुस्वभावमादाय परिह्रियते वेदान्तिना, एवं पदार्थत्वाविशेषेऽपि घटादिवदाकाशादिकं कुतो नोत्पद्यते

रत्पक्षे तदभावान्न स्यात्, तथासति साम्यमात्रात्कथं समाधिरत्रापीति निश्चेतुं शक्यते। कोऽसौ तत्र विशेष इति चेन्न, मया साम्प्रतं तदभिधानस्याप्रस्तुतत्वादित्युक्तत्वात्। चोद्यसाम्यात्समाधिसाम्यमिति चेन्न, दूष्यगतविशेषभावाभावविशेषितत्वादिनापि तद्वैषम्यसम्भवात्, यथा सद्व्यवहारस्य सत्तास्वीकारकत्वे तुल्येऽपि सत्तायां सत्ताभ्युपगमेऽनवस्थया तदाश्रये च तदभावेन, एवमन्यत्रापि बहुलं दर्शनादिति।

किञ्च परोद्भावितमसिद्ध्यादिकमपरिहृत्य प्रतिबन्द्या प्रत्यवतिष्ठमानस्य कोऽभिप्रायः? किं यदिदं दोषतया परेणोद्भावितं तददूषणम्, अदूष्येऽपि गतत्वात्, उत दूषणमपि सन्नोद्भावनीयं तुल्ययोगक्षेमत्वात्, यथाहुः—"यत्रोभयो"रित्यादि। नाद्यः, यद्यत्रासिद्ध्यादिलक्षणमस्त्युद्भाविते दूषणे, तदा दोषत्वस्याशक्यपरिहारत्वात्, परिहारे वा तस्यालक्षणत्वप्रसङ्गात्। यद्येतद्दूषणं कथं तर्ह्यदूष्यत्वेन वादिनाऽङ्गीकृते प्रतिवन्दिस्थाने गतमिति चेत्, यद्येतददूषणं कथं दोषलक्षणोपपन्नमित्यत्रापि दीयतां दृष्टिः। नियामकाभावे तर्ह्येतद्दोषदूषणत्वे सन्देहः पर्यवसित इति चेदस्तु, दोषसन्देहेऽपि भवदी-

---

इति दूषणं तार्किकादिना वस्तुस्वभावोपगमेनैव निवार्यते। वेदपौरुषेयत्वपक्षे दूषणानां शब्दनित्यताभ्युपगत्य समाधिस्तु मीमांसकानां प्रतितन्त्रसिद्धान्तेन। प्रकृतेऽपि विरोधस्यानिर्वाच्यत्वेन प्रतितन्त्रसिद्धान्तेनैव वेदान्तिना समाधेयमिति सुहृद्भावेन "मम चानिर्वचनीयत्वे"ति ग्रन्थेन प्रागुक्तम्, इह तु वैतण्डिकतया नोच्यत इति। तत्र = समाधौ, विशेषो वैषम्यशब्देनोक्तः। चोद्यसाम्यात् = प्रसङ्गसाम्यात्। अस्य च फलतो विरोधाभ्युपगमसाम्यान्न विशेषः, एवञ्च विशेषस्य त्वयाऽनिरूपणे समाधिसाम्यमेव चोद्यसाम्येन मया साधनीयमित्यभिप्रायः। प्रकृतेऽनिर्वाच्यतातिरिक्तस्य समाधिवैषम्यप्रयोजकस्याभावेऽप्युक्तसाधने प्रतिवन्दिसामान्यखण्डननिर्वाहायाप्रयोजकत्वाभिप्रायेणैव परिहरति दूष्यगतेति। प्रसङ्गसाम्येऽपीत्यादिः। दूष्ये विशेषस्य भावाभावाभ्यां समाधेरपि विशेषस्य भावाभावयोःसम्भवः। आदिनोक्तवस्तुस्वभावादिकं ग्राह्यम्। अपिना प्रसङ्गवैषम्यस्यापि समाधिवैषम्यप्रयोजकत्वमनुमन्यते। तद्वैषम्येति। समाधिवैषम्येत्यर्थः। सद्व्यवहारस्य सत्तास्वीकारकत्वे तुल्येऽपीति। घटादाविव सत्तायामपि सत्तास्वीकारकस्य सद्व्यवहारस्य तौल्येऽपीत्यर्थः। तदाश्रये = सत्ताश्रये। तदभावेन = अनवस्थाऽभावेन, समाधिवैषम्यमिति शेषः। सद्व्यवहारबलाद्यदि घटादौ सत्तोपगम्यते तदा सत्ता सतीति प्रतीत्या सत्तायामपि तद्बलात्सोपगम्यतामिति समानः प्रसङ्गः, परन्तु तेन दृष्या सत्ता, सा च घटादौ नानवस्थामापादयति स्वीक्रियमाणा अपि तु सत्तायामेवेति तत्र न स्वीक्रियते किन्तु घटादावेवेत्यनवस्थातद्विरहरूपविशेषेण सत्तास्वीकारास्वीकाररूपसमाधिविषमतेति भावः। एतच्च सद्व्यवहारबलात्सत्तास्वीकर्तृप्राचीनमतेनोक्तम्, नव्यमते तु सद्व्यवहारस्य भावत्वविषयकत्वं स्वरूपसत्त्वविषयकत्वं वोपेयते, सत्ताजातिस्तु कैश्चिन्नवीनैर्जन्यसत्त्वावच्छिन्नं प्रति द्रव्यत्वेन कारणतया तत्कार्यतावच्छेदकघटकतयैवोपेयत इति द्रष्टव्यम्। अन्यत्रेति। रूपवान् घट इत्यादिवत्समवायवान् घट इत्यपि बुद्धेःसत्त्वेन विशेष्यविशेषणातिरिक्तसम्बन्धविषयकत्वप्रसङ्गसाम्येऽपि समवाये समवायाभ्युपगमेऽनवस्थानात्तदनभ्युपगमो घटादौ त्वनवस्थानाभावात्तदभ्युपगम इत्यर्थः।

अदूष्ये = अदुष्टत्वेन दोषदातुरभिमते। तुल्ययोगक्षेमत्वात् = तुल्यसमाधेयताकत्वात्। अत एव स्वाभ्युपगतदोषतुल्यता प्रतिवन्दितर्कं इति चतुर्थे वक्ष्यति। "यत्रोभयोः समो दोषः परिहारोऽपि वा समः। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे" इति भट्टपादश्लोकः। तस्य = असिद्ध्यादिलक्षणत्वेनाभिमतस्य। नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे... उभयथाद्रीति। क्षितिः सकर्तृका अदूष्यत्वेन = अदुष्टत्वेन। नियामकाभावे = विशेषदर्शनाभावे। उभयथाद्रीति। क्षितिः सकर्तृका

यसाधनस्यासाधकत्वात् सन्दिग्धासिद्धवत् । किञ्च यल्लक्षणवतोऽस्य दोषत्वसन्देहस्तल्लक्षणक एवायमन्यत्रापीति तत्राप्यसिद्धयादेरदूषणत्वमेव स्यादितीयं प्रतिबन्दि दुरुत्तरा प्रतिबन्दिवादिनोऽपि । नपि द्वितीयः, तथाहि-उभयवादिसम्मतादूष्यत्वं धूमानुमानादिकं यदि प्रतिबन्दीकरोति परस्तदा तद्दर्शनेऽन्यत्र क्वचिदप्येतदसिद्धयादिकं नोद्भावनीयम्, परसाधनेषु तस्यैव धूमानुमानादेः प्रतिबन्द्या भयादित्येषा मयाऽपि सुग्रहैव तं प्रति प्रतिबन्दी, अत्रापि शक्यत एव पठितुं "यत्रोभयोः समो दोष" इत्यादि । अथ यं विशेषमादाय प्रतिबन्दी स्यात् तन्मात्रस्यानुद्भावनं न तु सामान्यत एवेति चेन्न, तत्र विशेषे प्रतिबन्द्या त्याजितदुष्टत्वे गतत्वात्तल्लक्षणमेव नेति स्यात् । विशिष्य तद्विशेषत्याजने च तादृशस्य लक्षणस्यासिद्धिरेव स्यादिति कृतं प्रतिबन्द्या । अथ मद्दर्शनमात्राभ्युपगतादूष्यत्वं कश्चित्पदार्थं प्रतिबन्दीकरोति तदैतदुक्तं तेन स्यात्—इह नेदं दूषणं वक्तव्यमभिधानेऽनयैव युक्त्या तवेष्टभङ्गप्रसङ्गादिति; तन्न, इदमिह दूषणं वक्तव्यम्, अनभिधानेऽस्यैवानिष्टस्य परसिषाधयिषितस्य सिद्धिप्रसङ्गादित्यभिधानानुकूलाया अपि प्रतिबन्द्याः सम्भवात् । नन्वेवमेवास्तु तथा चाभिधानेऽनभिधाने चोभयतःपाशा प्रतिबन्दीरज्जुर्भवत एव दुर्निवारा स्यात्; मैवम्, मिथोविरुद्धायाः प्रतिबन्द्यास्तर्का-

---

कार्यत्वादित्युक्ते कर्ता शरीरी साध्यतेऽशरीरी वा, आद्ये बाधः, द्वितीये दृष्टान्ते साध्याभावेन व्याप्यत्वासिद्धिरिति सुगतोक्तौ परो ब्रूते—नन्वेवं पर्वतो वह्निमान् धूमात् महानसवदित्यपि दुष्टं स्यात्, महानसीयवह्निसाधने बाधस्य पर्वतीयवह्निसाधने च दृष्टान्ते साध्यवैकल्यस्यापत्तेरिति । तद्दर्शने = प्रतिबन्दिकर्तृदर्शने । अन्यत्र क्वचित् = गगनं नित्यं गुणत्वादित्यादौ हेत्वाभासे । भयादिति । पूर्वमेतेन सदनुमानं प्रतिबन्दीकृतमिदानीमपि मयाऽसिद्धयादेस्तदीयहेतावुद्भावने सम्भाव्यते तेन पूर्ववत्सदनुमानप्रतिबन्दीकरणम्, तस्माद्दूषणमपि सन्नोद्भावनीयम् । तं = प्रतिबन्दिवादिनम् । यं विशेषमिति । सामान्यधर्मपुरस्कारेण व्याप्तिस्थले पक्षधर्मतावललभ्यविशेषं पुरस्कृत्य प्रवृत्ता प्रतिबन्दी, तथा च तं पुरस्कृत्य हेत्वाभासो नोद्भावनीयः, गगनं नित्यं गुणत्वादित्यादौ तु पक्षधर्मतावललभ्यविशेषमादाय न दोषोद्भावनमपि त्वन्यथैवेति । सामान्यतः = यद्धर्मावच्छिन्नेन दोषेण प्रतिबन्दिस्तद्धर्मावच्छिन्नस्य । तत्र विशेषे इति । पक्षधर्मतावललभ्यविशेषमादायासिद्धयादौ । त्याजितदुष्टत्वे = त्याजितदोषत्वे । स्यादिति । यदि तादृशासिद्धयादौ दोषता नेष्टा तदाऽसिद्धयादिलक्षणस्य तत्र गमनादतिव्याप्तिरिति भावः । विशिष्य तद्विशेषत्याजने इति । प्रतिबन्दिस्याजितदोषभावानां पक्षधर्मतावललभ्यविशेषायत्तासिद्धयादीनां व्यावृत्तिफलकनिवेशेन लक्षणस्य तद्व्यावृत्तत्वोपगमे इत्यर्थः । असिद्धिरेव=उक्तासिद्धयादावगमनमेव । अनुमितिपरामर्शान्यतरविरोधित्वस्य तत्तद्दोषेऽपेक्षणीयत्वेन सामान्यधर्मपुरस्कारेण प्रवृत्तव्याप्त्यादिग्रहे तदायत्तानुमितौ च विशेषरूपेणासिद्धयादेर्विरोधित्वासम्भवेन न दोषलक्षणाक्रान्तत्वम्, तथा च लक्षणविरहव्युत्पादनेनैव स्वपक्षसम्यक्त्वोपपत्तौ प्रतिबन्दिर्वृथा, तस्या दोषाभ्युपगमाधीनप्रवृत्तिकत्वेन स्वपक्षासाधकत्वादिति भावः । मद्दर्शनेति । प्रपञ्चः सत्यः प्रमाविषयत्वादित्युक्ते विषयतात्खण्डनेन चाद्वैतिना प्रतिविहिते परो ब्रूते—नन्वेवं ब्रह्म सत्यं प्रमाविषयत्वात्, विमतं मिथ्या दृग्विषयत्वादित्यादि तवाभिमतमपि विलुप्येत, विषयताखण्डनानां तत्रापि जागरूकत्वादिति । अस्य = प्रपञ्चे सत्यत्वादेः । उभयतः पाशेति । अभीष्टासिद्धिरुभयत्राप्यविशिष्टेति भावः । मिथोविरुद्धायाः = मिथो विरुद्धाभ्यामभिधानानभिधानाभ्यां फलतः प्रपञ्चे मिथ्यात्वासिद्धिसाधि-

भासत्वात्, मिथोविरोधस्य तर्कदूषणत्वात्, सत्प्रतिपक्षानुमानवद्द्वयोरपि परस्परप्रतिक्षेपेणैवोपक्षीणत्वादिति न्यायद्वितीयाध्यायप्रथमाह्निकसूत्रे "प्रमेयता च तुलाप्रामाण्यव"दित्यत्रापादितदृष्टान्ताभावलक्षणदोषसाम्येन प्रत्यवस्थितं पूर्वपक्षवादिनं निराकर्तुमाचार्यः "समानमित्यनुत्तरमभ्युपगमात्, अभ्युपगतं तावद्भवताऽस्मत्पक्षे दृष्टान्तो नास्ती"ति ब्रुवन्नुद्योतकरो यत्रोभयोरित्यादिवदतो भट्टस्य प्रतिभटीकर्तव्यः । इति प्रतिबन्दीखण्डनम् ।

## अपसिद्धान्तखण्डनम् ।

ननु किं प्रतिबन्द्यादि दूषणञ्च भवत्येव, नन्वेवं भवतोऽपसिद्धान्तः स्यादिति चेत्, तर्हि दर्शयापसिद्धान्तस्य लक्षणं प्रकृतसम्बद्धतया. वाङ्मात्रेणापसिद्धान्ते भवतः किमिति नापसिद्धान्तः स्यात् । सिद्धान्तविपरीताभ्युपगमोऽपसिद्धान्तः, प्रतिबन्द्यादि च भवता सिद्धान्तत्वेनाभ्युपेतम्, मयेदं दर्शनमाश्रित्याभिधेयमिति भवता दर्शनविशेषस्याभ्युपेतत्वात्, दर्शनस्य च तत्तत्पदार्थस्वीकारात्मकत्वात्, तेषु च पदार्थेषु प्रतिबन्दिदूषणत्वादेः प्रविष्टत्वादिति चेन्न, लक्षणमेव तावदिदमपसिद्धान्तस्य नोपपद्यते,

---

कायाः, मिथ्यात्वसिद्ध्यनुपपत्त्यैवाभिधानानभिधानयोर्वा साधिकायाः । मिथोविरोधस्येति । एकेनापादकेन मिथोविरुद्धद्वयापादनस्य मिथोविरुद्धाभ्यामेकापादनस्येत्यर्थः । अस्य तर्कदूषणत्वे विरुद्धयोरेकेन व्याप्यव्यापकभावासम्भवो बीजम् ! आपादितेति । आपादितो यो दृष्टान्ताभावलक्षणो दोषस्तत्साम्येन । आचार्य उद्योतकरः प्रतिभटीकर्तव्य इत्यन्वयः । समानमित्यादिग्रहणकवार्तिकम्, अनुत्तरत्वोक्त्या प्रतिबन्दिरदूषणमित्युक्तम् अभ्युगतमित्यादिविवरणवार्तिकम् । तत्र बौद्धतार्किकयोर्विवादे स्थिरत्वे किं प्रमाणमिति बौद्धप्रश्ने आधारस्याधेयकालवृत्तित्वनियमात् कारणस्य च कार्याधारत्वात्कार्यकालवृत्तिःवावश्यकत्वेन स्थिरत्वमित्युक्ते कारणं विकृत्य कार्योत्पत्तेः कार्यमनाधारमेवेति नाधारत्वान्यथानुपपत्त्या कारणस्थैर्यसिद्धिरिति बौद्धेनोक्ते कार्यमनाधारमित्यत्र न कश्चिदुभयवादिसम्प्रतिपन्नो दृष्टान्त इति तार्किकोक्तौ कार्यं साधारमित्यत्रापि नोभयवादिसम्मतो दृष्टान्त इति बौद्धेन प्रतिबन्दिग्रहणे समानमित्यादिग्रन्थोत्थानम् ।

अत्रेदमवधेयम्—समानमित्यादिवार्तिकं वितण्डाभिप्रायेण, यत्रोभयोरित्यादिकं तु स्थापनावत्कथाभिप्रायेण, एवञ्च पक्षधर्मताबललभ्यं विशेषमादायासिद्ध्यादेर्न दोषत्वमुक्तरीत्या तल्लक्षणानाक्रान्तत्वात्, तादृशलक्षणानभ्युपगमे तु धूमानुमानादावपि तादृशासिद्ध्यादेः सम्भवेनानुमानमात्रोच्छेदप्रसङ्ग इत्यभिप्रायेणोभयसम्मतादूष्यताकेन प्रतिबन्दीकरणम्, एवमेकदर्शनमात्राभ्युपगतादूष्यताकेनापि प्रतिबन्दीकरणं जल्पे दोषतयोद्भावितस्यादोषतोपपादने यतनीयताभिप्रायेणेति । इति खण्डनशारदायां प्रतिबन्दिखण्डनम् ।

प्रविष्टत्वादिति । "स्मृत्यनवकाशदोषप्रसङ्ग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसङ्गा"दिति वदता भगवता बादरायणेन प्रतिबन्द्या दोषत्वोपगमात्, अत एव भगवत्पादैरपि बृहदारण्यकभाष्ये चतुर्थाध्याये वेदानुवचनशब्दं प्रथमं कर्मकाण्डपरतया व्याख्याय 'आरण्यकमात्रं वेदानुवचन'मिति केषाञ्चिन्मतं सामान्यवाचिवेदानुवचनशब्दस्य सङ्कोचोऽनुचित इत्युक्त्या निरस्य 'ननु त्वत्पक्षेऽप्युपनिषद्व्यतिरिक्तस्यैव ग्रहणमिति समानः सङ्कोच' इति परेण कृतायाः प्रतिबन्द्या दूषणतामुपेत्यैव वेदानुवचनशब्दो-

मत्सिद्धान्तविपरीतमभ्युपगच्छतो भवतोऽपसिद्धान्तप्रसङ्गात् । स्वसिद्धान्तस्तथाऽपेक्षित इति चेन्न, विशेषणपूरणमन्तरेण तदलाभात्, अन्यथा सर्वत्र विशेषणोपादानप्रयासवैयर्थ्यं स्यात् । एवमेवाभ्युपगमे भवत एवापसिद्धान्तकृत्या निवृत्त्याऽऽपतेत्, त्वत्सिद्धान्ते शतशो हेत्वादौ विशेषणोपादानदर्शनात्, परसिद्धान्तहेतूनाञ्चानुपात्तविशेषणानामनैकान्तिकीकृत्य त्वच्छास्त्रे बहुशो दूषितत्वात्. प्रथमं स्वशब्दविशेषणमनुपादाय दूषणभयेनेदानीं तत्करणे च हेत्वन्तरं नाम निग्रहस्थानं भवतः, हेत्वन्तरं हि प्रथममविशेषणं साधकभागमभिधाय पश्चाद्विशेषणवत्तद्वचनम् । किञ्चैवं लक्षणमभिदधानस्य भवतोऽप्राप्तकालतापातः, "अप्राप्तकालोऽवयवविपर्यास" इति, लक्ष्यमभिधाय हि लक्षणाभिधानं युक्तम्, तस्य च भवता विपर्यासः कृतः । एवमेवाभ्युपगमे भवत एवापसिद्धान्तापातात् ।

यस्तु प्रथमत एव स्वविशेषणमुपादत्ते तं प्रत्यनुपात्तविशेषणपक्षाभिहितो दोषो वक्तव्यः, मदीयो हि सिद्धान्तः स्वसिद्धान्त एव मम । अत्र वाक्येऽभ्युपगमपदश्रवणादभ्युपगन्ता लभ्यते तस्य यः स्वकीयः स स्वशब्दार्थः पर्यवस्यतीति चेन्न, ममाप्यभ्युपगन्तृत्वात्, मयापि हि किञ्चिदभ्युपगम्यत एव । विपरीताभ्युपगन्ताऽपेक्षित इति चेन्न, अविशेषात् । सिद्धान्तविपरीताभ्युपगन्ता विपरीताभ्युपगन्तेति चेन्न, तथाप्यविशेषात्, ममापि त्वत्सिद्धान्तविपरीताभ्युपगन्तृत्वात् । स्वसिद्धान्तविपरीताभ्युपगन्ता तथाऽभिमत इति चेन्न, नूनमतिप्राज्ञोऽसि यतः स्वपदमभ्युपगन्त्रा विशेषयितुं प्रवृत्तोऽभ्युपगन्तारमेव स्वपदद्वारा विशेषयसि, परस्पराश्रयान्न बिभेषि, स्वपदेऽपि साधारण्यप्रत्यवस्थानं पुरोक्तं पुनस्तदवस्थमेवेति च न प्रतिसन्धत्से ।

यस्य यः सिद्धान्तस्तेन तत्परित्यागोऽपसिद्धान्तस्तदीय इति चेन्मैवम्, यस्य यः सिद्धान्त इति पुरुषव्यक्तिविशेषसिद्धान्तव्यक्तिविशेषपरत्वेऽसाधारण्यादव्यापकत्वं लक्षणदोषः । यस्येति सिद्धान्तसम्बन्धिन इत्यर्थे तेनेति च सिद्धान्तसम्बन्धिनेत्यर्थे च भवतोऽपसिद्धान्तात्. तथाहि–सिद्धान्तसम्बन्धिनो मम यः सिद्धान्तस्तस्य सिद्धान्तान्तरसम्बन्धिना भवता त्यागोऽस्त्येव । त्याग एव तस्य नास्ति मया,

---

अन्यथा व्याख्यातः । अत एव च भवतैव प्रतिबन्ध्यैव प्रतिबन्दिर्निराक्रियते, 'कार्यस्याद्यसत्ताक्षणे' इत्यादिशून्यताप्रस्तावीयञ्च भवदीयं खण्डनं प्रतिबन्दिग्रहेणैवेति भावः । तथापेक्षित इति । लक्षणघटकसिद्धान्तपदेन विवक्षित इत्यर्थः । एवमेवाभ्युपगमे = विवक्षयैवेष्टसिद्धिमुपगम्य विशेषणोपादानवैयर्थ्योपगमे । कृत्येति प्रथमान्तम् । निवृत्त्येति ल्यबन्तम्, अस्मत्पक्षादित्यादिः । अवयवविपर्यास इति । समयबन्धविपर्याभूतो यादृशोऽभिधानक्रमस्तद्विपरीतक्रमेणाभिधानमित्यर्थः । एवमेवाभ्युपगमे = सत्यप्यवयवविपर्यासेऽप्राप्तकालत्वाभावोपगमे ।

अविशेषादिति । अस्माकं कस्यचिद्विपरीताभ्युपगन्तृत्वादित्यर्थः । स्वपदं = स्वपदार्थम्, स्वपदद्वारा = स्वपदार्थद्वारा । स्वपदे इति । स्वस्वस्य साधारणतया स्वसिद्धान्तविपरीताभ्युपगन्तेत्यत्र स्वपदेन मम ग्रहणसम्भवात् ।

यः सिद्धान्त इति । सामान्यतः कथाकालीनाभ्युपगमविषयीभूत इति शेषः । तेन प्रतिज्ञाहान्यसङ्करः, तत्र विशिष्याभ्युपगमात् । एवमग्रेऽपि । असाधारण्यात् = अननुगमात् । यत्त्वादेरनुगतत्वे

परिगृहीतविषयत्वात् त्यागस्येति चेन्न, यदि त्यागोऽस्वीकारस्तदा न परिगृहीतविषयत्वनियमः। अथ स्वीकृतस्यास्वीकारः, तदा मया स्वीकृतस्य भवताऽस्वीकारो भवत्येव तथेति विशेषो नास्ति। अथ तेनैव स्वीकृतस्य तेनैवास्वीकारः, सोऽपि न, तेनेति स्वीकर्त्रैत्यर्थे ममापि स्वीकर्तृत्वेन मया स्वीकृतस्य भवताऽस्वीकारे तवापसिद्धान्तापत्तेः। एकेनैकस्य स्वीकृतस्यास्वीकारोऽपसिद्धान्त इति चेन्न, एकेनेति यद्येकसङ्ख्यायोगिनेति तदा मम यथैकसङ्ख्यायोगित्वं तथा तवापीति स एवापसिद्धान्तापातः। अथैकेनेत्यभिन्नेनेति, तदापि स्वस्मादभिन्नत्वं तव च मम च समानम्, अन्यस्माद्भिन्नत्वं न मम न वा तवेत्यपसिद्धान्तविषयोच्छेदः। अथ स्वीकर्तुरस्वीकर्तृतो न भिन्नत्वं तदाऽयमर्थः स्यात्—स्वीकर्तृतो न भिन्नेनैकस्य स्वीकृतस्यास्वीकारोऽपसिद्धान्तः, तथा च स एव भवतोऽपसिद्धान्तः, मया यदीयाङ्गीकारः किञ्चित्स्वीकर्तुरभिन्नस्य भवतस्तदीयास्वीकर्तृत्वात्। एतेन—एकस्यैकेन स्वीकारास्वीकारावपसिद्धान्त—इत्यपास्तम्, मिलितयोरावयोरपसिद्धान्तापातात्। अथ तत्स्वीकर्तुरेव तदस्वीकर्तुरभिन्नत्वमेकशब्देनाभिमतम्, तदापि यदि स्वीकारविषयाभिन्नत्वं तच्छब्देनोच्यतेऽस्वीकारविषयस्य, तदा स्वीकर्त्रन्तरस्वीकारविषयस्य भवता किञ्चित्स्वीकर्त्रभिन्नेनास्वीकारविषयतयाऽस्वीकारविषयाभिन्नत्वस्वीकारेण भवतोऽपसिद्धान्तप्रसङ्गस्य दुर्वारत्वात्। एकेन स्वीकर्त्रा न तु भिन्नेन स्वीकारास्वीकारौ विवक्षिताविति चेन्न, एकेन स्वीकर्त्रेत्येतदेव विवेचयन् भूयस्तदाकर्णन्नभिहिततद्दूषणगणाव्यावृत्त्यापत्त्या कथय कथं न घनघनाघनसमयसमागमोदीयमानतरलतरङ्गिणीवेणिजलविवर्तनिर्वर्तितावर्तचक्रचङ्क्रम्यमाणतृणकदम्बविडम्बनामनुभविष्यसि। स्वीकृत्यास्वीकार स इति चेन्न, क्त्वार्थविवेचनेनोक्तबाधापातात्, अस्वीकृत्य स्वीकारे च तदभावापत्तेः।

---

यत्पदेन यस्य ग्रहणं तस्यैव तत्पदेन ग्रहणमित्यत्र नियामकासम्भवादिति भावः। एकसङ्ख्येति। एकत्वसङ्ख्येत्यर्थः। सा चैकत्वत्वेनानुगतीकृतेत्याशयः। विषयोच्छेदः स्वभिन्नाभिन्नत्वविवक्षायाम्। एतेनेति। एतेनापीत्यर्थः। पूर्वमतिव्याप्त्या निरस्तमपि दूषणान्तरदित्सया पुनराशङ्कितम्। मिलितयोरिति। एकत्वस्याननुगमेन निवेशे आवयोरुभयोरप्येकत्वात्, स्वीकारास्वीकारविषयस्यापि च तथात्वात्। स्वीकर्त्रभिन्नेनेति। स्वीकारेणेत्यनेनान्वयः। अस्वीकारविषयतया = भवदीयास्वीकारविषयत्वात्। विवेचयन्निति। एकत्वस्य साधारण्येनोक्तदोषादिति भावः। भूयस्तदाकर्णन् = निरस्तं विशेषणं पुनरुपाददानः। घनघनाघनेति। अतिशयेन प्रवर्षणशीलमेघेत्यर्थः। उदीयमानेति। दैवादिकस्य इङो रूपम्। वेणिः = प्रवाहः। विवर्तोऽवस्थाविशेषः। चक्रं समुदायः। चङ्क्रम्यमाणः = भृशं विक्षिप्यमानः। विडम्बना = विलासः। क्त्वार्थेति। एककर्तृकत्वेत्यर्थः। तथा च कथायां सामान्यतस्तेन स्वीकृतस्य सिद्धान्तस्यास्वीकार इति पर्यवसन्नं तच्च निरस्तम्। सामान्यमपि च किञ्चिदपेक्ष्य विशेषः सोऽपि च किञ्चिदपेक्ष्य सामान्यमिति प्रतिज्ञाहानिसाङ्कर्यमपि, विशिष्यैव निवेशे चाननुगम इति। अस्वीकृत्येत्यादि। वस्तुतस्तु नेदं दूषणम्, परमतमस्वीकृत्य तत्स्वीकरणस्थलेऽपि स्वमतस्वीकारास्वीकारयोः सत्त्वात्, अहं नैयायिकमतेन वक्ष्यामीत्येवं सामान्यतः स्वसिद्धान्तस्य स्वीकारावश्यम्भावादिति।

किञ्च सिद्धान्तपरित्यक्तरि यदपसिद्धान्तोद्भावनं तत्किं स्वीकृतदर्शनानुमतापसिद्धान्तदूषणभावे वादिनि, उतानेवम्भूते, आद्ये पूर्वसिद्धान्तवदपसिद्धान्तेऽप्यनेन व्युत्थातुं शक्यते तत्र किं वक्तव्यम् ? न तावन्न वक्तव्यमेव किञ्चित्, पूर्वसिद्धान्तत्यागादेवापसिद्धान्तेन निगृहीतत्वादिति युक्तम्, अपसिद्धान्ते तत्परिहारस्य तद्दूषणत्वान्यतरासिद्धेस्तेनाभिहितत्वात्, अन्यथा स्वाभिप्रायेणासिद्धिमुद्भाव्यैव कथां विच्छिन्दानो विजयेत परासिद्धिपरिहारं नापेक्षेतेत्यनसिद्ध्यावप्यसिद्धिमुद्भाव्य परं पराजित्याप्रत्यूहं गृहान् प्रतिष्ठेत। निगृहीतस्य तस्यापरमभिधानमनादरणीयमेवेति चेन्न, अन्यतरासिद्ध्या निग्रहपरिहारस्यैव तेनाभिधीयमानत्वात्, तथाप्यनादरेऽनसिद्ध्यावसिद्धिमुद्भाव्य पराभिधीयमानमसिद्धिपरिहारमनादृत्य विजयेतैवेत्युक्तम् । अथ मन्यसे—मध्यस्थेनैतद्विचारणीयम्—किमनसिद्ध्यावसिद्धिरनेनोक्ता, अनपसिद्धान्ते चापसिद्धान्तः? एतद्विचार्य तेनैव जयपराजयाववधारणीयौ, एतदर्थमेव मध्यस्थोपस्थापनमिति; तर्हि वादिना साधने प्रयुक्ते दुष्टमेतदित्यभिधायैव प्रतिवादिना निवर्तनीयम्, मध्यस्थस्तु परमार्थतो दुष्टत्वमदुष्टत्वं तस्य साधनस्य विचार्य जयपराजयाववधारयिष्यति। सोऽयं प्रसूय निर्वृत्तीभूतपिकदम्पत्यपत्यपोषणकृतमहायासवायसव्यसनमासादयिष्यति मध्यस्थो वराकस्तावकदुष्परामर्शप्रकर्षेण । अथोच्यते—सम्प्रति विप्रतिपद्यतां नामापसिद्धान्तेऽप्यसौ, किमेतावता, पूर्वं स्वीकृतापसिद्धान्तदूषणभावस्य दर्शनस्य तावत्तेन स्वीकरणमकारि, तदेवादायापसिद्धान्तस्योपन्यासो युक्त इति; मैवम्, यदीदानीन्तन्यननुमतिरस्य नाद्रियते, अस्यामुपजातायामपि प्राक्तनानुमतिमादायैव च दूषणप्रवृत्तिस्तदाऽपसिद्धान्तस्यापि कुतोऽवकाशः, स हि पूर्वानुमतस्येदानीमननुमतिमाश्रित्यैव प्रवर्तते नान्यथा, तस्मात्स्वीकृतापसिद्धान्तदूषणभावमपि वादिनं प्रति विप्रतिपत्तिकाले साधनीयमपसिद्धान्तस्य दोषत्वमिति द्वितीयानवकाशः। यस्य तु सौगतादेर्मतेऽपसिद्धान्तो न दूषणं तं प्रत्यवश्यं साधनीयमेवास्य दूषणत्वम् ।

न च वाच्यम्—योऽपसिद्धान्ते विप्रतिपत्तिं करोति तं प्रति व्याघात एवाभिधेयः, दर्शनविशेषं स्वीकुर्वता प्रथमं तद्दर्शनान्तर्निवेशिनः प्रतिबन्दिदूषणत्वादेस्तेन स्वीकारात्, पश्चात्तस्यैवास्वीकारः, तावेतौ स्वीकारास्वीकारावेकैकस्य व्याहताविति। यद्ययमप-

एतावता लक्षणं निराकृत्यापसिद्धान्ते दूषणत्वमेव निराकरोति किञ्चेति। येन वादिना स्वीकृते दर्शनेऽपसिद्धान्तस्य दूषणभावोऽनुमतस्तस्मिन्नित्यर्थः। न तावद्युक्तमिति सम्बन्धः। अपसिद्धान्ते इति। उद्भाविते सतीतिशेषः। तत्परिहारस्य तद्दूषणत्वान्यतरासिद्धेरिति। अपसिद्धान्ते दूषणताया अन्यतरवादिमतेऽसिद्धिरूपस्यापसिद्धान्तपरिहारस्येत्यर्थः। अन्यथेति। अन्यतरसिद्धदोषभावस्यापि विजयौपयिकं यदुद्भावनं तदेत्यर्थः। उक्तेति। उतासिद्धौ सत्यामेवेति शेषः। अपसिद्धान्त इति। उक्तः, उतापसिद्धान्ते सत्येवेति शेषः। अत्र च प्रथमकोटौ निरनुयोज्यानुयोगेन निग्रहः। वायसेति। कोकिलोत्पादितापत्यं स्वीयमभिमत्य वायसेन पाल्यते। द्वितीयेति। अपसिद्धान्तस्य दोषतामनङ्गीकुर्वति वादिन्यपसिद्धान्तोद्भावनमिति द्वितीयविकल्पस्य पूर्वोक्तस्यावकाश एव नेत्यर्थः, तदीयदोषतामङ्गीकुर्वत्यपि तस्या उक्तरीत्या साधनीयताप्राप्तेः। तुर्यं॑थें।

प्रतिबन्दिदूषणत्वादेरिति त्यज्यमानसिद्धान्तविरोधोपदर्शनपरम् । व्याहतौ = अनुपपन्नौ ।

सिद्धान्तात्मैव व्याघातः, तदाऽपसिद्धान्तदूषणत्वे विप्रतिपन्नस्य विप्रतिपत्तिमभ्युदस्य नाभिधातुं शक्यः। अथ दूषणान्तरमयं व्याघातोऽपसिद्धान्तमनुपजीव्य सम्भाव्यमानोद्भावनः, तदा सार्वत्रिकापसिद्धान्तोदाहरणेऽयमेवास्तु किमपसिद्धान्तस्य दूषणताङ्गीकारेण। किञ्चैवमपसिद्धान्ते उद्भाविते पश्चात्तद्विप्रतिपत्तावुपजातायामपसिद्धान्तमुपेत्य व्याघातलक्षणस्यान्य दोषान्तरस्याभिधाने प्रतिज्ञाहान्यापत्तेः, प्रतिज्ञाहानिः स्वीकृतोत्सर्ग इति, एवं प्रथमं किञ्चिद्दूषणमुक्त्वा तत्परिहारिणि दूषणान्तराभिधाने न प्रतिज्ञाहानिरिति गतं प्रतिज्ञाहान्यादिभिर्निग्रहैः। प्राक्प्रतिज्ञातदोषनिर्वाहार्थमेव निग्रहान्तरकथनान्नैष दोष इति चेन्न, पूर्वनिग्रहपरिहारमकृतवति तेनैव पराजिते निग्रहान्तरोपन्यासस्यायुक्तत्वादिति। न चानेन भयेन भवता व्याघात एवाभिधातव्यः प्रथमं नाप सिद्धान्त इति वाच्यम्, अपसिद्धान्तवैयर्थ्यप्रसङ्गात्, सर्वत्रापसिद्धान्तोदाहरणे व्याघाताभिधानस्यैवमङ्गीकर्तव्यत्वात्, नहि कश्चिच्छक्यतेऽवधारयितुं मयाऽपसिद्धान्ते उद्भाविते नायं तत्र विप्रतिपत्स्यत इति। नन्वरत्वेवं विप्रतिपन्नं प्रत्यपसिद्धान्तस्य दूषणत्वं प्रसाधनीयमिति, मैवम्, येनाप्यस्वीकारदण्डेन दूषणेन तत्स्वीकारयिष्यसि तदनङ्गीकारस्यापि सम्भवात्, उक्तञ्च सौगतैः—"नहि शास्त्राश्रया वादा भवन्तीति नापसिद्धान्तो निग्रहाधिकरण"मिति।

"रिक्तस्य जन्तोर्जातस्य गुणदोषमपश्यतः।
विलब्धा यत केनामी सिद्धान्तविषयग्रहाः" ॥ इति च ॥

---

न च वाच्यमित्यत्र हेतुमाह यद्ययमिति। दूषणान्तरमिति। विरुद्धयोः समुच्चयाभ्युपगमस्वरूपोपाधिभेदमादाय पार्थक्यमिति भावः। अनुपजीव्येति प्रतिबन्धादौ दूषणत्वतदभावयोः समुच्चयाभ्युपगमाभिप्रायेण। तत्परिहारिणीति। तत्परिहारिणमुद्दिश्येत्यर्थः। प्राक्प्रतिज्ञातोऽपसिद्धान्तः। निग्रहान्तरमिह व्याघातो विवक्षितः। तथाचोक्तस्योपपादनमेव न तु तत्परित्याग इति न प्रतिज्ञाहानिः। अयुक्तत्वादिति। यदि तु पूर्वोदितनिग्रहस्य परेण परिहारो विहितस्तदा तदुद्भावयितुरेव निरनुयोज्यानुयोगेन प्रतिज्ञाहान्या च निग्रह इति। यद्यपि विप्रतिपत्तिमात्रेणोद्भावितनिग्रहस्थानस्य परिहारो न भवति, अपि तु तस्य तदीयदोषत्वस्य वाऽभावे युक्त्युक्त्यैव, यत्र च विप्रतिपत्तिमात्रमुदीर्य हेतुर्नाभिहितस्तत्रैवापसिद्धान्तोद्भावयित्रा व्याघातः शक्योद्भावनः, तथापि तादृशस्थलेऽपि विप्रतिपन्नो युक्त्युक्तावेव पर्यनुयोक्तव्यो न तु स्वयं व्याघात उद्भावनीयः, उक्तायां च युक्तौ समीचीनायामुद्भावयितृनिग्रहोऽन्यथा तु पूर्ववादिन एवेति भावः। अनेनेत्यादि। अपसिद्धान्तदोषतायां विप्रतिपत्तौ व्याघातोद्भावने प्रतिज्ञाहान्यादिभयेनेत्यर्थः। अस्वीकारदण्डेन = अपसिद्धान्तदूषणत्वास्वीकारे बाधकीभूतेन व्याघातेन। सम्भवादिति। कथकसम्प्रदायानादरेण तस्य दूषणता न मन्तव्या, स्वीकारास्वीकारौ च कालभेदेनैकस्याप्येकत्र सम्भवत इति भावः। शास्त्राश्रयाः = स्वस्वशास्त्रोक्तसिद्धान्तस्वीकारनियन्धनाः। वादाः = कथाः। निग्रहाधिकरणं = पराजयप्रयोजकः। रिक्तस्येत्यादि। सिद्धान्तविशेषमस्वीकृत्यैव गुणदोषमपश्यतामित्यत आह गुणदोषमपश्यत इति। गुणदोषविवेचनं विना सिद्धान्तविशेषालम्बनानुपपत्तेरिति भावः। नन्वन्येन प्रतिपादितः सिद्धान्तविशेषः पश्चात्सिद्धान्तविशेषे तं निरुन्धन्नपि दुर्मतिरेवेति भावः। केन माद्रियतामित्यत आह विलब्धा इत्यादि। अन्तर्भावितण्यर्थतयोत्पादिता इत्यर्थे पर्यवस्यति। केन दुर्मतिना। सिद्धान्तविषयग्रहाः = तत्तत्सिद्धान्तविषयकोपगमाः। तथा च पूर्वं रिक्तस्योत्पत्तौ

अत्र कश्चिदाह—शास्त्रमनाश्रित्य कथारम्भानुपपत्तिः, यदा हि क्षणभङ्गसाधनप्रयोक्ताऽस्फूर्तिमता स्थिरवादिना सिद्धसाधनमुद्भाव्य निगृह्यते तदा किं कुर्यात्। प्रथमविप्रतिपत्तिविरोधमुद्भावयेदिति चेत्, एवं तर्हि विप्रतिपत्त्यनुगुणप्रमेयान्तरव्यतिक्रममप्युद्भावयेदेव, अन्यथा विप्रतिपत्तिव्यतिक्रममप्युपेक्षेत न खलु तत्तदनुगुणव्यतिक्रमयोर्विरोधापत्तिं प्रति कश्चिद्विशेषः, न चैकपुरुषार्थानुगुणाङ्गाङ्गिभावव्यवस्थितपदार्थजातव्युत्पादनादन्यच्छास्त्रं नाम, तस्मात्क्षणिकत्वस्वीकारे तदनुगुणापोहादिसमस्तस्वीकारः, तदेकपरिहारे वा समस्ततदनुगुणपरिहार इति परमेश्वरोऽपि नान्यथाकरणे क्षमः, न च समस्ततदनुगुणपदार्थजातं कथारम्भे स्वशब्देनाभिधातुमुचितम्, तदैव शास्त्रप्रणयनप्रसङ्गात्, परिषदनपेक्षितत्वाच्च, न च तद्व्यतिक्रमोद्भावनाय समस्ततदनुगुणोहः परस्परस्य शास्त्रमनाश्रित्य शक्यः, न च तदनुगुणव्यतिक्रमे तदुपेक्षणे वा

---

तात्पर्यपरिशुद्धावुदयनाचार्यैरुक्तं निराकर्तुमनुवक्ति अत्रेति। शास्त्रमनाश्रित्य = शास्त्रोक्तसिद्धान्तमस्वीकृत्य। "यत्सत्तत्क्षणिकं यथा जलधराः सन्तश्च भावा अमी" इति क्षणभङ्गसाधनम्। अस्फूर्तिमता = सद्दूषणस्फूर्तिविरहिणा। यद्यपि स्वाधिकरणक्षणध्वंसाधिकरणक्षणवृत्तिध्वंसप्रतियोगित्वरूपत्वे क्षणिकत्वस्य सिद्धसाधनमस्त्येव, तथापि स्ववृत्तित्वस्वभिन्नक्षणावृत्तित्वोभयसम्बन्धेन क्षणविशिष्टत्वरूपत्वे स्वाधिकरणक्षणवृत्तिध्वंसप्रतियोग्यवृत्तित्वरूपत्वे वा न तत्सम्भवः, साध्यप्रसिद्धिः पुनरेवं कथञ्चित्करणीयेत्यन्यत्। किं कुर्यादिति। अपसिद्धान्तस्य दूषणत्वानभ्युपगमे तदुद्भावनानुपपत्तेरिति भावः। प्रथमेति। कथातःपूर्वं या विप्रतिपत्तिः = विरुद्धकोटिपरिग्रहस्त्वयेदं साधनीयमनेनेदं दूषणीयमिति मध्यस्थवचनानुसारेण कृतः, स्वीयस्थैर्यपक्षोपगम इति यावत्, तद्विरोधोद्भावनञ्च न शास्त्रकाराभ्युपगमविरोधोद्भावनात्मनेति प्रतिज्ञाहानिर्वा स्वयं विशिष्य स्वीकृतपरित्यागात्, प्रतिज्ञाविरोधो वा कथायां स्ववचनविरोधादिति भावः। विप्रतिपत्त्यनुगुणप्रमेयान्तरव्युत्क्रममिति। स्थैर्यकोट्युपगमानुकूलप्रत्यभिज्ञाप्रामाण्योपगमविरोधमित्यर्थः। विशेष इति। नन्वेतावता स्वशास्त्रकाराभ्युपगतार्थविरोधरूपापसिद्धान्तस्य दूषणत्वे किमायातमित्यत आह नचेति। एकः पुरुषार्थो भोगोऽपवर्गो वा, तदन्यतरमुद्दिश्यैव हि शास्त्राणां प्रवृत्तिः, तदनुकूलमङ्गाङ्गिभावापन्नं यत् पदार्थजातं तद्व्युत्पत्तिसाधनं वाक्यनिचयः शास्त्रम्। शास्त्रस्य प्रधानं प्रमेयमङ्गि यथा ब्रह्मादि, तदङ्गं च तत्साधकप्रमाणादि। अपोहोऽतद्व्यावृत्तिः, आदिना प्रत्यभिज्ञाभ्रमत्वादि। अपोहादेःसिद्धौ देशकालानुगतवस्त्वसम्भवात् तस्य क्षणिकत्वानुगुणत्वम्। तदेकपरिहारे = क्षणिकत्वस्यैकस्य परिहारे। क्षम इति। तथा च स्वशास्त्रकाराभ्युपगतस्य तस्य तदनुगुणस्य वा त्यागेऽपसिद्धान्तो दूषणमेवेति भावः। ननु यदि सौगतोऽहं नैयायिको वेत्यादिरीत्या शास्त्रविशेषमाश्रित्य कथाऽरभ्येत, तदा तत्तदनुगुणत्यागेऽपसिद्धान्तो भवेत्, यदि तु विशिष्यैव स्वीकृतपदार्थमभिधाय कथाप्रस्तावोऽनुमन्यते तदा न तदवकाशः, तदाभिधेयः स्वीकृतपदार्थस्त्वङ्गं वाऽङ्गी वेत्यन्यत्, इत्यत आह नचेति। प्रसङ्गादिति। अत्रेष्टापत्तिं परिहरन्नाह परिषदनपेक्षितत्वाच्चेति। विप्रतिपत्तिविषयीभूतकोट्योरेव साधनदूषणयोर्जिज्ञासितत्वादिति भावः। नन्वेकेन क्षणिकत्वकोटिपरिग्रहे तदनुगुणा अपोहादयोऽपि तेनोपगन्तव्या इत्यपरेणोहनसम्भवादुक्तरीत्या शास्त्रविशेषोऽनाश्रयणीय इत्यत आह नचेति। तद्व्यतिक्रमेति। तदनुगुणव्यतिक्रमेत्यर्थः। ननु शास्त्राश्रयणाधीनमनुगुणोन्नयनमनुगुणविरोधोद्भावनायैव, तद्व्यर्थत्वे तु तादृशोन्नयनमप्यकिञ्चित्करमित्यत आह नचेति। तदुपेक्षणे = उक्तव्यतिक्रमानुद्भावने। एकेन वादिना व्यतिक्रमेऽपरेण च तदुपेक्षणे इति द्रष्टव्यम्। तत्तदधि-

तत्त्वप्रतिपत्तिजयावित्यकामेनापि तत्तदधिकारप्रवृत्तं शास्त्रमेवाश्रयणीयमिति ।

तदेतदपेशलम्, किं तदनुगुणं प्रमेयान्तरं ? यदनभ्युपगमे विरोधमुद्भावयेदित्युच्यते, द्वयमभ्युपगम्यं सम्भवति, एकं तावद्यदनभ्युपगमे कथैव प्रवर्तयितुमशक्या, यथा प्रमाणादि सर्वकथकसिद्धम्, इतरत्तु प्रतिदर्शनसिद्धं किञ्चिद्यथा क्षणभङ्गेश्वरादि, तत्र यदि प्रथममभ्युपगम्यैव कथाप्रवृत्तिरिति तत्स्वीकारे पश्चात्तदनङ्गीकारोऽपसिद्धान्तः, तन्न, स्वव्याघातकत्वेन तस्य भवद्भिरेव जातित्वाङ्गीकारात्. जातेश्च निरनुयोज्यानुयोगे निवेशात् । नापि द्वितीयः, दर्शनभेदनियतं हि क्षणभङ्गादि यत्कथारम्भेऽभ्युपगन्तव्यम्, तत्किं तदभ्युपगमस्य प्रकृतसाध्यापोहाद्युपायतया, उत नान्तरीयकतया; न प्रथमः, क्षणभङ्गसाधनप्रस्तावेऽपोहादि परित्यजतः सौगतस्यापसिद्धान्ताभावापत्तेः, तदभ्युपगमस्य तदनुपायत्वात्, अन्योन्याभ्युपगमोपायत्वे चान्योन्यविचारस्य निष्पत्तिरेव न स्यात्, विचारे सति प्रामाणिकत्वप्रतीतौ तदभ्युपगमस्तदभ्युपगमे च विचार इति । अभ्युपगतोपायत्यागविषय एवापसिद्धान्तो नान्यत्रेति चेन्न, यो हि यदुपायस्तमभ्युपगम्य विचारः प्रवर्तयितव्य इत्येव कुतः ? तस्योपायतया तेन विचारः प्रवर्तत इत्येव युक्तम्, न तु तदभ्युपगमोऽपि तावता तदुपायः स्यात्, तस्य च तदभ्युपगमस्य च पृथक्कारणत्वाभ्युपगमे प्रमाणस्योपदर्शयितुमश-

---

कारप्रवृत्तं = तत्तत्पदार्थनिरूपणमुद्दिश्य प्रणीतम् ।

यदनभ्युपगमे = यस्य सर्वथैवानभ्युपगमे, तेन मिथ्यात्वेन तदभ्युपगमे सत्त्वेन चानभ्युपगमे कथाप्रवर्तनसम्भवेऽपि न क्षतिः, विस्तरस्तु ग्रन्थोपक्रमे निरुक्त एव । तस्य = प्रमाणाद्यनङ्गीकारस्य । स्वव्याघातकत्वं स्ववचनाऽभ्युपगतविरहप्रसञ्जकत्वम्, नच प्रमाणाद्यनङ्गीकारे स्फुटमेव, तथा सति कस्याप्यभ्युपगमासम्भवात्, स्वदमसिद्धश्च न दूषणसमर्थोऽपीति न दूषणासमर्थत्वस्य जातित्वप्रयोजकत्वेऽप्यनुपपत्तिः । अनुपपत्तिसमाधानास्यान्तर्भावमिच्छन्ति । वस्तुतस्तूपधेयसङ्करे निवेशादिति । तथा च जातेर्निग्रहस्थानत्वेऽपि नापसिद्धान्तात्मकतेति भावः । स्वशास्त्रकाराभ्युपगमविरोधात्मनोद्भावनेऽपसिद्धान्तत्वसम्भवः, तथाप्यसङ्कीर्णोदाहरणाभावे तेन रूपेण दूषणत्वं न मन्तव्यमेवेति भावः । दर्शनभेदनियतं = शास्त्रविशेषाभ्युपगतम् । नान्तरीयकतया = अपोहाद्यभ्युपगमव्यापकतया । विषययोर्व्याप्यव्यापकभावोऽप्यर्थादायाति । तदभ्युपगमस्य = अपोहाद्यभ्युपगमस्य । तदनुपायत्वात् = क्षणभङ्गाभ्युपगमानुपायत्वात् । प्रकृतसाध्याभ्युपगमौपयिकाभ्युपगमविषयत्यागो हि प्रथमकल्पेऽपसिद्धान्तः पर्यवस्यतीति भावः । क्षणभङ्गसाधनप्रस्तावेऽपोहादित्यागस्यापसिद्धान्तता नानुमन्तव्या, अपि त्वपोहादिसाधनप्रस्तावे क्षणभङ्गपरित्यागस्यैव, उक्तान्योन्याश्रयपरिहाराय क्षणभङ्गोपगमस्यैवापोहाद्युपगमौपयिकताया मन्तव्यत्वात्, अन्यथैवोपायोपेयभावः किमिति न स्यादित्यत्र विनिगमकाभावेऽप्यपसिद्धान्तस्य दूषणत्वसिद्धेः, प्रमाणान्तरेणापि तयोरेकतराभ्युपगमस्य कदाचित्सम्भवाच्चेति भावेनाशङ्कते अभ्युपगतेति । यो हि = यज्ज्ञानमात्रं हि । यदुपायः = यदभ्युपगमोपायः । अभ्युपगमस्त्विदं मदीयं मतमिति वाऽहं सौगत इत्यादि वा ज्ञानविशेषः । विचारः = तद्विचारः । तस्य = तज्ज्ञानमात्रस्य । तेन = तज्ज्ञानेन । तस्य = तज्ज्ञानस्य । अशक्यत्वादिति । स्वानभ्युपगतेन प्रतीतमात्रेणैव परमतप्रसिद्धेन परं प्रति साध्यसाधनोपपत्तेः स्वाभ्युपगमस्य हेतुताया गौरवप्रसञ्जकत्वात् । ननु परमतप्रसिद्धेन

क्यत्वात्, शक्यत्वेऽपि वा तत्र स्वाभ्युपगमः किमित्यभ्युपेयो वैयर्थ्यात्, उपायत्वादेव परस्य तथा प्रतीत्युपपत्तेः। अथोच्यते—उपेयमुपायेन साधयतोपेयवदुपायस्यापि सत्त्वमभ्युपगन्तव्यमिति पश्चात्तदनभ्युपगमेऽपसिद्धान्तोपन्यासः सावकाशः, असत उपायत्वानुपपत्तेः। तर्ह्युपायत्वेनोपन्यसनात्तत्सत्त्वाभ्युपगमस्तस्य साक्षादश्रुतोऽप्यसत्त्वेनाभ्युपगम्यमानस्योपायत्वस्वीकारानुपपत्त्या कल्पनीयः, कल्पितेन तेन श्रूयमाणतत्सत्त्वानभ्युपगमविरोधादपसिद्धान्तोऽभिधेयः, एवञ्च सति सत्त्वानभ्युपगमे एवोपायत्वानुपपत्तिप्रसङ्गो दूषणमुच्यतामनुपजीव्यत्वात्, तदुपन्यासमन्तरेणाश्रूयमाणतदीयाभ्युपगमस्य दर्शयितुमशक्यत्वात्, कृतं तदुपजीविना पश्चात्तनेनापसिद्धान्तेन। अतएव न द्वितीयः, तन्नान्तरीयकाभ्युपगमोऽपि हि तत्सत्तानभ्युपगमे साध्यस्याभावापत्त्याऽनुमन्तव्यः, तथा च सैव दूषणमस्त्वनभ्युपगमे, कृतं तथाभ्युपगमं परिकल्प्य तेनानभ्युपगमविरोधादपसिद्धान्तोपन्यासेनेति। एवं निग्रहान्तरखण्डनमूहनीयम्। इत्यपसिद्धान्तखण्डनम्।

इति कवितार्किकचक्रवर्तिश्रीश्रीहर्षकृते खण्डनखण्डखाद्ये
निग्रहानिरुक्तिर्नाम द्वितीयः परिच्छेदः।

---

प्रति किञ्चित्साधने स्वाभ्युपगमस्यानपेक्षणीयत्वेऽपि स्वमतप्रसिद्धेन क्षणभङ्गादिनापोहादिकं साधयता क्षणभङ्गादिकमभ्युपगतमेवेति तत्रैव तत्त्यागेऽपसिद्धान्तः, तत्राभ्युपगमस्य कारणलक्षणयोगात्, कारणतावच्छेदकं पुनरभ्युपगमत्वघटितं मास्तु किं तेनेत्यत आह शक्यत्वे इति। तत्र = कथायाम्। अभ्युपेय इत्यन्वयः। सौगतोऽहमित्यादिरीत्या क्षणभङ्गादिविषयकः स्वाभ्युपगमः किमिति कथायां प्रकाशयितव्यः, तथा च तत्त्यागे तदीयविरोधोद्भावनं दूरोत्सारितम्। ननु स्वाभ्युपगमस्य परं प्रति प्रत्याययितुमेव तथा प्रकाशनमित्यत आहोपायत्वादेवेति। साधनविषयकस्वाभ्युपगमस्य स्वीयसाध्याभ्युपगमोपायताया वादिभ्यां निश्चितत्वादेवेत्यर्थः। तथाप्रतीतिः = साधनविषयकपरकीयाभ्युपगमप्रतीतिः। नन्वेवमुन्नीयमानस्यैवाभ्युपगमस्य त्यागेऽपसिद्धान्तः सावकाश इत्याशङ्कते अथेति। अपोहादिकं क्षणभङ्गादिना साधयतेत्यर्थः। असतः = सर्वथैवासतः। परिहरति तर्हीति। श्रूयमाणेत्यनभ्युपगमान्वयि। उपजीव्यत्वं विशदयति तदुपन्यासमन्तरेणेति। उपायत्वस्य सत्त्वं विनाऽनुपपत्त्युपन्यासमन्तरेणेत्यर्थः। उपायत्वात्सत्त्वं सत्त्वाच्चाभ्युपगमः सिद्ध्यति। अत एव = वक्ष्यमाणादेव। द्वितीयः = तन्नान्तरीयकतयेति विकल्पः। तत्सत्तेति। नान्तरीयकसत्तेत्यर्थः। सैव = साध्याभावापत्तिरेव। अनभ्युपगमे = नान्तरीयकसत्ताऽनभ्युपगमे। एवमिति। स्वाभिहितस्य परेण प्रतिषेधे कृते तत्परिजिहीर्षया प्रतिज्ञातार्थापलाप इत्येवमादीनां प्रतिज्ञासन्न्यासादिलक्षणानामपि स्वत्वघटितत्वादिघटितत्वेन तदनुगमानुगमाभ्यामुक्तरीत्या दोषावश्यम्भावादिति भावः। इति खण्डनशारदायामपसिद्धान्तखण्डनम्।

इति श्रीशङ्करचैतन्यभारतीस्वामिविरचितायां खण्डनशारदायां
निग्रहानिरुक्तिर्नाम द्वितीयः परिच्छेदः।

❀ ॐ ❀

श्रीशारदायै नमः ।

# खण्डनखण्डखाद्यम् ।

## शारदाख्यव्याख्यासंवलितम्

### सर्वनामार्थनिरुक्तिर्नाम तृतीयः परिच्छेदः ।

अथ यान्यचलस्य बहुलं वाग्व्यवहारास्तेषां सर्वनाम्नामर्थाः कथं निर्वाच्याः ? तथाहि—ईश्वरसद्भावे किं प्रमाणमिति ब्रुवाणः प्रतिवक्तव्यः किंशब्दोऽयमाक्षेपार्थो वा कुत्सितार्थो वा वितर्कार्थो वा प्रश्नार्थो वा स्यात्, तत्र यदि प्रथमः पक्षस्तदेश्वरसद्भावे नास्ति प्रमाणमित्युक्तं स्यात्, तथा च सति न प्रतिज्ञामात्रात्साध्यसिद्धिरिति हेत्वादिकं किञ्चिद्वाच्यम्, तच्च भवता नाभ्यधायि तस्मान्न्यूनत्वं दोषः । अत एव न द्वितीयः, ईश्वरसद्भावे कुत्सितं प्रमाणमित्यस्यापि प्रतिज्ञामात्रत्वात् । अपि च साध्यासाधकत्वाद्वा तत्कुत्स्यते भवताऽन्यथा वा, अन्यथा चेदलं तदुद्भावनया, साध्यसिद्धेरप्रत्यूहत्वात् । नापि प्रथमः, प्रमाणञ्च साध्यासाधकञ्चेति व्याघातात् । गौणोऽयं प्रमाणशब्द इति चेन्न, प्रमाणत्वयोगिनि यद्ययं प्रमाणशब्दप्रयोगस्तदा गौणत्वव्याघातः, मुख्यत्वात् । अथ प्रमाणाभासे, तदाऽलं तदुद्भावनया, ईश्वरसद्भावे यः प्रमाणाभासः स कुत्सित इत्यत्र परस्यापि सम्प्रतिपन्नत्वात्, ईश्वरसद्भाव इति विशेषोपादानं च व्यर्थं स्यात्, अन्यत्रापि विषये प्रमाणाभासः कुत्सित एव, साध्यासाधकत्वात् । नापि तृतीयः तथा सति हि वितर्कस्य पक्षान्तरसापेक्षत्वेन पक्षान्तरमपि निर्वचनीयं भवति, ईश्वरसद्भावे किमेतत्प्रमाणमुतान्यदिति, तच्च भवता नाभ्यधायि ततो न्यूनत्वं दोषः ।

नापि चतुर्थः, प्रश्नार्थात्खलु किंशब्दात्कस्यचित्पदार्थस्य जिज्ञास्यमानता प्रतीयते, सा चेह प्रमाणपदसमभिव्याहारात्प्रमाणविषयिणी प्रतीयते, यद्विषयश्च प्रश्नस्त-

---

"मद्दीयमतिचुम्बिनी भवतु कापि कादम्बिनी"त्यादौ विशिष्य शब्दानिर्देश्यस्वरूपानिर्वाच्यत्वा-
र्थकत्वं "कश्चिद्राजेव राजते" इत्यादौ च तद्व्यक्तित्वावच्छिन्नार्थकत्वमपि यद्यपि किमो दृष्टम्, तथापि
तादृशार्थकतायां किम्पदस्यापिचिदन्यतरसमभिव्याहृतत्वनियमात् किं प्रमाणमित्यत्र च तदभावान्न
तद्द्वयं विकल्पितम् । त्वदन्यः को विद्वानित्यादावाक्षेपार्थः, त्वदन्यो विद्वान्नास्तीति प्रतीतेः । न कोऽपी-
त्यर्थप्रतीतेस्तु किम्पदं तद्व्यक्तित्वावच्छिन्न एव शक्तं तत्समभिव्याहारेण तु विद्वदादिपदस्य विद्वदादिभिन्ने लक्ष-
णेति केचित् । कुत्सितार्थः किंगौरित्यत्र, निन्दितो गौरिति प्रतीतेः । वितर्कः प्रयोक्तृगतः सन्देहः, यथा
"किमिन्दुः किं पद्मं किमु मुकुरबिम्बं किमु मुख"मित्यादौ सन्देहालङ्कारोदाहरणे । प्रश्नार्थो जिज्ञासि-
तार्थः । दोष इति । यस्तु प्रथममेव हेत्वादिकमभिधत्ते, स तत्खण्डनेनैव प्रतिबोधनीय इत्याशयः ।
प्रमाणाभासे इति । प्रमाणशब्द इत्यनुषङ्गः । यदि तु कथञ्चित्किंप्रमाणशब्दसमभिव्याहारबलेनेश्व-
रसद्भावबोधकस्य कुत्सितत्वं लभ्यत इति मन्यते, तदा न्यूनत्वे एव तात्पर्यम् । दोष इति । विवक्षित-
संशयालाभादिति भावः ।

सा = जिज्ञासा । प्रमाणविषयिणी = प्रमाणत्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वप्र-

दुत्तरत्वादिनाभिधेयम्, तदयं प्रश्न ईश्वरसद्भावे प्रमाणसामान्यविषयस्तद्विशेषविषयो वाऽभिप्रेतः, आद्यश्चेदीश्वरसद्भावे प्रमाणमित्येवोत्तरमापद्येत, यद्विषयो हि प्रश्नस्तदभिधेयम्, प्रमाणसामान्यविषयश्च प्रश्नः, तच्च प्रमाणशब्देनाभिधीयत एव। अथ द्वितीयः, तथापीश्वरसद्भावे प्रमाणमित्येवोत्तरमापद्येत, यथा प्रश्नवाक्ये प्रमाणशब्दो विशेषपरस्तथोत्तरवाक्येऽपि। कोऽसौ विशेष इति चेन्न, पूर्ववदुत्तरात्, अस्यापि प्रश्नस्य विशेषो विषयः, किंशब्दस्य विशेषशब्देन सामानाधिकरण्यात्, तथा च सति विशेष इत्येवोत्तरं स्यात्। स्यादेतत्—विशेषशब्देन न विशेषमात्रमनिर्द्धारितमत्र विवक्षितं किन्त्वसाधारणी व्यक्तिः, तत्र विशेषशब्दस्य तात्पर्यम्, तस्मात्काऽसावसाधारणी प्रमाणव्यक्तिरिति प्रश्नार्थः, तत्र च तादृश्याः प्रमाणव्यक्तेरभिधानमुत्तरं युक्तं नैवम्विधाः प्रलापा इति। नैतदेवम्, यतोऽत्रापि विशेष इत्येवोत्तरम्, यथा प्रश्नवाक्यगतस्य विशेषशब्दस्य सर्वतो व्यावृत्तस्वरूपायां प्रमाणव्यक्तौ तात्पर्यं तथोत्तरवाक्यस्थितस्यापि; एवञ्च सति यत्र विषये भवदीयस्य प्रश्नवाक्यस्य तात्पर्यं तदेवास्माकमुत्तरवाक्येन प्रतिपादितमिति युक्तमुक्तम्। अथ मन्यसे—किमिह प्रमाणमिति पृच्छतोऽयमभिप्रायः—अत्रार्थेऽनुमानं प्रमाणमितरद्वेति; तत्राप्यनुमानमित्युत्तरमस्माकम्। किं तदनुमानमिति चेत्—अयमपि प्रश्नोऽनुमानमात्रविषय उत तद्विशेषविषय इति विकल्प्य प्रमाणप्रश्नवदुत्तरं वाच्यमिति, अत्र च सङ्ग्रहश्लोकौ—

---

कारिका। किं प्रमाणमित्यत्र किंपदस्योद्देश्यपरत्वात्तादृशस्य च तस्य स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वप्रकारकजिज्ञासाविषयीभूतधर्मप्रवृत्तिनिमित्तकत्वस्यान्यत्र निर्णीतत्वात्। यद्विषयः = यद्धर्मावच्छिन्नविषयः। तद् = तद्धर्मावच्छिन्नम्। प्रमाणसामान्यविषयः = प्रमाणत्वावच्छिन्नविषयः। विकल्पमात्रमिदम्—किंप्रमाणमित्यतः प्रमाणत्वन्यूनवृत्तिधर्मस्यैव जिज्ञास्यत्वप्रतीतेः, नहि प्रमाणत्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकं प्रमाणत्वम्, येन तद्विषयकजिज्ञासा प्रतीयेत, 'सामानाधिकरण्यं हि रूपभेदमपेक्षते' इति प्रागुक्तत्वात्। तद्विशेषविषयः = प्रमाणत्वन्यूनवृत्तिधर्मावच्छिन्नविषयः। विशेषपर इति। यद्यपि किं प्रमाणमित्यत्र प्रमाणत्वावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन वक्तृजिज्ञासितः प्रमाणत्वन्यूनवृत्ति यो धर्मस्तद्वदभिन्नं प्रमाणमिति बोधात्प्रमाणशब्दो न विशेषपरोऽपि तु सामान्यपर एव, तादृशधर्मवदन्तस्य किंशब्दार्थत्वात्। एवञ्च प्रश्नवाक्ये प्रमाणपदसमभिव्याहारेण किमः प्रमाणत्वन्यूनवृत्तिधर्मावच्छिन्नपरत्वेऽपि प्रमाणमित्युत्तरवाक्ये कथं प्रमाणत्वन्यूनवृत्तिधर्मावच्छिन्नबोधः स्यात्, तथापि विशेषपर इत्यस्य स्वसमभिव्याहृतपदस्य प्रमाणत्वन्यूनवृत्तिधर्मावच्छिन्नपरत्वसम्पादक इत्यर्थः। एवञ्च प्रमाणमस्तीत्युत्तरवाक्येऽपि प्रमाणशब्दः स्वसमभिव्याहृतपदस्य तथात्वसम्पादकः किन्न स्यात्?। किम्पदस्थले एवैषा सरणिरिति चेत्। एतदेव कुतः? प्रष्टुस्तथा तात्पर्यादिति चेत्तत्किमिच्छाविशेषात्मकं तात्पर्यमुत्तरयितुस्तथा पाणिपिहितम्। प्रयोक्तृसांव्यवहारिकता न पर्यनुयोक्तव्येति चेत्तत्किं वयं न प्रयोक्तार इति भावः। इदन्तु बोध्यम्—स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन जिज्ञासितानां धर्माणामनन्तत्वात्तेषु शक्तिग्रह एवासर्वज्ञस्य न सम्भवति, न च तादृशोद्देश्यतावच्छेदकत्वेन जिज्ञासितत्वेन तेषामनुगमः; नहि तादृशजिज्ञासितत्वानुगमेन तेषामनुगमो जनयितुं प्रमापयितुं वा शक्यते, तेषामनुगमस्याभावादेव, अत एव तादृशजिज्ञासितत्वानुगम एव तेषामनुगम इति न युक्तम्, नहि घटत्वघटयोर्भेदे घटत्वानुगम एव घटानुगम इत्यमन्दोऽध्यवस्यति। विस्तरेण च रीतिरेषा भूयः प्रागावेदिता। वस्तुतस्तु स्वरूपसम्बन्ध-

यथाविधं यं विषयं निजस्य प्रश्नस्य निर्वक्ति परो ययोक्त्या ।
वाच्यस्तथैवोत्तरवादिनापि तयैव वाचा स तथाविधोऽर्थः ॥१॥
प्रश्नस्य यः स्याद्विषयः स वाच्यो वाचा तया चैष भवेन्निरुक्तः ।
इदं त्वयाप्यास्थितमेतयैव गिरा स्वपृच्छाविषयस्य वक्त्रा ॥२॥

प्रश्नार्थाच्च किंशब्दाज्जिज्ञासाविषयताऽर्थस्य प्रतीयते, जिज्ञासा च ज्ञातुमिच्छा, इच्छा च नाज्ञाते भवति, अतिप्रसङ्गात्, तस्मादीश्वरविषयं प्रमाणं ज्ञातुमिच्छता तत्र स्वज्ञानमिच्छाकारणीभूतं वक्तव्यम्, तद्यथार्थं वा स्यादयथार्थं वा, यथार्थं चेत्तर्हि तेनैव ज्ञानेन स्वकीयो विषयः प्रमाणमुपस्थाप्यते, विषये प्रमाणप्रवृत्तिमन्तरेण तदीययथार्थत्वस्य वक्तुमशक्यत्वात्, तेनापि प्रमाणेन स्वगोचर ईश्वरसद्भाव उपस्थाप्यत इत्यनायासेनैव सिद्धोऽस्माकमीश्वरसिद्धिमनोरथः । अथायथार्थं तत्, तत्रास्मिन्नयथार्थज्ञानविषये यद्यस्माभिरयथार्थमेव ज्ञानमुत्पादनीयमिति भवतः पृच्छतो वाञ्छितं तदा कथं स्वाधीनेऽर्थे परापेक्षा, भवानेवायथार्थज्ञानोत्पादनकुशलो यथैकं तत्र मिथ्याज्ञानमजीजनत्, तथा परमप्युत्पादयतु, वयं पुनर्यथार्थज्ञानस्योत्पादयितारो मिथ्याज्ञाने सर्वथैवाकृतिनः किमिह नियुज्येमहि । अथ मदीयस्यायथार्थज्ञानस्य यो विषयः स मदीययथार्थज्ञानविषयो भवता क्रियतामिति त्वदीयं वाञ्छितं तदा व्याघातादीदृश्यर्थे भवतः प्रवृत्तिरेवानुपपन्ना, शुक्तिका रजतत्वेन मम यथार्थज्ञानविषयो भवत्वित्येतदर्थं प्रेक्षावान् कथङ्कारं प्रयतेत, येन रूपेणायथार्थज्ञानविषयत्वं तेनैव रूपेण यथार्थज्ञानविषयत्वे व्याघातात् । अथ मन्यसे—स्वसिद्धान्तमनुसन्धानेन भवता यथार्थज्ञानं तत्रोत्पादनीयमतस्तदर्थं भवाननुयुज्यत इति । मैवम्, य ईश्वरसद्भावविषयो भवता प्रमाणाभासः प्रमाणतया भ्रान्त्या प्रतीतस्तस्य प्रमाणत्वमस्माभिर्व्युत्पादनीयमिति नास्माकमीदृशः

---

विशेषाद्यात्मकं तादृशोद्देश्यतावच्छेदकत्वमेव नानुगतमिति तेनानुगमो दूरोत्सारितः । स्वत्वस्य चानुगमे जिज्ञासितधर्मावच्छिन्नप्रतीकिम्प्रमाणमित्यतो घटत्वाद्यवच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्वेन विधेयतावच्छेदकधर्माणामस्यापत्तिं को वारयिता, अननुगमे तु स्वसमभिव्याहृतपदार्थतावच्छेदकत्वेन बुद्धिविषयतावच्छेदकत्वानुगमो न शङ्कयापि चुम्बितः । एतेन सर्वनाममात्रस्य शक्तिग्रहोऽपास्तनीयः, बुद्धिसामान्यविवक्षायाञ्च घटेऽस्ति पलक्षितधर्मावच्छिन्ने हि तच्छक्तिः, तादृशधर्माणामासङ्ख्येयत्वमेव, तत्तद्बुद्धिविवक्षायान्तु तद्विषयतावच्छेदकतमानयेत्यादौ पटाद्यानयनबोधापत्तिर्न शक्या वारयितुम्, एवञ्च स्वप्रयोजकप्रकारत्वस्याप्यननुगमान् सकलतत्पदाद्युपसंस्वस्यानुगमकत्वशङ्का दूरत एवापसरति, तस्या व्युत्पत्त्यनुपपत्त्या न हारेण व्युत्पत्तिग्रहस्यासम्भवदुक्तिकत्वाद्यत्पदद्वयत्वयथोनप्रवृत्तिर्नोपलब्धा, अत एव स्वोच्चारणानुकूलबुद्धिप्रकारावच्छिन्नविषयताकत्वस्वजन्यत्वाभ्यां तदधीनशाब्दधीसम्भवः, परम्पराणां संसर्गतायाः अप्रामाणिकतया तदादिपदप्रकारकबोधविषयकसङ्केतोपगमो नात्राशङ्कनीयः, प्रथमश्लोकार्थे हेतुमाह द्वितीयश्लोकेन प्रकारमुद्रयैव निवेशनीयत्वेनोक्तबाधापत्तेस्तादवस्थ्यादिति । तया = प्रश्नवाक्यानुकारिण्या । स्वपृच्छाविषयस्य = स्वबुभुत्सितार्थस्यैतयैव गिरा वक्त्रा प्रश्नस्येति । भवता इदं = सामान्यशब्दस्य विशेषपरत्वं तत्सम्पादकत्वं वा स्वीकृतमेवेत्यर्थः ।

प्रश्नार्थाच्चेत्यादि । अत्राद्वैतप्रमाणप्रश्नखण्डने तच्छारदायां हेत्वाभाससामान्यलक्षणाक्षेपदोषे च शारदायामुक्तोऽर्थोऽप्यनुसन्धेयः । अथ मन्यस इति । यथार्थेति भावप्रधानं तथा च प्रमाणत्व-

सिद्धान्तः, प्रत्युतेश्वरसद्भावविषयं यत्प्रमाणं भवता प्रमाणाभासत्वेन भ्रान्त्या प्रतीतमस्ति तत्प्रमाणनीयमिति । स्यान्मतम्—ईश्वरसद्भावविषयस्य प्रमाणस्य भवता ज्ञापनमात्रं क्रियतामित्यभिमतं पृच्छतामस्माकं न तु प्रमाणेनाप्रमाणेन वेति विशेषोऽप्यभिमत इति । न, ज्ञापनमात्रस्याप्रमाणज्ञानमादायाप्युपपत्तेः, तत्र स्वाधीने केयं परापेक्षेत्याद्युक्तमनुषञ्जनीयम् ।

स्यादेतत्, येयमीश्वरसद्भावविषयकप्रमाणप्रतीतिरस्माकमुत्पन्ना, सा व्यभिचारिणी सत्या वेति संशयोऽत्रास्माकम्. तेनैकपक्षनिर्धारणाधीनं यदिदं दूषणमवादि भवता, तन्निरवकाशमिति । नैतदस्ति, एवं हि तस्यां प्रतीतौ यथार्थत्वायथार्थत्वसंशयेन तस्याः प्रतीतेर्गोचरो यत्प्रमाणं तस्यापि योऽसौ विषय ईश्वरसद्भावस्तत्र सर्वत्रैव संशयानस्य भवतः प्रश्नोऽयं न तु विप्रतिपन्नस्येति स्यात्. तथा च स्वीकुरु शिष्यभावम्, प्रसादय चिरं चरणशुश्रूषाभिरस्मान्, छेत्स्यामस्ते संशयमिति। विप्रतिपन्ना एव वयम्, आहार्यः संशयोऽस्माकमिति चेत्, तर्ह्यवधृतैककोटय एव वयम्, कार्यानुरोधात्तु संशयमालम्बामह इत्युक्तं स्यात् एवं तर्हि तदेव कोट्यवधारणं भवतां यथार्थं वाऽयथार्थं वेति विकल्प्योक्तयुक्त्या दूष्यम्। एतेन—अनध्यवसायेन तदस्माभिः प्रतिपन्नमित्यपि निरस्तं वेदितव्यम्, व्यभिचारिविषयमव्यभिचारिविषयं वा तदिति विकल्पाभ्यां तस्यापि ग्रस्तत्वात्, "परस्परविरोधे हि न प्रकारान्तरस्थिति"रिति न्यायात् । एवमीश्वराभिसन्ध्यादौ तत्तत्स्थानस्थं सर्वनामान्तरखण्डनमत्र द्रष्टव्यम् ।

इति कवितार्किकचक्रवर्तिश्रीश्रीहर्षकृते खण्डनखण्डखाद्ये
सर्वनामार्थनिरुक्तिर्नाम तृतीयः परिच्छेदः ।

---

ज्ञानमित्यर्थः । एवञ्चोत्तरग्रन्थस्य नासङ्गतिः । तत्र = प्रमाणाभासे भ्रान्त्या प्रमाणत्वेन प्रतीते । अनुषञ्जनीयम् = अनुसन्धातव्यम् ।

व्यभिचारिणी = भ्रान्तिः । कार्यानुरोधात्=विजिगीषुकथानुरोधात् । अनध्यवसायेनेति । किं स्विदिदमित्याकारकं विशिष्य कोटिद्वयमनुल्लिखज्ज्ञानं विशिष्य विरुद्धकोटिद्वयोल्लेखिनः संशयाद्विलक्षणमनध्यवसायाख्यं न्यायलीलावत्यादौ निरूपितम् । तत् = ईश्वरप्रमाणम् । व्यभिचारिविषयं = विशेष्यत्वाभाववद्वृत्तिप्रकारकम्, तथा च भ्रमत्वं लब्धम्, अव्यभिचारिविषयकत्वं च प्रमात्वम् । तत् = अनध्यवसायाख्यं ज्ञानम् । तृतीयविकल्पसम्भावनां निराचष्टे परस्परेति । निर्विकल्पकमीश्वरज्ञानञ्च न भ्रमप्रमाबहिर्भूतम्, भ्रमभिन्नस्वरूपप्रमात्वाश्रयत्वात्, अनित्यप्रमायामेव गुणापेक्षणादिति भावः । सर्वनामान्तरखण्डनप्रयुक्तन्यूनतां परिहरति । एवमिति । इदन्तु बोध्यमित्यादिना रीतिरुक्तैवेति ।

इति श्रीशङ्करचैतन्यभारतीविरचितायां खण्डनशारदायां
सर्वनामार्थनिरुक्तिर्नाम तृतीयः परिच्छेदः ।

❁ ॐ ❁

श्रीशारदायै नमः ।

# खण्डनखण्डखाद्यम् ।

## शारदाख्यव्याख्यासंवलितम्

### तुरीयः परिच्छेदः ।

### भावत्वखण्डनम् ।

ननु तथापि भावात्मके तस्मिन्नीश्वरे विधायकं किञ्चित्प्रमाणं वक्तव्यमिति चेत्, किं पुनर्भावत्वम्? विधित्वमिति चेन्न, पर्यायाप्रश्नात्। स्वरूपसत्त्वमिति चेन्न अभावस्यापि तथाभावात्, प्रतिस्वं व्यावृत्तत्वेनाननुगतत्वापत्तेश्च। अस्तीतिप्रतीतिविषयत्वमिति चेन्न, अभावो घटस्यास्तीतिप्रतीतिसम्भवेनाभावस्यापि तथात्वप्रसङ्गात्, नास्तीतिप्रतीतिविषयत्वेऽपि च घटादेर्भावत्वानिवृत्तेः। अस्तीति चार्थो वा शब्दो वा विवक्षितः, नाद्यः, तस्यानिरुक्तेः। सत्ता तदर्थ इति चेन्न, सामान्यादीनां तदभावादभावत्वापत्तेः। स्वरूपसत्त्वञ्च निरस्तम्। नापि द्वितीयः, अभावोऽस्तीति प्रतीतेरुक्तत्वात्, वर्तते इत्याद्याकारेण च प्रतीयमानस्याभावत्वप्रसङ्गात्। सोऽप्यस्तिपर्याय इति चेन्न, उभयसाधारणैकार्थनिर्वचनमन्तरेण पर्यायत्वस्य प्रतिपादयितुमशक्यत्वात्। यत्रैकस्यास्तिपदप्रयोगस्तत्रैवापरस्य वर्तत इति प्रयोगात्सामान्येन तावत्पर्यायत्वं शक्याधिगममिति चेन्न, प्रमेयाभिधेयादिशब्दानां तथात्वेऽप्यपर्यायत्वात्। यत्रेत्यस्य प्रवृत्तिनिमि-

---

ईश्वरे विधायकं प्रमाणम् = ईश्वरीयसद्भावप्रमाकरणम्। पर्यायाप्रश्नादिति। भवता च भावत्वपर्यायस्यैवोत्तरणात्। स्वरूपसत्त्वं = स्वरूपात्मकं सत्त्वम्। पत्तेश्चेति। भावपदसङ्केतग्रहस्य भावेष्वनुगतप्रतीतिव्यवहारयोश्चानापत्तिरिति भावः। विषयत्वमिति। न च यत्र तादृशप्रतीतिर्न कस्यापि जाता तत्राव्याप्तिः, योग्यत्वनिवेशे चावच्छेदकनिरूपणप्रसङ्ग इति वाच्यम्, अन्ततो भगवत एव तादृशप्रतीतेः सुलभत्वात्। अत्रापि विषयताया विषयभेदभिन्नत्वेनाननुगमसत्त्वे एवाह अभाव इति। तथात्वेति। भावत्वेत्यर्थः। नन्वेतेन रूपेणाभावोऽपि भाव एवेष्यत आह नास्तीति। तथा च घटो नास्तीतिप्रतीतिविषयत्वेन यथा भावोऽभावत्वं न प्राप्नोति, तथाऽस्तीतिप्रतीतिविषयत्वेनाभावोऽपि भावत्वम्, भावाभावासाङ्कर्यादित्यतिव्याप्तिर्दुर्वारैवेति भावः। तदभावादिति। सामानाधिकरण्यसम्बन्धेन तत्रापि सत्तेति तु प्रतिविधास्यते। निरस्तमिति अननुगमेनेति शेषः, तथा च न तदप्यस्तिपदार्थतया शक्यविवक्षमिति भावः। प्रतीयमानस्येति। अस्तीत्याकारेण कस्यापि प्रतीत्यविषयस्येति शेषः। भगवतस्तादृशप्रतीतिमनादृत्येदम्, तदादरे स्वभावेऽतिव्याप्तिरेव, न च भगवतोऽपि भावमात्रेऽस्तीत्युल्लेखो नियतः, क्वचिद्वस्तित्वोल्लेखेनैव सर्वज्ञत्वाक्षतेः। अस्तीत्युल्लेखमनादृत्य शङ्कते सोऽपीति। सामान्येनेति। शक्यतावच्छेदकविशेषमनधिगम्यैवेत्यर्थः। तथात्वेऽपि = एकत्रार्थे प्रयोगेऽपि। प्रवृत्तिनिमित्तेति। असर्वनामस्थले तदीययत्किञ्चिच्छक्यतावच्छेदककत्वेनैव तत्पर्यायत्वं

नार्थत्वे च तन्निर्वचनप्रसङ्गस्तदवस्थः, स एवार्थो भावत्वमुच्यतां किं शब्दोल्लेखगवेषणया। अपरप्रतिषेधात्मकत्वं भावत्वमिति चेन्न, व्यवच्छेद्यासम्भवेन परपदवैयर्थ्यात्, भावाभावयोः परस्परप्रतिषेधात्मकतास्वीकाराच्च । तथापि भावो नास्तीत्यभावप्रतिपत्तिवदभावो नास्तीतिभावस्याप्रतीतिरिति चेन्न, तावताऽपि लक्षणानिरुक्तेः । अपरप्रतिषेधमुखेन प्रतीयमानत्वमेव भावत्वमिति चेन्न, चक्षुरादिभिर्भावत्वाग्रहणप्रसङ्गात्, नहि प्रतीयमानत्वं चक्षुरादिग्राह्यम्, अभावो नास्तीतिप्रतीतेर्निर्विषयत्वप्रसङ्गाच्च, नहीयं भावविषया भवत्पक्षे, परप्रतिषेधमुखेन प्रतीयमानत्वात्, नाप्यभावविषयैव, तन्निषेधार्थत्वात् । नैवंप्रतीतिरेव स्यादिति चेन्न, शाब्द्याः प्रतीतेः सम्भवात्, आकाङ्क्षादिमद्भिः पदैः प्रतिस्वं संसर्गबोधनात्। "अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि" । प्रत्यक्षप्रतीतेस्तथा विवक्षितत्वादयमदोष इति चेन्न, सर्वस्य भावस्य प्रत्यक्षत्वानङ्गीकारात् । सेश्वरपक्षे सर्वं प्रत्यक्षमिति चेन्न, तेन तेषामपरप्रतिषेधात्मकतया ग्रहणे प्रमाणाभावात् । तेषां विधिरूपतया तथैव ग्रहणमिति चेन्न, विधिरूपत्वस्यानवधारणात् । यदपरप्रतिषेधात्मकतया शब्देनापि बोध्यते तत्तावद्भावरूपमिति चेन्न, परपदवैयर्थ्यात्, तस्यागेऽप्यचाक्षुषादित्वापत्तेः। सुरभि चन्दनमित्यादावन्योपनीतभागवत्तत्र चाक्षुषत्वं भविष्य-

---

त्यम्. हरिजनार्दनादिशब्दानामपि यत्किञ्चिच्छक्यतावच्छेदकाभेदेनैव पर्यायत्वादिति भावः। अपरेति। अभावस्तु परप्रतिषेधात्मक इति तद्व्यावृत्तिः। वैयर्थ्यादिति । स्वप्रतिषेधात्मकस्य कस्यचिदभावादिति भावः। अस्तु तर्हि प्रतिषेधात्मकत्वमेव लक्षणमित्यत आह भावेति । गूढाभिसन्धिराशङ्कते तथापीति। तथा प्रतीत्यभावमभ्युपेत्यैव परिहरति तावतापीति। स्वाभावाभावात्मकत्वस्य भावे भवताङ्गीकारादिति भावः। परोऽभिसन्धिमुन्मीलयति अपरेति । अभावत्वानवच्छिन्नमेव यन्निष्ठं प्रमाविषयत्वं तत्त्वमित्यर्थः । नहीति । भावत्वप्रत्यक्षात्पूर्वं नियमेनानुव्यवसायस्याप्रामाणिकत्वेन नोपनीतभानेन निर्वाह इति भावः। ननु स्वरूपसत्त्वमेव चाक्षुषादिगोचरो न तु भावत्वमित्यतः पूर्वोक्तप्रतीत्यभावाभ्युपगमं त्यजन्नाह अभावो नास्तीति। भूतले घटाभावो नास्तीत्यर्थः। निर्विषयत्वं = निर्विधेयताकत्वम्। भवत्पक्षे = उक्तलक्षणाभ्युपगन्तृपक्षे। वस्तुतो हि तत्र भावविधेयतेष्टैव। परनिषेधेत्यादि । परनिषेधात्मनैव वस्तुविशेषावगाहितयाऽनुव्यवसीयमानत्वात् । नापीति । अभावातिरेकवादे स्वभावविधेयतासम्भव इति ध्येयम्। अत्यन्तासतीति। प्रकृते तु सद्विषयकत्वमेवेति भावः। तथा = उक्तलक्षणघटकतया। प्रत्यक्षं तु घटादेर्न कदापि घटाभावाभावत्वादिनेति भावः। सर्वस्येति। न चाभावत्वावच्छिन्नप्रत्यक्षप्रमाविषयतानाश्रयत्वं विवक्षणीयम्, अतीन्द्रियस्यापि भावस्य तथाभावादिति वाच्यम्, अतीन्द्रियाभावेऽतिप्रसङ्गात्, न च तत्रेश्वरीयतादृशप्रत्यक्षविषयता; ईश्वरज्ञाने प्रत्यक्षत्वाभावादिति प्रत्यक्षखण्डने उक्तत्वात्, प्रत्यक्षत्वाविवक्षायां तु भूतले घटाभावो नास्तीति शाब्दप्रमाविषयताश्रयत्वमादायाव्याप्तिः । दोषान्तराणि तु वक्ष्यन्ते। तेन = ईश्वरेण । तेषां = धर्मादीनाम् । शब्देनापीति । यन्निष्ठं प्रत्यक्षशाब्दान्यतरविषयतासामान्यमभावत्वानवच्छिन्नं तत्त्वमित्यर्थः। धर्मादौ च शाब्दविषयता तादृशी प्रसिद्धेति भावः । वस्तुतस्त्वेवमप्यव्याप्तिरेव, धर्माभावो नास्तीति शाब्दविषयताया अभावत्वावच्छिन्नत्वात्, एतच्च स्वयमेव 'अस्यैव भावार्थत्वे' इत्यादिना वक्ष्यति। अभावाभावातिरेकितामते तु न दोषः। परपदेति। यथाश्रुते इदम्। अन्योपनीतभागवदिति। स्मृत्युपनीतसौरभांशवदित्यर्थः। तत्र = प्रतीत्यंशे। चाक्षुषत्वं = चाक्षुषादित्वम्।

तीति चेन्न, तथाविधविषयेण विशिष्टाया बुद्धेर्विषयविशेषणताग्रहे स्वाश्रयोंऽशतः स्यात्, तेनोपलक्षितायास्तथात्वे चाभावविशिष्टभावग्रहार्थस्याभावस्य तथात्वापत्तेः।

यदेवंविधं तद्भावरूपमिति च ब्रुवतैवंविधत्वाद्भावत्वमन्यद्वाच्यम्, अभेदे यदेवंविधं तद्भावरूपमिति नियमानुपपत्तेः, अस्योपलक्षणत्वे चोपलक्ष्यस्यान्यस्य वाच्यत्वात्, अस्यैव भावार्थत्वे चाभावो नास्तीति प्रतीयमानस्य भावस्य भावत्वाभावप्रसङ्गात्। भिन्नञ्च भावत्वं न सम्भवति, षट्पदार्थव्यतिरेकप्रसङ्गात्। यच्च किञ्चिद्भावत्वं

---

उपनीतं विशेषणतयैव भासते इति नियमात्प्रतीतेस्तावदुपनीताया विषयतासम्बन्धेन विशेषणतयैव भानम्, निर्विषयकप्रतीतेस्तु भानासम्भवाद्विषयविशिष्टा तदुपलक्षिता वा सा विशेषणतया भायादिति कल्पद्वयं निरस्यति तथाविधेति। अप्रतिषेधात्मकेत्यर्थः। अंशत इति। विषयविशिष्टस्य विषयवृत्तित्वादित्यर्थः। तेन = अप्रतिषेधात्मकविषयेण। तथात्वे = विषयविशेषणत्वेन ग्रहे। अभावविशिष्टभावग्रहार्थस्य = घटाभाववद्भूतलमित्यादिग्रहविषयस्य। तत्त्वापत्तेः = भावत्वेन ग्रहापत्तेः। अभावविशिष्टभावोपलक्षितप्रतीतेर्विषयतया भावे इवाभावेऽपि विशेषणतातौल्यादिति भावः। इदञ्च पूर्वत्रापि समानम्। वस्तुतस्तु सर्वत्र चाक्षुषादेः पूर्वं प्रतीत्यनुव्यवसायादेरप्रामाणिकत्वमित्येव बोध्यम्। स्वरूपसत्त्वस्यैव चाक्षुषादित्वं न तु भावत्वस्येत्युक्तावपि धर्माभावो नास्तीतिप्रतीतिमादायाव्याप्तिरुक्तैव, अभावाभावातिरेकपक्षे तु प्रतिवक्ष्यते। ईश्वरप्रत्यक्षमादाय प्रत्ययस्थानस्य निराकृतत्वेन यत्र व्यक्तिविशेषे न कदापि प्रत्यक्षशाब्दान्यतरविषयता तत्राव्याप्तेश्च, दोषसन्देहेऽपि लक्षणासङ्गतेः।

नियमानुपपत्तेः = सामानाधिकरण्यानुपपत्तेः, रूपभेदाभावात्। न च भावपदार्थत्वमादाय रूपभेदः, उक्तलक्षणस्यैव शक्यतावच्छेदकत्वे शक्यतावच्छेदकस्यापि शक्यत्वमते भावपदार्थत्वस्य लक्षणासमनैयत्यात्, मतान्तरे च भावपदप्रवृत्तिनिमित्तं भावपदार्थ इत्यसामञ्जस्यात्। भावपदत्वञ्च शक्तया भावत्वविशिष्टविषयकबोधजनकत्वमेवेति लक्षणज्ञानं विना लक्ष्यतावच्छेदकज्ञानासम्भवेनान्योन्याश्रयात्। शब्दत्वोपादानेऽपि लक्षणात्मकशक्यतावच्छेदकज्ञानं विना शब्दशक्यताया ज्ञानासम्भवात्, प्रकृतलक्षणातिरिक्तस्य शक्यतावच्छेदकत्वे तस्य निर्वक्तव्यत्वापातात्। किञ्च यदि लक्ष्यतावच्छेदकात्मकं लक्षणं विशेषणम्, तदा स्वविशिष्टे स्ववृत्तिरंशतः स्वाश्रयत्वमापादयति, यदि तूपलक्षणं तदाह अस्येति। उपलक्षणत्वमिह परिचायकत्वमात्रम्, अविद्यमानत्वगर्भस्य शङ्कितुमशक्यत्वात्। उपलक्ष्यस्य = उपलक्ष्यतावच्छेदकस्य। वाच्यत्वादिति। तथा चानुगतोपलक्ष्यतावच्छेदकनिर्वचने तस्यैव लक्षणत्वमुचितमावश्यकत्वात्। वस्तुतस्तु तस्यापि निर्वचनाशक्यतैव, स्वरूपाणामुपलक्ष्यतावच्छेदकत्वेऽननुगमात्, दुर्ग्रहत्वापत्तेश्चेति। सिंहावलोकितेनाह अस्यैवेति। अभावत्वानवच्छिन्नप्रत्यक्षशाब्दान्यतरविषयतासामान्यकत्वस्येत्यर्थः। अभावोऽतीन्द्रियप्रतियोगिको ग्राह्यः। भावस्य = अतीन्द्रियभावस्य। प्रसङ्गादिति। प्रत्यक्षप्रमाविषयत्वं न तदीयम्, शाब्दप्रमाविषयतासामान्यञ्च नाभावत्वानवच्छिन्नम्। षट्पदार्थेति। अस्त्वतिरिक्तोपाधिर्भावत्वमत आह भिन्नमिति। क्लृप्तपदार्थातिरिक्तमित्यर्थः। तथा चापसिद्धान्तः। वैशेषिकसूत्रे षण्णामेव गणनात् षडित्युक्तम्, वस्तुतस्तु सप्तेति बोध्यम्। अथवाऽभावत्वस्यापि भावत्वेऽनिष्टत्वात् पदार्थीत्युचितं स्यात्। षट्पदार्थीसाधकप्रमाणविरोधप्रसङ्गादित्यर्थः। तत्त्वाभावरूपमेवेति वाच्यम्, प्रतियोग्यनुयोगिविधया सकलप्रपञ्चघटितत्वेनासर्वज्ञदुर्ग्रहत्वप्रसङ्गात्, नहि द्रव्यत्वाद्यवच्छिन्नप्रतियोगिताकभेदानुयोगितावच्छेदकत्वं तादृशभेदे एव, आत्माश्रयापत्तेः, भाव इति विधिमुखप्रत्ययस्य तेनानुपपादनाच्च। तथोक्तम्। न च द्रव्यादिषडन्यतमत्वमेव भावत्वम्,

तत्त्वात्मन्यस्ति नो वा, अस्ति चेत्स्वात्मनि वृत्तिविरोधः, नास्ति चेत्स्वस्यान्यप्रतिषेधमुखेनाप्रतीयमानस्याभावत्वप्रसङ्ग इति । इति भावत्वखण्डनम् ।

## अभावत्वखण्डनम् ।

नन्वेवमीश्वरे प्रमाणानुदर्शनात्तदभाव एवापद्यत इति चेत्, अभावत्वं किमभिधीयते ? निषेधात्मकत्वमिति चेत्, तद्यदि प्रतिक्षेपात्मकत्वम्, तदा भावेऽप्यस्ति, भावाभावयोर्द्वयोरपि परस्परप्रतिक्षेपात्मकत्वस्वीकारात्; अथाभावत्वमेव, तदा न निवृत्तः पर्यनुयोगः । एतेन निषेधमुखेन प्रतीयमानत्वमिति निरस्तम् । भावविरोधित्वमिति चेन्न, सर्वभावविरोधित्वं वा तद्विशेषविरोधित्वं वा, नाद्यः, असिद्धेः, नहि घटाभावो भूतलादि विरुणद्धि । नापि द्वितीयः, भावानामपि केषाञ्चित्तथाभावात् । अथ सहानवस्थानं विरोधो विवक्षितः, स भावानां नास्तीति चेन्न, गोत्वाश्वत्वादौ तस्यापि

---

अत एव नाभावभिन्नत्वं भावत्वम्, अभावत्वस्य भावभिन्नत्वरूपत्वे अन्योन्याश्रयाच्च । सप्तपदार्थीसाधकप्रमाणं तु "सप्तपदार्थीनियमसाधनानि च कथं परिपन्थीनि न स्यु"रिति प्रत्यक्षखण्डनपङ्क्तिशारदायां प्रागुपवर्णितम् । नन्वेकदेशिनं प्रति नापसिद्धान्तो दोष इति चेत्तथाप्यखण्डोपाधित्वेऽन्योन्याश्रयस्य भूयो निवेदितत्वात् । अभावत्वस्याखण्डोपाधित्वं त्वशक्यशङ्कमेव, अभाव इति नञ्समस्तशब्दमहिम्ना तस्य सखण्डस्यैवानुभवात्, अतएवात्यन्ताभावत्वसंसर्गाभावत्वयोरखण्डोपाधितां तार्किका अपि नोरीकुर्वते । एतेन—सत्ताभानविरोधिप्रकारशून्यत्वं भावत्वम्, सामान्यत्वादिकं न सत्ताभानविरोधीति सामान्यादावारोपिता सत्ता भासते, प्रागभावत्वादिकञ्च सत्ताभानविरोधि, यन्निष्ठतया यस्मिन् धर्मे भासमाने सत्ताप्रकारिका धीर्नोदेति तस्यैव तत्र सत्ताभानविरोधित्वादित्यपि—निरस्तम्, शून्यत्वस्यात्यन्ताभावरूपतया भावभिन्नत्वरूपाभावत्वघटिततया भावत्वप्रवेशेनान्योन्याश्रयात्, एवं विरोधित्वस्याप्यभावत्वघटिततया दोषः । न च समवायसामानाधिकरण्यान्यतरसम्बन्धेन सत्तैव भावत्वम्; जात्यादौ सत्प्रतीतेर्द्रव्यादितोऽविशिष्टत्वेन संसर्गभेदेनोपपादनासम्भवात्, घटपटयोः सामानाधिकरण्येऽपि वैशिष्ट्यबुद्ध्यदर्शनेन सामानाधिकरण्यस्यासम्बन्धत्वाच्च, जातिव्यक्त्योर्भेदाभेदस्यान्यत्र व्यवस्थापितत्वेन परतोवक्ष्यमाणदिशा च समवायस्यालीकत्वाच्च । अत एव—समवायसम्बन्धनिरूपकत्वमेव भावत्वम्, निरूपकत्वञ्च प्रतियोगितानुयोगिताऽभेदान्यतमेन, समवायसङ्ग्राहय तृतीयः सम्बन्धः, न चाभावस्यापि कुतो न तथात्वम्; ध्वंसस्य समवेतत्वे समवायिकारणनाशान्नाशापत्तेः, घटोन्मज्जनापत्ते र्न नङ्क्ष्यतीति तु न वाच्यम्, यतो न प्रयोजनक्षतिभयेन सामग्री कार्यं नार्जयति, तस्मात्तस्यासमवेतत्वमेवेत्यपि—नाशङ्कनीयम्, अभेदे निरूप्यनिरूपकभावस्याप्रामाणिकत्वाच्च, निरूपकतावच्छेदकानां बहुत्वेन प्रत्येकमिलितविकल्पानुपपत्तेश्च । सर्वलक्षणसाधारणं दूषणान्तरमाह यच्चेति । ज्ञेयत्वादौ घटाभावादौ च दोष एवात्माश्रय इति भावः । भावत्वस्य भावरूपत्वमवश्योपेयमनुभवानुरोधादित्याह स्वस्येत्यादि । इति खण्डनशारदायां भावत्वखण्डनम् ।

प्रतिक्षेपात्मकत्वं = विरोधित्वं । विरोधस्यासामानाधिकरण्यरूपतयाऽभावत्वघटितत्वेनात्माश्रये सत्येवाह तदेति । एतेनेति । निषेधघटिततयोक्तविकल्पेनेत्यर्थः । वध्यघातकभावविरोधविवक्षायामाह भावानामिति । मूषकविडालादीनामित्यर्थः । एकेति । सः = विरोधः । तद्विधिव्यापकीभूताभावप्रतियोगित्वं तद्विरोधित्वं विवक्षितमुत तद्विध्यभिन्नाभावप्रतियोगित्वम्, तत्राद्ये आह भेदेइति । एकविध्यन्यनिषेधयोर्भेदे । भावभेदयोः = भावविशेषयोः = गोत्वाश्वत्वयोः । द्वितीयं

भावात्। एकविधावन्यनिषेधः स इति चेन्न, भेदे भावभेदयोरेव प्रसङ्गात्। एकविधिरेवान्यनिषेधः स इति चेन्न, निषेधस्याभावार्थत्वे भावार्थत्वे चासिद्धेः। नास्तीति प्रतीयमानत्वमिति चेन्न, घटाभावो नास्तीति घटस्य तथाप्रतीयमानतयाऽभावत्वापत्तेः, अस्तीतिभावत्वनिरुक्तौ यदुक्तं दूषणं तदापत्तेश्च। प्रतियोगिनिरूपणाधीननिरूपणत्वमिति चेन्न, प्रतियोगिनः परार्थत्वेऽतिप्रसङ्गात्, विरोध्यर्थत्वे तदनिरुक्तेः, असदर्थत्वे नञर्थस्यासिद्धेः, अतीतानागतज्ञानादौ विषयादिनाऽतिप्रसङ्गात्। यच्च किञ्चिदभावस्य लक्षणमुच्यते, स भावोऽभावो वा स्यात्, नाद्यः, भावस्याभावानाश्रितत्वात्, विषयिधर्मेण च कथमपि तथात्वे तन्निर्वाच्यं स्यात्। अन्यदेव तद्वदिति चेन्न तद्वदभावस्याभावत्वे स्ववृत्तेर्भावत्वे च व्याघातात्। न द्वितीयः, तस्यात्मनि वृत्तौ विरोधापत्तेः, अवृत्तावव्यापकत्वप्रसङ्गादिति। प्रतिक्षेप्यविशिष्टमेव यत्प्रतिभाति, सोऽभाव इति चेन्न,

---

शङ्कते एकेति। असिद्धेरिति। आद्ये आत्माश्रयः, द्वितीये घटाभावस्य घटविध्यभिन्नत्वासम्भवाद्सम्भवः। विरोधिलक्षणया च निषेधपदेन भावविवक्षा। भावेऽतिप्रसक्तिस्तु नोक्ता, तत्पदेन विशिष्य तत्तद्भावस्यैव विवक्षितत्वात्। एवञ्च लक्ष्योऽपि विशेष एवेत्यन्यत्। यदुक्तमिति। नास्तीत्युल्लेखविषयत्वं वा विवक्षितम्, अभावत्वाश्रयतया प्रमविषयत्वं वा, आद्ये घटो न वर्तत इत्याद्युल्लेखविषये केनापि नास्तीत्यनुल्लिख्यमानेऽभावविशेषेऽव्याप्तिः, द्वितीये स्वात्माश्रयः, प्रतीतिघटितत्वेनाचाक्षुषत्वज्ञानेऽपि। प्रतियोगिनः = प्रतियोगिशब्दस्य। ह्रस्वत्वदीर्घत्वादेरपि परग्रहाधीनग्रहविषयत्वात्,। तदनिरुक्तेरिति। असामानाधिकरण्यस्य गोत्वाश्वत्वादिसाधारणत्वात्, अभावस्य प्रतियोगित्वाभ्यां घटितत्वाच्च, अत एव तदभावविरहात्मत्वं न विरोधः, अभावबोधस्य विषयानवस्थानप्रसङ्गात्। अत एव तदभावग्रहविरोधितावच्छेदकविषयताश्रयत्वमपि न। स्वरूपसम्बन्धविशेषत्वेऽखण्डोपाधित्वे वाऽऽत्माश्रयान्योन्याश्रयौ सुप्रतीतौ। अधिकं तु प्रागेव तत्र तत्रोक्तम्। असिद्धेरिति। नञ्समभिव्याहृतसच्छब्देनाभावप्रतियोग्यभिधानादभावत्वस्यैव च निरुच्यमानत्वात्। अतिप्रसङ्गादिति। तत्र सम्बन्धस्य सम्बन्धिनिरूप्यत्वादादिनाऽविद्यमानसम्बन्धिनविषयादेरसत्त्वाज्ज्ञानादिनिरूपणाच्च। विषयिधर्मेण = विषयिनिरूपितेन ज्ञेयत्वादिना, तदादायेति मादाय तन्निरूपितसम्बन्धेऽतिप्रसङ्गो ज्ञेयः। द्रव्यगुणकर्मादीनामभावे वर्तनं न यौक्तिकम्, अन्यथा यावत्। तथात्वे = अभावस्य भावाश्रयत्वे। तस्य द्रव्यत्वापत्तेः। समवायातिरिक्तसम्बन्धेन वृत्तौ नेयमापत्तिरिति चेत्स स्वभाव एव स्यात्, न च तस्य सम्बन्धत्वम्, स्वं न स्वीयमित्यनुभवबाधात्, सम्बन्धिसाक्षात्काराधीनसाक्षात्कारविषयत्वासम्भवाच्च, नहि स्वभावमप्रतीत्य कस्य चित्प्रतीतिर्नामेत्यनिर्वाच्यतैव वस्तुगतिरिति सूचयितुं कथमपीत्युक्तम्। तन्निर्वाच्यं स्यादिति। ज्ञेयत्वादिषु कतमत्तदिति वक्तव्यं स्यादित्यर्थः। अन्यदेव = ज्ञेयत्वादिबहिर्भूतमेव, अभाववृत्तित्वेन तु तत्तुल्यम्, ज्ञेयत्वादिवत्त्वेव क्लृप्तपदार्थान्तर्गतं वा तदनन्तर्गतं वेति त्वन्यत्। तद्वदभावस्य = अभावलक्षणविशिष्टभावस्य, अभावत्वे = अभावत्वाधिकरणत्वे, स्ववृत्तेः = अभावत्वेऽभावत्ववृत्त्यापत्तेः। उपाधित्वपक्षेऽपि स्वस्य स्वापेक्षत्वमायात्येव। व्याघातात् = अभावत्ववति भावत्वस्याप्रामाणिकत्वात्। तस्य = अभावरूपस्याभावलक्षणस्य। प्रतिक्षेप्येत्यादि। स्वप्रतियोग्यविषयकप्रत्यक्षाविषयत्वमित्यर्थः। प्रतियोगिताया विलक्षणायाः प्रविष्टत्वेन संयोगादौ नातिव्याप्तिः। सर्वलक्षणसाधारणदूषणमभिधाय लक्षणविशेषस्य पुनरुत्थापने स्फूर्तिरेव नियन्त्री, न तु विशिष्टपदार्थस्य खण्डना-

प्रतिक्षेपानिरुक्तौ प्रतिक्षेप्यानिरुक्तेरित्यभावत्वखण्डनम् ।

## विशिष्टखण्डनम् ।

विशिष्टशब्दार्थश्च निर्वचनीयः स्यात् । तत्र विशिष्टं विशेषणविशेष्यतत्सम्बन्धेभ्यो भिन्नमभिन्नं वा, नाद्यः, दण्डपुरुषसम्बन्धमन्तरेण दण्डिनोऽन्यस्याप्रतीतेः, दण्डिनमानयेत्युक्ते तदानयनप्रसङ्गाच्च । तत्सम्बन्धेनोपलक्षितत्वात्तथेति चेन्न, अतद्गत उपलक्ष्य-

---

वतारणम्, तस्य शब्दतोऽर्थतो वा सर्वत्र प्रविष्टत्वादितिध्येयम् । प्रतिक्षेपेति । प्रतियोगितेत्यर्थः । अनुपदं हीयं निरस्ता । अभावत्वघटितत्वेनात्माश्रयस्तु स्पष्टत्वान्नोक्तः । अत एव समवेतत्वसमवायित्व-समवायत्वानधिकरणत्वमभावत्वमित्यप्यसाधु, अभावत्वप्रवेशात् । अत एवानुपलब्धिकरणकप्रतीति-विषयत्वमपि न युक्तम् । यत्तु समवायसामानाधिकरण्यान्यतरसम्बन्धावच्छिन्नप्रतियोगिताकसत्ताऽभावोऽभावत्वम्, न च—जातितरत्वेन सत्ताऽभावस्य स्वरूपतो भानासम्भवेनाभावत्वेनैव प्रकारता स्यात्, तस्यापि सत्ताऽभावरूपत्वेन तु सत्ताभावरूपाभावत्वेनैव प्रकारत्वमिति विषयतानवस्थेति—वाच्यम्, स्वरूपत एव सत्तात्यन्ताभावव्यक्तेः प्रकारत्वोपगमादिति, तदसुन्दरम्, अभावोऽभाव इतिवद्भावः सत्ताऽभाववानित्यस्यापि प्रत्ययस्यानापत्तेः, घटो नास्तीत्यादावपि सत्ताऽभावास्फुरणाच्च, सत्ताऽभावस्यैकत्वे सत्ताऽभावेऽव्याप्तेश्च, आत्माश्रयस्यासङ्गत्वात्, अनेकत्वे तु नैकमभावत्वमिति । नापि भावभिन्नत्वमभावत्वम्, भावत्वं स्वखण्डोपाधिरिति नान्योन्याश्रय इति युक्तम्, अभावत्वघटितभेदत्वघटितत्वेनान्योन्याश्रयात्, भेदत्वस्यानुयोगिताविशेषत्वे विशेषस्य प्रतीतिविशेषेणैव निरूप्यत्वेनान्योन्याश्रयात्, तादात्म्यसम्बन्धस्य प्रतियोगितावच्छेदकतायां मानाभावेन तदवच्छिन्नप्रतियोगितानिरूपितत्वमेव विशेष इत्यस्य वक्तुमशक्यत्वात्, तादात्म्यस्यापि भेदविशिष्टान्यत्वरूपतया भेदघटितत्वाच्च, अभावत्वस्याखण्डोपाधित्वे तु दत्तमुत्तरम्, स्ववृत्तिभेदवृत्त्यवृत्तिभ्यामनुपपत्तेश्च । नापि द्रव्यादिषट्कभेदवत्वं तत्; अस्तु तावद्भेदत्वस्य सखण्डाखण्डोपाधित्वनिबन्धनो दोषः, तथापि यदि द्रव्यादिगतषट्त्वसङ्ख्यावच्छिन्नप्रतियोगिताकभेदो विवक्षितः, तदा प्रत्येकं द्रव्यादावतिव्याप्तिः, यदि तु द्रव्यत्वाद्यवच्छिन्नप्रतियोगिताकभेदकूटवत्वं विवक्षितम्, तदा भेदकूटेऽव्याप्तेः, अन्यथाऽऽत्माश्रयात्, नहि सोऽभावो न, येनालक्ष्यः स्यात्, न च समुदायोऽतिरिच्यते । नचैवं प्रत्येकं लक्षणसमन्वयेनैव नाव्याप्तिः, स्वघटितकूटस्य स्वस्मिन्नसम्भवात् । अथाधिकरणभेदेनाभावभेदाद्भेदकूटगतो द्रव्यादिभेदकूटोऽन्य एव, अन्यश्च स ध्वंसादाविति चेदस्त्वेवमभावस्याधिकरणातिरेकित्वासिद्धिः, अनन्ताधिकरणेष्वभावत्वकल्पनायां गौरवोद्भावनस्येदानीमसम्भवात्, तथाऽपि सर्वेषां भेदकूटानां लक्षणत्वेऽसम्भवः, तेषां क्वाप्यवृत्तेः, प्रत्येकं लक्षणत्वे चाननुगमः । भेदकूटत्वेनानुगम इति चेत्तर्हि भेदकूटत्वावच्छिन्नवत्वं न भेदकूट इत्युक्तदोष इत्यादिकं द्रष्टव्यम् । इति खण्डनशारदायामभावत्वखण्डनम् ।

तदानयनेति । त्रितयातिरिक्तानयनेत्यर्थः । त्रितयानयनाभावप्रसङ्गादिति तु भावार्थः । न च सत्यपि तन्तुपटयोर्भेदे पटानयने तन्त्वानयनवद्विशिष्टस्यातिरिक्तत्वेऽप्यानयनं स्यादविनाभावस्य नियामकत्वादिति वाच्यम्, दण्डपुरुषसम्बन्धेभ्यो निष्कृष्य तस्य दर्शयितुमशक्यत्वे भेदासिद्धावभेदस्यैव नियामकताया वक्तव्यत्वात्, अत एव पटोऽपि न विततिविशेषापन्नतन्त्वतिरिक्त उपेयत इति भावः । भेदपक्षे तार्किकाणामपसिद्धान्तोऽपि द्रष्टव्यः, विशेषणविशेष्ययोः सम्बन्धादेव विशिष्टव्यवहारस्य मण्यादौ समर्थितत्वात् । तत्सम्बन्धेन = दण्डसम्बन्धेन । उपलक्षितत्वादिति । विशिष्टस्यैव निरुच्यमानत्वा-

त्वेऽतिप्रसङ्गात्, तद्वतश्चान्यत्वात्। सम्बन्धो हेतुः स च तदधिकरण एवेति चेन्न, सम्बन्धात्तदधिकरणसम्बन्धान्यत्वापत्तेरिति नैष पन्थाः । तत्सम्बन्धिनि तद्व्यवहार इति चेन्न, तस्यापि विशिष्टत्वेनान्यत्वापत्तौ व्यवहारविषयगतविशेषस्य वक्तुमशक्यत्वात्। एवं परस्पराकल्पनायामप्यनवस्थामात्रं न तु व्यवहार्यगतो विशेषः कश्चित्। द्वितीये तु प्रत्येकं दण्डिव्यवहारप्रसङ्गो विशेषाभावात् । न ते प्रत्येकं दण्डिपदार्थाः किन्तु मिलिता इति चेत्, मिलिता इति किं ते च मेलकं चाभिधीयते, उत तेभ्योऽन्य एव कश्चित्, आद्ये प्रत्येकं स एव प्रसङ्गो मेलकेऽप्यधिकः । द्वितीयस्तु प्रतीतिव्यवहारविरोधात्पूर्ववदेव निरस्तः ।

एकज्ञानारूढो वाऽविरलनानाज्ञानारूढो वाऽनेकश्च सम्बन्धश्च विशिष्टपदार्थे

---

द्विशिष्टत्वादिति नोक्तम् । तथा = विशिष्टस्यातिरिक्तस्याप्यानयनम् । अतद्वतः = दण्डसम्बन्धविरहिणः । अतिप्रसङ्गात् = दण्डसम्बन्धरहितानयनप्रसङ्गात् । तद्वतः = दण्डसम्बन्धवतः । अन्यत्वात् । तथा च दण्डपुरुषसम्बन्धानयनाभावप्रसङ्गस्तदवस्थः । सम्बन्धः = विशेषणविशेष्यसम्बन्धः । हेतुः = अतिरिक्तेऽपि विशिष्टताप्रयोजकः । तदधिकरणः = विशेषणविशेष्यवृत्तिः । तथा च सम्बन्धानयने सम्बन्धिनोरानयनमौचित्यावर्जितम् । सम्बन्धात्केवलात् । तदधिकरणसम्बन्धेति । तदधिकरणकत्वविशिष्टसम्बन्धेत्यर्थः । तथा च विशिष्टसम्बन्धानयनस्य न विशेषणादिविषयकत्वसम्भवः, केवलस्तु सम्बन्धो घटादिसाधारण इति न तस्यापि नियामकत्वमिति भावः । नैष पन्था इति । विशिष्टातिरिक्तत्वपक्षो न युक्त इत्यर्थः । तद्व्यवहारः = विशिष्टविषयकव्यवहारः तत्सम्बन्धिनि = विशिष्टघटकविषयकोऽपि । अभेदपक्षस्य वक्ष्यमाणरीत्याऽसम्भवेन भेदपक्षस्यैवालम्बनीयत्वे विशिष्टविषयकव्यवहारत्वे विशिष्टघटकविषयकत्वव्याप्तिमादायोक्तदोषः परिहरणीय इति । तस्य = विशिष्टघटकस्य । विशिष्टत्वेन = विशिष्टसम्बन्धित्वविशिष्टत्वेन । अशक्यत्वादिति । दण्डविशिष्टपुरुषसम्बन्धित्वविशिष्टदण्डादेः दण्डाद्यन्यत्वेन नोक्तव्याप्तिबलादपि विशिष्टव्यवहारे दण्डादिविषयकत्वोपपादनसम्भव इति भावः । ननु विशिष्टविषयकव्यवहारत्वे विशिष्टघटकीभूतविशिष्टघटकविषयकत्वव्याप्तिरप्युपेयेत्यत आह एवमिति । विशिष्टघटकविशिष्टघटकस्यापि विशिष्टत्वेनान्यत्वापत्तेस्तौल्यादिति भावः । इदमुपलक्षणम्, अतिरिक्तत्वपक्षे दण्डी पुरुषो न पुरुष इति प्रतीतेः प्रमात्वापत्तिरपि द्रष्टव्या । द्वितीये इति । अत्र दण्डपुरुषसम्बन्धस्य भूतलावृत्तित्वेन सत्यपि दण्डिनि भूतले दण्डी नास्तीति प्रत्ययप्रसङ्गो विशेषणविशेष्यसम्बन्धस्य स्वानुयोग्याश्रयत्वसंसर्गेण विशिष्टवत्ताव्यवहारनियामकतामुपेत्य न चोदितः । मेलकस्यातिरिक्तत्वमभिमत्य मेलकश्चेत्युक्तम् । अधिकः प्रसङ्गः, मेलकस्यापि चतुर्थस्य विशिष्टपदार्थत्वोपगमात् । निरस्त इति । समुदाय्यतिरिक्तो हि समुदायो न प्रामाणिक इति भावः । न च भेदाभेदपक्षोपगमे नैषां दोषाणामवकाश इतिवाच्यम्, भेदाभेदयोरेकत्र विरुद्धत्वान्, न च रूपभेदेन तत्परिहारः, एवं सत्यनवस्थादिप्रसङ्गादित्यावेदितं "भेदाभेदेनाप्यव्यवस्थसमर्थनं घटपटादिभेदग्राहिप्रत्यक्षादिप्रामाण्य"-मिति पङ्क्तिशारदायां प्रत्यक्षादिवाधोद्धारेऽधस्तादिति ।

आरूढो विषयः । द्वितीयपक्षापेक्षया प्रथमपक्ष एव युक्तः, विशिष्टप्रतीतेरेकस्या एवानुभविकत्वात् । सम्बन्धश्चेति । सामान्यतो विशिष्टपदार्थनिर्वचने यद्यपि संयोगादित्वेन सम्बन्धनिवेशो न युज्यते, सम्बन्धत्वेन निवेशे व्याप्त्याश्रयः, विशिष्टप्रतीतिजननयोग्यत्वं हि सम्बन्धत्वम्, तथाप्य-

इति चेन्न, घटपटाविति बुद्धावारूढौ घटपटौ सम्बन्धश्च घटपटरूपो विशिष्टः स्यात्, घटत्वपटत्वतत्सम्बन्धानां तद्बुद्धावारूढानामभ्युपगमेन सम्बन्धस्यापि तद्बुद्ध्यारोहाभ्युपगमध्रौव्यात्। अन्यथा घटत्वविशिष्टरूपो घटः पटत्वविशिष्टरूपश्च पटः कथमभ्युपगन्तव्यस्तत्र। न च घटपटावित्यपि विशिष्टमेव; स्वतन्त्रयोर्घटपटयोः परस्परासम्बद्धयोस्तत्र व्यवहारात्, न पुनर्यथा दण्डी पुरुषस्तथा घटी पटः पटी घट इति वा तत्र व्यवहारः। न चैकज्ञानारूढतैव तयो र्मन्तव्या, यतो घटपटाविति द्वित्वं तयोस्तद्द्वयानवगाहिना कथं विज्ञानेनावगाह्येतेति प्रत्यभिज्ञाप्रस्तावोक्तान् दोषानाह्वास्यामः। अत एवाविरलनानाज्ञानारूढतापि विशिष्टता निरवकाशा। अथाप्रकाशमानासम्बन्धोऽनेक एकबुद्ध्यारूढस्तथा, न चैवं घटपटौ, तत्कथमुक्तदोषापत्तिरिति चेन्न, अप्रकाशमानोऽसम्बन्धो ययोरित्ययमप्यर्थो विशकलित इति घटत्वपटत्वव्यक्त्याद्विशिष्टमपि तत्र भज्येताविशेषात्। अथ धर्मधर्मिसम्बन्धाः स्वतन्त्राः प्रत्येकबुद्ध्युपारूढास्तथा, न चाभ्युपेत्यैवाह घटपटाविति। सम्बन्धश्च = समवायश्च। तत्र = उक्तबुद्धौ विषयतया। स्वतन्त्रयोरित्यस्यैव व्याख्यानं परस्परासम्बद्धयोरिति। घटीति दण्डिवदेव साधु, "एकाक्षरात्कृतो जातेः सप्तम्याश्च न तौ स्मृतौ" विति निषेधस्य प्रायिकत्वात्। प्रत्यभिज्ञेति। यथा तत्तांशे प्रत्यभिज्ञायाः स्मृतिरूपत्वे इदन्तांशे चानुभवरूपत्वे ज्ञानद्वयात्मकत्वे वा तद्द्वयांशस्य केनाप्यनवगाहनेन तत्तेदन्ताविशिष्टयोरभेदो न सिद्ध्येदित्युक्तम्, तथा द्वयोरेकेनानवगाहने तदीयद्वित्वमपि न सेद्धुमर्हतीति भावः। दोषानिति बहुवचनं तत्र दूषणकलापगतबहुत्वारोपेण। अतएव = परस्परासम्बद्धयोरपि विशिष्टव्यवहारापत्तेरेव। न च यज्ज्ञानं ययोः सम्बन्धविषयकं तत्तयोर्विशिष्टव्यवहारं जनयति, घटपटाविति ज्ञानं तु न घटपटयोः सम्बन्धविषयकम्, तथा चैकज्ञानारूढोऽनेकस्तदीयपरस्परसम्बन्धश्च विशिष्टपदार्थ इति वाच्यम्, तदीयत्वादेस्तद्वृत्तित्वविशिष्टत्वादिरूपत्वेन विशिष्टपदार्थनिरुक्तौ दुरवधारणत्वात्। घटपटसंयोगा इति ज्ञानादपि विशिष्टव्यवहारापत्तेश्च। प्रतियोगितानुयोगितयोरपि भानमपेक्षितमिति चेत्तदवगाहिनमेव समूहालम्बनमादाय तथापि दोषात्। संसर्गतया तदवगाहनमपेक्षितमिति चेत्संसर्गतादुर्वचताया व्याप्तिखण्डनशारदायामुक्तत्वात्। दण्डप्रतियोगिकसंयोगवान् पुरुष इति ज्ञानादपि दण्डविशिष्टपुरुषव्यवहाराच्च। अप्रकाशमानासम्बन्धः = अगृहीतासंसर्गकः। एवम् = अगृहीतासंसर्गकौ। यद्यपि घटपटाविति बुद्धौ घटपटयोःसंसर्ग इवासंसर्गोऽपि न भासते, तथापि तत्पूर्वक्षणेऽसंसर्गग्रहोऽस्त्येव, अन्यथा विशिष्टधीसामग्रीसम्भवात्समूहालम्बनं परिभूय घटपटविशिष्टधीरेव स्यादिति भावः। विशकलितः = अनुयोगिप्रतियोगिविशेषानियन्त्रितः। यस्य येनागृहीतासंसर्गकत्वं तस्य तद्विषयकधीविषयत्वं तेन विशिष्टत्वमित्येवमनुयोग्यादिविशेषमन्तर्भाव्य लक्षणकरणे हि घटत्वस्य घटेन पटत्वस्य च पटेनागृहीतासंसर्गकत्वाद्घटादिरूपविशिष्टविषयकत्वसम्भवः, तदनन्तर्भावे तु घटपटयोः परस्परं गृहीतासंसर्गकत्वे कस्मिन्नप्यंशे तादृशज्ञानं विशिष्टविषयकं न स्यात्। न चास्त्वनुयोग्यादिविशेषान्तर्भावः; पुरुषस्य दण्डेनेव दण्डस्य पुरुषेणापि पूर्वमसंसर्गाग्रहात् दण्डविशिष्टपुरुषव्यवहारवत् पुरुषवान् दण्ड इति व्यवहारस्याप्यापत्तेः। यथैवानुयोगिप्रतियोगिभावग्रहः पूर्वम्, तथैवोत्तरं विशिष्टज्ञानं तद्व्यवहारश्चेति चेदनुयोगित्वादेः पूर्वानुपस्थितस्यापि विशिष्टबुद्धिविषयत्वोपगमात्, अन्यथा प्रकारतयैव तज्ज्ञानापत्तेः, अत एव विशेषणताविशेष्यतयोरपि संसर्गयोः प्रागगृहीतयोरिह नातिप्रसङ्गनिवारकत्वम्। अगृहीतासंसर्गकत्वस्य विशिष्टपदार्थघटितसम्बन्धस्वघटितत्वाच्च। व्यक्त्यादीत्यादिपदं स्थलान्तराभिप्रायेण। भज्येतेति। उक्तज्ञाने विषयतयेतिशेषः। स्वतन्त्रा इति। विशिष्टतापन्नतया तेषां लक्षणे

घटपटौ धर्मधर्मिरूपावित्यनतिप्रसङ्ग इति चेन्न, धर्मत्वस्यैकस्य दण्डादिगुणादिसाधारणस्य वक्तव्यत्वापातात्। सोऽप्येष्टव्य इति चेदिष्यताम्, परं तस्यापि वालुकावद्विशकलितस्योपगन्तव्यत्वेन धर्म्यैव किन्न धर्मः स्यात्। तथाप्रतीत्यभावान्न स्यादिति चेन्न, त्वदुक्तैकप्रतीत्यारोहणस्याविशेषे प्रतीतिरपि तथा किन्न स्यात्। मास्तु धर्मत्वमनुगतम्, तत्तद्रूपादिपदार्थस्वरूपमेव तथा विचित्रं यत्तदेव धर्मिणा सम्बन्धेन च सममेकबुद्ध्युपारूढं विशिष्टं नान्यदिति चेन्न, तेषां स्वरूपाणां भेदेन नानाभूतेषु विशिष्टेष्वनुगता विशिष्टबुद्धिर्न स्यात्। सम्बन्धमपि च तर्हि विलुम्पैव, स्वभावादेव रूपादिकं तथाधियमाधत्ताम्। एवमपि किन्न स्यादिति चेत्तर्हि वराको धर्म्यपि विसृज्यताम्, यथा विना सम्बन्धं विशिष्टबुद्धी रूपादिस्वभावसामर्थ्यात्समर्पिता तथा विना धर्मिणमप्यस्त्विति जितं जैनैः। स्यादप्येवं यदि शुक्ल इत्येतावन्मात्राधीव प्रतीयेत, किन्तु शुक्लः शङ्ख इत्यादिना प्रत्ययेन सामानाधिकरण्योल्लेखिना धर्म्यप्यानीय दीयत इति चेन्न, शङ्खत्वजातेरुपाधेर्वा रूपादेरविरलतादृगवस्थितस्य वा स्वरूपवैलक्षण्यमेव तत्पदेऽभिषिच्यताम्, येन विनाप्यधिकरणं सामानाधिकरण्यव्यवहारः स्यात्। किञ्च नैतावन्मात्रम्, बुद्धिमादाय तदर्थगतवैचित्र्यान्तरखण्डने बुद्धिरेव स्वकारणसामर्थ्यात्तथोत्थिता तत्तद्व्यवहार-

---

निवेशो निष्फल इति नात्माश्रयो देश्य इति भावः। यद्यपि क्वचिद्घटादेरपि धर्मत्वं धर्मित्वञ्च, परस्परं धर्मधर्मिभाववैशिष्ट्यविवक्षायाञ्चात्माश्रयो दुर्वारः, सम्बन्धपदञ्च व्यर्थं स्यात्, धर्मिपदमपि च धर्मविशिष्टार्थकमेव, तथाप्युपेत्याह धर्मत्वस्येति। पातादिति। धर्मत्वं यदि विशेषणत्वम्, तच्च भासमानवैशिष्ट्यप्रतियोगित्वम्, यदि वा वृत्तिमत्त्वम्, विशिष्टपदार्थनिरूपणाधीननिरूपणमेव, अन्यस्वरूपमपि तत्तद्विशिष्टान्यथासिद्धत्वनिरूपकत्वविशिष्टतन्निरूपितव्याप्तिविशिष्टस्वरूपमेव, नित्यरूपादावव्याप्तञ्च। वस्तुतस्तु निर्वचनमात्रमेव विशिष्टपदार्थनिर्वचनायत्तम्। एतेन भासमानवैशिष्ट्यानुयोगित्वरूपविशेष्यतादात्मकं धर्मित्वमप्यपाकृतम्। सोऽपीति। निर्वक्तुमशक्योऽपि धर्मत्वाख्यो धर्मः प्रतीतिसिद्धत्वादुपेतव्य इत्यर्थः। विशकलितस्येति। वैशिष्ट्यानिरुक्तौ धर्मत्वं क्वापि न सम्बध्येत, सर्वत्रैव वा सम्बध्येतेति भावः। तथेति। पुरुषवान् दण्ड इति प्रतीत्यभावान्न धर्मो धर्म इत्यर्थः। एकप्रतीत्यारोहणस्येति। एतावन्मात्रमेव हीदानीं विशिष्टव्यवहारनिदानं न तु वस्तुगत्या धर्मत्ववैशिष्ट्यादिकमपि, तदनिरुक्तेरिति भावः। अनुगतेति। वैशिष्ट्यांशे इत्यादिः। रूपविशिष्टो दण्डो दण्डविशिष्टः पुरुष इत्यादिधियां वैशिष्ट्यांशे एवानुगमदर्शनात्। अनुगतनिमित्ताभावे विशिष्टपदसमयग्रहोऽपि न स्यादित्यपि द्रष्टव्यम्। अभ्युपेत्याप्याह सम्बन्धमिति। तर्हि = स्वभावादेव वैचित्र्याश्रयणे। तथाधियम् = सम्बन्धविषयकधियम्। जैनैः = सौत्रान्तिकवैभाषिकैः। रूपादिधर्ममात्रस्वीकारेणातिरिक्तधर्मिणस्तैरस्वीकारात्। आनीय = विषयीकृत्य। दीयते = सत्त्वेन स्वीकार्यते। शङ्खत्वं जातिर्वोपाधिर्वा रूपादिसाहित्येनैव शुक्लः शङ्ख इति धियमादध्यात्, तथा च रूपादेरपि स्वीकार्यत्वेन गौरवम्, अप्रामाणिकत्वञ्चेत्यभिसन्धाय कल्पान्तरमाह रूपादेरिति। अविरलतादृगनुगतधर्ममात्रं प्रत्यक्षखण्डनशारदोक्तरीत्येत्यभिसन्धाय रूपपरमाणव एव निरन्तरमुत्पन्ना एकज्ञानविषयाः स्थूलोऽयमेको घट इत्यादिव्यवहारहेतव इति बाह्यार्थवादिबौद्धसिद्धान्तात्। किन्तु रूपमात्रपरमाणूनां गन्धादिपरमाण्वन्तरितत्वान्निरन्तरता न सम्भवतीत्यभिसन्धाय रूपादेरित्यादिपदमुपात्तम्। अवस्थितस्य = नैरन्तर्येणोत्पन्नत्वे सत्येकज्ञानविषयस्य, तत्पदे = धर्मिस्थाने। एवं सौत्रान्तिकादिमतमाश्रित्य विज्ञानवादेऽवतारयन्ति किञ्चेति। स्वकारणेति।

प्रसवित्री स्वीक्रियतां कृतमर्थव्यसनेन । तस्मात्—

प्रत्येतव्यस्य वैचित्र्यं प्रत्ययोल्लेखसाक्षिकम् ।
धियं निवेश्य लुम्पद्भ्यो भङ्गं साक्ष्येव यच्छति ॥१॥

यत्तु केनचिदभावस्य स्थाने तन्मात्रधीरभिषिक्ता तत्तस्य परमुचितम् ।

गुरुर्धियमभावस्य स्थाने स्थानेऽभिषिक्तवान् ।
प्रसिद्ध एव लोकेऽस्मिन् बुद्धबन्धुः प्रभाकरः ॥२॥

अपि चैकबुद्ध्यारूढोऽनेकश्च सम्बन्धश्च विशिष्टपदार्थ इति पक्षे योऽयमेवंरूपवैलक्षण्यभाग् विशिष्ट इति कथ्यते सोऽप्येवं विशिष्टोऽविशिष्टाद्वैलक्षण्येन बोध्यमानो ज्ञानमन्तर्भाव्यैव स्यादिति तत्र तत्रापि ज्ञानान्तरनिवेशनेऽनवस्था, क्वचिदनिवेशे तस्याभावादविशिष्टत्वे शेषस्याऽऽमूलमवैशिष्ट्यापातः । तद्योग्यस्तथेति चेत्तर्हि योग्यतापि

---

उत्तरोत्तरज्ञानं प्रति पूर्वपूर्वज्ञानस्य समनन्तरप्रत्ययपदाभिधेयस्य कारणत्वम् । उत्थिता = उत्पन्ना । अर्थव्यसनेनेति । व्यस्यति दूरङ्गमयति श्रेयस इति व्यसनम्, बुद्ध्यैव निर्वाहसम्भवे चार्थस्याप्यभ्युपगम्यमानस्य तथात्वमेव, श्रेयोभूतस्य बुद्धिमात्राभ्युपगमस्यापहस्तकत्वात्, तथाचार्थाभ्युपगमेनेत्यर्थः। अत्राधिकमस्मदीये अनिर्वचनीयतावादे दर्शनसर्वस्वे अवलोकनीयम् । प्रत्ययोल्लेखः प्रत्ययेन विषयीकरणम्, प्रत्ययीयविषयताविशेष इति यावत्, तत्साक्षिकं तदन्यथानुपपत्तिसिद्धं विषयस्य वैचित्र्यं लुम्पद्भ्य इत्यन्वयः । धियं निवेश्य=रूपादिरेव धीविशेषविषयतामासाद्य विशिष्टव्यवहारहेतुरिति मतमाश्रित्य । साक्षी = अनुभवः । रूपविशिष्टं जानामीत्यनुभवो न तु जानामीत्येव वा, रूपं जानामीत्येव वा, तथा च तद्बलाज्ज्ञानस्येव तद्विषयस्यापि विशिष्टस्यातिरिक्तस्य स्वीकारः समुचितो न तु बुद्ध्यैव वा रूपादिसहितया तया वा निर्वाहसम्भव इति भावः । ननु प्राभाकरैरभावव्यवहारो यथा धर्मिमात्रधिया निर्वाह्यते तथा विशिष्टव्यवहारोऽपि धीविशेषेणैव निर्वाह्यतामित्याशङ्क्य दृष्टान्तस्यैवानुभवविरोधादयुक्ततामाह यत्त्विति । केनचित् = प्रभाकरेण । तन्मात्रधीः = केवलधर्मिधीः । केवलाधिकरणं वा तत्कालसम्बन्धो वा स्वप्रकाशरूपं तज्ज्ञानं वाऽभाव इति प्रभाकरमतम्, उचितत्वं बुद्धबन्धुत्वात्, तदाह गुरुरित्यादिना सोपहासम् । एकस्य स्थाने इत्यस्योचितमित्यर्थः । विषयस्थाने बुद्धिमेव निवेशयतो बुद्धस्य "आदित्यबन्धु"रिति प्रसिद्धा सञ्ज्ञा, बन्धुत्वस्य च पारस्परिकत्वादादित्यपर्यायप्रभाकरपदाभिधेयोऽपि बुद्धबन्धुरेव, न परं सञ्ज्ञात एवैवम्, अपि स्वभावस्यातिरिक्तस्यानभ्युपगमसाम्यादपीत्यर्थः । अतिरिक्ताभावानभ्युपगमे धर्मिणि कैवल्यमेव निर्वक्तुमशक्यम्, अभावत्वप्रकारकबुद्धौ विषयतया बुद्धिविशेषानुल्लेखश्च, सप्रतियोगिकत्वनिष्प्रतियोगिकत्वयो विरुद्धयो वस्तुभेदापादकत्वञ्च, रूपभेदेन तयोरविरोधे च तादृशरूपविशिष्टयो भेदस्यैव पर्यवसानमिति भावः । वैलक्षण्येनेति । वैलक्षण्यं ज्ञानघटितमुक्तलक्षणमेव, तद्विशिष्टतयेत्यर्थः । बोध्यमान इति । अन्यथा वैलक्षण्यस्याप्रामाणिकत्वप्रसङ्गादिति भावः । तस्याभावात् = अविशिष्टाद्वैलक्षण्यबोधस्याभावात् । शेषस्येति पूर्वान्वयि । दण्डविशिष्टस्तावद्दण्डाविशिष्टादुक्तलक्षणेनैव विलक्षणः, उक्तलक्षणञ्च तत्र दण्डादिज्ञानघटितम्, तादृशलक्षणविशिष्टश्चायं तादृशलक्षणाविशिष्टेभ्यो विलक्षणतया विशिष्टः, तत्र च लक्षणविषयकज्ञानस्य प्रवेशः, एतादृशज्ञानघटितविशिष्टश्च स्वेतरेभ्यो वैलक्षण्येन विशिष्टः, तत्र च लक्षणविषयकज्ञानविषयकज्ञानस्य प्रवेशः, एवमग्रेऽपीत्यनवस्था, क्वचिद्वैशिष्ट्यानुपगमे तु लक्षणविशि-

तद्विशेषणं वालुकावदसंलग्नाऽतिप्रसज्जिकैवेत्युक्तमावर्तते । प्रथमेकमिति ज्ञानमित्यरुढमित्यादिद्वारैरपि द्रष्टव्यम्, तथाहि—

अविशिष्टाद्विशिष्टस्य वैशिष्टये यदि धी विंशेत् ।
तद्बुद्धिधाराऽविश्रान्तिः स्याद्वाऽऽमूलाविशिष्टता ॥३ इति ॥

विशिष्टनिरासेन च सर्वाणि लक्षणानि निरस्तानीति मन्तव्यम्, यथा गुणाश्रयो द्रव्यमित्यादि । इति विशिष्टखण्डनम् ।

## द्रव्यादिलक्षणखण्डनम् ।

इतोऽपि गुणाश्रयो द्रव्यमित्यसङ्गतम्, तथाहि—कथमेतल्लक्षणमवधारणीयम् ? सङ्ख्यारूपगुणवत्तया रूपादेरपि प्रतीतेः । भ्रान्तिरसाविति चेत्पृथिव्यादौ कथमभ्रान्तिरिति वक्तव्यम् । तत्र बाधकाभावादिति चेत्तुल्यम् । गुणस्य गुणवत्तायां बाधकमस्माभिरवश्यं वक्तव्यम्, निर्गुणा गुणा इति सिद्धान्तादिति चेन्न, रूपादेर्गुणत्वस्यैव निश्चेतुमशक्यत्वात् । सामान्यवानगुण इत्यादिगुणलक्षणयोगात्तन्निश्चय इति चेन्न, अगुण इति लक्षणांशस्याद्याप्यसिद्धेः, सङ्ख्यावत्तया प्रतीतेर्विद्यमानत्वात् । भ्रान्तिरसाविति चेन्न, परस्पराश्रयप्रसङ्गात्, सङ्ख्यावत्तया प्रतीतेर्भ्रान्तित्वे गुणलक्षणसिद्धिस्तत्सिद्धौ च बाधेन भ्रान्तित्वव्यवस्थापनम् । न च हेत्वन्तराद्रूपादेर्गुणत्वसिद्धौ बाधकसिद्धिः; दृष्टान्तस्यापि सङ्ख्यायोगिप्रत्ययाक्रान्तत्वेन प्रसक्तद्रव्यकोटिप्रवेशतया गुणत्वेनासिद्धेः । सङ्ख्यायाः सङ्ख्यावत्त्वेऽनवस्थाप्रसङ्गान्निःसङ्ख्यत्वव्यवस्थितौ दृष्टान्तत्वं भविष्यतीति चेन्न, पृथक्त्वेनापि तस्याः सम्भावितद्रव्यकोटिप्रवेशत्वात् । एवं पृथक्त्वस्यापि सङ्ख्यावत्तयेति ।

---

ष्टस्याविशिष्टेभ्यो वैलक्षण्याभावाद्दण्डविशिष्टोऽपि लक्षणाविशिष्ट इति कथं दण्डविशिष्टोऽसाविति भावः । तद्योग्य इति । एकबुद्धिविषयतायोग्योऽनेकः सम्बन्धश्च विशिष्टपदार्थ इत्यर्थः, तथा च न ज्ञानधारापेक्षा । असंलग्नेति । वैशिष्ट्यानिरुक्तौ योग्यताविशिष्टत्वं न क्वचिन्निर्धारयितुं शक्यम्, निर्धारणे वाऽयोग्योऽपि तथा किन्न निर्धार्येतेति भावः । प्रथमिति । विशिष्टलक्षणे एकत्वज्ञानत्वादिविशिष्टप्रवेशे आत्माश्रयः, एकत्वादिविशिष्टत्वमेकत्वादिज्ञानविशिष्टतामादाय, सा चैकत्वादिज्ञानविषयकज्ञानविशिष्टतामादायेत्यनवस्था चेत्यर्थः । उक्तार्थमेव सङ्गृह्णाति अविशिष्टादिति । दण्डाद्यविशिष्टात् । दण्डादिविशिष्टस्य वैशिष्ट्ये यदि धीर्विशेत् = वैलक्षण्यघटिका यदि धीः स्यात् । विश्रान्तौ स्याद्ध स्याद्वेति । गुणादिपदस्य गुणत्वादिविशिष्टार्थकत्वादिति भावः । इति खण्डनशारदायां विशिष्टखण्डनम् ।

गुणाश्रय इति । समवायेन गुणवत्त्वं लक्षणम्, तच्चोपलक्षणतया, तेनाद्यक्षणावच्छिन्ने द्रव्येऽव्याप्तिर्न देशनीया । उपलक्ष्यतया लक्ष्यतायाश्चावच्छेदकं तु द्रव्यत्वं जातिरिति भावः । बाधकं = अनवस्थारूपम् । अगुण इति । गुणत्वावच्छिन्नप्रतियोगिताकाभावो नेह विवक्षितः, आत्माश्रयापत्तेः, अपि तु रूपत्वाद्यवच्छिन्नप्रतियोगिताकाभावकूटः । कर्मण्यतिव्याप्तिवारणाय तद्भिन्नत्वमपि निवेश्यमित्याद्ययेनादिपदमुपात्तम् । सङ्ख्यावत्तयेति । सजातीयगुणानङ्गीकारे एवानवस्थानमिति हृदयम् । हेत्वन्तरात् = सामान्यवत्त्वे सति द्रव्यकर्मभिन्नत्वात् । पृथक्त्वेनेति । रूपादितः पृथक्त्वस्य सङ्ख्यायां वृत्तेः । एवमिति । तथा च पृथक्त्वमपि न दृष्टान्तः ।

जातीतरानाश्रयोऽकर्मरूपो गुण इत्यपि न, जातिव्यापकत्वात् । जातिमात्राश्रय इत्यर्थ इति चेन्न, अभावाश्रयतया सर्वाव्यापनात् । जातिमात्रभावाश्रय इति चेन्न, उपाधीनामपि तदाश्रितत्वात् । नोपाधीनामाश्रयो रूपादिः किन्तु कथमपि सम्बन्धी, तावतैवानुमानादिप्रवृत्तिरिति चेन्न, उपाधिसम्बन्धं प्रत्यप्याश्रयत्वस्य मन्तव्यत्वात्, अन्यथा यदि किञ्चिद्रूपमत्र नेष्यते तदा सामान्यविशेषानुमानं तत्र न स्यात्, व्यधिकरणयोर्गम्यगमकभावानभ्युपगमात् । तस्माद्यदेतदेव लक्षणं तत्तावन्न जातिरूपम्, तदिदं यदि रूपादौ नास्ति तदानीमस्ति, यद्यस्ति तदा नास्तीति विचित्रेण लगेत्युक्ते न लगति मा लगेत्युक्ते च लगतीति प्रवल्हिकामनुकरोति ।

अपि च, गुणाश्रयो द्रव्यमित्यत्र कश्चाश्रयार्थः । समवायीति चेन्न, गुणत्वादेरपि द्रव्यत्वप्रसङ्गात्, गुणावच्छिन्नस्य समवायस्य गुणत्वेऽपि विश्रान्तत्वात् । गुणः समवेतो यत्र स गुणसमवायीति विवक्षितमिति चेन्न, यत्रेत्यस्याधिकरणार्थस्याद्याप्यनिरूपणेन

---

जातीतरेति । द्रव्यादि जातीतरगुणाद्याश्रय इति तद्व्याप्तिः, अत्र जातीतरयत्किञ्चिदनाश्रयत्वं वा जातीतरत्वावच्छिन्नानाश्रयत्वं वा विवक्षितम्, द्वितीयेऽसम्भवः, जातीतराभावादेर्गुणादौ वृत्यवच्छ्यम्भावात्, अत एवाकर्मरूप इति विशेषणसङ्गतिः । आद्ये आह जातीति । जात्यादीत्यर्थः । जातिमात्रेत्यादि । जातिमत्त्वे सति जातीतरयत्किञ्चिदनाश्रयत्वमित्यर्थः । जात्यादौ सत्यन्ताभावाद्दोषः । यत्किञ्चित्त्वमनुगतं वाऽननुगतं वा, द्वितीये कस्य व्यक्तिविशेषस्योपादानमित्यत्र विनिगमनाऽभावः, आद्ये जातीतरत्वावच्छिन्नानाश्रयत्ववद्दोष इत्याह अभावेति । उपाधीनां = प्रमेयत्वादीनाम् । अधिकरणत्वं द्रव्यस्यैव धर्म इत्याशयेनाशङ्कते नोपाधीनामिति । कथमपि = स्वरूपसम्बन्धेन । अनुमानादिप्रवृत्तिरिति । रूपं प्रमेयमभिधेयत्वादित्यत्र बाधस्वरूपासिद्धिविरह इत्यर्थः । आदिपदेन रूपं प्रमेयत्ववदिति व्यवहारो ग्राह्यः । केवलान्वय्यनुमानानभ्युपगमपक्षे चादिपदमुपात्तम् । किञ्चिद्रूपं = जातीतरभावात्मकम् । सामान्यविशेषः = रूपत्वादिजातिः । न स्यादिति । नयनमात्रग्राह्यत्वादिलिङ्गस्य स्वरूपासिद्धत्वात् । सामान्यानुमानमित्येव तु नोक्तम्, सत्तागुणत्वयोर्जात्यात्मकेन रूपत्वादिनैवानुमितिसम्भवात् । न केवलं प्रमेयत्वादिकमुपाधिमादायैवासम्भवोऽपि तु प्रकृतलक्षणमादायापि, जातिमात्रभावाश्रयत्वस्य जातिमत्त्वे सति जातिभिन्नभावानाश्रयत्वरूपत्वेन विशेष्यदलस्याभावरूपत्वेऽपि विशेषणदलस्य भावरूपत्वात्, जातिभिन्नत्वाच्चेत्याह तस्मादिति । न जातिरूपमिति । नाप्यभावरूपमेवेतिशेषः । विचित्रेणानुकरोतीति सम्बन्धः । उन्मत्तादेरोष्ठस्य वैतत्प्रहेलिकाविषयत्वम्, मकारोच्चारणे ओष्ठसंस्पर्शात् । प्रवल्हिका प्रहेलिकेत्यमरः । जातिभिन्नभावानाश्रयत्वेनैव सर्वत्रातिव्याप्तिवारणात्कर्मभिन्नत्ववज्जातिमत्त्वस्य वैयर्थ्येऽपि प्रमेयत्वतत्सम्बन्धादिकमादायैवासम्भवो द्रष्टव्यः ।

ननु गुणाश्रयत्वमिति लक्षणे न दोषः, गुणादावबाधितसङ्ख्यावत्त्वप्रत्ययानुरोधेन सङ्ख्याया गुणत्वस्य शिरोमण्यादिनाऽनभ्युपगमात्, पदार्थान्तरं हि सा, तथा च गुणादौ नातिव्याप्तिः, न च पृथक्त्वमादाय सा, अन्योन्याभावादेव पृथक्त्वव्यवहारोपपत्तौ तस्यापि गुणान्तरताया अस्वीकारात्, एवञ्च कर्मभिन्नः सामान्यवानगुण इति गुणलक्षणमपि सम्यगेवेत्यस्वरसादाह अपिचेति । समवायिपदं यदि समवायप्रतियोग्यनुयोग्यन्यतरपरं तदाह गुणत्वादेरिति । गुणावच्छिन्नस्य = गुणानुयोगिकस्य । गुणत्वे विश्रान्तत्वात् = गुणत्वादिप्रतियोगिकत्वात् । समवायित्वं समवायानुयोगित्वमेवेत्याशयेनाह गुण इति । तेनेति । नचानुयोगित्वमपि पदार्थान्तरम्, तस्य प्रतीतिविशेषेणैव निरूप्यत्वेनान्योन्याश्रयापत्तेः ।

तेनैव तद्व्याकारानुपपत्तेः । इहेतिप्रत्ययहेतुराधार इति चेन्न, इह शङ्खे पीतिमेति प्रत्ययाच्छङ्खस्य पीतिमाधिकरणत्वप्रसङ्गात् । भ्रान्तिरसौ, यथार्थश्च प्रत्ययोऽत्र विवक्षित इति चेन्न, तदर्थासत्त्वनिरूपणव्यतिरेकेण तदप्रामाण्यस्य बोद्धुमशक्यत्वात्, न चाद्यापोहेति प्रत्ययस्यार्थः प्रतीतो यत्प्रतियोगिकमसत्त्वं तत्र निरूप्येत । पीतत्वं प्रतियोगि तच्च क्वचित्सिद्धमेवेति चेन्न, तस्य प्रमितत्वादेवासत्त्वानुपपत्तेः । तस्य तत्राप्रमितत्वमिति चेन्न, तत्रैस्याधारत्वानिरूपणादिति । एतेन समवायिकारणं द्रव्यमित्यपि

---

इहेतिप्रत्ययेति । प्रत्ययविशेषविषयविशेषावगमयोः परस्पराश्रयत्वे एवाह इहेति । असत्त्वानुपपत्तेरिति । स्वप्रकारकप्रमितिविशेष्ये इत्यादिः । तत्र = शङ्खेऽप्रमितत्वम्, तथा च तत्र निषेधसम्भवः । अत्रेदमपि बोध्यम्, समवायेन गुणवत्त्वमित्यत्र गुणत्वेनैव गुणस्य प्रवेशो न तु रूपत्वादिना, अव्याप्तिप्रसङ्गात्, तत्र च गुणत्वं न रूपादिचतुर्विंशतौ प्रत्यक्षसिद्धैका जातिः, अतीन्द्रियेषु प्रत्यक्षायोगात्, गुणादेरुत्कृष्टगतिमत्त्वे ब्राह्मणादेश्च दोषाद्यभावेऽपि गुणव्यवहाराच्चेति पदार्थतत्त्वनिरूपणे शिरोमणिभिरुक्तत्वात् । न च द्रव्यकर्मान्यसामान्यवद्वृत्तिकारणतावच्छेदकतया गुणत्वजातिसिद्धिः; अप्रयोजकत्वात्, अन्यथा रूपद्रव्यकर्मान्यसामान्यवद्वृत्तिकारणतावच्छेदकतया त्रयोविंशतिगुणगतजातेरपि स्वीकारप्रसङ्गात् । न च गुणपदशक्यतावच्छेदकतया गुणत्वजातिसिद्धिः; गुणपदस्योत्कृष्टगतिमत्त्वादावपि प्रयुज्यमानत्वेन चतुर्विंशतिगुणमात्रगतजात्यसिद्धेः । नचास्तु द्रव्यलक्षणे कर्मभिन्नत्वे सति सामान्यवत्त्वे सति रूपादिराहित्यमिति गुणत्वस्यैव प्रवेशः; एतल्लक्षणलक्ष्यतावच्छेदकं हि नैतल्लक्षणमेव, लक्षणस्य लक्ष्यतावच्छेदकताया भूयो निरासात्, नापि गुणत्वं जातिस्तत्, निरासादेव, तथा च कं धर्मं धर्मितावच्छेदकीकृत्यैतल्लक्षणं ज्ञातव्यम्, सामान्यस्यापि निरसिष्यमाणत्वाच्च, कर्मभेदश्च न गुणगतवैधर्म्यं विना गुणे प्रत्येतुं शक्यः, तच्च न कर्मभेद एव, स्वज्ञाने स्वज्ञानानपेक्षणात्, नाप्युक्तलक्षणमेव, कर्मभेदस्य तत्र प्रवेशात्, नापि लक्षणान्तरमेव, तथासति तस्यैव लक्षणत्वौचित्यात्, तस्यापि दुर्निरूपत्वाच्च, नचान्यतमत्वघटितं तत्, तस्यासर्वज्ञदुर्ग्रहत्वस्य बहुशो निवेदनात् । सामान्याभावनिरासेन कर्मभेदस्य कर्मण्यतिप्रसक्तेश्च । किञ्च कर्मत्वम् ? न तावद्गुणद्रव्यभिन्नत्वे सति सामान्यवत्त्वम्, लक्ष्यतावच्छेदकस्योक्तरीत्यैव निरसनीयत्वात्, धर्मादावपि कर्मव्यवहारात्, भेदज्ञापकवैधर्म्यनिरासस्यापि तुल्यत्वात्, एवं सामान्यसामान्याभावनिरासस्यापि । अतएव नित्यावृत्तिसत्तासाक्षाद्व्याप्यजातिमत्त्वमपि निरस्तम्, कारणतावच्छेदकं कर्मत्वजातौ मानाभावात्, अतएव संयोगविभागोभयासमवायिकारणत्वमपि न तत्, न चैतादृशकारणता विना दुर्निरूपत्वात् । अत एव चलतीतिप्रत्ययासाधारणकारणत्वमपि न तत् । न चैतादृशकारणतावच्छेदकतया कर्मत्वजातिसिद्धिः; कारणत्वप्रतीतौ तत्प्रतीतेस्तत्प्रतीतौ च कारणत्वप्रतीतेरित्यन्योन्याश्रयात् । एतेन द्रव्यत्वजातिरपि निरस्ता, तस्या अपि संयोगादिसमवायिकारणतावच्छेदकतयैव साधनीयत्वात् । एतेन समवायेन जन्यसत्तावच्छिन्नं प्रति द्रव्यत्वेन तादात्म्येन कारणतया कार्यतावच्छेदकतया सत्ताजातिसिद्धिरित्यपि निरस्तम्, कारणतावत्कार्यताया अपि स्वावच्छेदकनिरूप्यत्वेनान्योन्याश्रयाच्च । एतेन जात्यादावतिव्याप्तिवारणाय सामान्यवत्त्वघटितपूर्वलक्षणयोरपि दोष उक्तः, सत्ताया जातित्वासिद्धौ सामान्यवत्त्वनिवेशासम्भवेन जात्यादावतिव्याप्तितादवस्थ्यात् । न च प्रकारान्तरेण सत्ताजातिसिद्धिः, यदाह पदार्थतत्त्वनिरूपणे शिरोमणिः—"सत्ता च नैका द्रव्यगुणकर्मवृत्तिः प्रत्यक्षसिद्धा जातिः, धर्मादीनामतीन्द्रियत्वेन तत्र प्रत्यक्षायोगात्, जात्यादावपि सद्व्यवहाराच्च, न च सच्छब्दशक्यतावच्छेदकतया तत्सिद्धिः, भावत्वस्यैव तथात्वा"दिति । कारणतावच्छेदकग्रहं विना दुर्ग्रहत्वमाह

लक्षणं निरस्तम्, कथं निर्णेतव्यमिदं समवायिकारणमिदं नेति, रूपादौ घटादौ च सङ्ख्यासमवायिकारणत्वयुक्तेस्तुल्यत्वात् । सङ्ख्यैव तु रूपादौ नास्तीति चेत्, घटादौ कथमस्ति, प्रत्ययस्योभयत्र तुल्यत्वादित्युक्तमनुपञ्जनीयम् । द्रव्ये एव सङ्ख्यास्वीकारे तत्सम्बन्धाद्गुणेऽपि तद्व्यवहारोपपत्तौ कल्पनालाघवाद्गुणे सङ्ख्याद्यस्वीकार इति चेत्, विपरीतमेव कुतो न स्यात्, सत्तासामान्याद्यपि च गुणादौ किमर्थमङ्गीक्रियते, द्रव्यद्वारैव तत्र तद्व्यवहारोपपत्तेरिति द्रव्यादिलक्षणखण्डनम् ।

---

कथमिति । तत्सम्बन्धात् = द्रव्यद्वारकसम्बन्धात्स्वसमवायिसमवेतत्वात् । विपरीतमिति । गुणसमवेताऽस्तु सङ्ख्या, द्रव्ये स्वसमवायिसमवायित्वेन तद्व्यवहारोपपत्तेः । ननु द्रव्ये सङ्ख्योपगमे गुणकर्मादावेकेनैव सम्बन्धेन तद्व्यवहारनिर्वाहः, समवायस्यापि स्वरूपेणैव समवेतत्वात्, गुणे सङ्ख्योपगमे तु स्वसमवायिसमवायित्वेन द्रव्ये स्वसमवायिसमवायिसमवेतत्वेन च कर्मादौ तद्व्यवहार इति सम्बन्धगौरवम्, कर्मादिना विनिगमनाविरहश्चेत्यत आह सत्तेति । द्रव्यद्वारा = स्वसमवायिसमवेतत्वेन । वस्तुतस्तु विलक्षणसम्बन्धै नैकाकारप्रतीत्युपपत्तिः, अत एव पदार्थतत्त्वनिरूपणे एकार्थसमवायसम्बन्धेन गुणादौ सङ्ख्यावत्त्वप्रत्ययमाशङ्क्य "विलक्षणाभ्यां समवायैकार्थसमवायाभ्यामविलक्षणायास्तद्वत्ताप्रतीतेरयोगात्, घटत्वादौ चैकार्थसमवायादेकत्वप्रत्ययवद्द्वित्वाद्येकार्थसमवायाद्द्वित्वादिप्रत्ययप्रसङ्गः, एवञ्चैकार्थसमवायस्य विशिष्टबुद्धिनियामकत्वमनुपपन्नमेव, रूपादौ चैकत्वसङ्ख्याया असमवायात्स्वसमवायिसमवेतत्वसम्बन्धेन तस्या रूपत्वादौ प्रतीत्यनुपपत्तेः सम्बन्धान्तरस्यापि कल्पनापाता"दिति । न च सङ्ख्यायाः पदार्थान्तरत्वमते तस्याः समवायेनावर्तमानतया न तत्समवायिकारणत्वमादाय रूपादावतिप्रसङ्ग इति वाच्यम्, अनवस्थाभयेन यथा समवायस्य स्वरूपेणैव वृत्तिरुपेयते, तथाऽपरस्यापि तथैव तस्याः सम्भवेन समवायस्य त्याज्यत्वात्, गुणक्रियादिविशिष्टधीर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वादित्यनुमानस्य समवायसाधनेऽप्रयोजकत्वात्, अन्यत्र क्लृप्तेन स्वरूपेणैव निर्वाहात्, न च समवाय एकः, स्वरूपाणां तु नानात्वमिति वाच्यम्, समवायस्याप्येकताया दुर्निरूपत्वात्, उक्तं हि पदार्थतत्त्वनिरूपणादौ—"समवायो नैको जलादेर्गन्धादिमत्त्वप्रसङ्गात्, न च जले गन्धनिरूपितत्वविशिष्टसमवायाभावान्न दोष इति वाच्यम्, विशिष्टस्यातिरिक्तत्वाभावेन जलेऽपि विशिष्टसमवायसत्त्वात्, तथाविधविशिष्टनिरूपिताधिकरणताया अतिरिक्तत्वे तु किमपराद्धं विभिन्नसमवायै"रिति । विशिष्टस्य प्रकारान्तरञ्च निरस्तपूर्वम् । किञ्चायुतसिद्धयोरेव समवायः, यन्निष्ठाधेयता कालनिरूपिता यदवच्छिन्ना तदुभयञ्चायुतसिद्धम्, न च घटीयरूपादिनिष्ठाधेयतायाः कालनिरूपिताया घटावच्छिन्नत्वं न तु पटाद्यवच्छिन्नत्वमिति समवायसिद्धिं विना सिद्ध्यतीत्यन्योन्याश्रयः । किञ्च समवायस्यातिरिक्तत्वेऽपि गुणादेस्तेन सम्बन्धित्वं तत्स्वभावत्वेति परिभाषामात्रमेव, न च धर्मिग्राहकमानाद्गुणादेरेव समवायः सिद्धः, गुणक्रियाऽभावादिविशिष्टबुद्धेरपि तत्र पक्षीकर्तुं शक्यत्वात् । अभावस्य समवायप्रतियोगित्वे भावत्वप्रसङ्ग इति तु न वाच्यम्, अप्रयोजकत्वात्, अन्यथा सामान्यादेः समवायप्रतियोगित्वेन द्रव्यत्वादिप्रसङ्गात् । अत एव ध्वंसस्य समवेतत्वे समवायिकारणनाशान्नाशप्रसङ्गोऽपि न, अप्रयोजकत्वात्, समवेतानामपि परस्परं वैचित्र्यस्यावश्योपेयत्वादिति । इति खण्डनशारदायां द्रव्यादिलक्षणखण्डनम् ।

## सामान्यखण्डनम् ।

ननु सामान्यार्थ एव कः ? तथाहि—अनुवृत्तप्रत्ययकारणं सामान्यमित्यलक्षणम्, सामग्र्याः सर्वकार्योत्पत्तेस्तया तदेकदेशान्तरैश्च व्यभिचारात्। असाधारणविशेषणात्, अनन्यजातीयप्रयोजकत्वञ्च तदिति चेन्न, स्वसामग्र्यामपि प्रसङ्गतादवस्थ्यात्, भेदप्रतिपत्त्यादावपि प्रयोजकत्वाच्च। एतत्प्रतिपत्तिप्रमाणकत्वमिति चेन्न, स्वसामग्र्यामप्यस्याः प्रमाणत्वात्। एतदेकप्रमाणकत्वमिति चेन्न, अर्थक्रियाभेदादेरपि तत्र प्रमाणत्वात्। एतत्प्रतिपत्तिप्रमाकत्वमिति चेन्न, तद्विशिष्टस्यापि तत्त्वप्रसङ्गात्। तदवच्छिन्नप्रमांशप्रमा-

अनुवृत्तेत्यादि। अनुगताकारताप्रयोजकमित्यर्थः। प्रयोजकत्वं जनकजनकतावच्छेदकसाधारणम्। तयेत्यादि। सामग्र्यां तदेकदेशान्तरस्थादावित्यर्थः। व्यभिचारात् = लक्ष्यतावच्छेदकाभाववद्वृत्तित्वरूपातिव्याप्तेः। असाधारणेति। कारणेऽसाधारणेति विशेषणान्नातिव्याप्तिरिति शेषः। ननु व्यावृत्तत्वरूपमसाधारण्यं सामग्र्यादावक्षतमेवेति कथमतिव्याप्तिपरिहार इत्यत आह अनन्येत्यादि। तत् = असाधारण्यम्, अनुगताकारतातिरिक्ताप्रयोजकत्वे सति तत्प्रयोजकत्वं लक्षणम्। स्वेति। अनुगताकारतेत्यर्थः। तत्सामग्र्यास्तदतिरिक्ताजननादित्यर्थः। अपिना तत्सामग्रीघटकादृष्टविशेषादेः परिग्रहः। प्रयोजकत्वाच्चेति। इयं स्वेतरभिन्ना गोत्वादित्याद्यनुमितौ व्यवहारविशेषे च गोत्वज्ञानस्य जनकत्वेन गोत्वस्य विषयतया जनकतावच्छेदकत्वेनानुगताकारतातिरिक्तप्रयोजकत्वस्यैव सत्त्वादसम्भव इत्यर्थः। एतदिति। अनुगताकारेत्यर्थः। एवमग्रेऽपि। अनुगतमतेर्बाधकं विना जातिसाधकत्वादिति भावः। कारणताकार्यतावच्छेदकतयाऽपि जातिसिद्ध्युपगमेनाव्याप्तिसत्त्वे एवातिव्याप्तिमाह स्वसामग्र्यामिति। अस्याः = अनुगतमतेः। न चानुगतमतेर्जातिविषयकत्वं न तु तद्विषयकप्रमाकरणत्वमित्यसम्भवो नाभिहितः कुत इति वाच्यम्, तादात्म्येन बाधकं विनाऽनुगतमतेरनुगतधर्मनिबन्धनत्वव्याप्यत्वस्यापि सम्भवात्। एतदेकेति। समाप्त्यां यद्यपि लिङ्गतया कार्यमेव प्रमाणम्, अतीन्द्रियघटितत्वाच्च सा न प्रत्यक्षा, न च कदाचिच्छब्दोऽपि तत्र प्रमाणम्, तस्यासार्वत्रिकत्वेन तदभावस्थले सामग्र्यामतिप्रसङ्गतादवस्थ्यात्, तथापि समुदायस्यानतिरिक्तत्वेन तद्घटकानां केषाञ्चित्प्रत्यक्षादिगम्यत्वे कारणसमुदायस्य लिङ्गविधया कार्यमात्रप्रमाणकत्वं नास्तीति भावः। अर्थक्रियाभेदेति। कार्यगतविशेषेत्यर्थः। स चानुगतधर्मावच्छिन्नकार्यतारूपः, आदिना कारणता, विशुद्धयोनिजत्वादिकञ्च। दण्डत्वकपालत्वब्राह्मणत्वादौ न केवलमनुगतमतिः प्रमाणमपि तु घटत्वावच्छिन्नकार्यतातन्निरूपितकारणतायोनिविशेषजत्वादिकमपीति तत्राव्याप्तिरिति भावः। प्रमाणशब्दो न करणव्युत्पन्नोऽत्र विवक्षितोऽपि तु भावव्युत्पन्न इत्यभिप्रायेणाह एतदिति। सामग्र्या अनुगतप्रतीत्यविषयत्वान्न तत्रातिप्रसङ्ग इति भावः। तद्विशिष्टेति। जातिविशिष्टेत्यर्थः। तत्त्वेति। जातित्वेत्यर्थः। गोत्ववतोरपि गौरिति बुद्धिविषयत्वादिति भावः। इदमुपलक्षणम्, जातिसम्बन्धे समूहालम्बनमादायान्यत्रापि चातिप्रसङ्गसम्भवात्। तदवच्छिन्नेति। विषयितया जात्यवच्छिन्नः प्रमांशः प्रमा यत्र तत्त्वम्। जातिविषयकत्वावच्छिन्ना प्रमा जातावेव प्रमा न तु व्यक्त्यादाविति भावः। तदिति। जातीत्यर्थः,। आत्माश्रयादिति भावः। न चानुगतविषयकत्वावच्छिन्नायाः प्रमाया यदंशे प्रमात्वं बाधकाभावे सति तत्त्वं जातित्वमित्यर्थे नात्माश्रय इति वचनीयम्, यैव ह्यनुगतविषयकत्वावच्छिन्ना प्रमा सैव व्यक्तिप्रभृतिविषयकत्वावच्छिन्नापीति व्यक्त्यादेर्जातित्वापत्तेर्दुर्वारत्वात्, विशिष्टस्यातिरिक्तत्वं तु निरस्तपूर्वम्। व्यक्ति-

कत्वमिति चेन्न, तदसिद्ध्यैवासिद्धेः। इयं प्रतीतिर्येन विना नोपपद्यते तत्सामान्यमिति चेन्न, कारणान्तराणामपि तथात्वादिति।

अनुवृत्तं सामान्यमित्यप्यलक्षणम्। किमिदमनुवृत्तत्वं नाम? अनेकाश्रितत्वमिति चेन्न, अवयविना संयोगादिभिश्च व्यभिचारात्। नित्यत्वे सतीति चेन्न, समवायेन व्यभिचारात्, अत एव न बहुवृत्तित्वमित्यपि। असम्बन्धत्वे सतीति चेन्न, अणुभिर्व्यभिचारात्। नित्यत्वे सत्यनेकसमवेतं सामान्यमिति चेन्न, विकल्पासहत्वात्—एतल्लक्षणं नित्यं वाऽनित्यं वा स्यात्, नाद्यः, स्वात्मनि वृत्तिविरोधात्, विशिष्टप्रविष्टमपि हि

---

भेदादेश्च सर्वत्र बाधकत्वाभावेन बाधकाभावे इत्यनेन जातित्वे बाधकाभाव इत्युक्तावात्माश्रयाच्च, अन्यस्थलीयव्यक्तभेदादिविरहस्य सर्वत्र सुलभत्वेनाननुगतेन चानुगतधर्मावच्छिन्नविरहनिवेशासम्भवेन तन्निवेशवैफल्यपरिहाराय प्रकृतस्थलीयव्यक्तभेदादिविरहस्य निवेशनीयत्वे सिद्ध्यसिद्धिव्याघाताच्च, विषयगतानुगतत्वनिरूपणमन्तरेणोक्तलक्षणनिरूपणासम्भवाच्च, निरसनीयं ह्यनुपदं विषयगतानुगतत्वम्। इयमिति। अनुगताकारेत्यर्थः। सामग्र्याः सर्वसम्भव इति न्यायेनाह कारणान्तरेति। कारणेऽसाधारण्यविवक्षायामपि निरास उक्त एव, बाधकाभावस्य निवेशनीयत्वेनोक्तरीत्या दोषश्च, विषयगतानुगतत्वञ्च दुर्वचमिति।

अनेकाश्रितत्वम् = स्वप्रतियोगिवृत्तित्वस्वानुयोगिवृत्तित्वाभ्यां भेदविशिष्टत्वम्। अवयव्यादावनेकाश्रितेऽतिव्याप्तिरित्याह अवयविनेत्यादि। आदिना द्वित्वादिपरिग्रहः। समवायेनेति। न च भूतलसंयुक्तो घट इतिवद्घटसंयुक्तं भूतलमितिप्रतीत्या संयोगस्य द्विष्ठत्वेऽपि कपालसमवेतो घट इतिवद्घटसमवेतं कपालमित्यप्रतीत्या समवायस्य न द्विष्ठत्वमिति कथं तत्रातिव्याप्तिरिति वाच्यम्, कपालद्वयवृत्तित्वमादायैव तत्सम्भवात्, एतच्च समवायस्यैकत्वे चाऽनेकत्वे वा समानम्। ननु समवायनानात्वपक्षे कपालद्वये वर्तमानोऽपि समवायो न बहुकपालवृत्तिरिति बहुवृत्तित्वविवक्षायामदोष इत्याशङ्क्य पटादिप्रतियोगिकतन्त्वाद्यनुयोगिकसमवायेऽव्यतिव्याप्तिरित्याह अत एवेति। समवायेऽतिव्याप्तेरेव। अणवः = परमाणवः, तेषां नित्यानां संयोगेनानेकदिगवच्छेदेन वृत्तेः। समवेतमिति। परमाणूनामसमवेतत्वादनतिव्याप्तिरिति भावः। आकाशमात्मानुयोगिकसंयोगवत् संयोगित्वात्पटवदित्यनुमानबलाद्विभुद्वयसंयोगोपगमे तु तत्रातिव्याप्तिवारणाय संयोगभिन्नत्वमपि निवेश्यम्। न चानेकत्वं यदि यत्किञ्चिदेकभिन्नत्वं तदा नित्यरूपेऽतिव्याप्तिः, एकत्वावच्छिन्नभिन्नत्वं त्वप्रसिद्धमिति वाच्यम्, वृत्तित्वस्थाने समवेतत्वं प्रवेश्यानेकाश्रितत्वघटकानेकसमवेतत्वस्य निर्वक्तव्यत्वात्। इदन्तु बोध्यम्, एवमपि नित्यरूपेऽतिव्याप्तिर्दुर्वारैव, परमाणु र्घटो नेति भेदानुयोगितया घटः परमाणु र्नेति भेदीयप्रतियोगितायाश्च परमाणौ वृत्तेर्नित्यरूपस्य तथात्वात्। न चोक्तभेदयोर्भेदः, भेदेऽपि स्वत्वानुगमे तद्द्वयस्यैव क्रमेण स्वपदेनोपादानसम्भवात्, तदननुगमेऽपि भेदविशिष्टत्वमित्यत्र भेदसामान्यस्यैवोपात्तत्वेनोक्तदोषात्। अत्रापि भेदविशेषस्योपादाने त्वननुगमो जातिमात्रलक्षणे न शोभत इति। दोषान्तराभिधानाय तु विकल्पयति एतल्लक्षणमिति। स्वात्मनीति। विशेषणनित्यतां विना विशिष्टनित्यतानुपपत्त्या विशेषणे नित्यत्वे नित्यत्वेनावश्यं वर्तनीयत्वात्, अनुगतप्रतीत्यनुरोधान्नानित्यत्वोपगमासम्भवादिति भावः। लक्षणस्यानित्यत्वं किं स्वघटकनित्यत्वानित्यत्वप्रयुक्तम्, अथ समवेतानित्यत्वप्रयुक्तम्, उत समवायानित्यत्वप्रयुक्तम्, आहोस्विदनेकपदार्थव्यक्त्यनित्यत्वप्रयुक्तम्, किं वा विशिष्टस्यातिरिक्ततया घटकानां सामान्यस्य चानित्यत्वं विनैवानित्यत्वम्, नाद्यः, नित्यत्वस्य ध्वंसप्रतियोगित्वात्यन्ताभावरूपतया नित्यत्वात्।

नित्यत्वं नित्यमेव । नापि द्वितीयः, सामान्यस्य समवायस्य च नित्यत्वाभावप्रसङ्गात्‌-
आत्मत्वादौ व्यक्त्यभावायत्तस्यापि विशिष्टाभावस्यासम्भवात्, तस्य च कदाचिदसत्त्वा-
नङ्गीकारे तदनित्यत्वस्य वक्तुमशक्यत्वात्, तद्ग्राहिणश्च प्रत्ययस्यैककालिकस्य
मिथ्यात्वेऽविशेषात्सार्वकालिकस्य मिथ्यात्वप्रसङ्गेन सर्वथा तदसत्त्वापत्तेः, एकस्य च
सत्यत्वेऽविशेषात्सर्वसत्यतायां कदाचिदपि तदसत्त्वं नास्तीति । एकदा तत्सम्बन्धेन
तदुपलक्षितस्यान्यदापि विद्यमानत्वात्तथात्वमिति चेन्न, तादृशोपलक्ष्यासम्भवात्,
व्यक्तीनां भेदादित्यनित्यत्वानुपपत्तिरेवेति । एतेन नित्यत्वमन्यत्रापि प्रतिवचनीयमिति ।

---

न द्वितीयतृतीयौ, अपसिद्धान्तप्रसङ्गात्, इत्याह सामान्यस्येति । चतुर्थं आह आत्मत्वादाविति ।
आदिना मनस्त्वादिकम् । व्यक्त्यभावेति । व्यक्त्यनित्यत्वप्रयुक्तस्येत्यर्थः । विशिष्टाभावस्य =
लक्षणात्मकविशिष्टानित्यत्वस्य । असम्भवात् । आत्मादीनां नित्यत्वादिति भावः । घटत्वादिगतं
लक्षणमिदमनित्यमात्मत्वादिगतं तु नित्यमिति न वाच्यम्, तथा सति लक्षणैक्यक्षतेः ।
चरमे आह तस्येति । लक्षणस्येत्यर्थः । तदा सर्वत्र लक्षणपरामर्शः । विशिष्टस्यानित्यत्वोपग-
मेऽपि घटकानां नित्यत्वे तदनित्यत्वं खपुष्पायितमेव, नित्यमनेकसमवेतं सामान्यमितिप्रत्ययो हि
कालविशेषानवच्छेदेनैवोक्तलक्षणवत्तां सामान्येऽवगाहत इति कथं लक्षणस्य कालविशेषावच्छिन्नस्वरूप-
मनित्यत्वम्, नह्युक्तलक्षणस्योकर्त्वा तादृशप्रत्ययस्य भ्रमत्वं शक्यं वदितुम्, तथा सति सर्वथैव सामान्ये
तादृशलक्षणवत्तात्यागप्रसङ्गात्, कालविशेषावच्छेदेन भ्रमेण तदवगाहने हि कालान्तरावच्छेदेन तत्स्वी-
कारः शक्यो न चात्र तथा, तस्मात्तस्य प्रमात्वमेव वाच्यमिति नोक्तलक्षणस्यानित्यत्वमिति भावः ।
तदेतदाह तद्ग्राहिण इति । एकस्य प्रत्ययस्य । सत्यत्वे = प्रमात्वे । उक्तलक्षणानित्यत्वाभिमानग-
त्यजत्वेवाह एकदेति । लक्षणसत्त्वदशायामित्यर्थः । तथात्वं = उक्तप्रत्ययप्रमात्वम्, न तु लक्षणस्य
नित्यत्वनिबन्धनमिति शेषः । तथा च नेदं स्वरूपलक्षणमपि तु काकादिवत्तटस्थलक्षणमिति
भावः । काकादिना यथोक्तगत्वाद्यवच्छिन्नं गृहमुपलक्ष्यते तथा नात्र निखिलसामान्यं केनचिद्धर्मेणा-
वच्छिन्नं शक्यमुपलक्ष्यीकर्तुम्, तादृशधर्मानिरूपणादित्याह तादृशेति । ननु शब्दाश्रयत्वेनाकाशस्य-
रूपमिव निरुक्तलक्षणेन लक्ष्यस्वरूपमात्रमुपलक्ष्यतामित्यत आह व्यक्तीनामिति । युक्तमाकाशस्यैक-
त्वात्स्वरूपेणोपलक्ष्यत्वम्, अनेकेषामनुगमार्थमेवानुगतावच्छेदकापेक्षणात्, प्रकृते तु सामान्यानामनेक-
त्वमेवेति भावः । न च सृष्टिकालावच्छेदेनैव सामान्यत्वावच्छेदेन नित्यत्वे सत्यनेकसमवेतत्वावगाहि-
प्रत्ययस्य प्रमात्वम्, घटत्वादिसामान्यानां प्रलयकालावच्छेदेनानेकसमवेतत्वाभावादिति वाच्यम्,
नित्यत्वं हि कालानवच्छिन्नत्वं कालानवच्छिन्नमेवेति कालानवच्छिन्नघटितविधेयस्य कालविशेषावच्छेदेना-
वबोधकस्य प्रत्ययस्य प्रमात्वं न विश्वसिमः । वस्तुतस्तु नित्यत्वांशस्य नित्यत्वानित्यत्वयोरनुपपत्तौ
तद्घटितलक्षणस्यानिर्वाच्यत्वमिति सरलैव सरणिः । न चैवं नित्यसमा जातिः, धर्मस्य तद्गतत्रूपवि-
कल्पानुपपत्तितः । धर्मिणस्तद्विशिष्टत्वभङ्गो नित्यसमो भवेदिति तल्लक्षणादिति वाच्यम्, दूषणसम-
र्थत्वेन जात्युत्तरत्वानुपपत्तेः, दूषणासमर्थस्यैव तथात्वात् । वैतण्डिकस्य व्यवस्थापनीयाभावेन तं प्रति
व्याघातकत्वासम्भवाच्च । एतेनेति । गगनादेर्नित्यत्वस्यानित्यतायाः कालानवच्छिन्नस्य कालावच्छिन्न-
त्वापत्त्या व्याघातेनासम्भवदुक्तिकतया नित्यताया वाच्यत्वे आत्माश्रयादिति । एतेन—समवेतरहि-
तत्वे सति समवायाभाववत्त्वे वा सति स्वसमवेतत्वस्वभिन्नसमवेतत्वाभ्यां वस्तुविशिष्टत्वं सामान्य-
लक्षणम्, अनित्यात्त्वत्यनित्यसमवेतवृत्तिधर्मवत्त्वं वा, द्रव्यत्वमादायातिव्याप्तिवारणायात्त्वन्तम्, विशे-

इति सामान्यखण्डनम् ।

## विशेषखण्डनम् ।

के चानेन लक्षणेन व्यवच्छिद्यन्ते ? विशेषादय इति चेद्विशेषा एव केऽभिधीयन्ते ? तत्र नित्येष्वेव द्रव्येष्वेव वर्तन्त एव ये ते विशेषा इत्यलक्षणम्, आत्मत्वादिना व्यभिचारात्। नित्यान्तरेऽसत्त्वाच्च तत्सर्वत्र नित्ये वर्तते, विशेषास्तु नैवम्, नित्ये वर्तन्त एवेति नियमादिति चेन्न, प्रतिविशेषमव्याप्त्याऽलक्षणत्वात् । यज्जातीया एवमिति लक्षणार्थ इति चेन्न, जातेरनङ्गीकारात्। जातीयेत्यस्मात्पदादुपाधिरेव तथा विवक्षित इति चेन्न, तस्येतरव्यावृत्तस्याधिगतौ व्यर्थं तदुपजीवि लक्षणमिदम्, तत एव विजातीयव्यावृत्तिप्रतीतेः। इतरव्यावृत्तस्य चानधिगतौ लक्षणस्य दुरवधारणत्वापत्तेः, इतरव्यावृत्ततया तज्जातीयत्वस्याप्रतीतेः। भवतु स एवोपाधिर्लक्षणमिति चेन्न, तस्यानिरुक्तेः। यतो नित्य-

---

त्वमादायातिव्याप्तिवारणाय वृत्त्यन्तमित्यपि—निराकृतम्, नित्यसम्बन्धत्वं हि समवायलक्षणम्, तत्र नित्यत्वस्योक्तरीत्यैव निरसनीयत्वात्, सम्बन्धत्वस्य चानुपदं निरसिष्यमाणत्वात्, समवायस्य चाप्रामाणिकताया अनुपदमावेदितत्वात्, सामान्याभावस्य च निरस्तत्वेन समवेतप्रतियोगिकाभावादिकमादाय द्रव्यादावतिव्याप्तितादवस्थ्यात् । एतेन—सत्ताव्यापकतावच्छेदकपदार्थविभाजकोपाधिमत्त्वं तत्, व्यापकता च समवायेन, अन्यथाऽभावादावतिप्रसङ्गादिति—निरस्तम् । समवायसम्बन्धिसर्वदूषणसद्भावात्, सामान्याभावानादूरे सत्ताव्यापकतावच्छेदकत्वस्य सामान्यत्वेप्यसम्भवेनासम्भवाच्च, द्रव्यात्रिकमात्रवृत्तिसत्ताया अनुपदं निरस्तत्वेन भावत्वरूपायास्तस्या निवेशे च तद्व्यापकतावच्छेदकत्वस्य सामान्यत्वेऽसम्भवेन सामान्यत्वेनैव तस्य निवेश्यत्वे आत्माश्रयाच्चेति । इति खण्डनशारदायां सामान्यखण्डनम् ।

नित्यद्रव्यवृत्तित्वं पृथिवीत्वादावतिप्रसक्तमित्याद्यमवधारणम्, एवमपि नित्यत्वेऽतिप्रसङ्ग इति द्वितीयमवधारणम्, एवमपि बुद्ध्यादावतिप्रसङ्ग इति तृतीयम् तस्य स्वासत्त्वदशायामवृत्तेः तथा च नित्यद्रव्यत्वविशिष्टत्वमर्थः, वैशिष्ट्यं स्वाश्रयाश्रयकालनिष्ठभेदप्रतियोगितानवच्छेदकत्वस्वाश्रयनिरूपितवृत्तित्वस्वावच्छिन्नानिरूपितवृत्तित्वाभाववत्त्वैः, अत्राद्येनानित्यबुद्ध्यादेर्द्वितीयेनावृत्तिगगनादेस्तृतीयेन नित्यत्वपृथिवीत्वादेर्व्यावृत्तिः, आत्मत्वादिनेत्यादिना नित्यबुद्ध्यादिकमपि ग्राह्यम् । नित्यद्रव्यत्वव्यापकाधारतानिरूपितनिरूपकत्वं द्वितीयसम्बन्धेन विवक्षितमित्याशङ्कते नित्यान्तर इति । अव्याप्त्येति । नहि तत्तद्विशेषनिष्ठनिरूपकतानिरूपिताधारता नित्यद्रव्यत्वव्यापिका, एकपरमाणुगतविशेषस्यापरत्रावृत्तेरिति भावः । तादृशनिरूपकतावच्छेदकजातिमत्त्वविवक्षायां विशेषत्वावच्छिन्ननिरूपकतानिरूपिताधारताया नित्यद्रव्यत्वव्यापकत्वान्नोक्तासम्भव इत्याह यज्जातीया इति । जातेरिति । विशेषेष्वित्यादिः । उपाधिरेवेति । अथैवमपि नित्यज्ञानशब्दाभ्यामेवेश्वराकाशयोर्व्यावृत्तिसम्भवेन तत्र विशेषाभावेनोक्तव्यापकत्वक्षतिरेवेति चेदत्राहुः—दिक्कालाकाशादीनां परस्परभेदसिद्धेः प्राक् नित्यज्ञानशब्दयोः कालादिव्यावृत्तत्वासिद्ध्या तन्नेदसाधकत्वासम्भवः, विशेषस्य तु परमाणुभेदः किञ्चित्प्रयोज्यो भेदत्वादिति धर्मिग्राहकमानेन कालादिव्यावृत्तत्वसिद्ध्या तथात्वसम्भव इति । तस्य = तादृशोपाधेः । तज्जातीयत्वस्य = तादृशोपाधेः । अनिरुक्तेरिति । विशेषेष्वनुगतधर्मोपगमे तेनैव तेषां

द्रव्यव्यक्तिषु विशेषव्यावृत्तधीर्योगिनां स विशेष इति चेन्न, स्वरूपधर्मव्यक्तिभेदेष्वपि प्रसङ्गात्, अन्यथा कार्यद्रव्यगुणादिव्यक्तिषु सा तेषां कुतः स्यात्, तास्विव वैधर्म्यान्तरस्य नित्येष्वपि सम्भवात्, विशेषवद्विशेषासम्भवेन लक्ष्यासिद्धिरिति। इति विशेषखण्डनम्।

## सम्बन्धखण्डनम्।

अपि च विशेषादिभ्यो विशेषलक्षणादेर्भेदे कथं तत्र तत्रैव तैर्विशेषादिव्यवहारः क्रियतां नान्यत्र। सम्बन्धो नियामक इति चेन्न, सम्बन्धस्यापि सम्बन्धान्तरेण नियामकत्वेऽनवस्थापातात्, अन्यथा त्वनियमात्, तदनिरुक्तेश्च, तथाहि—कः सम्बन्धशब्दार्थः? समवायादय इति चेत्सत्यम्, किन्तु केन निमित्तेनेति हि प्रश्नवाक्यतात्पर्यम्, प्रतिस्वं व्यावृत्तेन संयोगत्वादिनाऽन्येन वा, आद्येऽनुगतव्यवहारानुपपत्तिप्रसङ्गः, अस्ति चासौ 'इन्द्रियार्थसन्निकर्षोत्पन्नादि प्रत्यक्षम्, नित्या प्राप्तिः समवाय' इत्यादि। न द्वितीयः, तस्यैकस्यासम्भवात्। नियामकत्वं तदिति चेन्न, स्वभावस्यापि भवता नियामकत्वाङ्गीकारात्. न चासौ सम्बन्धः। तथाविधः सोऽपि सम्बन्ध एवेति चेन्न, त्वया सर्वस्वभावनियन्तृताया अवश्याभ्युपगमनीयत्वेन नियामकनिरुक्तिलभ्यसत्त्वाद-

---

व्यावर्तकताया वक्तव्यत्वात्स्वतोव्यावर्तकरूपताहान्यापत्तिरिति भावः। स्वरूपेत्यादि। स्वरूपव्यक्तिधर्मव्यक्तिविशेषेष्वित्यर्थः, तेषामपि व्यावृत्तिधीजनकत्वात्। अन्यथेति। स्वरूपादिविशेषाणां व्यावृत्तिधीजनकत्वानुपगमे। सा = व्यावृत्तिधीः। तेषां योगिनाम्। कुत इति। अनित्येषु विशेषानुपगमादिति भावः। विशेषस्वीकारनिष्फलतामाह तास्विवेति। कार्यद्रव्यादिव्यक्तिष्विवेत्यर्थः। नित्येषु] द्रव्येष्विति शेषः। विशेषवदिति। यथाविशेषे विशेषान्तराभावेऽपि तस्य व्यावृत्तिधीस्तथाऽपरत्रापीति। तदुक्तं शिरोमणिना पदार्थतत्त्वनिरूपणे—"विशेषोऽपि च न पदार्थान्तरम्, मानाभावात्। विनापि व्यावर्तकं धर्मं भवतां मते विशेषाणामिव नित्यानां द्रव्याणामपि स्वत एव व्यावृत्तत्वात्। योगिनोऽतिरिक्तं विशेषमीक्षन्त इति चेदेवं तर्हि त एव सशपथं पृच्छयन्तां किमेतेऽतिरिक्तं विशेषमीक्षन्ते न वे"ति। एवं च परमाणुभेदः परमाणुस्वरूपप्रयोज्य एवेत्युक्तानुमानमतिरिक्तविशेषसाधनेऽप्रयोजकम्। एतेन स्वतो व्यावर्तकत्वमपि लक्षणमपास्तम्, तथात्वे मानाभावात्। अत एव जातिलक्षणदेशैर्यत्र भेदावधारणं न सम्भवति तत्र तत्तद्देशसम्बन्धक्षणानां संयमेन जातेन विवेकजज्ञानेनैव भेदग्रह इति विभूतिपादे योगदर्शनेऽभिधाय विशेषाणामप्रामाणिकत्वमुक्तम्। स्वतो व्यावर्तकत्वञ्च सिषाधयिषानुत्तरस्वविशेष्यकस्वसजातीयेतरभेदानुमितिविषयो यो यस्तद्भेदकृद्धर्मवरूपमसर्वज्ञदुर्ग्रहमेवेति खण्डनशारदायां विशेषखण्डनम्।

विशेषादिभ्यो लक्ष्येभ्यः। भेदे = भिन्नत्वस्याविशेषेऽपि। सम्बन्धस्येत्यादि। असम्बद्धस्य नियामकत्वमसम्भवीति भावः। असौ = समवायादौसम्बन्धत्वेनानुगतव्यवहारः तमेवाह इन्द्रियेत्यादि। सन्निकर्षपदेन सम्बन्धः संयोगादिरुक्तः। अनुगतरूपेण तदविवक्षायां प्रत्यक्षलक्षणाव्याप्तिप्रसङ्गादिति भावः। प्राप्तिः = सम्बन्धः। अत्र संयोगस्यैव समवायस्यैव वा ग्रहणेऽसम्भवस्य नित्यत्वविशेषणवैयर्थ्यस्य वाऽऽपातात्। तस्य = सम्बन्धशब्दप्रवृत्तिनिमित्तस्य। नियामकत्वं = व्यावर्तकत्वं। स्वभावस्येति। अभावादिस्थले इत्यादिः। इदञ्च स्वभावसम्बन्धलक्षणमवतारयितुम्। तथाविधः = व्यावर्तकत्वोपेतः। त्वया = स्थापनावादिना, अनिर्वचनीयवादातिरिक्तेनेति यावत्। अवश्येति। किञ्चन नवञ्च नियामकत्वं व्यावृत्तिधीजनकत्वम्, जनकत्वञ्च नियतवृत्तित्वं, किञ्चिद्व्यावर्तयतीति भावः। सत्त्वादिति। व्यावर्तकत्वं व्यावृत्तिधीजनकत्वम्, जनकत्वञ्च नियकिञ्चिद्व्यावर्तयतीति भावः।

धिकांशासामर्थ्यापत्तेः। नियम्यस्य च स्वस्यानतिप्रसङ्गे नियामकत्ववाचोयुक्त्यनुपपत्तेः, अतिप्रसक्तत्वे च तस्यैव नियामकत्वादतिप्रसक्तेन नियमायोगात्, भूत्वा नियमकरणे च प्रागनियतत्वापत्तेः। एवमन्येनापि जन्यनियमे, अन्यदपि हि यदि पूर्वं घटादिरूपेणानियतमेव घटादि करोति तदा पटाद्यपि तथा कुर्यात् । न घटादित्वे नियन्तृत्वमन्यस्य, किन्तु घटादेः कालविशेषयोगे इति चेन्न, यदि नासौ घटादेःकालविशेषयोगिता नियतेष्यते तदा पटादिकालविशेषयोगमपि तथा कुर्यात्, तस्मात्—

यदि कुर्यादसत्कालानियतं नियतं परः ।
तत्स्यादतिप्रसक्तत्वमन्यथा चानियन्तृता ॥४॥ इति।

कार्यकारणयोः कालभेदान्नियम्यनियामकत्वोपगमे उत्तरोत्तरेण पूर्वपूर्वनियमः किन्न स्यादित्यविनिगम्यत्वापत्तिः।

---

तपूर्वसत्त्वघटितमिति नियामकत्वस्य केवलान्वयित्वपक्षे सत्त्वमेव लक्षणमस्त्वित्यर्थः । ननु तस्य केवलान्वयित्वेऽपि सम्बन्धपदप्रवृत्तिनिमित्तं तदेवोक्तम्, न तु सत्त्वम्, तावन्मात्रेण सम्बन्धपदाप्रयोगात्, अत एव पक्षत्वस्य केवलान्वयित्वेऽपि सिषाधयिषाविरहविशिष्टसिद्ध्यभावस्यैव पक्षपदप्रवृत्तिनिमित्तत्वमुक्तं तार्किकै र्न स्वभावमात्रस्येत्यत आह नियम्यस्येति । सम्बन्धस्य सम्बन्धिनियामकत्वेन स्वभावसम्बन्धस्थले स्वस्यैव स्वनियामकत्वमायाति, परन्तु स्वं यदि व्यावृत्तमेव तदा तद्व्यावर्तकत्वरूपं तन्नियामकत्वं स्वस्मिन्न सङ्गच्छते, व्यावृत्तिमत्तयाऽवबुद्धत्वादेव, अन्यथाऽऽत्माश्रयात् । यदि स्वव्यावृत्तमेव तदाह अतिप्रसक्तत्वे इति । अव्यावृत्तत्वे इत्यर्थः । नियामकत्वात् = व्यावर्तकत्वोपगमात् । जलादिव्यावृत्तस्यैव गन्धस्य जलादितः पृथिवीव्यावर्तकत्वं दृष्टमिति भावः । किञ्चोत्पद्य जन्यस्वभावः स्वात्मानं व्यावर्तयति, अनुत्पद्य वा, आद्ये भूत्वेति । एवं हि द्वितीयादिक्षणे नियामकत्वमायाति । प्रागिति । द्वितीयादिक्षणात्प्रागित्यर्थः । ननु तदा व्यावृत्तिबुद्ध्यविषयत्वरूपमनियतत्वमिष्टमेवेति चेन्न, स्वरूपस्य स्वं प्रतीवान्यं प्रत्यप्यविशिष्टत्वादनियतत्वस्याप्यविशेषाद्वान्यं प्रत्यपि नियामकत्वापातादित्याशयात्, अत एवाजन्यस्वभावस्यापि स्वनियामकत्वमयुक्तम्, विशिष्टबुद्धिजनकत्वस्यैवापाद्यमानत्वेन 'स्वरूपाविशेषेऽपि विशिष्टबुद्धिजनकत्वमुदासीने नास्तीति न तस्य तत्र सम्बन्धत्व'मित्यस्य वक्तुमशक्यत्वात् । अभेदस्तु नियामकत्वे नानुकूलोऽपि तु प्रतिकूल एवेति नेह तस्य विशेषकत्वम् । यदि च नियामकत्वं व्यावृत्तिप्रयोजकत्वम्, प्रयोजकत्वञ्च प्रतीतिसाक्षिकमेव किञ्चित्, तच्च द्वितीयादिक्षणे इवाद्यक्षणेऽपि स्वस्मिन्, तदौदासीनं प्रति तदापादनमनियतनियामकत्वपक्षे सुस्पष्टमेव । प्रसङ्गादाह एवमिति । जन्यनियमे = जन्यजनने । अनुपपत्तिरिति शेषः । तामेव स्फोरयति अन्यदपीति । घटादिरूपेणानियतं = घटत्वादिनाऽविशिष्टम् । कुर्यादिति । न च पटाद्युत्पत्त्यनन्तरं नेदमापादनम्, तदा पटत्वादिरूपविरुद्धधर्माक्रान्तेः, पटाद्युत्पत्तेः पूर्वं तु तत्सामग्र्या पटत्वादिवैशिष्ट्यस्य प्रयोज्यत्वात्, तस्या असद्भावे चेष्टापत्तिरेवेति वाच्यम्, सम्बन्धानिरूपणे पटत्वादिवैशिष्ट्यं तत्प्रयोजकसामग्रीं वाऽऽदाय प्रत्यवस्थानस्याशक्यत्वात्, वैशिष्ट्यासिद्धौ हि सर्वाऽपि सामग्री सर्वस्यैव कार्यस्येति भावः । घटादित्वे = घटत्वादिवैशिष्ट्ये । नियन्तृत्वं = प्रयोजकत्वम् । नियता = घटीयत्वादिना विशिष्टा । तथा = घटादिकालविशेषयोगम् । परः = कारणं यदि असत् = घटत्वादिनाऽविशिष्टं वा कालानियतं = कालविशेषानवच्छिन्नं वा नियतं कुर्यात् = घटत्वादिना विशिष्टं कालविशेषावच्छिन्नं वा कुर्यात्, तदोक्तरीत्याऽतिप्रसक्तिः, अन्यथा = पूर्वं घटत्वादिनाऽवैशिष्ट्यस्य कालविशेषानवच्छिन्नत्वस्य वाऽनभ्युपगमे

प्राचोत्तरस्य नियमे प्राच एव न तेन किम् ? ।
अनाद्यनन्तयो नैवं विनिगन्ता प्रवाहयोः ॥५॥ इति ।

अभूत्वा च करणे व्याघातात् । सम्बन्धिनश्चाधारत्वात्सम्बन्धस्याधेयत्वात्तस्यैव तदाधारत्वानुपपत्तेः, न हि सुशिक्षितोऽपि नटबटुः स्वस्कन्धमारुह्य नृत्यति।

---

तु नियन्तृत्वासम्भवः, प्रागेव नियतत्वात् । किञ्च कारणं कार्यस्य नियामकं कार्यतावच्छेदकधर्मविशेष-
विशिष्टताप्रयोजकमिति यावत्, कार्यप्राग्वर्ति च, एवञ्च किञ्चित्कालभेदाविशेषेऽपि दण्डादेरेव घटत्वादि-
वैशिष्ट्यप्रयोजकत्वं न तु घटादेर्दण्डत्वादिवैशिष्ट्यप्रयोजकत्वमित्यत्र न विनिगमकम्, तदाह प्राचेति ।
उत्तरस्य नियमे = उत्तरगतधर्मविशेषविशिष्टताप्रयोजकत्वोपगमे । तेन = उत्तरेण प्राच एव किञ्च
नियम उपगम्यते । ननु कथमेवं, कारणस्य पूर्वत्वादेव नियामकत्वम्, कार्यस्य चोत्तरत्वादेव नियम्यत्वमत
आह अनाद्यनन्तयोरिति । प्रवाहयोः = कार्यकारणप्रवाहयोः, अनादित्वं सर्वसम्मतमेव, सर्वमुक्ति-
कालानभ्युपगमे चानन्तत्वमपि स्वीकार्यमेव। तथा चानाद्यनन्तत्वाविशेषे कथं पूर्वापरीभावस्य विनिगम-
कत्वम् । अनन्तत्वानभ्युपगमेऽपि चरमकार्यातिरिक्तस्थले विनिगमकाभाव एवानादित्वाविशेषात् ।
ननु प्रवाहयोरनादित्वं न च तयोः कार्यकारणभावः, नचैवं प्रवाहपतितयोरपि स कथम् ? प्रवाहस्यान-
तिरिक्तत्वादिति वाच्यम्, प्रवाहयोस्तत्त्वाभावेऽपि तत्पतितयोः सोऽनुभवबलादेवाभ्युपगन्तव्यः, एवञ्च
बुद्धिवैलक्षण्यादेव प्रवाहप्रवाहिणोरपि भेदाभेद एवेतिचेन्न, सामान्यधर्मावच्छिन्नयोः कार्यकारणभावोऽव-
श्योपेयः, अन्यथा घटविशेषं प्रति रासभादेरन्यथासिद्धत्वस्य निरूपणासम्भवेन कारणत्वापातात्,
एवञ्च घटादिजातीयप्राक्क्षणे दण्डादिजातीयस्यैव दण्डादिजातीयप्राक्क्षणे घटादिजातीयस्यापि प्रवाहे-
ऽनादौ सत्त्वेन न पूर्वापरीभावमात्रस्य विनिगमकत्वम्, सामानाधिकरण्यं तु दण्डघटादिजातीययोराव-
श्यकमेव, अन्यथा दण्डादिजातीयस्यापि घटादिजातीयकारणत्वं न स्यात् । न च—व्यक्त्योः कार्यकारण-
भावाभावे सामान्यधर्मावच्छेदेनापि तदभावः, न चात्र दण्डादिव्यक्तिं प्रति घटादिव्यक्तिः कारणमिति—
वाच्यम्, व्यक्तिविशेषेऽन्यथासिद्धस्यापि कारणत्वप्रसङ्गवारणाय व्यक्त्योः कार्यकारणभावस्य सामान्य-
कार्यकारणभावायत्तत्वमवश्यं वक्तव्यम्, सामान्यकार्यकारणभावस्यापि विशेषकार्यकारणभावाधीनत्वो-
पगमे तु द्वयोरेव ज्ञप्तौ परस्पराश्रिततयाऽसिद्धिरेव स्यात्, तस्मात्कथमपि सामान्यकार्यकारणभावरक्षा-
विधाने तमादाय मूलोक्तप्रसङ्गस्य सुकरत्वात् ।
किञ्च पूर्वं नियामकमिति वदता पूर्वत्वमेव नियामकत्वमिति तावच्च स्वीकार्यम्, तथा सति
घटो घट इत्यादिवत्पूर्वं नियामकमिति व्यवहारासङ्गत्यापत्तेः, यदा च तयोरुपगतो भेदस्तदा भिन्नत्वाविशे-
षात्पूर्वत्वं नियामकत्वे इव नियम्यत्वेऽपि किमिति प्रयोजकं न भवेत्, एवमुत्तरत्वं नियम्यत्वे इव
नियामकत्वेऽपि । न च भिन्नत्वसाम्येऽपि पूर्वत्वस्य नियामकत्वेनैवोत्तरत्वस्य च नियम्यत्वेनैव सम्बन्ध-
विशेष इति वाच्यम्, सम्बन्धस्यनिरुक्तिं विनैवं वक्तुमशक्यत्वादिति ।
अनुत्पन्न स्वभावस्य नियामकत्वकल्पं विकल्पयति अभूत्वेति । स्वं न स्वीयमित्यनुभवविरोधा-
दपि न स्वभावः सम्बन्ध इत्याह सम्बन्धिन इति । ननु रूपभेदेनैकत्राप्याधाराधेयभावोऽस्तु, तत्राह
नहीति । कुण्डिलत्वदण्डित्वादिनतोपाधिमानपीति शेषः । सम्बन्धत्वमात्रायैव रूपभेदो वक्तव्यः, स
च तत्र सम्बन्धत्वसिद्धिं विना न सम्भवति, सम्बन्धत्वविशिष्टस्य चैवं पार्थक्यमेवागच्छतीति न स्वभाव
एव सम्बन्ध इत्यपि द्रष्टव्यम् । एवं स्वभावस्य सद्भावेन शुक्तौ रजतत्वसंसर्गसंसर्गस्यापि स्वीकारप्रसङ्ग
इति भ्रमोऽपि प्रमा स्यात् । तत्र सम्बन्धान्तरं विना विशिष्टप्रमाजनकत्वं नास्तीति न स्वभावे सम्बन्ध-

नाप्यन्यस्यासौ सम्बन्धः, त्वयैव तथानभ्युपगमात्, स्वभावादेवायमीदृश इति हि स्वभाववादस्तत्र परस्य नियमनाभावात्कथं परः सम्बन्धी सङ्गच्छेत ।

यच्च किञ्चित्सम्बन्धत्वमभिधीयते तत्समवायेऽपि स्वीकार्यम्, न च समवायाधारत्वं द्रव्यादिषट्कस्य सम्भवति, न चोपाधिभावात्स्यात्, तत्संयोगसमवायासम्भवात्, स्वभावसम्बन्धस्य च निरस्तत्वात् । न चासावभावोऽपि, प्रतिषेध्यप्रतियोगिभावभेदाभिधानप्रसङ्गात्, सप्तपदार्थीपरिसमाप्तञ्च जगत्, परस्परविरोधेन तल्लक्षणव्यवस्थापनादिति । इति सम्बन्धखण्डनम् ।

## अथाधारत्वखण्डनम् ।

यदपि नियम्याद्भिन्नं नियामकं तदपि कथं तदेव नियमयति नान्यदिति । तदाधारत्वादिति चेत्कः पुनराधारार्थः ? यत्र स्थीयते तदिति चेन्न, यत्रेति सप्तम्यर्थस्यापि विवेचनीयत्वात् । इहेति प्रत्ययविषय इति चेन्न, तत्रेति प्रत्ययविषयस्यानाधा-

---

तेति चेन्न, तस्यैवापाद्यत्वादित्यावेदितं लक्षणप्रयोजनखण्डनशारदायाम् । अन्यस्य = अन्यप्रतियोगिकः, घटाभावादेर्भूतले सम्बन्धः घटाभावरूपत्वात्स्वप्रतियोगिक एव स्वीकृत इति भावः । विशिष्टप्रत्ययजनकत्वं तु न सम्बन्धत्वम्, भ्रमसादायातिप्रसङ्गात्, प्रमात्वविवक्षायामपि अतीन्द्रियसंसर्गासङ्ग्रहात् । प्रत्यक्षात्मके विशिष्टप्रत्यये विशेषणादेरपि जनकत्वाच्च । विशेष्यतानिरूपितप्रकारतातिरिक्तविषयत्वादिकं तु यथा न सम्बन्धत्वं तथाऽऽवेदितमधस्तात्सिद्धान्तव्याप्तिलक्षणखण्डनशारदायाम् ।

सम्बन्धत्वं भावरूपं वाऽभावरूपं वेति विकल्प्याह यच्चेति । समवायाधारत्वमिति बहुव्रीहिणा समवायनिरूपिताधेयत्वपरम् । भावरूपं सम्बन्धत्वं द्रव्यादिषट्कान्तर्गतमेव स्यात्, न च समवाये द्रव्यादिषट्कान्यतमस्य वृत्तिरिति तस्य सम्बन्धत्वाभावप्रसङ्गः । ननु प्राचीनमते प्रमेयत्वादेरुपाधेर्द्रव्याद्यन्तर्गतस्यापि यथा समवायवृत्तित्वं तथाऽत्रापि स्यादित्यत आह नचेति । उपाधिभावात् = उपाधित्वात्सम्बन्धत्वस्याभाववृत्तित्वं स्यात् । उपाधेः सम्बन्धे एव कालिकादिना न वृत्तिमत्त्वम्, अतिप्रसक्तत्वात्, समवायस्य नित्यत्वाभ्युपगमाच्च, नापि संयोगेन समवायेन वा तयोः समवायाननुयोगिकत्वादित्याह तदिति । नापि स्वरूपसम्बन्धेनेत्याह स्वभावेति । एतेन प्रमेयत्वादेर्दृष्टान्तस्याप्यसाङ्गत्यं दर्शितम् । सम्बन्धत्वं यद्यभावरूपं तदाह नचेति । किंप्रतियोगिकोऽभावः सम्बन्धत्वमित्याकाङ्क्षायां प्रतियोगिविशेषनिरूपणं विना न निस्तार इत्याह प्रतिषेध्येत्यादि । प्रतिषेध्यस्य प्रतियोगिनो भावविशेषस्याभिधानप्रसङ्गादित्यर्थः । संसर्गप्रतियोगिव्यावृत्तये प्रतिषेध्यपदम्, प्रतियोगिपदं तु तृणोलपन्यायेन, अभावस्य निषेध्यत्वे भावरूपतापक्षे एव पर्यवसानाद्भावपदम्, भावसामान्यस्य प्रतियोगित्वे सम्बन्धत्वं क्वापि न स्यादिति विशेषपदम् । सम्बन्धत्वस्यातिरिक्तपदार्थतामाशङ्क्याह सप्तेति । तल्लक्षणस्य = सप्तपदार्थीलक्षणस्य । अत्र यद्वक्तव्यं तत् 'सप्तपदार्थीनियमसाधनानि च कथं परिपन्थीनि न स्यु'रिति पङ्क्तिव्याख्यायां साक्षात्कारित्वखण्डनप्रकरणे प्रागुक्तम् । तत्रैव चोक्तया रीत्याऽतिरिक्तपदार्थोपगमसम्भवेऽपि तस्य प्रतीतिविशेषसाक्षिकतयैव निरूप्यत्वेनान्योन्याश्रयात् । इति खण्डनशारदायां सम्बन्धखण्डनम् ।

तदाधारत्वादिति । बहुव्रीहेस्तत्र, सम्बन्धस्यैव नियामकतायाः पूर्वमाशङ्कितत्वात्, कार्यकारणयोर्नियम्यनियामकभावनिरासस्य प्रासङ्गिकत्वात् । विषयस्येति । इहेति प्रत्ययाविषयत्वेन सम्भाव्यमानस्येति शेषः । संशयेनापि लक्षणासिद्धिरेव । इहेत्याकारः प्रत्ययो न विवक्षितोऽपित्विह

रत्वप्रसङ्गात्, किञ्च प्रत्ययविशेषाधिगमो विषयविशेषाधिगमाद्विषयविशेषाधिगमश्च प्रत्ययविशेषाधिगमादिति व्यक्तमन्योन्याश्रयः। समवायीति चेन्न, शशे शृङ्गाभावः कुण्डे बदरमित्याद्यव्याप्तेः। गौणस्तत्र प्रयोग इति चेत्, नैतावन्मात्रं प्रत्ययश्च भ्रान्त इत्यपि वक्तव्यमवशिष्यते भवतः। ओमिति चेत्, अथ विपरीतमेव कुतो न स्यात्। शशे विषाणं नास्तीति च यदि विषाणाभावाधिकरणत्वप्रतीतिर्भ्रान्ता, शृङ्गस्य तर्हि शशोऽधिकरणं स्यात्, भावाभावयोरन्यतरनिषेधस्यान्यतरविधिपर्यवसायित्वेनाभ्युपगमात्। पतनप्रतिबन्धकमधिकरणमिति चेन्न, अवयविनं गुणादिकं च प्रति तदभावात्। अव्यवहिताधःस्थितमिति चेन्न, गुणाद्यपेक्षया गुणवदादेरधःस्थितत्वे प्रमाणाभावात्, अविशेषेण वाऽवयविगुणादीनामवयवाधारत्वप्रसङ्गात्, ऊर्ध्वस्थितस्य च संयोगिनः संयोगं

---

शब्दार्थविषयकप्रत्यय इति यदि, तदाह किञ्चेति। समवायीति। समवायानुयोगित्वमाधारत्वविलक्षणं स्वरूपसम्बन्धविशेष इति नास्माकम् इत्यभिमानः। वक्तव्यमिति। आधारत्वाधेयत्वयोस्तुल्यवित्तिवेद्यत्वात्, शृङ्गाभावसमवायित्वस्याप्रसिद्धत्वात् कुण्डसमवायित्वस्य च बदरेयाधादिति भावः। विपरीतमिति। कुण्डेबदरमित्यादिप्रतीतेः प्रमात्वं पटे रूपमित्यादेश्च भ्रमत्वमिति कुतो न स्यात्। पतनेति। तत्पतनप्रतिबन्धकत्वं तदाधारत्वमित्यर्थः। तदभावात् = तादृशाधारत्वाभावात्, अवयवावयविनोः सदैव पतनादवयविपतनप्रतिबन्धकत्वस्यावयवेष्वभावात्, गुणादेश्च पतनस्यैवाप्रसिद्धेरितिभावः। एतेन—स्वनिष्ठो यः पतनानुत्पादप्रयोजकसम्बन्धस्तद्वत्त्वं स्वाधारत्वम्, न च सम्बन्धस्य द्विष्ठत्वात्स्वस्मिन् स्वाधारत्वप्रसङ्गः, स्वभिन्नत्वस्यापि निवेशनीयत्वादित्यपि–नाशङ्कनीयम्, तद्वत्त्वमितिमतुपर्थानिरुक्तेः। बदरस्य कुण्डाधारत्ववारणाय पतने स्वीयत्वस्य निवेशनीयत्वेनाप्रसिद्धपतनकगुणाद्याधारे समवायेनाधारे चाव्याप्तेश्च। यत्तु–समवायसम्बन्धावच्छिन्नाधारत्वं समवायस्वरूपमेव, प्रत्यक्षासिद्धस्य समवायस्य विशिष्टबुद्धिमनुरुध्य कल्पनीयस्याधारत्वरूपतयैव कल्पनात्, न च सम्बन्धत्वेन समवायस्य द्विष्ठत्वेन रूपादेरपि पटाद्यधिकरणत्वप्रसङ्ग इति वाच्यम्, फलबलेनानुयोगितासम्बन्धेनैव समवायस्याधारव्यवहारप्रयोजकत्वोपगमात्। संयोगसम्बन्धावच्छिन्नाधिकरणत्वं त्वतिरिक्तमेव, संयोगस्य द्विष्ठतयैव प्रत्यक्षसिद्धत्वात्, तादृशाधिकरणत्वस्य संयोगरूपत्वे बदरस्य कुण्डाधारतापत्तेरिति; तदसुन्दरम्, आधारत्वानिरुक्त्याद्यनुयोगित्वस्याप्यनिरुक्तेः, स्वरूपसम्बन्धादेर्निरासात्। एतेन सम्बन्धविशेषानुयोगित्वमाधारत्वं न त्वनुयोगित्वमात्रम्, वृत्त्यनियामकसम्बन्धसाधारण्यात्, एवञ्च सम्बन्धविशेषो वृत्तिनियामकसम्बन्धान्यो विवक्षित इति परास्तम्। आधारत्वस्य नैकविधत्वेऽनुगतप्रतीतिव्यवहारापलापप्रसङ्गात्, समवायसम्बन्धावच्छिन्नाधारतायाः समवायस्वरूपत्वे एकत्रावच्छेद्यावच्छेदकभावस्याप्रामाणिकस्यापत्तेश्च। अथाऽत्वेवमतिरिक्तमेवाधारत्वम्, तदेव क्वचित्समवायाद्यवच्छिन्नं क्वचित्संयोगाद्यवच्छिन्नमिति चेत्तस्यापि लक्षणस्य निर्वाच्यत्वात्, प्रतीतिविषययोः परस्परायत्तविशेषकत्वप्रसङ्गेन प्रतीतिविशेषसाक्षिकाखण्डोपाधित्वाभिधानेनानिस्तारात्, 'तदनित्यं वा नित्यं वा स्या' दित्यादिवक्ष्यमाणदूषणगणग्रासाच्चेति। अव्यवहितेति। तदव्यवहिताधःस्थितं तदधिकरणमित्यर्थः। घटरूपाद्यधिकरणतया भूतलादावव्यवहारादव्यवहितत्वमुक्तम्। परन्त्वेवमासनादिव्यवधानेऽपि पुरुषाधिकरणतया भूतले व्यवहारादव्याप्तिः, तादृशव्यवहारानादरेऽपि व्यवधानं द्वयोर्मध्ये पदार्थविशेषसम्बन्ध इति कथं तत्तत्पदार्थानामनुगमेन निवेशः, सम्बन्धोऽपि च तदीयो नैकः, अतएव तत्सन्निकृष्टत्वं तदव्यवहितत्वमित्यपि न युक्तम्, सन्निकर्षाननुगमात्, साधकाभावमुक्त्वा बाधकमप्याह अविशेषेणेति। तथाप्युपेत्यैव समवायसम्बन्धेनाधारेऽव्याप्तिमाह गुणादीति। अवयवाधारत्वेति बहुर्थाहेस्तत्। नचाद्यावयविव्यवधानम्, वेति।

प्रति तदभावात्, सूत्रावलम्बितद्रव्यादौ च बहुलं व्यभिचारात् । यद्येकोऽधिकरणार्थो नोपपद्यते तर्ह्यत्रशब्दार्थवद्भिन्न एवास्त्विति चेन्न, आश्रयासिद्ध्यादेर्भेदप्रसङ्गात् । सोऽपि स्वीकार्य इति चेन्न, असिद्ध्यादिविधापरिगणनस्य व्यवहारहेतोरन्यथाभावप्रसङ्गात् । कदाचिदाश्रयस्य समवायित्वात्क्वचिच्चाभावं समवायञ्च हेतुं प्रति तदसम्भवात्, एकस्य च तेषामुपसङ्ग्राहकस्य वक्तुमशक्यत्वात् ।

बहव एवाश्रयशब्दार्थाः, आश्रयासिद्ध्याद्योऽपि पृथक् पृथगेव बहवः, असिद्धिभेदपरिगणनग्रन्थोऽप्यन्यथाकारं बोद्धव्यो बाधदर्शनादिति चेन्न, तथापीह कुण्डे बदरमित्यत्र क आधारार्थ इति वक्तव्यम्, न तावत्पतनप्रतिबन्धकत्वम्, सहैव कुण्डेन पतति बदरे तदभावात् । नापि संयोगित्वम्, वैपरीत्यस्यापि प्रसङ्गात् । संयोगित्वे सत्यधःस्थितत्वं तत्राधिकरणार्थ इति चेन्न, तस्मिन् सत्यप्यन्यत्र चरणतलमिलितधूलीपटलादौ तदधिकरणप्रतीत्यनुत्पत्त्या प्रत्युत चरणतले धूलीत्येव प्रतीत्याऽऽधारत्वप्रतीतौ व्यभिचारित्वेन प्रकृतेऽपि तथास्वीकारानुपपत्तेः । न सार्वत्रिकोऽयमाधारार्थः, किन्तु क्वाचित्को नानारूपाधारत्ववादिपक्षे इति चेन्न, भवत्वन्यत्रान्यस्याधारार्थत्वम्, तस्य त्वाधारार्थत्वं नोपपद्यते, अनाधारत्वप्रतीतिविषयेऽपि गतत्वादित्युक्तेः । आधेयापेक्षया महत्परिमाणत्वे सतीति चेन्न, करतलस्थिततूलराश्यादौ तदसम्भवात्, अन्यस्य च तत्राधारार्थस्य वक्तुमशक्यत्वात् ।

अधःशब्दार्थस्य च वक्तुमशक्यत्वात् । पतनाभिमुखदिगवस्थितत्वमिति चेन्न, पतनार्थस्य गमनाधिकस्याधःशब्दार्थव्यतिरेकेण निर्वक्तुमशक्यत्वात्, अत एवाधःशब्दार्थदुर्वचत्वमधिगम्याद्वैतवादिना गुरुणा शिष्याय खण्डनमुपाचक्षाणेन भगवता

---

अनुभवविरोधात्, अतोऽपि गुणवदादेरधःस्थितत्वं न युक्तम्, व्यवधानस्यौत्तराधर्यस्य च संयोगस्थल एवानुभविकत्वात् । ननु संयोगसम्बन्धावच्छिन्नाधारत्वेनेत्थं लक्ष्यताम्, तत्राह उर्ध्वेति । तदभावात् = उक्ताधारत्वासम्भावात् । संयोगस्य द्विष्ठतायाः प्रत्यक्षसिद्धत्वेन बदरस्यापि तदाधारत्वादिति भावः । द्रव्यादौ = द्रव्यादिकमादाय व्यभिचारात् = सूत्रेऽव्याप्तेः, तस्याधःस्थितत्वाभावात् । भिन्नइति । एकजातीयसम्बन्धस्थलेऽपीत्यादिः । एवञ्चाधारतावच्छेदकसम्बन्धभेदेनानुयोगिप्रतियोगिभेदेन चाधारार्थभेद इति भावः । आश्रयासिद्ध्यादेरिति । आदिना साध्याभावाधिकरणवृत्तित्वसाध्याभावाधिकरणपक्षादिरूपव्यभिचारबाधादेः संग्रहः । व्यवहारहेतोरिति । इदमिष्टापत्तिपरिहर्तुम्, आश्रयासिद्ध्यादिविषयकानुगतव्यवहारमूलकस्येत्यर्थः । समवायित्वादिति पृथिवीत्वादिहेतुकस्थले । तदसम्भवात् = समवायित्वासम्भवात् ।

शङ्कते बहव इति । बाधदर्शनादिति । अनुगमस्याशक्यत्वादित्यर्थः । अतएव नव्यैरननुगमः स्वहस्तितः । वैपरीत्येति । बदरे कुण्डमिति धीप्रसङ्गात्, संयोगानुयोगित्वस्य बदरेऽपि सत्त्वात् । तस्मिन् = संयोगित्वे सत्यधःस्थितत्वे । अन्यत्रेति प्रकृतापेक्षया । अन्यपदोपादेयमाह चरणेत्यादि । तदिति । चरणतलेत्यर्थः । महदिति । धूलीपटलस्य चरणतलापेक्षया न्यूनपरिमाणत्वम् । करतलेति । करतलेऽव्याप्तिः तूलराश्यपेक्षया न्यूनपरिमाणत्वात् ।

पतनाभिमुखेति । यस्यां दिशि पतति तद्दिग्वृत्तित्वमधःस्थितत्वम् । पतनघटकत्वेन च तदुपादानम् । पतनार्थस्येति । अधोदेशसंयोगानुकूलव्यापारस्य पतत्यर्थत्वाद्गमनातिरिक्तोऽधःशब्दार्थ एव तत्र प्रविष्टः स एव च नाद्यापि निरुक्त इत्यन्योन्याश्रय इत्यर्थः । गुरुणा = ऋभुणा, तन्मुखेनेति यावत्, उपाचक्षाणेनेत्यन्वयः । उपवर्ण-

पराशरेणाभिहितम्—"अधःशब्दनिगद्यं किं किञ्चोर्ध्वमभिधीयते" । पृथिव्यभिमुखी दिगधःशब्दार्थ इति चेन्न, ऊर्ध्वशब्दार्थस्यापि पृथिव्यभिमुखत्वसम्भवात् । यदपेक्षया पृथिव्यभिमुखी या दिक् तदपेक्षया साऽध इति चेन्न, यदपेक्षयेति किं यमवधीकृत्येति विवक्षितम्, उत यदीयाभिमुख्यव्यवस्थितेति, आद्ये पृथिव्यूर्ध्वस्थितं पदार्थमवधीकृत्य योर्ध्वा दिगिति भवद्भिर्व्यवह्रियते साऽपि पृथिव्यभिमुखी भवतीति साऽप्यधः स्यात् । अत एव न द्वितीयोऽपि । यस्यां दिशि क्रियया पृथ्वी सन्निहिता भवति सा दिगध इति चेन्न, कूपादौ मध्यगतस्य तिर्यग्दोलायमानस्य क्रिया पतनं स्यात्, तद्गत्याक्रान्ता च तिर्यग्दिगधः स्यात् । पृथिवीमवधीकृत्य यं चान्यं पदार्थमवधीकृत्य यो मध्य इति देशो व्यवह्रियते स पृथिवीव्यतिरिक्ततदवध्यपेक्षयाऽध इति चेन्न, पृथिव्यामेव तद्व्यवहारापत्तेः, पृथिवीं पदार्थान्तरञ्चापेक्ष्य मध्यत्वस्य विवक्षितस्याधःशब्दार्थप्रदर्शनमन्तरेण निर्वक्तुमशक्यत्वात्, पृथिव्यपेक्षयोर्ध्वं परापेक्षया चाधस्तयोर्मध्यमित्येव निरुच्यते मध्यत्वम्, अन्यथा तिर्यग्गतिप्रसङ्गात्, तद्यथा—पृथिव्यपेक्षया पूर्वमपरापेक्षया च पश्चिमं तयोर्मध्यमुच्यते, प्रतीपदिगवस्थितयोः परस्परापेक्षया प्रतीपदिक्सङ्करे मध्यव्यवहारात् ।

अथान्यः कश्चिदाधारार्थोऽस्तु, प्रतीतिसिद्धत्वात्, प्रतीतेश्चैवमनन्योपपाद्यत्वात्, मैवम्, तदनित्यं वा स्यात्, नित्यं वा, नाद्यः, तदभावे आधारप्रतीत्यभावप्रसङ्गात्, गोत्वादिनित्यत्वन्यायसाम्येऽप्यस्यानित्यत्वे तेषामप्यनित्यत्वापाताच्च । नापि

---

यतेरयर्थः । शिष्याय = निदाघाय । खण्डनमिति । खण्ड्यतेऽपसार्यतेऽज्ञानं येन निरूप्यमाणेनेति व्युत्पत्त्या खण्डनं तत्त्वम्, तथाच तस्योपवर्णनप्रकरणे इति पर्यवसन्नम् । अभिहितमिति । विष्णुपुराणद्वितीयांशषोडशाध्यायैकादशश्लोके इति शेषः । अत्र किंशब्द आक्षेपार्थक इति भावः । पतनं स्यादिति । उक्तक्रियाया अधोदेशसंयोगानुकूलत्वात्, भवन्मते च तिर्यग्दिव्यधोदेशलक्षणसङ्क्रमात् । तद तदाह तद्गतीति । यो मध्य इति । पृथिव्यपेक्षया तस्योर्ध्वत्वादाह पृथिवीव्यतिरिक्तेति । पृथिव्याः पृथिवीमार्तण्डव्यवहारेति । पृथिव्यां मार्तण्डमण्डलाद्यपेक्षयाऽप्यधस्त्वव्यवहारो न स्यात्, पृथिवीव्यतिरिक्तत्वोपादानेन पृथिव्यपेक्षया मण्डलादिमध्यदेशत्वाभावादिति भावः । इदमुपलक्षणम्, स्यादित्यपि द्रष्टक्षाप्यधस्त्वव्यवहारो न स्यात्, नागलोकाद्यपेक्षया चोर्ध्वे तदपेक्षयाऽधस्त्वव्यवहारः स्यादित्यपि द्रष्टव्यम् । नन्वधःशब्दस्यापि नानार्थत्वे नोक्तदोषः, यं चान्यं पदार्थमित्यत्र पदार्थे पृथिव्यपेक्षयोर्ध्वत्वस्यापि विवक्षणीयत्वादित्यतो दोषान्तरं मध्यत्वाधस्त्वयोर्ज्ञप्तौ परस्पराश्रयमाह पृथिवीमित्यादिना । अन्यथेति । मध्यत्वस्याधस्त्वाघटितत्वे इत्यर्थः ।

अनन्येति । विषयेणैव प्रतीतिरुपपाद्या नत्वन्येनेत्यर्थः । अनिर्वाच्याधारत्वविषयकत्वं तस्याः प्रतीतेरित्यभिप्रायेणाह तद्धीति । प्रतीतिसिद्धमाधारत्वमित्यर्थः । तदभावे = तन्नाशदशायाम् । प्रतीत्यभावेति । प्रतीतेर्भ्रमत्वेत्यर्थः, नचेष्टापत्तिः, बाधाभावात् सृष्टिकालपर्यन्तस्थायित्वाभ्युपगमेऽपीदानीं प्रलयकालान्तर्भावेन जायमानात्मत्वाद्याधारत्वप्रतीतेर्भ्रमत्वस्यानिष्टत्वात् । इष्टापत्तौ बाधकान्तरमाह गोत्वादीति । न्यायेति । सृष्टिकालेऽप्यदयं क्वचिद्व्यक्तौ प्रतीयमानत्वाल्लाघवाच्च गोत्वादेर्नित्यत्वं तथाधारत्वस्यापि तदुक्तम्, अन्यथा तु गोत्वादेरपि तत्त्याज्यमित्यर्थः । यद्वा तु भवत्वाधार-

द्वितीयः, तादृशमप्यनुगतमननुगतं वा स्यात्, द्वितीयेऽनुगताधारप्रतीत्यसम्भवः सङ्केतग्रहाशक्यत्वञ्च। प्रथमे सामान्यवदाश्रयापरित्यागि वा स्यात्तत्परित्यागि वा, आद्ये यदेव तदाधारतया प्रतीतं तत्तदाधेयं न स्यात्, द्वितीये च यदि नियामकमन्तरेण तत्स्वाश्रयं भजति च त्यजति च, तदा नियमानुपपत्त्या सर्वदा तद्भजनत्यजनोचितप्रत्ययव्यवहारप्रसङ्गः। अथ तस्याश्रयभजनत्यजनयो र्नियामकोऽस्ति तर्हि स वक्तव्यः। सोऽपि कल्पयिष्यते, अन्यथाऽऽधारप्रतीत्यनुपपत्तेरिति चेन्न, तत्परिकल्पने यदेव भजने नियामकं स एवाधारार्थोऽस्तु, कृतं पूर्वपरिकल्पितेनेति। अस्त्वेवमिति चेन्न, तस्यापि स्वाश्रयभजनत्यजननियामकस्यावश्यं वाच्यत्वे तस्यापि चैवं वैयर्थ्यमित्यधिकापरिकल्पने नियमानुपपत्तिरधिकपरिकल्पने च पूर्ववैयर्थ्यप्रसङ्ग इति दुरुत्तरं व्यसनमापद्येत। परस्परस्य परस्परेण नियामकत्वमिति चेन्न, अन्योन्याश्रयिणौ तौ द्वावपि परस्पराकर्षकभावव्यवस्थया सुखीकुरु, ततो दास्यामस्तवोत्तरम्। जात्यादयोऽपि तर्ह्येवमनुपपन्ना इति चेन्नोच्चै र्वक्तव्यम्, यदि कोऽपि परः शृणोति तदा महदनिष्टमस्माकं प्रकाशीकृतं स्यात्। किञ्च यत्तदाधारत्वम्, तत्साधारमनाधारं वा, अन्त्ये क स्वविशिष्टप्रत्ययं कुर्यात्, विशेषाभावात्। आद्ये तदाधारत्वं वाच्यम्। स्वरूपमेव तस्य तादृशं येन स्वयं

---

त्वमनित्यं तथापि तल्लक्षणं दुर्वचमेवेति द्रष्टव्यम्। सामान्यवदिति। यावद्व्यक्तिसत्त्वं सामान्यं तां न जहाति। यदेव = पीठादिकं तदाधारतया = आश्रयाधारतया, देवदत्ताद्याधारतयेति यावत्। तदाधेयमिति। कदापीतिशेषः। पीठादिवहनदशायां हि देवदत्ताधेयतैव पीठादौ। नन्वाधारत्वमाश्रयापरित्यागीत्येव ब्रूमो नतु देवदत्ताद्याधारता पीठाद्याश्रयविशेषापरित्यागीति, एकैव ह्याधारता कदाचित्केनचिन्निरूपिता क्वचिदस्त्येवेतिचेन्न, यैव देवदत्तनिरूपिता पीठवृत्तिराधारता सैव यदि पीठनिरूपिता देवदत्तवृत्तिरपि, या च संयोगसम्बन्धावच्छिन्ना सैव यदि समवायावच्छिन्नापि तदा व्यवहारातिप्रसङ्गात्, अन्यथा त्वननुगमात्। तत्परिकल्पने = भजनत्यजननियामकयोः परिकल्पने। पूर्वपरिकल्पितेन आधारत्वेन। ननु यन्निरूपितमाधारत्वं यत्र तस्य तत्रोत्पत्तिरेवाधारत्वभजननियामिका, तन्नाश एव चाधारत्वत्यजननियामकः, न चात्र भजननियामकस्याधारताप्रतीत्युपपादकत्वसम्भवोऽतीन्द्रियत्वादिति चेन्न, नित्यनिरूपितैवमाधारता न स्यात्, न स्याच्चान्यत्रोत्पन्नस्यापरत्रागतस्य सा, तदनुगमपक्षस्यैव चोपक्रान्तत्वात्, उत्पत्तेश्चातिरिक्तत्वे तस्या अप्युत्पत्तेर्वक्तव्यत्वेनानवस्थाप्रसङ्गात्, उत्पद्यमानरूपत्वे आत्माश्रयात्, द्वितीयादिक्षणेऽप्युत्पत्तिव्यवहारप्रसङ्गाच्च, अतएव तस्या न भजननियामकत्वमपि, द्वितीयादिक्षणे आधारत्वस्यानियम्यत्वप्रसङ्गात्। आधारत्वनिरूपणं विना 'तस्य तत्रोत्पत्ति' रिति वक्तुमशक्यत्वाच्च, अतएवाधेयस्यापि न भजननियामकत्वम्, आधारतासम्बन्धेनैव तस्य नियामकताया वक्तव्यत्वात्। अतएव नान्यस्यापि तदिति। तस्यापि = भजननियामकस्यापि। न च पूर्वनिर्वाहार्थमुत्तरस्य कल्पितत्वेनोपजीव्योत्सारणायोग इति वाच्यम्, वैयर्थ्यप्रतीत्याऽनन्तनियामककल्पनायामयुक्तत्वग्रहेण तदनभ्युपगमस्यौचित्यात्, लाघवादेकत्र स्वपरनिर्वाहकत्वकल्पनाया एवोचितत्वात्, तथासति यद्यप्यात्माश्रयो दोषः, तथापि रोगद्वयप्रसक्तौ गुरुरोगापेक्षया लघुरोगवत्सोढव्य एवेति। परस्पराकर्षकभावेति। स्वस्वनियमनाय परस्परापेक्षित्वेत्यर्थः। व्यवस्था=अदोषत्वोपपादनम्। तर्हीति। स्वस्थितौ नियामकान्तरापेक्षायामनवस्थाद्विसाम्यादिति भावः। तदाधारत्वम् = आधारत्वाधारत्वम्। येनेति। स्वाधारप्रत्ययकारीत्यन्वयः।

सत्ता स्वात्मनि सत्ताप्रत्ययकारिणी सत्तान्तरमन्तरेण यथा तथेदमपि विनैवाधारत्वान्तरं स्वाधारप्रत्ययकारीति चेन्न, भ्रान्तित्वप्रसङ्गात्, यथा विना रजतत्वं तत्प्रत्ययो भ्रान्तिस्तथैव स्यात्। उपपाद्यश्चायमर्थो भेदखण्डनप्रस्तावे इत्युपरम्यते। विनाप्याधाराधेयभावं स्वभावसम्बन्धेन नियामकत्वं भविष्यति, यथा विषयविषयिभावेनार्थज्ञानयोरिति चेन्न, स्वभावसम्बन्धस्य निरस्तत्वात्। इत्याधारत्वखण्डनम्।

## विषयविषयिभावखण्डनम्।

यमुदाहरसि च विषयविषयिभावं सोऽपि निर्वक्तुं न शक्यते, तथाहि—कः पुनर्ज्ञानादेर्घटादिना विषयविषयिभावः १। प्रकाशस्य सतस्तदीयतामात्ररूपः स्वभावविशेष

---

भ्रान्तित्वेति। आधारत्वाधारत्वप्रत्ययस्येत्यादिः। घटवद् भूतलमित्यतो घटाधारत्ववद् भूतलमिति प्रतीतेराधारत्वान्तरावगाहित्वेऽविशेषात्, एवञ्च सत्ता सतीत्यस्या अपि प्रतीतेः सत्तान्तरानभ्युपगमे भ्रमत्वमिष्टमेव, अन्यथा त्वनवस्थादिकमिति भावः। उपपाद्य इति। स्वात्मा स्वस्यैवाधिकरणमवधिश्चेत्यपि तर्हि न सत्या प्रतीतिरित्यादिना सत्ताप्यमुना दूषणेनास्माभिः खण्डनीयेत्यन्तेन ग्रन्थेन स्वरूपभेदपक्षे 'भिन्न' इत्येकत्राधाराधेयभावप्रतीतेर्भ्रमत्वमुपपादयिष्यति, तद्वदत्रापीति। निरस्तत्वादिति। सम्बन्धस्य सम्बन्धिनिष्ठत्वप्रतीत्याऽभेदे तद्विरोध इति भावः। इति खण्डनशारदायामाधारत्वखण्डनम्।

कः पुनरिति। विषयविषयिभावो हि नैकः सम्बन्धः, तस्य हि नैकस्मिन्नपि सम्बन्धिनि वर्तमानत्वं प्रागेव तु द्वयोः, न चोभयसाधारणोऽखण्डोपाधिरेवासौ, विषयत्वादिनैव विशिष्टबुद्ध्युपपत्तौ तस्याप्रामाणिकत्वात्, अखण्डोपाधिमात्रनिरासाच्च। न चास्तु विषयत्वविषयित्वयोः प्रत्येकमेव सम्बन्धत्वम्; संयोगस्यैकसम्बन्धेन सम्बन्धिद्वयसम्बद्धस्यैव सम्बन्धत्वदर्शनेन तयोश्च तथात्वासम्भवेन सम्बन्धत्वानुपपत्तेः। अथाप्रयोजकमिदम्, जगद्वैचित्र्यभङ्गप्रसङ्गात्, सम्बन्धिद्वयसम्बद्धत्वमात्रं त्वपेक्ष्यताम् तच्चैकेन सम्बन्धेन वा, सम्बन्धद्वयेन वेत्यन्यत्, प्रकृते च विषयत्वं स्वरूपेण विषये निरूपकसम्बन्धेन च विषयिणि सम्बद्धमिति न काप्यनुपपत्तिरिति चेन्न, एवमपि स्वरूपसम्बन्धस्य निरूपकतासम्बन्धस्य च सम्बन्धिद्वयसम्बद्धतायाः कथमप्युपपादनासम्भवादन्यथाऽनवस्थानादिति स्वरूपे निरूपकतायाञ्च सम्बन्धत्वविलोपे विषयत्वविषयित्वयोरपि सम्बन्धिद्वयसम्बद्धत्वानुपपत्तौ सम्बन्धत्वविलोप एव। मास्तु सम्बन्धत्वम्, ते तु स्यातामिति चेत्तर्हि ज्ञानज्ञेययोरसम्बद्धत्वमेव, अभिन्नत्वमेव वा, तथा च न किमपि सिद्ध्येत्, ज्ञानमेव वैकं तत्त्वं स्यादिति जितं शून्यवादिना विज्ञानवादिना वा। अनुभवविरोधेन तयोरवहेलने चानिर्वचनीयसम्बन्धमाश्रित्य वेदान्तिन एव विजयेरन्नित्याक्षेपः, एवं च न केवलं विषयत्वादेः सम्बन्धत्वानुपपत्तिरपि तु स्वरूपमपि तस्य दुर्निरूपमेवेति यदुक्तं परमुत्थापयति प्रकाशस्येति। आत्मतत्त्वविवेके विज्ञानवादनिराकरणशेषे उदयनाचार्यैरुक्तमिदं लक्षणम्। प्रकाशस्य = ज्ञानस्य। सतः = विद्यमानस्य स्वभावविशेषः तदीयतामात्ररूपः = घटादिमात्रसम्बन्धितारूपः। अत एव तत्रैवोक्तम्—"तन्मात्रीयत्वादेव च नान्यदीय" इति। विषयताया ज्ञानस्वभावत्वबोधनाय सत इत्यनेन ज्ञानविद्यमानतोक्ता, एवञ्च सामान्यतोविषयताया ज्ञानस्वभावत्वमुक्तम्, किन्त्वेवं घटज्ञानस्य पटविषयकत्वं मा प्रसाङ्क्षीदिति घटादिविषयताया घटादिसम्बन्धितत्तज्ज्ञानस्वभावत्वमुक्तं तदीयतेत्यादिना। अत्र रूपज्ञानाभावाभावस्य रूपज्ञानरूपत्वे रूपज्ञानस्य स्वाभावीयतया स्वाभावविषयकत्वापत्ति-

इति चेन्न, इच्छादिविषयताव्यापनात्। विषयिण इति चेन्न, तत्त्वस्यैव निरूप्यमाणत्वात्। किञ्च स्वभावः स्वधर्मो वा स्वात्मा वा तस्य विवक्षितः, आद्ये ज्ञानत्वादिकं वा साधारणमसौ, तत्तद्घटज्ञानादिनियतो वा कश्चित्, आद्ये साधारण्यान्न विशेषतस्तदीयतामात्ररूपत्वसम्भवः। द्वितीये तु प्रतिविषयं व्यावृत्तज्ञानधर्मस्वीकारे वचनभङ्गिभेदेन साकारतास्वीकारः। किञ्च नासौ धर्म उपधेयान्तराधीनः, विषयीभूतघटाद्यतिरिक्तोपाधिप्रतीत्यपेक्षाप्रसङ्गात्। नच घटादिरेव तथा; असम्बन्धात्, तथापि तथात्वे चातिप्रसङ्गात्। नापि जातिरूपः, क्वचिद्घटमात्रपटमात्रज्ञानगततया पृथग्व्यवस्थितौ सत्यां घटपटविषयैकज्ञाने सह व्यवस्थितया जातिसङ्करप्रसङ्गात्, प्रतिविषयं ज्ञानभेदनियमे

---

स्वभावाभावस्यातिरिक्ततोपगमेन वारणीयेति द्रष्टव्यम्। इच्छादीति। ननु नेयमव्याप्तिः, स्वजनकज्ञानविषयत्वमेवेच्छायाः विषये सम्बन्धः, स्वप्रयोजकीभूतमिष्टसाधनत्वनिष्ठप्रकारतानिरूपितविषयत्वमिति यावत्, तेन रजतमिष्टसाधनं घटो न इष्टसाधनमित्यादिज्ञाना'द्घटमिच्छामि' 'इष्टसाधनत्वमिच्छामी'त्यादिव्यवहारस्य न प्रसङ्गः। न चेच्छादेरेव सविषयकत्वमस्तु ज्ञाने तु स्वजन्येच्छाविषयत्वमेव सविषयकत्वव्यवहारनिमित्तमिति वाच्यम्, इच्छाद्यनुत्पत्तावपि घटमहं जानामीति ज्ञाने सविषयकत्वानुभवादिति चेन्न, इष्टसाधनतावच्छेदकादिप्रकारकज्ञाननिष्ठजनकतानिरूपिता या तत्प्रकारकेच्छादिनिष्ठजन्यता तदवच्छेदकतयेच्छादिविषयत्वसिद्धेः, अन्यथा रजतेच्छासम्बन्धस्य तज्जनकज्ञानद्वारकत्वेन तज्ज्ञानजन्यतावच्छेदकतायामात्माश्रयापत्तेः। एवञ्च स्वमते ईश्वरीयनित्येच्छायानुरूप्यमपि निर्वहति। अन्यथेच्छामात्रस्थले स्वसमानाधिकरणज्ञानाधिकरणक्षणध्वंसोत्पत्तिक्षणवृत्तित्वस्य कृतिमात्रस्थले च तादृशक्षणवृत्तीच्छाधिकरणक्षणध्वंसोत्पत्तिक्षणवृत्तित्वस्य विषयताव्यवहारनियामकत्वोपगमेऽसम्भवप्रसङ्गात्, क्षणाद्यज्ञानदशायामपि घटमिच्छामीत्यादिव्यवहारात्। प्रकाशस्येत्यस्य स्थाने विषयिण इति निवेशेनाव्याप्तिं परिहरति विषयिण इति। तत्त्वस्य = विषयित्वस्य। ननु ज्ञानीयविषयविषयिभाव एवोक्तलक्षणलक्ष्यो न त्विच्छीयोऽपीत्यस्वरसादाह किञ्चेति। तस्य = प्रकाशस्य। तत्तदिति ज्ञानान्वयि। कश्चित् = घटज्ञानत्वादिरूपः, न तु तत्तज्ज्ञानत्वरूपः, तथा सति व्यक्तिभेदेन जातित्वशङ्काया एवासम्भवेनाग्रे तन्निरासस्यासामञ्जस्यापत्तेः, एवञ्च तत्तत्पदं पटज्ञानत्वादिव्यावृत्तत्वप्रदर्शनाय। सम्भव इति। अयं घट इति ज्ञानं पटविषयकमपि स्यादिति भावः। स्वीकार इति। ननु ज्ञाने विषयमनपेक्ष्यासाधारणधर्मोपगमे स्यात्साकारवादप्रसङ्गः, "अर्थेनैव विशेषो हि"ति न्यायेन विषयप्रयोज्यस्य धर्मविशेषस्योपगमे तु कथं स इत्यस्वरसादाह किञ्चेति। उपधेयान्तरेति। विषयातिरिक्तेत्यर्थः। विषयताया विषयनिष्ठत्वेन विषयस्योपाधेयत्वमुक्तधर्मस्य चोपाधित्वं शक्यं वक्तुम्, तत्तज्ज्ञानत्वरूपस्य तस्य तत्तद्विषयप्रयुक्तत्वेन तु विषयस्योपाधित्वमपि शक्यं वक्तुमित्यभिप्रायेणात्रोपधेयपदस्य घटाद्यतिरिक्तोपाधीत्यत्र चोपाधिपदस्य प्रयोग इत्यवधेयम्। तथा = तादृशधर्मप्रयोजकः। असम्बन्धादिति। घटादिज्ञानगततादृशधर्मप्रयोजकत्वं घटादौ नत्वन्यत्रेति ज्ञानसम्बन्धनिरूपणं विना न शक्यं निरूपयितुम्, सम्बन्ध एव च निरूप्यत इति भावः। तथापि = सम्बन्धाभावेऽपि। तथात्वे = तादृशधर्मप्रयोजकत्वे। अतिप्रसङ्गात् = घटज्ञानविषयत्वस्य पटादावपि प्रसङ्गात्। जातिरूप इति। उक्तधर्म इत्यनुषज्यते। पृथग्व्यवस्थितौ = परस्परासमानाधिकरणतायाम्। सहव्यवस्थितया = सामानाधिकरण्येन। ज्ञानयौगपद्यमते समूहालम्बनस्थले नानासामग्रीसंवलनं नैकं ज्ञानमजयति, तथा च सामानाधिकरण्याभावान्न सङ्कर्य-

विशिष्टज्ञानानुपपत्तेः, एवम्भूतविचित्रजात्यभ्युपगमे प्रत्येकोचितव्यवहारस्याप्यभावप्रसङ्गात्। अथ जातिसङ्करोऽपीष्यते तथापि स एव विशेषो घटज्ञानत्वादिरस्त्विति विषयासिद्धिः। अथ विषयेणापि सम्बन्धप्रतिभासात्सोऽपीष्यते; न, तस्यैव सम्बन्धस्य विचार्यमाणत्वात्। स एवासाविति चेत्, तदैक्याज्ज्ञानार्थसाधारणविषयप्रतीत्यापत्तेः, संयोगप्रतीतिवत्। विषयित्वं तत्र, अर्थे तु विषयत्वमन्यदिति चेत्, सैव हि ज्ञातता स्यात्, सा च निराकरिष्यते। द्वितीये च स्वात्मा घटपटव्यक्तीनामिव घटपटज्ञान-

---

मित्यत आह प्रतिविषयमिति। विशिष्टज्ञानानुपपत्तेरिति। समूहालम्बनवद्विशिष्टज्ञानस्याप्यनुपपत्तेः, तस्यापि विशेषणविशेष्यादिनानाविषयकत्वात्, तार्किकस्वीकृतनिर्विकल्पकस्याप्येवमनुपपत्तिरेव, तस्यापि नानाविषयकत्वात्, वस्तुमात्रावगाहिनिर्विकल्पकस्य तेनास्वीकारात्। यदि तु विशिष्टज्ञानादिसामग्रीविलक्षणा समूहालम्बनज्ञानसामग्रीति प्रथमातो मा जनिष्ट नानाज्ञानं द्वितीया तु तज्जनयेदेवेत्युच्यते, तदापि घटपटाविति समूहालम्बनं विना द्वित्वप्रत्यक्षासम्भवात्तदावश्यकमेव, एवं दण्डी पुरुष इति विशिष्टज्ञानेऽपि दण्ड इति पुरुष इति ज्ञानद्वयगतजातिसामानाधिकरण्यस्य ध्रौव्येण साङ्कर्यमिति। ननु समूहालम्बनादौ न तादृशजातिद्वयमपि तु चित्ररूपवदतिरिक्तैव जातिरिति न साङ्कर्यमित्यत आह एवम्भूतेति। घटपटावित्यादिज्ञाने सति घटो मया ज्ञात इत्यादिव्यवहारो न स्यात्, घटज्ञानत्वादेस्तत्रानभ्युपगमात्। सङ्करस्य जातिबाधकतानङ्गीकारेऽप्याह तथापीति। स घटज्ञानत्वादिरेव विशेषोऽस्त्वित्यन्वयः। विषयासिद्धिरिति। अयम्भावः—घटज्ञानत्वादेर्जातित्वं मन्यमानेनाखण्डत्वमवश्यं तस्य वक्तव्यम्, अन्यथा घटविषयकत्वज्ञानत्वप्रयोजकसंवलनाधीनत्वापत्त्या घटज्ञानत्वस्य नीलघटत्वादिवज्जातित्वं न शङ्कास्पदमपि स्यात्, एवञ्चाखण्डस्य तस्य घटमहं जानामीत्यादिज्ञानवैलक्षण्यानुभवान्यथानुपपत्तिरेव साधिका स्यात्, सा च ज्ञाने वैलक्षण्यं साधयन्ती घटत्वादिकमपि तत्रैव साधयेत्, तदीयवैलक्षण्यस्य तदीयधर्मेणैवोपपत्तेरिति घटादेर्ज्ञानात्मकत्वमेव स्यादिति। सोऽपि विषयोऽपि। घटज्ञानत्वादिकं सखण्डमिति भावः। एवंसति घटविषयकज्ञानत्वमेव घटज्ञानयोः सम्बन्ध इत्युक्तं स्यात्, तच्चानुपपन्नम्, विषयविषयिभावस्य विषयविषयिभावेनैव प्रत्यायनानुपपत्तेरित्याह तस्यैवेति। स एव = प्रकाशस्य सत इत्यादिना निरुक्त एवासौ सम्बन्धः, तत्र स्वभावपदेन ज्ञानधर्मो विवक्षित इति कल्प उपक्रान्तः, विशिष्य तु स घटादिज्ञानधर्मात्मकः, तत्र च षष्ठ्यर्थस्य विषयविषयिभावत्वेन न विवक्षाऽपि तु सम्बन्धत्वेनैवेति नोक्तदोषावकाशः, न च सम्बन्धत्वमपि विशिष्टप्रतीतिप्रयोजकत्वमेवेति स एव दोषः; प्रतीतौ विशिष्टविषयकत्वं हि न विवक्षितम्, अपि तु विशिष्टसम्बन्धित्वमेव, किञ्च किञ्चिन्निष्ठविशेष्यतानिरूपितप्रकारताशालित्वं संसर्गतानिरूपकत्वं वा प्रतीतौ विशिष्टपदसमभिव्याहारेण लभ्यते इति नाश्रयः, विशेष्यतादेर्विषयताविशेषत्वेऽपि विषयताज्ञानाधीनज्ञानकत्वाभावादित्यभिप्रायः। यदि विषयविषयिभावो निरुक्त एक एव सम्बन्धिद्वयसाधारणस्तदा संयोगस्य सम्बन्धिद्वयगतत्वप्रतीतिवत्तस्यापि ज्ञानज्ञेयोभयगतत्वप्रतीतिः स्यात्, ज्ञानज्ञेयोभयस्यैव विषयत्वं विषयित्वञ्च स्यादिति यावदित्याह तदैक्यादिति। विषयपदं विषयत्वपरम्। विषयविषयिभावो नैक इत्यभिप्रायेणाशङ्कते विषयित्वमिति। तत्र = ज्ञाने। सा=विषयता। निराकरिष्यत इति। अनुपदं द्वितीयविषयत्वलक्षणखण्डने इति शेषः। अयम्भावः—ज्ञातता हि ज्ञानजन्यफलतया भट्टैः स्वीकृता ज्ञातो घट इतिप्रतीतिसाक्षिका, प्रतीतिश्च तादृशी अतीतादावप्यविशिष्टा, न चातीतादौ ज्ञानेन तदुत्पादनसम्भवः,

व्यक्तीनां व्यावृत्ता इति तत्तद्विषयविषयिभावगोचरानुगताकारबुद्धिव्यवहारभङ्गप्रसङ्गः ।

किञ्च तदीयता ज्ञानस्य स्वभाव इति वचनं विचारमर्हति. तदिति तावद्विषयपरामर्शः, सम्बन्धिता च छप्रत्ययस्यार्थः, तदेतदन्योन्यविशिष्टमुभयं ज्ञानस्य स्वभाव इति ब्रुवाणेन विषयो विज्ञानस्य स्वभाव इत्युक्तं भवतीति साधु विज्ञानवादनिराकरणप्रकरणोपसंहरणमकारि । सम्बन्धमात्रं ज्ञानस्य स्वभावो न तु विषय इत्याशय इति चेन्न,

---

न च विषयावैलक्षण्ये ज्ञानावैलक्षण्यम्, नचातीतादौ ज्ञातो घट इत्यादिधीर्भ्रमः, बाधाग्रहात् । न च तत्र तस्या विषयतावगाहित्वम्, विषयता च न ज्ञानेनोत्पाद्यते, पूर्वं ज्ञानस्य निर्विषयकत्वप्रसङ्गादिति वाच्यम्, एवं सति क्लृप्तत्वाद्वर्तमानघटादावपि तादृशबुद्धेर्विषयतातिरिक्तज्ञाततावगाहित्वे मानाभावः, ज्ञातताप्रयोजकतयापि च विषयताऽवश्यं कल्पनीयैव कथमन्यथा घटज्ञानेन पटेऽपि ज्ञातता न जन्येत । यदि च ज्ञानेन फलमवश्यं कर्मण्याधेयम्, तदा वर्तमाने इवातीतादावप्यज्ञाननिवृत्तिरेव फलमस्तु, किमनुभवविरुद्धपदार्थान्तरकल्पनेन । एतेन घटादेः सूक्ष्मावस्थायां ज्ञाततोत्पत्तिः, तस्या अतीताद्यवस्थायामपि सद्भावादिति–निरस्तम्, न च येन रूपेण ज्ञातत्वानुभवस्तदतिरिक्तरूपेण सद्भावः किञ्चित्करोऽपि । हन्तैवमज्ञाननिवृत्तिरपि कथमाधीयेत ? असत्त्वापादकाज्ञानविषयत्वाभावस्यातीताद्यवच्छिन्नचैतन्येऽप्यसम्भवादितिचेत्, अयमपि भवतां शिरस्येव प्रहारो नत्वनिर्वाच्यवादिनाम् । एवं ह्यतीतादौ विषयताऽपि विलुप्येतैव, तस्मादनुभवो युक्तिं युक्तिश्चानुभवं न मृष्यते इत्यनिर्वचनीयतैव, अतएव ज्ञानार्थकधातुसमभिव्याहारे ज्ञानविषयत्वमेव कर्मत्वमवबुध्यते ननु ज्ञानजन्यफलाधारत्वमिति ज्ञाततानङ्गीकर्त्रापि नाशङ्कनीयम् । एतेन–आत्मनो नित्यत्वात्तत्रैवोपादाने तादात्म्येन ज्ञाततोत्पद्यते, विषयस्य तु तन्निरूपकत्वमेवेति–निरस्तम्, अतीतादौ निरूपकताया अप्यसम्भवात्, तस्या वृत्त्यनियामकत्वेन घटो ज्ञातताश्रय इति व्यवहारानुपपादकत्वाच्च । तस्माज्ज्ञातता तावदप्रामाणिक्येव, विषयता तु तदतिरिक्ताऽनुभवेन संस्पृष्टाऽपि दुर्निरूपैवेति भावः। एतच्च विषयित्वविषयत्वयोः पृथक्सम्बन्धत्वमभ्युपेत्योक्तम्, वस्तुतस्तु तस्याप्यसम्भव एवेति 'कः पुन' रिति प्रतीके पूर्वमुक्तमेव । एवं विषयताया घटज्ञानत्वादिरूपत्वे तद्घटज्ञानस्यापरघटविषयकत्वव्यवहारोऽपि स्यादिति तत्तद्व्यक्तिस्वरूपत्वे वाच्ये घटेच्छात्वेन घटज्ञानत्वेन चानुगतकार्यकारणभावभङ्गप्रसङ्ग इत्यपि द्रष्टव्यम् । द्वितीयेऽइति । विषयता ज्ञानस्वरूपमिति पक्षे इत्यर्थः । अत्र ज्ञानसिद्धिरेव विषयतासिद्धिरिति बहु समञ्जसम्, एवमतीतादिज्ञानानन्तरं 'इदानीं स ज्ञात' इति वर्तमानकालावच्छिन्नत्वस्य विषयतायामानुभविकं भानमपि सूपपादितं भवति, विषयताया विषयरूपत्वे तु तद्बाधः स्यात्, विषयताश्रयो घट इत्याधाराधेयभावानुभवश्चोपरुध्येत, विषयताया घटस्वरूपत्वे घटं घटत्वावच्छिन्ननिरूपकतानिरूपिताधिकरणताया इव विषयतात्वावच्छिन्ननिरूपकतानिरूपिताधिकरणताया अप्यसम्भवात्, विषयतात्वस्यातिरिक्तस्योपगमे तु विषयतायास्तथात्वानभ्युपगमस्यानौचित्यात्, एवं घटत्वप्रकारकप्रमानिरूपितायाः पटत्वप्रकारकभ्रमनिरूपितायाश्च घटनिष्ठविषयताया एकत्वेन तादृशभ्रमस्य प्रमात्वं प्रमाया वा भ्रमत्वमपि नेत्यन्यत्र विस्तरः । प्रसङ्गइति । उक्तकार्यकारणभावभङ्गप्रसङ्गस्याप्युपलक्षणमिदम् ।

ननु तत्तज्ज्ञानरूपाया अपि विषयताया घटत्वावच्छिन्नविषयतात्वेन विषयतात्वेन चानुगमान्नोक्तदोषः, नचैवं घटत्वावच्छिन्नविषयतात्वस्य विषयतात्वस्य चातिरिक्तत्वपर्यवसानेन विषयताया एवातिरिक्तत्वं कुतो नानुमन्यत इति वाच्यम्, विषयताया अतिरिक्तत्वेऽपि तयोरतिरिक्तताया आवश्यकत्वेन विषयतातिरिक्तताया गौरवेणामन्तव्यत्वादित्यरुचेराह किञ्चेति । तदेतदुभयं = विषयसम्बन्धितोभयम् ।

विशेषानुपादाने सम्बन्धमात्रमिदं सर्वस्यैव स्यात्, यतो न तावन्न कस्यचित्, सम्बन्धस्वरूपतात्यागप्रसङ्गात्, नापि नियतस्य, तादात्म्यापत्तेरुक्तत्वात्, नियामका-सम्भवाच्च। कारणं नियामकमिति चेन्न, तेन नियामकेन किं भवति? तदीयत्वं तस्य सम्बन्धस्येति चेत्, तदेव तदीयत्वं ज्ञानस्वभावभूतसम्बन्धस्वरूपप्रविष्टमुत बहिर्भूतं धर्मान्तरम्, यदि प्रथमः, तच्छब्दार्थोऽपि तर्हि स्वरूपप्रविष्ट इति विषयज्ञानयोः स एवाभेदप्रसङ्गः। द्वितीये च तस्य धर्मान्तरस्य विषयेणाभेदः, तच्छब्दार्थस्य विषयस्य विशेषणस्य तदीयशब्दार्थे विशिष्टरूपे प्रविष्टस्य स्वीकृतधर्मान्तरस्वभावतया निरुक्त-त्वात्। अस्त्वसौ धर्मो विषयाभिन्न इति चेत्, तथापि किमसौ स्वीकृतेन स्वभाव-सम्बन्धेन सम्बद्धो न वा, न चेत्, तद्विज्ञानं न कस्यचित्सम्बन्धि स्यात्। सम्बद्धश्चेत्, किं सम्बन्धान्तरेण आहोस्वित्स्वभावसम्बन्धेनैवासौ ज्ञानात्मकसम्बन्धसम्बन्धीयः, आद्ये तत्राप्येवं प्रसङ्गो यस्या भयेन स्वभावसम्बन्धः स्वीकृतः सा तदवस्थैवानवस्था। द्वितीयश्चेत्, ज्ञानात्मकसम्बन्धसम्बन्धीय इत्यत्र विशिष्टस्वरूपे ज्ञानरूपमपि विशेषणं प्रविष्टमिति पूर्वोक्तन्यायेनाधुनोक्तन्यायेन च ज्ञानस्यैकस्यैव द्वयमपि स्वात्मेति वाग्भङ्गि-भेदमात्रेण ज्ञानगोचरयोरभेदस्वीकार इति। एतेनान्यत्रापि स्वभावसम्बन्धः प्रत्याख्यातव्यः।

---

ताद्रात्म्येति। यस्य सम्बन्धस्तस्य ज्ञानेनेत्यादिः। ननु नियतस्य कस्यचित्सम्बन्धो ज्ञानस्वभाव-इत्यत्र न कश्चिद्दोषः, विषयः सम्बन्धे परिचायको नतु विशेषणम्, येन सोऽपि ज्ञानात्मा स्यात्, न वा सम्बन्धाव्यावृत्तिः, परिचायकस्यापि व्यावर्तकत्वादित्यरुचेराह नियामकासम्भवाच्चेति। नियतस्य कस्यचिदित्यत्र घटज्ञानीयस्यैव कस्यचित्सम्बन्धो घटज्ञानस्वभाव इत्यर्थःप्रतीयते, नच घटे घटज्ञानीयत्वं विषयविषयिभावनिरूपणं विना शक्यं निरूपयितुम्, अन्यथा पटेऽपि घटज्ञानीयत्वं कुतो न स्यात्। यत्किञ्चित्सम्बन्धस्य पटादावपि सम्भवेन सम्बन्धमात्रस्यातिप्रसक्तत्वादिति भावः। कारणं सन्नि-कर्षादिः स च घटज्ञानानुकूलो घट एवेति नियामकः। नचेन्द्रियादावपि सः, अनुयोगितादिसम्बन्ध-विशेषेणैव तस्य प्रयोजकत्वात्। प्रसङ्ग इति। नन्वत्रापि तत्पदार्थस्य विशेषणतया निष्प्रयोजनत्वा-त्परिचायकत्वमेव वाच्यमिति नायं प्रसङ्ग इतिचेत्सत्यम्, तथापि घटपरिचितत्वं यथा ज्ञानात्मकसम्बन्धे तथा घटाभावादावपीति तस्यापि घटविषयकत्वव्यवहारापत्तिरिति विषयतासम्बन्धेनैव घटस्य परिचा-यकत्वं वक्तव्यम्, नच तद्विषयत्वानिरुक्तौ शक्यं वक्तुमित्यात्माश्रयः। नच स्वरूपसम्बन्धेन घटस्य परिचायकत्वम्, अनवस्थाभयेनाभावसमवायादौ स्वरूपसम्बन्धस्यैवाभ्युपेतत्वेनोक्तदोषतादवस्थ्यात्। एतच्चोत्तरकल्पेऽपि तुल्यम्। निरुक्तत्वादिति। विशिष्टस्य धर्मान्तराभिन्नत्वोक्तौ विशेषणीभूत-विषयस्यापि तथात्वस्य स्वयोक्तत्वात् विशेषणस्य विधेयान्वयित्वादिति भावः। सम्बन्धीयः = सम्बन्ध-सम्बन्धी,. सम्बन्धीति यावत्। पूर्वेत्यादि। 'अन्योन्यविशिष्टमुभय'मित्यादिना पूर्वं 'यदि प्रथम' इत्यादिना चाधुनोक्तेन न्यायेनेत्यर्थः। एवञ्चोक्तायेव द्वित्वं पर्यवस्यति, न्यायस्यैक्यात्। द्वयम् = विषय-सम्बन्धद्वयम्। स्वात्मेति। ज्ञानात्मकसम्बन्धसम्बन्धो विषयस्य स्वभाव इति ज्ञानात्मकसम्बन्धोऽपि विशेषणतया तथा, परिचायकत्वे तूक्तम्। अत्र स्वभावसम्बन्धस्थलेऽभेदापादकं रीत्यन्तरमपि 'सम्बन्ध-न्तरस्यापि तत्स्वभावप्रवेशा'दिति प्रत्यक्षादिबाधोद्धारपङ्क्तिव्याख्यायामुक्तं द्रष्टव्यम्। एतेनेति। कपालीयत्वस्य घटसमवायस्वभावत्वे कपालस्यापि तथात्वापत्तेः, परिचायकत्वे च सम्बन्धविशेषापेक्षाया-

मनवस्थापत्तिः, क्वचित्स्वभावसम्बन्धाभ्युपगमे च तस्याविशिष्टत्वम्, स्वरूपयोरविशेषादसम्बद्धयोरपि विशिष्टप्रमाजनकत्वापत्तिरिति यावत् ।

अत्रेदमवधेयम्-विषयतायां ज्ञानीयत्वव्यवहारेण ज्ञानात्मकत्वासम्भवः, स्वं न स्वीयमित्यनुभवात्, यत्तु-तत्तद्व्यक्तित्वेन सम्बन्धित्वं ज्ञानत्वादिना च सम्बन्धत्वमितिधर्मभेदेन धर्मिभेदं स्वीकृत्य स्वस्यापि स्वसम्बन्धित्वमुपपाद्यमिति; तन्न, धर्मिभिन्नयो धर्मयोर्भेदेन धर्मिभेदस्य वक्तुमशक्यत्वात्, धर्मयोर्भेदस्यापि रूपभेदेनैव वक्तव्यत्वेनानवस्थानाच्च । वाचोभङ्ग्यन्तरेण विषयताया अतिरिक्ततापर्यवसानाच्च । एतेन-विषयताया ज्ञानात्मकत्वे घटपटाविति समूहालम्बनस्य भ्रमत्वापत्तिः, पटविषयताया अपि स्वव्यधिकरणप्रकारघटत्वावच्छिन्नत्वात्, ज्ञानस्यैकत्वा दित्यपि समर्थितम्, अत्र युक्तज्ञानात्मकविषयता घटत्वावच्छिन्नविषयतात्वेन घटमात्रवृत्तिः, पटत्वावच्छिन्नविषयतात्वेन च पटमात्रवृत्तिरितिव्यवस्थया भ्रमत्वं परिहरणीयम्, नचैतत्तादृशविषयतात्वविशिष्टयोरैक्ये सम्भवतीति तयो र्द्वित्वस्यावश्यकत्वे एकज्ञानात्मकत्वासम्भवेन ज्ञानातिरिक्तताया औचित्यावर्जितत्वात् । विषयस्वरूपा तु न विषयतेत्युक्तमेव, अतएव विषयज्ञानोभयरूपाऽपि न सा । घटनिष्ठा ह्येका साऽनुभूयमाना कथं द्व्यात्मिका स्यात् कथं वा घटनिष्ठा स्यात्, द्वयोरेकात्मतामनापद्य तद्व्यवहारप्रयोजकत्वासम्भवेनैकात्मतोपगमे परस्परमप्येकत्वप्रसङ्गाच्च । एका न काचित्सा, द्वावेव तु तत्त्वमिति चेत्तयोरसम्बद्धसाधारण्येन विशिष्टबुद्धेः कूटत्वप्रसङ्गात् । एवमुक्तसमूहालम्बनस्य भ्रमत्वमप्यत्राविशिष्टमेव, न च घटत्वावच्छिन्नविषयतात्वस्य घटतज्ज्ञानपर्याप्तत्वस्वीकारात्तेन रूपेण पटवृत्तित्वासम्भवान्न दोषः; घटत्वावच्छिन्नविषयतात्वविशिष्टस्य प्रत्येकमात्रविश्रान्तस्वरूपस्य चैक्ये तथोक्तेरसम्भवादित्याद्युक्तत्वात् । विषयताया अतिरिक्तत्वे त्वनवस्था, विषयतायाःकेवलान्वयितया तत्र तत्र विषयतान्तरस्याभ्युपगम्यत्वात् । एवं विषयतासु ज्ञाननिरूप्यत्वाख्यसम्बन्धानामप्यनिरूपितयाऽनवस्था, एवं विषयतायाः प्रतियोगिताख्यः सम्बन्धो ज्ञानेऽनुयोगिताख्यो विषयेऽतिरिक्त एव, एवं तस्य तस्यापि सम्बन्धान्तरमित्यनवस्थेति । अत्र प्रामाणिकत्वान्नेयमनवस्था दोषावहेति मुकरुज्ञा जदन्ति । तत्तु लक्षणसामान्यखण्डनादिशारदायां प्रतिविहितमेव । न च तेषां सम्बन्धानां प्रत्यक्षायोग्यताप्रयोजकरूपशून्यत्वेऽपि कदाचित्प्रत्यक्षम्, घटमहं जानामीति धीरानुभविकी ननु घटविषयतामहं जानामीत्यादिकाऽपि । किञ्चातिरिक्ताया अपि विषयताया लक्षणं वक्तव्यमेव, अन्यथा तद्विषयकप्रतीतेरपि कूटसाक्षितयाऽनादरणीयत्वात्, नच तन्निर्वक्तुं शक्यत इत्यनिर्वचनीयत्वमेव । एतेन प्रकारतादेरप्यतिरिक्तता पराकृता । यदि तु भासमानवैशिष्ट्यप्रतियोगित्वादिकं प्रकारत्वम्, निष्कर्षस्त्वेतदीयः सामान्यलक्षणाखण्डनशारदायामनुमानखण्डने द्रष्टव्य इत्युच्यते, तदापि भासमानत्वस्यातिरिक्तविषयताघटितस्यैव वाच्यत्वेन प्रतियोगित्वादेरपि स्वरूपसम्बन्धरूपताया उक्तरीत्यैवासम्भवेनातिरिक्ततायाः एव स्वीकार्यत्वेनोक्तदोषतादवस्थ्यमेव ।

यत्तु—विषयता हि विषयेषु ज्ञानतादात्म्यम् इदं रजतमित्यादिप्रतीतिस्थले इदंविषयत्वावच्छिन्नं रजततादात्म्यविषयत्वं चिद्रूपानुभवनिष्ठं भाति, रजततादात्म्यविषयताया इदंविषयतावच्छेद्यत्वे रजतविषयतापीदंविषयतावच्छिन्ना, तथा च विषयता यया विषयतया विशिष्टायां यस्यां विषयतायामवच्छेदिका सा विशेषणीभूता प्रकारता, विशेष्यभूता सांसर्गिकविषयता, तदवच्छेदकविषयता तु विशेष्यता, तथा च विषयतानिष्ठं विषयतावच्छेदकत्वं विशेष्यतात्वम्, इदं रजतमित्यादाविदंविषयताया इवेदम्पदार्थस्यापि रजतविषयतावच्छेदकत्वात्तत्रातिव्याप्तिवारणाय विषयतानिष्ठमित्युक्तम् । तादृशावच्छेदकत्वं यां विषयतां प्रति तत्त्वं तादृशावच्छेदकतानिरूपकविषयतात्वरूपं सांसर्गिकविषयतात्वम्, विषयतानिष्ठायां तादृशावच्छेदकतानिरूपकतायामवच्छेदकविषयतात्वं प्रकारतात्वम् । न च

तादात्म्यादिविषयतानिष्ठायामुक्तनिरूपकतायां रजतादिविषयता यथाऽवच्छेदिका, तथा तादात्म्यत्वादि-विषयतापीति तस्यामपि निरुक्तप्रकारतात्वापत्तिरिति वाच्यम्, तादृशनिरूपकतायाः समानाधिकरणं यत्तदवच्छेदकत्वं तस्यैव प्रकारतात्वरूपत्वात्, तादात्म्यत्वनिष्ठविषयतायाश्च तादृशनिरूपकत्वाभावात्, नहीदं रजतं जानामीतिवदिदं रजतत्तादात्म्यत्वं जानामीत्यनुभवः, न चैवमपि सांसर्गिकविषयतात्व-स्योक्तनिरूपकतामात्ररूपत्वे रजतविषयतायामपि तदापत्तिः; उक्तनिरूपकतानवच्छेदकविषयतानिष्ठ-स्यैवोक्तनिरूपकत्वस्य सांसर्गिकविषयतात्वरूपत्वात्, इदं रजतत्तादात्म्येन जानामीत्यप्यनुभवेन तु रजतविषयतायां तादात्म्यविषयतानिष्ठावच्छेदकतानिरूपकतावच्छेदकत्वस्यापि सत्त्वात्, एवञ्च प्रकार-तात्वादेरतिरिक्ततां विनापि निर्वाहसम्भव इत्यनिर्वाच्यवादिभिरुक्तम्।

तत्तु प्रक्रियामात्रम्, उक्तरीत्या विषयत्वस्यैव दुर्वचत्वे तद्घटितरूपेण प्रकारतादेर्निर्वचना-सम्भवात्, वृत्तिरूपज्ञानस्य विषयत्वमाकारः, चिद्रूपज्ञानस्य तादात्म्यम्, इच्छादेस्तु स्वजनकज्ञानता-दात्म्यमित्यननुगमाच्च, व्यवहारस्य स्थलत्रयेऽनुगतस्यैव दर्शनात्, न च विषयतात्वेनानुगमः; आकारे तस्याकारत्वरूपतया तादात्म्ये च तादात्म्यत्वरूपतयैकत्वासम्भवात्। आकारत्वस्य दुर्निर्वचतया तत्प्र-तीतेः कूटसाक्षित्वाच्च। प्रकारता ज्ञाननिरूपितेतिज्ञानीयज्ञाननिरूपितनिष्ठविषयतावच्छेदकत्वस्य प्रकारतानिष्ठविषयतायामिव प्रकारतारूपविषयतायामपि सत्त्वेन विशेष्यतात्वस्यातिव्याप्तेश्च। तस्य तत्सम्बन्धस्य चावच्छेदकतायाः संयोगादिस्थलसाधारण्यानुरोधेन स्वीकृतत्वात्। अथ विषयतावच्छेदक-तानवच्छेदकत्वे सति विषयतावच्छेदकत्वं विशेष्यतात्वं निर्वाच्यम्, उक्तस्थले च प्रकारतायाः स्वनिष्ठ-विषयतानिष्ठायां विषयतावच्छेदकतायामवच्छेदकत्वान्नातिप्रसङ्गः, न च विषयतावच्छेदकतावच्छेदकताया अपि मिथ्यात्वेन स्वसमानाधिकरणाभावप्रतियोगित्वोक्तातिप्रसङ्गो दुर्वार इति वाच्यम्, प्रतियोगिविरो-ध्यभावस्य निविष्टत्वादिति चेन्न, घटत्वावच्छिन्नविशेष्यताशालिज्ञानवानसावित्याद्यिज्ञानमादाय विशे-ष्यतावच्छेदकतावच्छेदकतायाः सम्पादनसम्भवेनासम्भवप्रसङ्गात्। विलक्षणावच्छेदकतेह निविष्यत इति तु न वक्तव्यम्, तस्या निरूपणप्रसङ्गात्। प्रतियोगिविरोधित्वञ्च प्रतियोगिसामानाधिकरण्याभाव इति यत्र प्रतियोगिसामानाधिकरण्यं तत्रापि मिथ्यात्वात्तदभाव इत्युक्तातिप्रसङ्गोऽपि तदवस्थ एव। न च प्रतियोगिसमानाधिकरणभिन्नत्वं तत्; प्रतियोगिसामानाधिकरण्यात्यन्ताभावसत्त्वे तत्समनियत-स्योक्तभिन्नत्वस्याप्यावश्यकत्वात्, अन्यथा परिभाषामात्रत्वापत्तेः। प्रतियोगिसमानाधिकरणोऽभाव इति प्रतीत्या प्रतियोगिसमानाधिकरणे एवाभावे प्रतियोगिसमानाधिकरणभिन्नत्वस्य स्वीकार्यत्वाच्च, समा-नविभक्त्यन्तपदाभिलप्यप्रतीतिमात्रस्य भेदाभेदावगाहितया अन्यत्र प्रसाधितत्वात्। प्रतियोगिसमा-नाधिकरणभिन्नत्वेऽभेदविरोधित्वविवक्षणे च विरोधविवेचने उक्तरीत्यैव दोषात्। सामान्याभावस्य निरस्तत्वेन व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकाभावमादायातिप्रसक्तेश्च। एतेन निरुक्तं सांसर्गिक-विषयतात्वमपि निरस्तप्रायम्।

यत्तु—"प्रज्ञा च तस्मात्प्रसृता पुराणी"ति श्रुत्योक्तरदेशसंयोगावच्छिन्नक्रियारूपप्रसरणस्य ज्ञाने प्रतिपादितत्वेन तस्य द्रव्यत्वावश्यम्भावे घटादौ तस्य संयोगादिरेव विषयता, अयं गन्धः सुरभि-रित्यादौ तु गन्धे विशेष्यत्वं न ज्ञानसंयोगवत्त्वरूपम्, गुणे संयोगासम्भवात्, अपि तु संयुक्तानुयोगिक-स्वविशिष्टापृथक्सिद्धिप्रतियोगित्वम्, अपृथक्सिद्धिस्तु सम्बन्धविशेषो यावत्सत्त्वमसम्बन्धानर्हत्वरूप इति केश्चिदुक्तम्।

तदतीवासत्, परोक्षस्थले विषयेण संयोगादेरसम्भवादन्यथा परोक्षापरोक्षविभागानुपपत्तेः।

ज्ञानीयफलाधारत्वं विषयत्वम्, तद्धरत्वं च विषयित्वमित्यपि दुष्टम्, तथाहि ज्ञानीयं फलं ज्ञातता वा व्यवहारो वा स्यात्, आद्येऽतीतानागतधीभ्रमाद्यर्थाव्याप्तिः, नच तत्रैव फलजनने किं नियामकमिति प्रयोजकमनुगतं शक्यनिर्वचनम्, तथात्वे वा तदेव विषयत्वमस्तु। व्यवहारश्च यदि कराकर्षणादिः, स न सार्वत्रिकः, नान्तरीयक-

---

न च तत्र सूक्ष्मप्रसरणमिति वाच्यम्, प्रसरणं हि क्रियाविशेषः, स च यद्यस्ति तर्ह्यस्त्येव, यदि नास्ति तर्हि नास्त्येव, तस्य स्थौल्यसूक्ष्मते तु नावबुध्यामह इति शिष्यधन्धनमेवेदम्।

यत्तु—ज्ञानजनकसन्निकर्षाश्रयत्वं ज्ञानविषयत्वम्, भ्रमविषयीभूतरजतादेरलीकत्वेन सन्निकर्षानाश्रयत्वेन तु तत्राकारत्वमेव विषयत्वम्, ईश्वरज्ञाने तु विषयतान्तरमेव, न च—यत्रैकेन सन्निकर्षेण "घटवद्भूतलम्" "भूतले घट" इति ज्ञानद्वयोत्पत्तिः, तत्र विशेषणविशेष्यभाववैपरीत्यप्रसङ्ग इति—वाच्यम्, घटवद्भूतलमिति ज्ञाने घटभूतलविषयतयोः भूतले घट इति ज्ञाने च भूतलघटविषयतयोः प्रकारतात्वविशेष्यतात्वाभ्यामिव विशेष्यतात्वप्रकारतात्वाभ्यां निरूप्यनिरूपकभावानभ्युपगमाद्विशेषणविशेष्यभावव्यवस्थासम्भवादिति।

तन्न, आकारत्वस्यातिरिक्तविषयत्वप्रकारतात्वादेश्च निरस्तत्वात्, अनुमित्यादिविषयेऽव्याप्तेश्च, तत्र परामर्शादिद्वारकसम्बन्धस्य साध्ये सम्भवेऽपि तस्यानुमित्यादिजनकत्वासम्भवात्, वाक्यार्थस्यापूर्वत्वाच्च, आश्रयत्वस्य तत्र तत्र पृथक्सम्बन्धैरेव पर्यवसानेनानुगमवार्ताया अप्यभावाच्च। अथान्यत्रास्तु यथातथा, प्रत्यक्षप्रमाजनकसन्निकर्षानुयोगित्वं प्रत्यक्षप्रमाविषयत्वमिति त्वनाविलमेव, प्रत्यक्षप्रमात्वावच्छिन्नजन्यताकजनकता च विवक्षितेति नायं घट इत्यादिज्ञानविषयत्वस्याव्याप्तिरिति चेन्न, प्रत्यक्षप्रमात्वस्यार्थसमाजग्रस्तत्वेन जन्यतानवच्छेदकत्वात्, संयोगस्य द्विष्ठत्वेनेन्द्रियेऽप्यतिव्याप्तेश्च। द्विष्ठोऽपि न द्वयानुयोगिक इति स्वाधारत्वव्याप्यवृत्त्यनुयोगितानिरुक्तिमपेक्षते, न च सा सम्भवतीत्युक्तम्, अन्यथा देहोपरिवर्तमानवस्त्रादेस्त्वाचप्रत्यक्षविषयत्वानापत्तेरिति।

ज्ञानीयेति। ज्ञानजन्येत्यर्थः। तद्धरत्वमिति। विषयित्वमित्यर्थः, विषयोऽस्यास्तीति विषयिपदव्युत्पत्तेरित्याशयः। तच्च विषयतानिरूपकत्वे पर्यवस्यति। ज्ञानजन्यफलजनकत्वमित्यर्थः शिरोवेष्टनेन नासिकास्पर्शमनुधावति, न च फलस्वरूपाविविक्ततादशायामिच्छादिरूपविषयिसङ्ग्रहार्थमित्थमभिधानम्, अन्यथा ज्ञानत्वमात्रोक्तौ तदसङ्ग्रहादिति वाच्यम्, फलविशेषं ज्ञाततादिकं मनसि निधायैव लक्षणस्य वक्तव्यत्वात्, तज्जनकत्वस्येच्छादावभावात्। विषयेऽपि तज्जनकत्वसत्त्वेनातिव्याप्तेश्च। नापि विषयत्वनिरूपकत्वमित्यर्थः, तादृशाधारतारूपविषयत्वनिरूपकत्वस्य फले एव सत्त्वात्। नापि तन्निरूपकफलजनकत्वं विषयनिष्ठफलजनकत्वं वार्थः, उक्तदोषादेव। विषयपदेन ज्ञानजन्यफलाधारस्यैव विवक्षणीयत्वात्, तस्मादापातत एवेदम्। अतीतादि। अतीतानागतयोरसत्त्वेन भ्रमविषयीभूतवैशिष्ट्यस्य तत्संसृष्टविशिष्टस्य चाख्यातिमतेऽलीकत्वेन तत्र ज्ञातताजननासम्भवादिति भावः। अत्र यद्वक्तव्यम्, तदनुपदं 'सा च निराकरिष्यते' इति पङ्क्तिशारदायामावेदितम्। सूक्ष्मावस्थातीतादौ ज्ञाततोत्पत्तेर्भ्रमविषयस्य च नव्यान्यथाख्यातिमतानुसारेणानलीकत्वस्याभ्युपगमेऽप्याह नचेति। उक्ताधारतावच्छेदकं नोक्ताधारत्वमेव, आत्माश्रयात्, नाप्यन्यत्, तस्य निर्वचनासम्भवात्, न च ज्ञानजन्यफलमेव लक्षणम्, तत्प्राक्क्षणे ज्ञानस्य निर्विषयत्वप्रसङ्गात्। एतच्च दूषणमुत्तरकल्पेष्वपि समानम्। न सार्वत्रिक इति। गगनादावव्याप्तिरिति भावः। अभिलापादिरूपो व्यवहारोऽपि न सार्वत्रिकः तद्योग्यता स्ववच्छेदकनिरूपणसापेक्षा। वस्तुतस्तु तदाधारत्वं तद्विषयत्वमेव

श्चान्यत्रापीत्यतिव्यापकम्। यदीच्छादिः, तदाधारत्वमात्मन इति घटाद्यव्याप्तिः, तद्विषयत्वं च तद्विषयत्वमेवापेक्षते। यश्चोपेक्षां नाम व्यवहारं नानुमनुते तन्मते कथं नोपेक्षा प्रेक्षामुपेक्षेत, हानादिव्यवहारज्ञानानामेव च कथं न निर्विषयत्वं प्रसज्येत। अथ सर्वत्र हानादिव्यवहारोपगमः, तदा व्यवहारज्ञानयोरनुपरम एव स्यात्। एतेन तत्सम्बद्धत्वं यदुच्यते यत्प्रतिबद्धव्यवहारानुकूलस्वभावं यद्विज्ञानं तत्तस्य विषयः, तद्वत्त्वं विषयित्वमिति, तदपि प्रागुक्तयुक्तिं नातिवर्तते।

"अथोच्यते य एवार्थो यस्यां संविदि भासते।
तद्वेद्यः स पृथङ्नेति वेद्यावेद्यस्य लक्षणम्" ॥

इत्येतदपि न विद्मः, यस्यां संविदीति किं संविदधिकरणम्, अथ विषयः, अथ सम्बन्धिमात्रम्, नाद्यः, घटादेस्तदधिकरणत्वानुपगमेनाव्यापनात्, यथा तथा निर्वचने

स्यादित्यात्माश्रयः। अतिव्यापकमिति। उक्तलक्षणमिति शेषः। कलधौतस्य करेणाकर्षणे तन्मलस्यापि नान्तरीयकतयाऽऽकर्षणं भवत्येव, नच कलधौतपरोक्षज्ञानविषयत्वं तस्येतिभावः। इच्छादिरिति। व्यवहार इत्यनुषज्यते। ज्ञानजन्येच्छाविषयत्वोक्तौ नाव्याप्त्यतिव्याप्ती इति तत्राह। तद्विषयत्वमिति। इच्छाविषयत्वमित्यर्थः। तद्विषयत्वं ज्ञानविषयत्वम्, ज्ञातस्यैवेच्छाविषयत्वेनेच्छाविषयतायां ज्ञानविषयत्वस्य प्रयोजकत्वम्, न च प्रयोज्यप्रयोजकयोरैक्यमिति भावः। इच्छा यत्र नोत्पन्ना तत्राव्याप्तेरप्युपलक्षणमिदम्। एवं विषयतालक्षणे विषयताप्रवेशादात्माश्रयोऽपि, तत्परतया मूलं तु न व्याख्यातम्, तद्विषयत्वमेवेति तत्पदवैयर्थ्यापत्तेः। ननु व्यवहारविशेषो न विवक्षणीयः, व्यवहारपदवत्त्वेन व्यवहाराननुगमस्य निवेशसम्भवादिति तत्राह यश्चेति। उपेक्षेति कर्तृपदम्। प्रेक्षामुपेक्षेत = स्वजनकप्रेक्षाया निर्विषयकत्वं प्रयुञ्जीत। अयम्भावः, इष्टानिष्टसाधनाविषयकवृत्तिविशेष उपेक्षेतिकेचित्, प्रवृत्तिनिवृत्त्यभावरूपैव न तु व्यवहारः सेत्यपरे, तन्मते तृणादिरूपोपेक्षणीयविषयेऽव्याप्तिः, ज्ञानजन्योपेक्षासम्बन्धिनोऽपि तस्य ज्ञानजन्यव्यवहारासम्बन्धित्वादिति। जन्यतां क्षैमिकसाधारणीमभ्युपेत्येदमुक्तम्। उपेक्षाया व्यवहारत्वमते नायं दोष इत्यत आह हानादिव्यवहारेति। हानादिरूपव्यवहारेत्यर्थः। प्रसज्येत इति। हानादौ हानाद्यन्तराजननात्। व्यवहारज्ञानयोरिति। व्यवहारकाले ज्ञानान्तरस्यावश्यकत्वात्तेनापि च सविषयकत्वोपपत्त्यर्थं व्यवहारान्तरस्य जननीयत्वादिति भावः। तत्त्वप्रदीपिकायामुद्भाविता हानादिज्ञानस्य व्यवहारत्वपक्षेऽनवस्था तु स्पष्टैव। वस्तुतस्तु वाच्यतया व्यवहारपदवत्त्वेनानुगमो वाच्यतातदवच्छेदकयोरैक्यं प्रसञ्जयति व्यवहाराधारत्वस्य तत्सम्बन्धित्वस्य वा येन केनचित्सम्बन्धेन निवेशोऽतिप्रसङ्गाद्विषयत्वसम्बन्धेन निवेशनीयत्वे आत्माश्रयश्च दुर्वार एवेति। तत्सम्बद्धत्वं = ज्ञानज्ञेयसम्बन्धः। यदुच्यते तदपि प्रागुक्तेत्यादिनाऽन्वयः। प्रतिबद्धः = सम्बद्धः। तद्वत्त्वं = विषयवत्त्वं विषयतानिरूपकत्वपर्यवसन्नम्। युक्तिं = खण्डनम्। प्रतिबद्धत्वस्य विषयताघटितत्वाद्व्यवहारस्य चाँक्तरीत्या दुर्निरूपत्वादिति भावः।

प्राभाकरकारिकायां 'अथोच्यते' इति सिद्धान्तोपक्रमे, अत्र तु पूर्वपक्षोपक्रमे। अर्थ इति स्वरूपोत्कीर्तनमात्रम्, न तु लक्षणान्तःपाति। स तद्वेद्यः = स तत्संविद्विषयः। पृथङ्नेति। न तु भासमानान्यो विषय इत्यर्थः। एतच्च 'य एवे' त्येवकारस्यात्रत्यस्य स्फुटीकरणम्। एवञ्चावेद्यस्यापि लक्षणमुक्तम्। ज्ञानाद्भिन्नो न विषयः, वेद्यवेदकभावो वा न पृथगिति व्याख्यानं तु भ्रान्तिविजृम्भितम्। संविदधिकरणमिति पृथक्पदे। विषय इति संविदित्यनुषज्यते। घटं ज्ञानमित्यादौ घटे विषयत्वप्रतीतेः। तदधिकरणेति बहुव्रीहिः। यथातथानिर्वचने इति। घटादेः स्वाधीनव्यावृत्तिमत्त्वसम्बन्धेन कथञ्चिज्ज्ञाननिष्ठत्वो-

ज्ञानत्वाद्यतिव्याप्तेश्च । द्वितीयश्चाद्याप्यनिरूपितः कथं निरूपकः, स्यात्, वैपरीत्यापाताच्च। तृतीयश्चातिव्यापकः, कारणादेरपि तत्सम्बन्धित्वात्, ज्ञानान्तरेण च भासमानत्वात्। तयैव संविदा भासमानत्वमपेक्षितमिति चेन्न, भासमानत्वस्यैव निरूप्यमाणत्वात्। यस्यां संविदि प्रकाशमानायां यः प्रकाशत एवेति चेन्न, प्रकाशमानताया एव निरूप्यमाणत्वात्। सामान्यतो विषयत्वे सिद्धे विशेषतो विषयत्वाभिधानमिदमिति चेन्न, सर्वथा विशेषानुपपत्तिद्वारा सामान्यानुपपत्तौ तद्विषयप्रमात्वस्यापि सन्दिग्धत्वात्।

ज्ञानाकारार्पणक्षमो हेतुरेव विषय इति चेन्न, आकार एव केनार्पित इति विनिगन्तुमशक्यत्वात्। न ह्याकारस्ततो ज्ञानस्वरूपादन्यः, तत्र च तथोत्पन्नानि कारणानि प्रत्येकमेव समर्थानीति कथं तेषु विशेषं विनिगमिष्यसि। यद्यपि सकलसमर्थहेत्वनुविधानमस्ति तथापि स्फुटं तावद्घटस्यानुविधानमिति तदेव तदाकारप्रयोजकमिष्यत इति चेन्न, समस्तकारणान्तरानुविधानवद्घटानुविधानस्य प्रामाणिकत्वाविशेषेण किं स्फुटत्वास्फुटत्वाभ्यां स्यात्। स्फुटानुविधानमादायैव विषयनिरुक्तिं कुर्म इति चेन्न, सर्वहेत्वनुविधानस्य न्यायतः स्फुटत्वात्। दृश्यमानमनुविधानं यस्येति चेन्न, दत्तोत्तर-

---

पगमेऽपीत्यर्थः। उक्तसम्बन्धस्य वृत्त्यनियामकत्वात्, व्यावृत्तौ स्वाधीनत्वस्य च स्वविषयकज्ञानाधीनज्ञानकत्वातिरिक्तस्यासम्भवादात्माश्रयादित्यभिप्रेत्य यथातथेत्युक्तम्। यथातथानिर्वचनीयज्ञानत्वेति पाठस्तु प्रामादिक एव, ज्ञानत्वादौ निर्वचनीयत्वाभिधानस्य सन्दर्भासङ्गतत्वात्। वैपरीत्येति। ज्ञानस्य विषयत्वे घटादेर्विषयित्वं प्रसक्तमित्यर्थः। यदि तु भासते इति पदसमभिव्याहारेण निरूपितत्वमेव सप्तम्यर्थो भासधात्वर्थान्वयी, तदाऽपि प्रकृते भासधात्वर्थस्य विषयतातिरिक्तस्यासम्भवेनात्माश्रयः स्फुट एव, न्यूनत्वपरिहाराय सतिसप्तमीपक्षोऽपि यदि विकल्प्यते तदाप्ययमेव दोषः। यस्यां संविदि भासते इत्यत्र यत्संविदधीनव्यवहारार्ह इति विवक्षायामपि दत्तमुत्तरम्। विषयनिरूप्यं हि ज्ञानं तेन ज्ञानवित्तिवेद्यो विषय इति नियमाभिप्रायेणाह यस्यामिति। प्रकाशमानताया इति। सा विषयताश्रयत्वरूपेति भावः। सिद्धे इति। प्रतीतिबलादित्यादिः। तद्विषयप्रमात्वस्य = सामान्यतो विषयताविषयकप्रतीतेः प्रमात्वस्य। यद्यपि घटमहं जानामीत्यादिप्रतीतौ विषयताविशेष एव स्फुरति नतु विषयतासामान्यं क्वचित्, तथाच तत्साधकाभाव एव वक्तुमुचितस्तथाप्यभ्युपेत्येदमुक्तम्। यदि तु विषयतासामान्यलक्षणसिद्ध्यभिप्रायेण शङ्काग्रन्थः, तदाऽपि तन्निर्वचनस्यैव प्रष्टुमौचित्येनाभ्युपगमवादेनैवोत्तरग्रन्थो द्रष्टव्यः।

बाह्यार्थवादिबौद्धोक्तलक्षणमाशङ्कते ज्ञानाकारेति। हेतुरितिस्वरूपोत्कीर्तनमात्रं न तु लक्षणे निविष्टम्, ज्ञानाकारार्पकत्वदलेनैवाहेतोर्व्यावृत्तेः, प्रत्युतानुमितौ विषयस्य हेतुताया असम्भवदुक्तिकत्वेनाव्याप्तिः स्यात्। केनेति। विषयेण वा कारणान्तरेण वेत्यर्थः। ननु ज्ञानाकारं प्रत्यसाधारणं कारणं विषय एव, तदेव च विवक्षितमित्यतआह नहीति। अन्य इति। शक्यो निरूपयितुमिति शेषः। तथाच ज्ञानं प्रत्यसाधारणकारणत्वमक्षादेरपीत्यतिव्याप्तिः। एतेनानुमितावव्याप्तिरपि सूचिता, तदाकारस्य तदात्मनो विषयाजन्यत्वात्। तथोत्पन्नानीति। क्षणिकतया कार्याव्यवहितप्राक्क्षणे एव समवधानेनोत्पन्नानीत्यर्थः। बौद्धमते सामर्थ्यमुपधायकत्वान्नातिरिच्यते, क्षणिकेन यावत एव स्वनिष्पाद्यस्य स्वद्वितीयक्षणे एव निष्पाद्यत्वात्, एवञ्च सहकारिवाचोयुक्तेरप्यसम्भवात् प्रत्येकमेवेत्युक्तम्। न्यायतः = युक्तितः। तथाच युक्तिसिद्धस्वरूपं स्फुटत्वमतिप्रसक्तिमावहत्येव। दृश्यमानमिति।

त्वात्, दृश्यमानतैव च विषयत्वानिर्वचनान्न शक्योपदर्शनेति।

ज्ञानकर्मत्वमित्यपि न, ज्ञानेन कर्मणः सम्बन्धस्य निर्वक्तव्यत्वात्, तन्निरुक्तिभङ्गश्चेश्वराभिसन्धौ ज्ञाततावादे द्रष्टव्यः।

विना सम्बन्धान्तरं यद्विशेषणं ज्ञानं स विषयः, तेन विना सम्बन्धान्तरं ज्ञानविशेष्यं विषयः, विशेष्यश्चेदं यद्विशिष्टनामकं तत्त्वान्तरं यद्गतं धर्मं गृह्णातीति। अत्रोच्यते – यद्गतं धर्मं गृह्णातीत्येतावन्मात्रमेव वा विवक्षितम्, गृह्णात्येवेति वा ? आद्ये दण्डस्यापि विशेष्यत्वापातः, तद्गतस्यापि सत्त्वादेर्धर्मस्य ग्रहणात्। नापरः, भवति हि व्यभिचारिणो धूमस्याविच्छिन्नमूलत्वादि विशेषणं तद्विशिष्टं च तत्त्वान्तरम्, न च विशेष्यस्य धर्मं व्यभिचारितां गृह्णाति। अथोर्ध्वाविरतगतिविशिष्टस्याविच्छिन्नमूलता विशेषणम्, न च तथाभूतस्य व्यभिचारिता धर्म इत्युच्यते; मैवम्, प्रथमविशिष्टः किं व्यभिचारी नवा, आद्ये स एव दोषः, द्वितीये विशेषणान्तरवैयर्थ्यम्, प्रथमविशिष्टे एव च तद्दोषावसरः। अथ यद्धर्मविशिष्टस्य विशेषणं तद्धर्मं गृह्णाति न सर्वम्, न च व्यभिचारिताविशिष्टस्य तानि विशेषणानीति चेन्न, तत्किं धूममात्रं न व्यभिचारि? ततश्च व्यभिचारिताविशिष्टस्यैव तानि तथा। भवतु व्यभिचारिता तद्विशेषणम्, परं सा न विशेष्यकोटिरितिचेन्न, अद्यापि

---

घटमहं जानामीति प्रतीतावित्यादिः। उत्तरमेवाह दृश्यमानतेति। चो ह्यर्थे।

ज्ञानेनेति। ज्ञानकर्मणोः सम्बन्धः क्रियाकर्मभाव एव वक्तव्यः, तत्र कर्मत्वं परसमवेतक्रियाफलशालित्वादिरूपं स्वप्रकाशवादेऽधस्तान्निवेदितनिरासम्, फलं च ज्ञातता वा व्यवहारो वेति विकल्पानुपदोक्तरीत्या दूषणीयम्। यदि च विषयत्वरूपमेव कर्मत्वम्, तदात्माश्रय इति भावः।

यद्विशेषणं = यस्य विशेषणम्। ज्ञातो घट इति प्रतीतिमभिप्रेत्येदम्। अयं घट इति ज्ञानं समवायेनात्मनि विशेषणमित्यात्मविषयकं स्यादित्यतो विना सम्बन्धान्तरमित्युक्तम्। ननु विशेषणत्वं भासमानवैशिष्ट्यप्रतियोगित्वमित्यात्माश्रयः, विषयताविशेषणतयोः परस्पराश्रयश्चेत्यत आह तेनेति। ननु विशेष्यत्वं भासमानवैशिष्ट्यानुयोगित्वमित्यात्माश्रयादितादवस्थ्यमित्यत आह विशेष्यश्चेति। तदिति विशिष्टस्य विशेषणादिघटितमूर्तिकत्वे पुनरपि दोषस्तदवस्थ एवेत्यतस्तत्त्वान्तरमित्युक्तम्। तदिति विशिष्टस्य विशेषणादिघटितमूर्तिकत्वे पुनरपि दोषस्तदवस्थ एवेत्यतस्तत्त्वान्तरमित्युक्तम्। गृह्णात्येवेति। शेषः। ग्रहणमत्रान्वयः। दण्डविशिष्टपुरुषस्य पुरुषगतपुरुषत्वादिधर्मान्वयित्वदर्शनात्। यद्यपि ज्ञानमर्थं गृह्णात्येवेत्यादौ क्रियासंगतत्वेऽप्येवकारस्यायोगव्यवच्छेदकत्वेनार्थविषयकत्वे ज्ञानत्वव्यापकताबोधकत्ववदत्रापि यद्गतधर्मान्वयित्वे विशिष्टपदार्थत्वव्यापकत्वबोधकत्वमेव व्युत्पत्त्या लभ्यम्, तच्च यत्किञ्चिद्धर्मान्वयित्वेऽपि सम्भवति, एवञ्च न पूर्वकल्पाद्विशेषस्तथापीह सकलधर्मान्वयित्वे एव तात्पर्यमिति नोत्तरग्रन्थस्याप्यसङ्गतिः। आद्ये इति। पुरुषे इति शेषः। ग्रहणादिति। दण्डविशिष्टपुरुषेणेत्यादिः। व्यभिचारिणः = वह्निव्यभिचारिणः। विशिष्टस्यैव धूमस्य वह्निव्याप्यत्वात्। वैयर्थ्यमिति। स एवेति। वह्निव्यभिचारिताया विशेष्यधर्मत्वेन विशिष्टस्यापि तद्ग्रहप्रसङ्ग इत्यर्थः। ननु द्वितीयविशेषणस्य व्यभिचारावारकत्वेऽपि व्यभिचारस्य प्रथमविशेषणेनैव वारणादिति भावः। ननु द्वितीयविशेषणस्य व्यभिचारावारकत्वेऽपि वस्तुतस्तद्विशिष्टत्वं प्रथमविशिष्टस्याक्षतमेवेति विशेष्यलक्षणे न काचिदनुपपत्तिरित्यरुचेराह प्रथमविशिष्टे इति। ऊर्ध्वाविरतगतिविशिष्टस्यापि शुद्धधूमविशेष्यकत्वात्तद्गतव्यभिचारितान्वयित्वापातादिति भावः। तानि = ऊर्ध्वाविरतगत्यादीनि। तथा = विशेषणानि। विशेष्यकोटिः = विशेष्यतावच्छेदिका। शुद्धधूमत्वमेव विशेष्यतावच्छेदकमिति भावः। यद्यपि वह्निव्यभिचारिधूमः प्रमेय

विशेष्याज्ञानात् । किञ्च तद्विशेषणमिति तत्सम्बन्धिमात्रं वा विशेषणतया वा सम्बन्धि ? आद्येऽतिप्रसङ्गः, द्वितीये तु तथैवान्योन्याश्रयादि । किञ्च विशेष्यत्वलक्षणो यस्तद्गतो धर्मस्तं गृह्णाति न वा, आद्येऽतिव्याप्तिः, द्वितीये गृह्णात्येवेति नियमोऽसिद्धः । किञ्च मत्समवायो ज्ञानस्येत्यत्र भवति मत्समवायस्य ज्ञानं विशेषणं सम्बन्धान्तरमन्तरेणैव, न च विषयः । न च गुणगुण्यादिविशेषणविशेष्यभावे यः सम्बन्धान्तरमन्तरेणेत्युक्त्या व्यवच्छेद्यतां नीतः स एवायं समवाय इति कथं न व्यवच्छेद्यतां प्रति-

इत्यादौ व्यभिचारित्वमपि विशेष्यतावच्छेदकमित्युक्तदोषतादवस्थ्यं तथापि विशिष्टं स्वविशेषणतानिरूपितयन्निष्ठविशेष्यतावच्छेदकधर्मान्वयि तत्त्वं विशेष्यत्वमिति विवक्षणीयम् । विशेष्येति । विशेष्यत्वेत्यर्थः । एतावता दण्डविशिष्टपुरुषस्य केवलपुरुषगतदण्डराहित्यादिधर्माग्राहकत्वेन पुरुषस्याविशेष्यत्वप्रसङ्गोऽपि समर्थित एव, शङ्कासमाधानसाम्यात् । ननु विशिष्टं स्वीयविशेषणतानिरूपितसंसर्गतातिरिक्तयदवच्छेदकधर्मान्वयि तदेव विशेष्यत्वमित्युक्तौ नात्माश्रय इत्यरुचेराह किञ्चेति । विशेषणता यन्निष्ठेहोपात्ता तद्यदि सम्बन्धिमात्रम्, तदा दण्डविशिष्टपुरुषीयविशेषणत्वस्य विशेष्यतादिना सम्बन्धिन्यपि व्यवहारप्रसङ्ग इत्याह आद्य इति । ननूक्तलक्षणे विशेषणताशब्देन विशेष्यतादिग्रहणे को दोष इति चेत्पुरुषनिष्ठविशेष्यतानिरूपितदण्डनिष्ठविशेषणतावच्छेदकधर्मान्वयित्वस्य विशिष्टेऽभावेनासम्भव एव । विशेषणतायां यावत्त्वं नोपात्तं यत्किञ्चित्त्वं तु विवक्षणीयमिति नायं दोष इति चेन्नास्माभिरपि सर्वामेव विशेषणतामादाय दोष उद्भाव्यतेऽपि तु पुरुषनिष्ठामेव तामिति विभावय । विशिष्य नामग्राहं विशेषणतोपादाने चोच्यतां दण्डी पुरुष इत्यत्र पुरुषो विशेष्यः, ज्ञातो घट इत्यत्र च घट इति किमिह लक्षणप्रणयनप्रयासेनेति भावः । वस्तुतस्त्वीदृशातिप्रसक्तविशेषणताया विशेष्यतानिरूपकत्वे मानाभाव एवेत्यसम्भवः । एवञ्चार्थानुगमासम्भवेऽपि शब्दानुगममादृत्य लक्षणप्रणयनेऽपि न क्षतिः । तथैवेति । विशेष्यत्वविशेषणत्वयोर्भासमानवैशिष्ट्यानुयोगित्वप्रतियोगित्वरूपत्वे विशिष्टस्यानतिरिक्तत्वे च यथा, तथैवेत्यर्थः । विशेषणताया विशेषणताघटितत्वेनात्माश्रयः, अनवस्था च, घटकीभूतविशेषणताया अपि विशेषणतया सम्बन्धित्वरूपत्वात् । तस्या भासमानवैशिष्ट्यप्रतियोगित्वरूपत्वे तु विषयताविशेष्यताविशेषणताज्ञानानां परस्परायत्तत्वेन चक्रकम्, एकस्य द्वारतया विवक्षायां चान्योन्याश्रयः ।

नच विशिष्टं स्वघटकाविरुद्धं यद्गतं सर्वं धर्मं गृह्णाति तद्विशेष्यमित्युक्तौ विशेषणतादिप्रवेशनिबन्धनो न दोषः, व्यभिचारित्वादिकं तु विशिष्टधूमादिघटकविरुद्धधर्ममेवेति तदग्रहणेऽपि न क्षतिरिति वाच्यम्, पुरुषे दण्डस्यापि विशेष्यत्वापत्तेः, दण्डत्वस्य विशिष्टघटकस्य विशेष्यतावच्छेदकविरुद्धत्वात्, स्वघटकयत्किञ्चिदविरुद्धत्वविवक्षणे तु व्यभिचारित्वादेरपि सर्वान्तर्गतत्वापत्तिः, तस्य धूमत्वाविरुद्धत्वात्, एवं विशेष्यत्वस्यापीत्यभिप्रेत्याह किञ्चेति । तद्गतो विशेष्यगतः । अतिव्याप्तिं विशिष्टे, तस्यातिरिक्ततामतेनोपक्रमात् । गृह्णात्येव = सर्वं यद्गतं धर्मं गृह्णाति । स्वघटकत्वस्य विशेषणतादिरूपतया उक्तरीत्या वक्तुमशक्यत्वेन स्वविषयकप्रतीतिविषयत्वादिरूपतोक्तौ विषयताविशेष्यत्वयोः परस्पराश्रयोऽपि द्रष्टव्यः ।

ननु विशेष्यत्वं विशेषणत्वं वा स्वरूपसम्बन्धविशेष एवेति सम्बन्धान्तरमन्तरेण यद्विशेषणं ज्ञानं ज्ञानविशेष्यं वा यत्, तदेव विषय इत्यत्र नोक्तदोषावकाश इत्यत आह किञ्चेति । स्वरूपसम्बन्धखण्डनञ्चेह प्रागुक्तमनुसन्धेयम् । नच विषय इति । अभावादिज्ञाने इति शेषः । अयं घट इत्यादावपि घटघटत्वसमवायस्य कथञ्चिद्भानेऽपि मदीयत्वविशिष्टसमवायस्याभानमेव । भावेइति । अवच्छेदकी-

पत्स्यते, यतोऽत्र तस्यैव विशेषणविशेष्यभावत्वादन्तरत्वासिद्धिरिति, तस्मा-त्सम्बन्धमन्तरेण ज्ञानं विशेषणं यस्येत्युक्तम्, तत्र ज्ञानं सम्बन्धमनपेक्ष्य स्वभावत एव यथाऽर्थस्य विशेषणं तथा समवायस्यापीति न कश्चिद्विशेष इति साधूक्तं मत्समवायो ज्ञानस्येत्यत्र ज्ञानविषयता समवायस्यापि स्यादिति। न च तत्र स एव समवायः सम्बन्धः; अत्रापि विशेषणविशेष्यभावस्यैव सम्बन्धत्वात्। नासौ सम्बन्धिनोऽन्यस्तादृशश्च व्यवच्छेद्य इति चेन्न, समवायेऽपि तुल्यत्वात्। संयोग-समवायौ व्यवच्छिद्येते इति चेन्न, ज्ञानाभावे तथापि प्रसङ्गात्। न तत्र ज्ञानं विशेषणं किन्तूपलक्षणमिति चेन्न, अतीतानागतयोरविषयत्वापत्तेः। भावे चिन्त्यमिति चेन्न, अभावस्याविषयत्वापातात्। ज्ञानादन्यज्ज्ञानीयञ्च यत्कारणादि तत्रापि प्रसङ्गादिति

---

भून इति शेषः। यस्य विशेषणं ज्ञानं तत्त्वमित्युक्तौ ज्ञानात्मनोर्गुणगुणितया समवायेन विशेषणविशे-ष्यभावादात्मनि घटादिज्ञानविषयत्वप्रसङ्गवारणाय सम्बन्धान्तरमन्तरेणेत्युक्तम्, तेन च समवायो व्यवच्छिन्नः, प्रकृते च समवाय एव ज्ञानसमवाययोर्विशेषणविशेष्यभावनियामकोऽन्यथानवस्थानादिति नातिप्रसङ्ग इत्याशयः। परिहरति यतइति। तस्यैव = समवायस्यैव। अन्तरत्वेति। सम्बन्धान्तर-त्वेत्यर्थः। सम्बन्धान्तरपदेन विशेषणविशेष्यभावातिरिक्तः सम्बन्ध उच्यते, समवायस्तु विशेषण-विशेष्यभावरूप एव प्रकृते, तस्यातिरिक्तस्यानभ्युपगमादिति सम्बन्धान्तरत्वाभावेन न तद्व्यवच्छेद-सम्भव इति भावः। सम्बन्धं = विशेषणविशेष्यभावातिरिक्तसम्बन्धम्। ननु विशेषणविशेष्यभावा-तिरिक्तत्वं नोपादेयम्, सम्बन्धं विनैवेत्युक्तौ समवायात्मकस्वरूपेण विशेषणविशेष्यभावादुक्तस्थले दोषाभावादित्याशयेनाशङ्क्याह नचेति। एवं सत्यसम्भव इत्याह अत्रेति। ज्ञातो घट इत्यत्रेत्यर्थः। एवं तर्हि सम्बन्ध्यतिरिक्तसम्बन्धं विनैवेति वक्तव्यम्, तादृशसम्बन्धाभावश्च ज्ञातो घट इत्यत्राक्षत एवेत्याशङ्कते नासाविति। तुल्यत्वादिति। मत्समवायो घटज्ञानस्येत्यत्रापि तादृशसम्बन्धाभाव-सद्भावादतिप्रसङ्गस्तदवस्थ इत्यर्थः। संयोगेति। प्रसिद्धत्वात्संयोगोपादानं ननु तदुपादाने प्रयो-जनम्, संयोगेन ज्ञानस्य गुणस्य क्वापि विशेषणत्वाभावादनतिप्रसक्तेः, उक्तस्थले तु स्वरूपसम्बन्धेन समवायरूपेणैव विशेषणविशेष्यभाव इति भावः। तथापि = समवायं विनेत्युक्तावपि। ज्ञानाभावस्य ज्ञानमनुयोगितासम्बन्धेनैव विशेषणमिति तस्य घटादिज्ञानविषयत्वप्रसङ्गः। सम्बन्धान्तरमन्तरेणेत्यु-क्तावपीदं तुल्यम्, अनुयोगिताया अनतिरिक्तत्वात्। नेति। विद्यमानस्यैव विशेषणत्वादुक्तं ज्ञानस्य भेदेऽत्यन्ताभावे चाति-सप्रागभावसमये च प्रतियोगिनोऽविद्यमानत्वादिति भावः। एवं सत्यपि ज्ञानस्य भेदेऽत्यन्ताभावे चाति-प्रसङ्गो यद्यपि, अन्यत्र विद्यमानस्यापरत्रात्यन्ताभावात्, तथापि तत्सत्त्वे एव दोषान्तरमाह अतीतेति। विशेषणत्वमिव विशेष्यत्वमपि विद्यमानस्यैवेति भावः। भावे = विद्यमानभावे। विद्य-मानविषय एव लक्ष्य इत्यतीतादावव्याप्तिर्न क्षतिकरी, ज्ञानाभावे च नातिप्रसङ्गः, यद्विशेषणमित्यनेन विद्य-मानस्य भावस्य विशेषणमिति विवक्षितत्वात्। नचैवं घटाभाव इत्यादिज्ञानविषयेऽभावेऽव्याप्तिः, विद्य-मानस्य भावस्यैव लक्ष्यत्वात्। अभावस्येति। अतीतानागतस्याप्युपलक्षणमिदम्। पातादिति। विद्यमानभावात्मकविषयमात्रलक्षणत्वाभ्यु-पगमेऽप्यतिव्याप्तिरेवेत्याह ज्ञानादिति। घटादिज्ञानस्य समवायेन प्रमातर्येव विशेषणत्वेन तदन्यस्मिन् तत्स्थलीयलक्षणान्तरस्य निर्वक्तुमशक्यत्वादिति भावः। यत्र क्वापि विशेषणत्वं समवायं विनैवेति घटाद्यतिरिक्तस्यापि तस्य घटादिज्ञानविषयत्वप्रसङ्गः, सम्बन्धान्तरमन्तरेणेत्युक्तावपि जन्यजनकभाववाच्यवाचकभावादिसम्बन्धस्य स्वरूपात्मकत्वेन व्यवच्छे-

कृतं विस्तरेण। नच ज्ञानाकारतायां गोचरस्य नास्त्येव ज्ञानगोचरयोर्भेदः। प्रतीतिविरोधात्, भेदमनिच्छता च स प्रतिषेद्धुमप्यनर्हं इति। इति विषयविषयिभावखण्डनम्।

## भेदखण्डनम्।

वक्तव्यस्तर्हि कोऽसौ भेदो नाम? स हि स्वरूपं वा स्यात्, इतरेतराभावो वा, धर्मान्तरं वा, नाद्यः, भिन्नेऽभिन्नप्रमानुपपत्तिप्रसङ्गात्, भ्रान्त्यापि धर्मिस्वरूपावगाहनात्, अन्यथा कस्याभेदं सा भ्रान्तिरुल्लिखेत्। ननु निःसम्बन्धित्वेन व्यवस्थितेषु तरुदारुप्रभृतिषु नानाधारोऽन्य एवावयव्यारोप्यते, येषु चारोप्यते ते भेदेनैव भान्ति,

---

यस्वाभावेन चक्षुरादावुक्तप्रसङ्गो निर्बाध एव, एवं कालिकादिसम्बन्धमादायापि घटज्ञानादेरुदासीनविषयकत्वप्रसङ्गः। एतेन कारणादीत्यादिपदं व्याख्यातम्। ज्ञानादन्यदित्युक्तिस्तु 'नच ज्ञानाकारतायां'मित्यादिग्रन्थावतारणद्वारा भेदखण्डनावतारणायैवेति। ज्ञानाकारतायामिति। घटतज्ज्ञानयोर्भेदे हि घटज्ञानं घटमेव विषयीकरोति नतु पटमित्यत्र न नियामकम्, भिन्नत्वाविशेषात्, नच विषयविषयिभाव एव नियामकः, तन्नियामकस्यैव पृष्टत्वात्, तस्योक्तरीत्या दुर्निर्वचत्वाच्चेत्यभेद एव परिशेषान्नियामको वक्तव्य इति ज्ञानाकारत्वं ज्ञेयस्य सिद्ध्यतीति भावः। प्रतीतीति। घटस्य ज्ञानमिति धीर्नतु घटो ज्ञानमिति, अान्तरं ज्ञानं घटश्च बाह्य इति धीर्न तु विपरीतेति भावः। एतेन ज्ञानाभिन्नत्वमेव विषयत्वमित्यपि निरस्तम्। ननु युक्तिबलादभेदसिद्धौ भेदबुद्धेर्भ्रमत्वमेव वक्तव्यमित्यत आह भेदमिति। तार्किकमतेनेदम्, तन्मते क्वचित्प्रमितस्यैवापरत्र निषेधस्य भ्रमविषयत्वस्य वाऽङ्गीकारात्, नच ज्ञानानां क्षणिकतया परस्परं भेदः साकारवादिनानुमन्यते एवेति ज्ञानभेदस्य ज्ञानान्तरे प्रसिद्धस्य गोचरे निषेधसम्भव इति वाच्यम्, गोचरभेदस्य क्वचिदप्रसिद्धत्वेन तन्निषेधासम्भवात्, नच ज्ञानभेदस्य गोचरे निषेधेऽर्थादेव गोचरभेदो ज्ञाने निषिध्यत इति वाच्यम्, गोचरभेदाप्रसिद्धावर्थापत्त्यापि तन्निषेधस्यावगाहनानुपपत्तेः, नच ज्ञानगोचरयोरैक्ये ज्ञानभेद एव गोचरभेद इति वाच्यम्। ऐक्यसिद्धिं विनैवं वक्तुमशक्यत्वादितिभावः। यदि तु परेण कल्पितभेदोऽभ्युपेयते, तादृशस्यैव च परमार्थतो निषेधः स्वीक्रियते, प्रतीतत्वमेव निषेधाद्यौपयिकं नतु प्रमितत्वम्, गौरवान्मानाभावाच्च, भेदस्य युक्त्या निरूपणासम्भवस्यापीत्थं कल्पनायां सहकारित्वाच्च, ज्ञानस्य च स्वरूपतो नाशाद्यननुभवेनौपाधिकरूपेणैव च तदनुभवेनैक्यमेव, तत्तादात्म्यमेव च विषयत्वम्, तच्चाप्यासिकमनिर्वचनीयमेवेत्यादिकमुच्यते, अतएव "नो ग्राह्यभेदमवधूय धियोऽस्ति वृत्तिस्तद्बाधने बलिनि वेदनये जयश्री" रित्युक्तमुदायनाचार्यैरात्मतत्त्वविवेके, अधिकं त्वनिर्वाच्यवादे दर्शनसर्वस्वे आलोचयिष्याम इति, तदा तार्किकैः मौनमुद्रायास्त्यागे नोत्सहनीयमिति। इति खण्डनशारदायां विषयविषयिभावखण्डनम्।

प्रत्यक्षादिबाधोद्धारेऽधस्तात्कृतेऽपि भेदनिरासे विशिष्यात्मतत्त्वविवेकस्थं भेदमण्डनं खण्डयितुं प्रतिषेध्यतायां सत्यताया अतन्त्रत्वोपपादनाभिप्रायेण सौगतमुखेनैवोपक्रमते वक्तव्य इति। स्वरूपादेर्भेदत्वसम्भावनायां बीजं प्रागुपवर्णितम्। धर्मान्तरं = वैधर्म्यम्। पृथक्त्वादिकं तु नात्मतत्त्वविवेके चर्चितम्, नवोक्तपक्षत्रितयदूषणासंस्पृष्टमिति तदनुल्लेखः। निस्सम्बन्धित्वेन व्यवस्थितेष्विति। एतदनारब्धावयविस्वप्रयोजकलाभायोक्तम्। नानाधार इति। तर्वादीनां नानात्वेन तन्नियतधर्मभ्रमसम्भावकतयेदमुक्तम्, अन्यथाऽवयविनो नानाधारत्वनियमात्तदुक्तेर्व्यावर्तकत्वात्। अवयव्यारोप्यत इत्यनेन तादात्म्येनावयविभ्रमो विवक्षित इति भ्रमं निराकर्तुमाह येष्विति। भेदेनैव = स्वरूपात्मकभेदवत्तयैव,

किन्त्वनारब्धावयविषु तेष्वारब्धावयवित्वतया विभ्रम्यते। मैवम्–तेषां प्रागनुदाहरणीकृतत्वात्, अतस्मिन् स एवायमिति प्रत्यभिज्ञाभासार्थानां दृष्टान्तत्वेनेष्टत्वात्, तत्रापि धर्मान्तरारोपाभ्युपगमे तादात्म्याभावस्य संसर्गाभावप्रवेशापत्तेः । नचैवमप्येष्टव्यमेव, तथापि स्वरूपभेदग्रहे तत्राभेदस्य धर्मस्याप्यशक्यारोपत्वात् ।

नापि द्वितीयः, प्रतीतावन्योन्याश्रयप्रसङ्गात् । प्रतियोगिरूपत्वेनाप्रतीतावधिकरणप्रतीतिरधिकरणस्वभावत्वेनास्मृतौ प्रतियोगिस्मृतिश्च तद्ग्रहणकारणमतः क्वेतरेतराश्रय इति चेन्मैवम्, एवं हि सति कुम्भः पटो न भवतीत्यत्र यथैव तस्याभावस्य प्रतियोगितया पटो निषिध्यते तथा कुम्भोऽपीति सोऽपि कुम्भात्मतया निषिद्धः प्रसज्येत । वस्तुतोऽन्योन्याभावस्य कुम्भप्रतियोगिकत्वेऽपि कुम्भस्यापटत्वनिरूपणकाले कुम्भस्य प्रतियोगिता नापेक्ष्यते किन्त्वाश्रयतैवेति कुम्भाप्रतिक्षेपः, पटस्य तु प्रतियोगितैवापेक्ष्यते न त्वाश्रयतेति कुम्भवत्पटस्यापि न संग्रहापत्तिः । यद्यप्यन्योन्याभावस्योभयप्रतियोगिकता तथाप्यन्या कुम्भाश्रयताऽन्या च पटाश्रयता, अन्या कुम्भप्रतियोगिकताऽन्या च पटप्रतियोगिकता, तेनान्योन्याभावस्योभयप्रतियोगिकत्वे चोभयाश्रितत्वे च नोभयोरपि संग्रहप्रतिक्षेपविरोधापत्तिः, नाऽपि च प्रतियोगित्वस्यानुयोगिनो भेदोपजीवनेऽन्योन्याश्रयोऽनुपजीवने च स्वस्मादपि भेदग्रहापत्तिः प्रसज्यते, यतः स्मर्यमाणस्य

---

तथा च तद्ग्रहसत्त्वे एकवस्तुनस्तादात्म्येन बहुषु नारोपसम्भवः। तर्हि किं विवक्षितमत आह किन्त्विति ।
आरब्धावयवितयेति । स्वरूपसम्बन्धेनावयव्यारम्भकत्वप्रकारकभ्रमे भेदग्रहो न प्रतिबन्धकोऽपि
त्वभेदग्रहे एव, स चात्र नास्तीति भावः । प्रत्यभिज्ञाभासः = भ्रमात्मकप्रत्यभिज्ञा, तद्विषयाणाम् ।
धर्मान्तरं चैत्रत्वादि । पत्तेरिति । स एवायमिति प्रतीतेर्धर्मविशेषारोपरूपत्वे प्रतियोग्यभावान्वयी
तुल्ययोगक्षेमाविति न्यायेन स नायमित्यत्रापि धर्मान्तरस्यैव निषेध्यत्वादभेदस्य चानिषेध्यत्वादिति
भावः । अभेदस्य धर्मस्येति । चैत्रत्वादिरूपासाधारणधर्मस्येत्यर्थः । घटपटयोर्भेदबुद्धौ सत्यां घटः
पट इतिवद्घटे पटत्वमित्यस्यापि बोधस्यानुभवविरुद्धत्वादिति भावः । वस्तुतस्त्वन्योन्याभावसंसर्गाभा-
वयोर्भेदस्यानुभवसिद्धत्वेन तयोरैक्ये नेष्टापत्तिर्युक्ता, तथाच भेदग्रहेऽभेदभ्रमानुपपत्तिर्दुर्वारैव । एतच्चेदं
तद्वा नवेति संशयानुपपत्तेरप्युपलक्षणम् । अत्र केचित् स्वरूपग्रहेऽपि तद्भेदस्याग्रहात्संशयविपर्ययौ
समर्थयन्ते, तत्तु पूर्वं भेदखण्डनशारदायां प्रतिविहितमेव। दूषणान्तराणि च तत्रैवोदीरितानि वक्ष्यन्ते च।
प्रतीताविति । भेदप्रतीतिं विना न प्रतियोग्यनुयोगिभावप्रतीतिः, तां विना च न भेद-
प्रतीतिरिति भावः । कुम्भोऽपीति । वस्तुगत्याऽन्योन्याभावस्योभयप्रतियोगिकत्वादिति भावः ।
प्रतियोग्यनुयोगिभावग्रहापेक्षायान्तु यस्य प्रतियोगितया पूर्वं ग्रहस्तत्प्रतियोगिकतयैव ततः परं भेदग्रह
इति न स्वस्मादपि स्वभेदग्रहप्रसङ्ग इति प्राह वस्तुत इति । प्रतियोग्यनुयोगिभावग्रहापेक्षायामिव-
स्यादिः । अपटत्वेति । पटभिन्नत्वेत्यर्थः । अपेक्ष्यते = ज्ञायते । अप्रतिक्षेपः संग्रहोऽनिषेध इत्यनर्था-
न्तरम् । आशङ्कते यद्यपीति । पटप्रतियोगिकता भेदे कुम्भाश्रयतामपेक्ष्यैव, कुम्भप्रतियोगिकता तु तत्र
पटाश्रयतामपेक्ष्यैवेत्यन्योन्याभावस्य वस्तुगत्योभयप्रतियोगिकत्वेऽपि न स्वस्मात्स्वभेदप्रसङ्ग इत्यर्थः ।
ननु स्वस्मात्स्वभेदप्रसङ्गो न मया दीयतेऽपितु स्वस्मात्स्वभेदग्रहणप्रसङ्ग एव, स चोक्तरीत्या प्रतियोगि-
त्वानुयोगित्वज्ञानस्य भेदज्ञानकारणत्वोपगमे एव शक्यवारण इति तद्वस्थोऽन्योन्याश्रय इत्यत आह
नापिचेति । प्रतियोगित्वस्येत्यनुयोगित्वस्याप्युपलक्षणम्, अनुयोगिन इति च प्रतियोगिनोऽपि, तथाच

प्रतियोगिताऽनुभूयमानस्य चाश्रयतेत्येतावन्मात्र एवोक्ते स्वस्मादपि भेदग्रहानापत्तिः, नचैवं स एवायमित्यत्रापि भेदग्रहप्रसङ्गः, वास्तवतत्सत्त्वासत्त्वाभ्यां विशेषात्। मैवम्–तथाहि–किमधिकरणप्रतीतिरधिकरणतया प्रतीतिरुत वस्तुगत्याऽधिकरणस्य स्वरूपेण विवक्षिता. आद्ये किमीयाधिकरणतया घटादेः प्रतीतिस्तस्य कारणं स्यात्? न तावदन्योन्याभावाधिकरणतया, दण्डाप्रतीतौ दण्डाधिकरणताया इव तदप्रतीतौ तदधिकरताया: प्रत्येतुं पूर्वमशक्यत्वात्, विशिष्टप्रतीत्या विशेषणस्यावश्योल्लेख्यत्वात्, विशिष्टस्य विशेषणघटितमूर्तित्वात्। नापि यस्य कस्यचिदधिकरणतया प्रतीतिस्तत्कारणम्, यत्र भिन्नेऽभेदभ्रमस्तत्र धर्मिणः सत्त्वाद्याधारतया प्रतीतावपि तदनुत्पत्तेः। न तन्मात्रात्तदुत्पत्तिः, अपि तु प्रतियोगिस्मृतिसहितात्, सा च तदा नास्तीति तदनुत्पत्तिरिति चेन्न, प्रतियोगिस्मृतिरपि किं प्रतियोगितया स्मृतिः, उत वस्तुगत्या प्रतियोगिनः स्वरूपेणेति विकल्प्यत्वात्, आद्ये किमन्योन्याभावप्रतियोगितया यस्य कस्यचित्प्रतियोगितया वा, नाद्यः, अन्योन्याभावाप्रतीतौ तदनुपपत्तेः पूर्ववत्। नापि द्वितीयः, तस्य वस्तुगत्या भिन्नस्याभिन्नतया भ्रमविषयीकृतस्य स्वदेशेतरदेशादावसत्त्वेन प्रतीयमानत्वे स्वाभावप्रतियोगितया प्रतीतावन्योन्याभावप्रतीत्यनुत्पत्तेः। प्रतियोग्यनुभूतिः सा न स्मृतिरिति चेन्न, स्मृतित्वस्याप्रयोजकत्वात्, अन्यथाऽनुभूयमानयोरन्योन्याभावाप्रतीतिप्रसङ्गात्, अत्रान्तराऽलं स्मृतिकल्पनया नान्योन्यात्मानाविमावित्यनुभवबाधितया। प्रयोजकत्वेऽपि वा स्मृतित्वस्य योऽसौ तत्र नासीत्सोऽयमिति स्मर्यमाणाभावप्रतियोगित्वेऽपि वस्तुगत्या भिन्नस्याभिन्नतया भ्रमेणोल्लिख्यमानस्यान्योन्याभावप्रतीत्यनुदयात्। दोषाभावोऽपि हेतुः स भ्रमोदाहरणे नास्तीति चेन्न, पूर्वदृष्टे स्मृतिमतस्ततो वस्तुगत्याऽन्यस्यैवानन्तरं

---

घटपटयोःप्रतियोग्यनुयोगिभावग्रहस्य तयोर्भेदग्रहोपजीवनेहत्यर्थः पर्यवस्यति। नापत्तिरिति। घटो न पट इत्यादौ भेदग्रहप्राक्क्षणे यस्य स्मृतिस्तस्य नानुभव इति भावः। प्रसङ्ग इति। स्मर्यमाणस्यैवानुभूयमानत्वादिति शेषः। तत्सत्त्वेति। भेदसत्त्वेत्यर्थः। दोषसद्भावे इष्टापत्तिरेव, अन्यथा तु धियां प्रमात्वस्यौत्सर्गिकत्वेन न भ्रमसम्भव इत्याकूतम्। स्वरूपेण = घटत्वादिना किमीयेति। किन्निरूपितेत्यर्थः। तत्कारणम् = भेदप्रतीतिकारणम्। अभेदभ्रम इत्यापत्तावनिष्टत्वपरिहारार्थम्। एवं परतोऽपि। तदनुत्पत्तेः = भेदग्रहानुत्पत्तेः। तन्मात्रात् = यत्किञ्चिन्निरूपिताधिकरणतया प्रतीतिमात्रात्। तदुत्पत्तिः = भेदग्रहोत्पत्तिः। सा = प्रतियोगिस्मृतिः। तदा = अभेदभ्रमदशायाम्। तस्य = घटादेः। भिन्नस्येति। घटान्तरादित इत्यादिः। प्रतीयमानत्वे = प्रतीयमानत्वदशायाम्। स्वाभावप्रतियोगितया = वस्तुगत्या स्वप्रतियोगिको योऽत्यन्ताभावस्तत्प्रतियोगितया प्रतीतौ सत्यामपि। सा = अयं घटस्तत्र नास्तीत्यादिप्रतियोगिताप्रतीतिः। स्मृतिः = प्रतियोगिस्मृतिः। प्रतियोग्यनुभवानन्तरं तत्स्मृतिकल्पनामाशङ्क्याह अत्रेति। अन्तरा = प्रतियोग्यनुभवभेदग्रहयोर्मध्ये। अलमितिच्छेदः। बाधितयेति हेतुगर्भम्, तत्र प्रतियोगिस्मरणे 'इमावि'ति न स्यात्। प्रौढिवादेनाह प्रयोजकत्वे इति। स्मर्यमाणाभावप्रतियोगित्वेऽपि = स्मर्यमाणस्य प्रतियोगिविशेषिताभावस्य प्रतियोगित्वेऽपि, यत्किञ्चिन्निरूपितप्रतियोगितया स्मर्यमाणत्वेऽपीति यावत्। दोषाभावः = प्रतिबन्धकाभावः। हेतुः = भेदग्रहे हेतुः भ्रमेति। अभेदभ्रमेत्यर्थः। नास्तीति। अभेदभ्रमस्यैव भेदग्रहप्रतिबन्धकस्य सत्त्वादिति भावः। एवं सत्यभेदग्रहोत्तरं भेदग्रहो मा भूत्, अभेदग्रहोत्पत्तिक्षणे तु स स्यादेव, अभेदग्रहस्तु संशयात्मको वा निश्चयात्मको वेत्यन्यदित्याह पूर्वदृष्टे इति। प्रतियोगितया पूर्वदृष्टविषयकस्मृतिमत इत्यर्थः। बुद्ध्यापत्तेरित्यन्वयः।

दृष्टस्य पूर्वदृष्टाद्भिन्नमभिन्नं वेत्यनिरूपितस्यापि सम्भवेन तत्रेतरेतराभावबुद्ध्यापत्तेः। बुध्यत एवेति चेन्न, पश्चात्तत्संशयदर्शनात्। विशेषधीरपि तत्र हेतुरिति चेन्न, विशेषत्वस्यान्योन्याभावनिरूपणं विना दुर्निरूपत्वात्। एतेन वस्तुगत्या प्रतियोगिनः स्वरूपेण स्मृतिः सहकारिणीत्यपि व्युदस्तं वेदितव्यम्, वस्तुगत्याऽधिकरणस्य स्वरूपेण प्रतीतिः सहकारिणीत्यपि, भिन्नस्याभिन्नतया वृक्षादेः प्रतीयमानस्यान्योन्याभाववत्तया ग्रहणप्रसङ्गात्।

---

ततः = पूर्वदृष्टात्। अनिरूपितस्य = अनिश्चितस्य। तत्र = पूर्वदृष्टानन्तरदृष्टयोः। बुध्यते = निश्चीयते। इतरेतराभाव इतिशेषः। पश्चात् = उक्तस्मृत्याद्यनन्तरम्। कदाचिद्भेदभ्रमदर्शनादित्यपि द्रष्टव्यम्। भेदनिश्चयोत्तरं भेदसंशयस्य तदभावनिश्चयस्य वाऽसम्भवादितिभावः। तत्र = उक्तसंशयभ्रमसामग्रीस्थलीयभेदग्रहे। तदन्यावृत्तित्वविशिष्टधर्मवत्तादर्शनं तदीयविशेषदर्शनमित्यभिप्रेत्याह विशेषत्वस्येति। विशेषत्वस्यात्यन्ताभावघटितत्वेऽपि घटपटयोर्भेदाभावसंशयनिश्चययोःसत्त्वे तद्धर्मयोर्विशेषत्वग्रहस्याननुभवेन भेदनिश्चयस्य तत्र हेतुत्वेऽन्योन्याश्रयात्, यद्व्यतिरेकसंशयनिश्चययोर्यत्प्रतिबन्धकत्वं तन्निश्चयस्य तद्धेतुत्वात्। एवमादिनैव हेतुना व्यधिकरणत्वेन ज्ञातरूपाभ्यां वस्तुगत्या वा व्यधिकरणाभ्यां रूपाभ्यां प्रतियोग्यनुयोगिग्रहस्य न भेदग्रहहेतुत्वसम्भवइत्यावेदितं प्रत्यक्षादियाथोद्धारशारदायाम्। ननु विशेषदर्शनं न हेतुः, संशयोत्तरं विशेषदर्शनासत्त्वदशायां संशयात्मककोट्युपस्थित्यादितो विपरीतनिश्चयोत्तररूपसंशयसामग्रीबलात्संशयस्यैवोत्पत्तेरौचित्येन विशिष्टनिश्चयोत्पत्त्यापत्तेरयोगात्। विपरीतनिश्चयोत्तरमपि तदयोग एव, तस्य दोषविशेषाद्यजन्यविशिष्टज्ञानसामान्यं प्रति प्रतिबन्धकत्वात्, एवञ्च प्रकृते संशयाद्यात्मकविपरीतग्रहसामग्र्या एव भेदनिश्चयप्रतिबन्धिकायाः सत्त्वेन न तदापत्तिः, आद्यसंशयादेः प्रतिबन्धकतावादिनाऽपि तदाद्यक्षणे आपत्तिवारणाय तत्सामग्र्याः प्रतिबन्धकताया वक्तव्यत्वादिति चेन्न, संशयसामग्र्या विपरीतकोट्युपस्थितिधर्मिज्ञानविशेषादर्शनादिरूपतया तस्याः प्रतिबन्धकत्वे तदभावस्य विशेषदर्शनादिरूपस्य कारणतापर्यवसानेनोक्तदोषतादवस्थ्यात्। नचात्र वस्तुगत्या विशेषस्य दर्शनं विवक्षितं ननु विशेषत्वेनेति वाच्यम्, इदं तद्वा न वेत्यादिसंशयाद्यभावापत्तेः, इदन्त्वादेरपि वस्तुगत्या विशेषत्वात्, नच संशयाद्यभावस्य कार्यसहवर्तित्वेन हेतुतायामुक्तसंशयाद्याद्यक्षणे न भेदनिश्चयापत्तिसम्भव इति वाच्यम्, संशयोत्पत्तिकाले कथञ्चित्तद्विषयकाप्रामाण्यग्रहसत्त्वे निश्चयापत्तेः, अगृहीताप्रामाण्यकसंशयाभावस्य तदाऽक्षतत्वात्। त्रियदन्ते च प्रतिबन्धकाभावस्य कार्यसहवर्तित्वेन हेतुतायाम्। किञ्च संशयाभावस्य कार्यसहवर्तित्वेन हेतुत्वसिद्धिं विना संशयसामग्र्याः प्रतिबन्धकतासिद्धि-निवारणासम्भवेन तादृशहेतुत्वसिद्ध्यैव संशयस्य प्रतिबन्धकत्वसिद्धिः, तत्सिद्धौ च तादृशहेतुत्वसिद्धिरित्यन्योन्याश्रयात्, नच तत्सिद्धिरेव तत्सिद्धिः, कारणीभूताभावप्रतियोगित्वशरीरे कार्यसहवर्तित्वस्याप्रविष्टत्वादिति। सहकारिणीत्यपीति। व्युदस्तं वेदितव्यमित्यनुषङ्गः। एतेनेत्यतिदिष्टं स्पष्टयति भिन्नस्येति। ग्रहणप्रसङ्गादिति। ननु "प्रतियोगिरूपत्वेनाप्रतीतावधिकरणप्रतीतिः, अधिकरणस्वभावत्वेनास्मृतौ प्रतियोगिस्मृतिश्चेतरेतराभावग्रहकारण" मित्यनेनेदं विवक्षितम्—इतरयोरधिकरणप्रतियोगिनोरितरत्वेन ज्ञानं न भेदप्रत्यक्षे कारणम्, येनान्योन्याश्रयात्माश्रयौ स्याताम्, किन्तु भिन्नाभ्यां घटत्वपटत्वादिरूपाभ्यां प्रतियोग्यनुयोगिनोर्ज्ञानमात्रं कारणम्, स्मृतिपदद्वयं ज्ञानमात्रपरम्, अधिकरणतावच्छेदकवति प्रतियोगितावच्छेदकग्रहस्तु भेदधीप्रतिबन्धकः, तेन घटो द्रव्यमितिग्रहे द्रव्यत्वेन प्रतियोगिग्रहाद्घटो न द्रव्यमिति न प्रत्यय इति चेन्न, इदं तद्वा नवा, इदं तदेवेति संशयविपर्ययोरभावा-

नापि तृतीयः, अभावस्य निर्धर्मकतापत्ते तस्य विश्वाभिन्नत्वप्रसक्तौ विश्वस्याप्यभावरूपत्वेन निर्धर्मकतया धर्मलक्षणान्योन्याभावविरहिण्ये ऐकरूप्यापत्तेः। अभावे धर्माभावात्स्वरूपमेव भेद इति चेन्न, योऽसौ भेदस्तस्य स्वात्मा, स किं कस्मादपि भेदः, उत निष्प्रतियोगिक एव, न तावन्निष्प्रतियोगिक एव, प्रमाणाभावेनासत्त्वप्रसङ्गात्, योऽसौ भेदव्यवहारोऽस्ति स कस्मादपि, न तु नीलव्यवहारवन्निष्प्रतियोगिकः। स च निष्प्रतियोगिको नोपपद्यते, निष्प्रतियोगिकोऽपि वा यद्ययं सप्रतियोगिकव्यवहारं करोति, तदा प्रतियोगिनियमो न स्यादिति स्वस्मादपि भेदव्यवहारं कुर्यात्। स्वस्मात्कथं भेदः सम्भवतीतिचेत्तर्हि किं भिन्नाद्भेदः? नन्वेवमनवस्था स्यात्। नापि प्रथमः। वक्तव्यं हि तद्यस्मादसौ भेदः, न तावत्सर्वस्मात्, स्वात्मनोऽपि भेदप्रसङ्गात्, नापि घटादेः, घटादिना सह तस्यावध्यवधिमद्भावो योऽसौ स ह्यर्थान्तरं वा स्यात्, स्वरूपमेव वा, आद्ये तस्यापि भेदावधित्वेन तत्राप्येत्रमेवानुयोगे यद्येतदेवोत्तरमनवस्था स्यात्. अथ तत्र स्वरूपमेव, तर्हि "प्रथमस्य तथाभावे प्रद्वेषः किन्निबन्धन" इति प्रथमत एव स्वरूपं वाच्यम्, तदपि न, तथाहि यदि घटादिभिः सार्धमवध्यवधिमद्भावसम्बन्धोऽस्य स्वरूपम् प्रतियोगिना सार्धं तदभावस्यास्य निषेध्यनिषेधभावलक्षणः सम्बन्धः स्वरूपं न स्यात्, स्वरूपस्यैकत्वात्, अनयोश्च सम्बन्धयोर्भिन्नत्वात्, नहि यदेव प्रतियोगिनः सकाशाद्भिन्नत्वं तदेव तन्निषेधत्वमिति सम्भवति, ततो व्यतिरिक्तत्वस्यानिषेध्यसाधारणत्वात्, निषेध्यनिषेधभावस्य च नियतवस्त्वपेक्षित्वादिति। एवं

---

पत्तेः, इदन्त्वतत्त्वयोः परस्परभिन्नत्वात्। एवमयं घटस्तद्धटो नवेत्यादिसंशयादेरपि। एतद्घटत्वतद्घटत्वादेर्भिन्नत्वात्। प्रतिबन्धकमादाय प्रत्यवस्थानं तु निराकृतम्। अधिकं तूक्तं बाधोद्धारशारदायाम्।

तृतीयः = वैधर्म्यं भेद इतिपक्षः। निर्धर्मकतापक्षे = भेदकधर्मराहित्यपक्षे, तेन प्रमेयत्वादेः केवलान्वयितयाऽभेदकधर्मस्य तत्र सत्त्वेऽपि न क्षतिः, अन्यथा तस्यालीकत्वपक्ष एव पर्यवसानेनाग्रिमग्रन्थासङ्गतेः। भेदकधर्मवत्त्वञ्च भावत्वव्याप्यमित्यभिमानः। धर्मलक्षणेति। वैधर्म्यरूपेत्यर्थः। तस्य = अभावस्य। व्यवहारस्य निष्प्रतियोगिकत्वाभावस्य फलमाह सचेति। ततश्च स इत्यर्थः। सः = भेदः। कथं भेदइति। तथा च स्वस्माद्भेदव्यवहारोऽपि न शक्य आपादयितुम्, तत्र भेदवत्त्वस्य प्रयोजकत्वादित्यभिमानः। अनवस्थेति। व्युत्पादितेयं बाधोद्धारे। तस्य = भेदस्य। भेदीयप्रतियोग्यनुयोगिभाव एव संसर्गाभावादिप्रतियोग्यनुयोगिभावविलक्षणोऽवध्यवधिमद्भावशब्देनाभिधित्सितः। भेदोऽवधिमान्। तत्रापीति। अवध्यवधिमद्भावस्य भेदस्य च योऽवध्यवधिमद्भावस्तस्यातिरिक्तत्वेऽनवस्था, निष्पन्नस्य भेदान्तरस्याप्यवध्यवधिमद्भावान्तरसापेक्षत्वात्। अस्य = भेदस्य। प्रतियोगिनेति। घटाद्भिन्नः पटाद्यत्यन्ताभाव इत्यत्यन्ताभावत्वनिरूपितप्रतियोगिताश्रयेण पटादिनेत्यर्थः। घटे तु भेदत्वनिरूपितप्रतियोगिता। सा च पटादावपीत्यन्यत्। भिन्नत्वं = भेदत्वं, प्रतियोग्यवधिकावधिमत्त्वमिति यावत्। अनिषेध्यसाधारणत्वादिति। अनिषेध्ये पटाद्यत्यन्ताभावे इव तन्निषेध्ये पटादावपि सत्त्वादित्यर्थः। अथवाऽनिषेध्येनापि निरूपितत्वादित्यर्थः। पटात्यन्ताभावेऽत्यन्ताभावत्वं पटीयमेव, भेदत्वं तु पटीयमिव घटीयमपीतिभावः। इदमुपलक्षणम्, प्रतीतिवैचित्र्याद् विषयवैचित्र्यस्यावश्योपेयत्वात्। एवमिति। कार्यकारणभावाधाराधेयभावादीनां प्रतीतिबलाद्नानात्वेनोपगन्तव्यानामेकस्वरूपात्मकत्वानुपपत्तेः, निरूपकविशेषनियन्त्रिततया तु तेषामेकत्रोपपादनं स्यात्, नत्वेकात्मकत्वम्। प्रत्युत तत्तन्निरू-

कार्यकारणभावादौ स्वभावसम्बन्धान्तरेऽपि वाच्यम्, ऊहनीयश्चान्यत्रापि स्वरूपभेदे दोष एषः।

किञ्च धर्मान्तरं भेद इति ब्रुवतः कोऽभिसन्धिः ? किं घटत्वादय एव भेदः, उत भेदो नामान्य एवैकः कश्चिद्धर्मः ? आद्ये घटत्वादीनां सप्रतियोगिकत्वप्रसङ्गः, भेदस्य सप्रतियोगिकत्वात्, न च पटत्वादयस्तथा, घटाद्यनपेक्ष्य तेषां प्रतीतेः। यदा पटाद्यपेक्षया प्रतीयन्ते तदा भेदव्यवहारं कुर्वन्तीति चेन्न, प्रतीतौ कस्य पटाद्यपेक्षेति वाच्यम्, किं घटत्वादेरुत तद्धर्मस्य कस्यचित्, आद्ये पटाद्यपेक्षामन्तरेण घटत्व-प्रतीत्यनुपपत्तिप्रसङ्गः, नहि यदन्तरेण यदुत्पद्यते तत्तत्कारणकं नाम। वह्न्याद्यावियाधान्तरजतिभेदे कारणभेदस्य चरितार्थयितुमशक्यत्वात्, साक्षात्कारित्वादिना सह परापरभावानुपपत्तेः। जात्योः परस्परसङ्करमिच्छतामपि मते पञ्चम्याऽवधिभावः प्रतिपाद्यमानः केन समन्वियात्, घटत्वस्याद्यवधिघटितत्वे तथैव परं प्रतीत्यापत्तेः। तद्धर्मस्य तथात्वमिति चेन्न, तथाहि—न द्वितीयः, स एव सापेक्ष-प्रतिपत्तिर्भेदो न तु घटत्वादिः, घटत्वादेश्च स भेदः स्यात्तद्धर्मत्वात्, घटादेस्तु भेद-पर्यनुयोगे तदभिधानमसङ्गतम्। कथं च भिन्नैरनुगतभेदव्यवहारः स्यात्, तथापि तथा

---

पकनिरूपितस्वरूपस्यापि नानात्वमेव स्यात्, अतएवप्रतियोग्यनुयोगिभावकार्यकारणभावादीनामति-रिक्तत्वमेव नव्या अनुमन्यन्ते, तत्रापि लक्षणपर्यनुयोगः सावकाश इत्यन्यत्। अन्यत्रेति। भावस्या-नुयोगित्वस्थले इत्यर्थः, अभावे स्वरूपं भेद इति ह्येतावता निरस्तम्। किन्त्वेवमूहनीय इति न वक्तुं युज्यतेऽपि तु द्रष्टव्य इति। तस्मादन्यत्रेत्यस्यैव व्याख्यानं स्वरूपभेदे इति। अन्यस्यं च चर्चितसम्बन्धा-पेक्षया, तथा च घटभिन्नोऽभावो घटभिन्नः पटो घटभिन्नो मठ इत्यादिप्रतीत्या घटभेदस्यानुगतस्यैवाव-गाहनात्तस्यैकस्य पटमठादिनानारूपत्वं नानासम्बन्धानामेकात्मकत्वमिव नोपपन्नमितिभावः। अभावस्यातुच्छत्वेऽभावत्वादिरूपवैधर्म्यं प्रतीतिबलाद्यद्यानीतं मन्तव्यमेवेति नोक्तदोष इत्यत आह किञ्चेति। पटाद्यीति पटादिप्रनीतिपरम्। पटाद्यपेक्षां = पटादिप्रतीतिं। ननु घटत्वादेर्विजातीय-ज्ञाने एव पटादिप्रतीतेः कारणत्वमिति न व्यभिचारः, तृणादेर्विजातीयवह्निकारणत्वदर्शनादित्याशङ्क्याह वह्न्याद्याविति। आदिपदं विजातीयवृश्चिकादिकं प्रति गोमयादेः कारणत्वाभिप्रायेण। भेदो विशेषः। विषयविशेषातिरिक्तवैजात्यस्य घटत्वादिज्ञानेऽनुपलब्धिबाधे सत्येवाह साक्षादिति। साक्षात्त्वं विहाय वैजात्यं परोक्षभेदज्ञाने, वैजात्यं विहाय साक्षात्त्वमयं घट इत्यादिज्ञाने, उभयोः समावेशोऽयं घटो न पट इत्यादिज्ञान इति सङ्करः। तस्य जातिबाधकत्वानभ्युपगमेऽप्याह जात्योरिति। अवधिघटितत्वे = सावधिस्वभावत्वे। परं = केवलं। तथा च घटत्वस्यावधिविषयकत्वव्याप्यविषयिताकत्वापत्तेरित्यर्थः। तद्धर्मस्य घटत्वधर्मस्य। तथात्वम् = पटादिप्रतीत्यपेक्षप्रतीतिकत्वम्। एवं सति द्वितीयविकल्प एवायमनु-दितइत्युक्तिवैचित्र्येणाह तथाहि न द्वितीय इति। स घटत्वादिधर्मः। घटत्वादेरिति। अनुयोगित्वं पद्यर्थः। यदि तु धर्मस्यैव वस्तुतः सापेक्षत्वेऽपि धर्मिणोऽपि सापेक्षव्यवहारसम्भवः यथा देवदत्तस्य गुरुरित्यादि, एवं घटत्वादिगतधर्मविशेषस्य सापेक्षत्वेऽपि सापेक्षव्यवहारो घटत्वाद्यात्मकभेदस्य स्या-दिति कश्चिद्ब्रूयात्तदाप्याह कथमिति। घटः पटो न, मठः पटो नेत्यादिप्रतीतेः पटभेदांशेऽनुगमस्यै-वानुभवाविति भावः तथापि तथा सतीति। भिन्नत्वेऽपि सत्यनुगतव्यवहारोपपादकत्वोपगम इत्यर्थः।

सति वा किं न तैरेव गवादिव्यवहारोऽपि स्यात्। नापि द्वितीयः, अनभ्युपगमात्, सप्तपदार्थानामनन्तर्भावप्रसङ्गात्, स्वात्मनि वृत्त्यवृत्तिभ्यामनुपपत्तेश्च। ईदृशाञ्चोपाध्यालीढवैचित्र्याणां जात्या समर्थने सर्वोपाध्युपधानानां जात्यैव समर्थनं स्यात्।

ननु घटत्वादय एव भेदाः, घटत्वादिज्ञानाविशेषेऽपि प्रतियोगिज्ञानसहकारिवशाद्विचित्रव्यवहारोपपत्तिरिति चेन्न, व्यवहारसत्यत्वार्थं वास्तवार्थगतविशेषस्यावश्यं स्वीकर्तव्यत्वे तथैव पर्यनुयोगानुवृत्तेः, अनन्तभेदपरम्पराभ्युपगमे च क्रमज्ञेयतायां प्रतीत्यपर्यवसानात्, तद्युगपज्ज्ञेयतायामत्यन्तसदृशतया कस्यचिदन्यभेदस्यान्यदीयतयाऽपि ग्रहणसम्भवादिना सर्वत्र प्रामाण्यानाश्वासप्रसङ्गात्, सर्वप्रतीतिनियमानङ्गीकारे चाप्रतीतसत्त्वे प्रमाणाभावात्, जिज्ञासायां तस्य तस्यापि ज्ञेयत्वे तद्बुद्धीनां भेदबुद्धित्वात्तदर्थेष्वनुगतत्वस्यानुपपत्त्या तेष्वेकजात्याद्यभ्युपगमे तद्भेदेऽपि तदङ्गीकारे परस्पराश्रयिभावप्रसङ्गात्। एवं सत्तादीनामानन्त्यस्वीकारे द्रष्टव्यम्। किञ्च घटत्वादे-

---

तैः = भिन्नैःपदार्थैर्व्यक्तिरूपैः। गवादिव्यवहारः = गौरित्याद्यनुगतव्यवहारः। वस्तुतस्तु भिद्यतेऽनेनेति व्युत्पत्त्यैव वैधर्म्यं भेदत्वव्यवहार इति। द्वितीयः = भेदो नामान्य एव कश्चिद्धर्म इति कल्पः। अन्योन्याभावस्य निरस्तत्वेन तदात्मकत्वस्याप्यनुपपत्त्या क्लृप्तपदार्थबहिर्भावेऽपसिद्धान्त इत्याह अनभ्युपगमादिति। सप्तपदार्थानामिति। सप्तपदार्थ्यामित्युचितं स्यात्। विभागस्यानादरणीयत्वेन युक्तिबलादतिरिक्तपदार्थोपगमेऽपि न क्षतिरिति वदन्तं प्रत्याह स्वात्मनीति। भेदे स्ववृत्तावात्माश्रयः, भेदान्तरवृत्तावन्योन्याश्रयादिकम्, कस्यापि भेदस्यावृत्तौ तु तस्य सर्वात्मकतया भेदरहितभेदात्मकतया सर्वमप्यभिन्नं स्यादित्यर्थः। भेदस्य जातित्वमाशङ्क्याह ईदृशामिति। आलीढत्वमत्र प्रयुक्तत्वम्, प्रतियोग्यादिप्रतिपत्त्यधीनप्रतिपत्तिकानामिति तु भावार्थः। जात्या = जातिरूपतया। उपाध्युपधानमुपाधिर्घटितमूर्तिकं प्रमेयत्वादिकं सखण्डम्। अत्रापि स्वात्मनि वृत्त्यवृत्तिभ्यामुक्तानुपपत्तिरस्त्येव। एवं जात्यादौ वृत्त्यनुपपत्तिरपि।

घटत्वादेर्निष्प्रतियोगिकत्वेन त्वदुक्तरीत्या वस्तुतः सप्रतियोगिकत्वं मास्तु, तथापि सप्रतियोगिकत्वेन प्रतीतिस्तु स्यात्। एवं सति सर्वदैव तथाप्रतीतिप्रसङ्गश्चोदित इति चेन्न, प्रतियोगितानुयोगितावच्छेदकधर्मप्रकारकज्ञानात्मकसहकारिसत्त्वे तथा प्रतीतिर्न तु तदसत्त्वे इत्यभ्युपगमादित्याशयेन पुनः प्रत्यवतिष्ठते नन्विति। अत्रेदं तदेवेत्याद्यभेदग्रहानुपपत्तेरुक्तरीत्या सत्त्वे एवाह व्यवहारेति। अवश्यमिति। अन्यथा साकारवादापत्तेः। तथाच सप्रतियोगिकं कञ्चित्पदार्थमनुपेत्य भेदप्रतीतेरुपपादनासम्भव इति स उपेतव्यः, किन्तु घटादिवत्तस्यापि भिन्नत्वप्रतीतेर्भेदान्तरस्य तत्रोपगमे वस्त्वनवस्था दुर्वारेत्यर्थः। स्वपरनिर्वाहकत्वस्य निरसिष्यमाणत्वादितिभावः। एवं ज्ञप्त्यनवस्थामप्याह अनन्तेति। प्रतीत्यपर्यवसानात् = प्रतीतिपरम्पराया अविच्छेदात्। तथा च सुषुप्त्याद्युच्छेदोऽनुभवविरोधश्च, नहि सर्वदा भेदधीरनुभूयते इति। युगपदिति। अत्राप्यनुभवविरोधोऽस्त्येव। सम्भवादिनेत्यादिना व्यवहारसम्भवो ग्राह्यः। सर्वत्र भेदज्ञानव्यवहारेषु। प्रमाणाभावादिति। तथा च मूलपर्यन्तमैक्यप्रसङ्ग इतिभावः। ज्ञेयत्वे इति। तथा च नोक्तप्रसङ्ग इतिभावः। नुपपत्त्येति। नहि भेदाः स्वरूपतोऽनुगता जातिवदिति भावः। जात्यादीत्यादिपदमुपाध्यभिप्रायेण, भेदत्वस्याभावगततया जातित्वपरिभाषयाऽऽक्रमासम्भवात्। तद्भेदेऽपि = उपाधिगतभेदेऽपि। तदङ्गीकारे = उपाध्यङ्गीकारे। भेदे भेदत्वं तत्र च भेदोऽन्यथा तस्य सर्वात्मकत्वप्रसङ्गादिति भावः। एवमिति। सत्ता सतीति

भेदत्वेऽवधिभूतपटत्वादिसापेक्षप्रतिपत्तिकतायां घटत्ववत्पटत्वस्यापि भेदरूपस्य भेदावधिप्रतिपत्तिसापेक्षतयाऽवधेश्च घटत्वादित्वेन घटत्वादिप्रतीत्यपेक्षायामन्योन्याश्रयप्रसङ्गः। भेदरूपत्वे घटत्वादेरवधिप्रतीत्यपेक्षा न तु स्वरूपमात्रप्रतिपत्तौ, स्वरूपमात्रेण चावधित्वं तत्कृत एवमिति चेन्न, भेदरूपता यदि तस्य स्वात्मैव तदा 'स्वरूपमात्रप्रतिपत्तौ नावध्यपेक्षेति शून्यं वचनम्। अथ धर्मान्तरं तदा स एव भेदोऽस्तु, कृतं तद्वत्तया घटत्वादे र्भेदरूपतेति प्रक्रियाकल्पनया। अस्तु स एव धर्मान्तरं भेद इति चेन्न, दूष्यत्वात्।

अथापि स्वरूपादित्रयमिदं भेद इति कथं सङ्गच्छते, तद्व्यवहारस्यैकाकारस्य नानानिमित्तत्वे गोत्वाद्यनुगताकारप्रतीतेरपि कथमेकनिमित्तत्वसिद्धौ प्रमाणत्वम्, व्यभिचारात्। सामान्यविशेषैरेव परसामान्यबुद्धिव्यवहारोपपत्तौ तत्कल्पनानुपपत्तेः। किञ्च भेदे भेदान्तरमस्ति न वा, आद्येऽनवस्था, द्वितीये तदभाव एव स्यात्,

---

प्रतीत्या सत्तान्तराभ्युपगमे वस्त्वनस्था, ज्ञानानवस्थाप्युक्तरीत्या, अन्यसत्ताया अन्यदीयतया ग्रहणसम्भवेन प्रामाण्यानाश्वासोऽपि, अनुभवबाधश्च। सर्वासां सत्तानामनुगमकं सत्तात्वं तत्रापि च सत्तेत्यन्योन्याश्रयोऽपीत्यर्थः। आदिनैकत्वस्वरूपत्वतद्व्यक्तित्वप्रमेयत्वादेः परिग्रहः। प्रसङ्ग इति। ननु घटः पटत्वं नेति प्रतीतिविषयो भेदो घटत्वम्, पटो घटत्वं नेतिप्रतीतिविषयश्च भेदः पटत्वम्, तत्र च प्रतियोगित्वं पटत्वघटत्वयोरिति पटत्वमिति घटत्वमिति च ज्ञानमपेक्षणीयम्, अत्र चाद्यं न घटत्वज्ञानापेक्षम्, द्वितीयञ्च न पटत्वज्ञानापेक्षमिति कथमन्योन्याश्रयः। अवधिशब्दस्य प्रतियोगितावच्छेदकपरत्वे घटः पटो नेत्यादिप्रतीतिविवक्षणेऽपि तत्र पट इत्यादिज्ञानमेवापेक्षितं तच्च न घट इत्यादिज्ञानजन्यमिति कथं परस्पराश्रय इत्याशङ्क्ते भेदरूपत्वे इति। भेदत्वप्रतिपत्तावित्यर्थः। शून्यमिति। तथाच घटः पटो नेति ज्ञानवद्धट इतिज्ञानस्यापि पट इतिज्ञानजन्यत्वं प्रसक्तम्, तस्यापि पटस्वरूपभेदत्वविषयकत्वाच्च पटो घटो नेति ज्ञानवद्धट इतिज्ञानजन्यत्वमित्यन्योन्याश्रयः। यद्यपि पट इतिज्ञानस्य सामान्यतो भेदत्वविषयकत्वेऽपि यत्किञ्चिदवधिज्ञानजन्यत्वेनैवोपपत्ति र्नहि तस्य घट एवावधिः, तथाऽपि विनिगमनाविरहादित्थमुक्तम्। धर्मान्तरं घटत्वादिवृत्तिभेदत्वम्। एवञ्च नैकेनैव रूपेण सप्रतियोगिकत्वनिष्प्रतियोगिकत्वयोरप्यापत्तिः। स इत्युक्तधर्मपरामर्शः। ननु भेदत्वं कथं भेदः स्यादिति चेदतिरिक्तधर्मविशेषस्यावश्यं कल्पनीयत्वे भेद एवातिरिक्तोऽस्तु भेदत्वं तु तत्स्वरूपमेवास्त्वित्याशयात्। दूष्यत्वादिति। किञ्चेत्यादिनाऽनुपदमेवेति शेषः। दूषितत्वादित्यपि द्रष्टव्यम्, उक्तानि ह्यतिरिक्तभेदपक्षे दूषणानि।

एवं प्रत्येकं स्वरूपादित्रयं निरस्य त्रितयसाधारणदूषणमाह अथापीति। एकनिमित्तत्वसिद्धौ = एकस्य गोत्वादेर्व्यवहारनिमित्तत्वसिद्धिं प्रति। ननु स्वरूपादिव्यक्तित्रयस्य न भेद इत्यनुगतव्यवहारनिमित्तत्वं येन व्यभिचारेण गोत्वाद्युच्छेदः स्यात्, अपि तु तद्गतधर्मस्यैव यथायोगमित्याशङ्क्याह सामान्यविशेषैरिति। तत्कल्पनेति। परसामान्यकल्पनेत्यर्थः। एवं सति गवादिव्यक्तया गोत्वादिसामान्यं माऽस्तु गतार्थम्, गोत्वादिभिस्तु द्रव्यत्वादिकं गतार्थं स्यादेव, द्रव्यमित्याकारा धी गौरित्यादिधीविलक्षणेति तु प्रकृतेऽपि समानमन्यथाभिनिवेशादिति भावः। ननु स्वरूपे भिद्यमानत्वं वैधर्म्ये च भेदकत्वमादायैव भेदशब्दप्रयोगः, नतु नञुल्लेखविषयत्वं तयोः, भेदस्तु तादृशाभ्यामतिरिच्यते एवेत्याशङ्क्यातिरिक्तभेदे दूषणमाह किञ्चेति। अनवस्थेति। प्रामाणिकीयं

तद्धर्मिण्येव तत्प्रवेशात्। भेदस्य भावत्वात्स्वात्मन्यपि स्वयमेव तद्व्यवहारमयं करोति सत्तेव सद्व्यवहारमिति चेन्न, यदि 'स्वस्माद्भिन्नः स्वस्य भेद' इति स्वस्मादित्यभिधेयावधिभावस्वरूपःस्वयं, भेदोऽन्यस्माच्च स्वस्य, तदाऽस्य भेदस्य स्वात्मप्रतियोगिकत्वेन स्वाश्रयत्वेन चाङ्गीकारे स्वस्मादपि स्वयं भिन्नः किन्नाङ्गीक्रियते, विरोधाभावात्। स्वीक्रियेताप्येवं यदि तथा प्रतीतिर्व्यवहारो वा स्यादिति चेन्न, अस्त्यपि शब्दाभासादेस्तथा प्रतीतिराभासशब्दव्यवहारश्च। सत्यौ प्रतीतिव्यवहारौ स्वीकारकारणम्, नच तौ स्वात्मन एव स्वस्माद्भेदविषयौ स्त इति चेन्न, स्वात्मा स्वस्यैवाधिकरणमवधिश्चेत्यपि तर्हि न सत्या प्रतीतिः सम्भवति न वा व्यवहारः, तत्कथमित्थमङ्गीकुरुषे। ननु न वयं स्वात्मा स्वाधिकरणं स्वावधि चेत्यभ्युपगच्छामः, किन्तु धर्मान्तरे तत्प्रतियोगिके तदाधारे वा स्वीकृते यौ बुद्धिव्यवहारावुपपद्येते तावनवस्थाभयाद्धर्मान्तरेणैव स्वभावाद्भेदः करोतीति ब्रूम इति चेन्। तर्ह्यन्यत्र यादृशी प्रतीतिर्धर्मान्तरविषया तादृश्येवात्र धर्मान्तरं विनोत्पद्यत इति भ्रान्ता स्यात्, यस्य च स्वभावस्य बलेनेदृशी सा जायते स दोषः स्यात्, यथा सत्यरजते रजतप्रतीती रजतत्वादुत्पन्नाऽन्यत्र विना रजतत्वं जायमाना भ्रान्ता भवति, यस्य च सामर्थ्यात्सा तादृशी जायते स दोष इत्युच्यते। तत्र रजतत्वं नास्ति, अत्र तु धर्मिरूपोऽपि भेद एव सन्नवलम्बनमिति चेन्न, भिन्नप्रतीतिर्विशिष्टविषया भेदतदाश्रयोभयवस्तुविषयाऽन्यत्र यादृशी सत्याऽङ्गीकृता ततो मात्रयाऽप्यन्यूनार्थाया इह जायमानाया यदि द्वयं विषयं नाङ्गीकुरुषे तदा शक्रेणापि भ्रान्तत्वं दुर्वारम्। अथाङ्गीकुरुषे तदानवस्थाप्रसङ्गः। अथ तदुभयविषयव्यतिरेकेणैवात्र सा सत्या, अन्यत्र तर्हीतोऽन्यादृशविषया मिथ्या स्यादित्यलं पल्लवेन। यत्तु सत्तेवेत्युक्तम्, तत्कटकगवोदाहरणमनुहरति, यतः सत्ताप्यमुना दूषणेनास्माभिः खण्डनीया।

---

न दोषावहेति तु चिन्तयिष्यते। वैधर्म्यसाधारणी चेयम्, अतिरिक्तभेदस्यापि तदविनाभूतत्वात्। तद्धर्मिण्येवेति। भेदः स्वाश्रयात्मक एव स्यादित्यर्थः। भेदे यदि कस्यापि भेदो नास्ति तदा सर्वं तदात्मकतयाऽभिन्नं स्यादित्यपि द्रष्टव्यम्। स्वस्मादिति पञ्चम्याऽभिधेयोऽवधिभावो यस्य तत्स्वरूपोऽपि स्वयम्, अन्यस्मात्स्वस्य भेदश्च स्वयमेव यदीति सम्बन्धः। स्वात्मप्रतियोगिकत्वेनेति। नन्वन्यप्रतियोगिकः स्वनिष्ठो भेदः स्वस्माद्भिन्न इत्यत्र स्वप्रतियोगिकभेदस्यान्यत्र प्रसिद्धस्य स्वस्मिन्निषेधः प्रतीयते, न तु स्वस्मिन् स्वात्मप्रतियोगिकत्वमिति चेन्न, यथाऽनवस्थाभयेन भेदे न भेदान्तरं तथा भेदादपि न भेदान्तरमिति स्वप्रतियोगिकभेदोऽन्यत्र प्रसिद्धः स्वात्मक एवेति स्वात्मप्रतियोगिकत्वेनेति सूक्तम्। विरोधाभावादिति। एकत्राधाराधेयभावप्रतियोग्यनुयोगिभावौ भेदनियतावपि स्वीकर्त्रा स्वस्मात्स्वभेदेऽपि विरोधस्शमन्तव्यत्वादित्यर्थः। व्यवहार इति। सत्यः सम्भवतीत्यनुषङ्गः। किन्त्विति। तत्पदद्वयेन भेदपरामर्शः। द्वयं = भेदतदाश्रयोभयम्। अत्र = भेदो घटभिन्नः, घटो भेदभिन्न इति भेदानुयोगिकभेदप्रतियोगिकभेदस्थले। अन्यत्र = घटाद्भिन्नः पट इत्यादिविभिन्नानुयोगिप्रतियोगिकभेदस्थले। कटकेति। 'कटकस्तु नितम्बेऽद्रेः' 'सेनायां राजधान्यां च' इत्यभिधानात्सेनायां प्रवृत्ते चोरास्त्रसंपाते प्रवेशिता गौरपि नेतरत्राणनिमित्तं भवति प्रत्युत स्वयमप्यस्त्रविषयतामासादयति, तथा प्रवृत्ते खण्डनास्त्रे भेदरक्षणायोपन्यस्ता सत्ताऽपि। राजधान्यां वा निवारितपशुप्रवेशप्रदेशे कथञ्चित्प्रविष्टा गौरपि ताड्यते यथा, तथा द्वैतमात्रं निवारयतोऽनिर्वचनीयवादिनः पुरतः

## उदयनाचार्योक्तयनुवादः ।

यत्पुनरभिधीयते किमेतेन भेदखण्डनवादिभिरभिहितं भवति ? किं भेदज्ञानमेव नास्ति ? सदपि वा नित्यम् ? अनित्यमपि वा निर्हेतुकम् ? सहेतुकमपि वा निर्विषयम् ? सविषयमपि वा बाध्यमानविषयम् ? तत्र प्रथमः सर्वतोविरोधादनुत्तरः । द्वितीयः सुषुप्त्यवस्थानुरोधादुपेक्षणीयः । तृतीयोऽपि विरोधादेयः । चतुर्थस्तु भेदोल्लेखादेव त्याज्यः । पञ्चमस्तु चिन्त्यते, किमेतेष्वन्यतमोऽस्य विषयः, तदन्यो वा ? द्वितीये किमेताभिर्व्यधिकरणानुपपत्तिभिस्तस्य बाध्यते ? एवं हि चौरापराधेन व्यक्तमयं माण्डव्यनिग्रहः स्यात् । अथान्यतमात्मा ? तत्रापि यदि धर्मान्तरमेवेति तत्त्वम्, तदाऽनवस्थाभयात्तदधिकः प्रवाहस्त्यज्यताम्, तस्य तु कुतस्त्यागः ? नह्यनवस्था प्रतिभासमानमर्थं निवर्तयति किं तु प्रवाहं परिहापयति, गन्धे गन्धान्तरवत् । अथेतरेतराभावमेव भेदज्ञानमालम्बते, तत्रापि कात्माश्रयः ? तेन हि भेदज्ञानमेव न स्यात्, अस्ति च तत्, ततो हेत्वन्तरमाक्षिपेत्, नतु स्वात्मनि स्वयमहेतुत्वे स्वयमेव निवर्तेत । अविद्यावशादिति चेत्, किञ्चातः ? नह्यविद्ययैवात्माश्रयनिवृत्तिः, तथा सति घटादयोऽपि कुलालादिनिरपेक्षाः स्वयमेव भवेयुः । अथात्माश्रयदोषोपहततया तन्न तस्यैव कारणम्, अतो यतः कुतश्चिदस्य जन्म, तच्च दुर्निरूपम्, अतोऽविद्येत्युच्यत इति विचारार्थः; नाम्नि तर्हि विवादः, न च तदपि दुर्निरूपम्, प्रतियोगिरूपत्वेनाप्रतीतावधिकरणप्रतीतिः, अधिकरणस्वभावत्वेनास्मृतौ प्रतियोगिस्मृतिश्चेतरेतराभावग्रहणकारणमिति निरूपणात् । अथ स्वरूपमेव भेदप्रतिभासस्य विषय इति तत्त्वम्, तथापि

---

कथञ्चिदुदाहृता सत्ताऽपि तेन निवारयिष्यते । यथा कटके यन्द्वा गौर्यन्धनरज्जुमादाय विद्रवति विद्रवद्भिरश्वैः सह, तथाऽमुना खण्डनेन विद्रवता भेदेन सत्तापि विद्रविष्यतीत्यर्थ इत्यन्ये । नच—अन्योन्याभावो भाववदभावान्तरे स्वस्मिंश्च वर्तते, भिन्नताप्रतीतेरविशेषात्, अन्योन्याश्रयचक्रकानवस्थासु द्वयादेः कल्पनीयत्वेन तदपेक्षयाऽऽत्माश्रयोपगमे लाघवादित्यस्माकमाशय इति—वाच्यम्, दत्तोत्तरत्वात्, एवं सति स्वं यदि स्वाश्रितं स्यात्स्वभिन्नं स्यादिति प्रसङ्गस्याभासत्वेन क्वापि तस्य दोषत्वं न स्यादिति तदवगाहिधियो भ्रमत्वस्यावश्यकत्वादिति ।

आत्मतत्त्वविवेके भेदखण्डनप्रतिक्षेपाय यदुदयनाचार्यैरुक्तं तदनुवक्ति यत्पुनरिति । सर्वतोविरोधात् = अनुभूतियुक्त्यादिविरोधात् । अनुत्तरइति । नास्योत्तरं वक्तुमुचितमित्यर्थः । अनुभूत्यादिप्रासस्याप्यलापे वस्तुमात्रापलापप्रसङ्गेन . स्ववचनादिविरोधः कथाप्रवृत्त्याद्ययोगश्च, व्यवहारमात्रस्य भेदग्रहाधीनत्वादितिभावः । भेदज्ञानस्य नित्यत्वे तु सुषुप्तिसमाध्याद्युच्छेद इत्याह द्वितीय इति । विरोधात् = कादाचित्कत्वविरोधात् । एतेषु = स्वरूपादिषु । एताभिः = पूर्वोक्ताभिःखण्डनयुक्तिभिः । तस्य = स्वरूपाद्यन्यतमस्य । चौरेति । अचौरोऽपि चौर इति मत्वा माण्डव्यो मुनिः शूलमारोपित इति प्रसिद्धा कथा । अन्यतमात्मेति । स्वरूपादिष्वन्यतमात्माऽस्य विषय इति सम्बध्यते । धर्मान्तरं वैधर्म्यं । इतितत्त्वम् । अयं पक्षः परमार्थतया समर्थनीयः । वैधर्म्ये वैधर्म्यान्तराभ्युपगमेऽनवस्था, अन्यथा तु मूलपर्यन्तमैक्यापत्तिरिति दोषं परिहरति तदेति । तस्येति । प्रथमवैधर्म्यस्य घटत्वादेरित्यर्थः । नाम्नीति । भेदप्रतीतिकारणं भवताऽविद्यानाम्नोक्तमस्माभिस्तु नामान्तरेणेति भावः । स्वरूपस्य भेदत्वे घटो भिन्न इति प्रयोगो न स्यात्, भेदस्यानतिरिक्तत्वे तेन सहाधाराधेयभावस्यापि सत्त्वादिति दूषणं परिहरति तथापीति । घटस्वरूपं भेदइति प्रयोगस्तु नेह प्राह्यः, स्वारसिकप्रयोगविरोधोद्धा-

सहप्रयोग एवानुपपन्नः परिह्रीयताम्, भेदेन तु किमपराद्धम्? सोऽपि दृश्यत इति चेत्सत्यम्, नैमित्तिकस्तु स्यान्न स्वरूपतः, नहि घटमानय घटमवलोकयेत्यादौ भेदपदमपि प्रेक्षावानुपादत्ते, व्याख्यायां तु मूढप्रबोधनार्थं घटः कुम्भ इतिवत्सहप्रयोगेऽपि न दोषः। तथापि कः परमार्थः? यथायथं त्रयमपि, घटस्य हि घटाद्यात्मना प्रतीतिरपटाद्यात्मना च प्रतीतिस्ततो वैशिष्ट्यप्रतीतिश्चेत्यनुभवसिद्धम्, तत्राभावस्य प्रथममात्रम्, अभावान्तरधर्मान्तरयोरभावात्। सामान्यादिषु त्रिषु द्वयम्, धर्मान्तराभावात्, द्रव्यादिषु त्रिषु त्रयम्, त्रयस्यापि तत्र सम्भवात्। भवति हि पटोऽयम्, न घटः तन्तुमयश्चेति। गन्धोऽयम्, न रूपम्, सुरभिश्चेति। गतिरियम्, नोत्क्षेपणम्, तिर्यक्चेति। लक्षणं तु स्वरूपभेदस्य ताद्रूप्येणाप्रतीतौ प्रतीतिः, इतरेतराभावस्य त्वबाधितः समानाधिकरणो निषेधप्रत्ययः, वैधर्म्यस्य तु विरोधः, स चैकधर्म्यसमावेश इत्येषा दिगिति।

---

वनस्यैवोचितत्वात्। सोऽपि = सहप्रयोगोऽपि। नैमित्तिक इति। फलमिह निमित्तम्, वाच्यवाचकभावबोधोद्देश्यक इत्यर्थः। घटोऽयमित्यादिरेव स्वरूपभेदप्रतीतिरिति वक्ष्यति, नञुल्लेखिप्रतीतेरितरेतराभावमात्रविषयकत्वात्, घटो भिन्नइतिशब्दस्तूक्तरीत्या स्वरूपभेदवादे घटो भेद इत्याकारे पर्यवस्यन् घटो भेदपदवाच्य इत्यर्थबोधोद्देश्यक एव भवतीति भावः। इदमापाततः, प्रयोक्तैव प्रष्टव्यो घटो भिन्न इति कीदृशबोधोद्देशेन शब्दः प्रयुक्त इति? भिद्यते इति भेद इतिव्युत्पत्तिविवक्षायां घटो भेद इत्येव प्रयुञ्जीत, तस्माद्घटोभिन्न इत्यप्यतिरिक्तभेदावगाहिनी मतिरिति स्वरूपभेदपक्षे सहप्रयोगानुपपत्तिरदूषणमेव, व्युत्पत्तिभेदेन घटो भेद इति सहप्रयोगोपपत्तेरतिस्फुटत्वात्, पटादेरपि भिद्यमानत्वेन घटो द्रव्यमितिवद्घटो भेद इत्यत्र पर्यायप्रयोगशङ्काया एवानुन्मेषात्। स्वरूपतः = स्वरसतः। न स्वरसत इत्यत्र हेतुमाह नहीति। घटं भेदमानयेत्यादिकं न प्रयुङ्क्ते इत्यर्थः। परमार्थः = भेदपदमुख्यार्थः। स्वरूपादिनानार्थत्वस्यान्याय्यत्वादित्यर्थः। उत्तरयति यथायथमिति। कर्मकरणभावव्युत्पत्तिवैविध्यादिति द्रष्टव्यम्। घटाद्यात्मना प्रतीतिरिति स्वरूपभेदे प्रमाणम्, आदिना द्रव्याद्युपादेयम्। अपटाद्यात्मनेति परस्पराभावे प्रमाणम्। ततो वैशिष्ट्यप्रतीतिः = पटादितो वैधर्म्यधीः। वैधर्म्ये प्रमाणमिदम्। प्रथममात्रम् = स्वरूपभेदमात्रम्, अनवस्थाभयादभावेऽभावान्तरस्यास्वीकार्यत्वेन तस्य स्वातिरिक्तान्योन्याभावानधिकरणत्वात्। भेदकधर्मान्तराभावस्तु तत्राभ्युपगमवादेनोक्तः, अनुयोगिताविशेषादिरूपाभावत्वादेस्तत्रावश्यकत्वात्। द्वयम् = स्वरूपभेदान्योन्याभावद्वयम्। धर्मान्तरेति। भेदकेत्यादिः। किञ्चिद्धि वस्तु स्वत एव व्यावृत्तमिति न्यायात्, अन्यथाऽनवस्थानात्, जातिव्यावर्तकत्वस्य व्यक्त्युपगमेऽन्योन्याश्रयात्, व्यावृत्तस्यैव व्यावर्तकत्वात्। अत्र वैधर्म्यं विना स्वरूपभेदादेरप्यवस्थानासम्भवेनानवस्थाया दुर्वारता तु चर्चयिष्यति। पटोऽयमिति भिद्यमानस्वरूपं, न घट इति भेदः, तन्तुमय इति वैधर्म्यं प्रतीयमानतयोदाहृतम्, एवमग्रे गुणकर्मणोरपि। ताद्रूप्येणेति। तदात्मत्वेनाप्रतीयमानत्वे सति प्रतीयमानत्वं तद्भेदत्वम्, तदात्मत्वेनाप्रमीयमाणत्वमेव तद्भेदत्वमिति यावत्. प्रतीयमानत्वस्य व्यवहारनिमित्तत्वेऽपि लक्षणे निवेशे प्रयोजनाभावात्, सोऽयमेवेतिभ्रमव्यावृत्तयेऽबाधित इति। वस्तुतस्तु तर्किकमतेऽन्यथाख्यातिस्वीकारेण तद्विपर्यीभूतभेदस्यापि क्वचित्सद्भावात् प्रतियोग्यनुयोगिवाचकपदसमानविभक्तिकनञ्प्रतिपाद्यमानत्वमेव विवक्षितम्। प्रथमाविभक्तिसमभिव्याहृतानुयोगिकत्वं तु नार्थः, देवदत्तो न पचतीत्यत्राभावेऽतिव्याप्तेः। तदसामानाधिकरण्ये पर्यवसन्नं तदभावव्याप्यत्वं तद्विरोधः।

## उदयनाचार्योक्तिप्रतिक्षेपः ।

अत्रोच्यते, तथाहि— यत्तावत्पृष्टं किमेतेष्वन्यतमात्माऽस्य विषयस्तदन्यो वेति तन्निर्वचनवादिनि शोभते नास्मासु, प्रतिभासमानोऽयं भेदः स्वरूपादिपक्षान्तर्भावानन्तर्भावाभ्यां वा सदसत्त्वाभ्यां वाऽन्येनापि वा धर्मेण येन केनचिन्निरूप्यमाणोऽन्वयेन व्यतिरेकेण वा बाध्यतामेति तेन सर्वेणानिर्वचनीय इति ब्रूमः । एतच्च न केवलं भेदस्यापि तर्हि जगत एव, अनिर्वचनीयवादश्चायं यथा तथोदितं प्राक् । यदप्युक्तं 'अथान्यतमेत्यादि गन्धे गन्धान्तरव' दित्यन्तम्, तदपि न साधु, यया युक्त्यैकस्वीकारस्तयैव प्रवाहस्वीकारस्य दुर्वारत्वात् । तत्र यदि प्रवाहस्वीकारे तस्या असाधकत्वं स्वीक्रियते, एकस्वीकारेऽपि स्यादविशिष्टलक्षणत्वात् । अत एव प्रतिभासमानत्वादेकस्याकार इत्यप्ययुक्तम् । एकप्रतिभासिकाया युक्तेः सर्वसाधारण्यात्, नहि प्रत्यक्षादेव जायमानः प्रतिभासः प्रमाणं नानुमानादेरित्यत्र युक्तिरभ्युपगमो वा तव, नवाऽनवस्थाप्रसञ्जिका युक्तिरनुमानादेरन्या नाम, तर्कस्यापि व्याप्तिमूलत्वम्, सर्वञ्चानुमानच्छायामापद्य दूषणमपि प्रवर्तत इति भवतैव व्युत्पादनात् । अतोऽनवस्थाप्रसञ्जिकाया युक्ते र्दोषो वा

---

स्वरूपादीति । अनन्तर्भावपक्षेऽङ्गीकरणं वा वक्तव्यमनिर्वाच्यत्वं वा, गत्यन्तराभावात् । सदसत्त्वाभ्यामिति । सच्चेन्न बाध्येतासच्चेन्न प्रतीतिविशेषविषयीभवेदित्यादिकमुक्तं प्राक् । अन्येनापीति । भेदवत्त्वभेदाभाववत्त्वसप्रतियोगिकत्वनिष्प्रतियोगिकत्वतादात्म्योपजीवकत्वानुपजीवकत्वज्ञेयत्वाज्ञेयत्वनित्यत्वानित्यत्वव्यापकत्वाव्यापकत्वादिनेत्यर्थः । आद्येऽनवस्था द्वितीये सर्वस्याभेदप्रसङ्गः, तृतीये प्रतियोगित्वादिज्ञानापेक्षायामन्योन्याश्रयादि, तुरीयेऽनुभवविरोधः, पञ्चमे "अभेदं नोल्लिखन्ती धी"रित्युक्तन्यायावतारः, षष्ठे स्वरूपहानिः, सप्तमे विषयत्वानिरुक्तिः, अष्टमेऽव्यवहार्यत्वप्रसङ्गः, नवमे तद्घटभेदस्य तद्घटोत्पत्तेः प्राक् निष्प्रतियोगिकत्वप्रसङ्गः, तदा तद्घटेऽपरेषां भेदस्यासम्भवेन तेषु तद्घटभेदस्याप्यसम्भवात्, अन्यथाऽन्योन्याभावत्वक्षतेः, आश्रयनाशदशायां चावस्थानासम्भवेन नित्यत्वासम्भवात् । तदा नित्ये आश्रयान्तरे वृत्तिरिति चेत्तर्हि किमसौ व्यापकः ? नन्वेवं तद्घटेऽपि तस्य प्रसङ्गेन शून्यं स्यात् । तद्घटेतरत्वव्यापकोऽसाविति चेन्न, तद्घटेतरत्वस्यैव निरूप्यमाणत्वात् प्रतियोगितानुयोगितान्यतरसम्बन्धेन वस्तुत्वव्यापकत्वं तस्येत्यप्येतेन निरस्तम्, अनुयोगितासम्बन्धेन तस्य कीदृक्त्वकथन्ताया अनिवृत्तेः । दशमोऽप्येतेन परास्तः, तद्घटेन सहोत्पन्नस्य तस्य व्यक्त्यन्तरे सङ्क्रमासम्भवात्, व्यापकत्वाश्रयणे चोक्तदोषात् । एतेन व्यापकत्वाव्यापकत्वे व्याख्याते । बाध्यतामेति = अन्वयेन व्यतिरेकेण च = उक्तपक्षेषु कस्यापि पक्षस्य सम्बन्धितयाऽसम्बन्धितया च दोषं प्राप्नोति । अथवाऽन्वयो दृशि तादात्म्यं व्यतिरेकश्च तदभावः, दृश्यस्य दृशि तादात्म्यस्य दुर्निरूपत्वाद् दृश्यस्य कल्पितत्वमायाति, व्यतिरेके स्वलीकत्वमेव स्यात्, जडस्य स्वप्रकाशासम्भवादित्यव्यवहार्यत्वप्रसङ्ग इत्यर्थः । अत्र पक्षेऽन्येनापि वा अन्वयेन व्यतिरेकेण वा येन केनचिद्धर्मेणेत्यन्वयः । अपि तर्हि = अपि तु । प्राक् = अनिर्वाच्यत्वनिरुक्त्यादौ । ययेति । भिन्नत्वव्यवहारान्यथानुपपत्तिरेव युक्तिः । नवेति । भिन्नत्वप्रकारकव्यवहारविषयत्वलिङ्गेन भेदे भिन्नत्वानुमानादिति भावः । प्रसञ्जिका = साधिका । ननु भेदो यदि भिन्नो न स्यात्तादृशव्यवहारविषयो न स्यादिति तर्क एवात्र, स च न प्रमाणमित्यत आह तर्कस्येति । अनुमानच्छायां = व्याप्तिमूलकत्वम् । दूषणं = दूषकतर्कादि । भवतैवेति । आत्मतत्त्वविवेके इति शेषः । तथा च व्याप्तिमूलकतया विपर्ययपर्यवसानावश्यम्भावेनानुमानमत्राप्रतिबद्ध-

वक्तव्यस्त्यक्तव्यो वा स्वपक्षः। प्रवाहस्वीकारवदेकस्वीकारे नानवस्थेति चेत्, तत्किमनवस्थाऽभावविशिष्टायास्तस्या युक्तेः साधकत्वं मन्यसे ? एवं तर्हि द्वितीयमात्रस्वीकारेऽपि नानवस्थेति द्वितीयस्वीकारप्रसङ्गः। ओमिति चेत्पराद्र्धपर्यन्तप्रवाहस्वीकारं को वारयिता ? नैतावन्मात्रेण तुष्यति भवान्, पराद्र्धादप्यधिकमेकादिकं किं नाभ्युपगम्यत इत्यपि भवता वक्तव्यमेव, तथाच सैवानवस्थेति चेत्सत्यम्, तस्यास्तु भयात्कीदृशमभ्युपगम्यतामिति निपुणं मन्त्रयावहे। द्व्यादिकं परित्यज्यतामिति चेत्, एकस्मिन्नाम कोदृशोऽनुग्रहो येनानवस्थाप्रवाहनिवेशाविशेषेऽपि द्व्यादिकमुपेक्षितमेकं तु रक्षितम्। द्वितीयमादायानवस्थेति चेत्, द्वितीयेऽपि यदि भवतोऽनुग्रहः स्यात् 'तृतीयमादायानवस्थे'त्यभिधाय सोऽपि रक्षितः स्यात्। तावेतौ भवतो रागद्वेषौ निश्रेयसाय यतमानस्य मानसमास्कन्दमानौ न कल्याणोदर्कौ तर्कयामि। गन्धे गन्धान्तरप्रसञ्जिका च न युक्तिरस्ति, तदस्तित्वे वा का नो हानिः, तस्या अप्यस्माभिः खण्डनीयत्वात्।

---

प्रसरमेवेति भावः। अनवस्थाऽभावः प्रसञ्जकतासम्बन्धावच्छिन्नप्रतियोगिताको ग्राह्यः। शङ्कते नैतावदिति। उदर्क उत्तरकालः। कल्याणफलाविति भावार्थः। ननु सुरभि चन्दनमित्यादिवत्सुरभिरसुरभिर्गन्ध इति व्यवहारान्यथाऽनुपपत्तिरेव गन्धे गन्धान्तरसाधिका युक्तिः, तथा चानवस्थया गन्धे गन्धान्तरं त्याज्यं न तु पृथिव्यां गन्ध इत्यत आह तदस्तित्वे इति। खण्डनीयत्वादिति। प्रथमोऽपि गन्धस्त्यक्तव्यो गन्धान्तराणि वोपगन्तव्यानि पक्षपातस्तु न युज्यत इति भावः। वस्तुतस्त्वभ्युपेत्यवादोऽयम्, सौरभत्वादिरूपगन्धत्वावान्तरधर्मविषयकतयैवोक्तव्यवहारोपपत्तेः, सुरभि चन्दनमित्यस्य तु सौरभप्रकारकत्वमेवेत्यवधेयम्। नन्वेतावताऽनवस्था दृढीकृता, इष्यतामेव सा, "प्रमाणवत्त्वादायातःप्रवाहः केन वार्यते" इत्यभियुक्तोक्तेः, एवं सति सा क्वापि दूषणं न स्यादिति तु न वाच्यम्, वस्त्वनवस्थाया दूषकत्वाभावेऽपि ज्ञानानवस्थायाः सुषुप्त्याद्युच्छेदिकाया दूषकत्वावश्यकत्वात्, न च तथापि प्राग्लोपादिदोषाः, एकत्र धर्मिणि सजातीयानन्तधर्माभ्युपगमे हि तेषामवकाश इति घटादिप्रतियोगिकभेदवति घटादिप्रतियोगिकभेदाभ्युपगमे ते सन्तु, भेदे भेदान्तराभ्युपगमे तु ते कथम्, भिन्नधर्मिकत्वात्। न चातिरिक्तभेदपक्षे घटप्रतियोगिकभेदे घटप्रतियोगिकभेदान्तरसत्त्वे तेनापि प्रथमकार्यनिर्वाहेण प्राग्लोपादिसम्भवः, घटप्रतियोगिकभेदेऽनुयोगिप्रतियोगिकभेदस्य तादृशदोषानाक्रान्तत्वात्, आद्यस्य पटे सत्त्वेऽपि द्वितीयस्य तत्रासत्त्वात्। वैधर्म्ये वैधर्म्यान्तराभ्युपगमेऽपि तदनवकाशाच्च, अनुयोगितावच्छेदकसमानाधिकरणो हि धर्मः प्रतियोग्यवृत्ति वैधर्म्यमिति घटत्वं पटप्रतियोगिकभेदः, तत्र च पटभिन्नत्वस्यापि सत्त्वेनोक्तदोषसंस्पर्शः शङ्क्येत, परन्तु घटनिष्ठः पटभेदो घटत्वं घटत्वनिष्ठस्तु स घटत्वत्वमिति घटत्वत्वेन कथं घटे भिन्नत्वव्यवहारोपपादनसम्भवः, वस्तुतस्तूक्तरीत्याऽनवस्थितप्रवाहस्य यौक्तिकत्वे भवताऽपि स्वीकृते पक्षान्तरेऽपि प्राग्लोपाद्यसम्भव एव, प्रामाणिकेऽविनिगमनाया अपि कथञ्चित्परिहार्यत्वादिति चेन्न, भेदो भिन्न इति व्यवहारान्यथानुपपत्तेर्लाघवसहकारेण प्रथमभेद एव स्वपरनिर्वाहकत्वकल्पकत्वेनानवस्थाया अस्वीकार्यत्वात्। अस्त्वेवमेवेति चेन्नन्वेवं प्रथमोऽपि भेदो मा भूदतिलाघवात्। अत्रापि का क्षतिरिति चेत्स्वरूपभेदे बाधकानामुक्तत्वात्, स्वपरनिर्वाहकत्वं च स्वप्रतियोगिकतया स्वानुयोगिकतया च भेदव्यवहारं प्रति भेदान्तरं विनैव स्वस्य प्रयोजकत्वं मूले निरस्तमेव। तथाचैकप्रमाणेनानीतोऽप्यर्थः प्रमाणान्तरबाधिततयाऽनिर्वाच्यतामेव चुम्बति। नन्वेवमनादृत्य लाघवमनवस्थितप्रवाहोपगम एवोचित इति चेन्न, तत्रापि प्रमाणान्तरविरो-

यदपि 'अथेतरेत्यादि निरूपणा'दित्यन्तम्, तदप्ययुक्तम्, तथाहि–इतरेतराभावज्ञानं भेदव्यवहारहेतुं मन्यते यस्तस्य पक्षो नोपपन्नः, आत्माश्रयप्रसङ्गादित्येवं ब्रुवाणस्य न किञ्चिद्दूषकमुक्तं स्यात्, प्रतियोगिरूपत्वेनेत्यादिसमाधानं च प्रागेव दूषितम्। 'अथ स्वरूपमेवेत्यादि न दोष' इत्यन्तं यदुक्तम्, तदप्यस्मदनुक्तदोषदूषणमित्युपेक्षितम्। यदपि 'तथापि क इत्यादि तिर्यक्चे'त्यन्तं, तदपि गर्तवर्तिगोधामांसविभजनन्यायमनुहरति, पक्षत्रयस्याप्युक्तयुक्त्याऽऽच्छादितस्य दर्शयितुमशक्यत्वेन तद्विभागव्यवस्थितेरनवसरनिरस्तत्वात्।

यच्च स्वरूपभेदस्य लक्षणमुक्तं ताद्रूप्येणाप्रतीतौ प्रतीतिरिति, तदप्यचारु, यदेकमेव वस्तु भ्रान्त्या भिन्नमिति प्रतीयते तत्र ताद्रूप्येणैकस्यैकरूपतया प्रतीतिर्नास्ति, अस्ति च प्रतीतिः, न च स्वरूपभेद इत्यतिव्याप्तिः, ताद्रूप्येणेत्यस्य धर्मान्तररूपभेदासङ्कीर्णोदाहरणार्थत्वात्। प्रतीतिरभ्रान्ता विवक्षितेति चेन्न, स्वरूपप्रतीतेस्तत्राप्यभ्रान्तत्वात्। यच्च स्वरूपमात्रेण प्रतीयते वस्तु न ताद्रूप्येण न च नानात्मना, वस्तुगत्या चैकमेव तत्, तत्रापि स्वरूपलक्षणो भेदः स्यात्। नास्त्येवेदृशमुदाहरणम्, ताद्रूप्याताद्रूप्यान्यतरस्यावश्यं प्रतीतेरिति चेन्न, प्रतीतिकलहानवकाशात्, भवति हि यत्त्वया तत्र दृष्टं तत्किमेकमनेकं वा इत्यनुयुक्तो नायं विशेषो मया शङ्कितो जिज्ञासितो वा, स्वरूपमात्रं तु प्रतीत्याहमुदासीनोऽभूवमित्यभिधत्त इति। ननु तदपि स्वरूपं भेद एव कस्मा-

---

धस्य जागरूकत्वात्. तथाहि–वैधर्म्ये वैधर्म्यान्तरप्रवाहस्यैन्द्रियकत्वं वाऽतीन्द्रियत्वं वा आद्ये कदाचिदपि तस्य प्रत्यक्षं जायेतैव, नचैवम्। द्वितीये तु घटत्वपटत्वयोर्भिन्नत्वेन प्रतीतयोरेव स्वाश्रयभेदप्रतीतिप्रयोजकत्वसम्भवेन तयोर्भिन्नत्वप्रतीतेश्च तद्गतभेदकधर्मान्तरप्रतीतिं विनाऽसम्भवेन घटो न पट इति भेदप्रतीतेः प्राक् वैधर्म्यप्रवाहविषयकानुमानादीनामपेक्षणीयतापत्तिः, न च ते तदा कस्यचिदनुभवमधिरोहन्ति। तस्मात्प्रमाणानां विरोधोऽनिर्वाच्यतयैव परिहरणीय इति दिक्। आत्माश्रयेति। अधिकरणप्रतियोगिनोरितरत्वेन ज्ञानस्य भेदग्रहकारणत्वे आत्माश्रयः स्पष्टः, प्रतियोग्यनुयोगिभावग्रहस्य तदायत्तस्य कारणत्वे त्वन्योन्याश्रय एव परम्परया स्वस्य स्वापेक्षतासमीक्षयाऽऽत्माश्रयशब्देनोक्तः। किं वा प्रतियोग्यनुयोगिभावविषयकोऽपि घटो न पट इत्याकार एव ग्रह इत्याशयेनेत्थमुक्तम्।

यच्चेति। यथाश्रुते ताद्रूप्यमेकरूपत्वं वाऽन्यरूपत्वं चेति विकल्प्याद्यं प्रत्याह यदेकमिति। भिन्नं = अनेकं। ताद्रूप्येणेत्यस्य व्याख्यानमेकरूपतयेति। ननु ताद्रूप्यं यथैकचन्द्रादिकमित्यर्थः। रूप्यं तदा तेनाप्रतीतेर्लक्षणे निवेशो विफल एवेति तथा विकल्प्य निरसनमनुचितमित्यत आह ताद्रूप्येणेति। धर्मान्तररूपोऽतिरिक्तो वैधर्म्यात्मान्योन्याभावात्मा च भेदस्तद्व्यावृत्त्यर्थत्वात्, पटोऽयं न घटस्तन्तुमयश्चेत्यत्रानुयोगिन एकत्वेनैव प्रतीतिर्न तु द्वौ चन्द्राविति यदनेकात्मनेति भावः। न चैवं द्वौ घटाविति प्रतीतिमादायाव्याप्तिरेव कुतो नोक्ता, अतिव्याप्त्यपेक्षया तत्प्राबल्यादिति वाच्यम्, अयं घट इत्यादिप्रतीतिमादाय लक्षणसमन्वयात्। स्वरूपेति। द्वित्वांशे हि तत्र भ्रान्तत्वं नतु चन्द्रस्वरूपांशे इति भावः। सर्वांशेऽभ्रान्तत्वविवक्षायां त्वाह यच्चेति। ताद्रूप्येण = एकत्वेन। नानात्मना = अनेकत्वेन। अताद्रूप्यमनेकत्वम्। प्रतीतीति। अनुभवे विवादायोगादित्यर्थः। अनुभवसमतायै हि परीक्षकाः प्रयतन्त इति भावः। अभिधत्त इति भवति द्वौ इति सम्बन्धः। भवति = दृश्यते। नन्वित्यादि। द्वौ चन्द्रावित्यत्रापि समानमिदम्।

दपि, तत्कथमुक्तदोषावतार इति, मैवम्, एवं ताद्रूप्येणाप्रतीताविति व्यर्थं स्यात्, प्रतीतिमात्रं लक्षणं वक्तव्यं यत्प्रमेयं तत्कस्मादप्यवश्यं भिन्नमिति। एकस्यैव स्वस्माद्भेदप्रसङ्गनिराकरणार्थमपि ताद्रूप्येणाप्रतीतावित्युक्तम्, तच्च खण्डितमिति। ताद्रूप्यमन्यरूपत्वं विवक्षितमिति चेन्न, तदा हि तदानुपस्थापितपरामर्शवदन्यत्वस्य स्वरूपभेदत्वे आत्माश्रयः, सर्वस्वरूपाणां लक्ष्यत्वात्, अन्योन्याभावत्वे चान्योन्याश्रयः, वैधर्म्ये च चक्रकम्।

---

ननु प्रतीयमानत्वमेव यदि स्वरूपभेदस्तदा स्वस्मादपि स्वरूपभेदप्रसङ्ग इत्यत आह एकस्येति। अपिना पूर्वोक्तासङ्कीर्णार्थतासमुच्चयः। तच्चेति। यच्च स्वरूपमात्रेणेत्यादिनेति शेषः। तथा च तदुपादाने बहुषु स्थलेषु प्रसङ्गवारणेऽप्युक्तस्थले प्रसङ्गतादवस्थ्येन वक्तव्यरीत्यन्तरस्यानुसरणीयत्वे तद्व्यर्थमिति भावः। द्वितीयं विकल्पमाशङ्कते ताद्रूप्यमन्यरूपत्वमिति। अन्यत्वमित्यर्थः। द्वित्वप्रतीतेरन्यत्वप्रतीतिनान्तरीयकत्वाद्द्वौ चन्द्रावित्यत्रादोषः। अत एवान्यरूपत्वमन्यतादात्म्यमिति न व्याख्यातम्, द्वौ चन्द्रावित्यत्रान्यतादात्म्येनाप्रतीतेः सत्त्वाद्दोषतादवस्थ्यात्, अन्यतादात्म्येन प्रतीतिस्थलेऽपि स्वरूपभेदसद्भावाच्च, 'यच्च स्वरूपमात्रेणे'त्याद्युक्तस्थलेऽप्युपस्थितस्वेतरान्यत्वप्रतीतिसम्भव एव, एकत्वानेकत्वयोरेव तत्राप्रतीतत्वात्, वैधर्म्यान्योन्याभावयोः प्रतीतिस्थलेऽप्यन्यत्वप्रतीतिरेव, अन्यत्वस्य तदुभयसाधारणत्वादिति तदसाङ्कर्यमिति भावः। वस्तुतस्तु स्वरूपमात्रप्रतीतिस्थलेऽपि यदीतरान्यत्वप्रतीतिरपेयते तदाऽसम्भव एव, अन्यथा तु तत्रैव स्वस्य स्वस्मात्स्वरूपभेदप्रसङ्गो दुर्वार एवेत्यवधेयम्। द्वितीयतदेत्यस्य तच्छब्देनेत्यर्थः। तत्र घटोऽस्ति तमानयेत्यादौ घटादिशब्देन घटाद्युपस्थितावेव तच्छब्देन तत्परामर्शो दृष्टः, प्रकृते त्वन्यत्वविशिष्टस्योपस्थापकान्तराभावेन तच्छब्देनैवोपस्थाप्य तत्परामृष्टव्यमिति तच्छब्दस्य स्वार्थबोधने स्वापेक्षित्वेनात्माश्रय इत्यर्थः। एवञ्च परामर्शवदिति सप्तमीसमर्थाद्वतिः। ननु प्रकृतपरामर्शित्वं सर्वनाम्नः, प्रकृतत्वञ्च बुद्धिस्थत्वम्, तच्च यथा कथञ्चिच्छब्दमनपेक्ष्यैव सम्भवति तथा च नायं दोष इत्याशङ्क्यान्यत्वस्य वैधर्म्यादिसाधारण्ये मानाभावेनान्यत्वं स्वरूपभेदो वाऽन्योन्याभावो वा वैधर्म्यं वा विवक्षितमिति विकल्प्य प्रत्यादिशति अन्यत्वस्येति। नन्वेकस्वरूपभेदलक्षणे स्वरूपभेदान्तरस्य प्रवेशे नात्माश्रय इत्यत आह सर्वेति। वस्तुतस्त्वेवमसम्भवोऽतिस्फुट एव, स्वरूपभेदप्रतीतौ तदप्रतीत्यसम्भवात्। अन्योन्याभावत्वे इत्यत्र वैधर्म्ये इत्यत्र चान्यत्वस्येत्यावृत्त्यानुषज्यते। वैधर्म्ये = वैधर्म्यरूपत्वे। अन्योन्याभावग्रहस्यानुयोगिस्वरूपात्मकभेदग्रहाधीनत्वादन्योन्याश्रयः। अनुयोगिस्वरूपञ्च वैधर्म्यालिङ्गितमेव भेदः, अन्यथा भिन्नतया प्रतीयमानस्वरूपभिद्यमानत्वाभावेन भेदपदबोध्यत्वासम्भवात्, तथा च वैधर्म्यग्रहाधीनमेव स्वरूपभेदज्ञानं तदधीनञ्चान्योन्याभावज्ञानं तदधीनं च वैधर्म्यज्ञानम्, वैधर्म्यस्य प्रतियोगिवृत्त्यन्यधर्मरूपत्वेन तदन्यावृत्तिधर्मरूपत्वेन वा भेदघटितत्वात्, अत्यन्ताभावस्य तद्घटकत्वेऽपि तस्य सदातनसंसर्गाभावरूपत्वेन संसर्गाभावस्य च भेदभिन्नाभावरूपत्वेन भेदग्रहस्यापेक्षणीयत्वात्। घटत्वादिधर्माणां विशिष्य निवेशे चाननुगमः। अथ तदात्मत्वेनाप्रमीयमाणत्वे सति प्रतीयमानत्वं तद्भेदत्वमिति विवक्षायां तदा प्रतियोगिन एव ग्रहणेन नोक्तदोषाणामवकाश इति चेन्न, तदात्मत्वं हि तदभिन्नत्वं भेदघटितमेव, अप्रमीयमाणत्वमपि प्रमीयमाणभिन्नत्वं वा प्रमीयमाणत्वात्यन्ताभावो वा तथैवेति कथन्नोक्तदोषः। प्रतीत्यभावकाले स्वरूपभेदानापत्तिश्च, अचाक्षुषत्वप्रसङ्गश्च। एतेन तदात्मत्वेनाप्रमीयमाणत्वमात्रमप्यपास्तम्।

यद्पीतरेतराभावस्य लक्षणम्–'अबाधितः समानाधिकरणो निषेधप्रत्यय' इति, तदप्यशोभनम्–समानाधिकरण इत्यादिभाषायाः कथमपि तात्पर्यगवेषणेऽपि समानाधिकरणो यो निषेधस्तत्प्रत्ययविषयोऽन्योन्याभाव इति तात्पर्यपर्यवसाने समानाधिकरण इति किं तुल्याश्रयः, उतैकाश्रयः, उत तादात्म्यप्रतियोगिकः, उताधिकरणीभूतपदार्थवाचिशब्दविशेषणविशेष्यभावव्यवस्थितपदाभिधेयः, उतान्यदेव, तत्र न प्रथमः, तुहिनमयूखे प्रियामुखे च न दूषणकणस्यापि सम्भव इति प्रत्ययस्यापि दर्शनात्। तत्र मुखचन्द्रयोरन्योन्याभावोऽस्तीति चेन्न, तस्य सत्त्वेऽप्युक्तप्रत्ययस्य तदविषयत्वात्। मास्तु तद्विषयः, लक्षणं त्वस्यैतत्, तच्च तदविषयत्वेऽप्यदुष्टमिति चेत्, कीदृशं तर्हीदं लक्षणम् ? न तावत् समानाधिकरणो यो निषेधस्तत्प्रत्ययो यस्तस्य यो विषयः सोऽन्योन्याभाव इति, नापि स एवान्योन्याभाव इति, नापि यत्र समानाधिकरणो निषेधप्रत्ययस्तत्र योऽस्ति सोऽन्योन्याभाव इत्यस्तु, तद्धर्मस्य सर्वस्यान्योन्याभावत्वापातात्, समानाधिकरणपदवैयर्थ्यप्रसङ्गाच्च। एतेनैकमुदाहरणमादाय द्वितीयोऽपि निरस्तः। नापि तृतीयः, तादात्म्यप्रतिसन्धानव्यतिरेकेण तत्प्रतियोगित्वस्य प्रत्येतुमशक्यतया तन्निर्वचनप्रसङ्गात्, तच्चाशक्यम्, तथाहि—तदेकत्वं वा भेदाभावो वा, स्वरूपं त्वसम्भावितम्, तस्य भेदत्वोपगमात्, तस्मिन् दृष्टेऽपि तन्न वेति तादात्म्यसंशयानवकाशापत्तेः। आद्येऽपि सङ्ख्याविशेषो वा धर्मान्तरं वा, नाद्यः, गुणादौ तदभावप्रसङ्गात्, प्रथमक्षणे कार्यद्रव्यस्यैकस्यापि स्वातादात्म्यप्रसङ्गात्,

---

यथाश्रुतं विवेचयति समानाधिकरण इत्यादीति। कथमपीति। एतेन परस्य निरूपणासौष्ठवं सूचितम्, क्लिष्टकल्पनयेदृशार्थस्य लब्धव्यत्वात्। प्रत्ययविषय इति। प्रतीयते इति प्रत्ययइति व्युत्पत्तिमाश्रित्येदम्। तत्प्रत्ययविषयत्वेन तन्निवेशः शिरोवेष्टनेन नासिकास्पर्शमनुकरोतीति समानाधिकरणनिषेधत्वमेव लक्षणमुचितम्। एवञ्चानुयोग्यादौ भेदप्रत्ययविषयत्वसत्त्वेऽपि नातिव्याप्तिः। अधिकरणीभूतेति। अधिकरणबोधकपदसमानविभक्तिकपदाभिधेय इत्यर्थः। दर्शनादिति। तद्विषयीभूताभावस्यात्यन्ताभावत्वेन चन्द्रप्रियामुखात्मकतुल्याश्रयकत्वेन चातिव्याप्तिरिति भावः। सर्वेषां भेदानां सदृशाश्रयकत्वाभावेनाव्याप्तेरप्युपलक्षणमिदम्। उक्तभावमजानानः शङ्कते तत्रेति। उक्तभावं स्पष्टयति तस्येति। उक्तप्रत्ययो मास्तु तद्विषयः = अन्योन्याभावविषयकः। अस्य = अन्योन्याभावस्य। एतत् = अस्मदभिप्रेतम्। तच्चेति। उक्तप्रत्ययस्येति शेषः। पराभिप्रायं पृच्छति कीदृशमिति। इदं = त्वदभिप्रेतम्। न तावदिति। अत्यन्ताभावेऽतिव्याप्तेरतिस्फुटत्वादिति भावः। स एव = समानाधिकरणो निषेध एव। अत्राप्युक्तस्थलेऽतिव्याप्तिः। निषेधप्रत्ययः = प्रतीयमानो निषेधः, निषेध इति यावत्। तथा च समानाधिकरणनिषेधसमानाधिकरणत्वमर्थः। तद्धर्मस्य = समानाधिकरणनिषेधाधिकरणधर्मस्य घटत्वादेरत्यन्ताभावादेश्च। वैयर्थ्येति। संसर्गाभाववारणार्थं लक्षणे समानाधिकरण इत्युक्तम्, उक्तविवक्षायान्त्वतिव्याप्तिः संसर्गाभावेऽस्त्येवेति निषेधसमानाधिकरणत्वमित्येवोच्यताम्। एकमिति। चन्द्रमुखयोरेकमित्यर्थः। घटादौ गुणो नेत्यादिभेदेऽव्याप्तिरपि द्रष्टव्या। तत् = तादात्म्यम्। विकल्पे न्यूनतां परिहरति स्वरूपमिति। भेदत्वोपगमादिति। तादात्म्यरूपत्वस्य च तद्विरुद्धत्वादिति भावः। ननु यस्माद्भिद्यमानत्वं तद्भेदत्वेऽपि स्वतादात्म्यं स्वस्मिन् निर्बाधमित्यत आह तस्मिन्निति। पत्तेरिति। स्वरूपमात्रस्य दृष्टत्वादिति भावः। तदभावेति। तादात्म्याभावेत्यर्थः। ननु गुणे गुणो नास्ति, आद्ये

वैशेषिकमतव्युत्थाने चैकत्वे तदभावप्रसङ्गात्, उपाधिभिन्नावलम्बि च तादात्म्यं कथं स्वरूपमात्रावलम्बिनैकीकर्तुं शक्यम्, विचित्रप्रतिपत्तिकत्वात्। नापि द्वितीयः, तस्यापि धर्मान्तरापेक्षयाऽनवस्थानात्, अनपेक्षायां स्वातादाम्यप्रसङ्गात्। नापि द्वितीयः, स हि भेदस्याभावो भवन्नप्यन्योन्याभावस्यैव स्यात्, अन्योन्याभावस्य च तत्प्रतिक्षेपात्मकत्वात् तेनाप्यन्योन्याभावप्रतिक्षेपात्मना भवितव्यम्, परस्परप्रतिक्षेपात्मकत्वात्तन्निषेध्यनिषेधयोः, तथा च सत्यन्योन्याभावप्रतीतिमन्तरेण तन्निरूपणमशक्यम्, निषेध्यप्रतीतिसापेक्षत्वान्निषेधबुद्धेरित्यन्योन्याश्रयः। नापि तुरीयः, निर्घटं भूतलमित्यत्रापि प्रसङ्गात्। नापि पञ्चमः, समानाधिकरण इति प्रतियोगिसमानाधिकरणो विवक्षितः, तादृशश्च निषेधोऽन्योन्याभावः, तत्प्रत्ययश्च तल्लक्षणमित्यस्याप्ययुक्तत्वात्, भावासमानाधिकरणस्यान्योन्याभावस्य कुम्भः पटत्वं न भवतीत्यादेरव्यापनात्, तज्जातीयतथात्वं च यं विशेषमन्योन्याभावगतमादाय स्यात्तदेव लक्षणीभवनसमर्थमुपजीव्यमानमस्य लक्षणस्योपन्यासं प्रत्यादिशति, न च तदपि सम्भवति, अन्योन्याभावसंसर्गाभावभेदखण्डनप्रस्तावे निरस्तत्वात्, प्रकारान्तरस्य चासम्भवात्। नच—पटः पटत्वं न भवतीत्ययमेवा-

---

क्षणे च द्रव्ये गुणो नास्तीति वैशेषिकमतं यद्यपि, तथाप्येकं रूपमित्याद्यबाधितप्रत्ययबलादन्यत्र सङ्ख्यायाः पदार्थान्तरत्वस्य निर्वर्णितत्वेन गुणे आद्यक्षणावच्छिन्नद्रव्ये च तत्सत्त्वेऽपि न क्षतिरिति नोक्तप्रसङ्गद्वयमित्यत आह वैशेषिकेति। वैशेषिकाभिमतस्य सङ्ख्याया गुणत्वस्य त्यागेऽपीत्यर्थः। अथवा गुणस्यापि सत एकत्वस्य प्रतीतिबलाद्गुणवृत्तित्वम्, प्रथमक्षणे द्रव्यस्यानेकत्वप्रसङ्गाच्च द्वितीयेऽपि क्षणे एकत्वासम्भवेनैकत्वविशिष्टस्यैवोत्पत्तिरित्यभ्युपगमेन वैशेषिकमतत्यागे इत्यर्थः। तदभावेति। तादात्म्याभावेत्यर्थः। अन्यथाऽऽत्माश्रयादिति भावः। एकत्वे एकत्वान्तरमेव यदि तदा नात्माश्रय इत्याकाङ्क्षयानवस्थासत्त्वे एवाह उपाधिभिन्नेति। प्रतियोग्यात्मकोपाधिव्यावृत्तं यत्स्वप्रतियोगिकत्वं तद्विशिष्टं तादात्म्यम्, कस्य क तादात्म्यमिति साकाङ्क्षत्वात्। स्वरूपमात्रावलम्बिना = निष्प्रतियोगिकेनैकत्वेन। घटो द्रव्यमित्यादौ हि तादात्म्यमवभासते, न तु घट इत्यादावपीतिभावः। द्वितीयः = एकत्वं धर्मान्तरमिति पक्षः। इदमुपलक्षणम्, पदार्थान्तरस्यापि लक्षणस्य निरूपणीयत्वात्प्रतीत्या च निरूपणस्यान्योन्याश्रयावहत्वात्प्रकारान्तरस्य चासम्भवात्। द्वितीयः = तादात्म्यं भेदाभाव इति पक्षः। तादात्म्ये भेदस्तत्र च तादात्म्यं प्रविष्टमित्यन्योन्याश्रय इत्याह स हीति। तादात्म्यप्रतियोगिकस्तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकोवाऽभावो भेद इति लक्षणे दूषणान्तराण्यपि बाधोद्धारेऽधस्तादावेदितानि। प्रसङ्गादिति। प्रतियोग्यनुयोगिवाचकपदसमानविभक्तिकनञ्प्रतिपाद्यमानत्वविवक्षायामपि यदा प्रतिपाद्यमानत्वं नास्ति तदाऽव्याप्तिः, यदा कदाचित्प्रतिपाद्यमानताविवक्षणेऽपि सकलभेदव्यक्तीनां तथाऽभिलापासम्भव एव, तथाप्रतिपाद्यमानत्वयोग्यता तु नावच्छेदकं विना सुप्रतिपदा, अन्योन्याभावस्याचाक्षुषत्वप्रसङ्गश्चेत्यादिकमनुसन्धेयम्। प्रतियोगिसमानाधिकरण इति। एतल्लक्षणपरिष्कारस्तत्खण्डनञ्च संसर्गाभावान्योन्याभावभेदखण्डनशारदायां द्रष्टव्यम्। प्रत्यय इति। प्रतीतिरेव प्रत्येतव्यस्य लक्षणमित्याशयः। भावासमानाधिकरणस्य = प्रतियोग्यसमानाधिकरणस्य। ननु यत्किञ्चिदन्योन्याभावव्यक्तिमुपादाय तद्वृत्त्यभावविभाजकधर्मवत्त्वविवक्षायां नाव्याप्तिरित्यत आह तज्जातीयतथात्वमिति तादृशधर्मो न शक्यो निर्वक्तुमिति भावः। असम्भवादिति। प्रतियोगितावच्छेदकसम्बन्धेन स्वाधिकरणावृत्तिः स्वप्रतियोगी यस्य तद्वृत्तिर्योऽभावविभाजकधर्मस्तच्छून्याभावत्व-

भावो घटः पटत्वं न भवतीत्येक एव, एवं प्रतियोग्यैक्येन मयाऽभ्युपगमादिति क्वचित्प्रतियोगिसमानदेशत्वाल्लक्षणसिद्धिरिति-वाच्यम्, तथापि प्रतियोग्यैक्येन तदत्यन्ताभावैक्यापत्तेः, तादात्म्यवत्संयोगस्यापि द्विष्ठत्वाविशेषादतिव्याप्तेः, कालभेदेन च प्रागभावादेरपि प्रतियोगिसमानाधिकरणतयाऽतिव्याप्तेः. कालैक्येन विशेषणे च तदन्योन्यव्यतिरेकाव्याप्तेरिति ।

यदपि धर्मान्तरस्य लक्षणमवादि वैधर्म्यस्य विरोधः, स चैकधर्म्यसमावेश इति, तदप्युद्भ्रान्तमनसो भाषितम्, तथाहि—प्रमाणप्रमेययोर्भेदोऽस्ति न वा ? नचेत्, तदभिधानस्य पर्यायत्वप्रसङ्गः, किम्प्रमाणिका बुद्धिरित्युक्ते बुद्धिविपर्ययेणोत्तरप्रसङ्गश्च । नापि प्रथमः, स हि न तावत्स्वरूपलक्षणः, तुलादिद्रव्यस्यैकस्याप्युभयभावदर्शनात्, अत एव नान्योन्याभावोऽपि, धर्मान्तरं तु तयोर्भेदः परिशिष्यते, यतोऽन्येन रूपेण तत्प्रमाणमन्येन च तदेव प्रमेयमित्युच्यते, तथा च सत्येकधर्म्यसमावेशो लक्षणमव्यापकम् ।

---

मन्योन्याभावत्वम्, तादृशधर्मश्च संसर्गाभावत्वमित्यप्यवृत्तिगगनादिप्रतियोगिकान्योन्याभावेऽव्याप्तम्, गगनादेर्वृत्तिमत्त्वमतेऽपि संसर्गाभावत्वं भेदभिन्नाभावत्वमिति स्फुटोऽन्योन्याश्रयोऽसम्भवश्च लक्षणान्तरञ्च संसर्गाभावस्य प्रागेवापाकृतम् । भेदत्वमखण्डोपाधिरित्यादिकमप्यवधीरितं पुरेति नेहायस्यते । इत्येक एव = इत्यनेनाभिन्न एव । प्रतियोग्यैक्यं नाभावैक्यप्रयोजकमित्याह तथापीति । अत्यन्ताभावेति ध्वंसादेरप्युपलक्षणम् । ननु 'घटपटयोस्तद्वदन्ययोश्च तादात्म्यं प्रतियोगि मन्तव्य' मिति यावोद्धारे प्रागुपदर्शितदिशा कुम्भः पटत्वं न भवतीत्यत्र कुम्भपटत्वयोस्तादात्म्यं प्रतियोगि तत्सामानाधिकरण्यञ्चान्योन्याभावे इति नाव्यापकतादोष इत्यत आह तादात्म्यवदिति । संयोगस्य स्वप्रतियोगित्वसंयोगसम्बन्धेन प्रतियोग्यधिकरणेऽपि सत्त्वेनाभावाभावस्य प्रतियोगिरूपतयाऽभावत्वस्यापि तत्र सत्त्वेन चातिव्याप्तिरित्यर्थः । इदमुपलक्षणम्, घटपटादितादात्म्यस्यान्योन्याभावप्रतियोगित्वे तस्यासत्प्रतियोगिकतयाऽप्रामाणिकत्वापत्तिरित्यादिकं प्रागुक्तमपि द्रष्टव्यम् । यदि स्वभावस्यप्रकारकप्रतीतेः प्रमात्वोपपत्तयेऽभावाभावोऽतिरिच्यते एवेति संयोगे नातिव्याप्तिस्तदाप्याह । कालभेदेनेति । इदमुपलक्षणम्, देशात्मकावच्छेदकभेदेन संयोगाद्यत्यन्ताभावस्यापि प्रतियोगिसमानाधिकरणतयाऽतिव्याप्तेः । कालैक्येनेति देशात्मकावच्छेदकैक्यस्याप्युपलक्षणम् । तथाच प्रतियोग्यवच्छेदकदेशकालावच्छेदेन तत्सामानाधिकरण्यविवक्षणे इत्यर्थः । तदन्योन्यव्यतिरेकेति । कालान्योन्याभावेत्यर्थः । महाकालस्यैकत्वेन तदवच्छेदककालाप्रसिद्धेरिति भावः । देशे काले च व्याप्यवृत्तिवस्तुमात्रस्यान्योन्याभावेऽव्याप्तेरुपलक्षणमिदम् । अत्र प्रकारान्तरानुसरणं च भेदसंसर्गाभावयोर्भेदखण्डनशारदायां प्रतिविहितम् । प्रमाणप्रमेययोरिति । प्रमाण-

वैधर्म्यात्मकधर्मान्तरस्य विरोधात्मकं लक्षणमिति योजनयाऽर्थः । प्रमाणप्रमेययोरिति । प्रमाणत्वेन प्रमेयत्वेन च रूपेणेति शेषः । तदभिधानस्य = प्रमाणत्वप्रमेयत्वावच्छिन्नबोधकशब्दस्य । पर्यायत्वे इष्टापत्तिं परिहरन्नाह किमिति । बुद्धिविपर्ययेण = प्रमेयेण । सोऽयमित्युदयनाचार्यपरामर्शः । प्रमेया चेति सूत्रे प्रमाणत्वप्रमेयत्वयोः सामानाधिकरण्यमुक्तम् । ननु प्रमाणत्वेन प्रमेयत्वेन च भेदो नास्तीत्येव पक्षो युक्तः, पर्यायत्वप्रसङ्गस्तु न, शक्यैक्येऽपि शक्यतावच्छेदकभेदात्, धर्मभेदेन धर्मिभेदाभ्युपगन्तृमतेऽपि स भेदोऽभेदसमानाधिकरण एवेतीत्थमेव पर्यायत्वं परिहरणीयम्, वस्तुनस्त्वौपाधिकभेदः प्राप्ताप्राप्तविवेकेनोपाधिभेदरूप एवेति चर्चितमन्यत्र, अत एव घटद्रव्यादिशब्दानामपि न पर्यायत्वम्, अन्यथा घटो द्रव्यमित्यैक्यधीसद्भावेन स्यादेव, शक्यतावच्छेदकयोस्तु प्रमाणत्वप्रमेयत्वयोर्भेदेऽपि न

सोऽयं "प्रमेया च तुला प्रामाण्यव" दिति पारम्पर्यमपि परामर्शे व्यस्मार्षादित्यास्तां विस्तरः ।

ननु भेदप्रतिपत्तेस्तावत्प्रत्यक्षफलस्यार्थेन्द्रियसन्निकर्षः कारणं वक्तव्यम्, तत्र य एवेन्द्रियसन्निकर्षस्य भेदप्रतीतिहेतोर्द्वितीयः सम्बन्धी स एव भेदोऽस्तु । न, उक्तबाधकैर्बाधितायाः प्रतीतेरर्थेन्द्रियसन्निकर्षकारणकत्वाभावादिति । इति भेदखण्डनम् ।

## कारणत्वखण्डनम् ।

किञ्च तत्कारणत्वमेव ? पूर्वभावित्वमिति चेन्न, चिरानन्वयध्वस्तानामपि कारणत्वप्रसङ्गात् । अव्यवहितपूर्वभावित्वमिति चेन्न, व्यापारस्यैव कारणत्वप्रसङ्गात् । व्यापारेण न व्यवधानमिति चेन्न कारणकारणस्यापि कारणत्वप्रसङ्गात् । कारणस्यातद्व्यापारत्वान्नैवमिति चेन्न, विना विशेषोक्तिं तस्य दुर्विवेकत्वात् । यद्विना यन्न जनयति

---

विरुद्धत्वमिति घटत्वपटत्वात्मक एव वैधर्म्यलक्षणो भेदः, स च विरुद्ध एवेति नासङ्गतिरिति चेत्सत्यम्, तथापि विरुद्धहेत्वाभासनिराकरणप्रकरणे कृतमेव विरोधखण्डनमिति न दोष इत्यभिप्रेत्याह आस्तां विस्तर इति ।

स एवेति । प्रत्यक्षभेदस्यैवेदं लक्षणमिति नाव्याप्तिरित्याशयः । उक्तेति । विषयस्य निरूपणासम्भवे तत्प्रतीतेर्भ्रमत्वं तावदावश्यकम्, विषयस्तु व्यावहारिको वा प्रातिभासिको वा, आद्ये तस्य ज्ञानात्पूर्वं सद्भावेन काममस्तु तत्सन्निकर्षजत्वं प्रतीतेः, न नः किञ्चिदपचीयते, विषयस्य पारमार्थिकताया निराकरणात् । द्वितीयस्तु स्थलान्तरस्थभेदस्येह भानमिति भेदमात्रस्य खण्डने सति तेषां न्यूनाधिकभावाभावेन वक्तुमशक्यमिति भावेनैवोच्येत, तत्र च काऽलौकिकस्य लौकिकस्य वा सन्निकर्षस्य वार्ता, आद्यस्य लौकिकविषयत्वानियामकत्वात्, द्वितीयेन च विषयस्य प्रागपेक्षणीयत्वात्, तस्य च प्रागसत्त्वात्, पूर्वपूर्वभ्रमेणैवोत्तरोत्तरभ्रमस्य समर्थनीयत्वादिति भावः । इति खण्डनशारदायां भेदखण्डनम् ।

पूर्वभावित्वम् = तत्पूर्वकालावच्छेदेन तत्सामानाधिकरण्यम् । चिरध्वस्तस्यापि यागादेर्व्यापारद्वारा कारणत्वोपगमादनन्वयेति । निर्व्यापारेत्यर्थः । व्यापारस्यैवेति । व्यापारवतोऽकारणत्वप्रसङ्गाद्व्यापारेण व्यवधानादित्यर्थः । व्यापारातिरिक्तस्याकारणत्वप्रसङ्गादिति तु नार्थः, तथासति कारणमात्रस्य सव्यापारताया अभिप्रेततया व्यापारस्यैव कारणत्वं न स्यात्, तस्य सव्यापारत्वेऽनवस्थानात् । व्यापारेणेति । स्वस्वव्यापारान्यतरस्याव्यवहितपूर्वभावित्वमपेक्षितमिति तु तत्त्वम्, अन्यथा तदधिकरणक्षणप्रागभावाधिकरणक्षणप्रागभावाधिकरणक्षणावृत्तित्वादिघटिताव्यवहितपूर्वत्वस्य कथमप्यसम्भवेन व्यापाराव्यवधायकत्वोक्तेरकिञ्चित्करत्वात् । कारणकारणस्य = कुलालपित्रादेः । कुलालपितृत्वादिनेति शेषः, कुलालत्वेन तस्य कारणताया इष्टत्वात् । अतद्व्यापारत्वात् = स्वकारणाव्यापारत्वात् । विशेषोक्तिमिति । अपूर्वादिः कुलालपित्रादेश्चेत्यादिः । तस्य = व्यापारत्वस्य तदभावस्य वा । दुर्विवेकत्वादिति । तज्जन्यत्वेन तद्व्यापारत्वस्यापूर्वादाविव कुलालेऽपि सम्भवादिति भावः । यदभावप्रयुक्तं यदनुपधायकत्वं यस्य स तत्र तद्व्यापार इत्यर्थः । तज्जन्यजनकत्वमिति नोक्तम्, जनकत्वस्यैव निरुच्यमानत्वात् । अनुपधायकत्वं स्ववैशिष्ट्यम् । कुलालपितुर्न कुलालाभावप्रयुक्तं घटानुपधायकत्वमितिभावः । स तत्र तद्व्यापार इत्यत्र स तत्र तज्जन्यः सन् तद्व्यापार इति वक्तव्यम्, सह-

तत्तस्य तत्रावान्तरव्यापार इति चेन्न, सहकारिणामप्यवान्तरव्यापारत्वप्रसङ्गात्। जन्यमिति चेन्न, तथापि कारणत्वाव्यवस्थितौ विशेषोक्तेरशक्तेः, कथमपि वा विशेषोक्तौ गगनादेः सर्वत्र कार्ये हेतुत्वप्रसङ्गात्। अनन्यथासिद्धपूर्वभावित्वमिति चेन्न, वक्तव्यं हि कस्मादन्येन प्रकारेण विना ? का च सिद्धिः ? इति। यदि कार्यादन्येन प्रकारेण न निष्पत्तिस्तदाऽसिद्धत्वम्, नहि कार्येण कारणस्योत्पादनम्। नापि कार्यादन्येन प्रकारेण न ज्ञप्तिः, प्रत्यक्षादेरपि कारणज्ञप्तेः, न खलु सर्वा कार्यलिङ्गजा कारणस्य ज्ञप्तिः। नापि कारणत्वाद्व्यतिरिक्तेन प्रकारेण न निष्पत्तिर्ज्ञप्तिर्वा, ज्ञप्तावात्माश्रयात्, अन्यथाऽपि च तदुपगमात्। व्यतिरिक्तत्वमकारणत्वमिष्टमिति चेन्न, उक्तदोषानिवृत्तेः, कारणत्वात्पूर्वञ्चोत्पत्तिज्ञप्त्योः क्षणिकवादिभिरभ्युपगमात्। अव्यवहितपूर्वतया कदाचित्तदपि कारणम्, एवं तत्पूर्वतरमपि, कस्याञ्चिद्व्यक्तेरनेवम्भावेऽपि तज्जातीयतया तथाभावित्ववि-

---

कारिणस्तु नैकस्यापरसहकारिजन्यत्वम्, तज्जन्यजनकत्वे सति तद्जन्ये एव तत्सहकारित्वव्यवहारात्। नच समवायस्याजन्यतया श्रोत्रव्यापारत्वं न स्यात्; इष्टत्वात्, कर्णशष्कुलीसंयोगस्य श्रोत्रमनःसंयोगस्य वा तद्व्यापारत्वादिति भावः। तथापीति। तस्य कारणत्वानिश्चये तन्निरूपितजन्यत्वस्य दुरवधारणत्वात्, तयोस्तुल्यवित्तिवेद्यत्वादिति भावः। नन्वत्र तज्जन्यत्वपदेन तद्व्याप्यत्वे सति तन्निष्ठान्यथासिद्ध्यनिरूपकत्वं विवक्षितमिति नोक्तदोष इत्याशङ्क्याह कथमपीति। प्रसङ्गादिति। कार्यमात्रापेक्षयाऽव्यवहितपूर्वभावित्वादिति भावः। गगनादिकमन्यथासिद्धत्वेन वारयति अनन्यथेति। अनियतानामन्यथासिद्धत्वेनैव वारणमभिप्रेत्य नियतत्वं नोपात्तम्। पूर्वपदन्त्वव्यवहितपूर्वपरम। अन्यदेशस्थस्य कारणतावारणाय तु कार्याव्यवहितप्राक्क्षणावच्छेदेन कार्यसामानाधिकरण्यं वक्तव्यम्। प्रत्यक्षादेः = इन्द्रियादेः। कारणत्वेन रूपेण कारणस्य निष्पत्तौ नात्माश्रय इत्याशयेन ज्ञप्तावित्ति। कारणत्वस्य स्वघटितत्वपर्यवसानादिति भावः। वस्तुतस्तु योग्यतात्मककारणता नैतावतोक्तेति कारणत्वेन रूपेण कारणस्य सर्वत्र निष्पत्तिरसम्भवपराहतेति। न च प्रकृतकारणत्वे स्वरूपसम्बन्धादिरूपकारणत्वप्रवेशे नात्माश्रय इति वाच्यम्, तस्य निरसिष्यमाणत्वात्। ज्ञप्त्युत्पत्त्युभयपक्षेऽप्यसम्भवमाह अन्यथापीति। कारणत्वान्यदण्डत्वादिरूपेणापीत्यर्थः। तदुपगमात् = कारणज्ञप्त्युत्पत्त्योरुपगमात्। कारणत्वान्याजन्यत्वकारणत्वान्याज्ञाप्यत्वार्थकत्वे ऽप्यसम्भवः समानः। नन्वन्यथेत्यत्रान्यत्वमकारणत्वं तदभावः कारणत्वमिति तेन रूपेण सिद्धिविवक्षायामन्यरूपेण सिद्धेरनिषेधान्नासम्भव इत्याशयेनाशङ्कते व्यतिरिक्तत्वमिति। असम्भववारणेऽप्यात्माश्रयोऽस्तीत्याह उक्तेति। दूषणान्तरमाह कारणत्वादिति। योग्यतारूपं कारणत्वं न भवता निरुक्तम्, कार्याव्यवहितपूर्ववृत्तित्वं तु कार्योत्पत्तौ सत्यामेव स्यात्, ज्ञानमपि च तस्य तदैव स्यात्, अपेक्षितञ्च कारणत्वस्य ज्ञानं कार्योत्पत्तेः प्राक्, तथैव कार्यार्थिनः कारणसंग्रहे प्रवृत्तिनिर्वाहात्। कारणत्वे कारणत्वान्तरघटनायामपि चेदं दूषणं तुल्यम्। यद्यपि क्षणिकवादे आद्यक्षणे फलाभावाद्द्वितीयक्षणे च फलस्य सत्त्वेऽपि विशेष्यस्याभावात्फलविशिष्टत्वं न कदापि, कथञ्चित्सम्भवेऽपि वोत्पत्तिः कारणस्योक्तकारणत्वात्पूर्वमेव, ज्ञप्तिरूपं कार्यं परं द्वितीयक्षणे, तथापि ज्ञप्त्युत्पत्तिद्वयमक्षाणिकवादिमते एवोक्तकारणत्वात्पूर्वमिति भावेनाक्षणिकवादिभिरित्युक्तम्। शङ्कते अव्यवहितेति। तदपि = यस्य कारणत्वेन रूपेण ज्ञप्तिरिष्टा तत्। ननु स्यादप्येवं यदि सर्वोऽपि दण्डः कालभेदेनापि तत्तद्घटाव्यवहितपूर्ववर्तितया प्रतीतः स्यात्, अन्यादृशस्यापि तु दण्डस्य सम्भव एव, कारणसंग्रहार्थिप्रवृत्त्यादिकं तु तत्रापीत्याशङ्क्य कार्याव्यवहितपूर्व-

वृत्तितया व्यक्तिव्यभिचाराप्रयोजकत्वादिति चेन्न, कार्यान्तरेऽपि गगनादेरतथाभावस्य विनिगन्तुमशक्यत्वात्। कालदेशव्यापकतयाऽन्यथासिद्धिस्थिति तदिति चेन्न, तथासति शब्दादौ गगनादेरकारणत्वप्रसङ्गात्। एतेनानन्यथासिद्धान्वयव्यतिरेकानुविधायित्वमपि निरस्तम्। गगनादेर्व्यतिरेकाभावादकारणत्वप्रसङ्गश्चाधिकः।

व्यापारवत्त्वं कारणत्वमिति चेन्न, तद्धि व्यापारसमवायित्वं वा व्यापारजनकत्वं वा, नाद्यः, यागादेरकारणत्वप्रसङ्गात्। नोत्तरः, तस्यैव निरूप्यमाणत्वात्।

---

वृत्तितावच्छेदकधर्मवत्त्वविवक्षायां पादमारोपयति कस्याश्चिदिति। कार्यान्तरे = शब्दाद्यतिरिक्त कार्ये। अतथाभावस्य = अकारणत्वस्य। अयम्भावः—कारणत्वेन सिद्धिरूपानन्यथासिद्धिगर्भेऽनन्यथासिद्धत्वं न प्रवेश्यम्, कारणत्वधियो विषयतानवस्थानप्रसङ्गात्, एवञ्च घटाद्यव्यवहितपूर्ववर्तितावच्छेदकधर्मवत्त्वस्य गगनेऽपि सम्भवेन कथञ्चातिव्याप्तिरिति। एवं द्रव्यत्वादिकं तादृशधर्मपदेनादायापि। इदमुपलक्षणम्, कारणत्वेन ज्ञप्त्यभावकाले कारणत्वाभावापत्तेरिति। देशत्वकालत्वव्यापकत्वमेव गगनादेरन्यथासिद्धत्वमित्याह कालेति। तद् = गगनादिकम्। प्रसङ्गादिति इदमुपलक्षणम्, रासभकुलालपित्रादेरुक्तान्यथासिद्धत्वाभावेन तत्रातिप्रसक्तेरवारणात्। कार्यानौपयिकत्वं तु नान्यथासिद्धत्वम्, औपयिकत्वस्य कारणतारूपत्वेनोक्तदोषात्। अथ पञ्चविधान्यथासिद्धिशून्यत्वं विवक्षणीयमिति चेन्न, तस्याः कारणमादायान्वयव्यतिरेकशालित्वादिघटिततयाऽऽत्माश्रयापत्तेः, तत्र पृथगन्वयव्यतिरेकशालित्वादिरूपकारणत्वप्रवेशेऽपि घटादेर्द्रव्यत्वादिरूपेण कारणत्वप्रसङ्गात्, लघुव्याप्यरूपेण कारणत्वसम्भवे गुरुव्यापकरूपेणाप्यन्यथासिद्धत्वमुपगम्य तद्विरहनिवेशेऽप्युत्तरसंयोगं प्रति विभागस्य कारणत्वापत्तेः, क्वचिल्लघोरप्यपरत्र गुरुत्वेन लघुत्वगुरुत्वयोरननुगमाच्च, अननुगतयत्तात्तादिघटनाया आवश्यकत्वाच्च, एतेन लघुस्वरूपावश्यक्लृप्तत्वविशिष्टनियतपूर्ववर्तिन एव कार्यसम्भवे तद्भिन्नमन्यथासिद्धमित्येकस्या एव सर्वव्यापिन्या अन्यथासिद्धेर्विरहो निवेश्य इत्यपि निरस्तम्। नैयत्यस्याप्यननुगमाच्च, घटादौ द्रव्यत्वादिरूपेण कारणताप्रसङ्गावारणाच्च। यदि च यद्यद्धर्मावच्छिन्ने यद्धर्मावच्छिन्नस्य कारणत्वव्यवहाराभावस्तत्तद्धर्मावच्छिन्नभेदकूटस्य तद्धर्मावच्छिन्नकारणत्वगर्भे प्रवेश आद्रियते, तदाऽसर्वज्ञाज्ञेयत्वप्रसंगः, अतएव नव्या नैतादृशकारणत्वं स्वीकुर्वते, नियतत्वस्यापि निवेशेऽनियतान्यथासिद्धानां तेनैव वारणेपि समानमिदमिति भावः। एतेनेति। अनन्यथासिद्धत्वस्य दुर्निरूपत्वेनेत्यर्थः। कार्यान्वयव्यतिरेकाधिकरणकालपूर्वकालवृत्त्यनन्यथासिद्धान्वयव्यतिरेकशालित्वमित्यर्थः। गगनादेरिति। तस्य प्रागभावरूपव्यतिरेकाप्रसिद्धेः। यत्र गगनादिकं तत्र शब्दादिजनकमित्येव व्यतिरेकस्य गगनादिस्थले निवेशे च नानुगमवार्ताऽपि। आवश्यकश्च कारणतानुगम इत्युपपादितमसतःकारणत्वप्रकरणे पुरेति। एतेन कार्यान्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकशालित्वं विवक्षणीयमित्यनन्यथासिद्धत्वानिवेशेऽपि न क्षतिः, विलक्षणप्रयोजकत्वेनैवातिप्रसङ्गभङ्गादित्यपि नाशङ्कनीयम्। विलक्षणप्रयोजकत्वस्य दुर्वचत्वाच्च। स्वरूपसम्बन्धविशेषादेर्निरस्तत्वादिति।

व्यापारवत्त्वमिति। व्यापारत्वमुक्तरीत्यैव निर्वाच्यं न तु जनकताघटितमिति नात्माश्रय इति भावः। व्यापारस्य व्यापारान्तराभावेन तत्राव्याप्तिसत्त्वे एवाह तदिति। यागादेरिति। यागदानादिव्यापारस्यापूर्वस्यात्मसमवेतत्वात्। एवं जात्यादेः स्वविषयकप्रत्यक्षकारणताऽपि न स्यात्, तत्र समवायेन कस्याप्यवृत्तेः।

नित्यसत्त्वासत्त्वयोरन्यतरप्रसक्तिनिवारकत्वमिति चेन्न, निवारकपदावयवस्य प्रत्ययस्य कारणत्वनिर्वचनं विनाऽनिरूप्यमाणार्थत्वात् । अन्यतरत्वस्य चैकस्य निरुक्त्यशक्तेः । यदनभ्युपगमे यस्य तत्पूर्वं सत्त्वप्रसङ्गः, तत्तस्य कारणम्, तद्भावश्च कारणत्वमिति चेन्न, भावस्य विनाशित्वानभ्युपगमे तथाप्रसङ्गेनातिव्यापकत्वात् । तत्पूर्वस्थितत्वेन च विशेषणे सहभावनियतस्याभावेऽपि प्रसङ्गः । तथात्वोपगमे तत्सामग्र्यामपि प्रसङ्गः, तस्या अपि तथात्वोपगमे कार्यद्वयैक्यप्रसङ्गः, असाधारण्यञ्च विशेषापेक्षित्वे ।

---

नित्येति । नित्यासत्त्वं नामालीकत्वम्, घटादिर्यद्यनपेक्षः स्यान्नित्यत्वालीकत्वान्यतराश्रयः स्यादित्यलीकाभ्युपगन्तृपक्षे प्रसङ्गः । प्रागभावे तु न मानम् । मतान्तरे त्वेतदुत्तरकालानुत्पत्तिको घटो यद्येतदुत्तरकालानुत्पत्तिकत्वे सत्येतदव्यवहितपूर्वकालवृत्त्यनपेक्षः स्यादेतत्पूर्वकालवृत्तिः स्यादिति फलतो नित्यत्वस्य प्रसङ्गः, अनित्यो घटादिर्यद्यनपेक्षः स्यात्कादाचित्को न स्यादिति च फलतोऽलीकत्वस्य । पक्षेऽनित्यत्वस्यानुपादाने स्वयमेव नित्यत्वस्यापि, किञ्चित्कालावृत्तित्वे सति किञ्चित्कालवृत्तित्वस्य कादाचित्कत्वरूपत्वात्तद्विरहस्य विशेषणाभावप्रयुक्तस्य नित्यत्वे पर्यवसन्नत्वात् । प्रत्ययस्य ण्वुलः । तस्य हि कर्तरि विधानम्, स च स्वतन्त्रः, तत्त्वं च स्वेतरकारकप्रयोक्तृत्वादिघटितम्, कारकत्वं च क्रियाजनकत्वम्, प्रयोक्तृत्वमपि क्रियाजनककृतिरेवेति जनकत्वनिरूपणसापेक्षमेव । वस्तुतस्तु भवतु नाम यत्किञ्चित्कर्तृत्वम्, तच्चिन्तनमिहाकाण्डताण्डवमेव, प्रसक्तिनिवारकत्वं हि प्रसक्तिप्रतिबन्धकाभ्युपगमविषयत्वमत्र विवक्षार्हम्, तत्र प्रतिबन्धकत्वं यदि कारणीभूताभावप्रतियोगित्वरूपम्, तदा कारणत्वनिरूपणापेक्षाऽक्षतैव, यदि त्वनुत्पादप्रयोजकत्वं तदा तत्स्वरूपसम्बन्धविशेष एव, स च निरस्त एवेति । यदि तु प्रसक्तिनिवारकत्वं प्रसक्त्यभावव्याप्योऽभ्युपगमो यस्य तत्त्वं तदा नोक्तदोष इत्यरुचेराह अन्यतरत्वस्येति । एकस्य = उभयानुगतस्य । अखण्डस्य तस्यानुभवपराहतत्वात् । नित्यसत्त्वान्यत्वे सति नित्यासत्त्वान्यत्ववत् तत्तद्भेदकूटवत्त्वस्य चासर्वज्ञापरिच्छेद्यत्वात् । तादृशान्यत्वद्वयानुयोगितावच्छेदकतायाश्च तादृशान्यत्वद्वयातिरिक्ते एव वक्तव्यत्वात्, तस्य चानन्येन विशिष्य प्रहीतुमशक्यत्वात् । अन्यतरत्वमपास्य शङ्कते यदनभ्युपगम इति । प्रसङ्ग उक्तरीत्यैव । तत्पूर्वं तत्सत्त्वप्रसक्तिप्रयोजको यद्विशिष्टस्यानभ्युपगमस्तद्देव तत्कारणत्वमिति यावत्, अपेक्षणीयत्वेन दण्डाद्यनभ्युपगमस्यैव तथा प्रसक्तिप्रयोजकत्वात् । भावस्येति । ध्वंसे व्यभिचारवारणायेदम् । एतत्कालोत्पत्तिकोभावो घटो यदि भावत्वे सति विनाशी न स्यादेतत्कालपूर्वकालवृत्तिरपि स्यादित्यपि प्रसङ्गसम्भवेन विनाशानभ्युपगमस्यापि तथाप्रसक्तिप्रयोजकत्वेन विनाशोऽपि घटादेः कारणं स्यादित्यर्थः । ननु यद्विशिष्टे तत्पूर्ववर्तित्वमपि विशेषणीयमिति घटाद्यपूर्ववर्तित्वेन विनाशस्यानभ्युपगममादाय नातिप्रसङ्ग इत्याशङ्क्याह तत्पूर्वेति । सहभावनियतस्य = व्यापकस्य । एतदुत्तरकालानुत्पत्तिकोऽयं रसो यद्येतदुत्तरकालानुत्पत्तिकत्वे रसत्वे च सति रसप्रागभावासमवहितोत्पत्तिकः स्यादेतत्पूर्वकालवृत्तिः स्यादितिवद्रसप्रागभावस्थाने रूपप्रागभावं निवेश्यापि प्रसङ्गसम्भवः, रूपस्य रसव्यापकत्वे रूपप्रागभावस्यापि रसप्रागभावव्यापकत्वात्, व्यापकासमवहितोत्पत्तिके च व्याप्यासमवहितोत्पत्तिकत्वावश्यकत्वादिति रूपप्रागभावोऽपि रसे हेतुः स्यात् । इष्टापत्तौ त्वाह तथात्वोपगमे इति । तत्सामग्र्यां = व्यापकीभूतरूपसामग्र्यां । प्रसङ्गः = रसकारणत्वप्रसङ्गः । रूपप्रागभावस्थाने रूपसामग्र्या अपि निवेशसम्भवात् । अत्रापीष्टापत्तौ त्वाह तस्या इति । कार्यद्वयेति । रूपरसयोरप्यैक्यं स्यादभिन्नसामग्रीजन्यत्वादित्यर्थः । ननूक्तापादकद्वये रस-

अतिव्याप्तिरविशेषे । भाविपूर्वार्थविकल्पावकाशश्च ।

नियतप्राग्भावित्वमिति चेन्न, अवश्यम्भावस्य नियमार्थत्वे गगनादेः सर्वकार्यहेतुत्वप्रसङ्गस्य तदवस्थत्वात्, अवयवरूपादेश्चावयवितद्रसादिषु कारणत्वप्रसङ्गात् । अनौपाधिकत्वं नियमार्थ इति चेदेवं ह्यनौपाधिकः पूर्वभावो हेतुत्वमित्युक्तं भवति, तथा च पिपीलिकोत्थानादेर्वृष्ट्यादौ जनकत्वप्रसङ्गः, सहभाविसामग्र्या वा । न तत्र प्राचि पूर्वभावो नियतः किन्तु वृष्टेः परं भाव इति चेन्न, प्राग्रूपाणामेव नियतत्वात् । तानि कारणमेवेति चेन्न, निदानप्राग्रूपसाङ्कर्यप्रसङ्गात् ।

---

प्रागभावस्थाने रूपप्रागभावादिनिवेशेऽपि रूपप्रागभावादिसमवहितोत्पत्तिकत्वमादायैव विपर्ययपर्यवसानं स्यात्, न चैतावता रूपप्रागभावादे रसकारणत्वमायाति, अन्यथासिद्धसमवहितोत्पत्तिकत्वस्यापि दर्शनात्, रसप्रागभावादेः कारणतापर्यवसानाय व्यापादककोटौ रसप्रागभावाद्यनपेक्षोत्पत्तिकत्वमपि शक्यं घटकीकर्तुम्, रसप्रागभावस्य रसकारणतायामुपस्थितौ लाघवात् । एवं च रसप्रागभावासमवहितत्वोक्तावपि न क्षतिः, रसप्रागभावसमवहितोत्पत्तिकत्वसिद्धौ लाघवप्रतिसन्धानेन रसप्रागभावस्य कारणत्वसिद्धेरित्यस्वरसा दाह असाधारण्यमिति । तत्तादेर्विशेषापेक्षित्वे = अननुगतत्वे लक्षणस्यासाधारण्यं = व्यक्तिविशेषविश्रान्तत्वमिति न लक्ष्यमात्रसङ्ग्रहः, कारणताऽनुगमस्यावश्यकताया उक्तत्वात् । अविशेषे = तत्त्वादेरनुगमे तु पूर्वतत्पदेन यस्य ग्रहणं तस्यैवोत्तरतत्पदेन ग्रहणमित्यत्र नियामकाभावाद्घटादिकारणत्वमपि पटादीयं स्यादित्यर्थः । अनादित्वप्रसक्तिप्रतिबन्धकाभ्युपगमविषयत्वं तु विनाशेऽतिव्याप्तिदानेन प्रतिविहितमेव । अनादित्वञ्च प्रागभावाप्रतियोगित्वं प्रागभावत्वञ्चानादिकादाचित्काभावत्वमित्यन्योन्याश्रयश्च । प्रागभावस्य निर्वचनान्तरन्तु प्रतिविधास्यते । अनादित्वं च यद्युत्पत्तिशून्यत्वं तदोत्पत्तेः स्वसमानकालीनपदार्थप्रतियोगिकध्वंसानाधारसमयसम्बन्धरूपतयाऽननुगतत्वेन सामान्याभावनिवेशासम्भवेन स्वोत्पत्तिशून्यत्वनिवेशे व्याघातोऽन्यदीयोत्पत्तिनिवेशेऽतिप्रसङ्ग इति । भावीति । वक्ष्यमाणपूर्वपदार्थविकल्पेत्यर्थः ।

नियतेति । कार्याव्यवहितप्राक्क्षणावच्छिन्नकार्यसमानाधिकरणभेदप्रतियोगितानवच्छेदकत्वमित्यर्थः । अवश्यम्भावस्य = व्यापकत्वस्य । तदवस्थत्वादिति । अनन्यथासिद्धत्वनिवेशस्य निरस्तत्वादिति भावः । अत एवान्यथासिद्धान्तरेऽपि दोषमाह अवयवेति । इदमुपलक्षणम्, अवयवतद्रूपाद्दृष्टादिनिष्ठकारणतावच्छेदकसम्बन्धानां व्यापकतावच्छेदकतया तद्भेदेनोक्तकारणताभेदादित्यपि द्रष्टव्यम् । अनौपाधिकः पूर्वभाव इति । कार्यपूर्ववृत्तित्वे सति कार्यव्याप्यत्वमित्यर्थः । अत्र च व्यभिचारिष्वन्यथासिद्धेषु नातिप्रसङ्गः, गगनादेरपि स्वानुयोगिकसंयोगप्रतियोगित्वादिना कार्याभाववत्सम्बन्धित्वसम्भवादिति भावः । अत्र समवायिकारणादेस्तादात्म्येनापि कार्यव्याप्यत्वानुपपत्तावव्याप्तिमतिस्फुटत्वादुपेक्ष्याह तथाचेति । आदिना पुरोवातादिर्गृह्यते । वाकारः समुच्चये । रूपव्याप्यस्य रसस्य सामग्र्यपि रूपव्याप्या तत्प्राग्वर्तिनी चेत्यतिव्याप्तिरिति । प्राचि पिपीलिकोत्थानादौ व्याप्यसामग्र्याञ्च । वृष्टेः = वृष्ट्यादेः । परं केवलम्, अथवा तदुत्तरमित्यर्थः । भावो नियत इति सम्बध्यते । एवं सति कार्यप्राक्क्षणावच्छेदेन कार्यव्यापकत्वे एव पर्यवसानमिति गगनादावुक्तातिव्याप्तेः सत्त्वे एवाह प्राग्रूपाणामिति । रोगप्रागवस्थानामित्यर्थः । प्रसङ्गादिति । तथा च वैद्यकविरोध इति भावः ।

पूर्वार्थश्च वक्तव्यः । पूर्वकालसम्बन्धित्वं पूर्वत्वमिति चेन्न, कालस्याहेतुत्वप्रसङ्गात् । तस्यापि किं पूर्वत्वमिति च विवेचनीयत्वात् । अतीतोपाध्यवच्छिन्नत्वं तस्य पूर्वत्वमिति चेन्न, अतीत इति निष्ठान्तस्य पूर्वकालवाचिनो विवेचनीयत्वात् । परत्वा-

---

पूर्वार्थ इति । पूर्वभावित्वमित्यर्थः । पूर्वत्वं = पूर्वभावित्वम् । कालस्य = महाकालस्य । तस्य कालावृत्तित्वादित्यर्थः । ननु पूर्वकालावच्छेदेन कार्यसामानाधिकरण्यवतोऽभावस्याप्रतियोगित्वविवक्षायां नेदं दूषणमत आह तस्येति । कालस्येति । उपाधीनां न पूर्वकालादित्वमपि तु महाकालस्यैव तत्तदुपाध्यवच्छिन्नस्य तथात्वमित्यभिप्रायेणाह अतीतेत्यादि । विवेचनीयत्वादिति । अतीतत्वपूर्वत्वयोः परस्पराश्रय इति भावः । अतीतत्वं ध्वस्तत्वमिति चेत्तच्चातीतकालावच्छिन्नोत्पत्तिकध्वंसप्रतियोगित्वं तदाऽऽत्माश्रयः, यदि ध्वंसप्रतियोगित्वं तदा वर्तमानेऽपि प्रसङ्गः, तस्यापि विनाशित्वव्यवहारात् । ध्वंसत्वं प्रागभावप्रतियोग्यभावत्वं प्रागभावत्वञ्च ध्वंसप्रतियोग्यभावत्वमिति परस्पराश्रयाच्च । अनादिकादाचित्काभावत्वं यदि प्रागभावत्वं तदाऽपि सः, अनादित्वस्य प्रागभावाप्रतियोगित्वरूपत्वात् । ध्वंसत्वस्योत्पत्तिमत्त्वे सत्यभावत्वरूपत्वेऽप्युत्पत्तेरनुपदोक्तायाः स्वाधिकरणसमयध्वंसानाधारसमयसम्बन्धरूपाया वा ध्वंसघटितत्वेनान्योन्याश्रयः । एतेन प्रागभावावच्छिन्नसमयत्वं पूर्वसमयत्वमित्यपि निरस्तम् । स्वावच्छिन्ने स्वस्यावृत्तेः प्रागभावस्याकारणत्वप्रसङ्गाच्च । यदि च स्वप्रतियोगिजनकाभावत्वं प्रागभावत्वं तदा जनकताघटितत्वेनान्योन्याश्रयः । अथ गन्धानाधारसमयावृत्तिरभावः प्रागभावः, तादृशसमयश्च सर्वमुक्तिकालः, तदग्रे च कस्यचिदनुत्पत्स्यमानत्वान्न तदा प्रागभावः, दुःखप्रागभावघटितमुक्तिलक्षणवादिमतं त्वनादेयमेवेति न दोषः पूर्वोक्तप्रागभावावच्छिन्नसमयवृत्तित्वं जनकताघटकमिति नोक्तदोषः, गन्धानाधारत्वं च निरवच्छिन्नं गन्धसामान्याभाववत्त्वमिति सृष्टिसमयस्य प्रागभावाधिकरणस्य जलाद्यवच्छेदेन गन्धसामान्याभाववत्त्वेऽपि न क्षतिरिति चेन्न, तादृशसमयानुपस्थितावपि कारणत्वव्यवहारात् । किञ्च तादृशसमये यदि गन्धध्वंसो गन्धानधिकरणवृत्ति ध्वंसत्वाच्छब्दध्वंसवदित्यनुमानं मानं तदा ध्वंसत्वप्रागभावत्वयोरुक्तरीत्याऽन्योन्याश्रयः । यदि तु गन्धत्वं नित्यस्वाधिकरणानधिकरणसमयवृत्ति कार्यमात्रवृत्तिजातित्वाच्चैत्रत्ववदित्यनुमानम्, जातित्वघटकीभूतं नित्यत्वञ्च कालत्वव्यापकत्वं न तु प्रागभावाप्रतियोगित्वघटितमिति न चक्रकमिति, तदा स्वत्वस्य पक्षदृष्टान्तसाधारणस्यैकस्याभावेन साध्यवैकल्यं वा बाधो वेति प्राहुः, हेतुघटककार्यत्वञ्च यदि प्रागभावप्रतियोगित्वं तदा परम्परया प्रागभावत्वज्ञानस्य स्वापेक्षित्वाच्चक्रकम् । यदि तु कृतिविषयत्वं तदा विषयताया विषयभेदभिन्नत्वात्केनानुगतेन रूपेण कार्याणामुक्तहेतौ प्रवेश इति वक्तव्यम् । एतेन स्वरूपसम्बन्धविशेषस्तदित्यपि निराकृतम्, तस्याप्यननुगमेनोक्तदोषात् । किञ्च गन्धानाधारसमयो न महाकालः, तत्र गन्धवृत्तेः, नापि खण्डकालः, तस्य जन्यत्वेन तत्सत्त्वे सर्वमुक्तिकालस्य महाप्रलयत्वव्याहतेः । एतेन महाकाले एव किञ्चिदवच्छेदेन गन्धानाधारत्वमिति नाशङ्कनीयम्, अवच्छेदकस्य जन्यस्यैव वाच्यत्वेनोक्तदोषात् । "ब्रह्मणो वर्षशतमायु" रित्यागमं तु खण्डप्रलये एव क्रियासत्त्वे प्रमाणयन्ति तार्किका न तु महाप्रलये तत्सत्त्वे इति ।

अथ स्वप्रतियोग्यधिकरणानि यावन्तः कालास्तद्वृत्तिपदार्थावधिकानि यानि सामयिकपरत्वानि तदाश्रययावद्गन्त्र्यधिकरणक्षणवृत्तिः कादाचित्काभावः प्रागभावः, सामयिकत्वं दैशिकपरत्वव्यावृत्तजातिविशेषपरिचायकम्, न तु समयसमवेतसंयोगजन्यत्वरूपम्, तेन जन्यत्वस्य

परत्वयोर्गुणयोर्मध्ये यत्परत्वं तत्पूर्वत्वमुच्यत इति चेन्न, कालादौ गुणादौ च तदनङ्गीकारात्तेषामकारणत्वप्रसङ्गात्, तस्मिन्नेव च तदभावात् साक्षात्कारिज्ञानादावपि तस्याकारणत्वप्रसङ्गात्।

सामग्र्येकदेशत्वं कारणत्वमिति चेन्न, एकदेशत्वस्यानिर्वचनीयत्वात्, अवयव-

---

प्रागभावघटितत्वेऽपि न दोषः, कादाचित्कत्वमपि न ध्वंसप्रतियोगित्वरूपं येन ध्वंसत्वप्रागभावत्वयोः परस्पराश्रयता स्यात्, अपि तु कालनिष्ठभेदप्रतियोगितावच्छेदकत्वम्। नचात्र कालत्वं यदि खण्डकालत्वं तदा जन्यत्वमेव तदिति प्रागभावघटितत्वप्रसङ्गः, महाकालत्वञ्चेत्तदोक्तकादाचित्कत्वमसम्भवग्रस्तम्, काले महत्त्वं च नित्यत्वं वा विभुत्वं वा, आद्येऽन्योन्याश्रयः, नित्यत्वस्य प्रागभावाप्रतियोगित्वघटितत्वात्, तस्य कालत्वव्यापकत्वरूपत्वे कालघटितगोत्वादिव्यापकत्वरूपत्वे वा कालत्वस्य निर्वाच्यत्वात्। विभुत्वं च सर्वमूर्तसंयोगित्वम्, तत्र मूर्तत्वं क्रियाकारणतावच्छेदकतया सिद्धा जातिश्चेत्तदा कारणत्वमेव निरुच्यते, क्रियासमवायित्वञ्चेत्स्पन्दशून्यतादशायाममूर्तत्वापातः, अनुगतावच्छेदकञ्चान्यद्दुर्निरूपम्। अपकृष्टपरिमाणवत्त्वञ्चेत्तदा तस्य विभुपरिमाणातिरिक्तपरिमाणरूपत्वेन विभुत्वमूर्तत्वयोः परस्पराश्रयः, देशवृत्तिभेदप्रतियोगितावच्छेदकीयपरिमाणरूपत्वे देशत्वस्योक्तरीत्यैव निरास इति वाच्यम्। कालत्वस्य कालिकसम्बन्धावच्छिन्नाधारत्वरूपत्वात्, कालिकसम्बन्धस्य च न कालानुयोगिकत्वेन निवेशोऽपि त्विदमिदानीं न तदानीमिति धीसाक्षिकसम्बन्धविशेषत्वेन। न चैवमप्युत्पन्ने परत्वे प्रागभावज्ञानं तज्ज्ञाने च पूर्वत्वस्य प्रागभावघटितत्वेन पूर्वकालोत्पन्नत्वज्ञानात्परत्वोत्पत्तिरिति परस्पराश्रयः, एवं क्षणत्वं स्ववृत्तिध्वंसप्रतियोग्यनाधारसमयत्वमिति ध्वंसत्वप्रागभावत्वयोरप्यन्योन्याश्रय इति वाच्यम्, स्वप्रतियोग्यधिकरणकालापेक्षिकाधिककालवृत्तियावत्समानकालीनकादाचित्काभावत्वस्य विवक्षितत्वात्। न चैवमपि यथा कथञ्चिदधिककालवृत्तित्वस्य स्वप्रतियोगिसमानकालोत्पन्ने चिरजीविन्यपि सत्त्वात्तत्समानकालीनत्वस्य च प्रागभावेऽभावादसम्भवोऽव्याप्तिर्वेति वाच्यम्, स्वप्रतियोगिपूर्वकालोत्पन्नत्वे सति स्वप्रतियोग्यधिकरणकालाधिककालवृत्तित्वस्य विवक्षितत्वादिति चेन्न, एवं सति पूर्वत्वे प्रागभावः प्रागभावे च पूर्वत्वं प्रविष्टमित्यन्योन्याश्रयस्यातिस्फुटत्वात्। स्वध्वंसकालावृत्तित्वस्य सत्यन्तस्थाने निवेशे तु ध्वंसत्वस्य प्रागभावघटितत्वेनान्योन्याश्रयात्। धीतद्विषययोः परस्पराश्रयापत्त्या धीविशेषसाक्षिकत्वेन कालिकसम्बन्धनिवेशस्यासम्भवाच्च। इत्थमेव प्रागभावत्वस्यापि धीविशेषसाक्षिकाखण्डोपाधिताया असम्भवाच्च। आधारत्वादेर्निरस्तत्वाच्च। स्वत्वस्य प्रतिव्यक्तिविश्रान्तत्वेन लक्ष्यमात्रसाधारण्यासम्भवाच्च। एवञ्च यदा प्रागभाव एव न प्रामाणिक इति इत्युक्तमन्यत्र, अत्र घटो भविष्यतीत्यादिप्रतीतेः प्रागभावानवगाहित्वात्, अन्यथा श्वोभाविनि घटेऽद्य घटो भविष्यतीतिप्रतीत्यापत्तेः, उत्पन्नपुनरुत्पादवारणस्य च स्वस्य स्वोत्पत्तौ प्रतिबन्धकताकल्पनयैवोपपत्तेः, तदा कुतस्तल्लक्षणानां प्रामाणिकत्वं कुतस्तरां च तद्घटितपूर्वत्वस्य, कुतस्तमां च तद्घटितकारणत्वस्येति भावः। कालादाविति। मूर्तधर्मत्वान्न कालादौ गुणत्वाच्च न गुणादौ परत्वमित्यर्थः। तस्मिन् = परत्वे। साक्षात्कारिज्ञानादाविति। आदिना व्यवहार इत्येके, सुखदुःखे इत्यपरे। ज्ञातस्य परत्वस्य तज्जनकत्वसम्भवात्। पुरश्चान्यत्र परत्वस्याकारणताया इष्टत्वेऽपि न क्षतिरिति भावः।

अवयववत्त्वेति। अत्र सामग्र्यामिति निरूपितत्वं सप्तम्यर्थोऽन्वेति। सामग्र्या निरवयवत्वान्न तदवयवः कारणम्, नापि प्रदेशः, सावयवस्यैवावच्छेदकविशेषस्य तथात्वात्। आदिनाऽवयवितानिरूपकत्वपरिग्रहः। ननु तद्घटकत्वं तदेकदेशत्वम्, तच्चात्र न तद्विषयकज्ञानजनकतावच्छेदकविषयता-

[ स्वप्रदेशत्वादीनां सामग्र्यामसम्भवात् । सकलकारणकलापसमवधानस्यैव च मेलकार्थत्वात्तेनैव तन्निर्वचनात् । यदनन्तरं कार्यं भवत्येव सा सामग्रीति चेन्न, विभागानन्तरं संयोगनाशस्योत्पत्तेर्विभागस्यापि सामग्रीत्वप्रसङ्गात् । एवं कर्मणो विभागेऽन्त्यतन्तुसंयोगस्य पटे इत्यादि ।

---

श्रयत्वम्, जनकताया एव निरूप्यमाणत्वात्, अपि तु तद्विषयिताव्यापकविषयिताकत्वमत आह सकलेति । मेलकेति । सामग्रीत्यर्थः । तत्पदद्वयेन कारणत्वपरामर्शः । तथाचात्माश्रय इत्यर्थः । सामग्रीलक्षणान्तरमपि कारणत्वघटितमेव, निरस्तञ्च तत् 'प्राक्कालमन्तर्भाव्य सामग्री'ति पङ्क्तिकारदायां करणत्वखण्डने, शून्यतोत्सर्गे चेत्युपरम्यते ।

अथ स्वस्वव्याप्येतरसकलसम्पत्तिकालीनो यः कार्याभावस्तद्व्यापकीभूताभावप्रतियोगित्वं कारणत्वम्, दण्डसद्भावेऽपि चक्राद्यभावे घटाभावाद्दण्डाभावस्याव्यापकतापत्तिरतः कालीनान्तमिति चेन्न. स्वस्वव्याप्येतरसकलसम्पत्तेः कदाप्यसम्भवात्, नहि घटोत्पत्तौ तन्त्वादिसमवधानम्, तदितरस्य प्रकृतकार्यकारणस्य सकलस्य विवक्षायामात्माश्रयात् । कार्यप्रागभावव्याप्यप्रागभावप्रतियोगिसकलस्य विवक्षायां तु प्रागभावत्वनिरासेन दत्तमुत्तरम् । स्वपदेनान्यथासिद्धस्यापि दण्डरूपादेर्धर्तुं शक्यत्वेनानन्यथासिद्धत्वनिवेशेऽसर्वज्ञाज्ञेयत्वप्रसङ्गाच्च । तदितरेषां समवधानसम्पादनं तेषु कारणत्वग्रहाधीनं स च तेषां समवधानसम्पादनाधीन इत्यन्योन्याश्रयेण प्रवृत्त्यनुपपत्तेश्च । स्वत्वानुगमाच्च । कार्यस्यापि प्रागभावत्वखण्डने निरस्तप्रायत्वात्तेन रूपेण कार्योपादानानुपपत्तेर्विशिष्योपादानेनाप्यननुगमाच्च । एतेन यत्र कार्याभावव्याप्यता इतराभावावच्छिन्ना तदवच्छिन्नत्वं कारणत्वम्, बीजत्वेऽङ्कुराभावव्याप्यता न बीजत्वत्वेनावच्छिन्ना, इतरसमवधाने सति बीजादङ्कुरोत्पत्तेः, किन्त्वितराभावसहकारेणैव, शिलात्वे त्वङ्कुराभावव्याप्यता शिलात्वत्वेनैवावच्छिद्यते । कार्याभावप्रतियोगितावच्छेदकसम्बन्धाव्यवधिमद्भावलक्षणो बीजादङ्कुर इति प्रतीतिसाक्षिकः स्वरूपसम्बन्धविशेषः, तथा च तादृशसम्बन्धावच्छिन्नकार्याभावव्याप्यत्वं यत्र स्वासाधारणधर्मेतरावच्छेद्यं तदवच्छिन्नं कारणम्, दण्डरूपादौ तु नातिप्रसङ्गः, दण्डाद्घट इतिवद्दण्डरूपाद्घट इति प्रतीतिविरहेण तादृशसम्बन्धावच्छिन्नकार्याभावस्य दण्डरूपत्वावच्छिन्नत्वं न तु तदितरावच्छिन्नत्वमित्यनन्यथासिद्धत्वनिबन्धनो भो दोष इति निरस्तम् । किञ्च दण्डरूपाद्घट इति प्रतीतिस्तावन्निषेद्धुमनुचिता, सामग्रीमति तस्या जायमानत्वात् । जायतां सा किन्तु भ्रान्तिरिति चेदेवं तर्हि कारणत्वाभावनिर्धारणे तादृशसम्बन्धाभावावधारणम्, तस्मिंश्च तदित्येव वक्तव्यम्, कारणत्वस्य तादृशसम्बन्धस्य वा सत्त्वे तादृशप्रतीतेः प्रमात्वस्यापि दुर्वारत्वात्, तथाचान्योन्याश्रयः । एतेन स्वाश्रयान्यासमवधानावच्छिन्नकार्यानुत्पत्तिव्याप्यत्वं यस्य तदवच्छिन्नं कारणम्, तादृशव्याप्यत्वञ्चोक्तसम्बन्धविशेषसाद्गुण्यैव बोध्यमित्यपि निरस्तम् । उत्पत्तेर्ध्वंसघटितत्वेन ध्वंसस्य च स्वघटितप्रागभावघटितत्वेनान्योन्याश्रयादिकं तूक्तमेव । कारणताया अप्रत्यक्षत्वप्रसङ्गाच्च, उत्पत्तेरतीन्द्रियत्वात् । स्वरूपमात्रप्रतीतावपि

नापि स्वरूपसम्बन्धविशेषः कारणत्वम्, तस्य भूरिशो निरस्तत्वात्, तेषां यथोपन्यासं दूषितत्वात्, अननुगमात्, व्यञ्जकग्रहापेक्षणीयतायाश्च कारणत्वाकारणत्वसन्देहदर्शनात्, न चैकत्रावच्छेद्यावच्छेदकभावविरोधः, कारणताया स्वरूपतश्च दण्डत्वादेरवच्छेदकत्वात्, कारणतात्वं त्वतिरिक्तमेतत्त्वेन प्रवृत्त्याद्यनौपयिकत्वप्रसङ्गाच्च । एतेन कारणतावच्छेदकरूपमेव कारणत्वम्, कारणतात्वेनावच्छेद्यत्वात्, अत्र कारणतायाः स्वरूपतोभानेन रूपभेदेनापरिवेत्यपि निरस्तम् । दण्डः कारणमिति प्रतीत्यनुपपत्तेः,

कार्यकारणभावो नाम सम्बन्धः कोऽपीति चेन्न, तदविशेषेण कार्यकारणसाङ्कर्यापत्तेः। कार्यकारणविशेषितत्वाभ्द्वेदे तयोः पृथक् निर्वाच्यत्वापत्तेः। कारणत्वं धर्मः कोऽपीति चेन्न, तत्सद्भावे प्रमाणस्य वाच्यत्वात्। क्वचित्प्रत्यक्षः सः, क्वचिद्दृष्टानुमेय इतिचेन्न, किं हि प्रति कारणत्वं प्रत्यक्षमुल्लिखेत्? न तावदनिर्लुठितकार्यम्, अप्रतीतेः, अन्वयव्यतिरेकादेर्व्यञ्जकस्य च विशेषं प्रत्येव सम्भवात्। नापि सामान्यतो घटादि प्रति, एवं विशेषतो घटाद्यनुत्पत्त्यापत्तेः। तावन्मात्राद्विशेषोत्पत्तौ विशेषेषु विनिगमना न स्यात्, प्रतिविशेषं चोत्पत्तेः प्रागवर्तमानत्वादसन्निकर्षादध्यक्षविषयतानुपपत्तेः। कार्यसहकालश्च सामग्र्यभावान्न तज्जननकाल इति तदानीं तज्जननविशिष्टता कथमध्यक्षा स्यात्, प्राकृतदग्रहणेन

हारात्, दण्ड इत्येतावन्मात्रग्रहेऽपि कारणतया अव्यवहाराच्च। तत्र कारणत्वभानेऽपि कारणतात्वं न प्रतीतमितिचेदत्रैव कथन्तायां किमुत्तरम्? व्यञ्जकाग्रह इति चेदेवंतर्हि तस्यैवावद्योपस्थितिकस्य कारणतात्वमुचितं किं दण्डत्वादेस्तथात्वकल्पनया, न च तदपि सुनिरूपमित्युक्तम्।

कार्यकारणभावोऽतिरिक्तः सम्बन्धो द्विष्ठो यदि तदाह तदविशेषेणेति। कार्यकारणयोरित्यादिः। कार्यं कारणं कारणञ्च कार्यं स्यादित्यर्थः। ननु कार्यत्वावच्छिन्नप्रतियोगिकत्वविशिष्टः स कारणे एव, कारणत्वावच्छिन्नप्रतियोगिकत्वविशिष्टस्तु स कार्य एवेति तत्तद्विशिष्टरूपेण तद्भेदान्न साङ्कर्यमत आह कार्येति। तयोः = कार्यत्वकारणत्वयोः। कारणत्वमिति। कारणत्वं पदार्थान्तरम्, तच्च कार्यतावच्छेदकभेदात्कारणतावच्छेदकभेदाच्च भिद्यते, कारणत्वत्वेनाखण्डोपाधिनानुगतं च कारणपदशक्यतावच्छेदकमिति भावः। एतेन कार्यत्वमपि व्याख्यातम्। अत्र दण्डप्रत्यक्षमात्रेणोक्तकारणताप्रत्यक्षवारणाय व्यञ्जकग्रहस्यापेक्षणीयत्वेनोक्तदोष इत्यादिकं स्वयमेव वक्ष्यति। दण्डो घटकारणमित्यादिशाब्दबोधे कारणत्वस्य स्वरूपतो भानेन कारणत्वत्वेनानुगमाभिधानस्याकिञ्चित्करत्वेन प्रतिव्यक्तिसमयग्रहानुपपत्तिः प्रवृत्त्यनुपयोगश्च, स्वरूपसतोऽनुगमकस्य समयग्रहाद्यनुपयोगात्, अन्यथा तद्भ्रमाद्यनुपपत्तेः, अखण्डोपाधित्वेनान्योन्याश्रयपराघातश्चेति दूषणानां तु सत्त्वे एवाह तत्सद्भावे इति। क्वचित् = दण्डादौ। प्रमाणत्वसिद्धेः कारणत्वसिद्ध्यायत्तत्वेऽपि कारणत्वसिद्धिर्न प्रमाणत्वसिद्ध्यधीनाऽपि तु वस्तुगत्या प्रमाणाधीनेति नान्योन्याश्रयः। परार्थेऽपि परंप्रति व्याप्तिज्ञानादेरेव सम्पाद्यत्वात्। प्रत्यक्षः = अन्वयव्यतिरेकदर्शनसहकृतप्रत्यक्षविषयः। क्वचित् = गगनादौ। दृष्टानुमेयः = सामान्यतोदृष्टानुमानविषयः, अनुमानविषय इति यावत्। इदमुपलक्षणम्, क्वचिदागमगम्य इत्यपि बोध्यम्, यागादौ स्वर्गादिकारणत्वस्य तथात्वात्। अनिर्लुठितकार्यम् = कार्यविशेषाविशेषितम्। व्यञ्जकस्य = कारणताग्राहकस्य। विशेषं = कार्यविशेषम्। सामान्यतो घटादि प्रति = घटत्वाद्यवच्छिन्नं प्रति। विशेषतो घटादीति। घटादिव्यक्तिविशेषेत्यर्थः। ननु घटत्वाद्यवच्छिन्नं प्रति कारणमेव तत्तद्घटादिकं जनयति, निर्विशेषं न सामान्यमिति न्यायादित्यत आह तावन्मात्रादिति। घटत्वाद्यवच्छिन्नकारणादित्यर्थः। असौ घटव्यक्तिः किंदण्डव्यक्तिकारणिकेति निश्चयो न स्यात्, तथा च विशिष्य प्रवृत्तिरपि न निर्वहेदितिभावः। वस्तुतस्तु विशेषकार्यकारणभावस्याप्रामाणिकत्वे सामग्रीवैलक्षण्याभावेन तद्घटव्यक्तेरेतद्घटव्यक्तितो वैलक्षण्यं न स्यात्, प्रत्युत तयोः साङ्कर्यं स्यादित्येव तात्पर्यम्। नन्वेवमस्तु विशिष्यैव कार्यकारणभावस्य प्रत्यक्षवेद्यतेत्यत आह प्रतिविशेषमिति। कारणतया इतिशेषः। अध्यक्षविषयतानुपपत्तेरित्यन्वयः। अवर्तमानत्वादिति। तत्तत्कार्यस्येत्यादिः। नन्वेवं कार्योत्पत्त्यनन्तरमेव कार्यकारणभावः प्रत्यक्षविषयोऽस्तु, तत्राह कार्यसहकाल इति। तज्जननेति। कार्यजननेत्यर्थः। ननूपनीता कार्यजननविशिष्टता प्रत्यक्षे भासतामित्यत-

च संस्कारसाचिव्यस्याप्यसम्भवात् । एवञ्च क्वचिदपि हेतुत्वे साक्षात्कारासम्भवेन किं-मूलव्याप्तिग्रहात्तत्रानुमापि स्यात्, प्रतिबन्दी चानिर्वचनीयवादिनि न स्थाने,] कादाचि-

---

आह प्रागिति । जननस्यातीन्द्रियत्वात्प्रागपि तस्याध्यक्षासम्भवइत्यपि द्रष्टव्यम् । व्याप्तिग्रहादिति । शक्तिग्रहासम्भवेनागमाप्रसरोऽपि द्रष्टव्यः । नन्वेवं कारणत्वाग्रहे परप्रतिपत्त्यार्थं वाग्व्यवहारादिकं तव व्याहतमित्यत आह प्रतिबन्दीति । मन्मते कार्यकारणभावस्यानिर्वाच्यस्याविद्यकत्वेनापर्यनुयोज्यत्वा-दितिभावः,] ननु तं तं घटादिकं तेन तेन पुरुषेण तत्तत्कारणकलापानन्तरमुत्पादितमवलोकमानस्य विशेष-धर्मावच्छेदेनान्वयव्यतिरेकग्रहाज्जायमानः कार्यकारणभावग्रहो व्यभिचाराग्रहदशायां लाघवप्रतिसन्धान-सहकारेण सामान्यधर्मावच्छेदेनैव कार्यकारणभावमवगाहत इत्यनुभवबलादेवास्थीयते, एवञ्च सामान्य-धर्मसामानाधिकरण्येनैवान्वयव्यतिरेकग्रहस्य सामान्यव्यभिचाराग्रहसहकृतस्य सामान्यधर्मावच्छेदेन कार्यकारणभावग्राहकत्वं कथमिति नाशङ्कनीयम्, सामान्यकार्यकारणभावग्रह एव च प्रवृत्त्युपयोगी, कार्यत्वकारणत्वयोश्च नोत्पत्तिघटितत्वं येन तदध्यक्षता न स्यात्, पूर्वं योग्यानुपलब्धिकस्यापीदानीमेवोप-लम्भश्च न तस्य मध्ये आविर्भावं विना निर्वहतीति नोत्पत्तिरपि दुर्ग्रहा, अत एव विशिष्य कार्यकारणभावो-ऽपि साङ्कर्यपरिहारफलो नाप्रामाणिकः, कार्योत्पत्त्यनन्तरमेव तद्ग्रहादितिचेदित एवास्वरसात्कारणतायाः प्रत्यक्षत्वपक्षे किञ्चेत्यादिना दोषान्तराणि वक्ष्यति । इदन्त्ववधेयम् । विशेषकार्यकारणभावः कथञ्चिदध्य-क्षेणेक्षितोऽपि सामान्यकार्यकारणभावविकलोऽन्यथासिद्धेऽपि प्रसरन् कथं वारणीयः, तस्मिन् तज्जाती-यव्यक्त्यन्तरे व्यभिचारस्य सामान्यकार्यकारणभावं विनाऽकिञ्चित्करत्वात्, अत एवाहुः—यत्सामान्ये यत्सामान्यस्य कारणता तद्विशेषे एव तद्विशेषस्येति । सामान्यकार्यकारणभावस्तु विशेषकार्यकारणभा-वायत्तः 'यद्विशेषयोः कार्यकारणभावस्तत्सामान्ययोरपी'ति न्यायात्, तथा च द्वावपि परस्पराश्रितौ कथं सिद्ध्यतः । अथ विशेषकार्यकारणभावग्रहमन्तरेणैव विशेषाणामन्वयव्यतिरेकाभ्यां सामान्यकार्यकारणभा-वग्रहस्तदाऽगृहीतो विशेषकार्यकारणभावो न स्यादेवेति कथं साङ्कर्यवारणम् । अथ सामान्यकार्यकारण-भावस्य ग्रहे सति तदन्यथानुपपत्त्यैव विशेषकार्यकारणभावग्रहसम्भव इति नोक्तदोषो नवाऽन्योन्याश्रय इति चेन्न, विशेषकार्यकारणभावस्य कदाप्यध्यक्षेणानेक्षणे तत्र मानान्तरप्रसरणस्यासम्भावनीयत्वात् । अथ यदा लाघवप्रतिसन्धानादिविरहेण सामान्यकार्यकारणभावग्रहो नावर्तिष्ट तदैव विशेषान्वयव्यतिरेकयो-र्विशेषकार्यकारणभावग्राहकत्वसम्भव इति चेदेवं तर्हि तत्रैव परस्पराश्रयो वाऽन्यथासिद्धेऽपि कारणत्वं वा प्रसज्येत । भवतु तत्र कारणत्वग्रहप्रसङ्गो न तु कारणत्वप्रसङ्गः, पश्चात्तज्जातीये व्यभिचारग्रहेण प्राक्तनकारणत्वग्रहे भ्रमत्वग्रहादिति चेदेवं तर्हि नियतान्वयव्यतिरेकयोरेव कारणताप्रयोजकत्वमित्या-यातम्, नैयत्यञ्च सामान्यधर्मपुरस्कारेणेति तथैव कार्यकारणभावोऽपि भवेद्विशेषकार्यकारणभावस्तु कथ-मवकाशमासादयेत्, तत्तद्व्यक्तित्वेन नैयत्यस्यान्यथासिद्धसाधारण्यात् । याभ्यां सामान्याभ्यां कार्य-कारणभावग्रहो विशिष्यापि तत्सामान्याक्रान्तयोरेव तद्ग्रहस्तु कथञ्चिदन्यथानुपपत्त्यैवाशङ्क्येत, परन्तु सामान्यकार्यकारणभावबोधं विना साऽपि कथम् ? यदा च सत्यपि लाघवप्रतिसन्धाने चार्वाकादीनां व्यभिचारसन्देहोदयदर्शनेन तस्याकिञ्चित्करतया सामान्यकार्यकारणभाव एव विकचितचेतसो न सम्भवति, सम्भवन्नपि वा कस्यचित्तार्किकानुचरस्य न प्रमाभावमनुभवितुमीष्ट इत्यादिकमवादिष्मानु-मानखण्डनशारदायाम्, अन्यथाख्यातिनिरासात्प्रातिभासिकव्यावहारिकसाधारणसामान्याबद्धयम्भा-वाच्चावोचाम स्वप्नादौ सामान्यकार्यकारणभावमात्रस्य व्यभिचारितां तत्र तत्र, निरस्तञ्चाव्यवहितोत्त-रत्वनिवेशेन व्यभिचारवारणं परामर्शखण्डनशारदायाम्, तदा कथमप्रामाणिकसामान्यकार्यकारणभा-

त्कत्वानुपपत्त्या तद्ग्रह इति चेन्न, वैयधिकरण्यात्। कथमपि सामानाधिकरण्ये तदुपपादक-स्योपपाद्यवदनुपपत्ताचविशेषाद्विश्रान्तिर्नानादित्वेनापि शक्योपपादना। वैयधिकरण्ये-ऽप्युपपाद्यासम्बन्धश्चेत्, अनियमः, सम्बन्धश्चेदविश्रान्तिरिति। एतेन शक्तिः कारण-त्वमित्यपि निरस्तम्।

किञ्च प्रत्यक्षप्रमितौ विषयस्यापि सन्निकर्षव्यापारकस्य कारणतया स्ववृत्त्या-पत्तेः, अन्यथाऽक्षस्यापि कारणत्वं न स्यात् अनुविधानाविशेषात्, विषयाविशेषिताक्षस-न्निकर्षस्य तथात्वेऽप्यापत्तेः, क्वचित्कारणाकारणत्वविवादस्य चानुच्छेद्यत्वापत्तेः, एकेन

---

बाधीनस्य विशेषकार्यकारणभावस्य विश्वसनीयता, तदनधीनस्य वा कथं नान्यथासिद्धसाधारणतेत्यु-भयथा दोष इति कृतमनल्पजल्पेन। तद्ग्रहः = कारणताग्रहः। अर्थापत्त्या चाप्रसिद्धमपि सिद्ध्यतीत्य-भिमानः। वस्तुतस्त्वभावोऽप्रसिद्धोऽपि सिद्ध्येत्, भावस्तु कथम्। विवदन्ते चाभावस्याप्यप्रसिद्धस्य सिद्धौ, साध्याभावत्वेन साध्यीभूताभावप्रतियोगितावच्छेदकरूपेण वा साध्याभावावगाहिनो व्यतिरेक-व्याप्तिग्रहस्यानुमितावर्थापत्तौ वा जनकत्वमुपगम्येतरत्वव्यापकीभूताभावप्रतियोगिगन्धवती पृथिवीत्या-दिपरामर्शात्पृथिव्यामितरभेद इत्यादिरनुमितिरुपपाद्येत, उक्तोपगम एव तु न सङ्गच्छते, साध्याभावत्वेन साध्याभावावगाहिव्याप्तिग्रहस्यैव हेतुत्वात्, अन्यथा साध्यप्रतियोगितावच्छेदकरूपेण साध्याभावाव-गाहिवह्निमद्वृत्तिमानित्यन्वयपरामर्शस्यापि हेतुता स्यात्, आहुश्च बाधग्रन्थे—"पक्षे साध्यासमानाधिकरण-धर्मवत्त्वादिकमपि बाध एव, न तु सत्प्रतिपक्षः, तत्र साध्याभावाभावत्वेन साध्यस्याप्रवेशेन साध्याभा-वानुमापकत्वायोगा"दिति। उपमानापमानशारदोक्तरीत्याऽप्रसिद्धसिद्धिस्तु कस्यचित्तज्जातीयस्य प्रसि-द्धावेव स्यात्, अत्र तु कारणतासामान्यसाधनायैव प्रयत्न इति। कादाचित्कत्वकारणत्वयोरुपपाद्योपपा-दकयोर्वैयधिकरण्यात्। कथमपीति। सकारणकत्वस्योपपादकत्वोक्तेरित्यर्थः। तदुपपादकस्य = कादा-चित्कत्वोपपादकस्य कारणस्य, कारणगतकादाचित्कत्वस्येति यावत्, अनुपपत्तावित्यन्वयः। उपपाद्य-वत् = घटादिकादाचित्कत्ववत्। अविश्रान्तिः, कारणस्यापि कारणान्तरापेक्षत्वात्। नानादित्वेनेति। सामान्यतः कार्यकारणभावे एव विप्रतिपन्नस्य तदन्यथानुपपत्त्या प्रवाहाक्षेपासम्भवात्, अन्यथाऽन्यो-न्याश्रयात्, प्रवाहसिद्धिं विना कादाचित्कत्वस्य व्यभिचारित्वग्रहेण प्रथमतोऽपि कार्यकारणभावग्रहास-म्भवात्। तदुक्तं माध्यमिकैः—"नैवाग्रं नावरं यस्य तस्य मध्यं कुतो भवे" दिति। ऋजुमतयो वैयधि-करण्येऽप्युपपाद्योपपादकभावमिच्छन्ति, सकारणकत्वस्य कारणपर्यवसन्नस्य कादाचित्कत्वसामानाधिक-रण्यासम्भवात्, कार्यतासम्बन्धेन तत्सम्भवस्य कार्यतायाः सम्बन्धत्वस्याप्रामाणिकत्वेन वक्तुमशक्य-त्वात्, कार्यत्वस्याप्यद्याप्यसिद्धेश्च, तत्राप्युक्ताविश्रान्ति दोष एव, दोषान्तरं त्वाह वैयधिकरण्येऽपीति। अपिना सामानाधिकरण्यसमुच्चयः। उपपाद्योपपादकयोः सम्बन्धोऽस्ति न वेति विकल्प्य द्वितीये उक्तम्-अनियम इति। अनुपपादकस्याप्याक्षेपापातः, असम्बद्धत्वाविशेषात्। अविश्रान्तिरिति। असम्ब-द्धस्य सम्बन्धत्वासम्भवात्स्वरूपसम्बन्धस्य च निरस्तत्वात्सम्बन्धानवस्थेत्यर्थः। एतेनेति। शक्तेरती-न्द्रियत्वेनार्थापत्त्यादिगम्यत्वस्यैव वाच्यत्वेनोक्तदोषेणेत्यर्थः।

उक्तास्वरसादाह किञ्चेति। स्ववृत्त्येति। कारणताविषयकप्रत्यक्षे कारणतायाः कारणत्वादिति भावः। अत्यापत्तेरिति। घटाक्षसन्निकर्षस्य पटप्रत्यक्षेऽपि कारणतापत्तेरित्यर्थः। नानाकारणतोपगमे त्वात्माश्रयाभावेऽपि दोषान्तरमुक्तमेव। स्वपक्षाह क्वचिदिति। प्रतिबन्धकाभावादावित्यर्थः। कारणतायाः प्रत्यक्षत्वे तत्र विवादो न भवेत्, विशेषदर्शनात्, तथापि भवन्वा न निवर्तेत। अत्र प्रथमं विवादाभाव-मुपपादयति। एकेनेति। येन प्रतिबन्धकाभावादिदृष्टस्तेन तत्कारणताऽपि दृष्टैव, येन च तत्कारणता न

तस्य दृष्टेरपरेण चादृष्टेः। तल्लक्षणस्य च नियतपूर्वभावित्वादेः कथने कथितदोषापत्तेः, विना च तच्चिन्हाद्भ्रमसन्देहौ तत्र किंदर्शनादुच्छेद्यौ. अक्षेण हेतुत्वधर्मिणि दृष्टेऽपि तदहृष्ट्या यदवगमोऽदृष्टसहकारी वाच्यस्तदर्थेन सिद्धेन हेतुधियोऽर्थवत्त्वे सम्भवति तदन्यार्थकल्पनागौरवं कुतो बलात्सिद्धयेत्। तस्यान्वयानुविधानादेरनुमेयहेतुत्वे व्योमाद्यावनुपपत्तेस्तदन्यत्वसिद्धिरितिचेन्न, अन्योन्याश्रयापत्तेः, प्रत्यक्षस्यान्यस्मिन् विषये सिद्धेऽन्यत्र दृष्टान्तेन तदनुमानं तत्सिद्धौ च प्रत्यक्षस्यान्यविषयतासिद्धिः, तस्य चानागन्तुकत्वे प्रागपि तत्सत्त्वादस्तीतिमतिवत्करोतीतिप्रमापातः, आगन्तुकत्वे च तदुत्पत्तेः प्राक् कारणत्वं क्वापि न स्यात, तथाप्यजातत्वे घटाद्यपि किन्न तथा स्यात्। व्यावृत्तेषु तेष्वनुगतौ च सर्वं प्रति सर्वकारणत्वप्रसङ्गात्। प्रतिकार्यव्यक्ति तत्पृथगिति चेन्न, साधारणस्यापि तद्गतस्य स्वरूपस्य घटादिकारणत्वात्मतयाऽनुवृत्तौ घटकारणस्यापि स्तम्भकारणत्वापत्तेः। कारणत्वमात्रेण तदनुगतं रूपं न घटकारणत्वादिनेतिचेन्न, घटादिविशेषानुपहितकारणत्वमात्रस्य किं प्रतीत्य निर्देश्यस्य सद्भावे प्रमाणाभावात्, अन्यथा यदि किञ्चित्प्रति कारणे सामान्यतः कारणत्वं नाम धर्मः स्यात्, तदा तस्या एव व्यक्तेः किञ्चित्प्रत्यकारणत्वादकारणत्वमपि

---

दृष्टा तेन प्रतिबन्धकाभावोऽपि न दृष्ट इति कथं विवादः। ननु धर्मिप्रत्यक्षेऽपि तत्कारणता न प्रत्यक्षा भवति, व्यञ्जकसापेक्षत्वादित्यतआह तल्लक्षणस्येति। कारणताव्यञ्जकस्येत्यर्थः। तच्चिन्हात् = कारणताव्यञ्जकात्। एतेन विवादानुच्छेदोऽप्युपपादितः। व्यञ्जकमभ्युपेत्य तु तेन व्यङ्ग्यस्य कारणत्वस्यान्यथासिद्धिमाह अक्षेणेति। तदहृष्ट्या = हेतुत्वादृष्ट्या। यदवगमः = यस्य व्यञ्जकस्यावगमः। अतिरिक्तहेतुत्वदर्शने इति शेषः। तदर्थेन = तेन व्यञ्जकीभूतार्थेन सिद्धेन क्लृप्तेन। तस्यान्वयानुविधानादेरिति। कार्यान्वयव्यतिरेकप्रयोजकान्वयव्यतिरेकशालित्वादिरूपव्यञ्जकस्येत्यर्थः। अनुमेयहेतुत्वे इति बहुव्रीहिः। अनुमेयेति चागमगम्यस्याप्युपलक्षणम्। तदन्यत्वसिद्धिः = व्यञ्जकान्यत्वस्य कारणतायां सिद्धिः। अन्यस्मिन् = व्यञ्जकभिन्ने। एतेन व्यञ्जकाननुगमान्न तेन व्यङ्ग्यान्यथासिद्धिरित्येव निराकृतम्, अन्यथा कार्यकारणसाङ्कर्याव्यङ्ग्यमपि चेद्वाननुगतमेव कार्यताकारणतावच्छेदकभेदादित्युक्तमेव, तस्येति। कारणत्वस्येत्यर्थः। अनागन्तुकं वेति विकल्प्याह पत्तेरिति। कारणत्वमागन्तुकं वाऽनागन्तुकं वेति विकल्प्याह तस्येति। तदुत्पत्तेः = कत्वं नित्यत्वम्। प्रागपि = सामग्रीसमवधानात्प्रागपि। करोति = दण्डो घटं करोति। तदुत्पत्तेः = कारणत्वोत्पत्तेः। क्वापि न स्यादिति। तथाच न केवलं कारणत्वमेवापि तु न किञ्चिदपि जायेत, न ह्यकारणं जनयति व्याघातात्। तथापि = आगन्तुकत्वेऽपि। ननु योग्यतया अनागन्तुकत्वं ब्रूमः, करोतीति तूपधानमेवाहेति चेदत्र एवदोषान्तरमाह व्यावृत्तेष्विति। धर्ममात्रस्य नित्यत्वासम्भवस्तु तत्र तत्रोक्तोऽनुसन्धेयोऽत्र। दर्शनसर्वस्वे चास्माभिरवाचि तेषु = दण्डादिषु। एकस्यैव कारणत्वस्य कारणमात्रे स्थितावित्यर्थः। प्रतिकार्येति। कार्यतावच्छेदकपरं कार्यपदम्। कारणतावच्छेदकस्यापि चोपलक्षणमिदम्। तत् = कारणत्वम्। स्वरूपस्येति। समयग्रहाद्यर्थमवद्योपेयस्येतिशेषः। घटादिकारणत्वात्मतया = घटादिकारणत्वात्मतया। कारणत्वस्वरूपस्य घटादिकारणत्वस्वरूपत्वे इत्यर्थः। तथासति कारणत्वस्य घटादिकारणत्वरूपतापर्यवसानेन घटकारणस्यापीत्यादिग्रन्थस्य नासङ्गतिः। कारणत्वमात्रेण = कारणत्वमात्रेण। अग्रेऽपि कारणत्वपदं भावप्रधानम्। किंप्रतीति। किन्निरूपितेत्यर्थः। यथा 'घटकारणं' 'पटकारण' मित्यादौ शुद्धं कारणत्वं न प्रतीयते तथा 'घटकारणतायान्' 'पटकारणतायां' मित्यादौ कारणतात्वमपि न शुद्धं प्रतीयते इतिभावः। सामान्यत इति कारणतात्वस्य शुद्धत्वे कारणत्वमपि तथा स्यादिति भावः।

रूपं तत्र स्यादित्यनपेक्षितविशेषकारणत्वाकारणत्वाध्यासाद्भेदेनैकमात्रमेवोच्छिद्येत ।

किञ्च कार्यव्यक्तेः कारणमस्ति न वा ? न चेन्नित्यसत्त्वासत्त्वयोरन्यतरप्रसङ्गः। अस्तिचेत्किं तत्कारणम् ? व्यक्तिविशेष इतिचेन्न, पूर्वादिभावस्य रासभादिसाधारणत्वात् तां कार्यव्यक्तिं प्रति तस्याः किं तत्कारणत्वम् ? स्वरूपमेवेतिचेन्न, तस्य व्यावृत्तत्वात्, तस्यास्तत्कारणत्वात्मत्वे चातदात्मनां तत्कारणत्वविरोधात्, तत्कारणत्वस्य च समवाय्यसमवायिनिमित्तभूतानेकव्यक्तिसाधारणत्वात्, अनेकस्य चैकानुगतव्यवहारबुद्धिनिदानत्वे गोत्वाद्युच्छेदप्रसङ्गस्य दर्शितत्वात् । नियतपूर्वभावित्वमिति चेन्न, व्याप्त्यर्थस्य नियमस्यैकस्य सर्वत्र व्यक्तावसम्भवात्पूर्वमात्रस्य चातिप्रसञ्जकत्वात्। तज्जातीयं प्रति नियततज्जातीयत्वमिति चेन्न, तस्य तज्जातीयव्यक्त्यन्तरसाधारण्यात् । नियतज्जातीयत्वे सति तत्पूर्वत्वमिति चेन्न, तत्समानकालोत्पत्तिककार्यव्यक्तिशतजनकव्यक्तिशतसाधारण्यात्, तथाभ्युपगमे चैकसमवाय्यादिनाशे सर्वतत्कार्यनाशप्रसङ्गः। तत्कालतज्जातीयसर्वसामग्रीतः सर्वतत्कालतज्जातीयोत्पत्तौ सामग्रीभेदस्य कार्यभेदहेतुतया प्रत्येकमिलितसामग्रीत्वविकल्पेन कार्यव्यक्त्यभेदप्रतिव्यक्तिस्वरूपभेदयोरन्यतरप्रसङ्गश्च ।

---

तत्रेति । सामान्यत एवेति शेषः अपनेक्षितविशेषेति । निरूपकविशेषानियन्त्रितेत्यर्थः । यदि तु घटकारणतावानित्यादौ शुद्धकारणतात्वस्याभानेऽपि समयग्रहाद्यन्यथानुपपत्त्यैव तेन रूपेण कारणतानामनुगम आस्थीयते, कारणत्वाकारणत्वयोस्तु किञ्चिन्निरूपितत्वधौव्येण नैकमात्रोच्छेदप्रसङ्ग, तदा पूर्वोक्तदोषेष्वेव निर्भरोऽद्रष्टव्य : ।✓

विशेषकार्यकारणभावं विशिष्य खण्डयितुमाह किञ्चेति । तस्याः = कारणत्वेनाभिमतव्यक्तेः । व्यावृत्तत्वे क्षतिमाह तस्या इति । दण्डादिव्यक्तेरित्यर्थः । तत्कारणत्वात्मत्वे = घटकारणत्वात्मत्वे । चोऽप्यर्थे । अतदात्मनां = दण्डादिभिन्नानां चक्रादीनाम् । ननु दण्डगतं घटकारणत्वमन्यत्, चक्रगतञ्चान्यदिति नोक्तदोषइत्यत आह तत्कारणत्वस्येति । साधारण्यादिति । अनुगतप्रतीतेरिति शेषः । स्वरूपसम्बन्धरूपतापक्षे व्यक्तिविशेषीयकारणताया अतिरिक्तपदार्थत्वपक्षे च दूषणान्तराण्यप्युक्तान्येव । असम्भवादिति । ग्रहणासम्भवादित्यर्थः । कासुचिद्व्यक्तिषु तत्तद्व्यक्तित्वेन ग्रहणेऽप्यन्यथासिद्धसाधारण्यात् । तज्जातीयं प्रति = घटत्वाद्यवच्छिन्नं प्रति । नियततज्जातीयत्वं = नियतपूर्वभाविजातीयत्वम् । अनन्यथासिद्धत्वनिवेशाशक्यताया उक्ततया नियतान्यथासिद्धे एवमपि कार्यव्यक्तिकारणत्वप्रसङ्गसत्त्वे एवाह तस्येति । उक्तजातीयत्वस्येत्यर्थः । तज्जातीयेति । घटादिपूर्ववर्तिव्यक्तिजातीयेत्यर्थः । व्यक्त्यन्तरं घटाद्यपूर्ववर्ति ग्राह्यम् । तस्य घटत्वावच्छिन्नकार्यतानिरूपितकारणताश्रयत्वेऽपि तद्घटत्वावच्छिन्नकार्यतानिरूपितकारणतायाआश्रयत्वं नास्ति, एवं च नियन्तुं पृष्टाऽस्तीति भावः । तत्पूर्वत्वमिति। तद्घटपूर्वत्वं नोक्तव्यक्त्यन्तरे इत्यदोषः। तत्समानेति। तद्घटसमानेत्यर्थः। एककालोत्पत्तिकघटव्यक्तीनां परस्परकारणकार्यत्वप्रसङ्गः । अत्रेष्टापत्तिं परिहरन्नाह तथेति। आदिनाऽसमवायिकारणग्रहः । प्रत्येकेन्यादि। तादृशघटव्यक्तिकारणकूटानां मिलितानां सामग्रीत्वं प्रत्येकं वा, आद्ये कार्यव्यक्तिरप्येकैव स्यात्, द्वितीये चैकापि कार्यव्यक्तिरनेका स्यात्, नानासामग्रीकत्वादित्यर्थः। ननु तद्घटपूर्वक्षणावच्छेदेन तद्घटाधिकरणवृत्त्यभावप्रतियोगितानवच्छेदकधर्मवत्त्वे सति तद्घटाधिकरणे तत्पूर्वक्षणावच्छेदेन वृत्तिमत्त्वं तद्घटकारणत्वं विवक्षितम्, घटान्तरकारणानां तद्घटपूर्ववृत्तित्वेऽपि तद्घटसामानाधिकरण्याभावान्न दोष इति चेन्न, येन केनचित्सम्बन्धेन तद्घटसामानाधिकरण्यस्य व्यक्त्यन्तरकारणेषु सौलभ्यात्, सम्बन्धविशेषनिवेशे च तद्घटकारणानामपि सर्वेषां सङ्ग्रहो न स्यात्,

समवायित्वं प्रत्यपि साधर्म्यानुविधायिनि नियमेऽत्यापत्तेः, व्यावृत्तत्वे चानियमात्। नियततज्जातीयत्वे सति तत्सादेश्यमिति चेन्न, समवायिदेशापेक्षया कार्यकारणयोः सादेश्यनियमानभ्युपगमात्, संयोगिदेशापेक्षया गुणादावसम्भवात्। यथाकथञ्चित्सादेश्यमात्रस्य चातिप्रसञ्जकत्वात्।

अदृष्टादेर्भिन्नदेशस्यापि कारणत्वोपगमे सर्वं प्रति सर्वकार्यसामग्र्याः कारणत्वापातात्, पूर्वभावनियमादेस्तुल्यत्वात्। अनुगते च रूपेऽन्वयव्यतिरेकासम्भवात्, व्यक्तिगतसामान्ययोरेव कार्यकारणत्वापत्तेः, तद्गतसामान्ययोरन्वयव्यतिरेकाविनियमो व्यक्त्योश्च कार्यकारणतेति लक्ष्यलक्षणभाववैयधिकरण्यात्। सामान्याकारेण प्रविष्टां व्यक्तिमादायान्वयव्यतिरेके विशेषस्याकारणत्वं स्यात्, सामान्याकारेण च पूर्वसतः कार्यत्वम्। द्रव्यसामग्र्या वृक्षसामग्र्या शिंशपासामग्र्या च पृथग्व्यक्तिजननापातः, पृथ-

---

अन्यान्यसम्बन्धेन सामानाधिकरण्यात्। तथा चाननुगमः, तत्र चोक्तम्। नैयत्यगर्भेऽपि सम्बन्धविशेषनिवेशेनायं तुल्य इति चेदयमपि भवत एव शिरसि प्रहारः। शब्दानुगम एवात्र व्यवहारविषयो नत्वर्थानुगम इत्यत्र तु शपथमेव प्रमाणम्, तथात्वेऽपि वा दूषणान्तराण्युक्तान्येवेति।

समवायिकारणत्वमपि विशिष्य निराचष्टे समवायित्वमिति। समवायिकारणत्वमित्यर्थः। तस्यापि घटक इति प्रत्यपीत्यन्तेन लभ्यते। साधर्म्यानुविधायिनि = अनुगतधर्मावच्छेदेन प्रवृत्ते नियमे, तन्तुत्वाद्यनुगतधर्मावच्छिन्ननैयत्यस्य समवायिकारणत्वघटकत्वे इत्यर्थः। अत्यापत्तेरिति। उक्तरीत्या समानकालोत्पत्तिकपटव्यक्तीनां परस्परकारणकार्यत्वाद्यापत्तेरित्यर्थः। व्यापतत्तत्तन्तुत्वादिना नैयत्यविवक्षायां तु सर्वत्र व्यक्तौ तद्ग्रहणासम्भवइत्याह व्यावृत्तत्व इति। व्यापकतावच्छेदकस्याननुगमे इत्यर्थः। अनियमात् = सर्वत्र व्यक्तौ व्यापकताग्रहणासम्भवात्। नियतेत्यादि। तत्पटतत्ध्वंसाव्यवहितप्राक्क्षणावच्छेदेन तत्पटसमानाधिकरणाभावप्रतियोगितानवच्छेदकधर्मवत्त्वे सति तत्पटसमानदेशत्वं तत्पटसमवायिकारणत्वमित्यर्थः। तत्समानदेशत्वं तत्समवायिसमवेतत्वं वा तत्संयोगिसंयुक्तत्वं वा, येन केनचित्सम्बन्धेन वा, आद्ये समवायीति। द्वितीये संयोगीति। तृतीये यथेति। अतिप्रसञ्जकत्वादिति। निमित्तकारणादिसाधारण्यात्। एतच्च द्वितीयेऽपि तुल्यम्। यद्धर्मावच्छिन्नं स्वकारणतावच्छेदकयद्धर्मावच्छिन्ने समवायसम्बन्धेनोत्पद्यते तद्धर्मावच्छिन्नं प्रति तद्धर्मावच्छिन्नं समवायिकारणमितिविवक्षितमिति चेन्न, कारणताया एवाद्याप्यनिरूपणात्, समवायस्य च सपरिकरं निरस्तत्वात्, अपृथक्सिद्धिसम्बन्धस्यापि दुर्वचताया उक्तत्वात्, तादात्म्यस्य च भेदाभेदरूपस्य विरुद्धत्वेन भेदस्य मिथ्यात्वे परमतप्रवेशात्, अभेदस्य मिथ्यात्वे च भेदस्यापि तदुपजीवकस्य तथात्वेन कार्यकारणयोरपि तथात्वात्।

कारणतासामान्ये दूषणमाह अदृष्टादेरिति। तुल्यत्वादिति। यद्यप्यदृष्टादेः कारणतायां मानम् न तु सर्वं प्रति सर्वकार्यसामग्र्याः कारणतायामिति वैषम्यम्, तथाप्यदृष्टादिसङ्ग्रहाय निर्वचनीयं कारणत्वं सर्वकार्यसामग्रीमपि संगृह्णाति, येन केन चित्सम्बन्धेन व्यापकताया अवैशिष्ट्यात्, सम्बन्धविशेषनिवेशे चैककार्यकारणकूटस्यापि संग्रहो न स्यादित्युक्तत्वात्। वैयधिकरण्यादिति। ननु सामान्यधर्मावच्छेदेन व्यक्त्योरेव कार्यकारणभाव इति नायं दोष इत्यत आह सामान्याकारेणेति। विशेषस्येति। विशेषधर्मावच्छेदेनेत्यर्थः। स्यादिति। न च विशेषकार्यकारणभावबलादेव तत्सम्भवः तस्य निरस्तत्वात्, अभ्युपेत्य त्वाह सामान्याकारेण चेति। कार्यत्वमिति। स्यादित्यनुषज्यते। पूर्वसत्कालतस्त्वतः कारणत्वं तावन्नास्ति नापि व्यवह्रियते केनचिद्रूपेण, घटत्वावच्छिन्नं प्रति दण्डत्वावच्छिन्नस्य कारणत्वे

णेव तासां सामग्रीत्वात्, सर्वासाञ्च व्यक्तिं प्रत्येव जनकत्वात्, द्रव्यत्वादीनामजन्यत्वात्। शिंशपासामग्र्या वृक्षसामग्रीसहिताया एव सामग्रीभावान्न पृथक् शिंशपाव्यक्तिरिति चेन्न, वृक्षसामग्र्या शिंशपासामग्रीमतीत्यापि शालतालादेर्वृक्षस्य जननात् पृथक्तया वृक्षव्यक्तिजननापत्तेः। साऽपि शिंशपासामग्री तन्मिलिता जनिकेति न व्यक्तिभेद इति चेन्न, शिंशपार्थातिरिक्तवृक्षार्थाभावापत्तेः, वृक्षशिंशपासामग्र्योरेकीभूतयोर्जननाविशेषात्, वृक्षसामग्री च वृक्षजनने एव कथं क्वचिच्छिंशपासामग्रीं क्वचित्तमालसामग्रीमपेक्षत इति स्यात्। एकस्य वृक्षलक्षणस्य कार्यस्य सामग्रीभेदे स्वरूपभेदापातात्। अनुगतायाश्च वृक्षसामग्रीत्वे पृथग्वृक्षव्यक्तेः पृथक् शिंशपादिव्यक्तेरुत्पत्त्यापत्तेरित्यादि स्वयमूहनीयम्।

---

तूत्तरदण्डव्यक्तेः पूर्वघटव्यक्तिं प्रत्यपि कारणत्वं तद्व्यवहारश्च स्यातामित्यर्थः। न च कारणतावच्छेदकधर्मवत्त्वमादाय कारणतातद्व्यवहारयोरिष्टत्वमिति वाच्यम्, यस्या अवच्छेदकधर्मवत्त्वं तस्यास्तद्व्यवहारस्य चापाद्यमानत्वात्. नहि स्वं स्वावच्छेदकं सम्भवतीत्युक्तम्। नन्वेवं का कारणता भवताऽऽपाद्यते? या त्वया निरुच्यतेइतिचेत्पूर्वक्षणावच्छेदेन व्यापकतावच्छेदकधर्मवत्त्वस्य मया निरुच्यमानस्यापादने इष्टापत्तेः, तद्व्यवहारोऽपि यदि दण्डो घटकारणमित्याकार आपाद्यते, तदेष्टापत्तिरेव, यदि तूत्तरदण्डव्यक्तिः पूर्वघटव्यक्तिकारणमिति, तदाऽत्र दण्डत्वावच्छिन्ने घटत्वावच्छिन्नकारणत्वाभानेन न सामान्यकार्यकारणभावबलात्तदापत्तिसम्भवः, नचात्राधिकस्य भानेऽपि घटत्वदण्डत्वयोः कार्यताकारणतावच्छेदकतया भानमक्षतमेवेति वाच्यम्, पर्याप्तेरवश्यं विवक्षणीयत्वादित्यस्वरसादाह द्रव्यसामग्र्याइति। पर्याप्तिनिरासेन पूर्वोक्तेन त्विह प्रत्यवस्थानं सुशकमित्यवधेयम्। उक्तसामग्रीणां द्रव्यत्वादिधर्मजनकत्वात्कथं पृथग्व्यक्तिजननमापाद्यते इति मन्दाशङ्कामपनुदन्नाह सर्वासामिति। तन्मिलिता = वृक्षत्वावच्छिन्नसामग्रीमिलिता। शिंशपार्थेति। यथा वृक्षत्वं विहाय शिंशपात्वं नास्ति तथा शिंशपात्वं विहाय वृक्षत्वमपि न स्यादित्यर्थः। तत्र हेतुमाह वृक्षशिंशपेति। एकीभूतयोः= मिलितयोः। ननु मिलितयोर्जनकत्वं वृक्षत्वशिंशपात्वयोरैक्यापत्तावप्रयोजकम्, निर्विशेषं न सामान्यमिति न्यायेनैव व्यापकधर्मावच्छिन्नसामग्र्या व्याप्यधर्मावच्छिन्नसामग्रीमिलितयैव कार्याजकत्वात्, व्याप्यञ्च व्यापकं विना नावतिष्ठते इत्येतावतैव व्याप्यधर्मावच्छिन्नसामग्र्या अपि व्यापकधर्मावच्छिन्नसामग्रीमवधूय फलानुत्पादकत्वादित्याशङ्क्य व्यापकधर्मावच्छिन्नसामग्री व्याप्यधर्मावच्छिन्नसामग्रीभेदेन भिद्यते नवा, आद्येऽपिसा व्याप्यधर्मावच्छिन्नसामग्र्यात्मिकैव सती भिन्ना, आहोस्वित्तदनात्मिका सती, अत्राद्ये आह वृक्षसामग्रीति। कथं स्यादित्यन्वयः। यदि शिंशपादिसामग्र्यतिरिक्ता नास्त्येव वृक्षत्वावच्छिन्नसामग्री तदा वृक्षसामग्री शिंशपादिसामग्रीमपेक्षते इति रिक्तैव वागित्यर्थः। द्वितीये एकस्येति। अत्र पक्षे यावत्यो व्याप्यधर्मावच्छिन्नसामग्र्यस्तावत्य एव व्यापकधर्मावच्छिन्नसामग्र्य इति कार्यद्वैगुण्यप्रसङ्ग इति भावः। न भिद्यते इति पक्षमाक्षिपति अनुगतायाश्चेति। अनुगताया अपीत्यर्थः। ननु व्याप्यव्यापकभावानापन्नधर्मावच्छिन्नसामग्रीभेदस्यैव कार्यभेदप्रयोजकत्वं न तु सामग्रीभेदमात्रस्येत्यरुचेराह इत्यादि स्वयमूहनीयमिति। कारणान्येव सामग्री ततो व्यतिरिक्ता वा, नाद्यः, क्षणिकत्वाक्षणिकत्वातीन्द्रियत्वानतीन्द्रियत्वरूपविरुद्धधर्माध्यासेनैक्यस्य कथमप्यसम्भवात्। मिलितानि कारणानि सामग्रीतिचेन्न, मेलकार्थस्यैव पृष्टत्वात्। न द्वितीयः, कारणेभ्यो निष्कृष्य तस्या दर्शयितुमशक्यत्वात्। तत्कारणस्य च दुर्निरूपत्वात्। घटकारणेभ्य उत्पद्य सा घटं जनयतीतिचेन्न, तस्या अपि घटकारणान्तर्गतत्वे स्वस्मात्स्वोत्पत्तिविरोधात्, तदनन्तर्गतत्वे 'घटं जनयती'ति वाचो वस्तुशून्यत्वात्। स्वातिरिक्तेभ्यो घटकारणेभ्य उत्पद्य घटं जनयतीति चेन्न, सामग्र्युत्पादनेनैवान्यथासिद्धत्वस्य घटकारणेषु प्रसङ्गात्।

इति कारणत्वखण्डनम् ।

## वर्तमानत्वादिखण्डनम् ।

नियमे च प्राक्कालतयाऽभिधीयमाने प्रागित्यस्य व्यवच्छेद्यौ वर्तमानभविष्यत्कालौ प्राक्कालश्च व्यवच्छेदको विवेचनीयः, न च तद्विवेचनं शक्यम् । वर्तमानादिबुद्धय एव स्वविषयवैचित्र्ये प्रमाणमिति चेन्न, तथाहि, वर्तमानादिबुद्धेरेव को विषयः ? कालविशेष इतिचेत्कालस्य विशेषः स्वाभाविक औपाधिको वा, नाद्यः, कालस्य भवद्भिरेकत्वाभ्युपगमाद्य एव कालो वर्तमान इति प्रतीयते स एवं पूर्वं भावीति पश्चाद्भूत इति च न प्रतीयेत । त्रिविधस्वभाव एवासाविति चेन्न, भेदप्रसङ्गात्, व्यवस्थानुपपत्तिप्रसङ्गाच्च, यदैव वर्तत इति प्रत्ययस्तदैव वृत्तो वर्तिष्यत इति प्रत्ययः स्यात् । द्वितीयश्चेत्, उपाधिरभिधीयताम् । सूर्यादिक्रियासम्बन्धभेदः स इति चेन्न, भूतभविष्यतोरपि क्रियासम्बन्धप्रत्ययस्यावश्यं वक्तव्यत्वात्, य एव दिवसः सूर्यगतिविशेषावच्छिन्नो वर्तते इति प्रतीतः स एव हि तदवच्छिन्नो वृत्त इत्यवगम्यते वर्त्स्यन्निति च, नहि निर्विशेषस्य कालस्य तदातीतत्वं प्रतीयते ऽनागतत्वं वा किन्तूपाधिविशेषेणैवावच्छिन्नस्य, येनैवासौ पूर्वं दिनान्तराद्यवच्छिन्नो वर्तत इति प्रतीतस्तेनैवोपाधिना तत एव व्यवच्छिन्नो वृत्त इति वर्तिष्यत इति च कदाचिज्ज्ञायते । ननु सत्यमेतत्, परं यदा तदुपाधिसम्बन्धस्तस्य स्वरूपेणावतिष्ठमानस्तदा वर्तमानप्रत्ययो यदा स एव विनष्टो भवति तदा भूतप्रत्ययो यदानागतस्तदा भविष्यत्प्रत्यय इति, नैतदस्ति, यद्यत्र लटो विवक्षितोऽर्थस्तदा तज्ज्ञानस्यैव तज्ज्ञानोपायत्वमित्यात्माश्रयानवस्थयोरन्यतरप्रसङ्गः, विनष्टादिशब्दाश्चातीतादिपर्यायास्तेषां सर्वपामेवार्थे निरूप्यमाणे तन्मध्यपतितमेकं शब्दं प्रयुज्य तन्निरुक्तिं कुर्वाणः श्लाघनीयप्रज्ञो मातापितृमानसि ।

सामग्र्युपधायकत्वं मिलितानां वा तेषाम्, सामग्र्यास्तेषां व्यापारत्वं स्यादिति चेन्न, तेष्वन्यतमस्य आद्ये घटादिस्थलेऽपि सामग्र्या अकिञ्चित्करत्वापातः । द्वितीये घटादिकारणानामेव सामग्री तेषां सामग्रीमपेक्षते इत्यात्माश्रयः । सामग्रीद्वयाद्युपगमेऽन्योन्याश्रयादिः । सन्त्वनन्ता एव सामग्र्य इति चेन्न, तासां क्रमेणोत्पत्ति युगपद्वा, आद्ये क्रमेणानन्तपदार्थोत्पादनस्यानित्येनासम्भवेन दण्डादीनां नित्यत्वप्रसङ्गः, द्वितीये कार्यकारणभावविरोधः, सामग्र्युत्तरमेव कार्यस्योत्पत्तेः । कथं च दण्डादीनामेव सामग्रा भिन्नजातीयं सामग्र्यात्मकं घटाद्यात्मकं च कार्यमर्जयेत् । अभिन्नजातीयत्वे च घट एव घटं जनयतीत्यापन्नम् । एतेन कारणेभ्यो भिन्नाभिन्ना सामग्रीत्यप्यपास्तम्, उक्तसर्वदोषोन्मेषात् । "यथा सतो जनि नैवमसतोऽपि जनि नं च । जन्यत्वमेव जन्यस्यानिर्वाच्यत्वसमर्पक" मिति तु सुप्रसिद्धमेव । अभिव्यक्तिपक्षे तस्याः प्राक् सत्त्वे कारकव्यापारवैयर्थ्यं तादवस्थ्येनासत्त्वोपगमापत्तेः । अभिव्यक्तेरप्यभिव्यक्तिरिति पक्षे चानन्ताभिव्यक्त्यभ्युपगमप्रसङ्गेन तासां क्रमेणाभिव्यक्तावुक्तरीत्या दोषः; घटादेः सर्वदाऽभिव्यक्तत्वप्रसङ्गश्च, अन्यथा तदभिव्यक्त्यभिव्यक्तेरसम्भवात् । युगपदभिव्यक्तौ नानासामग्र्यभिव्यङ्ग्यत्वे तासां पृथक् निरूपणीयतापत्तिः, उक्तदोषश्च, अनन्ताभिव्यक्त्यनुभवप्रसङ्गश्च, योग्यत्वात्, एकसामग्र्यभिव्यङ्ग्यत्वे चैक्यापत्तिः; तथाच कथमभिव्यक्तेरभिव्यक्तिरात्माश्रयात्, यदि च घट एवाभिव्यक्तिस्तदा ज्ञानज्ञेययोरैक्यापत्तिः । असत्त्वे च सर्वस्य सर्वत उत्पत्तिप्रसङ्गः । प्रागभाव एव नियामक इतिचेन्न तस्यैव सर्वत्रापाद्यत्वात्, अनादेश्च तस्य नियामकानपेक्षत्वादिति भावः । इति खण्डनशारदायां कारणत्वखण्डनम् । वर्तमानत्वे अत्र लट इति । अवतिष्ठमान इत्यत्र ।

व्यवस्थानुपपत्तिमेवाह यदैवेति ।

वर्तमानत्वान्तरोपगमेऽनवस्था ।

क्रियावच्छिन्नः कालो वर्तमानः, तत्प्रागभावावच्छिन्नो भूतः, तत्प्रध्वंसावच्छिन्नो भविष्यन्निति चेन्न, अतीतानागतप्रतीतिकालेऽपि क्रियावच्छिन्नः प्रतीयत इति वर्तमानप्रत्ययप्रसङ्गस्य तादवस्थ्यात्, क्रियानवच्छिन्नस्य तत्प्रागभावप्रध्वंसाभावावच्छेदानुपपत्तेः, प्रागभावश्च प्रागर्थानिरुक्तौ कथं न दुरधिगमः। प्रध्वंसस्यापि प्रागभावात्कथं विशेषो वक्तव्यः। अभावो विनाशी प्रागभावः, उत्पत्तिमान् प्रध्वंस इत्यनयोर्विशेष इति चेन्न, को हि प्रागभावस्य विनाशो येन विनाशीत्युच्यते, यदि प्रतियोगिभूतो घटादिः, प्रध्वंसस्यापि प्रागभाववत्प्रतियोगीति सोऽपि विनाशी प्राप्तः। उत्पत्तिमांश्च प्रध्वंस इत्युत्पत्तिपदार्थो विवेचनीयः, यद्यसावसतः सत्त्वं तच्च सामान्यं तदाऽभावेऽसम्भव एव। अथ स्वरूपसत्त्वं तदा प्रागभावेऽपि प्रसङ्गः, तस्यापि कदाचिदसत्त्वात्। पूर्वमसतः पश्चात्सत्त्वं विवक्षितमिति चेन्न, पूर्वेदानींपश्चादर्थस्यैवानिरूपणात्। एतेन कारणावच्छिन्नं सत्त्वमुत्पत्तिरित्यपि निरस्तम्, पूर्वापरनिर्वचनमन्तरेण कारणार्थानिर्वचनात्।

अस्तु तावदतीतानागतयोर्यथा तथा निरुक्तिः, यत्क्रियावच्छिन्नो यः कालः स तत्क्रियापेक्षया वर्तमानो नत्वन्यापेक्षयेति चेन्न, तदपेक्षयेति कोऽर्थः? किं तदुपधानेन, उत तदवधिकतया, उत तत्प्रतियोगिकतया, उत तेन प्रकारेणेत्येव? नाद्यः, तदुपाध्यवच्छिन्नस्यातीतानागतप्रतिपत्तिविषयत्वमपि तस्येत्यसकृदुक्तत्वात्। नापि द्वितीयः, अस्मादयं दीर्घ इतिवदस्मादयं वर्तत इत्यवध्यर्थमन्तरेण प्रतीयमानत्वात्, सर्वदैव च त्रिविधावध्यपेक्षयाऽऽसीदस्ति भविष्यतीति प्रत्ययाव्यवस्थाप्रसङ्गात्। अत एव न तृतीयः। नापि चतुर्थः, अतीतानागतप्रतीतिकाले क्रियावच्छेदप्रकारेण वर्तमानप्रत्ययविषयत्वप्रसङ्गात्। नासौ क्रियावच्छेदलक्षणः प्रकारोऽतीतानागतकाले वर्तत इति चेन्न वर्तमानताया अद्याप्यनिरूपणेन वर्तत इत्युक्त्वा विशेषस्य दर्शयितुमशक्यत्वात्। तत्क्रियाकाले तत्क्रियावच्छिन्नः कालो वर्तमान इति चेन्न, कालस्य कालाश्रयतया निरूपणासम्भवात्कालान्तरस्यानभ्युपगमात् तस्यैव कालस्य तदाश्रयत्वे व्यक्तमात्माश्रयत्वापत्तेः।

स्यादेतत्—ग्राहकविज्ञानविषयो ग्राहकविज्ञानाश्रयश्च कालो वर्तमानः, वर्तमानो-

---

तत्प्रागभावेति। क्रियाविशेषप्रागभावेत्यर्थः। क्रियानवच्छिन्नस्य = क्रियासामान्यानवच्छिन्नस्य। खण्डकालस्य हि क्रियाप्रागभावाद्यवच्छेदकत्वम्, स च क्रियाविशेषावच्छिन्न एवेति भावः। प्रागर्थेति। तत्पूर्वकालावच्छेदेन तत्समानाधिकरणोऽभावस्तत्प्रागभाव इत्याशयेनेदम्। यदीति। अत्र पक्षे परस्परप्रतियोगित्वं पर्यवस्यति। प्रध्वंसस्येति। स इत्यादिः। ननु प्रागभावस्य स्वरूपसत्त्वेऽपि नासत्त्वमनादित्वादित्यत आह तस्येति। अत्रोत्पत्तिप्रागभावप्रध्वंसानां लक्षणान्तरनिरुक्तिभङ्गः कारणत्वखण्डनशारदायां निवेदितपूर्व इति नेह वितन्यते। असतः सत्त्वमिति लक्षणं तु ग्रन्थोपक्रमे 'असतः सद्रूपताप्रापण'मिति पङ्क्तिव्याख्यायां चर्चितम्। कारणावच्छिन्नमिति। स्वकारणकूटाव्यवहितोत्तरक्षणावच्छिन्नत्वं स्वस्योत्पत्तिः, प्रागभावस्य तु कारणमेवाप्रसिद्धमिति भावः।

तत्प्रतियोगिकतयेति। तन्निरूपितं वर्तमानत्वमित्यर्थः। व्यक्तमिति। तत्क्रियाकालावच्छिन्नं तत्क्रियावच्छिन्नत्वमपि तत्क्रियाकालावच्छिन्ने एव सम्भवतीति भावः। उपाधिभेदाधीनव्यवस्था तु 'दण्डयपि देवदत्तः कुण्डलिनं स्वमारोक्षयत्येवे' तिग्रन्थेन तत्त्वपदार्थखण्डने पूर्वं निराकृता।

ग्राहकेत्यादि। स्वविषयकज्ञानाश्रयकालत्वं वर्तमानकालत्वमित्यर्थः। ननु प्रागभावप्रध्वंसयोः

पाधिप्रागभावावच्छिन्नश्च पूर्वः, तत्प्रध्वंसाभावावच्छिन्नश्चानागतः, प्रागभावप्रध्वंसयोश्च स्वाभाविकमेव भेदमादाय व्यवस्था, प्राग्व्यवस्थाहेतुरभावः प्रागभाव इति स्वभावभूतस्यैव विशेषस्य कार्यमादाय लक्षणम्, अनागतव्यवस्थानिदानमभावः प्रध्वंस इति च प्रध्वंसस्येति; मैवम्, ज्ञानास्वप्रकाशतापत्ते स्वोपहितस्य स्वयं ग्रहणानुपपत्तेः कथं वर्तमानताग्रहः, ज्ञानान्तरेण च तथाग्रहे वर्तमानतावभासाङ्गीकारे तदासौ दृष्टो मयेति प्रत्ययस्य तदासौ मया दृश्यत इत्याकारतापत्तिः, अत एव स्वप्रकाशपक्षेऽप्यनिस्तारः। यावानर्थः स्वप्रकाशे वर्तमानतयोक्तस्तावत एव परेण ग्रहणे व्यभिचारात्, स्वप्रकाशतायाश्चाधिक्येऽपि विषये विशेषाभावात्। स्वरूपमेव विशेष इति चेन्न, तस्यानुगमानानुगमाभ्यामनुपपत्तेः। प्राक्प्रध्वंसाभावयोश्च स्वरूपतोऽविशेषेऽपि कतरो भूतव्यवहारस्य कतरश्चानागतव्यवहारस्योपाधिरित्यनुयुक्ते कार्यभेदजनकतया च तन्निरुक्तावुत्तरे

---

खण्डनं कृतमिति कथं तद्घटितनिरुक्तिर्युज्यत इत्यत आह प्रागभावेति। प्राग्व्यवस्था = पूर्वत्वव्यवहारः। यद्यपि प्रागभावावच्छिन्नकालस्य पूर्वत्वे पूर्वत्वव्यवस्थाहेतुरभावः प्रागभाव इति पर्यवस्यति ध्वंसावच्छिन्नकालस्यानागतत्वे चानागतत्वव्यवस्थाहेतुरभावोध्वंस इति एवञ्च पूर्वत्वप्रागभावत्वयोर्ध्वंसत्वानागतत्वयोश्च परस्पराश्रयता दुर्वारा, तथापि नोक्तरूपाभ्यां कार्योपाधिकाभ्यां प्रागभावध्वंसयोरुक्तलक्षणद्वये प्रवेशोऽपि तु स्वाभाविकरूपाभ्यामुक्तरूपद्वयलक्ष्यतावच्छेदकाभ्यामेव। स्वाभाविके च रूपे कथञ्चिन्निर्वक्तुमशक्ये अपि प्रतीतिबलादभ्युपेतव्ये इति भावः। ज्ञानेति। घटो वर्तत इत्यादिज्ञानं गृह्णदेव ज्ञानं तदाश्रयकालत्वरूपं वर्तमानत्वं गृह्णीयात्, तच्च स्वयमेवाऽन्यद्वा, आद्यमेकत्र विषयविषयिभावोपगमपक्षे एव युज्यते, द्वितीये तु दृष्ट इत्यस्य स्थाने दृश्यत इति प्रत्ययापत्तिः। एकत्र विषयविषयिभावोपगमपक्षेऽप्याह यावानिति। वर्तमानतया = वर्तमानपदार्थघटकतया, वैशिष्ट्यं तृतीयार्थः। उक्तः = भातः। परेण = अतीतत्वादिग्राहकेण दृष्ट इत्यादिप्रत्ययेन। व्यभिचारात् = स्वविषयकज्ञानाश्रयकालत्वविषयकत्वस्य वर्तमानताविषयकत्वव्यभिचारात्। दृश्यते इत्यत्र यावज्ज्ञातं तावदेव कालान्तरे दृष्ट इत्याद्याकारेण भासते, अत एवातीतज्ञानविषयत्वरूपतत्ता स्मृतिगोचरीभूता तन्मूलभूतानुभवेऽपि भासते स्वप्रकाशवादिमते, न तु स्मृतौ किञ्चिदधिकमिति भावः। ननु दृश्यत इत्यादिवर्तमानविषयके वर्तमानपदार्थघटकीभूते ज्ञाने विषयत्वं स्वनिरूपितं वर्तमानतादशायाम्, अतीतत्वादिदशायां तु दृष्ट इत्यादिज्ञानान्तरेण निरूपितमित्यत आह स्वप्रकाशताया इति दृश्यत इत्यादिज्ञाननिष्ठविषयतायां तादृशज्ञाननिरूपितत्वस्येत्यर्थः। स्वरूपमेवेति। स्वविषयकज्ञानाश्रयःकाल इत्यत्र प्रविष्टं वर्तत इत्यादि ज्ञानं स्वनिरूपितविषयताश्रयीभवदेव वर्तमानताव्यवहारनिदानमिति तादृशकालत्वविषयकत्वस्य स्वघटकीभूतज्ञानविषयत्वविशिष्टस्यैव वर्तमानताविषयकत्वव्याप्यत्वं वक्तव्यमिति न व्यभिचार इति भावः। स्वघटकं स्वघटकमेवेति दृष्ट इत्यादिज्ञानस्य न वारणम्। एवं तस्य = स्वत्वस्य। अनुगमपक्षे यस्य कस्यापि घटकं स्वघटकमेवेति दृष्ट इत्यादिज्ञानस्य न वारणम्। एवं स्वविषयकज्ञानाश्रयः काल इत्यत्राप्यतीतादावतिप्रसङ्ग एव, तस्यापि ज्ञानाश्रयत्वात्, यत्किञ्चिद्विषयकस्यापि च ज्ञानस्य स्वविषयकत्वादेव, अननुगमे तु न सर्ववर्तमानकालव्यक्तिसङ्ग्रहः, अतीतादेरपि स्ववर्तमानतादशायां सङ्ग्राह्यत्वात् वर्तमानानामपि च कालानां क्षणमुहूर्ताहोरात्रयामाद्यनेकरूपत्वादिति भावः। इत्थमेव तत्प्रयोगकालस्तज्ज्ञानकालो वा वर्तमानकाल इत्यपि निराकार्यम्। अस्तीत्यादिप्रमाविषयत्वमादाय वर्तमानत्वव्यवहाराभावप्रसङ्गात्। वर्तत इत्याकारकप्रमाविषयत्वं तु न लक्षणम्, वर्तमानत्वविषयकप्रमाविवक्षायाञ्च वर्तमानत्वस्यैव तद्घटकीभूतस्य निरूपणीयत्वात्। कार्यभेदेति। पूर्वत्वानागतत्वव्यवहाररूपेति। स्वरूपतः = अभावत्वेन कादाचित्काभावत्वेन वा।

पूर्वंप्रत्युक्तां पूर्वतापरतानिरुक्तिं विना जन्यजनकत्वाद्यज्ञानमिति। उपाधिभेदाच्च कालभेदे योऽप्येकतयाऽभिमतः कालः सोऽपि चन्द्रसूर्यक्रियाद्यसङ्ख्योपाधिभेदसम्भवेन नाना स्यात्, तत्रायमेवोपाधि र्नायमिति चाविनिगम्यत्वात्, प्रतिक्षणस्वभावभेदवादिपक्षे च नानाक्षणे-पुवर्तमानत्वादिव्यवहारार्थमुपाध्यनुसरणावश्यम्भावेनोक्तोपाधिदोषप्रासस्यैवापातादिति। इति वर्तमानत्वादिखण्डनम्।

## संशयखण्डनम्।

ननु तथापि तावद्विषयभेदेनावश्यं भवितव्यम्, प्रतीतिभेदस्य दुरपह्नवत्वात्, अतः सामान्यतः सिद्धौ विशेषतो विवेचनाशक्तौ भेदे संशय एवास्तामिति चेन्न, संशयस्यापि निर्वक्तुमशक्यत्वात्, तथाहि—संशयस्य निश्चयात्किमुपाधिकृतो विशेषः, उत जातिकृतः ? आद्ये किं विषयविशेषेणोपाधिना, उत कारणविशेषेण, उतान्येनैव केनचित्सम्बन्धिना कृतः, न प्रथमः, तस्यानिर्वचनात्। उभयकोटिविषयः संशय इति चेन्न, कोटिद्वयसमुच्चयनिश्चयस्यापि संशयत्वप्रसङ्गात्। प्रतीतिरेव नैवमिति चेन्न, भेदाभेदप्रतीतीनां शाब्दस्वप्नादिप्रतीतीनां च तादृशां सम्भवात्। समुच्चयप्रकाशे कोट्योरविरोधः प्रकाशते संशये तु विरोध इति चेन्न, पीतःशङ्ख इत्यादिषु पीतत्वशङ्खत्वादेर्भिन्नाश्रयतानियमं विरोधं जानतोऽपि प्रत्ययात्। तथापि तस्यां बुद्धौ न भासते विरोध इति चेन्न, कथमेवमिति प्रकाशेऽपि तत्प्रकाशात् तयोरेकाश्रययोर्विरोधप्रतीतेरवश्योपेयत्वात्। मिथ्याधियस्ता इति चेन्न, संशयस्यापि भवद्भिरतत्त्वबुद्धितयाऽङ्गीकारात्, तत्त्वातत्त्वबुद्ध्योश्च तद्विषयत्वे विशेषाभावात्, नहि मिथ्या रजतबुद्धी रजतबुद्धिरेव न भवति।

---

कार्यविशेषेत्यर्थः। अन्योन्याश्रयोऽप्युत्कर्षस्याऽनुसन्धेयः, प्रतीतिमात्रेण स्वाभाविकरूपस्याश्रद्धेयत्वादिति भावः। योऽपीति। एककालीननानोपाधीनामपि न कालभेदकत्वमपि तु भिन्नकालीनानामिति तु कालभेदानिरुक्तौ न सङ्गच्छतेऽन्योन्याश्रयादिति भावः। स्वभावभेदेति। कालस्वभावभेदेत्यर्थः। अयं पक्षः सौगतयोगदर्शनादिसम्मतः। इति खण्डनशारदायां वर्तमानत्वादिखण्डनम्।

विषयभेदेनेति। वर्तते वर्त्स्यतीत्यादिप्रतीतीनामित्यादिः। भेदे = वर्तमानादिरूपविषयभेदे। वस्तुतस्त्वियं शङ्का खण्डितं पदार्थमात्रमधिकृत्य कर्तुं शक्येति भेदे इत्युपलक्षणं विषयमात्रस्य। उभयेति। एकस्मिन् धर्मिणि परस्परविरुद्धोभयप्रकारकज्ञानत्वं संशयत्वम्, न त्वेकस्मिन् धर्मिणि विरोधिनानावैशिष्ट्यविषयकज्ञानत्वम्, संशयानुव्यवसायेऽतिव्याप्तेः स च विरोधिप्रकारकत्वप्रकारकोऽपि न विरोधिप्रकारकः। स्वावच्छिन्नप्रतिवध्यतानिरूपितप्रतिबन्धकतावच्छेदकत्वस्वसामानाधिकरण्योभयसम्बन्धेन विषयिताविशिष्टविषयिताशालिज्ञानत्वमितियावत्, तेनैकत्वपरस्परत्वयो र्नाव्यावर्तकत्वानुगमकत्वे इति भावः। भेदाभेदेति। रूपघटादेरित्यादिः। आहार्यसौलभ्याभिप्रायेण शाब्देति। विरोध इति। स्वनिरूपितविरोधीयसंसर्गिताकत्वेति तृतीयः सम्बन्धोऽपि निवेश्य इति भावः। विरोधस्य प्रकारतया भाने पूर्वमुपस्थितिकल्पनापत्त्या संसर्गतयैव तद्भानमाद्रियत इति ध्येयम्। भिन्नाश्रयतानियमं = असामानाधिकरण्यम्। प्रत्ययादिति। लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यज्ञानं प्रत्येव विरोधिज्ञानस्य प्रतिबन्धकत्वादितिभावः। कथमेवमितिविरोधाभिनयः। तत्प्रकाशात् = पीतः शङ्ख इति प्रतीत्युदयात्। एकाश्रययो विरोधेति। एकाश्रयकत्वाभावेत्यर्थः। तद्विषयत्वे = विरोधिकोटिद्वयविषयकत्वे।

अव्यवस्थितकोटिद्वयविषयः संशय इति चेत्, केयमव्यवस्थितता ? पाक्षिकतेति चेत्, न पर्यायं पृच्छामोऽपि तु किं कोटिद्वयस्वरूपमेव, उत कोटिद्वयस्य धर्मः कश्चित्, आद्ये कोटिद्वयनिश्चयेन सहाविशेषस्तदवस्थः, द्वितीये

---

वस्तुतस्तु संसर्गतया विरोधभानमप्रामाणिकमेव, मूलावच्छिन्नो वृक्षः कपिसंयोगी न वेत्यादिसंशयस्यैकावच्छेदकावच्छेदेन भावाभावोभयवत्त्वावगाहितया विरोधविषयकत्वासम्भवाच्च । अथैवमेकस्मिन् धर्मिणि भावाभावोभयप्रकारकज्ञानत्वं वक्तव्यमिति शङ्खःपीत इत्यादौ नातिप्रसङ्गः, नचाननुगमः, समवायेन घटं संयोगसम्बन्धावच्छिन्नप्रतियोगिताकतदभावं च प्रकारीकुर्वति निश्चयेऽतिप्रसङ्गश्च, एवं द्रव्यत्वादिना घटं रूपान्तरेण च तदभावमवगाहमानेऽपि, एकत्वस्याव्यावर्तकत्वञ्चेति वाच्यम्, प्रकारताविशिष्टप्रकारताशालिज्ञानत्वस्य विवक्षितत्वात्, वैशिष्ट्यं स्वतादात्म्यस्वविशिष्टप्रकारताकाभावत्वावच्छिन्नविशेष्यतावच्छिन्नप्रकारताकविशेष्यताकत्वाभ्याम्, अत्र वैशिष्ट्यं स्वावच्छेदकसम्बन्धावच्छिन्नप्रतियोगित्वनिरूपितानुयोगित्वसम्बन्धावच्छिन्नत्वस्वावच्छेदकावच्छिन्नत्वाभ्यामिति चेन्न, स्थाणुत्वपुरुषत्वादिरूपभावद्वयकोटिकसंशयस्याप्यानुभविकत्वात्तत्राव्याप्तेः । तत्र स्थाणुत्वाद्यभावावगाहित्वमपीतिनियतेः शपथैकप्रमाणकत्वात्, दोषसंशयेनापि लक्षणासिद्धेश्च, पर्वतो वह्निमान् तदभाववांश्चेत्यादिनिश्चये तथाप्यतिव्याप्तेश्च । नचाहार्यान्यत्वं लक्षणे निवेशनीयम्, आहार्यसंशयस्यासङ्ग्रहप्रसङ्गात्, स्मृत्यन्यत्वनिरासप्रकरणेऽनाहार्यत्वनिवेशस्यावधीरितत्वाच्च । एतेन— प्रकारताविशिष्टप्रकारतानिरूपकज्ञानत्वं संशयत्वम्, वैशिष्ट्यं स्वनिरूपितविशेष्यतावच्छेदकावच्छिन्नविशेष्यतानिरूपितत्वस्वनिरूपकज्ञानीयत्वस्वावच्छेदकावच्छिन्ननिरूपितविरोधितावच्छेदकधर्मावच्छिन्नत्वस्वनिरूपितविशेष्यतावच्छेदकतानवच्छेद्यत्वस्वाभाववत्त्वेतिसम्बन्धपञ्चकेन, स्वाभावश्च स्वावच्छेद्यावच्छेदकताकविशेष्यतानिरूपितत्वस्वरूपसम्बन्धावच्छिन्नप्रतियोगिताकः । पर्वतो वह्निमान्नवेतिसंशयीयवह्न्यादिप्रकारता प्रकारताविशिष्टा, तत्र वह्न्यभावप्रकारतानिरूपितविशेष्यतावच्छेदकह्रदत्वावच्छिन्नविशेष्यतानिरूपितत्वस्य वह्न्यभावप्रकारतानिरूपकसंशयनिरूपितत्वस्य तादृशप्रकारतावच्छेदकवह्न्यभावत्वावच्छिन्ननिरूपितविरोधितावच्छेदकवह्नित्वावच्छिन्नत्वस्य तादृशप्रकारतानिरूपितह्रदनिष्ठविशेष्यतानिरूपितावच्छेदकत्वानवच्छेद्यत्वस्य तादृशप्रकारत्वाभाववत्त्वस्य च सत्त्वात्, तत्प्रतियोगितावच्छेदकसम्बन्धस्य संशयीयकोटिप्रकारताया व्यधिकरणत्वात्, संशये वह्न्यभावादेर्धर्मितावच्छेदकत्वाभावात् । एवं च निर्वह्नि वह्निमानिति निर्वह्निः पर्वतो वह्निमानिति चाहार्यज्ञानस्य न संशयत्वप्रसङ्गः, प्रथमज्ञानीयवह्निप्रकारतायां वह्न्यभावप्रकारतायाः सम्बन्धान्तरेण सत्त्वेऽपि स्वाभाववत्त्वसम्बन्धेनाभावात्, स्वावच्छेद्यावच्छेदकताकविशेष्यतानिरूपितत्वसत्त्वेन तत्सम्बन्धावच्छिन्नस्वाभावस्य तत्रासम्भवात्, वह्न्यभावनिष्ठप्रकारतायां च वह्निप्रकारतायाः स्वनिरूपितविशेष्यतावच्छेदकत्वानवच्छेद्यत्वाभावात्, एवं द्वितीयज्ञानेऽपीत्यप्यत्र नाशङ्कनीयम् । पर्वतो वह्निमान् वह्न्यभाववांश्चेत्यादिनिश्चयेऽतिप्रसक्ततादवस्थ्यात् । यदि तु संशयसमुच्चययोर्वैलक्षण्यस्यानुभवसिद्धत्वेन तदन्यथानुपपत्त्या कोटिद्वयप्रकारितयोरवच्छेद्यावच्छेदकभावः संशये कल्पनीयो न तु समुच्चये, एवञ्च प्रकारितावच्छिन्नप्रकारिताशालिज्ञानत्वमेव संशयत्वम् । अथवा कोटिद्वयप्रकारतानिरूपितविशेष्यतयोरवच्छेद्यावच्छेदकभावोऽस्तु संशये इति तद्घटितमेव लक्षणमस्तु । यद्वा समुच्चये प्रकारताभेदेन विशेष्यताया भेदेऽपि संशये तदभेदेन विरुद्धोभयप्रकारतानिरूपितैकविशेष्यताकज्ञानत्वमेव संशयत्वमास्तामस्तु वा तत्कोटिताद्वयविलक्षणविषयतानिरूपकत्वमित्युच्यते, तदाऽनुभवत्वस्य जातित्वखण्डनशारदायां प्रतिविहितमेव द्रष्टव्यम् ।

यद्यसौ केनचित्प्रमाणेन सिद्धस्तदा तस्यैव कोटिद्वयाश्रिततद्धर्मविषयस्य संशयत्वप्रसङ्गेन प्रमाणत्वव्याघातः, अथ कस्य चित्प्रमाणस्य नासौ विषयो नास्ति तर्हि विषयकृतो विशेषः। एतेनान्योऽपि यः कश्चिद्विषयविशेषः स्थाणुतदभावपुरुषतदभावादिरूपोऽभिधीयते सोऽपि निरस्तो वेदितव्यः। अत्यन्तासत एव तस्य प्रतिभासे जितं जिनैरसत्ख्यातिवादिभिः, क्वचित्सतश्चेत्तत्रैव प्रसङ्गः। नापि द्वितीयः, कारणविशेषो हि विशिष्य सामग्री स्यात्तदेकदेशो वा, नाद्यः तस्या अप्रत्यक्षत्वे तदुपहितस्य प्रत्यक्षतोऽवगमानुपपत्तेः। न च तस्या अनुमेयत्वम्, लिङ्गासम्भवात्। कार्यविशेष एव लिङ्गमिति चेन्न, कार्यगतस्यैव विशेषस्य चिन्त्यमानस्याद्याप्यप्राप्तेः, जातिभेदस्य दूषणीयत्वात्। नापि द्वितीयः, दृश्यस्य तदेकदेशस्य साधारणधर्मदर्शनादेर्विशेषद्वयस्मरणादेश्च साधारणधर्मविशेषद्वयज्ञानप्रत्यक्षादावपि हेतुत्वेन साधारण्यात्, अदृश्ये च तस्मिंल्लिङ्गाभावात्, तेन कार्ये विशेषजात्याधा-

---

विशेष इति। न च सन्देह्मीत्यनुव्यवसाय एवाव्यवस्थितत्वाख्यधर्मे प्रमाणम्, तस्य चाव्यवस्थितत्वप्रकारकत्वप्रकारकतया तद्विषयकत्वेऽपि तत्प्रकारकत्वाभावान्न संशयत्वमिति वाच्यम्, अव्यवस्थितत्वं हि विरोधो वा विकल्पो वा स्यात्. आद्यस्य न संशयेऽपि प्रकारतया भाननियम इत्युक्तम्, द्वितीयस्तु व्रीहिभिर्यजेत यवैर्वेत्यादिनिश्चयस्यापि विषयः। प्रकारान्तरञ्च दुर्वचमेव। एतेनेत्यस्यातिदेश्यमाह अत्यन्तासत इति। यद्यपि स्थाणुत्वतदभावादेः प्रत्येकं प्रमितत्वमस्ति, तथापि संसर्गस्यानलीकत्वे व्यधिकरणप्रकारकत्वेन विपरीतज्ञानत्वस्याधस्तान्निरस्तत्वेन कोटिद्वयीयधर्मिनिष्ठसंसर्गस्यैव विषयविशेषत्वं स्यादित्यभिप्रायेणेदं द्रष्टव्यम्। पुरुषतदभावादिरूप इत्यत्र पुरुषतदभावादिना रूप्यते निरूप्यते इति व्युत्पत्तिसम्भवात्। वस्तुतस्तु स्थाणुत्वतदभावादिरन्यत्राप्रसिद्ध एव संशयगोचरः, प्रसिद्धस्य तदन्यत्वादिति वदन्तं प्रतीदमुक्तम्। उक्तसंसर्गस्य समुच्चयसाधारण्यसम्भवात्। अयन्तु परमार्थः—पुरुषतदभावादिरूप इत्यत्र पुरुषतदभावादिनिरूपितैकविशेष्यतारूपः, तन्निरूपितविशेष्यताद्वयनिष्ठावच्छेद्यावच्छेदकभावरूपः, तदीयप्रकारितयोरवच्छेद्यावच्छेदकभावरूपस्तन्निष्ठविलक्षणविषयतारूपो वा विशेष इत्यर्थः। तस्य प्रमितत्वं नवेति विकल्प्याह अत्यन्तेत्यादि। अत्रोक्तरीत्यानुव्यवसायस्य तत्तद्विशेषविषयकत्वेऽपि संशयत्वपरिहारे तृणस्थलीयशारदैव द्रष्टव्येति। चेदिति। प्रतिभासस्तदेतिशेषः। तत्रैव = तद्ग्राहकप्रमितौ संशयत्वस्य प्रसङ्गः। तदुपहितस्येति। कारणविशेषजन्यज्ञानत्वस्येत्यर्थः। अनुमित्यनन्तरमुपनीतभानसम्भवहत्याशङ्कां निराचष्टे नचेति। ननु संशयत्वं जातिरेव कार्यगतो विशेष इत्यत आह जातिभेदस्येति। सन्देह्मीत्यनुव्यवसायात्पूर्वमनुमितिरुद्देत्येवेति चापथैकनिर्णयमेवेत्यपि द्रष्टव्यम्। साधारणधर्मदर्शनादिजन्यज्ञानत्वं साधारणधर्मदर्शनाद्यनुव्यवसायादावतिप्रसक्तमित्याह दृश्यस्येति। आदिनाऽसाधारणधर्मदर्शनं धर्मिदर्शनं विप्रतिपत्तिरूपशब्दो विशेषादर्शनञ्च गृह्यते। प्रत्यक्षादावित्यादिपदं ज्ञानत्वस्यानुपादाने साधारणधर्मदर्शनादिध्वंसस्सङ्ग्रहाय। साधारण्यात् = अतिव्यापकत्वात्। न च-साधारणधर्मदर्शनत्वावच्छिन्नजनकताकजन्यताशालिज्ञानत्वं वक्तव्यम्, सामान्यतः प्रत्यक्षं प्रति विषयस्य विषयत्वेन विशिष्य च तत्तद्विषयकप्रत्यक्षं प्रति तत्तद्व्यक्तित्वेन कारणत्वात्साधारणधर्मदर्शनविषयकप्रत्यक्षं प्रति साधारणधर्मदर्शनत्वेन कारणताकल्पनाया निर्मूलत्वादतिव्याप्त्यभावात्, असाधारणधर्मदर्शनाधीनसंशयेऽव्याप्तिस्तु न, लक्ष्यतावच्छेदकस्यापि सङ्कोचनीयत्वात्, एवञ्चासाधारणधर्मदर्शनजन्यताघटितं विप्रतिपत्तिजन्यताघटितञ्च लक्षणद्वयान्तरमपि सम्भवतीति-वाच्यम्, सामान्यलक्षणानिरुक्तौ विशेषलक्षणस्यासम्भवात्, जन्यतावच्छेदकं विना दुर्ग्रहत्वाच्च। अदृश्ये च तस्मिन्निति। अदृष्टादिरूपसामग्र्येकदेशे इत्यर्थः। संशयत्वजाते लिङ्गत्वमाशङ्क्याह तेनेति।

नस्य निश्चयत्वात्, तस्या अविषयत्वेनानुव्यवसायसाक्षिककार्यगतविशेषीभवनासामर्थ्यात्। नापि तृतीयः, तस्य दर्शयितुमशक्यत्वात्, नच द्वितीयः, धर्मिस्वरूपादेरपि तद्विषयतया संशयितत्वप्रसङ्गात्, नचैवम्, न ह्ययं स्थाणुर्वा पुरुषो वेति संशये सतीदमा परामृश्यमाणस्योर्ध्वत्वशालिनो धर्मिणः स्वरूपसत्त्वेऽपि स्वरूपमेव भवति नवेति तद्द्रष्टुरभिमानो व्यवहारो वा, किन्नाम? तत्र स्वरूपसत्त्वमात्रांशावलम्बिनस्तस्य ज्ञानस्य निश्चयत्वमेव। ततः किमिति चेत्, एकस्यैव ज्ञानस्य निश्चयत्वसंशयत्वजातिसङ्करः। स प्रामाण्याप्रामाण्यवद्भविष्यतीति चेन्न, अत एव हि तयोरपि जातित्वानङ्गीकारः, किन्नाम? तथाभूतातथाभूतार्थतालक्षणोपाधिद्वयरूपतास्वीकार एव तयोः। यदा च संशयत्वनिश्चयत्वलक्षणजातिद्वयसम्भिन्नं तद्विज्ञानमास्थीयते तदा कञ्चिद्विषयमपेक्ष्य संशयत्वं कञ्चिदपेक्ष्य निश्चयत्वमित्यापेक्षिकी जातिव्यवस्थितिरित्यपूर्वः पन्थाः। ईदृशस्य पथः पान्थेनापि भवता किञ्चिन्नियामकमभिधेयं येन धर्मिणि तस्य निश्चयत्वं व्यवतिष्ठते विशेषद्वये च संशयत्वम्। विशेषदर्शनादर्शने इति चेत्, तर्हि भवति स्थाणोः स्थाणुत्वं पुरुषत्वं च पुरुषस्य विशेषः, प्रतीयते चासाविति विशेषदर्शनात्तत्रापि निश्चयप्रसङ्गः। संशयात्पूर्वं नास्ति विशेषदर्शनमिति युक्तस्तत्रापि संशय इति चेन्न, धर्मिधियः पूर्वं तर्हि कथं तद्गु-

---

ननु सन्देह्मीत्यनुभवसिद्धे जातितायास्त्वया निरस्यत्वेऽपि काचिदन्या जातिरतीन्द्रियकारणाधेया संशये आस्तामित्यत आह तस्या इति। अनुव्यवसायस्य तन्मानत्वे मानान्तरं वाच्यम्, तच्च न शक्यं वक्तुमिति भावः। तृतीय इति। अन्येन केनचित्सम्बन्धिना कृतः संशयस्य विशेष इतिपक्ष इत्यर्थः। तरयेति। जिज्ञासाजनकज्ञानत्वं संशयत्वमित्ययुक्तम्, उपेक्षणीयविषयकसंशयेऽव्याप्तेः, जनकतावच्छेदकस्य निरूपणीयतापत्तेश्च। संस्कारायोग्यज्ञानत्वमित्यपि न, संशयस्यासङ्कीर्णरूपापरिचये कं धर्मं धर्मितावच्छेदकीकृत्य संस्कारायोग्यत्वं ज्ञातव्यमिति वक्तव्यम्। द्वितीयः = जातिविशेषः संशयत्वमिति पक्षः। प्रसङ्गादिति। जातेर्व्याप्यवृत्तित्वनियमादिति भावः। निश्चयत्वेति चाक्षुषत्वादेरुपलक्षणम्। चक्षुराद्यन्वयव्यतिरेकानुविधानदर्शनात्संशयस्य मानसत्वमेवेति वक्तुमशक्यम्। निश्चयत्वस्य जातित्वासम्भवस्तु संशयत्वेन समानयोगक्षेमः। शाब्दसंशयोपगन्तृमते तु साक्षात्त्वेनापि सङ्करः। नन्वेकावच्छेदेन साङ्कर्यं दोषः, अत्र त्ववच्छेदकभेदेनैव संशयत्वनिश्चयत्वयोरुपगमोऽस्तु, आंशिकत्वेऽपि जातित्वसम्भवादित्यत आह यदेति। आपेक्षिकी = आंशिकी व्यवस्थितिः = वृत्तिः। अव्याप्यवृत्त्यपि संशयत्वं कोटिविषयतामात्रनिरूपकतावच्छेदकमिति तु वाचोभङ्ग्यन्तरेणाव्याप्यवृत्तित्व एव पर्यवस्यति। ननु संशयत्वं मानसत्वव्याप्यमेव, न तु चाक्षुषत्वादिसमानाधिकरणम्, चक्षुराद्यन्वयव्यतिरेकानुविधानस्य धर्मिग्रहणोपक्षीणत्वात्, एवं विप्रतिपत्तिस्थलेऽपि कोटिद्वयोपस्थितौ मानस एव संशय इति न साङ्कर्यमिति वस्तुगतिः, आंशिकत्वं तु दुर्वारम्, तथापि प्रामाणिकस्य तस्य दोषत्वमप्रामाणिकम्, एवं साङ्कर्यस्यापीति निश्चयत्वमपि जातिरेवेति चेन्न, एवं सति गोत्वादिप्रसिद्धजातिवैलक्षण्याज्जातित्वं तस्य स्वकल्पमन्यथा परिभाषामात्रत्वात्। तदाह अपूर्वः पन्था इति। ननु भवतु परिभाषामात्रत्वम्, का क्षतिः, उपाधित्वाभिधानेऽपि तथापर्यनुयोगसम्भवादित्यत आह ईदृशस्येति। धर्मिणि = धर्मिविषयकत्वावच्छेदेन। विशेषदर्शनादर्शने नियामके इति शेषः। संशयं प्रति धर्मितावच्छेदकप्रकारकनिश्चयस्य कारणत्वेन तस्मिन् सति न धर्म्यंशे संशयसम्भवोऽपि तु कोट्यंशे, तस्य धर्मिणि पूर्वमदर्शनादिति भावः। तद्गतेति। प्रसङ्ग इति। संशयद्वितीयक्षणे इत्यभिप्रायः। तमजानानः शङ्कते संशयादिति।

त्विशेषदर्शनं स्यात्, संशयकाले चास्ति विशेषदर्शनमित्यनन्तरं तर्हि संशयाननुवृत्तिप्रसङ्गोऽपि युक्त एव। तदीयविषयाद्विशेषाद्व्यतिरिक्तस्य विशेषस्य दर्शनं विवक्षितमिति चेन्न, स्थाणुर्वा पुरुषो वेति संशयानन्तरं दारुमयो मांसमयो वाऽयमिति संशयो नोपपद्येत, तदुभयातिरिक्तयोः स्थाणुत्वपुरुषत्वयोर्विशेषयोः पूर्वज्ञानेनोल्लिखितत्वात्। अन्यतरविशेषदर्शनं संशयप्रतिरोधकम्, संशयेन तूभयोरुपदर्शनमतो नोक्तदोषप्रसङ्ग इति चेन्न, तर्हि स्थाणुः पुरुषश्चेति कुतोऽपि विभ्रमे जाते दारुमयो वा मांसमयो वेति संशयप्रतिरोधो न स्यात्, पूर्वज्ञानेन विशेषद्वयोपदर्शनस्य कृतत्वात्।

विशेषदर्शनं हि विशेषनिश्चयो विवक्षितो न तु विशेषज्ञानमात्रं येन संशयोपनीतादपि विशेषात्संशयप्रतिरोधः प्रसज्येतेति चेन्नैवम्, संशयेन यावुपदर्शितौ विशेषौ तत्र न संशयस्य निश्चयत्वमिति व्यवस्थायां सिद्धायामुपदर्शितनियामकसिद्धिर्भवति सिद्धे चास्मिन्नियामके संशयस्य विशेषद्वयं प्रति निश्चयत्वं नास्तीति सिद्ध्येदित्यन्योन्याश्रयापत्तेः को वारयिता ? स्यादेतत्—संशयज्ञानस्य धर्मिविषयत्वेऽभ्युपगम्यमानेऽर्द्धवैशसमापद्यते तच्च तदनभ्युपगमे एव निवर्तते तेन धर्मिज्ञानं निश्चयात्मकमन्यदेव स्थाणु र्वा पुरुषो वेति चान्यदेव संशयज्ञानमित्यभ्युपैष्याम इति चेन्नैवम्, एकधर्मिसम्बन्धोपनयनव्यतिरेकेण स्थाणुत्वपुरुषत्वयोर्विरोध एव नास्तीति स्थाणुर्वा पुरुषो वेत्येतदेव न स्यात्। नहि यस्य कस्यचित्स्थाणुत्वेन यस्य कस्यचित्पुरुषत्वं विरुध्यते, एकधर्मिसम्बन्धमनन्तर्भाव्य विरोधे जगति तयोरन्योन्यस्य व्यतिघ्नतोरसत्त्वमेव प्रसज्येत। तस्य धर्मिणो वा पुरुषत्वनिश्चयाद्यथा संशयो निवर्तेत नोत्पद्यते वा, तथा स्वात्मनः पुरुषत्वनिर्णयात् संशयो निवर्तेत नोत्पद्येत वा, विशेषाभावात्, यथाऽयं द्रष्टुर्न स्वशरीरविषयः संशय-

---

धर्मिगतेत्यर्थः। संशयं प्रति कारणतया स्वीकृतो धर्मितावच्छेदकप्रकारकनिश्चय एव धर्म्यंशे संशयात्मा कुतो नोत्पद्यते ततः पूर्वं विशेषादर्शनसद्भावादित्यर्थः। ननु ततः पूर्वं विशेषादर्शनसत्त्वेऽपि न तदंशे संशयो धर्मितावच्छेदकप्रकारकनिश्चयस्यापि तद्धेतुत्वात्, तस्य च ततः पूर्वमभावादित्यतः पूर्वोक्तं स्वाभिप्रायमुद्घाटयति संशयकाले इति। तदीयेति। संशयीयेत्यर्थः।

क इति। न च सन्देह्मि ननु निश्चिनोमीत्यनुभवबलादेव कोटिद्वयांशे निश्चयत्वाभावः सिद्ध इति नान्योन्याश्रय इति वाच्यम्, विषयनिरूपणं विनाऽनुभवीयप्रमात्वस्य सन्दिग्धत्वात्। तथा च विषयसद्भावसिद्धौ तदीयप्रतीतेः प्रमात्वसिद्धिः, तत्सिद्धौ च विषयसद्भावसिद्धिरित्यन्योन्याश्रयान्तरस्यापि परार्थे उद्भाव्यत्वात्, अतएव सन्देह्मीत्यनुभवबलादेव संशयत्वजातिसिद्धिरिति प्रत्याशामात्रम्। न च सर्वजनसिद्धानुभवस्यापि प्रमात्वे विप्रतिपद्यमानस्य भवतः कथानधिकारप्रसङ्ग इति वाच्यम्, अनिर्वचनीयविषयकत्वेन व्यावहारिकप्रामाण्यापरित्यागात्, तात्त्विकत्वे एव विप्रतिपत्तेरिति भावः। जातिमात्रबाधकप्राधस्त्यादुदितमत्रानुसन्धेयम्। अर्द्धवैशसम् = जात्योरांशिकत्वम्। अभ्युपैष्याम इति। तथाच ज्ञायमाने धर्मिणि अगृह्यमाणासंसर्गकत्वस्वविरोधिज्ञानत्वमेव संशयत्वमिति प्राभाकरमतं पर्यवसन्नमिति भावः। नास्तीति। धर्मिविषयकत्वे हि तद्धर्मिकविशेषदर्शनस्य विरोधिता वक्तुं शक्यते इति भावः। ननु स्वसमवायिसमवेतत्वकालिकसम्बन्धाभ्यां कोटिद्वयस्मृतिविशिष्टधर्म्यनुभवस्य संशयपदार्थत्वेनानितरलक्षणोत्पन्नज्ञानद्वयीयविशेष्यताप्रकारतयोरप्यसति बाधके ईदृशस्थले निरूप्यनिरूपकभावोपगमेन तद्विशेष्यकविशेषदर्शननिष्ठरतियन्वकतानिरूपितप्रतिबध्यतावच्छेदकाक्रान्तत्वेनोक्तानुभवस्य नानुपपत्तिः, अत एव नेदं रजतमितिज्ञानप्रतिबध्यतावच्छेदकस्य रजतत्वनिष्ठप्रकारतानिरूपितेदन्त्वावच्छिन्नविशेष्य-

स्तथैव पुरोवर्तिविषयोऽपि नासौ। कथञ्चेदमर्थेन सामानाधिकरण्याभिमानो योऽयमूर्द्धत्वधर्मा स किं स्थाणुरुत पुरुष इति। कस्माद्वा प्रत्यभिज्ञानादयोऽप्येकं ज्ञानमङ्गीकृता इत्युच्छिन्ना विशिष्टविज्ञानसङ्कथा, सञ्जातश्च गौरश्वः पुरुष इतिवद्विशकलितो विज्ञानसंसार इत्यास्तां विस्तराभिनिवेशः। नन्वस्ति तावदयं स्थाणुर्वा पुरुषो वेति परस्परविरुद्धार्थावगाही प्रत्ययः, स स्वविषयं तथाभूतमुपस्थापयिष्यति। न, उक्तबाधकैः सर्वप्रकारखण्डने परिशेषासम्भवात्। इति संशयखण्डनम्।

## विरोधखण्डनम्

यच्च स्वरूपमादाय विरुद्धार्थत्वमभिधीयते तदपि निर्वक्तुं न शक्यते, तथाहि—भावतदभावयोः को विरोधः? सहानवस्थानमिति चेन्न, देशभेदेन सहाप्यवस्थानात्। देशाभेदेनेति चेन्न, संयोगाद्यव्यापकत्वं यद्यभ्युपैषि, तथाप्यनुपपत्तिः, प्रकारभेदेन तथाभावस्याभ्युपगमात्। तस्य पक्षे एकेन प्रकारेणैकस्मिन् सहानवस्थानं विरोधः, संयोगाद्यव्यापकत्वानभ्युपगन्तृपक्षे च देशाभेदेन सहानवस्थानं स इति चेन्न, तद्धि तदुभयावस्थानसाहित्यनिषेधो वा तदुभयावस्थाननिषेधसाहित्यं वा स्यात्, आद्येऽप्रसिद्धप्रतियोगिकत्वम्, तदुभयावस्थानसाहित्यस्य क्वचिदप्यप्रमितेः, शशविषाणनिषेधादेश्च शशके विषाण-

ताशालिबुद्धित्वस्य भ्रमपदव्यवहार्ये इदं रजतमिति ज्ञाने निर्वाहः, विभिन्नज्ञानीयविषयतयो र्निरूप्यनिरूपकभावानङ्गीकारे तदनुपपत्तेः, नचैवं तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिस्वरूपविपरीतत्ववतो ज्ञानस्य स्वीकारप्रसङ्गः, तादृशविशेष्यतानिरूपकज्ञाननिरूपिततन्निष्ठप्रकारताकज्ञानखण्डने एव तात्पर्यादिति नव्यप्राभाकरसरणिमाशङ्क्याह कथमिति। नन्वविरलक्रमोत्पन्नज्ञानद्वयेनैव तादृशाभिमानो निर्वाह्यतामित्यत आह कस्मादिति। ननु प्रत्यभिज्ञानस्य तत्ताविशिष्टांशस्मरणेदन्ताविशिष्टांशानुभवरूपज्ञानद्वयात्मकत्वे स्थैर्योच्छेदप्रसङ्गो माभूदिति तदेकत्वमनुमन्यते, एवं सादृश्यादिसिद्धये तज्ज्ञानानामपि विशिष्टज्ञानत्वमेवेति चेत्स्थैर्याद्यनुरोधे को हेतुः? अनुभव एवेति चेदेवं तदनुभवबलादेव विपरीतज्ञानानामपि विशिष्टज्ञानत्वमनुमन्तव्यमेव, तदभ्युपगमे "साकारपातादसतो न भानात्संविद्विरोधादथ हेत्वभावात्। धियामनाश्वासभयाच्च नेष्टा यतोऽन्यथाख्यातिरतो यथार्था" इति श्लोकोक्तबाधकानामन्यत्र निराकृतत्वात्। एवञ्च सर्वज्ञानयाथार्थ्यं सद्यो ज्ञानद्वयीयविषयतयोर्निरूप्यनिरूपकभावसिद्धिः, तत्सिद्धौ च नेदं रजतमित्यादेः प्रतिबन्धकतानुपपत्तिरूपबाधकविधूननेन सर्वज्ञानयाथार्थ्यसिद्धिरित्यन्योन्याश्रयः। अधिकञ्च प्रमुष्टतत्ताकस्मृतिखण्डने शारदायां दर्शनसर्वस्वेऽनिर्वाच्यवादे चोक्तमनुसन्धेयम्। इति खण्डनशारदायां संशयखण्डनम्।

स्वरूपमादायेति। सर्वविरोधमूलभूतस्य भावाभावयोर्विरोधस्य खण्डनोपक्रमायेदम्। एककालत्वयोर्हि स्वभावत एव विरोधोऽन्यत्र तु तदुपाधिक इति। सहाप्यवस्थानादिति। एकदेशावृत्तित्वं विवक्षितमित्यर्थः। मूलशाखादिरूपावच्छेदकभेदेन वृक्षादिभेदाभ्युपगमे अवयवयोरेव वाधिकरणताभ्युपगमे संयोगादेर्व्याप्यवृत्तित्वादित्यर्थः। देशाभेदेनेति। तथापि = देशाभेदविवक्षायामपि। अव्यापकत्वं = अव्याप्यवृत्तित्वं। शङ्कते तस्य पक्ष इति। त्वमेवेति भावेन यद्यीति। तथाभावस्य = एकदेशवृत्तित्वस्य। विफलो व्याप्यवृत्त्योर्विरोधेऽव्याप्यवृत्तित्वमते इत्यर्थः। अत्रापि मते सर्वत्रावच्छेदकनिवेशो तद्देश्यादिः प्रकारोऽवच्छेदकः। संयोगाद्यव्याप्यवृत्तित्वमते इत्यर्थः। अत्रापि मते सर्वत्रावच्छेदकनिवेशो विफलो व्याप्यवृत्त्योर्विरोधेऽव्याप्यापत्तेः। सः = विरोधः। तद्धि = सहानवस्थानं हि। शशके इति। नवि शशशृङ्गं नास्तीति प्रती-

निषेधादिरूपत्वाङ्गीकारेण प्रसिद्धप्रतियोगिकत्वाभ्युपगमात्, यदाहैको—"वस्तुनः प्रतियोगिते"ति, अन्यश्च—"लब्धरूपे क्वचित्किञ्चित्तादृगेव निषिध्यते" इति । द्वितीये तु तदुभयावस्थानसाहित्यस्वीकार एव स्यात्, तदुभयनिषेधयोस्तदुभयतयैवाङ्गीकारात् । परस्परप्रतिक्षेपकत्वं विरोध इति चेन्न, तद्धि परस्परप्रतिक्षेपं प्रति कारणत्वं वा तादात्म्यं वा ? न प्रथमः, प्रमाणाभावेन तथाविधतत्कार्यानङ्गीकारात् । न द्वितीयः प्रतिक्षेपशब्दार्थस्योभयानुगतस्यानिर्वचनात् । यत्रैकस्य सत्त्वं तत्रापरस्यासत्त्वं नियमेन यत् स विरोधस्तयोरिति चेन्न, सत्त्वासत्त्वयोरेकापराश्रयत्वे वैयधिकरण्यात्, सम्बन्धस्य तद्व्यतिरेकत्वे एकसत्त्वस्यैवापरासत्त्वात्मकतया स्वीकारेण यत्रैकस्य सत्त्वं तत्रैकस्य सत्त्वमिति वचनार्थप्रसङ्गेन पौनरुक्त्याद्यापातात्, यत्र घटाभाव इत्यत्र खल्वयमर्थो यन्नाम

---

तिस्तु न भवत्येवेत्येके, गवाधिकरणकश्टङ्गे शशीयत्वाभाव एव तद्विषयोऽनन्यगतिकत्वादित्यपरे । एकः = उदयनाचार्यः । स्वाभावविरहात्मत्वं वस्तुनः प्रतियोगितेत्यत्र वस्तुन इत्युक्त्याऽलीके प्रतियोगिता नाङ्गीकृता । अन्यश्चेति । ब्रह्मसिद्धौ तर्ककाण्डे मण्डनमिश्रश्चेत्यर्थः । आहेत्यनुषङ्गः । लब्धरूपे इत्यनेनाधिकरणस्यापि वस्तुत्वं दर्शितम् । तादृगेव = लब्धरूपमेव । तदुभयतयेति । घटाभावावस्थाननिषेधस्य घटरूपतया घटावस्थाननिषेधस्य च घटाभावरूपतयेत्यर्थः । ननु परस्पराभावव्याप्यत्वं सहानवस्थानम्, न च परस्परस्य दुर्वचत्वम्; तदभावव्याप्यत्वं तद्विरुद्धत्वम्, तच्च तदसामानाधिकरण्यपर्यवसन्नमिति न कोऽपि दोषः । प्रागभावप्रध्वंसयोः प्रतियोगिना सामानाधिकरण्याद्व्याप्तिवारणाय तु स्वाधिकरणकालावृत्तित्वस्वाधिकरणदेशावृत्तित्वान्यतरसम्बन्धेन तद्विशिष्टत्वं तद्विरुद्धत्वमस्तु, अन्योन्याभावाधिकरणदेशावृत्तित्वमपि तादात्म्येन प्रतियोगिन्यक्षतम्; मैवम्, ईदृशविरोधस्य गोत्वाश्वत्वादिसाधारणत्वात्, भावाभावयोरेव विरोधस्य च निर्वचनाशक्यत्वात् । तादात्म्येन वृत्तित्वाभावविवक्षायां घटे घटो नास्तीत्याद्यभावविरुद्धत्वस्य प्रतियोगिन्यनुपपत्तेश्च । एवञ्च "अथ न प्रतियोग्यनुयोगिनोस्तथात्वं विरोध" इति प्रघट्टके भेदसंसर्गाभावयोर्भेदखण्डनशारदोक्तरीतिरेवानुसर्तव्येति नानुगमवार्ताऽपि । व्यवहारः शब्दानुगममूल एव नत्वर्थानुगममूल इत्यभिप्रायेणाननुगमस्य कथञ्चिदिष्टत्वेऽपि सामानाधिकरण्याभावस्यापि प्रतियोगितारूपविरोधघटितत्वेनानवस्थानं दुर्वारमेव । प्रतिक्षेपं = अभावं । तादात्म्यमिति । स्वार्थे कप्रत्ययाभिप्रायेणेदम् । तथाविधतत्कार्येति । परस्पराभावरूपपरस्परकार्येत्यर्थः । प्रतिक्षेपशब्देति । परस्परशब्दस्याप्युपलक्षणम् । तथा च घटाभावाभावरूपत्वञ्चेदर्थस्तदा घटाभावासङ्ग्रहः, घटाभावरूपत्वञ्चेत्तदा घटासङ्ग्रह इति प्रतियोग्यभावोभयसाधारणं न निर्वचनम् । ननु किमेतावता, घटाभावाभावात्मकत्वं घटनिष्ठं घटाभावविरुद्धत्वम्, घटाभावात्मकत्वञ्च घटाभावनिष्ठं घटविरुद्धत्वमिति विशिष्य विवक्षायां दोषाभावादिति चेन्न, प्रागभावादिविरोधस्य तथाप्यलक्षणात् । सोऽस्तु यथा तथा, प्रतियोग्यत्यन्ताभावयोर्विरोधस्तूक्तो निर्दोष इति चेन्न, घटाभावेत्यत्र समासार्थे विरोधस्य प्रविष्टत्वेन विषयतानवस्थानप्रसङ्गात् । अधिकं तूक्तस्थलीयशारदायामनुसन्धेयम् । नियमेनेत्यपरासत्त्वव्याप्यत्वलाभाय । एवञ्च सूक्ष्ममीक्षणे 'ननु परस्पराभावव्याप्यत्व'मित्यादिनाऽनुपदमस्माभिराशङ्क्य निरस्ते एव पक्षे पर्यवसानम् । उत्तानार्थे त्वाह सत्त्वासत्त्वयोरिति । एकापरेति । एकस्य सत्त्वं नामैकनिष्ठा वृत्तिता, अपरस्यासत्त्वं चापरनिष्ठाभावप्रतियोगित्वमिति यत्र तत्रेति सामानाधिकरण्योक्तिर्न युज्यते इत्यर्थः । ननु सत्त्वं सम्बन्धोऽसत्त्वञ्च तदभावस्तयोश्चैकापरप्रतियोगिकयोः सामानाधिकरण्यं सम्भवत्येवेत्यत आह सम्बन्धस्येति । सम्बन्धाभावस्य चेति शेषः । तद्व्यतिरेकत्वे = परस्परविरोधरूपत्वे । पौनरुक्त्यादीति । आदिनाऽनाकाङ्क्षिताभिधानं ग्राह्यम् । एतदेव प्रपञ्चयति

यस्याधेयतया सम्बन्धी घटाभावः, तत्र घटो नास्तीत्यस्याप्ययमर्थः—तस्याधेयतया सम्बन्धी घटाभाव इति। यत्र घट इत्यस्य कोऽर्थः—यस्याधेयतया सम्बन्धी घटः, तत्र घटाभावो नास्तीति कोऽर्थः—तस्याधेयतया सम्बन्धी घटाभावसम्बन्धनिषेधः, घटाभावसम्बन्धस्य घटाभावात्मकतया घटाभावसम्बन्धनिषेधस्यापि घटात्मकतेति, तस्मात्तस्याधेयतया सम्बन्धी घट इत्येवार्थः, अतो घटतदभावयोर्भेदं मनसिकृत्यापि न विप्रतिपत्तव्यमिति। यत्रैकस्यावस्थानं तत्रैकस्यैवेति नियमाभिप्रायेण न पौनरुक्त्यादिरिति चेन्न, नियमस्य यत्किञ्चिदन्यव्यवच्छेदकत्वेऽसिद्धत्वापातात्, विरोधिव्यवच्छेदकत्वस्य च विरोधानिर्वचनेऽनिर्वचनात्। अभावपक्षे भावव्यवच्छेदो भावपक्षे चाभावव्यवच्छेदो नियमार्थ इति चेन्न, एकरूपानभिधानेऽनुगतविरोधानिर्वचनात्। किञ्च भावाभावव्यवच्छेदयोरभावभावविधानातिरिक्तयोरनभ्युपगमे पुनरपि यत्र भावस्तत्र भावो यत्राभावस्तत्राभाव इत्युद्देश्यविधेयभावानुपपत्तिरभेदादिति पौनरुक्त्याधिकफलाभाव एव।

स्यादेतत्— भावाभावयोः स्वरूपमेव विरोधः, नचैवं सत्यविरुद्धतापत्तिः, यथा सत्ता भावरूपैव सती स्वात्मनि सदिति भवितृव्यवहारं करोति, तथा भावाभावौ विरोधात्मानावेव स्वात्मनि विरुद्धरूपं भवितृव्यवहारं कुर्वाते। कस्यैतौ विरोध इति चानुयोगे स्वाश्रयस्येत्युत्तरम्, किं तत्र विरोधफलमितिप्रश्ने भेदव्यवस्थानमित्यभिधेयम्, यदाह— "अयमेव हि भेदो भेदहेतुर्वा यद्विरुद्धधर्माध्यासः कारणभेदश्चे"ति। तदेतदनुपपन्नम्, एतयोर्विरोधत्वं प्रत्येकं वा स्यान्मिलितयो र्वा, नाद्यः, प्रत्येकमेवाश्रयैकत्वभङ्गप्रसङ्गात्। नैकत्वाभावो भेदोऽभिमतः किन्त्वन्योन्याश्रयापेक्षभेदरूपधर्मवत्त्वमिति चेन्न, तस्याभावात्। तदभेदे इति चेन्न, तदभेदस्य स्वाभाविकालभेदे नैकस्य भावाभावाश्रयत्वाभ्युपगमात्।

---

यत्रेत्यादिना। विप्रतिपत्तव्यमिति। उक्तपौनरुक्त्यादावित्यादिः। घटतदभावयोर्भेदेऽपि परस्पराभावात्मकतयोक्तपौनरुक्त्यादेर्दुष्परिहरत्वादिति भावः। असिद्धत्वापातादिति। भूतलादौ घटाद्यतिरिक्तानामपि धर्माणां सद्भावादिति भावः। अनुगममभ्युपेत्यैवाह किञ्चेति। यदि तु घटत्वेन तदभावाभावत्वेन च भेदाभ्युपगमेनाभावाभावस्यातिरिक्तताऽभ्युपगमेन वा पौनरुक्त्यादिकं परिह्रियते तदाप्युक्तानवस्था दुर्वारैवेति ध्येयम्।

स्यादेतदिति। स्वरूपसम्बन्धविशेषात्मकप्रतियोग्यनुयोगिभावरूपतया प्रसिद्ध एव भावाभावयोर्विरोधोऽत्र शङ्क्यते इति द्रष्टव्यम्। ननु स्वरूपस्यैव विरोधत्वे भावाभावयोस्तदाश्रयत्वव्यवहारानुपपत्तिरित्याशङ्क्याह नचेति। भवितृव्यवहारं = धर्मिताव्यवहारं। कस्येति। विरोधः = वैधर्म्यं, वैधर्म्यरूपत्वस्य भेदकत्वस्य च दर्शनाविरोधफलमित्यत्राप्येवम्। गोत्वाश्वत्वयोर्विरुद्धरूपयोः कस्यचिद्वैधर्म्यरूपत्वस्य भेदकत्वस्य च दर्शनाद्यानुयोगद्वयं सावकाशम्। व्यवस्थानं = प्रमितिः। भेदस्यातिरिक्तस्यानभ्युपगमपक्षे अयमेवेत्युक्तम्। अतिरिक्तभेदप्रमापक इत्यर्थः, अतिरिक्तभेदप्रयोजक इति वा। तदभ्युपगमपक्षे त्वाह भेदहेतुरिति। सद्गृहाय विरोधरूपयोरपि तयोर्विरुद्धत्वविरुद्धधर्माध्यासः = वैधर्म्यसम्बन्धः, एवञ्च भावाभावयोरपि सद्गृहाय विरोधरूपयोरपि तयोर्विरुद्धत्वमत्र विवक्षितम्। कारणभेदः = सामग्रीभेदः। विरोधत्वं = वैधर्म्यत्वं स्वाश्रयभेदकत्वञ्च। अन्योन्येति। भावाभावाश्रययोः परस्परापेक्षया भेदरूपधर्मवत्त्वमित्यर्थः। तस्य = उक्तधर्मवत्त्वस्य। अभावात् = सर्वत्रासिद्धत्वात्, तदाह कालेति। तदभेदे इति। भावाभावयोरेककालावच्छिन्नयोः स्वस्वाश्रयभेदकत्वं विवक्षितमित्यर्थः। तदभेदस्य = कालभेदस्य। अवान्तरकालभेदेऽपि तस्यौपाधिकत्वेन स्वभावतो

कस्य विवक्षितत्वे विशेषणवैयर्थ्यात्, एकोपाध्यवच्छिन्नस्य विवक्षितत्वे कालभेदाभिमतेऽपि सम्भवात्, भिन्नोपाध्यनवच्छिन्नत्वस्य विवक्षितत्वेऽसम्भवात्, असहावस्थितभिन्नोपाध्यनवच्छिन्नत्वस्य वाञ्छितत्वे सहत्वस्यैककालरूपत्वेन तत्रापि कालाभेदविकल्पानुवृत्त्यापत्तेः। मिलितत्वञ्चानयोरेकदेशत्वं वाऽभिमतमेककालत्वं वा, एकप्रकारेण वृत्तिं र्वा, वृत्तिप्रकारान्यैकोपाध्यवच्छेदो वा, नाद्यः, भावात्यन्ताभावयोस्तदभावात्। न द्वितीयः, भावस्य प्रध्वंसप्रागभावाभ्यां तदनुपपत्तेः। न तृतीयः, संयोगाद्यव्याप्यवृत्तितावादिपक्षे गगनादौ संयोगभावाभावयोस्तदभावात्, अव्याप्यवृत्तिधर्मानभ्युपगन्तृपक्षे भावाभावयोर्वृत्तौ प्रका-

---

महाकालस्यैकत्वादेवावान्तरभिन्नकालावच्छिन्नभावाभावयोः स्वैकाश्रयभेदकत्वप्रसङ्गस्तदवस्थइत्यर्थः। कालभेदाभिमतेऽपीति। प्रहरमुहूर्तादिभेदेऽपि दिवसादिव्यवहारप्रयोजकैकोपाध्यवच्छिन्नत्वमादायोक्तदोषतादवस्थ्यादित्यर्थः। भिन्नेति। उक्तोपाध्यवच्छिन्नस्तु कालः प्रहरादिव्यवहारप्रयोजकनानोपाध्यवच्छिन्न इति नोक्तदोष इति भावः। असम्भवादिति। सर्वस्यापि स्थूलकालस्य सूक्ष्मकालव्यवहारप्रयोजकनानोपाध्यवच्छिन्नत्वात्, क्षणस्याप्यनेकसूर्यचन्द्रादिस्पन्दरूपैककालीनोपाध्यवच्छिन्नत्वादिति भावः। असहावस्थितेति। तथा चैककालीननानोपाध्यवच्छिन्नत्वमादाय नासम्भव इति भावः। कालाभेदेति। कालाभेदघटकीभूनकालाभेदस्यासहावस्थितत्वादिरूपत्वेऽनवस्था, अन्यथा स्वसम्भवोवैकस्यापि नानात्वप्रसङ्गो वोक्त एव। न चासहावस्थितत्वं भिन्नकालीनत्वं, प्रहरादेः स्वापेक्षया सूक्ष्मकालव्यवहारप्रयोजकोपाध्यवच्छिन्नत्वेऽपि क्षणस्यातथात्वात्, तस्यापि वस्तुगत्या स्थूलोपाध्यवच्छिन्नत्वे चैकक्षणावच्छिन्नयोर्भावाभावयोः स्वस्वाश्रयभेदकत्वोक्तौ न दोष इति वाच्यम्, अन्यान्यक्षणावच्छिन्नयोरप्येकक्षणावच्छिन्नत्वेनैकस्य नानात्वप्रसङ्गतादवस्थ्यात्, सर्वेषां क्षणानां प्रत्येकमेकत्वात्, तत्क्षणावच्छिन्नत्वोक्तौ क्षणान्तरावच्छिन्नयोरभेदकत्वप्रसङ्गात्। अथ भावाश्रयक्षणावच्छिन्नोऽभावः स्वाश्रयस्य भावाश्रयाद्भेदक इत्येवं विशिष्य वक्तव्यम्, भावस्तु स्वप्रतियोगीति न भावान्तरमादायातिप्रसङ्गः। भावाश्रयत्वं च प्रतियोगितावच्छेदकसम्बन्धेन, ध्वंसप्रागभावसाधारण्याभावस्त्विष्ट एव, तयोः प्रतियोगितावच्छेदकसम्बन्धाभावात्तत्तद्व्यक्त्यवच्छिन्नप्रतियोगिकतया प्रतियोग्याश्रयक्षणावच्छिन्नत्वस्याप्यभावात्. एवं भेदसाधारण्याभावोऽपि, तस्य तादात्म्ये प्रतियोगितावच्छेदकसंसर्गतोपगमपक्षे तेन भावसम्बन्धित्वप्रसिद्धावपि न भेदकत्वमपि तु भेदत्वमिति भेदभिन्नाभावोऽभावपदेन विवक्षणीयः। नचाव्याप्यवृत्तिप्रतियोगिकात्यन्ताभावस्यापि स्वाश्रयभेदकत्वप्रसङ्गः; औपाधिकभेदस्य तत्रेष्टत्वात्, यदि चोपाधिभेद एवोपहिते ऽपचर्यते न त्वौपाधिकभेदोऽतिरिच्यत इति मतिस्तदाऽग्रे वृक्षे कपिसंयोगो न मूले इति प्रतीतेरग्रमूलाधिकरणकसंयोगतदभावावगाहित्वमस्तु, अग्रमूलयोर्भेदस्य निर्बाधत्वात्, यदि च वृक्षेऽप्यधिकरणताऽनुभवसिद्धा न त्यक्तुमुचिता, तदाऽव्याप्यवृत्त्यभावस्यावच्छेदकं निवेश्य भेदकत्वं कल्प्यताम्, व्याप्यवृत्त्यभावस्योक्तरीत्या भेदकत्वोक्तिस्तु समुचितैवेति चेन्न, ध्वस्तघटस्यात्यन्ताभावस्य भेदकत्वानापत्तेः, प्रतियोगिध्वस्ततादशायां तस्य स्वप्रतियोग्याश्रयक्षणावच्छिन्नत्वाभावादित्यादिकं द्रष्टव्यम्। मिलितयोर्विरोधत्वमिति द्वितीयपक्षं निराकरोति मिलितत्वमिति। एकप्रकारेण = एकावच्छेदेन। वृत्तिप्रकारान्येति। वृत्तौ यदवच्छेदकं तदन्येत्यर्थः। भावेति। व्याप्यवृत्तिभावेत्यर्थः। तदभावात् = एकदेशत्वाभावात्। तदनुपपत्तेः = एककालत्वानुपपत्तेः। यदि त्वननुगमपक्षमाश्रित्यात्यन्ताभावस्थले एवेत्थं भेदकत्वं कथ्यते, तदा भावाश्रयक्षणावच्छिन्नोऽभाव इति निरसनपक्षे एव पर्यवसानम्। तदभावात् = एकावच्छेदेन वृत्त्यभावात्। वस्तुतस्त्वव्याप्यवृत्त्यभावस्याभेदकताया इष्टत्वादसम्भव

न्तरभावे प्रमाणाभावात् । नापि चतुर्थः, स हि यदि निर्देष्टुं शक्यते तदापि भावप्रागभावयोर्भावप्रध्वंसयोर्वैकदानभ्युपगमेन तद्विशेषितयोरप्येकदाऽवश्यमनभ्युपगन्तव्यतया कदा विरोधस्य तदाश्रयतेति वक्तुमशक्यत्वात् । किञ्च भावप्रागभावयोर्भावप्रध्वंसयो र्वा यदि तथाभावोऽभ्युपगम्यते तदाऽऽश्रयभेदप्रसङ्गः, अथ नाभ्युपगम्यते तदा भावप्रागभावयोर्भावप्रध्वंसयोश्चाविरोधापत्तिः । अभावान्तरेऽपि सावकाशत्वान्न परस्परप्रतिक्षेपात्मकत्वञ्च, परस्परप्रतिक्षेपात्मकत्वं हि भावात्यन्ताभावयोरेव । तत्तदसत्त्वमात्रयोर्विरोधो ननु तत्तदसत्त्वविशेषयोरिति चेन्न, विशेषस्य तथाप्यविरोधात् कदापि सहावस्थितियोग्यतापत्तेः । नियमेन तथात्वे च विरोधस्यापातात् । मात्रशब्देन च यदि विशेषशून्यत्वमसत्त्वस्योच्यते तदा तदनभ्युपगम एव, प्रमाणाभावात्, नहि निर्विशेषासत्त्वमात्रसद्भावे प्रमाणमभिधातुं शक्यते । अथ मात्रशब्दोपादानं सत्यपि विशेषेऽसत्त्वस्य साधारणरूपपुरस्कारेण विरोधव्यवस्थितिप्रदर्शनार्थं तदा भावप्रध्वंसयोस्तादृगेव दोषापत्तिः, प्रध्वंसादौ विशेषे सामान्यरूपस्यावश्याभ्युपगम्यत्वात्तदादायैव विशेषे विरोधपर्यवसा-

---

एवात्र वक्तुमुचितः, कालभेदेनापि व्याप्यवृत्त्यभावस्य निरवच्छिन्नवृत्तिकतयावच्छेदकाप्रसिद्धेः । प्रकारान्तरभावे = अवच्छेदकसद्भावे, अन्यथा निरवच्छिन्नवृत्तिकत्वरूपव्याप्यवृत्तित्वानुपपत्तेः । सः = वृत्त्यवच्छेदकान्य उपाधिः । यदीति । वस्तुतस्तु न निर्देष्टुं शक्यते, स्वसमानकालीनस्वसमानाधिकरणवस्त्वन्तराणामुपाधित्वोक्तेर्निष्फलत्वात् । तदाह तदेति । तद्विशेषितयोः = उक्तोपाध्यवच्छिन्नयोः । विरोधस्य = वैधर्म्यत्वस्य, स्वाश्रयभेदकत्वस्येति यावत् । तदाश्रयता = प्रतियोगिप्रागभावाद्याश्रयता । तथाभावो वैधर्म्यविशेषमपास्य भावाभावयोः स्वाश्रयवैधर्म्यत्वमित्युक्तानोक्तौ दोषमाह किञ्चेति । तथाभावो वैधर्म्यत्वम् । अविरोधापत्तिरिति । गोत्वसास्नादिमत्त्वयोः स्वाश्रयवैधर्म्यत्वाभावेन परस्पराविरोधस्य दर्शनादत्रापि तथा स्यादित्यर्थः । ननु सहानवस्थानलक्षणविरोधानभ्युपगमेऽपि परस्परविरहात्मकत्वलक्षणो विरोधः प्रागभावप्रध्वंसयोः स्वस्वप्रतियोगिनाऽस्तु, न च व्यापकाभावे कथं व्याप्यम् ? व्यधिकरणधर्मावच्छिन्नप्रतियोगिताकेषु केवलान्वय्यभावेषु संयोगाद्यभावेषु च व्यभिचारात्सहानवस्थानस्याव्यापकत्वादित्यत आह. अभावान्तरे इति । अपिरेवार्थे, चस्त्वपेरर्थे । तथाचाभावान्तर एवोपपन्नत्वात्परस्परविरहात्मकत्वमपि नेत्यर्थः । तदाह परस्परप्रतिक्षेपात्मकत्वं हि भावात्यन्ताभावयोरेवेति । घटप्रागभावात्यन्ताभावस्य घटासमनैयत्यम्, घटप्रागभावध्वंसोऽनन्तत्वाद्घटध्वंसप्रागभावश्चानादित्वाच्च अन्यसान्तघटरूपौ, भेदाभावस्य च प्रतियोगितावच्छेदकस्वरूपत्वमित्याशयः । केचित्तु—न हि घटः स्वप्रागभावमात्रं प्रतिक्षिपति, न च तत्प्रागभावो घटमात्रं प्रतिक्षिपति, तत्प्रध्वंसस्यापि प्रतिक्षेपादेवं ध्वंसेऽपीत्याह अभावान्तरेऽपीति व्याचक्रुः । तत्तदसत्त्वमात्रयोः = घटतदभावमात्रयोः । विशेषस्य = प्रागभावादेः । प्रतियोगिनाऽविरोधात् = विरोधानभ्युपगमात् । सहावस्थितियोग्यतापत्तेः, सहावस्थितिः कालिकी । तथात्वे = सहानवस्थितत्वे । तथा च ध्वंसस्यापि प्रतिक्षेपात्, नापि ध्वंसमात्रम्, प्रागभावस्यापि प्रतिक्षेपात्, क्वचित्कालिकः क्वचिच्च दैशिको विरोध इति नैकोक्तिसम्भवः, अनुगमस्त्वनुपदं निरस्त इति द्रष्टव्यम् । स्वरूपसम्बन्धविशेषात्मकप्रतियोग्यनुयोगिभावस्य निरासः परोक्तवैधर्म्यत्वनिरासेन कृतः, स्वरूपसम्बन्धखण्डनं चोक्तमत्र सञ्चारणीयम् । यथा सत्ता भावरूपैव सती स्वात्मनि सदिति पर्यवसानादिति ।

नात्। इति विरोधखण्डनम्।

## तर्कसामान्यखण्डनम्।

भावाभावयोर्विरोधानभ्युपगमे तवाप्यनिष्टापत्तिरितिचेत्, केयमापत्तिः ? तर्कभेद इति चेत्, अथ कस्तर्कः ? अभ्युपगतव्याप्यं प्रति व्यापकप्रसञ्जनं सः, प्रसञ्जनं च

---

भवितृव्यवहारं करोतीति दृष्टान्तस्यापि भेदखण्डनेऽत्रैव परिच्छेदे प्रतिविहितत्वादितिशम्। इति खण्डनशारदायां विरोधखण्डनम्।

अनिष्टापत्तिः = सर्वविधिनिषेधादिसाङ्कर्यापत्तिः। व्यावहारिकविरोधाभ्युपगमेन समाधानं जल्पे वादे च शोभते न तु वितण्डायामित्यभिप्रेत्यापत्तिनिराकरणेनैव प्रतिवक्तुमुपक्रमते केति। तर्कभेदः = तर्कविशेषः, अप्रसङ्गात्मकानामपि तर्कताया वक्ष्यमाणत्वाद्विशेषपदम्। व्याप्यानभ्युपगन्तारं प्रति व्यापकप्रसञ्जनस्याभासत्वात्प्रत्यन्तम्। प्रसञ्जनं ज्ञापनमात्रमतिप्रसक्तमित्यतआह प्रसञ्जनञ्चेति। ननु कस्तर्क इतिप्रश्नस्येदमनुत्तरम्, परं प्रति हि तर्क उपन्यस्यत इति तर्कोपन्यासस्येदं लक्षणं स्यात् न तु तर्कस्य, तर्कोपन्यासश्च परकीयतर्कसम्पत्त्युपयोगिवाक्यप्रयोगः। नचास्तु तर्कोपदर्शनस्य तर्कत्वाभिमानेनायं ग्रन्थः; 'अस्ति ह्यप्रसङ्गोऽपी'त्यग्रिमग्रन्थास्वरसात्, तेन प्रसक्तिलक्षणस्यैवाव्याप्तिप्रतीतेः। अतएव 'व्याप्याभ्युपगमेनानिष्टस्य व्यापकस्य प्रतीतिस्तर्क' इत्युत्तरत्र प्रतीतेरेव तर्कताऽऽशङ्क्यते। अथ प्रसञ्जनं प्रसक्तिः, बोधनञ्च बोधः, 'अभ्युपगतव्याप्यं प्रती'तितु व्याप्याभ्युपगन्तृनिष्ठत्वार्थकं कथमपि व्याप्याभ्युपगमस्य कारणतया बोधे पर्यवस्यत् व्याप्याभ्युपगमजन्यो व्यापकस्वीकारार्हताबोधस्तर्क इति लक्षणोपनयने विश्राम्यतु, अनुमित्यादिस्तु व्याप्याभ्युपगमजन्योऽपि व्यापकविषयको ननु तत्स्वीकारार्हताविषयकः। ननु तर्कोऽपि कथमीदृशः, तर्कोपदर्शकवाक्यानुसारेणैव तदाकारस्य निर्णेयत्वात्, अन्यथाऽनुमितेरपि प्रतिज्ञानुरूप्यानुपपत्तेः, पर्वतो यदि निर्वह्निः स्यान्निर्धूमः स्यादित्यत्र च सम्भावनार्थकयदितदाभ्यां हेतुहेतुमद्भावापन्नारोपविषयतायोगेन निर्वह्नित्वारोपविषयताश्रयोऽयं पर्वतस्तदारोपविषयताप्रयोज्यनिर्धूमत्वारोपविषयताश्रय इति बोधो व्युत्पत्तिसिद्धः, आरोपश्चाहार्यभ्रम इति निर्वह्नित्वारोपस्यापादकज्ञानस्य निर्धूमत्वारोपकारणत्वे उक्तप्रयोज्यप्रयोजकभावसम्भवः, तथाच निर्धूमत्वारोप एव 'पर्वतो निर्धूमः स्या'दित्युल्लिख्यमानस्तर्कः, स च न स्वीकारार्हताविषयकः। न च पर्वतो यदि निर्वह्निः स्वीक्रियेत तदा निर्धूमोऽपि स्वीक्रियेतेत्यादिरीत्यापि तर्कोपदर्शनसम्भव इति वाच्यम्, कोटिद्वयोपनिपाते एककोटिपरिग्रहविशेषे हि सम्भावनाद्योतिते यद्युपबन्धः; नच परेण निर्वह्नित्वे स्वीकृते तदुपबन्धः समुचितः, परकीयस्वीकारनिश्चयात्, भवतु वा कथञ्चित्, तथापि पर्वतो वह्निमत्त्वेन स्वीकारार्हो धूमादित्याद्यनुमितेरपि सम्भवेन तत्रातिप्रसङ्गो दुर्वारः; निर्धूमः स्यादितिप्रसङ्गासङ्ग्रहश्च। नचैवं स्वीकारार्हताविषयकत्वोक्तिर्ज्ञाने वैजात्यविशेषस्य लाभायेत्यस्तु, स हि आपादयामीत्यादिधीसिद्धो मानसत्वव्याप्य एवेति न चाक्षुषत्वादिना सङ्कर इति वाच्यम्, एवं सति तावन्मात्रस्यैव लक्षणत्वसम्भवेन परिशिष्टवैयर्थ्यात्। यदि तु तर्कस्य विषयवैलक्षण्यस्यानुभविकत्वेन तेनैवोपपत्तिरिति तत्र जातिविशेषकल्पना नोचिता, अन्यथा घटज्ञानत्वादेरपि जातित्वापत्तेरिति मतिरनुमोद्यते तदा विषयवैलक्षण्यमेव निर्वक्तव्यमितिचेन्न, व्याप्याभ्युपगमजन्य इत्यनेनाहार्यव्याप्यवत्ताभ्रमजन्यतोक्तेः, आपाद्यव्याप्यवत्तानिश्चयस्य व्याप्यांशेऽनाहार्यस्यापि व्याप्यरूपापादकांशे आहार्यस्य तर्ककारणत्वात्, परिशिष्टदलेन चाहार्यव्यापकवत्त्वाभ्रमत्वमुक्तम्; व्यापकवत्तास्वीकारयोग्यताया व्यापकवत्तारूपतायां लाघवात्, अन्यथा

स्वीकारार्हताबोधनमिति चेन्न, अव्याप्तेः, अस्ति ह्यप्रसङ्गोऽपि सम्भावना नाम तर्कः, तद्यथा—यदि जलं सहकारिभिः सम्पत्स्यते तदा मे तृषं शमयिष्यतीति, इष्टापादनेऽपि गतत्वाच्च। अनभ्युपगतव्यापकमित्यपीति चेन्न, तथाभूतमपि प्रत्यव्याप्यादव्यापकप्रसञ्जने गतत्वात्। व्याप्येनेत्यपि कार्यमिति चेन्न, विकल्पासहत्वात्—किं परमार्थतो व्याप्यव्यापकभावव्यवस्थितयोः स्वरूपेणेष्टानिष्टत्वमुत व्याप्यव्यापकयोर्भावेन तत्? नाद्यः तथा-

---

योग्यतावच्छेदकान्तरगवेषणीयतापत्तेः। एवञ्चानुमितेरनाहार्यतया न तत्रातिव्याप्तिशङ्काऽपि। अत्र चाहार्यज्ञानान्तरेऽतिप्रसङ्गवारणाय जन्यान्तम्। अयं न पुरुष इति निश्चयसत्त्वेऽपि शाखादौ करादिभ्रमादयं पुरुष इत्याद्याहार्यारोपेऽतिव्याप्तिवारणाय प्रथममाहार्यपदम्, रजतत्वव्याप्याभाववत्ताग्रहकालीनेनाहार्येण रजतत्वव्याप्यवत्ताज्ञानेन जन्ये इदं रजतमित्यनाहार्यज्ञानेऽतिव्याप्तिवारणाय द्वितीयमाहार्यपदम्। एवं च 'अस्ति ह्यप्रसङ्गोऽपि' इति ग्रन्थस्य नासङ्गतिरिति चेन्न, एवं हि 'इष्टापादनेऽपि' इत्यादिग्रन्थासङ्गतेः। तत्रारोपस्यानुत्पत्त्यैवातिव्याप्त्यनवकाशात्, आपाद्यव्यतिरेकनिश्चयस्य तर्ककारणस्य तत्राभावात्। अथे दृशकार्यकारणभावममनसिकृत्यातिव्याप्तावुक्तायां 'अनभ्युपगतव्यापक' मित्यनेन तादृशकार्यकारणभावमभिप्रेत्यैव सोद्भावना, ततश्च 'तथाभूत' मित्यादिग्रन्थेन पर्वतो यदि निर्वह्निः स्यान्निर्जलः स्यादित्यारोपे व्याप्तिभ्रमजन्येऽतिव्याप्तिरुक्ता, वस्तुगत्या निर्वह्नित्वस्यापि कस्यचिद्व्याप्यतया निर्जलत्वस्यापि च कस्यचिद्व्यापकतया यथाश्रुतलक्षणसमन्वयात्, 'व्याप्येने'ति ग्रन्थेन तु प्रकृतापाद्यनिरूपितव्याप्यत्वविवक्षा कृतेति नोक्तातिव्याप्तिरित्युच्यते, तत्राऽपि 'तथात्वाज्ञानेने'त्यादिग्रन्थस्यालग्नकतापत्तिर्दुष्परिहरैव, 'स्वयं व्याप्यतयाव्याप्यत्वाज्ञानेऽव्याप्यत्वस्य च ज्ञाने कथमप्यारोपानुत्पत्तेरतिव्याप्त्यनवकाशात्। एवं 'स्वयं व्याप्यतया-' व्याप्यत्वाज्ञानेऽव्याप्यत्वस्य च ज्ञाने कथमप्यारोपानुत्पत्तेरतिव्याप्त्यनवकाशात्। एवं 'स्वरूपेणानिष्टेने'त्यादिरपि सन्दर्भोऽलग्नक एवात्र पक्षे इति चेन्न, तर्कोपदर्शकमेव कण्ठतो निर्मुवन्नपि तर्कस्वरूपस्यार्थात्प्रतीतिमभिप्रैतीत्यदोषात्, एवञ्चोक्तरीत्या व्याप्यवत्तारोपजन्यो व्यापकवत्तारोपः प्रसङ्गः, व्याप्याभ्युपगन्तारं प्रति व्याप्यवत्तारोपविषयताप्रयोज्यव्यापकवत्तारोपविषयताबोधनञ्च प्रसञ्जनम्। ग्रन्थश्चोपरितनो यथासम्भवं योजयिष्यते। तर्क इति। अत एव "यदि च वृष्ट्यादौ सति कृष्यादितोऽवश्यं फलमिति तर्कादत्रापि प्रवृत्ति"रितिमङ्गलवादमणौ तर्काद्धितत्र प्रवृत्तिस्तदा सति विघ्ने मङ्गलादवश्यं फलमिति तर्कादत्रापि प्रवृत्ति"रितिमङ्गलवादमणौ तर्कादितित्र प्रवृत्तिस्तदा सति विघ्ने मङ्गलादवश्यं फलमिति तर्कादत्रापि प्रवृत्ति"रितिमङ्गलवादमणौ

यथाश्रुतमेव सङ्गच्छते। सहकारिसम्पत्तिः पानरूपा, वक्त्रगलविवरोदरादिसम्बन्धबहुत्वमभिप्रेत्य बहुवचनम्। अत्र व्याप्यव्यापकभावसम्भवेऽपि सम्भावना नाहार्यभ्रमात्मिकेति न प्रसङ्गः, अत एव तदुपदर्शनं न प्रसञ्जनमिति भावः। केचित्तु सम्भावनायास्तर्कलक्षणालक्ष्यतां मन्यन्ते प्रसङ्गस्यैव लक्ष्यत्वात्, तस्याः संशयविशेषत्वाच्च, तन्मतस्याग्रे स्वयं निरसनीयत्वेऽपीदानीमभ्युपेत्यैव दोषान्तरमाह इष्टापादनेऽपीति। पर्वतस्य निर्धूमत्वं मन्यमानं प्रति पर्वतो यदि निर्वह्निः स्यान्निर्धूमः स्यादिति प्रसञ्जनं सत्प्रसञ्जनं स्यात्, उक्तलक्षणसद्भावादित्यर्थः। 'व्यापकानभ्युपगन्तारं प्रती'त्यप्युक्तौ नोक्तदोषो निर्धूमत्वस्य तत्राभ्युपगमादित्याह अनभ्युपगतेति। तथाभूतं=व्यापकानभ्युपगन्तारं। अपिना स्वरूपव्यापकस्य तत्राभ्युपगमादित्याह अनभ्युपगतेति। तथाभूतं=व्यापकानभ्युपगन्तारं। अपिना व्याप्याभ्युपगन्तृसमुच्चयः। ह्रदो यदि निर्वह्निः स्यान्निर्जलः स्यादित्यपि सत्प्रसञ्जनं स्यात्, निर्वह्नित्वस्य किञ्चिन्निरूपितव्याप्तिमत्त्वेन निर्जलत्वस्य च किञ्चिन्निरूपितव्यापकताश्रयत्वेन व्याप्यवत्तारोपविषयताप्रयोज्यव्यापकवत्तारोपविषयतायास्तत्रापि बोधात्। व्याप्येनेति। तद्धर्मिणि तत्पुरुषीयाभ्युपगमविषयीभूततद्वत्तारोपविषयताबोधनं विषयीभूततदीयव्याप्यवत्तारोपविषयताप्रयोज्यतत्पुरुषीयानभ्युपगमविषयीभूततद्वत्तारोपविषयताबोधनं तद्धर्मिणि तं पुरुषं प्रति प्रसञ्जनमित्यर्थः। निर्वह्नित्वं तु न निर्जलत्वव्याप्यमित्यदोषः। स्वरूपेण= इष्टत्वमभ्युपगमविषयत्वम्, अनिष्टत्वञ्च तदभाववत्त्वम्। व्याप्यव्यापकयोर्भावेन=व्याप्यत्वेन व्यापकत्वेन च। तन्निरूपितव्याप्यत्वाभ्युपगमेनैव चारितार्थ्यात्तस्मिन् व्यापवह्न्यभाववत्त्वधूमाभाववत्त्वादिना। कयोर्भावेन=व्याप्यत्वेन व्यापकत्वेन च।

त्वाज्ञातेन वैपरीत्येनेष्टेनापि प्रसञ्जने प्रसङ्गात् । अन्यथा परैस्तथात्वेनानङ्गीकृतेन स्वयमपि परान् प्रति तथात्वेन व्युत्पादयितुमशक्येन परमार्थतस्तथाभूतेन प्रसञ्जने जयप्रसङ्गात् । नद्वितीयः, स्वयमपि तथेष्टानिष्टतायां सत्यां कृते तादृशि प्रसङ्गे "यत्रोभयो" रित्यादिना दोषेण सत्प्रसङ्गतयाऽनिष्टेऽपि गततयाऽतिव्यापकत्वात् । स्वयं व्याप्यतयाऽनिष्टेनेत्यपि विशेषणीयमिति चेन्न, स्वयमपि व्याप्यतयेष्टेन स्वमात्रेष्टव्यापके विषये

---

कत्वाभ्युपगमः पृथङ्नादरणीयः । अनिष्टत्वं तु व्यापकस्य स्वरूपेणैव वक्तुं युज्यते अन्यथा तन्निरूपितव्याप्यत्वग्रहे तत्र व्यापकत्वग्रहस्यौचित्यप्राप्तत्वादसङ्गतेः । तथात्वाज्ञातेन = तदीयव्याप्यत्वेन तत्पुरुषीयाभ्युपगमाविषयीभूतेन प्रसञ्जने इत्यन्वयः । व्याप्यत्वेनाभ्युपगममात्रविवक्षायामपि न निस्तारः, उदासीननिरूपितव्याप्यत्वं प्रतीतवन्तं प्रत्यपि प्रसञ्जनस्याभासत्वात्प्रकृतापाद्यनिरूपितव्याप्यत्वप्रतीतिरेवादरणीयेति सूचयितुमाह वैपरीत्येनेष्टेनापीति । प्रकृतापाद्यनिरूपितव्याप्तिविरहवत्त्वेन प्रतीतेन चेत्यर्थः । तेन प्रसञ्जनं नाम तद्वत्तारोपविषयताप्रयोज्यतद्व्यापकवत्तारोपविषयताबोधनम् । नहि यदि निर्वह्निः स्यात्तदा निर्धूमः स्यादिति वाक्येनैव तत्र व्याप्तिबोधसम्भवः, तदधीनशाब्दस्य व्याप्यविषयकत्वात्, व्याप्याकाङ्क्षां सम्पादयद्युक्तवाक्यं तर्ककारणव्याप्तिबोधजनकोदाहरणप्रयोजकं भवति, प्रतिवादिवाक्यस्याविश्वसनीयतायाञ्च न तथात्वमपि नियतमिति भावः । आपाद्यनिरूपितव्याप्तेरापादकेऽनभ्युपगन्तारमपि प्रति वस्तुगत्या व्याप्तिमादाय प्रसञ्जनोपगमे बाधकमाह अन्यथेति । तथात्वेन = आपाद्यनिरूपितव्याप्तिमत्तया । तथाभूतेन आपाद्यव्याप्येन । यस्या व्याप्तेर्निश्चयजननाय तर्कोपन्यासः, तन्निश्चयस्य प्रागभावेऽपि आपाद्यव्याप्यत्वस्यापादके निश्चयस्तर्ककारणतया ततःप्रागपेक्षणीयः, तस्य च स्वतःपरस्मिन्नभावे तर्कप्रयोक्त्रैव तत्र तज्जननाय यतनीयमन्यथा जयालाभादिति प्रसञ्जतात्पूर्वं तत्सत्वमस्तु मा वा तल्लक्षणे तु तत्प्रवेश आवश्यक इति भावः । यदि तु वस्तुगत्याऽऽपादके आपाद्यव्याप्यत्वमेव प्रसञ्जनस्य सम्यक्त्वे प्रयोजकम्, तदज्ञानं तु दोषः परस्य, अत एव प्रसञ्जनं स्वनेन समीचीनमेव कृतं परन्तु परस्तन्मूलभूतव्याप्तौ विप्रतिपन्नः सन्दिग्धो मूढो वेति मध्यस्थादेस्तदा प्रत्ययः । प्रसञ्जनानन्तरं तु परेण तन्मूलभूतव्याप्तेर्विघटकं प्रदर्शनीयं तदप्रदर्शने तु प्रसञ्जयितुर्जयो भवत्येव, एवञ्च विघटकप्रदर्शनस्थले तन्निराकरणेनैव परत्र तर्कोत्पादनसम्भवेन प्रसञ्जयितुर्जयो न त्वन्यथेत्यन्यदियुच्यते तदाऽपि परपक्षदूषणायैव वस्तुतो विपर्ययापर्यवसायिनोऽपि प्रसञ्जनस्य सङ्ग्राह्यताया वक्ष्यमाणत्वात्तदसङ्ग्रहो दोषः, अर्थतोऽनुगमासम्भवेऽपि शब्दानुगमस्य रक्षणीयताया व्यवहारानुरोधेनोक्तत्वादिति ध्येयम् । न द्वितीय इति । तद्धर्मिणि तत्पुरुषीयतदीयव्याप्यत्वप्रकारताकनिश्चयविशेष्यताश्रयधर्मवत्तारोपविषयताप्रयोज्यायास्तद्धर्मिणि तत्पुरुषीयनिश्चयीयविषयतानाश्रयीभूततद्वत्तारोपविषयताया बोधनमिति पक्षोऽपि न युक्त इत्यर्थः । तथेत्यादि । आपाद्यव्याप्यत्वेनापादकस्येष्टतायां तद्धर्मिणश्चापाद्यवत्त्वेनानिष्टतायामित्यर्थः । यत्रेति । यत्रोभयोः समो दोषः परिहारोऽपि वा समः । नैकः पर्यनुयोक्तव्यस्तादृगर्थविचारणे इति प्रतिबन्द्येत्यर्थः । सत्प्रसङ्गतयाऽनिष्टेऽपीति । असत्प्रसञ्जनेऽपीत्यर्थः । विजयप्रयोजकमेवासत्प्रसञ्जनं सङ्ग्राह्यं न त्वन्यदिति हृदयम् । व्याप्तिमूलकत्वविजयप्रयोजकत्वान्यतरस्यैव वा प्रसञ्जने समीचीनत्वव्यवहारप्रयोजकत्वम् । सत्ता यदि सद्व्यवहारविषयः स्यात्सत्तावती स्यादित्येकेन प्रसञ्जने कृते परेणापि तथा प्रसञ्जयितुः सत्तायां सद्व्यवहारविषयतास्वीकर्तृतामालोच्य तथा प्रसञ्जने तु न व्याप्तिमूलकत्वं तार्किकमते सत्तादौ व्यभिचारात्, न वा विजयप्रयोजकत्वं साम्यादिति भावः । स्वयमित्यादि । तद्धर्मिणि परकीयतन्निरूपितव्याप्यत्वप्रकारताकनिश्चयीयविशेष्यताश्रयस्वकीयतन्निरूपितव्याप्यत्वप्रकारकताकनिश्चयीयविशेष्यताश्रयधर्मवत्तारोप-

प्रसङ्गस्याव्यापनात्। अथ स्वयमनिष्टव्यापके स्वयं व्याप्यतयेष्टेन यत्र भवति तत्रानभ्युपगतव्यापकं परं प्रति पराभ्युपगतेन व्याप्येन व्यापकप्रसञ्जनं तर्कः, एवं सति हि स्वानिष्टव्यापके स्वमिष्टव्याप्येन यत्र प्रसङ्गस्तत्र गमनादतिव्याप्तिर्या या च स्वमात्रेष्टव्यापके स्वयमपि व्याप्यतयेष्टेन प्रसङ्गस्याव्याप्तिस्ते निरस्ते भवत इति चेन्न, यद्यत्र सत्तयाऽपि घटोऽभविष्यत्तदाऽद्रक्ष्यदित्याद्यव्यापनात्, तत्र स्वयमनिष्टदर्शनरूपव्यापके स्वयं व्याप्यतयेष्टेनैव हि दर्शनयोग्येन घटसत्त्वेनासौ प्रसङ्गः। अथ तत्र सत्तयापि स्वयमिष्टेनेति निषेध्यकोटौ प्रवेश्य निषेधोऽभिधीयते एवं यत्र भवतीति, तदपि न, एवम्भूते एव विपर्ययापर्यवसायिनि गततयाऽतिव्यापकत्वात्। विपर्ययपर्यवसायिनेत्यपि प्रक्षेप्यमिति चेन्न, केवलपरपक्षदूषणाय परमात्राभ्युपगमप्रमानव्याप्यत्वेनैवंक्षमस्य परं प्रति व्यापकप्रस-

---

विषयताप्रयोज्यायास्तद्धर्मिणि परकीयनिश्चयीयविषयतानाश्रयतद्वत्तारोपविषयताया बोधनं तद्धर्मिणि परं प्रति स्वकर्तृकप्रसञ्जनमित्यर्थः। स्वमात्रेत्यनेन परकीयनिश्चयविषयतानाश्रयत्वमापाद्यवत्तायां सूचितम्। अदृष्टादिकं यदि प्रमेयं स्यात्प्रत्यक्षं स्यादिति तार्किकेण मीमांसकं प्रति प्रसञ्जनेऽव्याप्तिर्न युज्यते, अदृष्टादौ सर्वज्ञप्रत्यक्षविषयतायास्तार्किकेष्टत्वेऽपि मीमांसकेन प्रमेयत्वे प्रत्यक्षविषयत्वव्याप्यताया अनभ्युपगमात् अन्यथा तस्यापि सर्वज्ञस्वीकारापत्तेः। तादृशव्याप्यत्वाभ्युपगन्तारं प्रत्यक्षत्वस्य चादृष्टादावनभ्युपगन्तारं व्यक्तिविशेषं प्रति प्रसञ्जने तु स्यात्। किन्त्वेवं व्यक्तिविशेषं प्रति देशोऽसौ यदि निर्वह्निः स्यान्निर्धूमः स्यादित्यादिप्रसिद्धप्रसञ्जनोदाहरणमपि न स्यक्तुमुचितम्। तत्रेति। तादृशमित्युचितम्, प्रसञ्जनमित्यन्वयः। 'यत्र प्रसङ्ग इति। यत्प्रसञ्जनमित्युचितम्। स्वीयापाद्यव्याप्यत्वप्रकारताकनिश्चयविशेष्यतानाश्रयत्वं नापादके विवक्षणीयमिति नोक्ताव्याप्तिः. तद्धर्मिणि स्वकीयतन्निरूपितव्याप्यत्वप्रकारताकनिश्चयविशेष्यताश्रयधर्मवत्तारोपविषयताप्रयोज्यायास्तद्धर्मिणि स्वकीयनिश्चयविषयतानाश्रयतद्वत्तारोपविषयताया यद्बोधनं तदन्यत्वनिवेशात्तु सत्ता यदि सद्व्यवहारविषयः स्यात्सत्तावती स्यादित्यादौ नातिव्याप्तिः, तस्योक्तान्यत्वप्रतियोगित्वादिति भावः। सत्तयेति। संयोगसम्बन्धेन घटभवनलाभायेदम्। स्वप्रतियोगिकाभाववत्तासम्बन्धेन घटभवनस्य दर्शनाप्रयोजकत्वलाभायापिशब्दः। वस्तुतस्तु तदुपादनमकिञ्चित्करमेव। पर्वतो यदि निर्वह्निः स्यान्निर्धूमः स्यादित्यादिप्रसिद्धस्थलानामप्युपलक्षणमिदम्, तेषामपि तादृशान्यत्वप्रतियोगिरूपत्वात्। अथेति। उक्तान्यत्वप्रतियोगिकुक्षावापादकधर्मवत्तांशे आहार्यत्वं न विवक्षणीयम्, सत्तायां सद्व्यवहारविषयताया निश्चयस्यानाहार्यत्वात्, प्रकृते च संयोगेन घटस्य स्वरूपेण निर्वह्नित्वस्य च धर्मिण्याहार्यनिश्चयविषयत्वान्न तदापादककप्रसञ्जनस्य प्रतियोगिकुक्षावन्तर्भावः, एवञ्च तद्धर्मिनिष्ठया स्वकीयतन्निरूपितव्याप्यत्वावच्छिन्नानाहार्यनिश्चयीयप्रकारतानिरूपितविशेष्यतया प्रयोज्यत्वस्यैव निवेशः फलति, अनाहार्यनिश्चयीयत्वमनुपादायेच्छाप्रयोज्यत्वाभावो वा प्रकारतायां वक्तव्य इति भावः। एवम्भूते इति। पर्वतो यदि निर्वह्निः स्यात्पाषाणमयत्वाभाववान् स्यादित्यादावित्यर्थः। स्वपक्षसिद्धयन्नया कृते इति शेषः। तेन परपक्षदूषणमात्रफलस्य विपर्ययापर्यवसायिनोऽपि सङ्ग्राह्यत्वेऽपि न क्षतिः। अन्नापादके आपाद्यव्याप्तिरादित्यान्न विपर्ययपर्यवसायित्वम्। प्रक्षेप्यमिति। तादृशान्यत्वानुयोगिदले आपादकधर्मे विपर्ययपर्यवसायित्वं विशेषणीयम्। तच्च स्वविरहव्याप्यापाद्यविरहकत्वम्। एवं सत्युक्तप्रसञ्जनस्यैव दृशाविशेषे सङ्ग्राह्यस्यासङ्ग्रह इत्याह केवलेति। दूषणाय प्रसञ्जनस्येत्यन्वयः। एवंक्षमस्य = दूषणक्षमस्य। प्रसङ्गशब्दः प्रसञ्जनपर एव

अनस्याव्यापनात्, तत्र स्वयं व्याप्त्यनभ्युपगमेन विपर्ययपर्यवसायित्वासम्भवात्। स प्रसङ्ग एव न भवति विरोधमात्रं तदिति चेन्न, अनिष्टं व्याप्त्यभ्युपगमबलेन परं प्रत्यापाद्यत इत्येवम्भूतस्यार्थस्योभयत्रापि तुल्यत्वात्। तुल्यत्वेऽपि लक्षणकरणासामर्थ्याद्यदि विपर्ययपर्यवसायिन्येव प्रसङ्गत्वं त्वया परिभाष्येत तर्हि मया परबाधमात्रे एव प्रसङ्गतया विपर्ययपर्यवसायिनि तु तत्र विरोधतायाः परिभाषितुं शक्यत्वात्, अन्यथा विरोधत्वमेवोभयोरपि स्यात्। प्रत्यवस्थाने वैचित्री चेत्तत्र विरोधाद्विशेषःसाऽत्रापि तुल्यैव। अतएव सम्भावनाऽपि तर्कादन्यैवेति निरस्तम्। आरोपादपि व्याप्यतानिमित्तव्यापकाभ्युपगमाविशेषात्। अतएव परप्रमितेनेति विशिष्य परानिष्टापादनमात्ररूपविपर्ययापर्यवसायितर्कता निरस्येति निरस्तम्, परमार्थतो व्याप्त्यभावेऽपि पराभ्युपगममादाय प्रसङ्गप्रवृत्तेरुपपत्तेः, कथं हि परेण व्याप्यतयाऽनुमतात्तं प्रति व्यापकानुमत्या नापतितव्यम्, नहि प्रसङ्गो वास्तवत्वं व्याप्तेरालम्बते, किन्नाम ? अभ्युपगमात्रम्, अनभ्युपगतौ वस्तुगत्या स्थितेनापि तेनापादनाप्रवृत्तेः, अत एव परस्य प्रमाणेन व्याप्यानुमतिमुत्पाद्याप्यापादनं क्रियते। वस्तुगत्या व्याप्यत्वं तथात्वेनाभ्युपगतत्वं च द्वयमपि प्रसङ्गस्याङ्गमिति चेन्न, तथात्वेनाभ्युपगमस्यावश्यं प्रसङ्गाङ्गतया मन्तव्यस्य परानपेक्षस्यैव समर्थत्वे वास्तवव्याप्तत्वस्यापि प्रवेशने प्रमाणाभावात्। तस्माद्यः प्रसङ्गःस्वपक्षसिद्ध्यङ्गं तस्य विपर्ययापर्यवसायिता दोषायैव स्यात्, प्रसङ्गस्य तस्य विपर्ययपर्यवसानदार्ढ्यार्थं दण्डतयोपन्यासात् सौगतानां सत्त्वक्षणिकत्वव्याप्तिसाधकविपर्ययान्यथामात्रदण्डप्रसङ्गवत्,

---

द्रष्टव्यः। विरोधमात्रं = पराभ्युपगमयोर्विरोधप्रदर्शनमात्रम्। पाषाणमयत्वस्य वह्निव्याप्यत्वाभ्युपगमो हि पाषाणमयत्ववति पर्वतादौ निर्वह्नित्वाभ्युपगमेन विरुध्यते। तुल्यत्वादिति। एतेन मूलशैथिल्यप्रदर्शने एव तत्र तात्पर्यमित्यपि परास्तम्, अनिष्टप्रसञ्जनेनापि विजयसम्भवेन तथातात्पर्यस्य नियन्तुमशक्यत्वात्। कण्ठतश्च प्रसञ्जनस्यैव कृतत्वात्। परबाधमात्रे = परपक्षदूषणमात्रफले विपर्ययापर्यवसायिनि। अन्यथा = आवयोः परिभाषाऽनादरे तु। तत्र = विपर्ययपर्यवसायिनि। तथासावभ्युपगमोऽनेन तवाभ्युपगमेन विरुद्ध्यते इत्यादिरीत्या विरोधप्रदर्शनम्, न त्वेकारोपविषयताप्रयोज्यापरारोपविषयताप्रदर्शनं तत्, प्रसञ्जनं तु तादृशमिति भावः। अत्रापि = विपर्ययापर्यवसायिनि परपक्षदूषणमात्रफले। तस्याप्युक्तप्रसञ्जनात्मकत्वादिति भावः। आरोपात् = यद्विपदोल्लिखितसम्भावनातः। तस्या आहार्यभ्रमात्मकत्वाभावात्। निश्चयात्मकत्वं तु तस्याः सम्मनुते, अभ्युपगमो ह्यत्र निश्चयः। व्याप्यतानिमित्तेति। व्याप्यत्वावच्छिन्नप्रकारकाभ्युपगमनिमित्तकेत्यर्थः। तथा च पूर्वमभ्युपेत्यवादेनैव दूषणान्तरमुक्तम्, वस्तुतस्तु सम्भावनायां प्रसङ्गलक्षणस्य तदुपदर्शने च प्रसञ्जनलक्षणस्य व्याप्तिरस्त्येवेति भावः। परप्रमितेनेति। आपादकधर्मे विपर्ययपर्यवसायित्वमनिवेश्य लाघवात्प्रविष्टे व्याप्यत्वप्रकारकनिश्चये एव प्रमात्वं विवक्षणीयमिति भावः। तेन = व्याप्येन। व्याप्यानुमितिं = व्याप्यत्वावच्छिन्नप्रकारकानुमितिं। दण्डतया = विपक्षवृत्तित्वशङ्कानिवर्तकतया। सत्त्वेति। अर्थक्रियाकारित्वेत्यर्थः। यद्यदर्थक्रियाकारि तत्क्षणिकमित्यत्र विपक्षवृत्तित्वशङ्कायां समर्थस्य कालक्षेपायोगेन सहकार्यपेक्षायाश्च तदाहितातिशयविशिष्टस्यापूर्वत्वेन क्षणिकत्वपर्यवसायित्वेन क्रमकरणपक्षस्यानालम्बनीयत्वात्, युगपत्करणपक्षे च स्वध्वंसस्यापि करणेन स्थिरत्वासम्भवादित्याशयेन यदि क्षणिकं न स्यादर्थक्रियाकारि न स्यादिति प्रसज्यते, तत्रश्चार्थक्रियाकारित्वात्क्षणिकत्वमेव पर्यवस्येदित्युक्तप्रसङ्गो विपर्ययपर्यवसानस्यान्यथाभावे = विरो-

तमन्तरेण तस्य स्वपक्षसाधनाक्षमत्वात्, तस्य च व्याप्तिवास्तवत्वमपि मन्तव्यम्, अन्यथा विपर्ययेऽपि व्याप्त्यभावेन स्वपक्षसाधनाक्षमत्वादेव । यस्तु प्रसङ्गः परपक्षबाधनाङ्गं तत्र पराभ्युपगममात्रं प्रयोजकं तावतैव परपक्षप्रतिक्षेपक्षमत्वेन वास्तवव्याप्तिविपर्ययपर्यवसानपर्यन्तताननुसारित्वादिति युक्तं पश्यामः । तथा च सति कथितलक्षणासङ्गतिस्तदवस्थैव ।

अथ व्याप्याभ्युपगमेनानिष्टस्य व्यापकस्य प्रतीतिस्तर्क इति चेन्न, इष्टार्थसम्भावनायामव्याप्तेः । तेन व्यापकस्य प्रतीतिः स इति चेन्न, इष्टापादनेऽपि गतत्वात् । अप्र-

---

धिनि विपक्षवृत्तित्वशङ्कारूपे दण्डो बाधकतयापराभिमत इत्यर्थः । तमन्तरेण = विपक्षवृत्तित्वशङ्कानिवर्तकमन्तरेण । तस्य = सत्त्वस्य । मन्तव्यम् = अपेक्षणीयम् । तामिति पाठे विपर्ययपर्यवसायितामित्यर्थः । तस्य = उक्तप्रसङ्गस्य, स्वपक्षसाधनत्वं परम्परया । व्याप्तिमूलकत्वाभिप्रायेण व्याप्तिवास्तवत्वमुक्तम् । तत्त्वमदर्थं दर्शनसर्वस्वे । विपर्यये आपादकात्मके । व्याप्त्यभावेन = आपाद्यनिरूपितव्याप्त्यभावेन । वास्तवेति । आपाद्यापादकयोस्तदभावयोश्च व्याप्तिद्वैतमभिप्रेत्य वास्तवव्याप्तिविपर्ययपर्यवसानेति द्वयमुक्तम् । तदवस्थैवेति । परपक्षदूषणमात्रफलके विपर्ययापर्यवसायिनि प्रसञ्जनेऽव्याप्तेरावश्यकत्वादिति भावः । एतेन च तन्निरूपितव्याप्तिविशिष्टवत्तया आहार्यभ्रमेण जन्यस्तद्वत्ताया आहार्यभ्रमस्तर्क इत्यपि निरस्तम्, सम्भावनायामुक्तप्रसञ्जने चाव्याप्तेः । व्यवहारानुरोधेन शब्दानुगमस्याप्यवश्यं रक्षणीयतया तयोस्तर्कलक्ष्यतेति वक्तुमशक्यत्वात् । विपर्ययपर्यवसायिप्रसङ्गमात्रस्य लक्ष्यत्वाभ्युपगमेऽपि च तत्तद्व्याप्त्याद्यननुगमेनाननुगमो दुर्वारः, जन्यत्वस्योत्पत्तिरूपत्वे द्वितीयक्षणेऽव्याप्तिः, अवच्छेदकधर्मागर्भीकारे च भ्रमत्वस्यार्थसमाजग्रस्ततया तद्घटितस्यावच्छेदकत्वासम्भवः, व्याप्यत्वमात्रस्य जन्यतानात्मकत्वात्, तन्निष्ठान्यथासिद्ध्यनिरूपकत्वघटितस्य चान्यथासिद्धेर्दुर्विवेकत्वोक्त्या प्रतिविहितत्वात्, स्वरूपसम्बन्धादिप्रकारान्तराणां चानिर्वाच्यतोद्गारमात्रत्वात् । तर्कमूलभूतव्याप्तौ विपक्षवृत्तित्वशङ्कावारणाय तर्कान्तरापेक्षायाञ्चानवस्था, व्याघातेन शङ्कानिवर्तनस्यापि परार्थेऽसम्भवादित्यादिकञ्चानुमानखण्डने विशदमुपपादितमिहानुसन्धेयम् । दोषान्तरं च वक्ष्यते । अव्यवस्थिताभ्युपगम्यमानकोट्युपाधिकानिष्टसत्त्वप्रतिसन्धानं तर्क इति तु विचार्यमाणमुक्तलक्षणे एव पर्यवस्यति, अव्यवस्थिताभ्युपगम्यमानत्वं ह्याहार्याभ्युपगमविषयत्वम्, तदुपाधिकत्वं च तस्मिन् सत्यावश्यकत्वं तद्व्यापकत्वरूपमेव, अनिष्टत्वं तु बाधग्रहविषयत्वमिति ।

अथेति । विपर्ययापर्यवसायिनोऽपि परपक्षबाधकस्य सङ्ग्राह्यत्वे व्याप्यवत्तांशे इव व्याप्यांशेऽप्याहार्यसाधारण एवाभ्युपगम इह विवक्षितः । इष्टापत्तावतिव्याप्तिवारणाय अनिष्टस्येति । यद्यप्यापाद्यव्यतिरेकनिश्चयस्य तर्ककारणत्वेनेष्टापादनस्थले तर्कस्यानुदयादेव नातिव्याप्तिस्तथाप्यारोपविशेषो न यथाश्रुते प्रतीतिशब्देनाभिधित्सित इत्यदोषः, अतएवाग्रेऽनुमितावतिव्याप्तिदानं सङ्गच्छते । एवञ्च तद्धर्मिण्यनिष्टतन्निरूपितव्याप्यत्वावच्छिन्नप्रकारकाभ्युपगमाधीना तद्धर्मिणि तद्वत्ताप्रतीतिस्तर्क इत्यर्थः । इष्टेति । पिपासोपशमादेरिष्टत्वात् । इष्टत्वमपास्य शङ्कते तेनेति । व्याप्याभ्युपगमेनेत्यर्थः । ननु पिपासोपशमादेरिच्छाविषयत्वेऽपि सम्भावनादशायामभ्युपगमविषयत्वाभावोऽक्षत एव, स एव चानिष्टपदेन विवक्षितः, नह्यहं पिपासोपशमवानित्यनाहार्यनिश्चयस्तदेति मनसिकृत्याशङ्कते अप्रमितस्येति । अनभ्युपेतस्येत्यर्थः । तथा = व्याप्याभ्युपगमेन प्रतीतिस्तर्कः । प्रथमेत्यनभ्युपेतत्वलाभाय । अनुमानमनुमितिः । तद्धर्मिण्यनिष्टत्वं यदि तद्धर्मिवृत्त्यभावप्रतियोगितया ज्ञातत्वम्, तदापि भ्रमोत्तरभाविनि विशेषदर्शनाधीनप्रत्यक्षेऽतिव्याप्तिर्दुष्परा । प्रमानुमितिं प्रति परामर्शस्य प्रमात्वघटितरूपेण कारणता

मितस्य तथेति चेन्न, प्रथमानुमानेऽपि गतत्वात्। अनुमाने व्याप्यस्य प्रमया तथा, न त्वभ्युपगमेनेति चेन्न, वस्तुगत्या व्याप्यस्य प्रमयाऽपि प्रतिवाद्यसिद्धस्य व्यापकानुमानासम्भवेन तत्राप्यभ्युपगमपर्यन्तं गन्तव्यत्वादेव। नन्वेवमन्यतरासिद्धं व्याप्यं प्रसाध्यानुमानव्यवस्थापनमुचितम्, तदप्रसाधनेऽन्यतरासिद्ध्या, तत्प्रसाधने परस्याभ्युपगन्तुरपसिद्धान्तात्, अपसिद्धान्तमनुद्भाव्य वादिना प्रसाधिताद्व्याप्याद्व्यापकसाधने पर्यनुयोज्योपेक्षणादिति; किं तत्र तथा न स्यात्? किमत्राप्रस्तुतया तच्चिन्तया, अन्यतरासिद्धस्य तावद्व्याप्यस्याभ्युपगमं परेणाकारयित्वैव न व्यापकसाधनमुपेयम्। तस्याप्रमा स इति चेन्न, मिथोविरुद्धादौ तर्काभासेऽपि गतत्वात्। आश्रयासिद्ध्यादिव्यतिरेके सतीति चेन्न, सन्दिग्धधूमदर्शनाद्यद्यत्र धूमस्तदाऽग्निमानिति सम्भावनायाः परमार्थतस्तथार्थावस्थानात् प्रमात्वं त्यक्तुमपारयन्त्या अव्यापनात्। तत्कालं प्रमात्वेनाप्रमीयमाण इत्यपीति चेन्न, बहुशो दत्तोत्तरत्वात्, सर्वस्य चास्य पूर्वोक्तोभयानिष्टव्यापकेष्टव्या-

---

तर्कं प्रति स्वभ्युपगमत्वघटितरूपेणेत्यभिमानेनानुमितावतिव्याप्तिं परिहरति अनुमाने इति। तथा = व्यापकविषयकत्वम्। प्रमयाऽपि = प्रमात्वेऽपि। प्रतिवाद्यसिद्धस्य व्याप्यस्येत्यनुषज्यते। व्यापकानुमानासम्भवेन = व्यापकानुमापकत्वासम्भवेन। तत्रापीति। इदमुपलक्षणम्, भ्रमात्मकपरामर्शादपि कदाचित्प्रमानुमितिदर्शनेन प्रमात्वघटितरूपेण कारणताया वक्तुमशक्यत्वात्। एतेन स्वस्मिन् व्याप्यत्वावच्छिन्नप्रकारकप्रतीतेः प्रमात्वे परस्मिन्नुत्पादिताऽपि सा प्रमैव स्यादिति किमभ्युपगमत्वघटितरूपेण कारणतायां विनिगमकमिति नाशङ्कनीयम्। एवं = प्रतिवादिन्यभ्युपगमस्योत्पादनीयत्वे। परिहरति किमिति। तथा = सर्वथैव निग्रहः। किं न स्यात् अपि तु स्यादेव। तस्य = व्यापकस्य। सः = तर्कः। उक्तलक्षणे प्रतीतिस्थाने भ्रमो विवक्षणीय इति प्रमानुमितिविशेषदर्शनोत्तरप्रत्यक्षयोर्नातिव्याप्तिः। मिथोविरुद्धादाविति। शब्दो यद्यनित्यो न स्यात्कृतको न स्यात्, शब्दो यदि नित्यो न स्यात्श्रावणो न स्यादित्येतौ सत्प्रतिपक्षवद्मिथोविरुद्धतया तर्काभासौ तत्रातिव्याप्तिः। एतत्फलीभूतयोरनुमित्योः परस्परपरामर्शप्रतिबन्धेनानुत्पत्तावपि तयोरुत्पत्तौ न किञ्चिद्बाधकम्। विपर्ययापर्यवसायितर्कविशेषसङ्ग्रहाय वस्तुसद्व्याप्तेर्विवक्षाया असम्भवेन तदभावमभिधायात्रातिव्याप्तिवारणासम्भवात्। आदिना काञ्चनमयः पर्वतो यदि निर्वह्निः स्यान्निर्धूमः स्यादित्याऽऽश्रयासिद्धादिपरिग्रहः। अतएवाह आश्रयासिद्ध्यादीति। पक्षतावच्छेदकवत्त्वेनानभ्युपगतत्वमाश्रयासिद्धिः। आपाद्यव्याप्यत्वेनानभ्युपगतत्वं मूलशैथिल्यमिति परतो वक्ष्यति। तत्र तु नातिव्याप्तिप्रसक्तिः। इष्टापादनं तु निवेशान्तरेण पूर्वं वारितम्। मिथोविरोधविरोधव्यभिचारा अपि तर्कदोषतया वक्ष्यमाणा इह वारणीयाः। आपत्तिसाम्ये त्वतिव्याप्तेर्वक्ष्यमाणत्वान्नात्र तद्वारकं विशेषणीयम्। परन्तु पक्षतावच्छेदकवत्त्वेनाभ्युपगतत्वेन धर्मिणो निवेशेनाश्रयासिद्धेस्तन्निरूपितव्याप्यत्वावच्छिन्नप्रकारकाभ्युपगमे तदभावनिरूपितव्याप्यत्वावच्छिन्नप्रकारकाभ्युपगमासमानकालीनत्वोक्त्या च मिथोविरोधस्य वारणेऽपि विरोधव्यभिचारयोर्वारणाय व्याप्यांशे प्रमात्वस्य विवक्षणीयत्वे विपर्ययापर्यवसायितर्कविशेषासङ्ग्रहः, तथाप्यभ्युपेत्यैवाह सन्दिग्धेति। तत्कालमिति। भ्रमत्वमविवक्षित्वा तत्कालं प्रमात्वेनाप्रतीयमानप्रतीतित्वमेव विवक्षणीयमित्युक्तसम्भावनायां नाव्याप्तिरिति भावः। बहुश इति। सत्प्रतिपक्षखण्डने इति शेषः। तत्कालपदेन कालविशेषविवक्षायामव्याप्तिः, तर्ककालविवक्षायाश्चात्माश्रयः, स्वाधिकरणक्षणावच्छेदेन स्वाव्यवहितोत्तरक्षणावच्छेदेन वा प्रमात्वाप्रतीतिश्चानुमितावपि सम्भवतीति तन्निवेशवैयर्थ्यम्, स्थूलकालविवक्षया स्वाधिकरणकालावच्छेदेनेत्युक्तौ चोक्तसम्भावनायामपि कदाचित्प्रमात्वप्रतीतिसम्भवेनाव्याप्तितादवस्थ्यम्, प्रवृत्त्यजनकानुमितावतिव्या-

व्योदाहरणे गतत्वेनातिव्यापकत्वात्, तद्व्यवच्छेदार्थमारोपितस्य व्याप्यस्याभ्युपगमे-
नेति करणे च सिद्धेन व्याप्येन प्रसङ्गस्याव्यापनात्, तद्यथा कार्यत्वाद्ययदृष्टसृष्टमङ्कुरादि
मीमांसकः शंसति तदानीमविशेषेण कर्तृकार्यमपि पर्यवस्येदस्य तदिति ।

अपि चात्माश्रयोऽन्योन्याश्रयश्चक्रकं व्याघातोऽनवस्था प्रतिबन्दी चेत्यापाद्यैर्भि-

---

सिश्च । एवं स्वेनाप्रतीयमानत्वविवक्षायां स्वयमिष्टस्यैव परानिष्टस्य प्रसङ्गेऽव्याप्तिः, तत्र स्वयं प्रमात्व-
प्रतीतिसम्भवात्, परेणाप्रतीयमानत्वविवक्षायामप्ययं दोष एव, प्रसञ्जयितुः परत्वात् तदपेक्षया पर-
त्वविवक्षायां च स्वार्थानुमित्युपयोगितर्कासङ्ग्रहः । अत एव स्वानभ्युपेतपराभ्युपेतकोटिनिमित्तकानिष्ट-
प्रतिसन्धानं तर्क इत्यप्यनादेयमिति भावः । ननु प्रतीतिपदेन भ्रम एव विवक्षणीयः, सम्भावनायास्तु
संशयात्मकत्वमेवेति वदन्तं प्रत्याह सर्वस्येति । सर्वविशेषणविशिष्टस्येत्यर्थः । अस्य = प्रस्तुततर्कलक्ष-
णस्य । पूर्वोक्तेति । 'यत्रोभयो'रित्याद्यापत्तिसाम्यदुष्टे इत्यर्थः । आरोपितस्येति । व्याप्यवत्ताऽभ्यु-
पगम आहार्यो विवक्षणीय इति भावः । एवञ्च भ्रमानुमितावपि नातिव्याप्तिः, आहार्यपरामर्शस्य तदज-
नकत्वात् । सिद्धेन = अनाहार्यनिश्चयविषयेण । अस्य = मीमांसकस्य । तत् = अङ्कुरादि । ननु
तन्निरूपितव्याप्यत्वावच्छिन्नप्रकारकारोपत्वावच्छिन्नकारणताघटितं लक्षणमादर्तव्यम्, तादृशकारणता-
कश्च प्रत्ययः प्रसङ्गात्मक एव, तत्र चापाद्यव्यतिरेकनिश्चयस्य कारणत्वेन नेयमव्याप्तिः, स्थलाभावात्,
तथाहि—तद्यदि कार्यं स्यात्सकर्तृकं स्यादिति प्रसङ्गो न नैयायिकस्यात्मनि स्यात्, तस्यापाद्यव्यति-
रेकनिश्चयाभावात्, नापि मीमांसकस्य, तस्य व्याप्तिनिश्चयाभावादिति चेन्न, मीमांसकेन कार्यत्वे-
नादृष्टजत्वोपगमे कथायां तं कार्यत्वे सकर्तृकत्वव्याप्तिमभ्युपगमय्य यदि कार्यं स्यात्सकर्तृकं स्यादिति
तार्किकवाक्याधीने मीमांसकगतप्रसङ्गेऽव्याप्तेरुक्तत्वात् । अतएवाविशेषेणेत्युक्तम् ।

यदि तु व्याप्तिनिश्चये सति तादृशवाक्यप्रयोगानन्तरमपि जायमानं ज्ञानमनुमितिरेव स्यान्न तु
तर्कः, पक्षे कार्यत्वलिङ्गविषयकानाहार्यनिश्चयस्यानुमितिं प्रत्येवोपयोगित्वादित्युच्यते तदाऽतिव्याप्तिं वक्तुं
पीठमारचयति अपि चेति । व्याघातः प्रतिबन्दी च नव्यैस्तर्केषु न गण्येते, अप्रसङ्गात्मकत्वात्, प्रमा-
णबाधितार्थप्रसङ्गस्त्वात्माश्रयाद्यन्यः पञ्चम उपेयते, स च व्याप्तिग्राहको विषयपरिशोधकश्चेति द्विविधः,
धूमो यदि वह्निव्यभिचारी स्याद्वह्निजन्यो न स्यादित्याद्यः, पर्वतो यदि निर्वह्निः स्यान्निर्धूमः स्यादित्या-
दिर्द्वितीयः, वह्न्यादिरूपविषयस्य शङ्कानिवृत्तिद्वारा निश्चायकत्वमेवास्य विषयपरिशोधकत्वमिति द्रष्टव्यम् ।
आपाद्यैरिति । यद्यपि घटोऽयं यद्येतद्घटजन्यः स्यादेतद्घटभिन्नः स्यात्, यद्येतद्घटजन्यजन्यः स्यात्,
एतद्घटभिन्नः स्यात्, यद्येतद्घटजन्यजन्यजन्यः स्यादेतद्घटभिन्नः स्यादित्यात्माश्रयान्योन्याश्रयचक्रकेष्वा-
पाद्याभेद एव, आपाद्यान्तरञ्च न सम्भवति, अप्रसिद्धत्वात्, नचैकत्रैतद्घटभेदो द्वितीये एतद्घटानधिक-
रणक्षणोत्तरवर्तित्वाभावस्तृतीये तथात्वेनोपलभ्यमानत्वमापाद्यतामिति सम्भवत्यापाद्यभेद इति वाच्यम्,
त्रितयस्यापि त्रिषु सम्भवेनेदृशविभागे विनिगमकाभावात् । तथाप्यात्माश्रयादेरेवापाद्यतेऽयभिमानिमत-
मेवात्रानूदितम् । वस्तुतस्त्वापादकभेदस्यैव तर्काणामेषां भेदकता वक्तुमुचिता; न च व्याघातप्रतिबन्द्यो-
रापत्त्यभावेनापादकभेदस्यापि कथं तथात्वमिति वाच्यम्, तत्रापि प्रसङ्गसम्भवादिति वक्ष्यते । अस्तु
वा तयोः प्रकारान्तरेणैव भेदः, आत्माश्रयादिचतुष्के त्वापादकभेदः सम्भवत्येव, लक्षणभेदस्तु वक्ष्य
माणः सर्वसाधारणः । अपेक्षां साक्षात्परम्परासाधारणीमवेत्याद्यव्यवहितेत्युक्तमन्योन्याश्रयचक्रकपरिहाराय ।
साक्षादपेक्षाविवक्षायां तु स्वस्य स्वापेक्षित्वमेवात्माश्रयः । एवमग्रेऽपि । ननु नैतल्लक्षणमलीकत्वात्,
न च प्रमेयत्वादौ तत्प्रमितमिति नालीकत्वम्, तत्रापि व्यक्तिभेदात्, अवच्छेदकगर्भकेवलान्वयित्वस्यैव

यमाना पदार्थत्वेन तर्क्यते, स्वरूपं चैषाम्—स्वस्याव्यवहितस्वापेक्षणमात्माश्रयः, अन्योऽन्यस्याव्यवहितान्योन्यापेक्षित्वमन्योन्याश्रयः, अन्तरितस्य तदेव द्वयमात्माश्रयोऽन्योन्याश्रयश्चक्रकम्, विरुद्धसमुच्चयो व्याघातः, उपपाद्योप-

---

तव्याहतत्वात्, न च घटाभावे घटो नास्तीत्यादौ सर्वं प्रमेयमिति प्रमाविषयत्वे च तत्प्रमितिः; तन्न्यायेनान्यत्रापि तस्याद्दोषत्वप्रसङ्गात्, प्रमाणसदसद्भावाभ्यां विशेषे चाप्रामाणिकत्वमेव दोषः स्यान्नत्वात्माश्रयादिः, उत्पत्त्यादौ च स्वापेक्षत्वादेर्न प्रसिद्धत्वशङ्कापीति चेन्न, स्वविशेष्यकस्वापेक्षापादकप्रसङ्ग आत्माश्रय इति विवक्षायामदोषात्, घटाद्यपेक्षत्वस्य तत्कार्यादौ प्रसिद्धत्वात् । एवञ्च सत्यात्माश्रयादेः प्रसङ्गात्मकत्वमपि निर्वहति। अपेक्षा तूत्पत्तौ स्थितौ ज्ञप्तौ चेति त्रेधा । तत्राद्यामाश्रित्य घटोऽयं यद्येतद्घटजन्यः स्यादेतद्घटभिन्नः स्यादिति प्रसङ्गः । द्वितीयां तु घटोऽयं यद्येतद्घटवृत्तिः स्यादेतद्घटभिन्नः स्यादिति, तृतीयां तु घटोऽयमितिज्ञानं यद्येतद्घटज्ञानजन्यं स्यादेतद्घटज्ञानभिन्नं स्यादिति । नाशेऽप्यात्माश्रयादिकं मूलकारो वक्ष्यति । अत्र सर्वत्र 'तथात्वेनोपलभ्येते' त्यप्यापाद्यं सम्भवति । अथवैतद्घटानधिकरणक्षणोत्तरवर्ती न स्यादिति प्रथमः, एतद्घटव्याप्यो न स्यादिति द्वितीयः, एतद्घटज्ञानानधिकरणक्षणोत्तरवर्ति न स्यादिति वैतद्घटज्ञानव्याप्यं न स्यादिति वा तृतीय इति वदन्ति । एवमन्योन्याश्रयचक्रकयोरपि त्रैविध्यमवगन्तव्यम् । अन्योन्यस्येति । अव्यवहितपदं चक्रकव्यावर्तनाय । अत्रापि पूर्वोक्तदोषपरिहाराय स्वविशेष्यकस्वापेक्षापेक्षापादकप्रसङ्गोऽन्योन्याश्रय इति वक्तव्यम् । घटापेक्षापेक्षत्वस्य घटनिष्ठरूपविषयकप्रत्यक्षादौ प्रसिद्धेः । आत्माश्रयान्योन्याश्रययो र्व्यावर्तनाय अन्तरितस्येति । व्यवहितस्येत्यर्थः । तृतीयादिकमन्तर्भाव्येति यावत् । तदेव द्वयमिति । स्वापेक्षणमन्योन्यापेक्षणञ्चेत्यर्थः । एतदेव द्वयं स्वशब्देनाहात्माश्रयोऽन्योन्याश्रय इति । अत्राप्युक्तरीत्या स्वविशेष्यकः स्वापेक्षापेक्षापेक्षापादकप्रसङ्गश्चक्रकमिति वक्तव्यम्, अपेक्षा चात्र परम्परासाधारणी तेन चतुःकक्षादावपि चक्रकस्य सङ्ग्रहः । यद्यपि परम्परासाधारणापेक्षादेरन्योन्याश्रयचक्रकयोरपि स्वस्य स्वापेक्षणसत्त्वेनात्माश्रय एवैकत्रितयस्थाने गणनार्हस्तथापि साक्षात्परम्परया चापेक्षाया विभागमूल एवायं विभागो न पर्यनुयोगमर्हति, परिभाषयापि बहुलं तद्दर्शनात् । विरुद्धसमुच्चय इति । तदधिकरणे तद्विरुद्धधर्माभ्युपगमनिबन्धनः प्रसङ्गो व्याघात इत्यर्थः; तेन न सिद्ध्यसिद्धिव्याघातः । घटो यदि पटत्ववान् स्याद्घटत्वाभाववान् स्यादिति प्रसङ्गः । आपादकविरुद्धरूपेण धर्मिण उपस्थितिस्तु तर्कानुगुणैव । पर्वतो निर्धूमः स्यादित्यादितर्कं प्रत्यपि धूमवान् पर्वतो निर्धूमत्वव्याप्यनिर्वह्नित्ववान् स्यादित्यादिनिश्चयस्य कारणत्वात् । एवं च व्याप्तिग्राहकविपक्षपरिशोधकतर्कयोरत्रैवान्तर्भाव इति तत्त्वम् । यद्यप्यात्माश्रयादिरूपप्रसङ्गस्याप्युक्तलक्षणाक्रान्तता, तथापि तद्भिन्नत्वमप्यत्र निवेशनीयम् । उत्पत्तिस्थित्यादिनिबन्धनावान्तरविशेषद्योतनायैव विभागोऽयं गोबलीवर्दन्यायेन । उपपाद्येति । भेदतद्व्यवहारादावन्यत्र च कार्यकारणभावादिस्थले उपपाद्योपपादकभावः प्रसिद्ध एव । अनवधिरिति चक्रकव्युदासाय । ननु वस्तुतो यद्युपपाद्योपपादकयोरेव प्रवाहस्तदा स प्रामाणिक एव स्यादिति न दोषः, अन्यथोपपाद्योपपादकभावासङ्गतेः, प्रवाहश्च सिद्ध्यसिद्धिव्याहत एव, नवा प्रसङ्गात्मकोऽपि, नचाप्रामाणिकानन्त्याभ्युपगममूलः प्रसङ्गोऽनवस्थेति विवक्षणीयमिति वाच्यम्, घटत्वं यदि घटजन्यत्वव्याप्यं स्यात्कपालसमवेतत्वव्याप्यं न स्यादित्यादावापादकस्यानन्तप्रवाहनिर्वाहत्वेन तदभ्युपगममूलत्वस्य कथञ्चित्प्रसङ्गे सम्भवेऽपि घटत्वं यदि सकलस्य घटस्य हेतौ वर्तेत घटाजन्ये न वर्तेत, ज्ञानं यदि स्वसमानकालीनस्वसमवायिसमवेतसाक्षात्कारविषयताव्याप्यजातिमत्स्यादनुपदवेद्यं

पादकप्रवाहोऽनवधिरनवस्था, स्वाभ्युपगतदोषतुल्यता प्रतिबन्दी । तत्रात्माश्रयस्य सम्बन्धद्वारभेदादाभासत्वम्, यथा प्रमेयत्वस्यात्मनि वृत्तौ, क्वचिन्नैवमपि, यथाऽनेककालस्थस्य घटस्य पूर्वकालवृत्त्यात्मन उत्तरकालवृत्त्यात्मानं प्रति कारणत्वे। अन्योन्याश्रयस्य

---

स्यादित्यादौ फलतोऽनवधिप्रवाहस्यैवापत्तेः प्रतीत्या तदभ्युपगमस्य प्रसङ्गे मूलत्वासम्भवात्, अन्यथाऽऽपादनस्य नैष्फल्यात्, वस्तुगत्या च किञ्चिद्धर्मिकमानन्त्यमापादकनिर्वाहकीभवन्न प्रसङ्गे मूलीभवितुमर्हत्यप्रसिद्धत्वादिति चेत्सत्यम्, क्वचित्फलतोऽप्रामाणिकप्रवाहप्रतीतिफलः क्वचिच्च तादृशप्रतीतिमूलः प्रसङ्गोऽनवस्थेति यथासम्भवमेव दर्शनीयत्वात् । दोषतुल्यतेति । कथायामनुमानच्छाययैव दूषणप्रवृत्तेर्वादिप्रतिवादिनोः परस्परं समानोदोषप्रसङ्गः प्रतिबन्दीत्यर्थः । यथा मनुष्यत्वेन मौढ्योद्भावयितारं प्रति मौढ्यं यदि मनुष्यत्वव्यापकं स्यात्त्वद्वृत्त्यपि स्यादिति प्रसङ्गः प्रतिबन्दीति भावः । अथ सर्वस्यापि तर्कस्यास्य किं फलमिति चेदत्र प्राञ्चः—आपादकवत्ताशङ्का तावद्द्विविधा, स्वारसिकी चाहार्या च, तत्र द्वितीया तर्केण निवर्तते, अनिष्टप्रदर्शनेनापादकवत्ताबोधेच्छाया उच्छेदे कारणाभावेनाहार्यशङ्काया उत्पत्त्यसम्भवात् । आद्या त्वाहार्यापादकवत्ताज्ञानसम्पादने न तद्बाधनिश्चयेन वाऽऽपादकव्यापकतया गृहीतस्यापाद्यस्याभाववत्तानिश्चयेन वेति तत्प्रतिबन्धे न तर्कोपयोग इत्याहुः । नव्यास्तु सामान्यत आपादकवत्ताबोधप्रतिबन्ध एव फलमिति वर्णयन्ति । तत्र शुद्धस्यापादकतास्थले तद्धर्मावच्छिन्नवत्ताबुद्धौ तद्धर्मावच्छिन्नापादककापत्तित्वेन प्रतिबन्धकता, विशिष्टस्यापादकतास्थले तु पक्षे विशेष्यवत्ताया विशेषणवत्ताया वाऽनिश्चये उक्तरूपेणैव। अन्यथा तु विशेष्यवत्ताबुद्धौ विशेषणवत्तानिश्चयसहकृतविशिष्टापादककापत्तित्वेन विशेषणवत्ताबुद्धौ तु विशेष्यवत्तानिश्चयसहकृतविशिष्टापादककार्यापत्तित्वेनेति द्रष्टव्यम् । तत्रेति । सम्बन्धद्वारभेदात्=आधाराधेयभावादिरूपसम्बन्धे द्वारभेदात् । अयं घट इत्यादिप्रमामादाय घटादौ प्रमेयत्वव्यवहारः, प्रमेयत्वमित्यादिप्रमामादाय च प्रमेयत्वे प्रमेयत्वव्यवहार इति प्रमारूपद्वारभेदः। नन्वेवं घटइत्यादिप्रमाविषयत्वे प्रमेयत्वमित्यादिप्रमाविषयत्वं वर्तते इति व्यक्तिभेद एवेत्यात्मनि वृत्ताविन्युक्तिर्न सङ्गच्छते, अथ सर्वं प्रमेयमितिप्रमाविषयत्वमात्मन्यपि वर्तत इत्यभिप्रायः, तदा तत्र प्रमाया ऐक्येन न द्वारभेदः, यदि च प्रमात्वाननुगमेन तद्घटितस्य प्रमेयत्ववति प्रमेयत्वप्रकारकत्वरूपोक्तप्रमीयप्रमात्वस्यापि नानात्वमिति तद्भेद एव द्वारभेदस्तदा स्ववृत्तित्वमपि कथम् । यदि तु प्रमेयत्ववति प्रमेयत्वप्रकारकत्वरूपं प्रमात्वमेकमेव, प्रमेयत्वत्वेन प्रमेयत्वानामनुगमात्, प्रमेयत्वत्वे तु प्रमात्वं परिचायकमेव, विषयतात्वञ्चाखण्डोपाधिः, सर्वं प्रमेयमिति ज्ञाने प्रमेयत्वस्य स्वरूपतो भानेऽपि विषयतात्वस्य स्वरूपसत एवानुगमकत्वं कथञ्चिदास्थेयम्, तदा विषयताया विषयभेदभिन्नत्वेऽपि सर्वं प्रमेयमिति प्रमाविषयत्वस्य प्रमाविषयत्वनिष्ठस्यैक्यादात्मनि वृत्ताविन्युक्तिसङ्गतावपि द्वारभेदोक्तेरसङ्गतिरेव, अथ द्वारभेदोऽवच्छेदकभेदस्तथा च सर्वत्वावच्छेदेनैव प्रमेयत्वं स्वस्मिन् वर्तते न तु स्वरूपेणेति न दोष आत्माश्रय इति चेन्न प्रमेयत्वत्वावच्छेदेनापि प्रमेयत्वस्यावदयकत्वादिति चेत्सत्यम्, प्रमाणस्वभावस्यैवात्माश्रयस्याभासतायां प्रयोजकताया विवक्षितत्वात् । अत एव द्वारभेदस्य तदाभासतायां व्यभिचारः 'क्वचिन्नैवमि'त्यादिना स्वयमेवोक्तः । एवञ्च सर्वं प्रमेयमिति प्रमाविषयत्वमेव केवलान्वयि । सामान्यतः प्रतियोग्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मप्रमेयत्वस्य केवलान्वयित्वव्यवहारस्तु वस्त्वनिबन्धन एवेति भावः । क्वचिन्नैवमपीति । द्वारभेदसम्भवेऽपि नात्माश्रयाभासोऽपि तु दोष एवात्माश्रयः क्वचिदित्यर्थः । पूर्वकालोत्तरकालवृत्तित्वोक्त्या द्वारभेदसम्भवो दर्शितः । कारणत्वे इति । प्रमाणाभावादात्माश्रयस्याभासत्वाभाव इति शेषः । अन्योन्याश्रयस्येति । आभासत्वमित्यनुषङ्गः । संस्कार-

व्यक्तिभेदात्, यथा ज्ञानेन संस्कारस्य तेन च ज्ञानस्य जनने । चक्रकस्यापि तस्मात्, यथा बीजेनाङ्कुरस्तेन स्तम्बस्तेन बीजं जन्यत इत्यत्र । व्याघातस्योपाधिभेदात्, यथा कालभेदादिना जननाजननादौ । अनवस्थायाः, क्रियायै परम्परानन्त्यानपेक्षणात्, यथा सामग्र्या कार्यजननाय स्वसामग्र्यानन्त्यानपेक्षणे । तामेतामधोधावन्तीमनवस्थामाचक्षते; क्वचिन्नैवमपि, यथा स्वाश्रये भिन्नबुद्धिजननाय स्वगतभेदानुपजीवनादपि भेदस्यानन्त्ये प्राग्लोपादिदोषात्, तामेतामूर्ध्वं धावन्तीमनवस्थामाचक्षते । प्रतिबन्द्या विशेषात्, यथा धूमानुमानेऽप्युपाधिशङ्काप्रतिबन्द्यां तर्कानुकूलत्वादिति । तदेषामापादनानि तर्काभासाः कथमुक्तलक्षणेन न सङ्ग्राह्याः, सत्यपि व्याप्त्याद्यदोषे प्रसङ्गस्थानगतेन तेन तेन विशेषेणा-

---

जनकीभूतज्ञानव्यक्तिभिन्ना संस्कारजन्या ज्ञानव्यक्तिरित्यर्थः । जातिभेदादिति तु नोक्तम्, स्मृतिजनकः संस्कारोऽनुभवजन्य एवेति नियमे मानाभावात्, यदाह "जायते च पुनः पुनः स्मरणाद् दृढतरः संस्कार" इति । व्यक्त्योरन्योन्याश्रयस्य व्यक्तिभेदमादायैव परिहरणीयत्वाच्च । चक्रकस्यापीति । आभासत्वमित्यनुषज्यते । तस्मात् = व्यक्तिभेदात् । व्याघातस्येति । आभासत्वमिति सम्बन्धः । आदिना देशभेदः । जननमुपधायकत्वम् । एकस्यैव बीजस्याङ्कुरोपधायकत्वानुपधायकत्वे व्याहते इति कालदेशभेदेन समाधीयत इत्यर्थः । आदिना गमनागमनादिकं ग्राह्यम् । अनवस्थाया इति । आभासत्वमितिसम्बध्यते । क्रियायै = उत्पादनायै । कादाचित्कत्वान्यथानुपपत्त्या कार्यकारणप्रवाहस्यानवधित्वेऽपि घटः स्वोत्पत्तये स्वसामग्रीमेवापेक्षते, न तु स्वसामग्रीसामग्रीम्, अन्यथा सामग्रीधाराया एकदार्जनासम्भवेन घटानुत्पत्त्यापत्तेरिति क्षतिकरत्वादनवस्थाया अनाभासत्वमेव भवेदिति भावः । अध इति । उत्तरोत्तरकार्यापेक्षया पूर्वपूर्वसामग्र्येवाधःपदार्थतया विवक्षिता । अत्र बाधकाभावविशिष्टप्रमाणसद्भावादेवानवस्थाया आभासत्वमभिप्रेतम्, सामग्र्यानन्त्यानपेक्षणोक्त्या बाधकाभावो ध्वनितः, अन्यथा प्रत्यक्षबाधात् । केवलं परम्परानन्त्यानपेक्षणं तु नाभासतायां प्रयोजकं व्यभिचारादित्याह क्वचिदिति । नैवमपि = परम्परानन्त्यानपेक्षणसत्वेऽपि नानवस्थाया आभासत्वम् । भेदानुपजीवनादपि = भेदानुपजीवनेऽपि भिन्नत्वव्यवहारसाम्याद्घटादाविव भेदेऽपि भेदान्तरोपगमेऽपि भेदप्रवाहो घटो न पट इति धीजननाय नापेक्ष्यते अपि तु घटनिष्ठ एक एव भेद इत्यर्थः । प्राग्लोपादयो भेदखण्डने "प्राग्लोपाविनिगम्यत्वप्रमाणापगमैर्भवे" दितिकारिकाव्याख्यायां द्रष्टव्याः । यद्यपि भिन्नत्वबुद्धिरेवात्र प्रमाणं स्यात्तथापि योग्यानुयोगिप्रतियोगिकत्वेन कदाचित्प्रत्यक्षमपि भेदप्रवाहस्य स्यान्नचैवमिति बाधकाभावविशिष्टं न साधकम्, साधकं हि तथोपपाद्यं यथा बाधकवैशिष्ट्यं तस्य न भवेदिति भावः । ऊर्ध्वमिति । भेदनिष्ठो भेद ऊर्ध्वतया विवक्षितो लोके प्रायः आधारापेक्षया आधेयस्योर्ध्वत्वव्यवहारदर्शनात् । प्रतिबन्द्या इति । आभासत्वमित्यनुषङ्गः । वह्निरद्विष्ठातीन्द्रियधर्मसमवायी जनकत्वादित्याद्युपाधिशङ्कायां यदि शङ्काऽनुपलभ्यमानगोचरा स्याद् वह्निसाध्यकधूमे उपाधिविषयिकाऽपि स्यादितिप्रतिबन्द्या आभासत्वम्, वह्निसाध्यकधूमेऽनुकूलतर्कसद्भावादित्यर्थः । एवं सदसत्तर्कौ प्रदर्श्यासत्तर्केऽतिव्याप्तिमाह तदेषामिति । आपादनानीति । आपत्तिरूपास्तर्काभासा इत्यर्थः । व्याप्त्याद्यदोषे इति । आदिना व्यापकम्, तयोरदोषो व्याप्यव्यापकभावनिश्चयः । तथा च प्रमेयत्वादौ स्ववृत्तित्वाधसिद्धिदशायां प्रमेयत्वं यदि स्ववृत्ति स्यात्स्वभिन्नं स्यादित्यादावतिव्याप्तिसम्भवः । तन्निरूपितव्याप्यत्वावच्छिन्नप्रकारकारोपत्वावच्छिन्नकारणताकतद्वत्तारोपत्वस्य तन्नाक्षत-

भासीभूतत्वात्। प्रसङ्गस्थाने तावतां विशेषाणामभावेनापि लक्षणं विशेषणीयमिति चेन्न, अन्योन्याश्रयाभासत्वप्रयोजकस्य व्यक्तिभेदस्याभावो नानवस्थायाम्, एवमात्माश्रयाभासत्वप्रयोजकस्य द्वारभेदस्याभावो नात्माश्रयान्तरादाविति व्यक्तमव्यापकत्वापत्तेः। अपि चापसिद्धान्तविरोधादिष्वपि तर्कलक्षणं गच्छत्कथङ्कारं वारणीयम्, यत्रैव निग्रहे तर्कान्तराणामन्तर्भावस्तत्रैवानयोरपीति पृथग्निग्रहत्वानुपपत्तेः। इति तर्कसामान्यखण्डनम्।

---

त्वात्। आरोपत्वं त्वाहार्यनिश्चयत्वमभिप्रेत्येदम्। प्रसङ्गस्थानं प्रसङ्गधर्मिप्रमेयत्वादि। विशेषेण = द्वारभेदादिना। द्वारभेदादिरहितधर्मिकत्वमप्यारोपे वक्तव्यमित्याह प्रसङ्गेति। नानवस्थायामिति। स्वत्वाभासत्वप्रयोजकराहित्यविवक्षा तु सिद्ध्यसिद्धिव्याहतिपराहतेतिभावः। आत्माश्रयान्तरादौ = सद्वारमाश्रयादौ। नन्वारोप आहार्यभ्रमः, तत्कारणकत्वं विवक्षितम्, एवञ्च द्वारभेदादेर्दुर्वचत्वेऽपि न क्षतिः, उक्तरीत्या स्ववृत्तित्वादौ स्थलविशेषे प्रामाणिकत्वस्यैवात्माश्रयादेराभासतायां बीजत्वाच्च, तथा च नातिव्याप्तिः, प्रमेयत्वादौ स्ववृत्तित्वाद्यात्मकापादकनिश्चयस्य वस्तुतः प्रमात्वात्, तदीयाहार्यत्वसम्पादकस्येव बाधग्रहस्य भ्रमत्वात्। अत एव तत्र व्याप्तिभङ्गोऽपि. पक्षस्यैव हेतुमतो विपक्षताप्राप्तेः। ज्ञानं यदि स्वजन्यजन्यं स्यात् स्वभिन्नं स्यादिति तु सत्तर्क एव। ज्ञानं यदि स्वजन्यसंस्कारजन्यतावच्छेदकधर्मवत् स्यात् स्वभिन्नं स्यादिति तु स्मृतेः पक्षत्वे तस्याः स्वजन्यसंस्कारजन्यतावच्छेदकस्मृतित्वाश्रयत्वेनोक्तप्रमेयत्वपक्षकतर्कसमानयोगक्षेम एव। अनुभवस्य तु न कस्यचित्संस्कारजन्यतावच्छेदकधर्मवत्त्वम्, प्रत्यभिज्ञायां स्मृतिजन्यत्वस्यैव स्वीकारात्। एवं पूर्वोक्तचक्रकेऽपि पक्षे व्याप्तिभङ्गः। बीजं यद्यङ्कुरोपधायकं स्यात्तदनुपधायकं न स्यादित्यत्रापि तत्कालावच्छेदे नोपधायकत्वे एव तत्कालावच्छेदेनानुपधायकत्वाभावव्याप्तिरिति यथाश्रुते व्याप्तिःपक्षे तत्समे वा भवन्नैव, एवं कादाचित्कत्वं यदि सकलस्य कार्यस्य कारणे वृत्तिमत्स्यात्कार्याजन्यावृत्ति स्यादित्यत्र त्विष्टापत्तिरेव। तद्यदि हेत्वपेक्षाव्याप्तं स्यादप्रामाणिकप्रवाहघटकवृत्ति स्यादित्यत्र तु व्याप्यभाव एवेति न काप्यतिव्याप्तिशङ्कापीति चेन्न, केवलान्वयित्वान्यथानुपपत्त्या स्ववृत्तित्वस्य स्वभिन्नत्वव्याप्यत्वभङ्गाभ्युपगमे तादृशव्याप्यत्वान्यथानुपपत्त्या केवलान्वयित्वभङ्ग एव कुतो नाभ्युपगम्यते, प्रमाणयोर्बलाबलानवधारणात्। एवञ्च प्रमेयत्वे स्ववृत्तित्वे स्वभिन्नत्वव्याप्यत्वरूपापादकप्रतीतिःप्रमितिरेवेत्येकशेषीकृत्य वक्तुमशक्यमेव। नन्वेवमपि स्ववृत्तित्वे स्वभिन्नत्वव्यासेरपि संशय एव स्यादिति नातिव्याप्तिरिति चेन्न, यस्य तादृशव्याप्तिनिश्चयो वर्तते तस्मिन्नुत्पन्ने तादृशारोपेऽतिव्याप्तिसन्देहात्। एवमन्यत्रापि यथासम्भवं द्रष्टव्यम्। किञ्च पर्वतो यदि निर्वह्निः स्यान्निर्धूमः स्यादित्यत्रापि हेत्वाभाससामान्यलक्षणाक्षेपशेषोक्तरीत्या पर्वतनिर्वह्नित्वयोरसत्संसर्गत्वासम्भविरहेन भ्रमजन्यत्वं दुर्निरूपमेवेति कृतं विस्तरेण। विरोधादिष्वित्यादिना प्रतिज्ञाहानिर्ग्राह्या। गच्छदिति। वस्तुतस्त्वापातत इदम्—तत्र प्रसङ्गोद्भावनेऽपर्थेयसाङ्कर्येऽप्युपाध्यसाङ्कर्यमिति न्यायेन लक्षणगमनस्येष्टत्वात्, अन्यथोद्भावने त्वतिव्याप्त्यनवकाशात्। यत्रैवेत्यादिकमप्यापाततः, प्रसङ्गस्य भ्रमात्मकतया बुद्धिप्रभेदस्य निग्रहानन्तर्भावात्। प्रतिबन्दिव्याघातयोरप्रसङ्गात्मकत्वमतेऽप्यर्थान्तरविरोधरूपत्वात्. यदपि—भेदव्यवहारविषयत्वाद्घटो भेदवानितिस्थापनायां भेदेऽपि भेदव्यवहारस्तेनैव भेदेन चेत्तदात्माश्रयोऽन्यथा त्वन्योन्याश्रयादिकमित्यापादने भेदाभाववति भेदे भेदव्यवहारविषयत्वं गतमिति प्रतीत्या व्याप्यत्वासिद्धौ हेत्वाभासप्रभेदनिग्रहे आत्माश्रयायन्तर्भाव इति, तत्तुच्छम्, तत्र स्थापनायां व्याप्यत्वासिद्धावपि तस्या अभावरूपतया भ्रमात्मकप्रसङ्गस्य तदात्मकत्वानुपपत्तेः, न च दुष्टत्वेऽभिप्रायः, आत्माश्रयादेर्हेत्ववृत्तित्वात्, तद्दोषत्वाच्च, दुर्विभागस्य तत्साङ्कर्येणैवासङ्गतत्वाच्चेति। विरोधादिष्वित्यादिपदं विस्मृत्योक्तमनयोरिति। इति खण्डनशारदायां तर्कसामान्यखण्डनम्।

## तर्कविशेषखण्डनम् ।

आत्माश्रयादेश्च मूलव्याप्तौ प्रमाणोपगमश्चेत्तर्हि प्रामाणिकत्वान्न दोषत्वम्, नचेत्, मूलशैथिल्यमित्युभयतः पाशबन्धः कथं मोचनीयः । अथोच्यते यदेतदाश्रयत्व-माश्रयित्वं च तद्भेदे दृष्टम्, तद्यदि विवादाध्यासिते त्वयोपेयते तदा भेदः स्यादित्या-कारेणापादने नोक्तदोषापत्तिरिति; मैवम्, एकत्र द्वयस्यापि दृष्टत्वात् । तदाश्रयत्वं तदा-श्रितत्वञ्च मिथो भेदनियतमिति चेन्न, तन्मिथः शब्दाभ्यां स्वारीकृतत्वात् । एतदाश्रयत्वा-देतदाश्रितत्वाद्वा नैकत्वं स्यादित्यादिवचनभङ्गयापाद्यमिति चेन्मैवम् यद्येतदेतदाश्रयादि स्यात्तदैतन्न स्यादिति ह्यापाद्यम्, न चैतद्युक्तम्, धर्म्यापाद्ययोर्व्याहतत्वात् । न च वाच्यम्—आपाद्यस्य प्रमाणबाध्यताऽनुकूलैवेति व्याघातादपि सा सम्भवन्ती न दोषमाव-हतीति; यत आपाद्यापादकयोः सामानाधिकरण्यानादरेऽतिप्रसङ्गः स्यात्, अतो विपर्य-यापर्यवसायित्वमेवं स्यात्, एवं हि विपर्ययो वक्तव्यो यन्नाम भवति चैतदेतत् तस्मा-न्नैतदाश्रय इति, न चैतद्भवितुं शक्नोति, एतदित्युद्दिष्टे धर्मिण्येतत्त्वविधानासम्भवात् उद्देश्यविधेययोः प्रकारभेदस्याभावात् । न च प्रसङ्गमात्रमेतद् बाधायैवास्तु कृतमस्य विपर्ययपर्यवसानेनेति युक्तम्; स्वयमपि प्रसङ्गमूलस्य व्याप्तेरिष्टतया प्रसञ्जितनिषेधे तद्व्यतिरेकप्रामाणिकत्वस्यावश्यमन्तव्यत्वापत्तेः । अत एवैतदन्यत् स्यादित्यपि न शक्य-प्रसञ्जनम्, एतदन्यत्वस्यैतत्स्वरूपभेदमादायैव प्रतीतिपर्यवसायितया प्रसङ्गे व्याघाता-देव । विपर्ययोऽप्येतद्विशेषितान्यविशेषितान्यत्वविधायिनो विशेषणविशेषणताप्रविष्टमा-त्मानमात्मनि विधीयमानं न क्षमते, एतदनन्यत्वस्यैतदन्यान्यत्वस्यैतत्त्वादेव, अन्यत्वाव-धेरात्मन उपलक्षणत्वे चान्यत्वमात्रमुपलक्ष्यमाणमन्यस्मादप्यन्यत्वमादाय पर्यवस्येत् ।

---

स्वस्य स्ववृत्तित्वादिकमेव स्वभिन्नत्वापादकमिति यदुक्तं प्रत्याह आत्मेति । द्वयस्येति । निरूपकभेदेनेति शेषः । तन्मिथ इति । तत्त्वस्याननुगमे उक्तदोषात्, मिथस्त्वस्य च दुर्वचत्वादिति भावः । तत्त्वमननुगतम्, मिथस्त्वं तु नोपादेयमित्याशयेनाह एतदिति । न दोषमिति । तथापि दोषावहत्व-मस्त्येवेत्याह यत इति । अत इति । अतिप्रसङ्गभयादित्यर्थः । एवमित्यन्वयः । तयोः सामानाधिक-रण्यस्यादरणीयत्वे तदभावयोरपि सामानाधिकरण्यस्यादरणीयत्वेनेत्यर्थः । यदि तु 'अत एवैतदन्यत्स्या' दित्यग्रिमग्रन्थानुसारेण व्याघातस्य दूषणतां परित्यज्य विपर्ययपर्यवसानभङ्गाभिधानं नेष्टम्, अत्र तस्याः परित्यागेऽग्रे पुनस्तदभिधानस्य सन्दर्भविरुद्धत्वात्, तदा 'यत' इत्यादिना व्याघात एव सम-र्थनीयः । अत इति च पूर्वान्वयि । यतोऽतिप्रसङ्गः स्यादतो न च वाच्यमित्यन्वयः । सामानाधिकर ण्यं तु प्रकृतपक्षवृत्तित्वम्, एवञ्च जलादौ घटवृत्तित्वघटभेदयोः सुप्रसिद्धत्वेऽपि न क्षतिः । न च प्रकृतपक्षे तयोरारोप एव न तु सामानाधिकरण्यम्, अन्यथा तर्कत्वमेव न स्यादिति वाच्यम्, आरोपे सत्यसत्सं-सर्गस्य पूर्वं निराकृतत्वेन सत्संसर्गस्यैवोपगन्तव्यतायाश्चोपवर्णितत्वेन पक्षे आपाद्यापादकयोः सामाना-धिकरण्यस्य ध्रौव्यात्, तथा च घटो न घट इत्यनिष्टप्रसक्तिर्दुर्वारैव । तर्कत्वमेव न स्यादिति तु तर्कख-ण्डने प्रवृत्तं प्रति न वक्तुं युज्यते इति भावः । दोषान्तरमाह विपर्ययापर्यवसायित्वमिति विपर्ययाप-र्यवसायित्वं चेत्यर्थः । अवश्येति । अन्यथा प्रसङ्गमूलभूतव्याप्तिरपि न स्यादिति भावः । उपलक्षणत्वे = प्रतियोगिकुक्षावप्रविष्टत्वे । पर्यवस्येदिति । तथा चेष्टापत्तिः, विपर्ययेस्वरूपासिद्धिश्चेति भावः । आत्मा =

स्वरूपत एव विलक्षणमन्यत्वविशेषमवधिरात्मोपलक्षयतीति च न घटते, यतोऽन्यत्व-मात्रमेवावधिविशेषैरुपधीयमानं तदन्यत्वप्रत्ययव्यवहारोपपादकं भवदन्यत्वव्यक्तिभे-दपर्यन्तगमनं प्रमाणस्य न सहते। यदि चान्यत्वव्यक्तिभेदोऽपि स्यात्, तथापि प्रसङ्ग-मूलभूता व्याप्तिः सामान्याकारपुरस्कारित्वादेतेनैवोपधीयमानानामन्यत्वव्यक्तीनामैक्य-मादाय प्रवृत्ता तथैव प्रसङ्गे विपर्यये चोपनयन्ती स्यादेवोक्तदोषालङ्घनायेति। एवं-प्रकारता चाश्रयाश्रयिभावप्रकारान्तराश्रयेष्वप्यात्माश्रयोदाहरणेष्वतिदिश्यते।

अन्योन्याश्रयो यथा भेदेनावगताद्भेदज्ञानापगमे, सोऽपि त्वया कथङ्कारमुपन्य-सनीयः ? न तावद्यदेतदेतद्बोधाधीनबोधाधीनबोधं स्यात्तदा न बुध्येतेति, तथासति व्याप्त्यसिद्धेः, एतद्बोधाधीनबोधं यत् तद्बोधाधीनबोधस्य तस्यैवादृष्टचरत्वात्। कयाचन व्याप्यव्यापकभेदकल्पनया व्यभिचाराप्रतीतचरत्वयोर्वारणेऽप्यतथाभावशङ्का-

घटादिः। यत इति। एक एव भेदस्तत्तत्प्रतियोग्यात्मकोपाधिभेदेन विलक्षणप्रत्ययाद्युपपादको न तु भेदव्यक्तिनानात्वमिति न स्वरूपत एव विलक्षणत्वाभिधानं युज्यत इति भावः। नन्वेवं य एव घटप्रति-योगिकः स एव पटप्रतियोगिको भेद इति घटो न घट इत्याद्यपि स्यात्. घटप्रतियोगिकत्वविशिष्टभे-दस्य घटेऽभावोपगमे तु तस्य शुद्धभेदात्पार्थक्यमेवायाति, तयोरपार्थक्येऽपि विशिष्टनिरू-पिताधिकरणताया अतिरिक्तत्वे तु भेदनानात्वेन किमपराद्धम्, प्रत्युत तेन विनोक्ताधिकरणताया अपि नानात्वं नोपपत्तुं प्रभवतीत्यस्वरसादाह यदीति। सामान्याकारपुरस्कारित्वात् = सामान्यधर्मावच्छेदे-नैव ग्रहीतुं शक्यत्वात्। एतेन = घटादिना। ऐक्यं = ऐकरूप्यं। तथैव = घटादिभेदत्वघटितरूपेणैव। उपनयन्तीति। अन्यत्वव्यक्तीरित्यादिः। भेदव्यक्तिनानात्वपक्षेऽपि तद्व्यक्तित्वेन न भेदापादनं युज्यते सामान्यधर्मावच्छेदेनैव व्याप्यव्यापकभावग्रहात्, नापि केवलभेदत्वेन, इष्टापत्त्यादितादवस्थ्यात्, अपि तु घटादिभेदत्वेनेति व्याघातो दुर्निवारो विपर्यये चोद्देश्यविधेयभावानुपपत्तिरिति भावः। एवंप्रकारतेति। उक्तरीत्या दोषवत्तेत्यर्थः। प्रकारान्तरमुत्पत्तिज्ञप्तिरूपम्। न च घटत्वेन घटभेदा-भावत्वेन च भेदाद्य विपर्ययपर्यवसाननिराकरणं युज्यत इति वाच्यम्, घटादौ सप्रतियोगिकत्वनिराकर-णात। घटभेदाभावस्यातिरिक्तत्वपक्षे तु नायं दोषः, एवमापादनप्रकारान्तरमपि पूर्वं निवेदितमिति द्रष्टव्यम्।

भेदेनेति। भेदानुयोगितयेत्यर्थः। तथा च प्रतियोग्यनुयोगिभावज्ञाने भेदज्ञानम्, अन्यथा स्वस्मादपि स्वभेदग्रहप्रसङ्गात्, भेदज्ञाने च प्रतियोग्यनुयोगिभावज्ञानम्, अन्यथैकस्मिन्नपि प्रतियो-ग्यनुयोगिभावग्रहप्रसङ्गादित्यन्योन्याश्रयः। एतदिति। अन्यत्वं पक्षः। एवञ्चैतद्बोधाधीनबोधाधीन-बोधत्वमेवापादकम्। द्वितीयैतत्पदेन प्रतियोगित्वादिग्रहणे तु तद्बोधाधीनबोधत्वमप्यापादकं सम्भवति। व्याप्त्यसिद्धेरिति। अत्रापादकाप्रसिद्धिं हेतुमाह एतद्बोधाधीनबोधमिति। अन्यत्वबोधाधीनबोधं यत्—प्रतियोगित्वमनुयोगित्वञ्च तद्बोधाधीनबोधस्य तस्य = अन्यत्वस्यादृष्टचरत्वादिति। दृष्टचरत्वे तु बोधविषयत्वाभावेन सह व्याप्तिरेवोक्तापादकस्य न स्यात्। परस्परबोधाधीनबोधत्वस्यापादकत्वाभिमाने-नेदमुक्तम्। यदि त्वन्यत्वबोधाधीनबोधाधीनबोधत्वमेवापादकम्, तस्य च नान्यत्वे एव न वा प्रतियो-गित्वादिकमादायैव प्रसिद्धिस्तन्त्रम्, अपि तु यत्र क्वापि घटभिन्नपटयद्भूतलादौ, तदापि यत्र व्याप्ति-ग्राह्या तस्यावश्यं बोधव्यत्वाद्बोधविषयत्वाभावरूपापाद्यस्य तत्राभावेन न व्याप्तिग्रहसम्भवः। यदि त्वन्यत्वादेरेवापाद्यता विवक्षिता तदाप्याह कयाचनेति। अतथाभावेति। अप्रयोजकत्वाश-

खण्डकदण्डदुर्लभत्वात्। एवमन्योन्याश्रयान्तरेऽपि । चक्रकञ्च मध्येपरमन्तर्भाव्यात्माश्रयान्योन्याश्रयावेव विपरिणमत इति तद्दोषं नातिक्रामति । व्याघातस्तु यथा सन्नास्तीत्यत्र, तमपि कथं प्रयोक्ष्यसे, यदि यद्ययं सन् स्यात्तदानीमसन्न स्यादिति, तर्ह्यसन्न स्यादित्यस्यापि सन् स्यादित्यस्मिन्नेवार्थे पर्यवसानादभेदेन व्याप्यव्यापकभावस्यैवासिद्ध्यापत्तिः। स्वभावविरुद्धोपजीविनी च विरुद्धान्तरे तद्व्याघातनिरासादेव निरस्तप्राये, गौर्महिषस्ततो न भवति, अगवात्मतानियता यतो महिषात्मतेति, एष हि तयोर्विरोधः । अनवस्था तु यथा सत्तायामपि सत्तान्तरमित्यनवधौ सत्ताप्रवाहे इष्यमाणे, तत्र कथं प्रत्यवस्थेयम्, न तावद्यदि सत्तायां सत्ता स्यात्तदा न विश्रान्तिः स्यादिति सत्तायां सत्ताऽभ्युपगमस्य विश्रान्त्यभावेन सह व्याप्तिसिद्ध्यसिद्ध्योर्दोषग्रस्तत्वात्। प्रतिबन्दी

---

शङ्कायास्तर्केणैव वारणीयत्वात्तन्मूलभूतव्याप्ताव्यप्रयोजकत्वशङ्कायां तर्कान्तरापेक्षायामनवस्थानात्, व्याघातेन शङ्कानिवर्तनासिद्धेरुक्तत्वादिति भावः। अन्योन्याश्रयान्तरे उत्पत्तिस्थित्यालम्बिनि । चक्रकं नातिक्रामतीत्यन्वयः । परं = तृतीयादिकं । विपरिणमत इति । चक्रकरूपेणेत्यादिः । अभेदेनेति । घटो घटं व्याप्नोतीत्यप्रतीतेर्भेदनियत एव व्याप्यव्यापकभाव इति भावः। अत एव प्रतियोगितद्व्याप्येतरसकलतदुपलम्भकालीनत्वमिति योग्यत्वनिरुक्तौ प्रतियोगिपदं पृथगुपात्तमुदयनाचार्यैः। यदि स्वभावाभावव्यतिरेकितामतमाद्रियते तदभाववद्वृत्तित्वादिरूपव्याप्यत्वमेव वा स्वसाधारणमापत्त्युपयोगीत्युच्यते, तदापि व्याहन्यमानयोरपि समावेशरीतिरनवस्थादिकञ्चोक्तमेव, एतच्च गौ र्वाऽयं वा यदि महिषत्ववान् स्याद्गोत्वाभाववान् स्यादित्यादावपि समानमित्याह स्वभावविरुद्धोपजीविनी इति । स्वभावविरुद्धौ परस्परविरहरूपौ भावाभावौ तद्विरोधाधीनविरोधके इत्यर्थः । विरुद्धान्तरे गोत्वमहिषत्वादिरूपे । द्वयोरेव परस्परविरुद्धत्वव्यवहाराद्द्विवचनम्। तद्व्याघातेति। भावाभावव्याघातेत्यर्थः । यतोयं गौस्ततो महिषो न भवतीति सम्बन्धः । अगवात्मतानियता = गोत्वाभावव्याप्या । महिषात्मता = महिषत्वम् । एष इति । उक्तवाक्योपदर्शितः परस्पराभावव्याप्यत्वरूपइत्यर्थं । सत्तायामिति । सत्ता यदि सत्तावती स्यादनन्तसत्ताप्रवाहान्तःपातिनी स्यादित्यर्थः । सत्तायामिति । तदतिरिक्ते ह्युक्तापाद्यापादकयोः सामानाधिकरण्यमेव न सम्भवतीति भावः । सत्ताभ्युपगमस्य = सत्तावत्त्वस्येति यावत् । विश्रान्त्यभावेन = उक्तप्रवाहान्तःपातित्वेन । व्याप्तिसिद्धावुक्तापादकसिद्धिरावर्जितैव, अन्यथा तु नापत्तिसम्भवोऽपि । यदि तु सत्ता यदि सद्व्यवहारविषयत्वव्यापिका स्याद्द्रव्यादित्रयान्यतमत्वव्याप्या न स्यादित्याद्यापत्तिप्रकार आद्रियते, तदा पूर्वोक्त एव दोषः । वस्तुतस्तु तादृशव्याप्यत्वाभावे इष्टापत्तिशङ्कायां सत्ताप्रवाहमनापाद्य न निस्तार इति सिद्ध्यसिद्धिव्याघातो दुर्वार एव, एवं तत्र तत्र व्यवहारोऽपि 'एवं सत्यनवस्थाया आपत्ते'रित्याद्याकार एवं दृश्यते, स चानवस्थाया यत्किञ्चिदनिष्टप्रसङ्गात्मकत्वे न सङ्गच्छते, अत एवात्माश्रयादेरपि प्रसङ्गात्मकत्वं व्यवहारविरुद्धमेव, आत्माश्रयादेरापत्तेरिति व्यवहारस्यात्माश्रयादिपदस्य स्वस्मिन् स्वापेक्षादिपरतायामेवोपपत्तेः, अन्यथा प्रसङ्गस्य प्रसङ्गादिति व्यवहरन् प्रलाप्येव स्यात्, तस्मात्सर्वत्रैव सिद्ध्यसिद्धिव्याघातो दुर्वारः । तादृशव्यवहाराणां स्ववृत्तित्वादिमात्रस्यान्यत्र प्रसिद्धस्यापत्तिपरत्वेऽप्यापादकदौर्लभ्यमेव, नह्यापाद्यमेवापादकम् । न च स्ववृत्तित्वादिकमापादकं तत्प्रकारकधीविशेष्यत्वं चापाद्यमिति वाच्यम्, तादृशशाब्दादिभ्रमविशेष्यत्वमादायेष्टापत्तेः, तादृशप्रमाविशेष्यत्वापादने च प्रमाप्रागभावस्यैव दोषता पर्यवस्यति न त्वात्माश्रयादेः । विपर्ययपर्यवसानासम्भवश्च, स्ववृत्तित्वाभावावधारणं विना तादृशप्रमाविशेष्यत्वाभावावधारणासम्भवादन्योन्या-

च खण्डितैव ।

किञ्च प्रमेयत्वाभिधेयत्वव्यवहार्यत्वसन्निकर्षवत्त्वाभावप्रतियोगित्वादीनामात्माश्रितत्वदर्शनात्कथमात्माश्रयताखण्डिका व्याप्तिः सव्यभिचारा न स्यात् । द्वारव्यक्तिभेदस्यापि व्यभिचाराव्यतिरेकत्वात्, स्वप्रकाशत्वादिना स्वयमेव स्वज्ञानत्वस्य, एवमभावेऽन्यमभावमस्वीकुर्वता स्वयमेव स्वाभाववत्त्वस्य, एवं तदेव ग्राह्यं ग्राहकञ्चात्मप्रतीतौ, एवं तदेव ज्ञाप्यं ज्ञप्तिकारणं च शब्दो वाचक इत्यत्र, एवं तदेव नाश्यं नाशकं च प्रध्वंसिनि,

---

श्रयात् । अनवस्थायाश्च रीतिरेषा शङ्कितुमप्यशक्यैव, सत्ता यदि सत्तावती स्यात्तथात्वेन प्रमीयेतेत्यापत्तिमादायानवस्थाया आपत्तेरिति व्यवहारस्य चरितार्थयितुमशक्यत्वात् । खण्डितैवेति । द्वितीयपरिच्छेदे इति शेषः ।

सन्निकर्षवत्त्वेति । सन्निकर्षत्वेनात्र सन्निकर्षो विवक्षितस्तद्वत्त्वञ्च केवलान्वय्येव । अभावेति । भेदेत्यर्थः । तत्प्रतियोगित्वस्य केवलान्वयित्वात् । आदिना भेदानुयोगित्वादिकं ग्राह्यम् । द्वारेति । वस्तुतस्तु द्वारभेदोऽपि व्यक्तिभेदे एव पर्यवस्यतीत्युक्तम् । सर्वं प्रमेयं सर्वं व्यवहार्यमित्यादौ च द्वारभेदशङ्कैव नोदेति । व्यक्तिभेदपदमन्योन्याश्रयाभिप्रायेण, आत्माश्रयादिदोषताव्यभिचारी अभावो यस्य तथात्वात् । व्यभिचारस्थलान्याह स्वप्रकाशेति । तार्किकनयेऽपीश्वरज्ञानादेः स्वविषयकत्वं स्वीक्रियते । पष्ठ्यन्तस्योपगमादित्युपरितनेनान्वयः । यथा स्वस्य स्वज्ञानाधीनज्ञानकत्वे ज्ञप्तावात्माश्रयः, तथा स्वस्य स्वज्ञानाभिन्नत्वेऽपि, अत एवायं घटो यद्येतद्घटज्ञानाभिन्नः स्यात्ज्ञानसामग्रीजन्यः स्यादिति तदुदाहरणं दर्शितं न्यायसूत्रवृत्तौ । तथा च स्वस्य स्वविषयतायां व्यभिचारप्रदर्शनस्य नासङ्गतिः । स्वाभाववत्त्वस्य = स्वात्मकाभाववत्त्वस्य, अभावाधिकरणकाभावस्य लाघवादधिकरणस्वरूपतायास्तार्किकसम्मतत्वात् । स्वाभावत्वस्येति पाठे तु घटान्योन्याभावो न पट इति प्रतीतिविषयीभूतस्य नञोल्लिख्यमानभेदस्य प्रतियोग्यात्मकभेदस्वरूपत्वाज्ज्ञप्तावात्माश्रयोदाहरणं द्रष्टव्यम्, अन्यत्र प्रतियोगिज्ञानस्याभावज्ञानकारणताया दृष्टत्वात् । परन्तु विपर्ययेऽपि कार्यकारणज्ञानयोर्भेदस्योपगमेऽसङ्गतमिदं स्यादिति यद्व्यतिरेकज्ञानं यत्प्रतिबन्धकं तन्निश्चयस्तद्धेतुरितिन्यायेन घटभिन्नः पट इति घटभेदवत्ताज्ञाने पटे घटभेदभेदज्ञानस्य कारणतोपगमे ज्ञानान्तरकल्पनायां गौरवभयेन तदेव यदि तत्कारणमुपेयते तदेदमिति ध्येयम् । ग्राहकपदं ज्ञातृपरम् । अहम्पदार्थः स्वज्ञानार्थं समवायितया स्वात्मानमेवापेक्षते न तु घटादिः, यद्यपि घटादिप्रत्यक्षे सोऽपि विषयतयाऽपेक्ष्यते, तथापि प्रमात्रा, न तु स्वेनैवेति वैषम्यमिति भावः । शब्दोवाचक इति शब्दः स्वस्यापि शब्दत्वावच्छिन्नतया वाचकतां ज्ञापयतीति ज्ञप्तावात्माश्रयः, अन्यथा अन्यत्र प्रमाणप्रमेयभेददर्शनात् । प्रध्वंसिनि=स्वभावत एव पदार्थानां नाश इति क्षणभङ्गनये, अन्यथा स्वस्योत्पत्ताविव स्वस्य नाशेऽपि स्वापेक्षाया परापेक्षायां कदाचित्तद्विलम्बसम्भवेन स्थिरताऽपि स्यात् । यद्यप्येवं मतान्तरेऽपि नाशं प्रति प्रतियोगिनः कारणत्वेन मतविशेषानुधावनं विफलम्, घटादिपरतया प्रध्वंसिपदोपादानं तु वैफल्यमालम्बेत, अन्यथा नाश्यताया अप्रसक्तेः । नच सौगतनयेऽभावस्यानतिरिक्ततया स्वध्वंसं प्रति स्वस्य कारणता स्वं प्रत्येव पर्यवस्यतीत्युपपत्तावात्माश्रयताभिप्रायेणायं ग्रन्थो योज्यतामिति वाच्यम्, तन्मतेऽभावस्यालीकतयाऽलीकानलीकयोरैक्यासम्भवात् । तथापि मतान्तरे स्वस्येतरसाहित्येनैव स्वध्वंसकारणतया कथञ्चिद्द्वारभेद आशङ्क्येत न तु सौगतमत इत्याशयेन तन्मतानुधावनम् । स्वभावसम्बन्धे स्थितौ ज्ञप्तौ चात्माश्रयः, अन्यत्र सम्बन्धस्य सम्बन्धिनिष्ठतायास्तत्प्रत्यक्षजन्यप्रत्यक्षतायाश्च दर्शनात् । आदिना स्वपरनिर्वाहकभेदसत्तादिकं

एवं तदेव सम्बन्धि सम्बन्धश्च स्वभावसम्बन्धोपगमे इत्यादिबहुलमुपगमादात्माश्रयतदाभासविवेकाय किं नियामकमुपेयम् । अन्योन्याश्रये चान्त्योपान्त्यशब्दयोरन्योन्यनाशकतायां समव्याप्तिकयोश्चान्योन्यव्याप्यव्यापकतायामेककार्यकारिणोश्चान्योन्यसहकारितायामेवमन्यस्मिन्नपि तत्र तत्र दर्शनात्कथं न व्याप्तिभङ्गः । कश्च विशेषो यद्व्यतिरेको विशेषणमुपादीयेत । तत्र तत्राविरोधान्नैवमिति चेन्न, अन्यत्र तथाभावादर्शनस्य विरोधाभ्युपगममूलस्याविशेषात् । तत्र तत्र तथात्वे प्रमाणसद्भाव एव विशेष इति चेत्तर्हि सर्वत्रानभ्युपगममूलं तथात्वे प्रमाणाभाव एवोपजीव्यो दूषणमिष्यतां कृतमन्योन्याश्रयेण व्यभिचारितदोषत्वेनेति । चक्रकेऽपि दुःखजन्मादिसूत्रोक्तादिषु व्यभिचारदर्शनादव्याप्तिः, विशेषव्यतिरेकदर्शनदुःशकत्वं च, कार्यकारणभावस्य तज्जातीयतानियतत्वेन व्यक्तिभेदस्य चक्रकानन्तर्भूतत्वात् । व्याघातेऽप्येकस्यैव जनकत्वाजनकत्वे तथा । न च

---

ग्राह्यम् । अनेकोदाहरणप्रदर्शनं मतिवैशद्याय । अन्योन्याश्रये च कथं न व्याप्तिभङ्ग इत्यन्वयः । अन्त्येति । परस्परोत्पत्ताविव परस्परनाशेऽपि परस्परापेक्षायां परस्पराश्रयइत्यभिप्रायः । समेति । यद्यपि परस्परव्याप्यव्यापकत्वेऽपि न परस्पराश्रयता, तथापि गोत्वं विहाय सास्नादिमत्वस्य सास्नादिमत्त्वं विहाय च गोत्वस्यावर्तमानत्वात्तयोः स्थितौ परस्पराश्रयतेत्यभिप्रायेणेदम् । एकेति । दण्डचक्रादीनां स्वोत्पत्तौ परस्परनिरपेक्षत्वेऽपि घटोत्पत्तौ परस्परसापेक्षतेतिभावः । अन्यस्मिन्निति । बीजत्वाङ्कुरत्वाभ्यामङ्कुरत्वबीजत्वाभ्यां च कार्यकारणभावोपगमेनान्योन्याश्रयः । तत्र व्यक्तिभेदेऽपि स विशेषकार्यकारणभावेऽन्योन्याश्रयं निवारयेन्नतु सामान्यकार्यकारणभावे इति भावः । ननु द्वारभेदाद्यभावेऽपि विशेषान्तरवशान्नोक्तस्थलेऽप्यात्माश्रयादेर्दोषतेत्याशङ्क्याह कश्चेति । विशेषणमिति । आत्माश्रयादेर्दोषताप्रयोजकरूपे इत्यादिः । तत्रतत्रेति । उक्तस्थलेष्वित्यर्थः । स्वस्य स्ववृत्तित्वादौ विरोधाभावान्नात्माश्रयादेर्दोषतेत्यर्थः । अन्यत्र = घटादौ तथाभावादर्शनस्य = स्ववृत्तित्वाद्यदर्शनस्य । तथात्वे = स्वस्य स्ववृत्तित्वादौ । अन्योन्याश्रयेणेत्यात्माश्रयस्याप्युपलक्षणम् । आपादकवत्ताबोधप्रतिबन्धो यथाऽनिष्टदर्शनेन सम्भवति तथा प्रमाणाभावदर्शनेनापि, तर्कत्वसम्पादकस्यापादकवत्ताबोधे भ्रमत्वस्य सम्पत्तये च प्रमाणाभावोऽपेक्ष्य इति तस्यैव दोषतोद्भावनता वोचितेत्यभिप्रायः । न चेदृशस्थलेऽप्यात्माश्रयादिसत्वे स्थित्युत्पत्त्यादि नोपपद्येतेति तदुपपत्त्यैवात्मश्रयादिविरह उन्नीयते इति देश्यम्, आत्माश्रयादिस्वरूपस्य तत्राविशेषेणोन्नयनस्य बाधात् । यथात्माश्रितं स्थानं तिष्ठेन्नोत्पद्येतेत्यादिव्याप्तेः सिद्धयसिद्धिव्याहतत्वात्, व्यतिरेकव्याप्तेश्चोक्तस्थलेषु व्यभिचारात् । दुःखेति । दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग इति न्यायसूत्रम् । तत्र मिथ्याज्ञानाद्रागादिदोषस्तस्मात्प्रवृत्तिस्ततो जन्म, जन्मना च पुनर्मिथ्याज्ञानमिति चक्रकम् । एवं बीजाङ्कुरस्तम्भादिस्थलेऽपि । अव्याप्तिः = चक्रकस्थलीयापाद्यापादकयोर्व्याप्तिविरहः । ननु चक्रकस्य दोषताप्रयोजको व्यक्त्यभेदोऽत्र नास्तीति नात्र तस्य दोषता, नहि कारणीभूतैव व्यक्तिरत्र कार्यीभूतेत्याशङ्क्य विशेषकार्यकारणभावे चक्रकस्यैवं परिहारो न तु सामान्यकार्यकारणभावे इत्याह विशेषेत्यादिना । न च सामान्यकार्यकारणभावेऽपि चक्रकं व्यक्तिभेदेन परिह्रियत इति वाच्यम्, दण्डघटादिस्थले व्यक्तिभेदेऽपि चक्रकवृत्त्या सामान्यकार्यकारणभावस्याप्यदर्शनेन विरोधाभ्युपगममूलत्वादित्याशयात् । तथा = व्यभिचारदर्शनाद्व्याप्त्यभावः, एकस्यैव बीजस्याङ्कुरजनकत्वाजनकत्वयोर्विरुद्धयोरिष्टत्वात् । यदि चैककालाद्यवच्छेदेन विरुद्धयोरेकत्रोपगम एव नेष्यते स एव ह्यनिष्टप्रसञ्जक इत्युच्यते तदाऽऽह नचेति । आदिना प्रदेशभेदो गृह्यते, वृक्षादौ चलनाचलनादीनां तेनेष्टत्वात् । प्रध्वंसादावित्यादिना प्रागभावो ग्राह्यः । तथा च भिन्नकालावच्छेदेनापि विरुद्धधर्माध्यासस्य वस्तुभेदकत्वदर्श-

कालभेदादिर्विशेषः घटतत्प्रध्वंसादौ कालभेदेऽपि तादात्म्यव्याघातोपगमादेव। सत्प्रतिपक्षजात्योश्च को विशेषो व्याघाते येन पूर्वत्र बाध्यबाधकयोर्द्वयोरप्याभासत्वमुत्तरत्र तूत्तरस्य परं तथोपेयत इति गुरवः। यद्यपि प्रतिपक्षहेतुः साध्यान्तरसाधक इत्यस्ति तस्य जात्युत्तरवैधर्म्यं तथापि त्वद्धेतुरसाधकः समबलप्रतिपक्षप्रतिहतत्वादित्यस्य दूषणत्वार्थमवश्यापेक्षस्य द्वाराऽऽत्मव्याघातकत्वात्साक्षाद्वाऽवश्योपस्थाप्यद्वारेण वा स्वव्याघातकतायामुपयुक्तविशेषाभावः। न च तत्रास्तामेव व्याघातः, सत्प्रतिपक्षता तु निरवद्यैवेति शक्यं वक्तुम्—यतः शब्दादेर्नित्यत्वमेकस्मादनित्यत्वं चापरस्मादनुमानात्तथा सति किन्न स्यात्। तयोर्विरोधग्राहिणः प्रमाणस्य बलादिति चेन्न, यथा नित्यत्वमनित्यत्वमित्युभयमास्तामित्याचक्ष्महे तथा विरुद्धमविरुद्धं चास्तामित्यपि ब्रुवतोऽस्मान् कथं निवारयिष्यसि। स्यादप्येवं यदि सत्प्रतिपक्षत्वमेव तत्र दोषो न स्यादिति चेत्तर्हि मन्तव्यं प्रथमस्य हेतोः समानबलप्रतिपक्षप्रतिहतत्वादसाधकत्वमित्युक्तमावर्तते।

---

नाऽजनकत्वाजनकत्वाद्यध्यासस्यापि तथाभूतस्य वस्तुभेदकत्वं कुतो न स्याद्येन तदुपगम आद्रियते, प्रमाणसद्भावाभावाभ्यां विशेषोक्तेः परिहृतत्वात्। गौरयमश्व इत्यादिवचस इव सत्प्रतिपक्षस्यापि स्वप्रयोक्त्रभ्युगतार्थव्याघातकत्वं स्यात्, नचेष्टापत्तिः, तस्य त्वन्मतेन सदुत्तरत्वादिति व्याघातप्रसङ्गादाह सत्प्रतिपक्षेति। पूर्वत्र = सत्प्रतिपक्षे। आभासत्वम् = असाधकत्वम्। उत्तरत्र = जातौ। परमित्यनेन स्थापनाव्यावृत्तिः। तथा = आभासत्वम्। साध्यान्तरसाधकः = विपरीतकोटिनिरूपितव्याप्तिं पुरस्कृत्य प्रवृत्तः। जात्युत्तरं तु व्याप्तिमनपेक्ष्य साधर्म्यमात्रेण प्रवर्तते। दूषणत्वार्थं = आसाधकतासाधनार्थम्। तदनुपन्यासेऽपि विरोधिपरामर्शद्वयसम्वलनदशायां विरुद्धार्थग्राहकत्वेन लिङ्गेन तयोरेकतरत्वेनाप्रामाण्यग्रहस्यावश्यकत्वात्, गृहीतं चाप्रामाण्यं वक्त्रभ्युपगतव्याप्तिपक्षधर्मतान्यतरविरहं विना न सम्भवतीति भवत्येव परम्परया प्रयुज्यमानप्रतिहेतोः स्ववक्त्रभ्युपगतार्थविरहबोधकत्वम्। यत्तु जातौ साधर्म्यमात्रं बलं तच्च स्थापनाजात्योः समानमेवेति जातिवाद्याशयः, समीकरणाभिसन्धिनैव जात्युत्थानात्, सत्प्रतिपक्षे तु नैवम्, नहि तत्रोच्चारयिता स्थापको वा द्वयोः समबलत्वं मन्यते किन्तु स्वानुमानस्य बलवत्त्वमिति, तदतितुच्छम्, द्वयोर्हेत्वोः समबलत्वप्रतिसन्धानं विना सत्प्रतिपक्षत्वानुपपत्तेः, अन्यथाऽधिकबलवत्ताप्रयोजकस्यैव तत्रोद्भावनापत्तेः। अवश्यापेक्षस्येति। भेदोपचारेण षष्ठी। उपयुक्तेति। जात्युत्तरत्वपरिहरणसमर्थेत्यर्थः। तत्र = सत्प्रतिपक्षे। निरवद्यैवेति वदतः समबलप्रतिहेतुप्रतिहतत्वमिष्टं न वा, द्वितीये आह यत इति। बलादिति। न स्यादित्यनुपज्यते। कथमिति। प्रकृतहेत्वोरेवाविरोधे प्रमाणासम्भवादिति भावः। आवर्तत इति। सदुत्तरत्वेनाभिमतस्यापि सत्प्रतिपक्षस्य आद्यमाशङ्क्ने स्यादपीति। एवोऽप्यर्थे। अत्रेदम्बोध्यम्—जातौ स्फुटं व्याप्तिभङ्गप्रतीत्याऽसदुत्तरत्वस्वव्याघातकत्वेन जात्युत्तरत्वापत्तिरित्यर्थः। तदनवभासव्यवहारो दूषणासमर्थत्वात्, तत्र स्थापनायां दोषस्य स्फुटावभासे तस्यैवोद्भावनौचित्यात्, अन्यथा सद्दशायामेव जातिप्रयोगात्। सत्प्रतिपक्षस्थलेऽपि यद्यपि स्थापनायां दोषानवभासस्तुल्यः, तथापि न प्रतिहेतावपि विशिष्य व्याप्त्यादिभङ्गनिश्चयः, दोषस्य निर्दोषसाम्येन प्रत्यवस्थानानौचित्यात्, तथापि न प्रतिहेतावपि विशिष्य व्याप्त्यादिभङ्गनिश्चयः, यस्य त्वस्ति तन्निश्चयस्तदपेक्षया न सत्प्रतिपक्षताऽपीति द्वयोरपि हेत्वोः परस्परदूषणसमर्थत्वेन न जातित्वम्, स्ववक्त्रभिमतसाध्यकानुमितेरप्यनुत्पादकत्वमिति त्वन्यत्। एतेन सत्प्रतिपक्षे बाध्यबाधकयोर्द्वयोरप्याभासत्वं जातौ तूत्तरस्यैवेत्यत्र विनिगमकं स्फुटमेवेत्युक्तम्। एतेनैवानुशयेन गुरव इत्युक्तम्।

अनवस्थायां च यस्यां यस्यां सत्तायामपरापरसत्ता यायात् तस्यास्तस्याः प्रमाणेन सिद्धौ नानवस्था दोषः स्यात्, असिद्धौ चाश्रयासिद्धविषयमापादनमिति । यदि चात्मा-श्रयादिषु सर्वत्र विशेषोऽयमभिधीयते प्रमाणसिद्धत्वात्तत्र तथोपेयते इति तर्ह्यापादनस्थाने तथाभ्युपगमाय प्रमाणं नास्तीत्युक्तं भवति तथा च तत्र प्रमाणप्रश्नस्यावसरो न प्रसङ्ग-स्येति । इति तर्कविशेषखण्डनम् ।

## अप्रसङ्गात्मकतर्कनिरूपणम् ।

अपरेऽपि विषयभेदात्तर्कभेदा आत्माश्रयादिवन्मन्तुमुचिताः, तद्यथा—अविनि-गमः, उत्सर्गः, कल्पनागौरवलाघवे चानौचित्यं चेति । विकल्पेनान्वयावगमयोग्येऽनेक-स्मिन्नभ्युपगते तदेकदेशान्वयनियमनिर्द्धारणाशक्यत्वमविनिगमः, सत्प्रतिपक्षहेत्वोरिव निर्द्धारयितुमशक्यान्वययोः परस्परप्रतिक्षेपे एव पर्यवसानात् । नन्वन्यतरमादायापि प्रकृतस्योपपत्तिसम्भवेनाविनिगमस्य दोषत्वमेवानुपपन्नं केवलं पुंसस्तत्र यदि संशयः

ऽस्वरसप्रदर्शनं कृतमिति । अनवस्थायाञ्चेति । अनुपपत्तिरिति शेषः । यस्यामित्यादिकमापाततः, द्वितीयतृतीयादिसत्ताया विशिष्य पक्षतामनादृत्य सत्तात्वेनैव पक्षताया उपगमे क्षत्यभावात् । तस्मात्पूर्वोक्त-मेवानवस्थायां दूषणं सारमिति । तत्र = प्रमेयत्वादौ । तथा = स्ववृत्तित्वादिकम् । आपादनस्थाने = घटादौ । तथाचेत्यादि । एवमात्माश्रयान्योन्याश्रयमात्रमधिकृत्योक्तप्रायमपीदमिदानीं तर्कान्तरसाधा-रण्येनोक्तमिति । इति खण्डनशारदायां तर्कविशेषखण्डनम् ।

परोक्ततर्कविभागे न्यूनतां तर्कसामान्यलक्षणाभ्यासिद्ध पिशुनयन्नेवाप्रसङ्गात्मकतर्कनिरूपण-मारभते अपरे इति ।विषयभेदादिति । उदाहरणभेदाल्लक्षणभेदाच्चेत्यर्थः । फलं तु प्रमाणानुग्रहः प्रसङ्गात्मकतर्कैः समान एव । आपादकवत्तायोधप्रतिबन्धस्तु नैतैरनापत्तिरूपैः शक्यः कर्तुम् । उचिता इति । तर्कत्वावरप्रमाणेतिकर्तव्यतारूपः, स च प्रसङ्गात्मको वाऽप्रसङ्गात्मको वेत्यत्र नाग्रहः, अप्रसङ्गात्मकस्यापि प्रमाणसहकारित्वसम्भवात् । इयांस्तु विशेषो यदस्य प्रतिसन्धीयमानस्य प्रमाणसह-कारित्वम्, प्रसङ्गात्मकस्य तु स्वरूपसत एवेति । तर्कत्वव्यवहारश्चोभयसाधारण एव । आपत्तित्वमेव तर्कत्वमिति त्वसङ्गतमेव, आपादयामीत्यनुभवात्तर्कयामीत्यनुभवस्य सम्भावनादिस्थलेऽपि जायमानस्य विषयवैचित्र्यस्य दुरपह्नवत्वात् । वस्तुतश्चात्माश्रयादेरपि न व्यवहारमनुरुन्धे प्रसङ्गात्मकत्वोपगम इत्या-वेदितमनुपदमेव । कथञ्चित्प्रसङ्गश्च क नाम न सम्भवति, गुरुसमानाधिकरणलघुत्वलघुसमानाधिकरण-गुरुत्वादेरपि शक्यतावच्छेदकत्वतदभावादिव्याप्यत्वात् । एवं सति बाधितार्थप्रसङ्गेऽन्तर्भाव इति त्वात्माश्रयादावपि तुल्यम् । पूर्वोक्तरीत्या कथञ्चिद्विभागसमर्थनमपि तुल्यमिति । विकल्पेनेत्यादिना तुल्यबलत्वं दर्शितम् । अभ्युपगते = प्रसक्ते । तदेकदेशान्वयेति । अनेकैकदेश एकस्तस्य सिपाधयि-षितरूपेणान्वयेत्यर्थः । एवञ्च प्रकृतोद्देश्यविधेयान्यतरान्वयितया तुल्यबलानेकप्रसक्तौ तादृशान्वयि-तया तदेकदेशनिर्द्धारणासम्भवोऽविनिगमः । कारणत्वस्य पदार्थान्तरत्वे कार्यत्वस्य तन्निरूपकतारूपत्वं स्यात्, कार्यत्वस्य पदार्थान्तरत्वे तु कारणत्वस्य तथात्वं स्यादिति पदार्थान्तरत्वान्वयितया तयोः प्रसक्तौ तदन्यतरस्य तथात्वनिर्द्धारणासम्भवेन द्वयोरेव तथात्वमनुमन्यते बाधकाभावात्, यत्र तु बाधक-मापतति, यथाऽनेकभेदोपगमे विशिष्य निर्वाह्यनिर्वाहकभावस्य दुरवधारणत्वेन तेषां सर्वेषां परस्परमेव निर्वाह्यनिर्वाहकभावेऽन्योन्याश्रयप्रसङ्ग इति तत्र सर्वत्रैव प्रकृतोद्देश्यविधेयान्यतरान्वयिता नानुमन्यत

स्यात् स च किन्न स्यादिति चेन्न, भावानवबोधात्, प्रमाणासम्भवेन क्वचिदपि विशेषः कथमभ्युपगन्तुं शक्यो यमादाय वस्तुगत्याऽप्येकस्यान्वयः स्यात्। नन्वेवं प्रमाणाभाव एव दोषः स्यान्नाविनिगम इति चेन्न, तस्याविनिगमोन्नेयत्वेनाविनिगमस्यैव प्रथमोत्पन्नस्योपन्यासौचित्यात्। नन्वेवमनुमाने व्यक्त्यविनिगमो दोषः स्यादिति चेन्न, तत्रानेकव्यक्तीनामभ्युपगमसिद्धयभावात्सामान्योपसंहारस्यैकामेव व्यक्तिमाक्षेप्तुं सामर्थ्यात्, अविनिगमस्य चानेकाभ्युपगमे सत्युपस्थानादिति।

बाहुल्याद्दृष्टमपेक्ष्य बाहुल्यदृष्टतयाऽदुर्बलस्योपगमार्हतोत्सर्गः तद्यथा—स्वस्थस्य जाग्रतो ज्ञाने प्रामाण्याप्रामाण्यनिर्द्धारकप्रमाणानुपनिपातावि‌शेषेऽपि विना बाधकप्रामाण्यमभ्युपगच्छन्तं प्रति स्यात्, न तु प्रामाण्यम्, यं तर्कमेतमालक्ष्याहुः—तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाणता। अर्थान्यथात्वहेतूत्थदोषज्ञानादपोद्यते इति। दृष्टव्योदाहरणञ्चैतदीश्वराभिसन्धौ वेदप्रामाण्ये तथा यथा न सौगतोऽपि विप्रतिपत्तुमर्हति। ननु बलवदेककोटिकः संशय एवोत्सर्गस्ततःकथं तर्कः स्यादिति चेन्न, उत्सर्गस्य सम्भावनायाः स्वार्थस्थित्यनुकूलतयाऽवलम्ब्यत्वात्, संशयस्य तदनेवम्भावात्, उत्सर्गस्यैककोटिनिष्ठत्वात् संशयस्य कोटिद्वयावगाहित्वात्। एतेन

---

इति। अन्यतरमादायापि = अन्यतरमन्वयीकृत्यापि। प्रकृतस्य = उद्देश्यस्य विधेयस्य वा। स च किन्न स्यादिति। भवतु संशयः किमेतावतेति भावः। तस्येति। यद्यप्येकतरस्य तादृतान्वयितायां प्रमाणाभावप्रयुक्तमेव प्रसक्तानां तुल्यबलत्वम्, तथा च प्रमाणाभाव एवोपजीव्यः, अविनिगमनोद्भावनेऽपि तत्र कौतस्कुताकाङ्क्षायां प्रमाणाभावस्योपन्यसनीयत्वात् तथाप्यविनिगमोद्भावने प्रमाणाभावस्य स्फुटप्रतिपत्तिकतया न कौतस्कुताकाङ्क्षा, दृश्यते चाविनिगमोद्भावनेनैव वादिनिवृत्तिरिति तस्य पृथग्दोषत्वम्। केचित्—एकतरपक्षपातिप्रमाणाभावमेवाविनिगममाहुः। व्यक्तिरत्नार्णवादिः। अभ्युपगमसिद्धयभावात् = प्रसक्त्यभावादिति यावत्। सामान्योपसंहारस्य = सामान्यधर्मावच्छिन्ननिरूपितव्याप्तिग्रहस्य। अनेकाभ्युपगमे = अनेकप्रसक्तौ। एतावता व्याजेन प्रसक्त्यन्तस्य व्यावृत्तिर्दर्शिता।

उपगमार्हतेति। इयञ्च भूयोदर्शनरूपा वा भूयःसाहचर्यरूपा चेत्येतावन्मात्रमुत्सर्गस्वरूपम्। एतदेव दर्शयितुं बाहुल्यादृष्टमित्यादिकमुक्तम्। स्वस्थस्येतिनिर्दुष्टाक्षत्वलाभाय। जाग्रत इति स्वप्नव्यावृत्तये। तदा निद्रैव दोष इति तु नाऽऽदृतम्, मनसस्तदा प्रवृत्तस्य निद्राराहित्यात्, इन्द्रियान्तरस्य चाप्रवृत्तेः। स्यात् = प्रतिकूला स्यात्। उत्सर्ग इत्यादिः, ज्ञानानां प्रायो याथार्थ्यस्यैव दर्शनादिति भावः। न तु प्रामाण्यमिति। अभ्युपगच्छन्तं प्रतीत्यादिकमनुवर्तते। आहुर्भट्टपादाः। बुद्धेः = इदं रजतमित्यादिबुद्धेः। अर्थान्यथात्वं विषयाभावस्तस्य ज्ञानात्, इन्द्रियादिनिष्ठदोषज्ञानाद्वाऽपोद्यते। "प्रमाप्यौत्सर्गिकं धियां सर्वदा बाधकेनापनोद्यते" इति प्रत्यक्षमणावप्युक्तम्। ननु सौगतैर्ज्ञानानामप्रामाण्यमेवौत्सर्गिकं स्वीक्रियत इति तान्प्रति नैतदुदाहरणसम्भव इत्यत आह दृष्टव्येति। वेदप्रामाण्ये = तत्प्रकरणे। शब्दानामर्थं प्रत्यौत्सर्गिकं त्यजन्तं प्रति प्रतिकूल उत्सर्गः, गौरित्ययमाहेत्यादाविति पदसमभिव्याहारे एव तद्व्यापारात्। एवं धीमतां चाञ्चल्यं दाक्षिणात्यानां श्यामवर्णत्वं काश्मीरदेशोद्भवानां गौरत्वमौत्सर्गिकमित्यादिलौकिकोदाहरणमपि द्रष्टव्यम्। उत्सर्गस्यावलम्ब्यत्वादित्यन्वयः। सम्भावनायाः = उत्कटैककोटिकसंशयस्य। तदनेवम्भावात् = तथावलम्ब्यत्वाभावात्। तदर्थस्वार्थस्थितीति। एककोटावुत्कटत्वस्थितेरित्यर्थः।

संशयस्यैवैका बलवती या कोटिः सैवोत्सर्ग इति निरस्तम् । निर्णयेऽपि संशयस्यैव वस्तुनियतकारणजत्वरूपबलवती कोटिः स्यात् । स्यादप्येवं यद्युत्सर्गवन्निर्णयेऽपि संशयस्यानुस्फूर्तिः स्यादिति चेन्न, उत्सर्गोदाहरणे उत्सर्गमाद्रियमाणैः संशयोच्छेदानुमतेरेव, बाधाभावं सहकारिणमपेक्ष्योत्सर्गेणार्थैक्यभाव एव प्रमाणीभवनात् । तस्माद्यथाऽनवस्थादयो बाधाद्दूषणत्वं त्यजन्तस्तदभावे दूषणानि भवन्ति तथोत्सर्गोऽपि तथैवेति ।

सुगमासुगमयोरसुगमदुर्बलत्वं कल्पनागौरवम् । दृष्टजातीयमपेक्ष्यादृष्टजातीयं दुःखेन प्रमीयते स्वल्पमपेक्ष्य च बह्वित्यखिलजनानुभवसिद्धमेतत् । दर्शितं च विविच्येदमीश्वराभिसन्धौ, यथा नैयायिकादिकं प्रति क्षित्यादिषु प्रतिकार्यं कर्तॄणां भिन्नानामभ्युपगमापादके, सौगतं प्रति प्रत्येकं कारणानां समर्थानामनेकसमानदेशकालानामनेकनीलादिव्यक्त्युत्पादापादके चेति दूषणानुकूलमिदम् । तद्व्यतिरेकेण कल्पनालाघवं साधनानुकूलम् ।

प्रामाणिकाव्यवहार्यत्वमसमाधेयजातीयमनौचित्यं वैयात्यनामकम्, तस्य भेदाः

---

चोपजीव्योपजीवकयोर्भेद आवश्यक इति भावः । भेदकान्तरमाह उत्सर्गस्येति । अस्य दर्शनविशेषरूपत्वे एककोटिनिष्ठत्वमेककोटिविषयकत्वम्, साहचर्यविशेषरूपत्वे त्वेककोटिसम्बन्धित्वम् । संशयस्यैवेति । उत्कटकोटिविषयकत्वावच्छेदेन संशयस्यैवोत्सर्गत्वमिति भावः । दूषणान्तरमाह निर्णय इति ; स्थलविशेषे संशयोत्तरभावित्वेनाभिमतो निर्णय इत्यर्थः । तत्र ज्ञानान्तरकल्पनायां गौरवात्संशयस्यैव तत्कोटिविषयकत्वावच्छेदेन निर्णयत्वमस्तु या कोटिर्निर्णयविषयत्वेनाभिमतेति भावः । दोषस्य प्राचीनान्यथाख्यातिनयेऽसज्ज्ञानप्रयोजकत्वाद्वस्तुभाननियतं कारणदोषातिरिक्तं कारणं तज्जत्वरूपबलवत्त्व तदवच्छिन्नवृत्तिकत्वं तदवच्छेदकत्वं वा कोटौ विषयिताविशेषे, तदवच्छिन्नत्वविशिष्टसंशयो निर्णयःस्यादित्यक्षरार्थः । निर्णये = निर्णयदशायाम् । उत्सर्गोदाहरणे संशयोच्छेदानुमतेरेवेत्यन्वयः । उत्सर्ग = उत्सर्गस्य तर्कानां । अर्थैक्यभाव एव प्रमाणीभवनात् = एककोटिकप्रमाजनने एव सहकारिताऽऽपादनात् । तथैव = अपवादाभावे दूषणमेव ।

सुगमेति । यत्रोपस्थितिकृतं शरीरकृतं सम्बन्धकृतं वा लाघवं स सुगमः, तदन्योऽसुगमः । तस्य दुर्बलत्वं च प्रमाणापरिच्छेद्यत्वम्, लघ्वर्थपरिच्छेदकताया एव प्रमाणेषु स्वभावसिद्धत्वात् । 'इदमस्माल्लघु' 'इदमस्माद्गुरु' इति प्रतीतिसाक्षिकस्वरूपसम्बन्धविशेषौ लाघवगौरवे इति युक्ता निर्वचनसरणिः । स्वविषयकप्रहरव्यापकव्यापकतेत्यादिकं तु गौरवनिर्वचनमवच्छेदकत्वनिरुक्तिक्रोडपत्रेषु प्रसिद्धमिति तत एवानुसन्धेयम् । अभ्युपगमापादके = अभ्युपगमाशङ्कायामिति यावत् । गौरवं प्रतिबन्धकमितिशेषः । एकेनैवेश्वरेण निर्वाहसम्भवादिति भावः । उदाहरणान्तरमाह सौगतमिति । क्षणभङ्गमते सहकारिवाचोयुक्त्यसम्भवेन सामर्थ्यस्य च फलोपधायकतायामेव पर्यवसन्नत्वेन बहूनां घटकारणानामनेकदेशकालानां समानदेशकालानां वा प्रत्येकमनेकघटोत्पादकत्वं कुतो नेत्याशङ्कायां गौरवं प्रतिबन्धकम् । इदं = गौरवम् । तद्व्यतिरेकेण = गौरवविपरीतमिति यावत् । ईश्वरैक्यसिद्ध्यादिकमेवोदाहरणम् ।

प्रामाणिकाव्यवहार्यत्वमिति । अत्र प्रामाणिकव्यवहारयोरयत्वाभावविवक्षायामुत्तरदलवैयर्थ्यमिति प्रामाणिकव्यवहारविषयत्वाभाव एव विवक्षणीयः, स च वस्तुस्वभावप्रयुक्तो वा सत्यपि वस्तुनि तज्ज्ञानप्रयुक्तो वा सम्भवत्यतिप्रसक्त इत्यतोऽसमाधेयजातीयमिति । समाधानायोग्यमित्यर्थः ।

प्रश्नवैयात्यादयः। प्रश्नविषयमप्रमिण्वतां प्रष्टरि प्रश्नानौचित्यं प्रश्नवैयात्यम्, यथाऽव-स्तुनि विधिनिषेधयोः किमिच्छसीति पृच्छति प्रमाणव्यवहारिणं सौगते। अत एवात्रा-नौचित्यापरनामकं वैयात्यं परस्य दोषं मनसि कृत्वैके ब्रुवते-'अत्र सहृदयानां मूकतैवो-चिते'ति। अपरे च 'नह्यप्रतीते देवदत्तादौ स किं गौरः कृष्णो वेति वैयात्यं विना प्रश्नः स्या'दिति। यदि चेदमनौचित्यं नाम दोषो नाभ्युपेयते तदानीमर्थान्तरेण प्रकृतमर्थं निरस्यार्थान्तरस्यार्थान्तरेण परिहारात्तत्परम्परामालम्बितुकामः केन दोषेणार्थान्तरप-रिहाराभासत्ववादिनि अर्थान्तरेणैव तत्परिहरणमनुचितमित्यतोऽन्येन जीयेत, अर्थान्त-रनिग्रहतायां विप्रतिपन्नोऽपि प्रश्नपरम्परामालम्ब्य स्वभङ्गभयात्कथावसानमनच्छिन्दन्तं कथं जयेत्। न चानवस्थया जयतीति वाच्यम्, यावदुत्तरमर्थान्तरेण परिहरणे प्रश्ना-न्तरेण वा द्वयोरप्यनवस्थासाम्यात्।

नन्वेतावन्मात्रमस्तु लक्षणं शिष्टं व्यर्थम्। नच शब्दो नित्यश्चाक्षुषत्वादित्यादावतिव्याप्तिस्तत्र स्वरूपासि-द्धेरसमाधेयत्वात्, प्रामाणिकाव्यवहार्यत्वोक्तौ तु तस्याः प्रामाणिकव्यवहार्यतया न दोष इति वाच्यम्, एवं सत्यसमाधेयत्वस्य प्रामाणिकत्वपर्यवसायितयाऽप्रामाणिकार्थाभिधानेऽनौचित्यस्य दोषत्वानापत्तेः। न चास्त्वेतावदेव लक्षणम्, प्रामाणिकाव्यवहार्यत्वकथनं तु स्वरूपोत्कीर्तनमात्रमिति वक्तव्यम्, समाधा-नायोग्यत्वस्य निर्वक्तव्यत्वापत्तेः। यत्तूत्तरानर्हाभिधानमिति सामान्यलक्षणमिति, तदसत्, अभिधेयेऽ-प्यनौचित्यव्यवहारदर्शनात्, उत्तरयोग्यत्वावच्छेदकप्रतीतिं विनाऽनिस्ताराच्च, अन्यथा यथाकथञ्चिदुत्त-रयोग्यत्वमादाय ब्राह्मणादिकर्तृकमृगयावर्णनादौ कथायामर्थान्तरस्यार्थान्तरेण परिहरणादौ चाव्याप्तेः। एतेनासमाधेयजातीयमिति यथाकथञ्चिदप्रामाणिकाव्यवहार्यत्वस्य प्रामाणिकव्यवहारयोग्यत्वाभाव-रूपतायां तात्पर्यग्राहकमेवेति तदेव लक्षणमित्यपि नाशङ्कनीयम्, योग्यतावच्छेदकस्य दुर्निरूपत्वात्, क्वचिदुचितेऽप्यपरत्रानौचित्यस्य क्वचिदनुचितेऽप्यपरत्रौचित्यस्य दर्शनाच्चेति चेत्सत्यम्, यत्र यस्य प्रामाणिकानामनुचितमिदमितिव्यवहारविषयत्वं तत्र तस्यानौचित्यमित्यत्रैव तात्पर्यात्। प्रश्नवैयात्यादय-इत्यादिनोक्तवैयात्यं जातिदेशकालवर्णाश्रमादेर्यल्लोकशास्त्रानुमतमुचितद्रव्यगुणादि तद्भेदनञ्च गृह्यते। अप्रमिण्वतां = अस्वीकुर्वतः प्रति। प्रमाणव्यवहारिणं नैयायिकं प्रति पृच्छति सौगते प्रश्नवैयात्यमि-त्यन्वयः। तार्किकेण प्रमितस्यैव व्यवहार्यतायाः उपगमेन तं प्रत्यलीकविषयकप्रश्नः प्रष्टुर्वैयात्यमावहति। अर्थान्तरेण=अप्रकृतार्थाभिधानेन निरासपरिहारपदार्थोऽत्रावहेलनमात्रम्, नास्वभावप्रभितिपर्यन्तम्। अर्थान्तरस्य = निग्रहतया परोद्भावितार्थान्तरस्य। अर्थान्तरेणेति। पुनरप्रकृतार्थलक्षणप्रश्नादिनेत्यर्थः। परिहारात् = परिहारं कृत्वा पुनः परेणार्थान्तरे उद्भा-वितेऽर्थान्तरपरम्परामालम्बितुकाम इत्यतोऽन्येन केन दोषेण जीयेतेति सम्बन्धः। इतिपदपरामृष्टमनौ-चित्यमाहार्थान्तरपरिहारेत्यादि। अर्थान्तरेण परिहारस्याभासतां स्वीकुर्वति, अर्थान्तरस्य निग्रह-स्थानतां स्वीकुर्वन्तं प्रतीति यावत्। तत्परिहरणम् = अर्थान्तरपरिहरणम्। यद्यपि प्रथमार्थान्तरेणैव कथापर्यवसाने द्वितीयार्थान्तरस्य नावसरस्तथापि धृष्टोऽर्थान्तरे उद्भावितेऽप्यविरमन्ननौचित्येन परा-सनीयः, तदुद्भावनेऽपि तस्मिन् यत्किञ्चिद्वदति तु मूकतैवालम्बनीयेतिभावः। ननु यःस्वयमर्थान्तरस्य निग्रहस्थानतामनुमन्यते स उक्तरीत्यानौचित्येन परं जयेत्, तदन्यस्य त्वनौचित्यदोषतास्वीकारः किम्फल इत्यत आह अर्थान्तरनिग्रहतायामिति। अथवाऽर्थान्तरस्य निग्रहतायां विप्रतिपन्नं प्रति 'अर्थान्तर-स्यार्थान्तरेण परिहरणमनुचित' मित्युद्भावनमपि न सम्भवतीत्याशङ्क्य तादृशपुरुषेणाप्यनौचित्यं मन्त-व्यमेव, अन्यथाऽसावपि प्रश्नपरम्परामाश्रयन्तं परं जेतुं न शक्नुयात्प्रत्युत तेनैव जितः स्यादित्यभिप्रेत्येद-

दोषं व्यक्तिविवेकेऽमुं कविलोकविलोचने ।
काव्यमीमांसिषु प्राप्तमहिमा महिमाऽऽदृत ॥

ननु कथमत्र प्रामाणिकाव्यवहार्यत्वमिति पृष्टेन यदि मूकत्वमालम्ब्य तथात्वं वादिनि न व्युत्पाद्यते तदानीमप्रतिभाऽऽपतेत्, अथ तथात्वं व्युत्पाद्यते प्रश्नार्थादिः प्रमाणाविषयत्वमुपन्यस्य, तदाऽत्यन्तासद्व्यवहार्यता स्वीकृतैव स्यादिति चेदत्र ब्रूमहे—मूकतैवात्र विजयायेति। न चाप्रतिभैवं प्रसज्येत, उत्तरस्याप्रतिपत्तिरुत्तरार्हस्येति तल्लक्षणात्। यदि चायं नियमो वादिनेष्यते यद्भ्रान्त्यैव तेन व्यवहर्तव्यमनुवादादन्यत्रेति तदा मध्यस्थोद्भाव्यत्वमस्य दोषस्योपन्यस्यताम्, मध्यस्थेन ह्यपभ्रंशभाषयापि वादिप्रबोधनं क्रियते तथा यद्यप्रमाणमवलम्ब्यापि क्रियते तदा को दोषस्तस्य स्यात्तत्र विषये तथैव तेन वादिबोधनस्य शक्यत्वात्। तस्मान्मध्यस्थं प्रत्यनुत्तरदाने स्वदोषपरिहाराय प्रतिवादिना वैयात्यलक्षणदर्शनं कार्यम्, मध्यस्थं प्रति तस्याप्रमाणेनापि प्रतिबोधने निर्दोषत्वात्।

ननु वादिभ्यामेव वा वादिनि मध्यस्थेन वा तं प्रति वादिना वाऽत्यन्तासद्विषयव्यवहारोपगमे कथं नासत्ख्यातिः स्वीकृता स्यात्? किन्न स्यात्। विशिष्टरूपे सम्बन्धांशे चासत्ख्यातेरन्यथाख्यातिवादिभिरप्यभ्युपगमात्। ननु वन्ध्यासुताच्छशविषाणं भिन्नमित्यादिषु व्यवहरतः कथं विशेष्ये विशेषणेऽपि नासत्ख्यातिरुपगन्तव्येति चेन्न, असत्ख्यात्यनभ्युपगमस्य सत्ख्यातित्वास्यागनियमोपगमविश्रान्तत्वात्, असदपि सदुपश्लिष्टमेव प्रतिभासते न तु केवलमसत् कयापि ख्यात्या समुल्लिख्यत इत्यन्यथाख्यातिवादिभिरिष्यमाणत्वात्। वन्ध्यासुताच्छशविषाणं भिन्नमिति प्रतिपत्तावपि भिन्नमित्ययमंशः सामान्यतोऽन्यत्र दृष्ट एव प्रतीयते, केवलं भेदस्य सदाश्रयः प्रतियोगि चेति यद्वस्तु तत्तदसदाश्रयः प्रतियोगि च तस्येत्यन्यथाकृत्वा प्रतीयत इत्यन्यथाख्यातिरेवोपगता

---

मुक्तम्। विप्रतिपन्नोऽपि कथं जयेदित्यन्वयः। व्यक्तिविवेके इति। व्यञ्जनाविवेचनात्मके व्यक्तिविवेकाभिधनिबन्धे इत्यर्थः। महिमाऽऽदृत = महिमा नाम कविरादृतवान्। यथाहुः—"अनौचित्यादृते नान्यद्रसभङ्गस्य कारणम्। प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परे"ति ॥

उत्तरार्हस्येति। प्रकृते तु नोत्तरार्हत्वमिति भावः। तदेति। मध्यस्थेनैवानौचित्यमुद्भावनीयमिति भावः। मध्यस्थं प्रति वैयात्यलक्षणदर्शनं कार्यमित्यन्वयः। अनुत्तरदाने इत्यादि। वादिनं प्रत्यनुत्तरदाननिबन्धनस्य स्वदोषस्य परिहारायेत्यर्थः। मध्यस्थेन सह वादिनाऽपि शक्यमप्रमाणेन व्यवहर्तुमिति भावः। वादिभ्यामिति। परस्परमितिशेषः। विशिष्टरूपे इति। इदमनुयोगिकासत्तादात्म्यविशिष्टरजते इत्यर्थः। विशेषणस्यासत्त्वे तद्विशिष्टस्याप्यसत्त्वात्। यद्यप्यन्यथाख्यातिवादिभिः प्राचीनैः संसर्गस्यैवासत्त्वमुक्तम्, तथापि सम्भवाभिप्रायेण विशिष्टस्यासत्त्वमिह निगदितम्। विश्रान्तत्वादिति। सद्विषयकत्वं ज्ञानत्वव्यापकमिति भावः। तदन्यथाकृत्वा प्रतीयते इत्यन्वयः। तस्य = भेदस्य। यद्यपि वन्ध्यासुतशशविषाणयोरखण्डयो भानं नान्यथाख्यातिवादिसम्मतम्, वन्ध्यादौ सुतान्वयस्यैवालोकस्य भानोपगमात्, तथाप्येवं वन्ध्यासुताच्छशविषाणं भिन्नमितिधीरेवापलपिता स्यात्, तत्रान्वयमात्रस्यानुयोगित्वेन प्रतियोगित्वेन चाभानादित्यनुभवापलापापेक्षया संसर्गस्येव सदुपरक्तस्याखण्डस्याप्यत्यन्तासतो भानं मन्तुमुचितमिति भावः। नचैवमित्यादेः परिहारमाह यत इति। विकल्पो निर्विषयक एव शब्दमात्रविषयको वेति मतं तु नोपादेयम्, उपहासादिवैलक्षण्यानुपपत्तेः।

भवति। यथा तु विशिष्टमत्यन्तासदेव तथाश्रयप्रतियोगिनी अत्यन्तासती एव किन्न प्रतिभासेते तावतापि यथोक्तान्यथाख्यात्यनुल्लङ्घनादेव। न चैवमसत्ख्यातिवादिनाऽपि शक्यं वक्तुं केवलं सदेव प्रकाशते इत्यस्मात्पक्षाद्विपरीतं विशिष्टं सम्बन्धश्च क्वचिद्विशेषणाद्यप्यत्यन्तासद्भ्रान्त्योल्लिख्यत इत्येवंरूपा तावदसत्ख्यातिः परेणोपगतैव यदि तु सदपि प्रकाशते किञ्चित्, तत्किं नासत्प्रकाशत इति; यतः परेण विकल्पः सर्वथा वस्त्वनुल्लेखी केवलमलीकमुल्लिखन्नसत्ख्यात्यात्मा स्वीक्रियते यदि तु यथोक्तमेव परोऽप्यभ्युपगच्छति तदानीमनुमानप्रमाणादिवदत्राप्यविप्रतिपत्तिरेवेति। ननु सर्वथैवासत्ख्यातिरपि भवताऽनुमन्तव्यैव, तथाहि—वन्ध्यासुतशशविषाणे कूर्मरोमैवेति वदतः शब्दादर्थं प्रतिपाद्यताम्, किं सदणुमात्रमपि समुल्लेख्यं तत्प्रतीतेरिति चेन्न, तत्रापि तादात्म्यस्य सामान्यतोऽन्यत्र प्रतीतस्यैवासदुपहितस्य स्फुरणोपगमात्, प्रकारभेदवैशिष्ट्येन भिन्नयोरेकत्वं हि तादात्म्यं तच्चान्यत्रास्त्येव। तर्कसंशयाभ्यामप्रमाभ्यां जननेऽपि तत्तत्प्रमावत् मध्यस्थाद्यप्रमया तथा प्रश्नानौचित्यादिप्रमोत्पादनाविरोधः, बाधवद्भ्रमविषयातथाभावेऽपि भ्रमस्याप्रमात्वपारमार्थिकतावत्प्रश्नविषयासत्यत्वेऽपि प्रश्नानौचित्यसत्यतोपपत्तिरेव। एतेन भ्रान्तिजाया धियः प्रमात्वं तथाप्यदृष्टचरमित्यपि परास्तप्रायमिति। एवमन्यत्राप्येवंविधोदाहरणे वाच्यम्। न च कश्चिदुक्तप्रकारमन्यथाख्यातिसमाधानं नानुमन्तुं शक्नोति, अन्यथा कथमसत्ख्यातिवादिनो मतमपि जानीयात्, अज्ञात्वा च परमतवैचित्र्यं कथं वादे प्रवर्तेत। एते सर्वेऽपि तर्काः प्रमाणविरोधे वा प्रमाणाभावे वा निष्पीडिताः प्रविशन्तो न बाधासिद्धिभ्यां भिद्यन्ते पूर्वैरपि लोकसिद्धत्वाद्व्यवहृताः

---

नवीनान्यथाख्यातिनये तु संसर्गस्याप्यन्यत्र सत्त्वेन ज्ञानमात्रस्य सन्मात्रविषयकत्वम्, भ्रमत्वं तु व्यधिकरणप्रकारकत्वेनेति द्रष्टव्यम्। एतन्मतासाङ्कर्यञ्च हेत्वाभाससामान्यलक्षणाक्षेपप्रक्षेपादौ तत्र तत्र निवेदितम्। सदसदुपरागासम्भवेन प्राचीनान्यथाख्यातिरप्ययुक्तैव। तस्माद्भ्रमस्थलेऽनिर्वचनीयख्यातिः प्रकृतस्थले च विकल्पाख्यवृत्तिरिति मतमेव यौक्तिकम्। प्रकारभेदेत्यादि। रूपभेदेन भेदाभेदयोस्तादात्म्यस्याभिप्रायेणेदम्। प्रश्नविषयस्यासत्त्वे तदुपरक्तप्रश्नगतानौचित्यविषयकग्रहस्यापि भ्रमजन्यतयाऽसद्विषयकतया च भ्रमत्वेनानौचित्यमप्रमितं सत्कथं दोषतामालम्बेतेत्याशङ्क्याह तर्कसंशयाभ्यामिति। तर्कसंशययोरप्रमात्वेऽपि तदधीनव्याप्तिग्रहानुमित्योस्तद्विषयकानुव्यवसाययोश्च प्रमात्वं सम्प्रतिपन्नमेवेति न भ्रान्तिजन्यत्वेन व्यवसायादिलक्षणप्रत्यासत्त्याऽसद्विषयकत्वेन वा भ्रमत्वं मन्तव्यम्, विशेष्यस्यापि भ्रान्तिज्ञत्वदर्शनेन भ्रान्तभ्रान्तिज्ञसाङ्कर्यवारणाय स्वातन्त्र्येणासदवगाहनस्यैव भ्रमत्वप्रयोजकताया वक्तव्यत्वात्। एवं भ्रमात्मकपरामर्शादिजन्यानुमित्यादेः प्रमात्वं प्रसिद्धमेवेति। भ्रमीयविषयातथात्वे हेतुगर्भं बाधवदिति भ्रमस्य विशेषणम्। प्रतियोगिज्ञानविधया भ्रमजन्यस्यापि बाधस्य प्रमात्वमित्यभिप्रायेणोदाहरणान्तरं वा। तथापि = अन्यथाख्यात्योक्तरीत्या व्यवहारोपपादनेऽपि। एवंविधेति। "अस्य क्षोणिपतेः परार्द्धपरया लक्षीकृताः सङ्ख्यया। प्रज्ञाचक्षुरवेक्ष्यमाणतिमिरप्रख्याः किलाकीर्तयः" इत्यादावित्यर्थः। एते = अविनिगमादयः। सर्वेऽपि तर्का निष्पीडिता इत्यन्वयः। विचारिताः सन्त इत्यर्थः। प्रमाणविरोधो बाधः, प्रमाणाभावश्चासिद्धिरित्यभिप्रायः। अधिकं हेत्वाभासखण्डने स्फुटम्। वस्तुतस्त्वविनिगमादिस्थले बाधासिद्ध्योर्यथासम्भवं सत्त्वेऽपि ताद्रूप्यमविनिगमादेरसम्भवदुक्तिकमेव। रूपभेदोपवर्णनात्। अविनिगमनानौचित्ययोः प्रामाणिकत्वाभावरूपतायाः कैश्चिदुपगमेऽपि तद्भेदो

केवलमस्माभिरेव तर्कपद्व्यामभिषिक्तास्ततो न प्रबन्धेन निरस्यन्ते "विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रत"मिति। इत्यप्रसङ्गात्मकतर्कनिरूपणम्।

## तर्काभासनिरूपणम्।

ये च परैस्तर्कदोषाः षट् स्वीक्रियन्ते—आश्रयासिद्धिरनुकूलत्वं मूलशैथिल्यमिष्टापादनं विपर्ययापर्यवसानं मिथोविरोधश्चेति; सोऽयं तर्कस्य दोषविभागो नोपपद्यते, व्याप्तिपक्षधर्मत्वयोः प्रतीतिमपेक्ष्य यथानुमानं जायते तथैव तर्कोऽपि, इयान् परमनयो विशेषः—यदनुमानं तयोः प्रमित्या जायते, तर्कस्ववास्तवाभ्यामपि ताभ्यां पराभ्युपगममात्रसिद्धाभ्यां भवति, तेन विमृश्यमाणस्तर्कः पराभ्युपगममात्रप्रसादसिद्धपरिकरो नाश्रयसिद्धिमपि तावद्वास्तवीमनुरोद्धुमधिकरोति, ततः प्रमित्यभ्युपगम-

---

तथात्वानुपगमादिति ध्येयम्। प्रबन्धेनेति। विशिष्येत्यर्थः। विषयान्तरखण्डनानां त्विहापि योजनसम्भवेन खण्डनं कृतप्रायमित्याशयः। इतिखण्डनशारदायामप्रसङ्गात्मकतर्कनिरूपणम्।

आश्रयासिद्धिरिति। 'तत्रानुकूलत्वमिथोविरोधौ द्वौ मूलशैथिल्यमतस्तृतीयम्। विपर्ययापर्यवसानमिष्टप्रसञ्जन द्वे इति तर्कदोषाः" इति केषाञ्चित्संग्रहश्लोके त्वाश्रयासिद्धि र्न गणिताऽनुमानसाधारण्याभिप्रायेण। अनुकूलत्वमिति। विपर्यये सिद्धसाधनमित्यर्थः। यथा हिमं यदि दाहकतेजोविशिष्टं न स्यात्तृणादिविकारकारि न स्यादित्यत्र भवति च तृणादिविकारकारि तस्माद्दाहकतेजोविशिष्टमिति विपर्यये, यदाहुः—"नहि त्रैलोक्यपरिपाकहेतोः सावित्रस्य रश्मेस्तुहिनादपगमः क्षमते" इति। मूलशैथिल्यमिति। पर्वतो यदि निर्धूमः स्यान्निर्वह्निःस्यादित्यादिस्थले आपादके आपाद्यनिरूपितव्याप्यत्वासिद्धिरित्यर्थः। अत्र विपर्ययेऽपि व्याप्यत्वासिद्धिरेव। तादृशव्याप्तिनिश्चयापादकाभ्युपगमयोरन्यतरव्यतिरेक इत्यपि केचित्। इष्टापादनमिति। आपाद्यवद्धर्मिकत्वं विपर्यये स्वरूपासिद्धिर्वेत्यर्थः यथा मिथ्यात्वं यदि दृश्यत्वव्यापकं स्यात्तीर्थशाखादिवृत्ति स्यादित्यादौ। विपर्ययापर्यवसानमिति। आपादकवद्धर्मिकत्वम्, अतएव विपर्यये बाध इति केचित्। वस्तुतस्त्वापाद्याभावलिङ्गकापादकाभावसाध्यकानुमित्यनौपयिकत्वमित्यर्थः। तच्च मूलशैथिल्यादिप्रयुक्तं वा विपर्यये बाधप्रयुक्तं वेत्यन्यत्। एवं च मूलशैथिल्यादिस्थलेऽपि तर्के बहुलं विपर्ययापर्यवसायित्वव्यवहारस्य नाप्रकृतिः। अस्य चासङ्कीर्णोदाहरणदौर्लभ्यमेव। मिथोविरोधइति। परस्परविरुद्धापाद्यकत्वमित्यर्थः। यथा वायु र्यदि बहिरिन्द्रियविषयः स्यादरूपिद्रव्यं न स्यात्, वायुर्यदि प्रत्यक्षो न स्यात्प्रत्यक्षस्पर्शाश्रयो न स्यादित्येतयोः। अधिकञ्चात्र सर्वत्र हेत्वाभासेष्वेवानुसन्धानार्हमिति नेहाऽऽयस्यते। अनुमानमिति। प्रमानुमितिपरमिदम्, धूलीपटले धूमत्वभ्रमाधीना वस्तुतो वह्निमद्विशेष्यिकाऽप्यनुमितिः पर्वतावृत्तिवह्निप्रकारिकैवेतिमतानुसारेण चेदम्। अवास्तवाभ्यामिति। परमतदूषणसमर्थस्य विपर्ययापर्यवसायिनोऽपि तर्कस्य संग्राह्यतामभिप्रेत्य व्याप्तेरपि सर्वत्र वास्तवत्वं नाद्रियते। आपादकस्य पक्षधर्मताज्ञानं यद्यपि सर्वत्राहार्यमेवोचितम्, तथापि क्षित्यादिकं यदि कार्यं स्यात्सकर्तृकं स्यादित्यस्यापि पूर्वोक्तस्य तर्कताभिप्रायेणापिशब्दः। वस्तुतस्तु व्याप्त्यंशे उभयोरप्यनाहार्यनिश्चयजन्यत्वम्, पक्षधर्मतांशे तर्कस्याहार्यनिश्चयजन्यत्वमनुमितेस्त्वनाहार्यनिश्चयजन्यत्वमेव, विपर्ययापर्यवसायितर्कविशेषस्य स्थलविशेषे पूर्वोक्तरीत्या संग्राह्यत्वे तु क्वचित्तर्कस्य प्रसञ्जनमूलभूतस्य व्याप्त्यंशेऽप्याहार्यनिश्चयजन्यत्वमित्येव वक्तुमुचितम्। परिकरो व्याप्त्यादिः। वास्तवीमिति। क्वचिद्वस्तुतः

. l 623. last but one line rest.

सिद्धिकृतवैचित्र्याश्रयाद् भेदादन्यो यावान् यथात्र हेत्वाभासविभागस्तद्वदेव तर्काभासविभागोऽपि न्याय्यः। तस्मादाश्रयासिद्धिमूलशैथिल्येष्टापादनान्यसिद्धिरेकैव दोषोऽनुमानवत्, तत्राप्रमितत्वावलम्बिनीह त्वनभ्युपगमावलम्बिनीति विशेषः। मिथोविरोधश्च सत्प्रतिपक्षतैव। विपर्ययापर्यवसानं तु दोष एवापादनस्य न भवति यन्नाम विपर्ययापर्यवसानादापादनमात्मसाधनानुकूलं न भवति तदन्यदेव किमपि। बाधविरुद्धत्वव्यभिचारास्त्वनुमानवत्तर्केऽपि दोषाः पृथग्वाच्याः। बाध उत्सर्गसम्भावनादेरन्यत्रानुकूलस्तर्कस्य। सप्तममपि दोषं तर्कस्यापत्तिसाम्यं नामोपगच्छामः, स चोभाभ्यामभ्युपगतव्याप्येनानभ्युपगतव्यापकेन प्रागेव दर्शित इत्यास्तां विस्तर इति। इति तर्काभासनिरूपणम्।

## खण्डनरीत्युपदेशः।

एवंप्रकाराणि तत्तल्लक्षणेषु खण्डनान्यूहनीयानि। तदेतासु खण्डनयुक्तिषु कामपि स्थानान्तरस्थां केनापि प्रकारान्तरेणानीय तत्सदृशीमन्यां वा स्वयमूहित्वा परैर्विविच्यमानानि पदार्थान्तराण्यपि बुद्धिमता बाधनीयानि। अत्र चास्माभिर्दूषयितुं शङ्कितेभ्यः परपक्षप्रकारेभ्यो यदि प्रकारान्तरं कोऽपि स्वयमूहति, उक्तानाञ्च बाधकानां मध्ये क्वचित्प्रज्ञया समाधानमभिदध्यात्, तत्र खण्डनवादिनः प्रस्तुता प्रतिक्रिया न स्फुरेत् तदा परेण प्रयुज्यमाने वाक्ये बहुपदात्मके कस्यचित्पदस्यार्थं खण्डयितुं खण्डनान्तरमवतारणीयम्, एवं तत्रापि परेण प्रकाशोपणे पुनस्तथैव शाखान्तरेषु सङ्क्रमणीयमितिप्रकारेण खण्डनमये चक्रे सम्यगवधेयम्। न च शाखान्तरसङ्क्रान्तावर्थान्तरं पतेत्; अप्रकृतत्वाभावात्। न चैकनिर्णयारम्भेऽन्यसङ्क्रान्तावनौचित्यं स्यात्; शब्दोऽनित्यः कृतकत्वादित्यादौ परेणोक्ते कृतकत्वादावविप्रतिपत्तव्यत्वापत्तेरन्यतरासिद्ध्याद्युच्छे-

---

पक्षस्य पक्षतावच्छेदकाभाववत्त्वेऽपि परेण तस्य पक्षतावच्छेदकवत्त्वेनोपगमे तत्पक्षकस्तर्कः प्रवर्तते इति भावः। प्रमितीत्यभ्युपगमेत्यादि। प्रमितिरूपाऽभ्युपगमरूपा च या सिद्धिस्तत्कृतवैचित्र्यमूलकादित्यर्थः। मूलशैथिल्येति। मूलशैथिल्यं व्याप्यत्वासिद्धिः, इष्टापत्तौ च विपर्यये स्वरूपासिद्धिः। यदि स्वापाद्याभाववत्त्वेन निश्चितत्वनिबन्धन एव तर्कस्थले पक्षताव्यवहारस्तदा विपर्ययपर्यन्तानुधावनं विफलम्, इष्टापत्तेरापाद्यवद्धर्मिकत्वेन तत्रोक्तरक्षताविरहस्य स्फुटत्वात्। सिद्धसाधनद्वारिकाऽऽश्रयासिद्धिरेवेष्टापादनमित्यपि कश्चित्। तत्र = अनुमाने। इह = तर्के। किमपीति। अत्राधिकं मूलकृतैव प्रागुक्तम्। सम्भावनादेरन्यत्र तर्कस्यानुकूल इत्यन्वयः। अन्यत्र तर्कस्य = अन्यस्थलीयतर्कस्य, अन्यस्य तर्कस्येति तु फलितार्थः। प्रसङ्गात्मतर्कद्वाराय व्यतिरेकनिश्चयस्य बाधात्मकस्य कारणत्वादिति भावः। भेदो यदि भेदव्यवहारविषयः स्याद् भेदवान् स्यादित्यादावापत्तिसाम्यं दोष इत्याह सप्तममिति। प्रागेवेति। "यत्रोभयो" रित्यादिना तर्कखण्डनोपक्रमे इत्यर्थः। इति खण्डनशारदायां तर्काभासनिरूपणम्।

ऊहतीति। अनुदात्तेत्त्वप्रयुक्तमात्मनेपदमनित्यमिति भावः। अत एव "पूयति वा एतद्वचोऽक्षरं यदेनदूहती"ति श्रुतिः। अप्रकृतत्वाभावादिति। पदार्थखण्डनस्य वाक्यार्थखण्डनोपयोगित्वादिति भावः। प्रत्तेरिति। अनित्यत्वनिर्णयस्यारम्भो न तु कृतकत्वनिर्णयस्येति कृतकत्वे विप्रतिपद्यमानस्यानौचित्यं

दापातात्। येन हि तन्निर्वाह्यते तदनिर्वचनीयतयापि निर्वाह्यानिर्वचनीयतैवेति। तस्मात्

तत्तुल्योहस्तदीयश्च विषयान्तरयोजनम्।
शृङ्खला तस्य शेषे च त्रिधाऽत्र मतिमत्क्रिया ॥ इति खण्डनरीत्युपदेशः।
ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया।
प्राज्ञम्मन्यमना हठेन पठिती माऽस्मिन् खलः खेलतु ॥
श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-
त्वेतत्तर्करसोर्मिमज्जनसुखेष्वासञ्जनं सज्जनः ॥
ताम्बूलद्वयमासनञ्च लभते यः कान्यकुब्जेश्वराद्-
यः साक्षात्कुरुते समाधिषु परं ब्रह्म प्रमोदार्णवम्।

---

स्यात्, तथाच वादिप्रतिवादिनोरन्यतरं प्रत्यसिद्धेरुद्भावनं तत्परिहरणं चोच्छिन्नं स्यात्। नत्वेवम्, प्रकृतोपयोगात्, कृतकत्वसिद्धिं विनाऽनित्यत्वसिद्ध्यसम्भवात्। प्रकृतोपयोगश्चायं प्रकृतेऽपि समान इत्याह येनेति। वाक्यगतपदार्थेनेत्यर्थः। तदिति वाक्योक्तार्थपरामर्शः। तदनिर्वचनीयतया = पदार्थानिर्वचनीयतया। निर्वाह्यानिर्वचनीयतैव = निर्वाह्यस्य वाक्यार्थस्यानिर्वचनीयतैवेति प्रकृतवाक्यार्थखण्डने पदार्थखण्डनस्य नानुपयोग इति भावः। तत्तुल्येति। उक्तखण्डनतुल्यस्य खण्डनान्तरस्योहनम्, उक्तस्य खण्डनस्य च विषयान्तरे सञ्चारणम्। पूर्वखण्डनद्वयस्य परेण परिहरणे च शृङ्खला = वाक्यघटकपदार्थखण्डनात्मकशाखान्तरसङ्क्रमणमिति त्रिधा अत्र = खण्डने मतिमत्क्रिया = बुद्धिमतां प्रवृत्तिरित्यर्थः। इतिखण्डनशारदायां खण्डनरीत्युपदेशः।

## कृतसाक्षात्कारस्यापि ग्रन्थरचनादिसम्भवः।

ग्रन्थस्य ग्रन्थित्वं दुर्बोधत्वम्। समाधिषु = अनात्माकारवृत्तिराहित्यदशासु। साक्षात्कुरुतेइति। ब्रह्मसाक्षात्कारवतो ग्रन्थनिर्माणमेव न सम्भवतीति वदन्तस्तु ब्रह्मसाक्षात्कारं रोगविशेषमिव मन्यमाना अननुभूतात्मतत्त्वा एवेत्युपेक्षणीयाः। ब्रह्मसाक्षात्कारानन्तरं सर्वदा समाधिस्थोऽन्योऽपि वा समाधिदशायां मा नाम निभान्त्सीन्निबन्धान्, समाधिच्छिद्रेषु तु निबध्नीयादेव, कथमन्यथा देवतागुर्वाराधनादिकमपि जीवन्मुक्तानां सङ्गच्छेत, आहार्यभेदज्ञानेन समाधानं तु समानम्। परिपक्वनिदिध्यासनस्य व्यवहारदशायामनात्मांशे आहार्यस्यात्मांशे चानाहार्यस्य समूहालम्बनस्य सम्भवाच्च। चतुर्थाश्रमिण एव श्रवणादावधिकारात्तदभावे कथं मूलकृतो गृहस्थस्य ब्रह्मसाक्षात्कारसम्भव इत्यपि नाशङ्कनीयम्, श्रवणादिसम्पादनविरोधिनस्तस्य फलपर्यवसायिताविरोधिनश्च प्रचुरप्रवृत्तिविक्षेपस्यानाचरणेनैव श्रवणाद्युपपत्तौ शिखोपवीतत्यागादिघटिताश्रमविशेषस्य तदर्थमत्यन्तापेक्षाया अभावात्। अतएव जन्मान्तरीयाश्रमविशेषकल्पनापि न सोढव्या। अकम्प्यो हि देवतायास्तदैक्येन भावितस्य गुरोर्वा प्रसादोऽशक्यश्चेति न श्रवणादेरप्यत्यन्तमपेक्षा, व्यभिचारस्याव्यवहितोत्तरत्वनिवेशेनैव वारणसम्भवात्, अतएव "नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वा" मिति श्रुतिः स्वरसतः सङ्गच्छते। "शृण्वन्तोऽपि बहवो यन्न विद्यु" रिति श्रुतेः प्रत्यक्षदर्शनाच्च, श्रवणादेरपि देवताप्रसादं विनाऽकिञ्चित्करत्वाच्च, अत एवावोचन् "ईश्वरानुग्रहादेव पुंसामद्वैतवासने"ति। एवञ्च क्वचिच्छ्रवणादिकमप्यस्यापि देवतादिप्रसाद आत्मसाक्षात्काराय किमिति न प्रभवेत्। यदाहुः—"चित्रं वटतरोर्मूले वृद्धाः शिष्या गुरुर्युवा।

गुरोस्तु मौनं व्याख्यानं शिष्यास्तुच्छिन्नसंशयाः" इति "उत्तमानां तु विज्ञानं गुरुशास्त्रानपेक्षणम्" इति। "सर्वशास्त्रार्थवेत्तृत्वमकस्माच्चास्य जायते" इति च। अकस्मात् = श्रवणादिनैरपेक्ष्येण। अस्य = विशिष्य शक्तिपातेन देवतानुगृहीतस्य। स च गृहस्थो वा तदन्यो वेति न नियन्त्रणा। एतावता च चतुर्थाश्रमस्य वैफल्यमापतितमिति न भ्रमितव्यम्, तदीयसाफल्यस्य विशिष्य निवृत्तिप्रियैरेवानुभवनीयत्वात्, शिखोपवीतादिसद्भावनान्तरीयकप्रवृत्ति स्वाभीष्टसिद्धौ प्रतिबन्धिकामाकलय्य तया खिद्यमानमानसस्य जिज्ञासोः साधनपरिपाकार्थत्वाच्चतुर्थाश्रमस्य, साक्षात्कृततत्त्वस्य तु चिराय समाधिलाभार्थत्वादिति निष्पक्षपातः पन्थाः। अविद्यातत्प्रयुक्तदृश्याश्रयकालपूर्वत्वाभावनियमस्तु न तत्त्वज्ञानमात्रेऽपि तु चरमे एवेति नैवमपि साक्षात्कारानन्तरं निबन्धप्रणयनादिव्यवहारासङ्गतिर्देशनीया। यत्तु—अन्यत्रादृष्टत्वादेतादृशनियमोऽप्रामाणिकः, न च शुक्त्यादिज्ञानस्थले तादृशनियमो दृष्ट इति वाच्यम्, शुक्त्यादिविषयकपरोक्षचरमज्ञानस्यापि शुक्तिविषयकाज्ञानादिपूर्वत्वेन व्यभिचारात्, ज्ञाने साक्षात्कारत्वनिवेशे च प्राथमिकस्यापि शुक्त्यादिसाक्षात्कारस्य तादृशपूर्वत्वाभाववत्त्वेन व्यभिचाराप्रसक्त्या चरमत्वविशेषणवैयर्थ्यापत्तिरित्याशङ्क्य यो यद्विषयकसाक्षात्कारः स तद्विषयकाज्ञानतत्प्रयुक्तपूर्वत्वाभाववान् यथा शुक्तिसाक्षात्कार इति सामान्यव्याप्तिरभिप्रेता, चरमेत्यस्य ज्ञाने साक्षात्कारत्वलाभार्थत्वादिति चन्द्रिकाया विट्ठलेशीयव्याख्यायामुक्तम्, तदतीव तुच्छम्, एवं सति ब्रह्मसाक्षात्कारस्य विदेहकैवल्याव्यवहितप्राक्क्षणे एवोपेतव्यत्वेन श्रुतिस्मृतीतिहासपुराणविद्वदनुभवादिसिद्धाया जीवन्मुक्तेर्विलोपप्रसङ्गात्। तस्माज्जीवन्मुक्तिकालिकतत्त्वज्ञाने व्यभिचारवारणायैव चरमत्वं विवक्षणीयम्, तच्च विदेहमुक्त्यव्यवहितप्राक्क्षणस्थस्यैवेति तस्य साक्षात्कारत्वनैयत्येन ज्ञानत्वेनैवोपादानमाहतं न तु साक्षात्कारत्वेन गौरवात्। एवञ्च व्याप्तिरन्वयतो वा व्यतिरेकतो वा "विद्वान्नामरूपाद्विमुक्त" इत्यादिश्रुतिमूलैवेति नान्यत्रादृष्टचरत्वेन दुष्यति। एतच्च प्रतिकूलतर्कनिराकरणप्रकरणे "प्रमायाः स्वसमानविषयकाज्ञानाधिकरणकालपूर्वत्वाभावनियमवच्चरमस्य तत्त्वज्ञानोत्तरमनःपरिणामस्य स्वपरिणाम्यज्ञानतत्प्रयुक्तदृश्याधिकरणकालपूर्वत्वाभावनियमस्यास्माभिः स्वीकार" इति वदता चन्द्रिकाकारेणैव ध्वनितम्। अतएव तेन या या स्वजन्यपटुतमसंस्कारसहिताऽप्रामाण्यज्ञानादिशून्यसाक्षात्कारप्रमा सा स्वसमानविषयकाज्ञानतत्संस्कारक्षणावृत्तिरित्यत्र सहितान्तोपादानस्य जीवन्मुक्तनिष्ठब्रह्मप्रमायां व्यभिचारवारणं फलं दर्शितम्, जीवन्मुक्तस्य ब्रह्मसाक्षात्कारानभ्युपगमे तदसङ्गतेः।

## चरमज्ञाने दृश्यकालपूर्वत्वाभावनियमनिरासः।

अथैवं "विद्वान्नामरूपाद्विमुक्तः" इत्यादिश्रुत्या विद्योत्तरं दृश्यसामान्योच्छेदस्य बोधनबलेनैव पूर्वोक्तनियमो भवद्भिराद्रियते इत्यायातम्, परन्तूच्छेदस्य ध्वंसरूपस्यानभ्युपगमेन दृश्यसद्भाव इदानीमिव विदेहमुक्तावपि दुर्वार इति कथमुक्तनियमोपपत्तिः, तर्कशून्यत्वात्। प्रतियोगिसमानाधिकरणस्य प्रपञ्चात्यन्ताभावस्येदानीमपि मिथ्यात्ववादेऽङ्गीकार्यत्वेन तत्र विदेहमुक्तौ प्रतियोगिवैयधिकरण्यस्योपपाद्यत्वात्। यत्तु—घटादीनां तत्तत्कालविशिष्टं कपालादिकमेव नाश इति प्रभाकरमते मुद्गरपातादेर्घटादिविरोधित्वमिव तत्त्वज्ञानस्य दृश्यविरोधित्वं स्यात्, मुद्गरपातादेर्घटादिविरोधित्वाभावे तदुत्तरं घटाद्यनुवृत्त्यापत्तिवदत्राप्यापत्तेस्तुल्यत्वादिति; तदसत्, अतिरिक्तनाशानभ्युपगमे कालगतविशेषानिरूपणात्, विदेहमुक्तेर्दृश्योच्छेदनिरूप्यत्वात्, तस्यैव च विचार्यमाणत्वात्। यत्तु घटनाशे घटः क गत इति पर्यनुयोगवारणाय नाशजनकसामग्रीमत्क्षणस्य प्रतियोगिमत्कालपूर्व-

-त्वाभावनियमो यथाऽन्यैर्निरुच्यते, तथा विदेहमुक्तौ दृश्यस्य नाशाभावेऽपि तत्क्व गच्छतीतिपर्यनुयोगवारणाय पूर्वोक्तनियम एवास्माभिरपि कल्प्यते, एवञ्च चरमवृत्तेर्द्वैतविरोधित्वेन तदुत्तरं न किञ्चिज्जायते, तस्या अग्रकालस्यैवाभावेन न तत्र तस्या वा दृश्यान्तरस्य वाऽनुवृत्त्यापादनसम्भव इति वृत्तेरपि नाशानभ्युपगमेऽपि न काचित्क्षतिरिति; तदप्येतेन निरस्तम्, ध्वंसस्य प्रतियोग्यसमानकालीनतायाः प्रत्यक्षसिद्धतया तत्र पर्यनुयोगानवकाशात्, वृत्त्यादिध्वंसानभ्युपगमे तु तादृशनियमकल्पनाया एवोद्देश्यसामर्थ्यात् ।

## ध्वंसस्यात्मरूपत्वानुपपत्तिः ।

## पञ्चमप्रकारतापक्षे च पर्यवसानम् ।

यदि तु नाशः स्वीक्रियते स च जन्योऽपि ब्रह्मात्मक एव, यो यद्व्यामिश्रिततयैव भासते स तदात्मक एवेति व्याप्तेरुपपादनीयत्वात्, अतएव जन्यत्वाजन्यत्वरूपविरुद्धधर्माध्यासस्य भेदकत्वमपि नायाति, तस्यापि चिद्व्यामिश्रस्यैव भानात्तदात्मकत्वात्, अतएव विरोधस्यापि तदात्मकत्वम्, चिद्व्यामिश्रिततयाऽभासमानस्य खलीकत्वमेवेत्युच्यते, तदा जडस्य कस्यचिदसम्भवेनेदानीन्तनेऽपि बोधे न दृश्याश्रयकालपूर्वत्वमित्युक्तनियमोऽव्यावर्तक एव स्यात्, काश्मीरिकशैवाद्वैतवादिमतञ्चैवमापतेत् । अथाद्वैतश्रुत्यन्यथानुपपत्त्यैव दृश्यध्वंसस्याभ्युपेतस्यापि चरमवृत्त्युपलक्षितात्मरूपत्वम्, तदापीदानीं दृश्यध्वंसव्यवहारवारणाय चरमवृत्त्युपलक्षितत्वस्य चरमवृत्त्युत्तरत्वव्याप्यताया एव वक्तव्यत्वेनोत्तरत्वस्य च ध्वंसघटितत्वेनोक्तनियमो बाधित एव, चरमवृत्तिध्वंसस्य दृश्यस्य सद्भावात्, तस्यापि ब्रह्मरूपतामुपगम्यादृश्यत्वसमर्थने त्विदानीमपि चरमवृत्त्युत्तरत्वापत्तिः । एतेन यादृशवृत्त्युत्तरं न कार्यान्तरोत्पत्तिस्तन्नाशोऽधिकरणस्वरूप एव, अविद्यानाशस्तु वृत्तिरूपः, आत्मरूपत्वेऽसाध्यत्वाद्यापत्तेरिति परास्तम्, तादृशवृत्तिनाशस्याधिकरणस्वरूपत्वे इदानीमपि तद्व्यवहारप्रसङ्गात्, तादृशवृत्त्युत्तरत्वोपलक्षिताधिकरणस्वरूपत्वे चोत्तरत्वोपपत्तयेऽतिरिक्तध्वंसस्याभ्युपेयत्वात् । एतेन संयोगनाशो न विभागान्यः, गौरवात्, नाप्यधिकरणस्वरूपः, तदुद्देशेन क्रियायाः प्रवृत्त्या तस्य क्रियासाध्यत्वावश्यकत्वात्, विभक्ताकारप्रतीतेरधिकरणातिरिक्तविभागविषयकत्वाच्च, किन्तु विभागस्वरूपः, स च यद्युत्तरसंयोगनाश्यस्तदा तदतिरिक्तस्य विभागनाशस्य स्वीकारे गौरवम्, अथोत्तरसंयोग एव तन्नाशः, तथापि यादृशविभागावच्छेदकावच्छेदेन पुनर्नोत्तरसंयोगस्तादृशविभाग एव स्वावच्छेदकावच्छिन्नसंयोगनाशः, तस्य च जन्यभावत्वेन महाप्रलयावृत्तित्वात्तन्नाशः स्वाश्रयपरमाण्वादिस्वरूप इति दृष्टान्तासाङ्गत्यमपि दर्शितम् । तस्माद्भावाद्वैतपक्ष एव युज्यते, लोके 'अत्र कियन्ति वस्तूनि वर्तन्ते' इति प्रश्नेऽभावानामनन्तानां सत्त्वेऽपि भावानामेव गणनयोत्तरदर्शनाच्छास्त्रेऽपि भावानामेव निषेधसम्भवात्, यदि तु दृश्यध्वंसस्य सत्यत्वोपगमे एव भावाद्वैतं स्यात्, मिथ्यात्वोपगमे तु तस्याद्वैताव्याघातकत्वेन सर्वाद्वैतमेव, तदापि पूर्वोक्तनियमासाङ्गत्यमेव, चरमसाक्षात्कारस्यापि ध्वंसात्मकदृश्याश्रयकालपूर्वत्वादिति चेत्सत्यमेतत्, न च ध्वंसस्य ध्वंसाभ्युपगमेऽनवस्था; तस्याविनाशित्वोपगमेऽपि मिथ्यात्वस्यैवोपगम्यत्वेन क्षत्यभावात्, न चातोऽन्यदार्तमितिश्रुतिविरोधः, बन्धकालीनस्यैवात्मातिरिक्तस्य विनाशितायास्तया प्रतिपादनात् । पञ्चमप्रकारतापक्ष एव चेह पुरस्कर्तव्यः । तेनाज्ञानाभावे मिथ्याभूतस्य कस्यचिदसम्भवेऽपि न क्षतिरिति ।

यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः,
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ॥

इति श्रीश्रीहर्षकविताकिकचक्रवर्तिविरचितेऽनिर्वचनीयतासर्वस्वे खण्डनखण्डखाद्ये तुरीयः सङ्कीर्णपरिच्छेदः । शुभमस्तु ।

---

अभ्युदीयादिति । आशिषीदं 'इट किट कटी' त्यत्र प्रश्लिष्टस्य धातो रूपम्, न त्वेतेः, 'एते लिङी' ति ह्रस्वापत्तेरिति शिवम् ।

विधुयनियहनेत्री पूर्तिरानन्दसिन्धोः
सततमुदितसंविच्छान्तिसारा विशोका ।
कलितसकललोकाऽऽलोकदा लोकवन्द्या
तिरयतु तरलाशाः शारदा मन्त्रमूर्तिः ॥

ग्रन्थं पुरातनमिमं दृढदोषजाल-
ग्रस्तं विलोक्य रचिता यतिना श्रमेण ।
वाग्देवताचरणपद्मद्मानसानां
वाणी चिराय विदुषां मुदमादधातु ॥

शारदां शरणीकृत्य तीर्णोऽयं शारदार्णवः ।
प्रसवित्री प्रपञ्चानां तेन तुष्यतु शारदा ॥

इति श्री शङ्करचैतन्यभारतीयतेः कृतौ खण्डनशारदायां सङ्कीर्णस्तुरीयः परिच्छेदः ।

समाप्तश्चायं ग्रन्थः । शुभं भूयात् ।

ॐ तत्सत् । सद्गुरुभ्यो नमः ।

श्री शारदार्पणमस्तु ॥





